

श्री हयग्रीवाय नमः ।

श्रीकृष्णाकावेरीमध्यवर्ति गुण्टूरुमण्डलान्तर्गतनरसरावुपेटसन्निहित-
पमिडिपाडुनामकाग्रहारनिवासिना
श्रीनन्दनन्दनचरणारविन्दामन्दनिष्यन्दमरन्दबिन्दुबृन्दविन्दनतुन्दिलमिलिन्दायमान-
मानससरोजातेन भारद्वाजसगोत्रजातेन निर्मितश्रीकृष्णलीलातरङ्गिणी-
रुक्मिणीपरिणयशरद्रात्रिसमुद्रमथनवेदान्त-
कौस्तुभादिशताधिकग्रन्थजातेन
श्री वेल्लङ्कोण्डोपनामक रामरायकविना
विरचितया
माणिक्यप्रकाशाख्यव्याख्यया विलसित श्रीशाङ्करभाष्योपेता

# श्रीभगवद्गीता

'तर्करत्न, न्यायवेदान्तविद्यापारीण' बुलुसु अप्पन्नशास्त्रिमहोदयैः
सम्यक्परिशोध्य,
भट्टनविल्लिग्रामसंस्थापित श्रीशारदामुद्रणालये
गुण्टूरुमण्डलान्तर्गत नरसरावुपेटनिवासिभिः श्रीकविता
वेङ्कटसुब्रह्मण्यशास्त्रिभिः सम्यङ्मुद्राप्य
प्रकटीकृता सद्विजयते तराम् ।

हूणशकः १९५६

[ सर्वस्वाम्यसंरक्षिता ] [ मूल्यम् रू १५--०--० ]

श्रीमान डॉ० व्रजवल्लभ द्विवेदी जी के करकमलों में समर्पित।

दिव्यकवि श्रीनिवासाचार्य
चीराला (A.P.)
27-7-88.





श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## त्रयोदशोऽध्यायः ।

अव. व्या– प्रकृतिपुरुषादिपदार्थानां पूर्वाध्यायेषु तत्तत्रोक्तत्वात्तद्याथात्म्यबुभुत्सया पृच्छत्यर्जुनः प्रकृतिमिति । हे केशव! प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ज्ञानं ज्ञेयं चेत्येतद्वेदितुमिच्छामि । का प्रकृतिः? कः पुरुषः? किं क्षेत्रं? कः क्षेत्रज्ञ? किं ज्ञानं? किं ज्ञेयं? इति पृच्छामीत्यर्थः । इत्यर्जुनेन पदार्थषट्कं पृष्टम्, प्रकृतिक्षेत्रज्ञयोः पुरुषक्षेत्रज्ञयोः चैक्यज्ञानाभावप्रयुक्तोऽयं पदार्थषट्कप्रश्नः ।

यद्वा कार्यकरणसङ्घातलक्षणं शरीरं क्षेत्रं चराचरात्मकं, तस्य पाषाणादेरचेतनस्य गगनादीनां च हेतुर्मायाप्रकृतिः, ततश्च पटात्तन्तोरिव क्षेत्रात्प्रकृतेर्भेदात्, क्षेत्रप्रकृती द्वौ पदार्थौ- सङ्घाताकारपरिणतक्षेत्रातिरिक्तायाः पाषाणाद्याकारेण परिणतायाः कार्यावस्थप्रकृतेः कारणावस्थप्रकृतेश्चापरिणतायास्सत्त्वात् ।

एवं क्षेत्रज्ञस्संसारी प्रमाता–तस्यैव ज्ञातृत्वात् । पुरुषस्तु साक्षी- उदासीनत्वादिति पुरुषक्षेत्रज्ञावपि द्वौ पदार्थावित्यभिप्रायात्पदार्थषट्कप्रश्नोऽर्जुनस्य युक्त इति ।

एवमर्जुनप्रश्नानुरोधेन भगवतापि पदर्थषट्कमेवोक्तं च- इदं शरीरं क्षेत्रमिति, एतद्यो वेत्ति स क्षेत्रज्ञ इति, तत्त्वार्थज्ञानदर्शनमेतद्ज्ञानमिति प्रोक्तमिति, भूतभर्तृ च तद्ज्ञेयमिति 'पुरुषं प्रकृतिं चैव विद्ध्यनादी उभावपि' इति च वक्ष्यमाणत्वात् ।

यद्वा, पदार्थचतुष्टयमेवार्जुनेन पृष्टम्; प्रकृतिं प्रकृतिशब्दाभिधेयं क्षेत्रं, पुरुषं पुरुषशब्दाभिधेयं क्षेत्रज्ञं, ज्ञानं, ज्ञेयं चाहं वेदितुमिच्छमीत्यर्थात् । अत एव भगवतापि पदार्थचतुष्टयमेव निरूपितं च। 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥' इत्युपसंहारात् । क्षेत्रज्ञस्योक्तत्वेन क्षेत्रज्ञश्चोक्त इति तत्र बोद्धव्यम् । नचैवमुपसंहारानन्तरं 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति प्रकृतिपुरुषावपि निरूपिताविति वाच्यं, इदं शरीरं क्षेत्रमितिवदियं प्रकृतिरयं पुरुष इत्यनिरूपितत्वात् । पूर्वं निरूपितयोः क्षेत्रक्षेत्रज्ञयोरेव प्रकृतिपुरुषशब्देन परामर्शनादिति ।

नच क्षेत्रज्ञानज्ञेयज्ञानफलकीर्तनमेव, प्रकृतिपुरुषज्ञानफलमपि कीर्तयिष्यति भगवान्—'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह । सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ।' इति । ततश्च प्रकृतिपु-

रुषावपि पृथग्ज्ञातव्यावेवेति वाच्यं, फलैकत्वेन ज्ञानैकत्वात् ज्ञेयैकत्वमपीति । नहि क्षेत्रक्षेत्रज्ञज्ञाना-तिरिक्तमस्ति प्रकृतिपुरुषज्ञानम् । परन्तु क्षेत्रक्षेत्रज्ञावेव प्रकृतिपुरुषौ, तद्ज्ञानेन मोक्षस्स्यादित्युक्त एवार्थोऽनुवाद्यते दार्ढ्याय ।

नच क्षेत्राद्भिन्ना प्रकृतिरस्ति घटभिन्नमृद्वदिति वाच्यं, 'महाभूतान्यहङ्कार' इत्यष्टधा भिन्नायाः प्रकृतेरपि क्षेत्रत्वस्य वक्ष्यमाणत्वात् । नच क्षेत्रज्ञात्संसारिणः पुरुषो भिन्न इति वाच्यं, क्षेत्रज्ञस्यैव साक्षित्वात्साक्ष्येव हि सर्वार्थद्रष्टृत्वेन ज्ञाता उदासीनश्च । संसारित्वं तु तस्याहङ्कारतादात्म्याध्यासजन्यं; तस्मात्क्षेत्रज्ञः पुरुष एव । प्रमाता संसारी त्वहङ्कार एव । तस्मात्पदार्थचतुष्टयमेवार्जुनेन पृष्टम् ।

अथ वा प्रकृतिं क्षेत्रं, पुरुषं क्षेत्रज्ञं, ज्ञेयं ज्ञानं चेत्येतद्वेदितुमिच्छामीति पदार्थत्रिकमेवार्जुनेन पृष्टं, कृष्णेन पदार्थत्रिकस्यैव निरूपयिष्यमाणत्वात्- 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासत' इति।

यद्वा सप्तमाध्याये ईश्वरस्य प्रकृतिद्वयमस्तीत्युक्तं, ततः पृच्छत्यर्जुनः प्रकृतिमिति । क्षेत्रं क्षेत्रलक्षणामष्टधा भिन्नामपरां प्रकृतिं पुरुषं क्षेत्रज्ञं तल्लक्षणां परां प्रकृतिं ज्ञेयं तत्प्रकृतिद्वयवन्तमीश्वरं ज्ञानं च वेदितुमिच्छामीति पदार्थचतुष्टयप्रश्नः । तथैव भगवदुत्तरं च । क्षेत्रज्ञलक्षणायाः प्रकृतेः ज्ञेयाद्ब्रह्मणोऽनन्यत्वा'दिति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासत' इत्युक्तमिति ।

नतु पदार्थद्वयमेव प्रष्टव्यं- दृग्दृश्ययोर्द्वयोरेव पदार्थत्वात् । तथा च प्रकृतिं क्षेत्रं ज्ञेयं दृश्यं वस्तु, पुरुषं क्षेत्रज्ञं ज्ञानं दृग्वस्तु च वेदितुमिच्छामीत्यन्वयः । प्रकृत्यादिशब्दप्रतिपाद्यं दृश्यं पुरुषादि-शब्दप्रतिपाद्यं दृग्वस्तु च ज्ञातुमिच्छामीत्यर्थ इतिचेत्, मैवम्—भगवता पदार्थत्रिकस्योक्तत्वात् । नच ज्ञानस्य भगवदुक्तस्य क्षेत्रेऽन्तर्भाव इति वाच्यं, क्षेत्रं सर्वमुक्त्वा पश्चात्पृथक् ज्ञानस्योक्तत्वात् । 'एतद्ज्ञानमिति प्रोक्त'मिति निरूपितत्वात् । अन्यथा- 'एतत्क्षेत्रं समासेन' इत्येतत्प्रागेव ज्ञानमपि महाभूतादिषु ब्रूयात्, 'एतद्ज्ञानमिति प्रोक्त'मिति च न ब्रूयात् । यद्यपि वस्तुतो ज्ञानमपि तत्त्वार्थ-दर्शनादिलक्षणं बुद्धिधर्मत्वात् क्षेत्रमेव, तथापि तस्यावश्यसम्पादनीयत्वद्योतनाय पृथक्प्रश्नानुसारेण च पृथगुक्तः क्षेत्रादिति मन्तव्यमिति ।

वस्तुतस्तु अर्जुनेनाज्ञत्वात्स्वस्य अज्ञत्वमात्मन्यारोप्याज्ञदृष्ट्या वा अज्ञजनबोधनार्थं पदार्थषट्क-मेव पृष्टं, न ह्यज्ञो वेद प्रकृतिक्षेत्रयोः पुरुषक्षेत्रज्ञयोः क्षेत्रज्ञब्रह्मणोर्वैक्यम् । सति तु तद्वेदने प्रश्नस्यै-वायोगात् । अज्ञातार्थज्ञानाय हि प्रश्नः । भगवांस्तु तदाशयमालक्ष्य मैवं पदार्थषट्कभ्रमं कार्षीः, किंतु प्रकृतिपुरुषावेव क्षेत्रक्षेत्रज्ञावित्युच्येते । अतः पदार्थचतुष्टयमेव तुभ्यं मया निरूपयिष्यत इति सूचयन् प्रत्युत्तरं वक्तुमारब्धवान्—इदं शरीरमित्यादिना । कथमन्यथा प्रश्नक्रमं विहाय क्षेत्रमादौ निरूपयेद्भगवान्? कथं वा ततः क्षेत्रज्ञं? प्रकृतिर्ह्यादौ निरूपयितव्या, पश्चात्पुरुष इति क्रमात् ।

नचैवं पदार्थचतुष्टयं निरूप्यापि पदार्थत्रयमेव मया निरूपितं त इति कुत उपसंहारवाक्ये भगवानुक्तवानिति वाच्यं, 'क्षेत्रज्ञं चापि मां वि'द्धीति क्षेत्रज्ञज्ञेयब्रह्मणोरेकत्वस्योक्तत्वादिति संक्षेपः ।

वस्तुतस्तु प्रक्षिप्त एवायं श्लोकः श्रीशङ्करानन्दगिरिश्रीधरमधुसूदनरामानुजादिभिरव्याकृतत्वात्, नागरग्रन्थेष्वसत्त्वाच्च ।

सप्तमेऽध्याये द्वे प्रकृती सूचिते परमेश्वरस्य—त्रिगुणात्मिका अष्टधा भिन्ना अपरा संसारहेतुत्वात्, परा चान्या जीवभूता क्षेत्रज्ञलक्षणा—याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणाय क्षेत्रज्ञाध्याय आरभ्यते । अतीतानन्तराध्याये च 'अद्वेष्टा सर्वभूताना' मित्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां सन्न्यासिनां निष्ठा यथा ते वर्तन्ते इत्येतदुक्तम् । 'केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्ती'त्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोऽयं सङ्घात इदं शरीरं तदेतद्भगवानुवाच—

श्रीभगवानुवाच—इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥

इदमिति । इदमिति सर्वनाम्नोक्तं विशिनष्टि—शरीरमिति । हेकौन्तेय! क्षतत्राणात्,

---

अष्टधेति । प्रकृतिमहदहङ्कारपञ्चतन्मात्ररूपेणेत्यर्थः । अपरा निकृष्टा । तत्र हेतुमाह—संसारहेतुत्वादिति । अज्ञानतत्कार्यप्रयुक्तो हि संसारः । क्षेत्रज्ञविवर्तत्वान्मायापरिणामत्वाच्च जगत ईश्वरस्य स्वतो मायाधिष्ठानद्वारेण च जगज्जन्मादिहेतुत्वमित्याह—याभ्यामिति, तद्वत इति । प्रकृतिद्वयवत इत्यर्थः । सच्चिदानन्दलक्षणो मायालक्षणश्चेत्युभौ स्वभावौ स्तः परमेश्वरस्येति भावः । यावदध्यायपरिसमाप्तिर्भवति तावदध्यायपरिसमाप्तिपर्यन्तमित्यर्थः । यथा ते सन्न्यासिनो वर्तन्ते तथा सन्न्यासिनां निष्ठोक्तेत्यन्वयः । सन्न्यासिनस्ते केन वा तत्त्वज्ञानेन युक्तास्सन्तो यथोक्तधर्माचरणेन भगवतः प्रिया भवन्तीत्येतदुक्तमित्येवमर्थं एतत्प्रश्नोत्तरार्थ इत्यर्थः । ईश्वरतत्त्वनिर्धारणार्थेन सहास्य समुच्चयार्थश्चकारः । सप्तमाध्याये संक्षेपेणोक्तानां क्षेत्रक्षेत्रज्ञेश्वराणां याथात्म्यनिर्धारणार्थं सन्न्यासिनां ज्ञाननिरूपणार्थं पूर्वाध्यायोक्तधर्मवतां चायमध्याय आरभ्यते भगवता बादरायणेनेत्यर्थः ।

क्षेत्रं क्षेत्रज्ञ ईश्वरस्सन्न्यासिनां क्षेत्रादियाथार्थ्यविदां ज्ञानं चेति पदार्थचतुष्टयमस्मिन्नध्याये निरूप्यत इति भावः । प्रकृतिपुरुषकथनं तु क्षेत्रक्षेत्रज्ञनिरूपणादनन्यमेवेति न प्रकृतिपुरुषयोर्निरूपणमपीह क्रियत इत्युक्तम् ।

इदमिति । इदं प्रत्यक्षादिप्रमाणैरुपलभ्यमानमित्यर्थः । शीर्यत इति शरीरं । किं तदत आह—प्रकृतिश्चेति । सर्वकार्यकरणविषयाकारेण परिणता त्रिगुणात्मिका प्रकृतिः पुरुषस्य भोगापवर्गार्थकर्तव्यतया हेतुना देहेन्द्रियाद्याकारेण संहन्यत इत्यन्वयः । महाभूतानि पञ्चाहङ्कारो बुद्धिरिति प्रकृतिविकृतयस्सप्त कार्यशब्देनोच्यन्ते, इन्द्रियाणि दश मन एकं च करणशब्देन, इन्द्रियगोचराश्शब्दादयः पञ्च विषयशब्देनेति विवेकः । तथा च त्रयोविंशतितत्त्वाकारेण परिणामात्सर्वकार्यकरणविषयाकारेण परिणतेत्युक्तम् ।

क्षयात्, क्षरणात्, क्षेत्रवद्वा अस्मिन् कर्मफलनिष्पत्तेः क्षेत्रमिति। इतिशब्द एवंशब्दपदार्थकः।

त्रयो गुणास्सत्त्वादयः, प्रकृतिर्मूलप्रकृतिर्माया; पुरुषस्य जीवस्य भोगापवर्गरूपावर्थौ कर्तव्यौ सम्पादयितव्यौ यस्यास्तया। भोगापवर्गसम्पादनार्थमित्यर्थः। शरीरं विना जीवस्य भोगमोक्षयोरसिद्धेः। अतएव ह्यात्मनो भोगायतनं शरीरमिति शरीरस्य लक्षणमुक्तं तार्किकैः। तत्र च मनुष्यशरीर एव जीवेन मोक्षस्सम्पादयितव्यः। कीटादिशरीरेषु ज्ञानाभावेन तदयोगादिति बोद्धव्यम्। इदम्पदेन चात्र मनुष्यशरीरमेव निर्दिष्टमिति ज्ञायते। भोगस्तु सर्वशरीरसाधारणः। अत एव भोगायतनत्वमात्रमेव शरीरस्य लक्षणम्। इह तु मनुष्यशरीरस्य भगवता विवक्षितत्वाद्भोगापवर्गार्थकर्तव्यतयेत्युक्तं भाष्यकारैः। देहेन्द्रियाद्याकारेण, आदिपदाद्विषयग्रहणम्। पञ्चीकृतपञ्चभूतकार्यं देहः, स च चराचरभेदेन द्विविधः। इन्द्रियादिसमवेतदेहाकारेणेत्यर्थः।

यद्वा, देहः स्थूलशरीरं- 'दिह उपचये' इति धातोः स्थूलस्यैव उपचयापचयदर्शनाच्च। इन्द्रियाणि दश, आदिपदात्प्राणपञ्चकं मनश्च गृह्यते। तद्धि षोडशकं सूक्ष्मशरीरम्। तथा च स्थूलसूक्ष्मशरीराकारेणेत्यर्थः। संहन्यते संहता भवति। त्रयोविंशतितत्त्वसम्मेलनजन्यत्वाद्देहस्येति भावः। इदं च तत्त्वानां संहतत्वमीश्वरानुग्रहादेवेति भागवते प्रसिद्धम्। नहि जडा प्रकृतिस्संहन्तुमीष्टे- सोऽयमिति। मायापरिणामदेहेन्द्रियादिसङ्घात इत्यर्थः।

शरीरस्य क्षेत्रशब्दवाच्यत्वे हेतुमाह— **क्षतत्राणादिति**। क्षतात्त्रायत इति क्षेत्रं ज्ञानोत्पादनद्वारा नरकपातादिलक्षणात् क्षतात्त्रायते हि पुमांसं शरीरम्। यद्वा भोगायतनत्वाच्छरीरस्य एतदभावे भोगक्षतिः स्यात्पुंस इति भोगक्षतिरूपात् क्षतात् पुमांसं त्रायते शरीरं भोगप्रदानद्वारेति। अथ वा यथा चर्मादिलक्षणः कवचश्शरीरं क्षतात् त्रायते शरीरावरणत्वात्तस्य तथा शरीरस्यापि जीवावरणत्वात् स्वान्तस्स्थितं शरीरिणं त्रायते क्षतादिदं शरीरमत एव स्वताडनायागतं प्रबलं दृष्ट्वा नेत्रे निमीलयति पुरुषः। ताड्यन्तांनाम शरीरं मम पुनस्ताडनं माभूदिति भ्रमेण। नच कुतस्तत्प्रत्ययस्य भ्रमत्वमिति वाच्यं, ताडनाद्यविषयत्वाच्चिद्रूपस्यात्मनः। हेत्वन्तरमाह— **क्षयादिति**। क्षीयत इति क्षेत्रं, क्षयो वृद्धिप्रतियोगी नाशो वा। सहि सर्वानुभवसिद्धः। व्युत्पत्त्यन्तरमाह— **क्षरणादिति**। क्षरतीति क्षेत्रं क्षरणं स्वस्वरूपात्प्रच्युतिः। शरीरं हि नैकरूपेणावतिष्ठते भस्मादिरूपेण शरीरस्य परिणामात्।

हेत्वन्तरमाह— **क्षेत्रवदिति**। क्षेत्रतुल्येऽस्मिन् शरीरे क्षेत्रशब्दप्रयोग औपचारिक इति भावः। क्षेत्रतौल्ये हेतुमाह— **कर्मफलेति**। यथा प्रसिद्धे व्रीह्यादिक्षेत्रे व्रीह्यादिसस्यफलसिद्धिः तथा कर्मफलानां रोगारोग्यसुखदुःखादीनामस्मिन्निष्पत्तेरिदं शरीरं क्षेत्रमित्युच्यते। पृषोदरादित्वाद्रूपसिद्धिः। इतिशब्दार्थमाह— **एवंशब्दपदार्थक इति**। एवंशब्दस्य यो विषयः पदार्थस्स एवेतिशब्दस्येत्यर्थः। तथा च क्षेत्रमित्यभिधीयत इत्यस्य क्षेत्रशब्देनोच्यत इत्यर्थः। स्वाभाविकेन ज्ञानेनापादतलमस्तकं विषयीकरोतीति वेत्तिशब्दार्थः। यस्य ज्ञाने शरीरमिदमापादतलमस्तकं विषयो भवतीत्यर्थः। ज्ञानं

क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानाति, आपादतलमस्तकं ज्ञानेन विषयीकरोति, स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशः तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्द एवंशब्दपदार्थक एव पूर्ववत् । क्षेत्रज्ञ इत्येवमाहुः । के तद्विदः तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥१॥

---

विषयी, ज्ञेयास्तु विषया इति प्रसिद्धम् । आपादतलमस्तकमिति । पादतलादारभ्य मस्तकमभिव्याप्येत्यर्थः । पादतलं मस्तकं चेत्युभयमभिव्याप्येति वा । सर्वैरप्यवयवैस्सहेत्यर्थः । सर्वमपीति यावत् । पश्वादयोऽपि हि स्वाभाविकेन ज्ञानेन स्वं शरीरं सर्वं विदन्ति- पुच्छादौ ताडितस्यापि पशोः भयचलनादिदर्शनात् । एवं मनुष्योऽपि पादतले कण्टकेन विद्धस्सन् शिरसि केशेनाकृष्टस्संश्च युगपच्छोचति । तस्मात्सर्वमपि शरीरं विषयीकरोत्येव स्वाभाविकज्ञानेन शरीरी, सर्वशरीरव्यापित्वादापादतलमस्तकं शरीरं व्याप्य हि शरीरी वर्तते । कथमन्यथा शिरसि मे वेदना, पादे मे कण्टक इति युगपदेव जानीयाच्छरीरी ? अतो विभुरेव जीवः । अणुत्वे तु नैतत्सिद्ध्येत्- अणोस्सर्वशरीरव्यापिवेदनोपलम्भासम्भवात् । मध्यमपरिमाणत्वे तु मनुष्यशरीरिणः पापवशात्कीटशरीरप्राप्तौ कीटशरीरे मनुष्यशरीरादुत्क्रान्तो जीवो न मायात्, शरीरसमपरिमाणस्य शरीरादुत्क्रान्तिरपि न सिद्ध्येत्- नासारन्ध्रादेरुत्क्रान्तिमार्गस्य सूक्ष्मत्वात् । शरीरादुत्क्रममाणश्च मध्यमपरिमाणश्चेज्जीवस्सर्वैः पार्श्वस्थैर्दृश्येत च, नतु तथा दृश्यते । तस्माद्विभुरेवायम् । तथा औपदेशिकेन ज्ञानेन वा शरीरं विभागशो विषयीकरोतीति वेत्तिशब्दस्यान्योऽर्थः । उपदेशाद्गुरोर्लब्धमौपदेशिकं तेन ज्ञानेन विभागश आत्मानात्मविवेकपूर्वकम् । अहमात्मा इदमनात्मेति विवेकेनेत्यर्थः । इदं शरीरमिदमिन्द्रियमयं विषय इति विवेकेनेति वा । नतु करचरणविभागात् तस्य स्वाभाविकज्ञानविषयत्वात् । तं वेदितारमिति । विविच्याविविच्य वा शरीरस्य ज्ञातारमित्यर्थः ।

अविद्वद्वचनस्याप्रमाणत्वादाह—तद्विद इति । एतेन शरीरं क्षेत्रं, शरीरी क्षेत्रज्ञ इति सिद्धमिमावेव प्रकृतिपुरुषावपि । देहेन्द्रियादिसङ्घाताकारपरिणतप्रकृतेरेव क्षेत्रत्वादेतस्मिन् क्षेत्रे पुरि शयनात्क्षेत्रज्ञस्य पुरुषत्वाच्च । एवं क्षेत्रक्षेत्रज्ञयोरेव प्रकृतिपुरुषत्वात्प्रकृतिपुरुषौ न पृथङ्निरूपितौ श्रीकृष्णेन ।

ननु शरीरमेव क्षेत्रमित्युक्तं, क्षेत्रस्य प्रकृतिकार्यत्वेऽपि कार्यादन्यत्वात्कारणस्य क्षेत्रादन्यैव प्रकृतिः । अतो न क्षेत्रनिरूपणेन प्रकृतिनिरूपितेति वक्तुं शक्यत इतिचेत्,

मैवम्—इदं शरीरं क्षेत्रमित्युक्तं, न त्विदं शरीरमेव क्षेत्रमिति । ततश्च शरीरादन्योऽपि क्षेत्रपदार्थः कश्चन भवितुमर्हत्येव । अत एव 'महाभूतान्यहङ्कार इत्यादिना क्षेत्रपदार्थं वक्ष्यति भगवान् । तथा च शरीरात्मना परिणता, पृथिव्यादिभूताद्यात्मना परिणता, अपरिणता मूलप्रकृतिश्च क्षेत्रमेवेति सर्वापि प्रकृतिः क्षेत्रमेव- या ईश्वरस्यापरप्रकृतित्वेन सप्तमाध्याये निर्दिष्टा सा । इदं शरीरं क्षेत्रमिति तु शरीरस्य सर्वजनप्रसिद्धत्वाच्छरीरादेव शरीरिणो विविच्य ज्ञातव्यत्वान्मुमुक्षुणा, शरीरस्य क्षेत्रत्वं

एवं क्षेत्रक्षेत्रज्ञावुक्तौ; किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति? नेत्युच्यते—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

क्षेत्रज्ञमिति । क्षेत्रज्ञं यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि विजानीहि।

---

तावद्दर्शितं श्रीकृष्णेन । शरीरात्माभिमानो हि संसारस्य प्रथमं कारणं दारपत्याद्यभिमानानां शरीराभिमानमूलकत्वात् । शरीरशरीरिविवेचने कृते तु तन्नाशात्सर्वसंसारनाश इति शरीरशरीरिणावेव विविच्य ज्ञातव्यौ मुमुक्षुणा तावत् । तत्र च शरीरमेव तावत् ज्ञातव्यं यत्र स्वस्याभिमानः, तद्विवेकज्ञाने सति तु आत्मविवेकज्ञानं सुलभम् । आरोप्यसर्पमिथ्यात्वज्ञानपूर्वकत्वादधिष्ठानरज्जुयाथार्थ्यज्ञानस्य । शरीरं हि क्षेत्रज्ञमायया ऽध्यस्तम् । अत एव शरीरमादौ निर्दिष्टम् । तच्चेदंशब्देन विशेषितम् । तेन च किं ज्ञायते? स्थूलं सूक्ष्मं कारणं वा सर्वमपि शरीरमिदम्प्रत्ययविषयत्वान्नैवात्मा; आत्माह्यहंप्रत्ययविषयः । अहमिदं जानामीति सर्वैरहंप्रत्ययविषयत्वेन वेदितुरात्मनो गृह्यमाणत्वादिति । अतएव युष्मदस्मत्प्रत्ययगोचरयोरिति युष्मदस्मत्प्रत्ययविषयत्वमपि देहजीवयोर्विवेकायोपन्यस्तं भाष्यकारैः सूत्रभाष्यारम्भे । एतद्यो वेत्तीत्यनेन च वेदितुर्विषयिण आत्मनो विषयाद्वेद्याच्छरीराद्वैलक्षण्यं दर्शितमत एव विषयविषयिणोरिति विषयविषयित्वरूपं वैलक्षण्यं दर्शितमाचार्यैर्देहजीवयोस्सूत्रभाष्ये । शरीरमित्यनेन च विनाशित्वमुक्तमिति विनाशिनश्शरीराज्जीवस्याविनाशित्वलक्षणं वैलक्षण्यं सूच्यते । किंचात्मान्यस्य सर्वस्याप्यनित्यत्वाच्छरीरशब्देन क्षेत्रशब्दवाच्यतया वक्ष्यमाणं महाभूताद्यात्मकं सर्वं जगत्तद्धेतुः प्रकृतिश्च गृहीतुं शक्यत एव । अपि च ईश्वरस्यैव क्षेत्रज्ञत्वादीश्वरस्य च सर्वव्यापित्वात्सर्वमपीश्वरशरीरमेवेति शरीरशब्देन सर्वं सुग्रहमेवेति ज्ञायते । केवलयोगेन शरीरशब्दस्य सर्वानात्मवाचित्वेऽपि योगरूढ्या देहवाचित्वादुक्तं सङ्घात इति भाष्यकृद्भिरिति ॥१॥

क्षेत्रज्ञमिति, एतावन्मात्रेणेति । शरीरं क्षेत्रं तदृज्ञः क्षेत्रज्ञ इत्याकारेणेत्यर्थः । इतिशङ्कायामिति नेत्युच्यते तावन्मात्रज्ञानस्य फलाभावादिति भावः । युक्तं चैतत्- इदं शरीरं क्षेत्रमेतद्ज्ञोऽहं क्षेत्रज्ञ इति वेदनमात्रेणाहंब्रह्मेति सम्यग्दर्शनासम्भवाद्ब्रह्मात्मज्ञानं विना संसारभयानिवृत्तेः । 'य उदरमन्तरं कुरुते, अथ तस्य भयं भव'तीति श्रुतेः । उदल्पमप्यन्तरं जीवेश्वरयोर्यः कुरुते तस्य भिन्नात्मज्ञानिनो भयं भवति । एवमीश्वरोऽन्यः, अहमन्य इति भेदज्ञानादेव 'भीषास्माद्वातः पवते' इत्यादिश्रुतिप्रतिपादितविधया वाय्वादीनामीश्वराद्भीतिः । ईश्वरो हि जीवादन्यत्वेनाभिमतश्चेज्जीवान्नियमयति यथा भृत्यादन्यत्वेनाभिमतो राजा भृत्यान् । अत एवेश्वरस्य स्वातन्त्र्यं, जीवानां पारतन्त्र्यं च । अभेदज्ञानिनस्तु नैतदस्ति, ईश्वरस्यैवात्मत्वात्क्व नियम्यनियामकभावः ? क्व वा ईश्वराज्ज्ञातिक्रमादिजन्यभयावकाशः ? अस्माच्च सम्यग्दर्शनाज्जीवस्य सर्वसंसारनिवृत्तिरिति कृत्वा क्षेत्रज्ञ ईश्वराभेदेन ज्ञातव्य इत्ययमर्थोऽर्जुनेन श्लोकेनोच्यत इति भावः । नचेश्वराभेदज्ञानिनो यमादिभ्योऽस्ति भयमिति वाच्यं, ईश्वरपरतन्त्रत्वाद्यमादीनां स्वस्य चेश्वरत्वात् । यद्वा ईश्वरस्य सर्वात्मत्वात्स्वस्य चेश्वरत्वा-

सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तः तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः। हे भारत! यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यति-

यमादीनामप्यात्मत्वेन नास्य भीतिः कुतश्चिदिति । अथ वा ईश्वरे सर्वस्य कल्पितत्वाद्यमादीनामपि भूतानां कल्पितत्वेन मिथ्यात्वात्स्वस्य चात्मन ईश्वराभिन्नत्वेन सर्वाधिष्ठानत्वात्सत्यत्वान्नित्यत्वाच्च न मिथ्याभूतेभ्यो यमादिभूतेभ्यो भयमद्वैतिनः । मरीचिकोदकाद्भूमेः पङ्किलत्वभयाभावात् । तस्मात्सर्वसंसारनिर्वर्हणाय जीवेश्वराभेदो ज्ञातव्यो मुमुक्षुणा । ईश्वरे असंसारित्वनिश्चयात्तस्य । जीवोऽहं संसारी ईश्वर एक एवासंसारीति प्रत्येति सर्व आस्तिकजनः ।

ननु संसार्यसंसारिणोर्जीवेश्वरयोरेकत्वज्ञानस्य भ्रमत्वात्कथं तादृशादपि ज्ञानान्मुमुक्षोस्संसारनिवृत्तिरितिचेत्, मैवम्—जीवे संसारस्य देहादितादात्म्याध्यासप्रयुक्तत्वात् । जीवस्स्वस्वरूपस्य च सच्चिदानन्दलक्षणस्य परमेश्वरत्वादिति । तस्मात्क्षेत्रज्ञ ईश्वराभेदेन ज्ञातव्य इत्येवमर्थमयं क्षेत्रज्ञश्लोक आरभ्यते—सर्वक्षेत्रेषु वर्तमानं क्षेत्रज्ञं च मामपि मामेव विद्धि । अपिरेवार्थे । ईश्वर एव सर्वक्षेत्रेषु क्षेत्रज्ञरूपेण वर्तत इति विद्धीत्यर्थः । सर्वक्षेत्रेष्विति बहुवचनात् क्षेत्रज्ञमित्येकवचनाच्च शरीरानेकत्वं जीवैकत्वं च बोध्यत इत्यभिप्रायादाह—ब्रह्मादीति । ईश्वरस्यैव क्षेत्रज्ञत्वादीश्वरस्य चैकत्वात् क्षेत्रज्ञ एक एव । स च महाकाशो घटाद्युपाधिभिरिव ब्रह्मादिस्तम्बपर्यन्तैरनेकैः क्षेत्रलक्षणोपाधिभिः प्रकर्षेण विभक्तः । अत एव नानाजीवभ्रमो लौकिकानां तार्किकादीनां च ।

नह्युपाधिभेदादुपहितस्य वास्तवो भेदो भवितुमर्हति । अत एव 'न त्वेवाहं जातु नास'मिति श्लोकभाष्ये भाष्यकारैरुक्तं, 'देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण' इति । तमिति । यः प्रविभक्तस्तं क्षेत्रज्ञमित्यर्थः । निरस्तसर्वोपाधिभेदं सर्वोपाधिविशेषविनिर्मुक्तमित्यर्थः । अत एव सदसदादिशब्दप्रत्ययागोचरं यदिन्द्रियादिगोचरं तद्वस्तु सदित्युच्यते । आत्मा त्वव्यक्तत्वान्न सच्छब्दज्ञानविषयः, यदविद्यमानं तदसदित्युच्यते । आत्मा तु विद्यमानत्वादसच्छब्दप्रवृत्त्यविषयः । आदिपदाद्द्रष्टृदृश्यादिशब्दग्रहणम् । आत्मा न द्रष्टा- निर्धर्मकत्वाद्दृश्याभावाच्च । नापि दृश्यमनुपलभ्यमानत्वादिति बोध्यम् ।

नच कथमुपाधिप्रविभक्तमुपाधिरहितत्वेन जानीयाद्विद्वानिति वाच्यं, उपाधीनां मायया कल्पितत्वेनोपाधिप्रविभक्तत्वस्य वस्तुतः क्षेत्रज्ञे अभावात् । तथा च मायया उपाधिप्रविभक्तत्वेन हेतुना नानात्वेन संसारित्वेनानीश्वरत्वेन च प्रतीयमानोऽयं क्षेत्रज्ञः । वस्तुत एक एवेश्वरो निरुपाधिकः परमात्मेति ज्ञातव्य इति सिद्धम् ।

श्लोकस्योत्तरार्धकथने हेतुमाह—यस्मादिति । क्षेत्रं च क्षेत्रज्ञेश्वरश्च क्षेत्रक्षेत्रज्ञेश्वरौ तयोर्याथात्म्यं तत्त्वम् । यद्वा क्षेत्रं क्षेत्रज्ञ ईश्वरश्चेति त्रयाणां द्वन्द्वः । अज्ञदृष्ट्या क्षेत्रज्ञेश्वरयोर्द्वयोर्ग्रहणम् । ज्ञानगोचरं ज्ञानविषयं ज्ञेयमिति यावत् । अन्यत्स्पष्टम् । क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोर्दृश्यदृशोर्द्वयोरेव

रेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति, तस्मात्क्षेत्रक्षेत्रज्ञयोः ज्ञेयभूतयोः यद्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तत् ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रेतमित्यभिप्रायो ममेश्वरस्य विष्णोः ।

ननु—सर्वक्षेत्रेष्वेक एवेश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्तत ईश्वरस्य संसारित्वं प्राप्तं; ईश्वरव्यतिरेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसङ्गः । तच्चोभयमनिष्टं, बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात् , प्रत्यक्षादिप्रमाणविरोधाच्च । प्रत्यक्षेण तावत्सुखदुःख-

---

पदार्थत्वेन तृतीयपदार्थाभावादिति भावः । अथ वा इदं क्षेत्रं शरीरमनात्मा, क्षेत्रज्ञोऽहमीश्वर आत्मेति ज्ञानात्सर्वसंसारनिवृत्तेस्संसारनाशायान्यद्ज्ञातव्यं नास्तीति भावः । **तस्मादिति** । क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरिक्तज्ञातव्यांशाभावादित्यर्थः । **ज्ञेयभूतयोरिति** । ज्ञानस्वरूपोऽपि क्षेत्रज्ञो ज्ञेय एव- 'मनसैवानुद्रष्टव्य'मिति श्रुतेः, 'शास्त्रयोनित्वात्' इत्यधिकरणाच्च । ज्ञेयत्वस्य मायया कल्पितत्वादिति भावः। येन ज्ञानेन क्षेत्रक्षेत्रज्ञौ विषयीक्रियेते तद्ज्ञानं क्षेत्रक्षेत्रज्ञयोर्ज्ञानमित्युच्यत इत्यन्वयः । यस्मिन् ज्ञाने क्षेत्रं क्षेत्रज्ञश्च विषयौ भवतः तद्ज्ञानमित्यर्थः । क्षेत्रक्षेत्रज्ञविषयकं ज्ञानमिति यावत् । इदं क्षेत्रमिति, अहं क्षेत्रज्ञ ईश्वर इति च क्षेत्रक्षेत्रज्ञयोर्यदपरोक्षज्ञानं तदिति भावः । ननु यत् क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तद्ज्ञानमिति सर्वस्यापि मतमेवेति कृत्वा किं मम मतमित्युच्यतेऽत आह—**सम्यग्ज्ञानमिति** । संसारनिवर्तकत्वं ज्ञानस्य सम्यक्त्वम् । क्षेत्रक्षेत्रज्ञज्ञानमेव सम्यग्ज्ञानमिति मम मतं, ननु घटपटादिज्ञानम्।

तार्किकादयस्तु घटादिज्ञानमपि सम्यग्ज्ञानमिति मन्यन्ते । यद्वा इदं क्षेत्रमहं क्षेत्रज्ञेश्वर इति यद्ज्ञानं तदेव सम्यग्ज्ञानमिति मम मतं, अन्येषां तु भिन्नात्मज्ञानमेव सम्यग्ज्ञानमिति मतमिति भावः ।

ननु यथा तार्किकादिमतं तवाग्राह्यं, तथा तवापि मतं तेषामग्राह्यमत आह—**ममेश्वरस्य विष्णोरिति** । ईश्वरस्य मम यदेव मतं तदेव सर्वैर्ग्राह्यमिति भावः । नन्वीश्वरोक्तोऽप्यसङ्गतार्थः कथं स्वीकार्योऽस्माभिरिति तदुक्तार्थासाङ्गत्यमेव दर्शयति—**नन्वित्यादिना** । 'द्वा सुपर्णा सयुजा सखायौ, समानं वृक्षं परिषस्वजाते, तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशी'तीति श्रुत्या स्मृत्यनुभवाभ्यां च जीवास्संसारिणः कर्मफलभोक्तारः, ईश्वरस्त्वसंसारी साक्षीति स्थितायां वस्तुगतौ तां विहाय सर्वक्षेत्रेष्वेक एवेश्वरः क्षेत्रज्ञोऽस्ति, न तद्व्यतिरिक्तः कश्चन भोक्ता संसारी जीवोऽस्तीत्युक्तौ तत ईश्वरस्य संसारित्वं प्राप्तमीश्वरव्यतिरेकेण संसारिणोऽभावात्संसाराभावप्रसङ्गो वा प्राप्तः । नचेष्टापत्तिरित्याह—**तच्चोभयमनिष्टमिति** । तत्र हेतुमाह—**बन्धेति** । नित्यमुक्तस्येश्वरस्यैव संसारित्वेन बद्धत्वे तदन्यस्य च जडत्वे मोचकस्य चेतनान्तरस्याभावान्मुक्त्यनुपपत्तिः । ईश्वरस्य च स्वतन्त्रत्वेन भाव्यत्वाद्बन्धानुपपत्तिः । नहि स्वतन्त्रः कश्चित्स्वयं बन्धमनुभवति । अस्वतन्त्रस्य च नेश्वरत्वोपपत्तिः । ईश्वरात्परस्यान्यस्याभावादीश्वरस्य पारतन्त्र्यानुपपत्तिश्च ।

तद्धेतुलक्षणस्संसार उपलभ्यते; जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तस्संसारोऽनुमीयत इति सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे।

न, ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः- 'दूरमेते विपरीते विषूची, अविद्या या च विद्येति

---

नच प्रकृतिपरतन्त्रत्वमीश्वरस्येति वाच्यं, प्रकृतेरेवेश्वरपरतन्त्रत्वाज्जडवस्तु हि चेतनपरतन्त्रं लोके दृश्यते, प्रकृतिश्च जडा, ईश्वरश्चेतनः तस्मादीश्वरपरतन्त्रैव प्रकृतिरिति नेश्वरस्य पारतन्त्र्योपपत्तिरीश्वरत्वस्यैवाभावप्रसङ्गात्। तथा संसाराभाववादे च बन्धमोक्षयोरनुपपत्तिरेव। नच संसाराभाववादे बन्धस्यैवानुपपत्तिरिति वाच्यं, बन्धपूर्वकत्वेन मोक्षस्य बन्धाभावे मोक्षाभावात्। पश्वादिर्हि बद्ध एव मुच्यते, न त्वबद्ध इति। एवं बन्धमोक्षयोरसिद्धौ तद्धेतुशास्त्रस्यापि वैयर्थ्यमेव प्रसज्यते। ततश्च मूलच्छेदप्रसङ्गः—वेदान्तशास्त्रस्यैवानवतारात्। एवं व्यर्थशास्त्रकर्तृत्वेनेश्वरस्यासर्वज्ञत्वप्रसङ्गश्च। संसाराभावप्रसङ्गे दोषान्तरमाह—प्रत्यक्षेति। तत्र प्रत्यक्षप्रमाणविरोधं दर्शयति—प्रत्यक्षेणेति। उपलभ्यतेऽनुभूयत इत्यर्थः। सुखदुःखे तद्धेतूनि शीतोष्णादीनि तल्लक्षणः। प्रत्यक्षादीत्यादिपदगृहीतानुमानप्रमाणं दर्शयति—जगदिति। जगद्वैचित्र्यान्यथानुपपत्त्या लिङ्गेन धर्माधर्मनिमित्तसंसरोऽनुमीयते, धनिकत्वदारिद्र्यरुग्णत्वनीरोगत्वसुखित्वदुःखित्वराजत्वभृत्यत्वभार्यात्वभर्तृत्वप्रमुखं जगद्वैचित्र्यम्। तद्धि धर्माधर्मप्रयुक्तं धर्मवशाद्धनिकत्वादिरधर्मवशाद्दारिद्र्यादिश्च भवतीत्याभ्यामेव धर्माधर्माभ्यां सुखदुःखादिलक्षणस्संसारः।

अत्रायं प्रयोगः—धर्माधर्मनिमित्तस्संसारोऽस्ति, धर्माधर्मकृतजगद्वैचित्र्योपलब्धेः- इति। यद्वा धर्माधर्मौ स्तः, धर्माधर्मप्रयुक्तजगद्वैचित्र्योपलम्भादिति धर्माधर्मावनुमाय, संसारोऽस्ति तद्धेतुधर्माधर्मसत्त्वादिति संसारोऽनुमेयः। जगद्वैचित्र्यलक्षणकार्याद्धर्माधर्मानुमानं, धर्माधर्मलक्षणकारणात्संसारानुमानमिति भावः। तस्मात्क्षेत्रज्ञेश्वरैकत्वे एतत्पूर्वोक्तं सर्वमनुपपन्नमनुपपत्तिकरमिति जीवेश्वराभेदवादो न युक्तः। भेदवादे तु न कोऽपि दोषः- असंसारिणस्संसारिजनमोचकाच्चेतरेषां संसारिणां बद्धजीवानां सत्त्वेन बन्धमोक्षाद्युपपत्तेरिति द्वैतिनां पूर्वः पक्षः। उक्तं पूर्वपक्षं दूषयति—नेति। आत्मेश्वराभेदवादे न किमप्यनुपपन्नमित्यर्थः। तत्र हेतुमाह—ज्ञानाज्ञानयोरिति। ज्ञानाज्ञानयोरन्यत्वेन भिन्नत्वेन हेतुना उपपत्तेः बन्धमोक्षादेः सर्वस्योपपन्नत्वादित्यर्थः। आत्मेश्वरैकत्वाश्रयो ज्ञानमार्गः, तदनेकत्वाश्रयोऽज्ञानमार्गः, तौ परस्परं भिन्नावज्ञानमार्गे एव जीवेश्वरयोर्भेदो जीवस्य बन्धः, ईश्वरस्य नित्यमुक्तत्वं जीवमोचकत्वं च जीवनानात्वं तदाश्रयस्सर्वसंसारः। ज्ञानमार्गे तु जीव एवेश्वरः। स च सच्चिदानन्दलक्षणः, तस्य न कोऽपि बन्धः, नापि ततो मोक्षः, नापि संसारः- बन्धादीनां सर्वेषां मिथ्यात्वादात्मन एकस्यैव सत्त्वात्। एवं मार्गद्वये सति नेश्वरस्य संसारित्वं, नापि संसारस्य सुतरामभावः।

ज्ञानिदृष्ट्या संसारस्यैवाभावादीश्वरस्य जीवत्वेऽपि न संसारित्वमज्ञानिदृष्ट्या तु संसारस्य सत्त्वेऽपि जीवादीश्वरस्य भिन्नत्वेन नेश्वरस्य संसारित्वं जीवस्य संसारिणस्सत्त्वान्न बन्धमोक्षादिशास्त्रा-

ज्ञाता' तथा तयोर्विद्याविद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः- 'श्रेयश्च प्रेयश्च' इति, विद्याविषयः श्रेयः, प्रेयस्त्वविद्याकार्यमिति । तथा च व्यासः- 'द्वाविमावथ पन्थाना'-

---

नर्थक्यमिति भावः । नच ज्ञानिदृष्ट्या संसाराभावे बन्धमोक्षादिशास्त्रानर्थक्यं तत्र प्राप्तमिति वाच्यं, तद्दृष्ट्या शास्त्राणामेवाभावात् । तद्दृष्ट्या ब्रह्मैकमेव ह्यस्ति- 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः, न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति ह्युक्तं श्रुत्या । नच परमार्थदशामधिकृत्य तथोक्तं श्रुत्येति वाच्यं, ज्ञानमार्गस्य परमार्थदशात्वात् , अज्ञानमार्गस्य व्यवहारदशात्वाच्च ।

अथ वा वासनावशात् ज्ञानिदृष्ट्या शास्त्राणि सन्तुनाम, तथापि तानि मिथ्याभूतान्येवेति तदानर्थक्यमिष्टमेव । नचोपजीव्यविरोधस्यान्याय्यत्वाच्छास्त्रादेव ज्ञानं लब्धवतः पुरुषस्य शास्त्रनिराकरण-मयुक्तमिति वाच्यं, नीरलाभानन्तरं खनित्रस्यानर्थक्यवत् ज्ञानलाभानन्तरं शास्त्रं व्यर्थमेवेति का तन्मिथ्यात्वज्ञानेन क्षतिः? यदि ज्ञानी शास्त्रं संसारनिवर्तकज्ञानप्रदं नेति ब्रूयात्तर्हि स्यादुपजीव्य-विरोधदोषः, परं तु शास्त्रोक्तविधयैव गुरुशास्त्रादिकं सर्वं मिथ्येति वदति, अतो न दोषः । किंच यदि ज्ञानी शास्त्रमधिगत्यापि सर्वं द्वैतं सत्यमिति ब्रूयात्तदैव शास्त्रविरोधी स्यात्- 'ब्रह्म सत्यं, जगन्मिथ्या' इति हि शास्त्रम् । एवं यश्शास्त्रविरुद्धार्थं ब्रूयात्स एवेश्वरस्यापि विरोधी, ईश्वराज्ञारूपत्वाच्छास्त्रस्य । तस्माद्द्वैतिन एव शास्त्रविरोधिनः- शास्त्रानभिमतत्वाद्भिन्नात्मज्ञानस्य । यत एवं मार्गद्वयमस्ति ततो नेश्वरसंसारादिदोषप्रसङ्गः ।

ननु ज्ञानमार्ग एवात्मेश्वरैकत्वं नाज्ञानमार्ग इत्येतत्स्वकपोलकल्पितमिति शङ्कायां नेत्याह— दूरमिति । एते विषूची मार्गौ दूरं विपरीते अतीव परस्परं विलक्षणे । के ते विषूची अत आह— अविद्या या च विद्येति, ज्ञातेति । या अविद्येति ज्ञाता, या च विद्येति ज्ञाता ते इत्यन्वयः । अविद्यामार्गो विद्यामार्गश्चेत्यर्थः । अज्ञानमार्गे जीवस्संसारी नाना भिन्न ईश्वरादीश्वरस्त्वसंसारी एकः । ज्ञानमार्गे तु जीवोऽसंसारी एक ईश्वरः, संसारस्तु मिथ्यैवेति मार्गद्वयस्यातीव वैलक्षण्यमिति भावः । दक्षिणोत्तरदिगभिमुखमार्गद्वयवदिति । न केवलं स्वरूपत एव तयोर्भेदः, किंतु फलतोऽपी-त्याह—तथेति, विरुद्ध इति । परस्परं भिन्नः । अविद्याफलस्य स्वर्गादेर्बन्धहेतुत्वात् ज्ञानफलस्य च मोक्षत्वादिति भावः । फले एव दर्शयति—श्रेयश्चेति । 'श्रेयश्च प्रेयश्च मनुष्यमेत' इति कठोप-निषत् । श्रेयोऽभिवृद्धिः स्वर्गपशुपुत्रादिलक्षण इति भ्रमनिरासायाह—विद्याविषय इति । आत्य-न्तिकपुरुषार्थस्यैव श्रेयस्त्वाद्विद्याविषयो मोक्षश्श्रेयः । आपाततः प्रियत्वेन भासमानत्वात् स्वर्गपशुपुत्रादि-लक्षणं प्रेयः फलमविद्यायाः । प्रेयसस्स्वर्गादेर्जन्यत्वादविद्याकार्यमित्युक्तम् । मोक्षस्य च नित्यत्वेनाजन्य-त्वाद्विद्याविषयश्श्रेय इत्युक्तम् । विद्याविषयः विद्यागोचरः । विद्यया प्राप्य इति यावत् । नच मोक्षस्य नित्यप्राप्तस्य ब्रह्मभावरूपस्य कथं प्राप्यत्वमिति वाच्यं, हिरण्यनिधिदृष्टान्तेन प्राप्यत्वोपचारात् । एवं मोक्षस्य विद्याफलत्वमप्यौपचारिकमेव- बन्धनिवृत्तेरेव विद्याफलत्वात् । ततश्च बन्धहेतोरविद्या-फलाद्बन्धनिवृत्तिर्विद्याफलमतीव विलक्षणमिति भावः ।

वित्यादि, 'इमौ द्वावेव पन्थानौ' इत्यादि च । इह च द्वे निष्ठे उक्ते- अविद्या च सहकार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते ।

श्रुतयस्तावत्- 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः', 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय', आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्च'नेति । अविदुषस्तु- 'अथ तस्य भयं भवति', 'अविद्यायामन्तरे वर्तमानाः', 'ब्रह्म

---

एवं श्रुतिं प्रमाणीकृत्य स्मृतिं प्रमाणयति— द्वाविमाविति । भोगमोक्षप्रापकौ द्वौ मार्गावित्यर्थः । बन्धमोक्षप्रापकाविति वा । भोगस्यैव बन्धत्वात् । गीतामपि प्रमाणयति—इह चेति । 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति ज्ञानकर्ममार्गद्वयस्योक्तत्वादिति भावः । नच कर्ममार्ग एव दर्शितो न त्वज्ञानमार्ग इति वाच्यं, कर्ममार्गस्यैवाज्ञविषयत्वेनाज्ञानमार्गत्वात् ।

ननु कर्ममार्गवद्ज्ञानमार्गोऽपि व्यवहारदशायामेवास्ति, नतु परमार्थतः- परमार्थदशायामात्मध्यानाद्ययोगात् ; तथा च ज्ञानमार्गो न परमार्थदशेति कृत्वा ज्ञानिदृष्ट्याप्यस्त्येव संसार इति कथं त्वया संसाराभावः प्रतिपादित इतिचेत् , उच्यते—यो हि ज्ञानयोगेऽधिकृतस्स हि संसारं मिथ्येति पश्यति, यस्तु परमार्थदशायामवस्थितस्स संसारं नैव पश्यतीति ज्ञानमार्गः परमार्थदशायास्सन्निहितोऽत उक्तमुपचारात् ज्ञानमार्गः परमार्थदशेति । अत एवाथवेति पक्षान्तरमारब्धम् । तस्माद्व्यवहारदशायामेव मार्गद्वयमिदमस्ति । नचैवं ज्ञानिदृष्ट्यापि संसारोऽस्तीति वाच्यं, असंसारिब्रह्मात्मदर्शनस्यैव ज्ञानत्वात् । नच ज्ञानमार्गपरिपाकदशायामेवात्मसाक्षात्कारात्संसाराभाव इति वाच्यं, तदारम्भेऽपि संसारे तस्य मिथ्यात्वनिश्चयेन संसाराभावात् । अथ वा यस्य ज्ञानमार्गः परिपक्वस्स एव ज्ञानी, तद्दृष्ट्यैव संसाराभाव इत्युच्यत इति । एवं मार्गद्वयोपन्यासेन च किं ज्ञायते ? अविद्ययेश्वरस्य बन्धः, विद्यया तु तन्मुक्तिरिति । अज्ञानशवादेवेश्वरं बद्धं संसारिजीवं मन्यते लोकः । विद्ययाऽज्ञाननाशे तु नित्यमुक्त एवेश्वरो जीव इति प्रत्येतीति च । अविद्यावस्थायामेव सर्वस्संसारो नतु विद्यावस्थायामिति च । यस्मादेवमविद्ययैव सर्वस्संसारस्तस्मात्त्यक्तव्येयमविद्येत्याह—अविद्येति । सह कार्यैः रागद्वेषादिभिस्सह ।

नन्वविद्या हातव्येत्ययमर्थः कुतोऽवगम्यतेऽत आह—श्रुतीति । अवगतिप्रकारमेव दर्शयति—श्रुतय इत्यादिना । इह जीवद्दशायां जन्मनीति वा । अवेदीद्ब्रह्म जानीयाच्चेदथ सत्यं ब्रह्म मोक्ष इति यावदस्ति सिद्ध्यति, ब्रह्मैव भवतीति वा । 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुत्यन्तरात् । इह ब्रह्म नावेदीचेत् महती अधिका विनष्टिर्नाशः स्थावरादिजन्मनरकादिप्राप्तिलक्षण इति भावः । भवेदिति शेषः । तं परमात्मानमेवात्माभेदेन विद्वान् जानन् पुरुषः इहैवामृतो मुक्तो भवति । अयनाय मोक्षाय अन्यः पन्था न विद्यते । ब्रह्मणः आनन्दमिति राहोश्शिर इतिवन्निर्देशः । आनन्दस्वरूपं ब्रह्मेत्यर्थः । विद्वानात्माभेदेन जानन् पुरुषः कुतश्चन कस्माच्चिदपि रोगव्याघ्रसर्पादिलक्षणाद्भयहेतोस्सकाशान्न बिभेति । स्वस्य ब्रह्मत्वादिति भावः । तस्येति । अनात्मज्ञस्येत्यर्थः । 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः

वेद ब्रह्मैव भवति', अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्', 'आत्मविदः स इदं सर्वं भवति', यदा चर्मवदाकाश'मित्याद्याः सहस्रशः। स्मृतयश्च- अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः', इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः', समं पश्यन् हि सर्वत्र' इत्याद्याः।

न्यायतश्च- 'सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति। अज्ञानतस्तत्र पतन्ति केचित् ज्ञाने फलं पश्य यथा विशिष्टम्' तथा च- देहादिष्वात्मबुद्धिरविद्वान्

---

पण्डितम्मन्यमानाः, जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा' इति। जङ्घन्यमानाः भृशं पीड्यमानाः परियन्ति विभ्रमन्तीति मुण्डकपाठः। दन्द्रम्यमाणा इति कठपाठः। दन्द्रम्यमाणा अत्यर्थं कुटिलमनेकरूपां गतिं गच्छन्त इत्यर्थः।

**अन्योऽसाविति**। असावीश्वरोऽन्यो भिन्नः। **देवानामिति**। स कर्मी देवानां पशुः पशुवद्भोग्य इत्यर्थः। यथा मनुष्यस्य गवादिपशुर्भोग्यस्तद्वदिति भावः। यस्य मूढस्य इदं सर्वं जगद्भवति। प्राज्ञस्य तु ब्रह्मैकमेवास्ति- सर्वस्य जगतो मिथ्यात्वेनाभावात्। भावे वा सर्वस्यापि ब्रह्मत्वात्सर्वं ब्रह्मैव भवति। 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' इति। यथा चर्म वेष्टयन्ति तथा आकाशं मानवाः यदा वेष्टयिष्यन्ति तदा देवं परमात्मानं प्रत्यगभिन्नमविज्ञाय दुःखस्य संसारस्यान्तो भविष्यतीत्यर्थः। आकाशवेष्टनवत् ब्रह्मवेदनं विना संसारनाशनमशक्यमिति भावः। **तेनेति**। अज्ञानेन ज्ञानस्यावृतत्वेन हेतुना जन्तवो मुह्यन्ति। वयं संसारिण ईश्वराद्भिन्ना इत्यादिमोहं यान्ति। न्यायतश्चेत्यस्यावगम्यत इत्यनेनान्वयः। **सर्वानिति**। मनुष्याः कुशलाः केचित्। सर्वान् सर्वाणीत्यर्थः। कुशाग्राणि दृष्ट्वेति शेषः। तथा उदपानं ज्ञात्वा परिवर्जयन्ति। अज्ञानत उदपानमिति ज्ञानाभावात्तु केचिदविवेकिनस्तत्र तृणच्छन्नकूपे पतन्ति। तस्माद्ज्ञाने विशिष्टं फलं यथा यथावत्पश्य। एवमज्ञानं संसारकूपपतनहेतुः पुंसां, ज्ञानं तु तत्परिहारहेतुरिति भावः। इदमेवाह—**तथा चेति**। रागद्वेषादिप्रहाणमपेक्षत इति रागद्वेषादिप्रहाणापेक्षस्तस्मात्। धर्माधर्मप्रवृत्तिः- धर्माधर्मार्थकर्मप्रवृत्तिः। तदुपशमस्तन्निवृत्तिः। तस्मात्सर्वकर्मसन्न्यासादित्यर्थः। हेतुरयं मुक्तिंप्रति। देहादिष्वात्मबुद्धौ सत्यां देहादिसुखहेतुषु चन्दनादिषु रागः, तद्दुःखहेतुषु शीतवाततपादिषु द्वेषः, ताभ्यां च रागद्वेषाभ्यां हेतुभ्यां सुखार्थं दुःखनिवृत्त्यर्थं च धर्मानुतिष्ठति, दुःखहेतुशत्रुसर्पचोरादिनिवृत्त्यर्थमधर्मं च हिंसादिलक्षणमनुतिष्ठति। एवं धर्माधर्मानुष्ठानवशात्सुकृतदुष्कृतफले स्तः। तद्भोगार्थं देवमनुष्यपश्वादिरूपेण जायते, पुनर्धर्माधर्मादिलक्षणं कर्म कुरुते, प्रारब्धावसाने म्रियते, पुनः कर्मफलानुभवार्थं जायते, पुनः कर्म कुरुते, पुनरपि म्रियत इत्येवमवर्जनीयसञ्चारं जन्ममरणलक्षणं संसारचक्रं प्रतिपद्याज्ञः खिद्यते। यथावेक्षुखण्डः प्रसिद्धं चक्रमिति। एवं च जन्ममरणलक्षणसंसारस्य धर्माधर्मानुष्ठानं हेतुः, तस्य च रागद्वेषादिकं हेतुः, तस्य च देहादिष्वात्मबुद्धिर्हेतुरिति सर्वानर्थमूलकन्दं देहादिष्वात्मभ्रमं त्यजेद्विद्वानित्याह—**देहादीति**। देहादिष्वात्मबुद्ध्यभावे

रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते; देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षाद्धर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित् प्रत्याख्यातुं शक्यं न्यायतः। तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदः संसारित्वमिव भवति, यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो निश्चितोऽविद्याकृतः, यथा स्थाणौ पुरुषनिश्चयः । नचैतावता पुरुषधर्मः स्थाणोर्भवति, स्थाणुधर्मो वा पुरुषस्य; तथा न चैतन्यधर्मो देहस्य, देहधर्मो वा चैतन्यस्य; सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तः; अविद्याकृतत्वाविशेषात् जरामृत्युवत् ।

---

रागद्वेषाभावः, ततो धर्माधर्मानुष्ठानाभावः, ततस्संसाराभाव इति सोयमर्थो न केनचित्प्रत्याख्यातुं शक्यः । तस्मादज्ञस्यैव संसारो न प्राज्ञस्येति कथमीश्वरस्य संसारित्वम्? कथं वा संसराभावस्संसारिणामज्ञानां सत्त्वादितीममर्थमाह—**तत्रेत्यादिना** । तत्रेति व्यवहारभूमावित्यर्थः ।

**एवं सतीति** । देहाद्यभिमानिन एव संसारो नतु देहादिव्यतिरिक्तात्मदर्शिन इति स्थिते सतीत्यर्थः । **ईश्वरस्यैवेति** । असंसारिण एवेत्यर्थः । अविद्याकृतमज्ञानकृतम् । ननु कथमसंसारिणः क्षेत्रज्ञस्याविद्यावशादपि संसारित्वमित्यतो दृष्टान्तमाह—**यथेति** । आत्मनो यथा देहादिरूपत्वमविद्याकृतं तद्वदिति भावः । ननु नास्त्यात्मनो देहाद्यात्मत्वमत आह—**सर्वेति** । सर्वजन्तूनां सर्वप्राणिनामनात्मसु देहादिष्वविद्याकृतो निश्चित आत्मभावः प्रसिद्धो हि । देवोऽहं, मनुष्योऽहं, काणोऽहं, बधिरोहमित्यादिव्यवहारादिति भावः । तत्रापि दृष्टान्तमाह—**यथा स्थाणाविति** । मन्दान्धकारे दृष्टे स्थाणौ यथाऽविवेकिनः पुरुष इति निश्चयः तद्वदित्यर्थः । ईश्वरमेव सन्तं क्षेत्रज्ञमज्ञानादज्ञास्संसारिणं मन्यन्ते तार्किकादयः । यथा वा बौद्धादयः देहमेवात्मानं, यथा वा कुदृष्टयः स्थाणुमेव पुरुषमिति यावत् ।

ननु सर्वजन्तुप्रसिद्धनिश्चयबलात्संसार्येव क्षेत्रज्ञ इत्यत आह—**नचेति** । एतावता अज्ञानकृताज्ञजननिश्चयमात्रेणेत्यर्थः । यथा अज्ञजननिश्चयमात्रेण स्थाणुः पुरुषो न भवति, पुरुषो वा स्थाणुर्न भवति, तथा अज्ञजननिश्चयमात्रेण देह आत्मा न भवति, आत्मा वा देहो न भवति । नच आत्मा देहो माभून्नाम, संसारी तु भवेदेव देहातिरिक्तस्याप्यात्मनस्संसारोपलम्भादिति तार्किकादिदृष्टिमाश्रित्य वाच्यं, देहधर्मत्वात्संसारस्य । नच सुखदुःखादयो न देहधर्माः, किंतु मनोधर्मा एवेति वाच्यं, मनसोऽपि सूक्ष्मदेहत्वात् । तस्मात्सुखदुःखमोहादिलक्षणस्संसारो देहधर्म एवेति नात्मनो युक्तः, आत्मनस्तु चैतन्यमेक एव धर्मः । सच न देहस्य युक्तः, जडत्वात् । तस्माद्देह एव संसारी नात्मा- देहात्मनोरविवेकात्तु देहधर्मस्संसार आत्मन्यध्यस्त इति, संसार्यात्मेति मन्यन्ते मूढाः । देहं च चेतन इति । तस्मात्तार्किकाद्यभिमतदेहभिन्नत्वादेवासंसार्यात्मेति सिद्धम् ।

ननु स्थाणुपुरुषयोरितरेतरधर्माध्यासो युक्त एव भवतु, देहात्मनोस्तु न भवतीत्यत आह—**अविद्येति** । अज्ञानकृतत्वांशे भेदाभावाद्युक्त एवेत्यर्थः ।

**नाऽतुल्यत्वादितिचेत्- स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्राऽन्योन्यस्मिन्नध्यस्तावविद्य देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरेतराध्यास इति न समो दृष्टान्तः, अतो देहधर्मो ज्ञेयोऽ ज्ञातुरात्मनो भवतीति चेन्न, अचैन्यादिप्रसङ्गात् । यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्म स्सुखदुःखमोहेच्छाद्वेषादयो ज्ञातुरात्मनो भवन्ति, तर्हि तद्ज्ञेयस्य क्षेत्रस्य धर्माः केचि**

---

ननु कुतस्संसार आत्मनो न युक्त इत्यत्र दृष्टान्तमाह—**जरामृत्युवदिति** । आस्तिका सर्वे देहभिन्नमात्मानं मन्वाना जरामृत्यू देहधर्माविव, न त्वात्मधर्माविति प्रतियन्ति । कथमन्यथा दे मृतेऽपि देहिनः श्राद्धादिकं कुर्युः ? कथं वा स्वर्गादिफललोभेन यज्ञादिकं कुर्युः ? तथा च य जरामृत्यू स्थूलदेहधर्मौ तथा सुखदुःखादयस्सूक्ष्मदेहधर्मा एव । अतस्तेषां नात्मधर्मत्वं युक्तमिति भावः

**नातुल्यत्वादितिचेदिति** पूर्वपक्षः । तं स्वयमेव व्याख्याति—**स्थाण्विति** । ज्ञेयावेव सन्तं स्थाणुपुरुषौ ज्ञात्राऽविद्ययाऽन्योन्यस्मिन्नध्यस्तावित्यन्वयः । अतुल्यत्वात्स्थाणुपुरुषदृष्टान्तो न युक्त इ चेदिति संक्षिप्तप्रश्नार्थः । विस्तृतप्रश्नार्थस्तु स्फुट एव । यस्य स्थाणौ पुरुषनिश्चयस्स हि स्थाणुपुरुषाभ्य मन्य एव, प्रकृते तु यस्य देहे आत्मबुद्धिस्स आत्मैव, नतु देहात्मनोरन्य इति कृत्वा स्थाणुपुरुष देहात्मनोरितरेतराध्यास इति वक्तुं न युक्तमिति भावः । अन्यस्मिन्नन्य इति भ्रमो भवेदेव । स्वस्मि न्पुनरन्य इति भ्रमः, अन्यस्मिन् स्वयमिति भ्रमश्च भवितुं नार्हति- स्वस्य नित्यापरोक्षत्वादेव । न स्वकरस्थं दण्डं कोऽपि पुरुषत्वेन सर्पत्वेन वा अध्यसेत् । तस्मादात्मनि देह इति, देहे आत्मेति भ्रमो न युक्त आत्मनः । देहस्य तु सुतरां न युक्तः- जडत्वात् । न हि स्थाणुरहं पुरुष इति, पुरुषो स्थाणुरहमिति क्वापि भ्राम्येदित्याशयः । **अत इति** । देहात्मनोरितरेतराध्यासायोगादित्यर्थः । स एवायमज्ञनिश्चयो न भ्रम इत्याह—**देहेति** । देवोऽहं, मनुष्योहं, काणोऽहं, बधिरोऽहं, सुख्यहं दुःख्यहमित्यादिप्रतीतयो न भ्रमाः, किंतु प्रमा एव- देहाद्याश्रयमात्रेण देहधर्माणामपि जीवे संक्रमात यथा पृथिवीसंयोगाज्जलस्य गन्धगुणसंक्रमः । तस्मात्संसार्येवात्मेति पूर्वपक्षः ।

परिहरति—**नेति** । हेतुमाह—**अचैतन्यादिप्रसङ्गादिति** । यदि देहधर्मा आत्मनः स्यु स्तर्हि देहधर्मो जाड्यमपि स्यादात्मनः । आदिपदाद्विकारित्वानित्यत्वादिसंग्रहः । नचेष्टापत्तिः- 'अ नित्यः शाश्वतोऽयं पुराणः', 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिशास्त्रविरोधात् । जीवस्या जडत्वे जगदान्ध्यप्रसङ्गात् । ननु देहधर्मास्सर्वे जीवस्य भवन्तीति नास्माभिरुच्यते, किंतु सुखदुःख मोहादय एव भवन्ति, जरामरणजाड्यादयस्तु न भवन्तीति पूर्वपक्षमुद्भाव्य परिहरति—**यदि हीत्या दिना** । ज्ञेयस्य क्षेत्रस्य केचिद्धर्मास्सुखदुःखमोहेच्छाद्वेषादयो ज्ञातुरात्मनो भवन्ति, ज्ञेयस्य क्षेत्रस केचिद्धर्मा अविद्यारोपिताः, जरामरणादयस्तु ज्ञातुरात्मनो न भवन्तीति पूर्वपक्ष इति यद्युच्यते त विशेषहेतुर्वाच्य इति पृच्छति सिद्धान्ती । देहधर्माणां मध्ये केचिदेवात्मनो भवन्ति, केचिन्न भवन्ती त्येवं रूपविशेषस्य को हेतुरित्यर्थः ।

दात्मनो भवन्त्यविद्यारोपिताः, जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वाच्यः 'न भवन्ती' त्यस्त्यनुमानमविद्याध्यारोपितत्वाज्जरामरणादिवदिति, हेयत्वादुपादेयत्वाच्चेदित्यादि । तत्रैवं सति कर्तृत्वभोक्तृत्वलक्षणस्संसारो ज्ञेयस्थो ज्ञातर्यविद्याध्यारोपित इति न तेन ज्ञातुः किंचिद्दुष्यति, यथा बालैरध्यारोपितेनाकाशस्य तलमलिनत्वादिना ।

एवं च सति सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगन्धमात्रमपि न शक्यं वक्तुम् । न हि क्वचिदपि लोकेऽविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः।

---

ननु सुखादय आत्मधर्मा न भवन्तीति तव पक्षेऽपि विशेषहेतुर्नास्तीत्याशङ्क्य परिहरति—नेति । सुखादय आत्मधर्मा न भवन्तीत्यत्र विशेषहेतुरनुमानमस्तीत्यर्थः । तदेवानुमानं दर्शयति—अविद्येति । सुखादय आत्मधर्मा न भवन्तीत्यविद्याध्यारोपितत्वाज्जरादिवदिति प्रयोगः । अनुमानान्तरमाह—हेयत्वादिति । आत्मन्यविद्याध्यारोपिता एव सुखदुःखादयो देहधर्माः- हेयत्वादुपादेयत्वाच्च जरामरणादिवदिति प्रयोगः । यदि सुखदुःखादय आत्मधर्मास्तर्हि आत्मना ते हातुं न शक्याः । नहि चैतन्यानन्दादय आत्मना त्यक्तुं शक्यन्ते । यदि त्वात्मन्यनध्यस्ताः केवलमनात्मधर्मास्तर्ह्युपादातुं न शक्यन्ते । न ह्यन्यधर्मोऽन्येनोपादीयते । इमे तु सुखदुःखादयो ज्ञानिना त्यजन्ते, अज्ञानिना तूपादीयन्ते । यथा देहधर्मौ जरामरणे ज्ञानिना त्यजेते । नाहं जीर्णो नापि मृतः, किंतु देह एव जीर्णो मृतश्चेति हि ज्ञानिनः प्रत्ययाः । अज्ञेन तूपादीयेते- 'जीर्णोऽहं मृतोऽहं मरिष्येऽह'मिति तत्प्रत्ययात् । तस्मादात्मन्युपलभ्यमानास्सर्वेऽपि सुखदुःखजरामरणादिदेहधर्मा आत्मन्यध्यस्ता एवाविद्यया न त्वनध्यस्ता नाप्यात्मानः स्वाभाविका वा भवन्तीति स्थितम् ।

ज्ञेयस्थः देहेन्द्रियादिक्षेत्रस्थः; ज्ञातरि क्षेत्रज्ञे । अनेनाविद्यया आत्मनि; देहधर्मसंसारारोपणेनेत्यर्थः । किंचिदपि न दुष्यति, नास्त्यात्मनः कियानपि संसारदोष इत्यर्थः । तत्र दृष्टान्तमाह—यथेति । बालैरध्यारोपितेन तलमलिनत्वादिना आकाशस्य न कोऽपि लेपो यथा तद्वदित्यर्थः । तलमिन्द्रनीलकटाहः तद्वन्मलिनं तलमलिनं तद्भावस्तत्त्वमादिपदात्पीतत्वश्वेतत्वादिग्रहणम् । नीरूपमप्याकाशं बाला नीलमिति, सन्ध्याम्बुदावरणे सति पीतमिति, शारदमेघावरणे सति श्वेतमिति च मन्यन्ते । न तावता गगनस्य नैल्यादिसम्बन्धः । एवमसंसारिणमप्यात्मानं संसारिणं मन्यन्तेऽज्ञास्तावता नात्मनः कोऽपि संसार इति भावः । एवं च सतीति । अविद्याकृतदेहादितादात्म्याध्यासजन्य एवात्मनस्संसारो न तु स्वत इति स्थिते सतीत्यर्थः । भगवत इति । 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थित' इति भागवतादिति भावः । गन्धो लेशः । कुतो न शक्यमत आह—न हीति । अविद्यया रज्ज्वाद्यधिष्ठाने आरोपितेन सर्पादिधर्मेण रज्ज्वादेर्न कोऽप्युपकारः, नापि कश्चिदपकारो दृष्टः । नहि सर्पाध्यासमात्रेण रज्जोर्विषदंष्ट्रादिमत्त्वं स्यात् । नहि मध्याह्नार्ककिरणव्याप्तमरुभूमौ जलाध्यासमात्रेण भूमेर्द्रवादिलाभः । न हि च शुक्तिकायां रजताध्यासमात्रेण शुक्तिकायाः कटकाद्युपयोगित्वलाभः । तद्वदात्मनि देहधर्माध्यासमात्रेण न स्यादेवात्मनस्संसार इति भावः ।

यत्तूक्तं— न समो दृष्टान्त इति, तदसत्। कथम्? अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोस्साधर्म्यं विवक्षितं, तन्न व्यभिचरति। यत्तु ज्ञातरि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः।

अविद्यावत्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेन्न, अविद्यायास्तामसत्वात्। तामसो हि प्रत्ययः आवरणात्मकत्वादविद्याविपरीतग्राहकः, संशयः तदुपस्थापको वा अग्रहणात्मको वा

---

ननु ज्ञेयौ स्थाणुपुरुषावविद्यया ज्ञात्राऽन्योन्यस्मिन्नध्यस्तौ, देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरेतराध्यास इति न समो दृष्टान्त इति पूर्वपक्षस्य किमुत्तरमत आह—यत्तूक्तमिति। असदयुक्तमित्यर्थः। ननु कुतस्तद्वचनस्यायुक्तत्वमत आह—अविद्येति। तत्साधर्म्यमित्यर्थः। न व्यभिचरति नैकान्त्याप्तिं भजत इत्यर्थः। ननु ज्ञातर्यविद्यया ज्ञेयधर्माध्यासो न सम्भवतीत्यत आह—यत्त्विति। तस्यापि जरादिभिर्नैकान्तिकत्वं दर्शितमित्यन्वयः। तस्यापि ज्ञातर्यविद्यया ज्ञेयधर्माध्यासो न सम्भवतीत्यस्यापीत्यर्थः। नैकान्तिकत्वं व्यभिचारः।

अयं भावः—ज्ञेयज्ञात्रोरितरेतराध्यासो न भवतीति यदुक्तं त्वया तद्वाक्यमपि सव्यभिचारत्वाद्दुष्टमेव। नच तस्य व्यभिचाराभावश्शङ्क्यः, ज्ञेयदेहधर्माणां जरामरणादीनां ज्ञातर्यध्यासदर्शनात्। नच तथाऽध्यासो नास्तीति वाच्यं, जातोऽहं, वृद्धोऽहं, जीर्णोऽहं, मृतोऽहं, मरिष्येहमित्यादिप्रतीतिभिरेव तदध्याससिद्धेः। तस्माद्ज्ञेयज्ञात्रोरितरेतराध्याससम्भवाद्देहधर्मस्य संसारस्य जीवेऽध्यासस्सम्भवत्येवेति। ज्ञेययोः स्थाणुपुरुषयोरपीतरेतराध्यासो न ज्ञात्रा कृतः, किंत्वविद्ययैव। तथा ज्ञेयज्ञात्रोरप्यविद्यया क्रियत इति कृत्वा स्वस्मिन्नन्य इति भ्रमः, अन्यस्मिन् स्वयमिति भ्रमो वाऽविद्यावशादुपपद्यत एव। ब्राह्मणस्य विष्णुशर्मणः स्वप्ने क्षत्रियः कृष्णवर्माहमिति भ्रमदर्शनात्। तस्माद्ज्ञेययोरिव ज्ञेयज्ञात्रोरप्यविद्ययेतरेतराध्यासस्सम्भवत्येवेति न कोऽपि दोषः। ज्ञेयज्ञातृव्यतिरिक्ताया एवाविद्याया अध्यासकल्पकत्वादिति भावः।

ननु यद्यविद्यया स्थाणौ पुरुषधर्माध्यास इव जीवे देहधर्मसंसाराध्यासः कृतः, तर्हि साऽविद्या क्षेत्रज्ञे वर्तत इति कृत्वा तयैवाविद्यया क्षेत्रज्ञस्य संसारित्वं प्राप्तमविद्यावत एव संसारित्वदर्शनादिति पृच्छति—अविद्यावत्त्वादिति। परिहरति—नेति। तत्र हेतुमाह—अविद्यायास्तामसत्वादिति। कथमविद्या तमोगुणमयीत्यत आह—तामस इति।। तामसः प्रत्यय एवावरणात्मकत्वादविद्येत्युच्यते यस्मात्तस्मात्तमोगुणमय्येवाविद्या। तूलाज्ञानस्याविद्यात्वादिति भावः। कः पुनस्स तामसः प्रत्ययोऽत आह—विपरीतेति। विपरीतग्राहकः, संशयोपस्थापकः, अग्रहणात्मकश्चेति त्रिविधः प्रत्ययोऽविद्येत्युच्यते। अविद्याकार्यत्वात्संशयविपर्ययाग्रहणानामविद्यात्वमिति भावः। स्थाणुर्वा पुरुषो वेति ग्रहणं संशयः, नायं स्थाणुः किंतु पुरुष एवेति स्थाणोः पुरुषत्वेन ग्रहणं विपर्ययः, नास्ति स्थाणुरिति

**विवेकप्रकाशभावे तदभावात् तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेः ।**

**अत्राह—एवं तर्हि ज्ञातृधर्मो अविद्या न, करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः ।**

---

स्थाण्वज्ञानमग्रहणमिति विवेकः । एवं प्रकृते च आत्मा किं देह उत देहादन्य इति संशयः, देह एवात्मेति विपर्ययः, नास्त्यात्मेति कश्चिदित्यग्रहणम् । एतत्त्रिविधतामसप्रत्ययप्रयुक्त एव संसार इति संसारोऽविद्याकार्यमेव ।

नन्विदं प्रत्ययत्रयं विद्यैवास्तु, अत आह—विवेकेति । विवेकप्रकाशे सति प्रत्ययत्रयाभावाद्विवेकप्रकाशाभाव एतत्सद्भावान्नास्य विद्यात्वम् । विद्या हि प्रमाज्ञानम् । यथा स्थाणोः स्थाणुत्वेन ग्रहणम् । एवमात्मन आत्मत्वेन ग्रहणमेव विद्या । इदं च प्रमाज्ञानमात्मानात्मादिपदार्थविवेकप्रयुक्तम् । अग्रहणादिस्तु विवेकाभावप्रयुक्त इत्यग्रहणादिरेवाऽविद्या । कस्मात्पुनर्विद्याविद्ययोरिदं वैलक्षण्यमत आह—आवरणात्मकत्वादिति, विद्याप्रकाशेति च । अविद्या ह्यावरणात्मिका । विद्या तु प्रकाशात्मिका । ततश्चाऽविद्यया स्थाण्वादिपदार्थ आव्रियते पटेनेव रूपिका । यद्वा अन्धकारेणेव घटः । विद्यया तु स्थाण्वादिपदार्थः प्रकाश्यते, दीपेनेव घटः । तस्मादन्धकारवदावरणात्मिकाऽविद्या, दीपवत्प्रकाशात्मिका विद्या । अन्धकारे एव स्थाणोरग्रहणविपरीतग्रहणसंशया न तु प्रकाशे । तथा अविद्यायामेवात्मनोऽग्रहणविपरीतग्रहणसंशया न तु विद्यायामित्यविद्याकृत एव संसारः ।

नन्वविद्यावशादेवाग्रहणादिकमित्यत्र किं निदर्शनमत आह—तामस इति । तामसे तमोगुणमये आवरणात्मके च तिमिरादिदोषे; चक्षुष इति शेषः । सत्येव अग्रहण, विपरीतग्रहण, संशयात्मकाऽविद्यात्रयस्योपलब्धेरिति । यथा तामसत्वादावरणात्मकत्वाच्च तिमिरादिदोषः स्थाण्वादिपदार्थाग्रहण, विपरीतग्रहण, संशयात्मकत्रिविधप्रत्ययजनकः पुंसां, तथा तामसत्वादावरणात्मकत्वाच्चाऽविद्यारूपो दोषस्त्रिविधप्रत्यजनक इति भावः । संसारहेतूनामग्रहणादितामसप्रत्ययानामविद्याकार्यत्वात्तामसाऽविद्याकार्यमेव संसार इत्यविद्याया एव संसारो न तु क्षेत्रज्ञस्येति भावः ।

अत्राह- पूर्वपक्षीति शेषः । किमाह तद्दर्शयति—एवमिति । एवं संसारोऽविद्यायाश्चेदित्यर्थस्तर्हि सा अविद्या ज्ञातृधर्म एवेति पुनः क्षेत्रज्ञस्य संसारित्वं प्राप्तमित्याशयेनाह—ज्ञातृधर्मोऽविद्येति । लोके चक्षुषस्तिमिरादिदोषवशादपि द्रष्टुरेवाग्रहणादिकर्तृत्वदर्शनात्- यस्स्थाणुं न गृह्णाति विपर्ययेण वा गृह्णाति संशयेन वा गृह्णाति तस्यैव हि धर्मास्तदग्रहणादयः । तद्वदविद्यावशाद्यः पुमान् क्षेत्रज्ञस्संशयादिकं प्रतिपद्यते तस्यैव धर्मास्ते संशयादय इति संशयादिप्रयुक्तस्संसारः क्षेत्रज्ञस्यैवेति पूर्वपक्षाशयः ।

परिहरति—नेति । अविद्या ज्ञातृधर्मो न भवतीत्यर्थः । कुतस्तदाह—करणेति । तिमिरादिदोषोऽग्रहणादिहेतुः करणस्य चक्षुष एव धर्मः, न तु कर्तुरात्मनः- चक्षुष्येव करणे तद्दोषदर्शनात् । एवमग्रहणादिहेतुरविद्याऽपि करणस्यैव धर्मो नतु कर्तुरात्मनः । इदमेव संक्षिप्तमर्थं विस्तरेण वक्ति—

यत्तु मन्यसे- ज्ञातृधर्मो अविद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वं; तत्र यदुक्तं 'ईश्वर एव क्षेत्रज्ञो न संसारी' इत्येतदयुक्तमिति तन्न; यथा करणे चक्षुषि विपरीतग्राहकादि दोषस्य दर्शनात् न विपरीतादिग्रहणं तन्निमित्तो वा तैमिरिकत्वादिदोषो ग्रहीतुः, चक्षुष संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनात् न ग्रहीतृधर्मो यथा तथा सर्वत्रैवाग्रहणविपरीतसंशय प्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचिद्भवितुमर्हन्ति, न ज्ञातुः क्षेत्रज्ञस्य। संवेद्यत्वाच्च तेष प्रदीपप्रकाशवत् न ज्ञातृधर्मत्वं- संवेद्यत्वादेव स्वात्मव्यतिरिक्तस्य संवेद्यत्वं; सर्वकरणवियो च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात्। आत्मनो यदि क्षेत्रज्ञस्य संसारित्व मग्न्युष्णत्ववत्स्वधर्मः, ततो न कदाचिदपि तेन वियोगस्स्यात्। अविक्रियस्य च व्योमव

---

यत्त्वित्यादिना। अविद्याया ज्ञातृधर्मत्वादविद्यावत्त्वस्यैव संसारित्वात्क्षेत्रज्ञस्संसार्येवेति कृत्वा तस्याऽ संसारीश्वरत्वकथनमयुक्तमिति यत्पूर्वपक्षिणोक्तं तन्न। कुतः? करणे चक्षुष्येव विपरीतग्राहकसंशयोत्पाद काऽग्रहणात्मकतिमिरादिदोषदर्शनात्। ग्रहीतुर्विपरीतादिग्रहणं न; तन्निमित्तभूतस्तिमिरादिदोषोऽपि न। कुतो नेत्यत आह—चक्षुष इति। चक्षुषस्संस्कारेण हेतुना चक्षुषस्सकाशात्तिमिरादिदोषेऽपनीते सति ग्रहीतुस्तद्दोषस्य तत्प्रयुक्ताग्रहणादेर्वाऽदर्शनात्। तस्मात्तिमिरादिदोषो न ग्रहीतुर्धर्मः, किंतु करणचक्षुर्धर्म एव।

एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमुपपादयति—**तथेति, सर्वत्रेति**। सर्वव्यवहारेष्वित्यर्थः। अग्रहण, विपरित, संशयात्मकाः प्रत्ययास्सनिमित्तास्सकारणाः कस्यचित्करणस्यैव धर्मा भवितुमर्हन्ति, ज्ञातुः क्षेत्रज्ञस्य धर्मा भवितुं नार्हन्ति। यथा प्रदीपप्रकाशो न द्रष्टृपुरुषधर्मस्तथा तेषामग्रहणादीनां न ज्ञातृधर्मत्वं संवेद्यत्वात्, ज्ञेयत्वात्। ज्ञात्रा हि ज्ञायन्ते ते। येन यद्ज्ञायते स हि तस्मा द्भिन्नः; यथा पुरुषो घटात्। न चास्य लक्षणस्य व्यभिचारश्शङ्कयस्सुखादिषु- सुखादीनां मनआदि धर्मत्वात्। नापि सत्यत्वानन्दादिषु- तेषामात्मानन्यत्वाभ्युपगमात्। निर्धर्मकत्वाच्चात्मनः। नच तेषां संवेद्यत्वे विप्रतिपत्तव्यमित्याह—**संवेद्यत्वादेवेति**। स्वात्मव्यतिरिक्तस्य सर्वस्यापि जगतस्संवेद्यत्वादविद्या दयोऽप्यात्मव्यतिरिक्तत्वेन संवेद्या एव।

किंचाऽविद्यादीनामात्मधर्मत्वाभ्युपगमो द्वैतिनामपि विरुद्ध इत्याह—**सर्वकरणेति**। कैवल्ये मोक्षे चक्षुरादिकरणवियोगे सति सर्ववादिभिरात्मनोऽविद्यादिदोषवत्त्वस्यानभ्युपगमादिति। नन्वात्म धर्मस्सन्नप्यविद्याग्रहणादिः मुक्तौ तस्मादपैतीत्यत आह—**यदीति**। अग्नेरुष्णत्ववद्यदि क्षेत्रज्ञस्य संसारित्वं स्वधर्मः स्यात्तर्हि तेन धर्मेण तस्य धर्मिणः कदाचिदपि वियोगो न स्यात्, नहि उष्णत्व मग्नेरपैति क्वापि। यदा त्वपैति तदाऽग्निरेव नश्यति। दोषान्तरमप्याह—**अविक्रियस्येति**। अविक्रियस्य धर्मसंयोगवियोगात्मिका विक्रिया नोपपद्यते। व्योमवत्सर्वगतस्य चात्मनः केनचिदपूर्वः संयोगः, केनचिद्वियोगश्च नोपपद्यते, तथाऽमूर्तस्याप्यात्मनः। लोके हि मूर्तस्य परिच्छिन्नस्य सवि क्रियस्यैव वस्तुनो घटादेः केनचित्संयोगवियोगौ दृश्येते। तस्मात्क्षेत्रज्ञस्य नित्यमेवेश्वरत्वमसंसारित्वं

त्सर्वगतस्यामूर्तस्यात्मनः केनचित्संयोगवियोगानुपपत्तेस्सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वं; 'अनादित्वान्निर्गुणत्वा'दित्यादीश्वरवचनाच्च ।

नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति चेन्न; सर्वैरभ्युपगतत्वात् । सर्वैर्ह्यात्मवादिभिरभ्युपगतो दोषो नैकेन परिहरिष्यते । कथमभ्युपगत इति ? मुक्तात्मनां हि संसारसंसारित्वव्यवहाराभावः सर्वैरेवात्मवादिभिरिष्यते । नच तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता । तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्यं भवत्वविद्याविषये चार्थवत्त्वं- यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं, न मुक्तावस्थायामेवम् ।

---

सिद्धम् । नित्यमित्यनेन द्वैतमत इव मुक्तावेवासंसारित्वं क्षेत्रज्ञस्येति नोच्यते, किंतु सर्वदापि मुक्त एव क्षेत्रज्ञः नित्यमुक्तत्वादीश्वरस्येत्युच्यत इति गम्यते ।

नच कथं बन्धदशायामप्यसंसारित्वमिति वाच्यं, बन्धस्य संसारस्य अविद्यादिधर्मत्वेन व्यवस्थापितत्वात् । ननु तिमिरादिदोषः करणस्य चक्षुषो धर्मो यथा तथाऽग्रहणादिदोषः कस्यचित्करणस्य धर्म इत्युक्तं, तच्च करणं न दर्शितमिति चेदुच्यते—ज्ञेयस्य देहादेः क्षेत्रस्य धर्मास्सुखदुःखमोहेच्छादय इति प्रागेवोक्तं भाष्यकृद्भिरिति । देहेन्द्रियमनांसि हि करणानि । नचेन्द्रियमनसां करणत्वेऽपि देहस्य न करणत्वमिति वाच्यं, गमनादिक्रियासु पादादिद्वारा देहस्यापि करणत्वदर्शनात् । तेषु चाविद्याग्रहणादिदोषा अन्तःकरणधर्माः । तस्मादविद्याकृतस्सर्वोऽपि संसारोऽन्तःकरणस्यैव । अन्तःकरणादविद्यायां विद्ययाऽपनीतायां सत्यामात्मनस्संसारादर्शनादिति सिद्धं क्षेत्रज्ञस्यासंसारीश्वरत्वम् ।

उक्तार्थे गीतां प्रमाणयति—अनादित्वादिति । नहि निर्गुणस्य संसारधर्मप्रसक्तिरिति भावः । एतावता ग्रन्थसन्दर्भेणेश्वरस्य संसारित्वं प्राप्तमिति प्रश्नस्समाधापितः । एतेन वशीकृतप्रकृतेस्स्वतन्त्रस्येश्वरस्य कथं जीवत्वप्रयुक्तस्संसार इति शङ्कापि प्रत्युक्ता । अज्ञानकृतत्वाज्जीवस्य संसारित्वव्यवहारस्य ।

अथ संसाराभावप्रसङ्गश्चेति दोषं परिहर्तुमारभतेऽनुवादपूर्वकं—नन्वेवमित्यादिना । संसारित्वं संसारः । दोषः स्यादित्यन्तमनुवादः । नेति परिहार इति विवेकः । तत्र हेतुमाह—सर्वैरिति । तस्यार्थमाह—सर्वैरिति । देहादन्य आत्मास्तीति वदन्त आस्तिका आत्मवादिनः । संसारस्संसारित्वव्यवहारश्च तयोरभावः । संसारे सति संसारित्वव्यवहारः स्यात्संसाराभावात्तद्व्यवहाराभावः । एवं संसाराभावादेव तेषां मुक्तत्वव्यवहारः । तेषां मुक्तात्मनामित्यर्थः । तेषां शास्त्रानर्थक्यादिकं यद्यपि प्राप्तं, तथापि न तद्दोषतयाऽभ्युपगतम् । नहि शास्त्रादिना मुक्तानां कोप्यर्थः, येन मुक्तान्प्रति शास्त्रादेरर्थवत्त्वं स्यात् । आदिपदाद्बन्धमुक्तिव्यवस्थाभावादिर्गृह्यते । ईश्वरैकत्वे सतीति । विद्यावस्थायामित्यर्थः । अर्थवत्त्वमिति । शास्त्रस्येति शेषः । एवमिति । अविद्यावस्थायामेव शास्त्रादेरर्थवत्त्वं, नतु विद्यावस्थायामित्यर्थः । द्वैतमते यथा जीवस्य मुक्तिदशायां शास्त्राद्यानर्थक्यं तथाऽद्वैतमते

ननु आत्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतवादिनां सर्वेषां, अतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्यात्, अद्वैतिनां पुनर्द्वैतस्यापरमार्थत्वादविद्याकृतत्वाद्बन्धावस्थायाश्चात्मनोऽपरमार्थत्वे निर्विषयत्वाच्छास्त्राद्यानर्थक्यमिति चेन्न; आत्मनोऽवस्थाभेदवत्त्वानुपपत्तेः। यदि तावदात्मनो बन्धमुक्तावस्थे युगपत्स्यातां, क्रमेण वा युगपत्तावद्विरोधान्न सम्भवतः स्थितिगती इवैकस्मिन् क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गः।

---

जीवस्य विद्यादशायां शास्त्राद्यानर्थक्यम्। द्वैतमते यथा जीवस्य संसारदशायां शास्त्राद्यर्थवत्त्वं तथाऽद्वैतमते जीवस्याविद्यादशायां शास्त्राद्यर्थवत्त्वमिति तुल्यमिति भावः।

द्वैती पुनः पूर्वपक्षयति—**नन्वित्यादिना चेदित्यन्तेन ग्रन्थेन**। सर्वेषां द्वैतवादिनां मते आत्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते स्तः। परमार्थभूते एव भवत इत्यर्थः। नतु मिथ्याभूते इत्येवकारार्थः। अत एवमात्मनो बन्धमुक्तावस्थयोर्वास्तवत्वात् हेयस्य संसारस्य तद्धेतुकामादिदोषस्य च, उपादेयस्य मोक्षस्य, तद्धेतुशमदमज्ञानादेश्च सद्भावे सति शास्त्रादेरर्थवत्त्वं स्यात्। अपरमार्थत्वान्मिथ्यात्वात्। आत्मनो बन्धावस्थायाश्चाविद्याकृतत्वाद्धेतोरपरमार्थत्वे सति निर्विषयत्वाद्विषयाभावाद्बन्धस्यैवाभावादित्यर्थः। **शास्त्रानर्थक्यं स्यादिति**। अयं भावः—सर्पस्य सत्यत्वे तत्ताडनदण्डादेरर्थवत्त्वं स्यात्, सर्पस्यैव मिथ्यात्वे किं दण्डादिना? स्वप्नोपलब्धपश्वादेः सत्यत्वे तत्पोषणार्थं तृणाद्याहरणश्रमोऽर्थवान्स्यात्। तस्यैव मिथ्यात्वे किं श्रमेण? मनोरथोपलब्धकान्तायास्सत्यत्वे तद्भोगयाचनादिश्रमोऽर्थवान्स्यात्, तस्या एव मिथ्यात्वे किं याचनादिना? एवं जीवस्य बन्धस्सत्यो यदि तन्मोक्षाय गुरुशास्त्रादेरर्थवत्त्वं स्याद्बन्धस्यैवासत्यत्वे किं गुरुशास्त्रादिना? तस्माद्द्वैतमते शास्त्राद्यर्थवत्त्वमस्ति, न त्वद्वैतमत इति। परिहरति—**नेति**। हेतुमाह—**आत्मन इति**। अवस्थाभेदोऽवस्थाविशेषो बन्धादिरूपः। तद्वत्त्वस्यानुपपत्तेः। अनुपपत्तिमेव दर्शयति—**यदीति**। यदीति प्रश्नार्थे। तावच्छब्दो निश्चयार्थे। आत्मनो बन्धमुक्तावस्थे तावद्यथार्थतो युगपत्स्यातां यदि- भवेतां किम्? यद्वा क्रमेणेति विकल्पः। तावत्तत्र स्थितिगती इव बन्धमोक्षौ युगपदेकस्मिन्नात्मनि न सम्भवतः- गतिनिवृत्तिगमने यथैकस्मिन्पुरुषे युगपन्न सम्भवतः तथा बन्धमुक्तावस्थे एकस्मिन्नात्मन्युगपन्न सम्भवत इत्यर्थः। तत्र हेतुमाह—**विरोधादिति**। स्थितिगत्योरिव बन्धमोक्षयोः परस्परविरोधात्। न हि विरुद्धार्थयोः सामानाधिकरण्यं यौगपद्येन सम्भवति- शीतोष्णयोस्सुखदुःखयोश्च युगपत्सामानाधिकरण्यादर्शनाच्च। इदानीं सुखमनुभवन्नपि पुरुषः क्षणान्तरे वृश्चिकदंशनादिना दुःखमनुभवतीति युगपदित्युक्तम्। एवमिदानीं तिष्ठन्नपि पुरुषः क्षणान्तरे गच्छेदित्युगपदित्युक्तं भाष्येऽपि। तथा इदानीं बद्धस्यात्मनः कालान्तरे मुक्तिः स्यादिति युगपदित्युक्तम्।

अथ द्वितीयं विकल्पं दूषयति—**क्रमेति**। क्रमेणात्मनो बन्धमोक्षौ स्त इति पक्षेपि किं निर्निमित्ते भवतः? उत सनिमित्ते? इति विकल्प्य प्रथमं दूषयति—**निर्निमित्तत्व इति**। यदि निमित्तं

अन्यनिमित्तत्वे च स्वतोऽभावादपरमार्थत्वप्रसङ्गः । तथा च सत्यभ्युपगमहानिः ।

विनाप्यात्मनः क्रमेण बन्धमोक्षौ स्यातां, तर्हि मुक्तस्याप्यात्मनो निमित्तं विना पुनर्बन्धः स्यादिति मोक्षाभावस्स्यादात्मनः । द्वितीयं दूषयति—अन्यनिमित्तत्व इति । यद्यात्मनो बन्धमोक्षौ प्रत्यविद्या-रागादिकं विद्याशमादिकं वा किञ्चिन्निमित्तमस्ति, तर्हि तेनैव निमित्तेनात्मनो बन्धमोक्षौ भवतः । न तु स्वत इत्यपरमार्थत्वमेव बन्धमोक्षयोरापतितम् । यत्स्वतो नास्ति तद्धयपरमार्थं वस्त्विति लोक-स्थितिः । यथा स्वतोऽविद्यमानरज्जुसर्प-शुक्तिरजतादेरपरमार्थत्वम् । न हि रज्जुसर्पादिकं कोऽपि द्वैती सत्यं मन्यते, किं तु मिथ्याभूतमेव । चक्षुर्गतकाचकामलादिदोषनिमित्तकत्वाद्रज्जुसर्पादेः । सत्य-सर्पस्तु न काचादिदोषनिमित्तक इति निर्निमित्त एवेति परमार्थभूत एव । तस्मान्निर्निमित्त एव पदार्थ-स्सत्यः, सनिमित्तस्त्वसत्य एव । न च सत्यसर्पोऽप्यज्ञाननिमित्तकत्वात्सनिमित्त एवेत्यसत्य एवेति वाच्यं, अद्वैतिमते तथैव- ब्रह्मान्यस्य सर्वस्यापि मिथ्यात्वात् । द्वैतिमते तु सत्यसर्पो निमित्तत्वेन सत्य इत्यभ्युपगम्यत इति तन्मतानुसारेणेयमुक्तिः । यद्वा अद्वैतिनोपि काचादिदोषाप्रयुक्तं सर्पं व्या-वहारिकसत्यं मन्यन्ते; रज्जुसर्पं तु दोषप्रयुक्तं व्यवहारतोप्यसत्यं मन्यन्त इति तावन्मात्रेणेयमुक्तिः ।

ननु भवत्वात्मनो बन्धमोक्षयोरपारमार्थ्यं, किं ततोऽत आह—तथा चेति । बन्धमोक्षयो-रपरमार्थत्वे सतीत्यर्थः । अभ्युपगमहानिः-बन्धमोक्षौ सत्याविति द्वैतिभिरभ्युपगताविति बन्धमोक्ष-सत्यत्वाभ्युपगमस्य हानिः क्षतिः । स्वमतप्रच्युतिरूपदोष इत्यर्थः ।

ननु सर्वमपि जगत्सनिमित्तत्वादेव सत्यं, निर्मित्तस्य गन्धर्वनगरस्वप्नरथादेरसत्यत्वात् । सर्पा-न्निमित्ताज्जातो हि सर्पस्सत्यः । सर्पादजातत्वादेव रज्जुसर्पोऽसत्यः । यस्य कार्यस्य यत्कारणं निमित्त-त्वेन प्रसिद्धं तस्मान्निमित्ताज्जातं तद्वस्तु सत्यमिति हि लोकव्यवहारः । न हि निर्निमित्तं वस्तु जगति किञ्चिदप्यस्ति । रज्जुसर्पादयस्तु प्रसिद्धसर्पादिनिमित्तादनुद्भूता इति, अप्रसिद्धरज्ज्वादिनिमित्तादुद्भूता इति चाऽसत्या इत्यभ्युपगम्यन्ते । तस्माद्विपरीतनिमित्तादुद्भूतमेव वस्त्वपरमार्थं, नतु सनिमित्तं वस्त्विति सनिमित्तौ बन्धमोक्षौ परमार्थावेवेति चेत्—

मैवम्—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुत्या कारणमेव सत्यं, कार्यं तु मिथ्यैव । न हि कारणमृदादिव्यतिरेकेण कार्यस्य घटादेरुपलम्भः । तस्मादनिमित्तं निमित्त-मेव वस्तु सत्यम् । अत एव "ब्रह्म सत्यं जगन्मिथ्या" इत्यद्वैत्यभ्युपगमः । "ततसत्यमतोन्यदार्तं" इति श्रुतेश्च । मृदादिवस्तु घटादीन्प्रति निमित्तमपि जलादिजन्यत्वादनिमित्तं न भवतीति नैव सत्यं, मृत्तिकेत्येव सत्यमिति तु घटादिविकारदृष्ट्या प्रोक्तम् । एवं सर्वं जगदपि कार्यत्वान्निमित्तं न भवती-त्यसत्यमेव । ब्रह्म तु सर्वस्य निमित्तं- "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिः । अकार्यत्वा-दनिमित्तं च (निमित्तं यस्य नास्ति तदनिमित्तम्) । अत एव हि- 'अजो नित्यश्शाश्वतोऽयं पुराण' इत्यादिसमन्वयः । नहि सनिमित्तं वस्त्वजं स्यात्, न वा नित्यम् । अत एवानादिरात्मेत्याद्यपि सङ्गच्छते । तथा चानिमित्तं निमित्तं वस्तु सत्यमिति लक्षणस्य ब्रह्मण्येव समन्वयादन्यत्राप्रवृत्तेश्चा-

किंच बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्या, अनादिमत्यन्तवती च; तच्च प्रमाणविरुद्धं; तथा मोक्षावस्थाऽऽदिमत्यनन्ता च प्रमाणविरुद्धैवाभ्युप-

---

व्यभिचारित्वं स्थितम् । एवं स्थिते सनिमित्तत्वेन भवदभिमतस्य सर्वस्यापि द्वैतस्यासत्यत्वं दुष्परिहारमेव, किंपुनर्दुर्निमित्तस्य रज्जुसर्पादेरिति ।

ननु भवतु नाम वस्तुतोऽसत्यत्वं जगतः, यावद्व्यवहारं तु तत्सत्यमेव । तथा च सनिमित्तौ बन्धमोक्षौ यावद्व्यवहारं सत्यावेवेति चेन्नेति को वदेत् ? अज्ञानाश्रयो हि बन्धमुक्त्यादिसर्वव्यवहारः, ततश्चाज्ञानदशायामात्मनो बन्धमोक्षौ स्त एव, विद्यावस्थायामेव हि तदभावोऽस्माभिरुच्यते । नचैवमात्मनो बन्धमुक्त्यवस्थावत्त्वं सिद्धमिष्टमिति भ्रमितव्यं, विद्यावस्थायां तदभावादेव वस्तुतस्तदभाव इति सिद्धत्वात् । तस्मान्नास्त्यात्मनः परमार्थतो बन्धमुक्तावस्थे । अत एव- 'न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः, न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति श्रुतिरुपपद्यते ।

यद्येवमात्मनः परमार्थतो बन्धमुक्तावस्थे न स्त इति नाभ्युपगम्यते, तर्ह्यनित्यत्वमप्यात्मनः स्यादित्याह—किं चेति । बन्धं विना मुक्त्ययोगान्मुक्तिर्बन्धपूर्विका, तस्य च बन्धस्यान्ताभावे मुक्त्ययोगाद्बन्धावस्था सान्ता, आद्यदर्शनादनादिश्च । तच्चेति । अनादिस्सान्तो बन्ध इति कल्पनं तच्छब्दार्थः । प्रमाणविरुद्धमिति । अनादेरनन्तत्वेन भाव्यत्वादिति भावः । सादिरनन्ता च मोक्षावस्थेत्यप्रमाणमेवेत्याह—तथेति । सादेस्सान्तत्वेनैव भाव्यत्वादिति भावः । तस्मात्सान्तस्य बन्धस्यानादित्वं सादेर्मोक्षस्यानन्तत्वं चेत्युभयं प्रमाणविरुद्धमेव । अनादित्वानन्तत्वयोर्वैयधिकरण्यादर्शनात् । यस्यादिरस्ति तस्यान्तोऽप्यवश्यमस्ति । यस्यान्तोऽस्ति तस्यादिरप्यवश्यमस्ति- 'जातस्य हि ध्रुवो मृत्यु'-रित्यादिगीतावचनादनुभवाच्चात्मैक एवानादिरनन्तश्च । तदन्यत्सर्वं जगत्सादि सान्तं च ।

ननु आद्यन्तयोर्वैयधिकरण्यमस्ति- प्रागभावस्यानादित्वात्सान्तत्वाच्च, प्रध्वंसाभावस्य सादित्वादनन्तत्वाच्चेति चेत्, मैवम्—तस्य तार्किकसमयस्याप्रमाणत्वात् । नच अनादिभावत्वे सति ज्ञाननिवर्त्यत्वादज्ञानस्यानादित्वं सान्तत्वं चास्तीति वाच्यं, अज्ञानस्यापि सादित्वात्- 'माया चाविद्या च स्वयमेव भवति' इति श्रुतेः । अनादित्ववचनं तु इदमिदानीं जातमिति वक्तुमशक्यत्वाभिप्रायकम् । यथाऽविद्याकार्यस्यापि संसारस्य प्रवाहानादित्वादनादित्वव्यपदेशः । इदं चाज्ञानमात्मन्यध्यस्तत्वादात्मकार्यमेव । यथा जगदविद्याऽऽत्मन्यध्यस्तं सदात्मकार्यमित्युच्यते । एवं कार्यत्वात्साद्येवाज्ञानमिति तस्य सान्तत्वं युक्तम् । ननु निर्धर्मकस्यात्मनः कर्तृत्वासम्भवादात्मा नाज्ञानं सृजति, जगत्तु सृजत्यज्ञानमात्माश्रयं सत्, अतः कथमविद्यायाः कार्यत्वमिति चेदविद्यां न कोपि सृजति, किंतु सा स्वयमेव भवति-'माया चाऽविद्या च स्वयमेव भवति' इतिश्रुतेः । तस्मात्सान्तो बन्धस्सादिरेव भवितुमर्हति । सादिश्च मोक्षस्सान्त एव । नचेष्टापत्तिः, बन्धस्य सादित्वे बन्धात्प्रागसंसारित्वादात्मनः । तदा मोक्षशास्त्राद्यानर्थक्यम् । मोक्षस्य सान्तत्वे पुनर्बन्धप्रसङ्गः; ततश्च शास्त्रस्य शास्त्राद्यानर्थक्यं-नित्यपुरुषार्थ

गम्यते । नचावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यम् । अथानित्यत्वदोष-

मोक्षं मत्वा हि धनधान्यप्रासादादिकं सर्वमुत्सृज्य मोक्षमार्गे प्रयतते विद्वान्, मोक्षस्यापि स्वर्गादिव-दनित्यत्वे व्यर्थोऽयं मोक्षमार्गप्रवृत्तिप्रयास इति न मोक्षशास्त्रे कोपि प्रवर्तेतेति ।

ननु—प्रमाणविरुद्धार्थोऽप्यभ्युपगम्यतां, को दोषस्तत्राह—नचेति । अवस्थावतोऽवस्थान्तरं गच्छतः पदार्थस्य नित्यत्वमुपपादयितुं न शक्यम् । घटत्वावस्थावतो कपालत्वावस्थां गच्छतो घटस्याऽनित्यत्वदर्शनात् । अवयवित्वावस्थावतो भस्माद्यवस्थां गच्छतश्शरीरस्य चानित्यत्वदर्शनात् । एवं बद्धत्वावस्थावतो मुक्तावस्थां गच्छत आत्मनः स्यादेवानित्यत्वम् ।

ननु—सत्कार्यवादेऽवस्थानामेवानित्यत्वमवस्थावतो द्रव्यस्य तु नित्यत्वमेव, मृद्द्रव्यं हि घटत्वकपालत्वचूर्णत्वाद्यवस्था अनुभवादपि मृद्रूपेण नित्यमेवास्ति, घटत्वाद्यवस्थास्तु नश्यन्ति, जायन्ते च । अतोऽवस्था एवानित्याः । एवं बद्धमुक्त्यन्यतरावस्थावानात्मा नित्य एव- अवस्थाद्वयेऽप्यात्मन एकस्यैवानुगमात् । बन्धमुक्त्यवस्थे त्वनित्ये- बन्धदशायां मुक्त्यभावान्मुक्तिदशायां बन्धाभावाच्च । तस्मादवस्थावतोऽप्यात्मनस्स्यादेव नित्यत्वमिति चेत्—

मैवम्— असत्कार्यवादस्येव सत्कार्यवादस्यापि दूषितत्वात् । कार्यं पूर्वमसदेव कारकव्यापारेणाविर्भवतीत्यसत्कार्यवादः । यद्यसत एवोत्पत्तिस्तर्हि शशशृङ्गमप्याविर्भवेदिति कृत्वा कार्यं पूर्वं सदेव कारकव्यापारेणाभिव्यज्यत इति सत्कार्यवादः । यदि कार्यं पूर्वमेवास्ति तर्हि कारकव्यापार-वैयर्थ्यमेवेति कृत्वा कार्यं न सत् नाप्यसत् किंतु मिथ्यैवेति मिथ्यावादः । एवंस्थिते यदि घटत्वाद्यवस्था घटाद्युत्पत्तेः प्रागेव मृदस्सन्ति, तर्हि कुलालव्यापारानर्थक्यं, पिण्डाकारमृद्यपि घटोपलब्धि-प्रसङ्गः । यदि प्राक् न सन्ति, तर्हि शशशृङ्गवत् घटस्याप्यनुदयप्रसङ्गः । तस्मान्मृदो घटत्वाद्यवस्था मिथ्याभूता एव ।

तथा प्रकृतेप्यात्मनो बन्धमुक्तावस्थे मिथ्याभूते एव—बन्धात्प्रागेव बन्धसत्त्वे रागादिदोषा-नर्थक्यप्रसङ्गात्, तदसत्त्वे शशशृङ्गवदनुत्पत्तिप्रसङ्गात्, तथा मुक्तेः प्रागेव मुक्तिसत्वे गुरुशास्त्राद्यानर्थक्य-प्रसङ्गः, तदसत्त्वे शशशृङ्गवन्मुक्तेरनुत्पत्तिप्रसङ्गः ।

नन्वेवं मिथ्याकार्यवादेप्यवस्था एव मिथ्याभूताः, नतु अवस्थावद्द्रव्यमिति कृत्वा बन्धमुक्त्यवस्थ-योरेव मिथ्यात्वमात्मा तु नित्य एव सत्यत्वान्मृद्द्रव्यवदिति चेत्— मैवम् । अवस्थानां मिथ्यात्वे तद्वतो द्रव्यस्यापि मिथ्यात्वात् । तथाहि पिण्डाद्यवस्थानापन्नं मृद्द्रव्यं किं सावस्थमुत निरवस्थम् ? आद्ये- मृद्द्रव्यगतायास्तस्या अपि गन्धवत्त्वाद्यवस्थाया मिथ्यात्वमेव स्यादवस्थात्वात्पिण्डाद्यवस्थावत् । द्वितीये- निरवस्थं तन्मृद्द्रव्यं किं रूपमनिर्वाच्यमेव । नच मृद्रूपमिति वाच्यम् । मृदि मृत्त्वावस्थाया-स्सत्त्वेन मृद्रूपं सावस्थमेवेति मृत्त्वावस्थाया अभावे तस्य मृद्रूपत्वस्यैवासिद्धेः । एवं सावस्थादेव मृद्द्रव्यान्मृत्त्वावस्थाया मिथ्याया अपगमे सति मृद्द्रव्यमेव तावन्न सिद्ध्येदिति मिथ्यैव मृद्द्रव्यम् ।

परिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यतेऽतो द्वैतिनामपि शास्त्रानर्थक्यादिदोषोऽपरिहार्य
एव; इति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः।

नच शास्त्रानर्थक्यं यथा प्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य। अविदुषां हि फल
हेत्वोरनात्मनोरात्मदर्शनं, न विदुषां; विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति
तयोरहमित्यात्मदर्शनानुपपत्तेः। न ह्यत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वा

---

नहि घटाद्घटत्वे पृथक्कृते सति घटपदार्थः कश्चिदुपलभ्येत। ननु घटाद्घटत्वेऽपनीते मृदवशिष्यते
मृदो मृत्त्वेऽपनीते तु जलमवशिष्यते, जलजन्यत्वान्मृद इति चेत्तर्हि, तस्मादपि जलात्सावस्थाज्जलत्वा
वस्थायां मिथ्याभूतायामपनीतायां जलमपि मिथ्यैव भवेत्। किन्तु तेजोरूपेण वर्तेत। एवं तेज आदि
ष्वपि द्रष्टव्यम्। तथाच सति घटत्वादिवन्मृत्त्वजलत्वादीनामप्यवस्थानां मिथ्यात्वेन मृज्जलादीनामप्यव
स्थावतां द्रव्याणां मिथ्यात्वमेव। तेन च यद्यदवस्थावत्तत्तन्मिथ्येति व्याप्तिस्सिद्ध्यति। यद्यात्माऽवस्था
वान् स्यात्तर्हि मिथ्यैव स्यादित्यस्थावत्त्वेन स्यादनित्यत्वदोष आत्मनः। अत इति। आत्मनो बन्ध
मुक्त्यवस्थाभावादित्यर्थः।

ननु तर्हि द्वैतिनामिवाऽद्वैतिनां मतमपि दोषग्रस्तमेव--शास्त्रानर्थक्यादिति शङ्कायां स्वमते दोषाभा
साधयति—नचेति। अद्वैतिमत इति शेषः। शास्त्रानर्थक्यं नास्ति। तत्र हेतुमाह—यथेति। यथे
त्यस्य तावदित्यर्थः। शास्त्रस्य प्रसिद्धाविद्वत्पुरुषविषयत्वात्—शास्त्रस्य विधिप्रतिषेधात्मकस्य देहाद्यभि
मानित्वेन प्रसिद्धाविद्वत्पुरुषगोचरत्वात्। अविद्वांसः पुरुषा अज्ञानादात्मानं ब्राह्मणं कर्तारं मन्यमानाः
स्वर्गादिफलप्राप्तये नरकाद्यनिष्टनिरासाय च विधिप्रतिषेधशास्त्रेऽधिक्रियन्त इति नाऽस्मन्मते शास्त्रा
नर्थक्यमविदुषां शास्त्राधिकारिणां सत्त्वादिति भावः।

ननु शास्त्रस्याविद्वद्विषयत्वं कुतो नियम्यते, विद्वद्विषयत्वमप्यस्त्वत आह—अविदुषामिति
अविदुषामेवानात्मनोः फलहेत्वोरात्मदर्शनं भवति, न तु विदुषामिति। फलं देवशरीरादिकं, हेतुर्मनुष्य
शरीरेन्द्रियादिकं वाङ्मनःकायनिर्वर्त्यत्वाद्वाचिकमानसिककायिककर्मणां, तयोरनात्मनोरात्मदर्शनमहमिति
बुद्धिः। मनुष्योऽहं ब्राह्मणोऽहं कर्म करोमि, देवो भूत्वाऽहं स्वर्गमनुभविष्यामीत्यादिप्रतीतेरज्ञानाम्
देहभिन्नात्मदर्शिनां विदुषां तु फलहेत्वोर्नास्त्यात्मबुद्धिः। कुतो नास्त्यत आह—न हीति
अत्यन्तमूढः- विवेकशून्यत्वं मूढत्वं, तद्ध्यात्मनात्मगोचरं स्वपरविवेकादिशून्यत्वं त्वत्यन्तमूढत्वम्। मूढो
ह्यात्मानात्मविवेकशून्यत्वात्फलहेत्वोरनात्मनोरात्मनश्चैकत्वं पश्यति। एवमस्यात्मानात्मैकत्वदर्शने आत्मा
नात्मविवेकशून्यत्वमेव हेतुः। सति तद्विवेके तदेकत्वदर्शनानुपपत्तेः। यथाऽत्यन्तमूढ उन्मत्तादिरपि
जलाग्न्योः छायाप्रकाशयोर्वा एकात्मतां न पश्यति, कुतः? जलाग्निविवेकस्य छायाप्रकाशविवेकस्य
सत्त्वात्तस्य। इदं जलमयमग्निरिति विवेकाभावे तु तदेकत्वं पश्येदेव। नच पश्यत्येवेति वाच्यं
तथा सति दर्शने उन्मत्तः पिपासोपशमायाग्निं भक्षयेत्। तापोपशमाय चाग्नौ पतेत्। नत्वेवं दृश्यते
तस्माज्जलाग्न्योश्छायाप्रकाशयोर्वा विवेकवानत्यन्तमूढोऽपि 'यथा तयोरेकत्वं न पश्यति, तथा आत्मा

एकात्मतां पश्यति; किमुत विवेकी । तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति । न हि 'देवदत्त! त्वमिदं कु'र्विति कस्मिंश्चित्कर्मणि नियुक्ते, विष्णुमित्रः- 'अहं नियुक्त' इति तत्रस्थो नियोगं शृण्वन्नपि प्रतिपद्यते; नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिः; तथा फलहेत्वोरपि ।

ननु प्राकृतसम्बन्धापेक्षया युक्तैव प्रतिपत्तिश्शास्त्रार्थविषया- फलहेतुभ्यामन्यात्मविषयदर्शनेऽपि सति इष्टफलहेतौ प्रवर्तितोऽस्मि, अनिष्टफलहेतोश्च निवर्तितोऽस्मीति; यथा पितृ-

---

नात्मनोर्विवेकवान्पुरुषस्तयोरेकत्वं न पश्यतीति किमु वक्तव्यमित्यर्थः । आत्मानात्मविवेकशून्यो मूढस्तु तयोरेकत्वं पश्येदेव ।

तस्मादिति । यस्माच्छास्त्रमविवेकिविषयं तस्मादित्यर्थः । यद्वा यस्माच्छास्त्रं फलहेत्वोरात्मदर्शिनो विषयस्तस्मादित्यर्थः । फलहेतुभ्यामिति पञ्चमी । यजेतेत्यादि विधिशास्त्रं, न परदारान् गच्छेदित्यादि प्रतिषेधशास्त्रं, तदुभयमप्यनात्मभ्यो विविच्यात्मानं यः पश्यति तस्य न भवति । कुतो न भवतीत्यतो दृष्टान्तमाह—न हीति, नियुक्ते इति । यज्ञदत्तेन नियुक्ते सति देवदत्ते इत्यर्थः । तत्रस्थो विष्णुमित्रः नियोगं शृण्वन्नहं नियुक्त इति नैव प्रतिपद्यते मन्यते । यद्वा शृण्वन्नपि नियोगं न प्रतिपद्यते न प्राप्नोति । यज्ञदत्तेन देवदत्ताय नियुक्तं जलाहरणादिकं कर्म विष्णुमित्रस्सन्निहितोऽपि न करोति । तन्नियोगस्य देवदत्तविषयत्वेन स्वविषयत्वाभावात् । यदि विष्णुमित्रस्य किं देवदत्तोऽस्मिन् कर्मणि नियुक्त उताहमिति संशयस्तदा नियोगविषयविवेकज्ञानाभावाद्विष्णुमित्रस्य देवदत्तकर्मणि प्रवृत्तिरुपपद्यते । प्रतिपत्तिर्नियोगप्राप्तिर्नियुक्तकर्मणि प्रवृत्तिरिति यावत् । अथ वा प्रतिपत्तिरहमत्र नियुक्त इति ज्ञानमुपपद्यते । तथा- यथा नियोगविषयविवेकाग्रहणाद्देवदत्तेन कर्तव्ये कर्मणि विष्णुमित्रस्य प्रवृत्तिस्तथेत्यर्थः । फलहेत्वोरनात्मनोरात्मनश्च यस्य नास्ति विवेकस्तस्यैव विधिप्रतिषेधशास्त्रानुसारेण कर्मसु प्रवृत्तिरुपपद्यत इत्यर्थः । यद्वा देवदत्तनियोगे विष्णुमित्रस्य स्वनियोग इति भ्रमाद्यथा प्रवृत्तिर्न तथा फलहेत्वोरनात्मनोरात्मेति भ्रमात्कर्मसु प्रवृत्तिरविदुषामिति ।

ननु फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सत्यपि विदुषां प्राकृतसम्बन्धापेक्षया शास्त्रार्थविषयाप्रतिपत्तिर्युक्तैव- देहान्यात्मदर्शिनामपि देहे ज्वरग्रस्ते सति तापोपलम्भात् । अस्ति हि देहे देहिनः प्राकृतस्सम्बन्धः प्रकृतेर्जातो ममाभिमानरूपः । यथा गृहे गृहिणः, गृहे दग्धे सति गृहाद्भिन्नस्यापि गृहिणो दाहदुःखाद्युपलम्भस्तद्वत्प्रकृतेऽपि । इममेव प्राकृतसम्बन्धमपेक्ष्य विद्वानपीष्टफलहेतौ प्रवर्तितोऽस्मीति, अनिष्टफलहेतौ निवर्तितोऽस्मीति च मन्यमान इष्टे प्रवर्तते, अनिष्टान्निवर्तते । देहसौख्येनात्मसौख्यस्य देहासौख्येनात्मासौख्यस्य चानुभवात्तथैव स्वर्गे कमपि दिव्यं देहमाश्रित्य सुखमनुभविष्यामीति यातनादेहाश्रयणप्रयुक्तं दुःखं मम माभूदिति च प्रतिपद्य विहितं करोत्यविहितं च परित्यजतीति विदुषामपि विहिताविहितपरिज्ञानार्थं शास्त्रमावश्यकमेव । ततश्च विद्वद्विषयत्वमपि शास्त्रस्य सम्भवेदेव । तत्र दृष्टान्तमाह—यथेति । पितुरन्यः पुत्रोऽहमिति पुत्रादन्यः पिताहमिति ज्ञाने सत्यपि

पुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिः। न, व्यतिरिक्ता-
त्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात्। प्रतिपन्ननियोगप्रतिषेधा

---

पितुर्नियोगे पुत्रः प्रवर्तते। तस्य सुखादिसम्पादनार्थं पिता च पुत्रमविहितात्प्रतिषेधति- पुत्रस्य नरक-
दुःखाद्यभावार्थं तद्वदिति। पितृपुत्रयोरितरेतरात्मान्यत्वदर्शिनोरपि ममाभिमानलक्षणप्राकृतसम्बन्धापेक्षा
परस्परनियोगप्रतिषेधार्था प्रतिपत्तिर्यथोपपद्यते, तथाऽऽत्मानात्मनोरितरेतरभिन्नत्वदर्शने सत्यपि प्राकृत-
सम्बन्धस्यापेक्षया विधिप्रतिषेधार्था प्रवृत्तिरुपपद्यत इति भावः। इतरस्मादितरस्यात्माहमन्य इ-
दर्शनमितरेतरात्मान्यत्वदर्शनम्। आत्मनोऽन्यत्वमात्मान्यत्वमितरस्यात्मान्यत्वमितरात्मान्यत्वमितरस्मा-
दितरात्मान्यत्वमितरेतरात्मान्यत्वमिति समासः। इतरस्मात्पित्रादेरितरस्य पुत्रादेरित्यर्थः। अन्योन्य-
नियोगप्रतिषेधावर्थौ यस्यास्साऽन्योन्यनियोगप्रतिषेधार्था। प्रतिपत्तिर्ज्ञानं; प्रवृत्तिरिति यावत्।

ननु पितुरन्योऽहं पुत्र इति ज्ञानवान् पुत्रः पित्रर्थमात्मार्थं नियोगप्रतिषेधौ प्रतिपद्यतांना-
ममायं जनक इति प्राकृतसम्बन्धात्। देहादन्योऽहमिति ज्ञानवांस्तु देहार्थमात्मार्थं वा न विधि-
निषेधयोः प्रतिपत्तिं भजते- देहस्येहैव नाशादात्मनश्चासङ्गाविक्रियत्वादिति चेत्, नैवम्—देहा-
दन्योऽहमिति ज्ञानवानपि देहो ममेति प्राकृतसम्बन्धादेतद्देहे वर्तमानः कर्म कुर्यादेव स्वर्गे मम कश्चि-
द्दिव्यदेहः स्यादित्यात्मार्थमेव मम क्षुद्रदेहो माभूदिति निषिद्धाचरणाच्च निवर्तेत इति। विवेकि-
फलहेत्वोरनात्मनोरात्मबुद्ध्यभावेऽप्यात्मीयबुद्धिसत्त्वाच्छास्त्रार्थविषयप्रवृत्तिरुपपद्यत एवेति पूर्वपक्षाशयः
परिहरति—नेति; हेतुमाह—व्यतिरिक्तेति। व्यतिरिक्तस्य देहादिभिन्नस्यात्मनो दर्शनं ज्ञा-
तस्य प्रतिपत्तेः प्राप्तेः प्रागेव। देहाद्भिन्नोऽहमात्मेति ज्ञानोदयात्पूर्वमेवेत्यर्थः। फलहेत्वोरात्माभिमान-
सिद्धत्वात्। प्रतिपन्ननियोगप्रतिषेधार्थं फलहेतुभ्यामन्यत्वमात्मनः प्रतिपद्यते। न तु नियोगप्रतिषे-
प्रतिपत्तेः पूर्वमेव फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यत इति। अयमर्थः—अनादिकालादार-
फलहेत्वोरात्मेत्यभिमानस्तावत्सिद्धः प्राणिनाम्। तेनैवाभिमानेन नियोगप्रतिषेधौ प्रतिपद्यते ब्राह्मणो-
स्नानसन्ध्यादेवार्चनादिषु नियुक्तश्शास्त्रेणेश्वरेण वा, मद्यपानादिभ्यश्च प्रतिषिद्ध इति विहिते कर्मणि
प्रवर्तते निषिद्धात्तु निवर्तते। एवं प्रतिपद्य पश्चाच्चिन्तयति विवेकी यदि देह एवाहं, तर्हि देहस्यै-
नाशाद्व्यर्थेयं प्रवृत्तिर्विहिते निषिद्धाच्च निवृत्तिरिति। ततश्च शास्त्रप्रामाण्यादास्तिकोऽयं देहादन्यमात्मा-
मन्यते। इदं चास्य देहाद्भिन्नात्मज्ञानं स्वप्रतिपन्ननियोगप्रतिषेधसिद्ध्यर्थमेव। देहाद्भिन्नस्यात्मन-
स्सत्त्वादिहानुष्ठितकर्मफलं परलोके आत्मना भुज्यत इति निश्चयेन स्वप्रतिपन्ननियोगप्रतिषेधयो-
र्निर्वर्तनात्। तस्माद्देहाद्भिन्नः कर्ता भोक्ता चात्मास्तीत्येवंरूपमज्ञस्य कर्मणि प्रवृत्तस्य यद्ज्ञानं तत्स्वा-
चर्यमाणकर्मनिर्वर्तनार्थमेव नतु मोक्षार्थम्। यद्ययं कर्मणि प्रवृत्तेः प्रागेव देहाद्भिन्नमात्मानं मनुयात्त-
कर्मणि नैव प्रवर्तेत- स्वस्मिन् कर्तृत्वभोक्तृत्वनिश्चयानुदयात्तस्य। ततश्च देहादावात्माभिमानात्कर्मणि
प्रवृत्तस्य देहविलक्षणात्मज्ञाने पश्चाज्जातेऽपि तद्ज्ञानं स्वानुष्ठीयमानकर्मफलभोक्त्रात्मसम्पादनद्वारा कर्म-
निर्वर्तनार्थकमेव, नतु कर्मसन्न्यासार्थकमिति स्थितम्।

हि फलहेतुस्यात्मनोऽन्यत्वं प्रतिपद्यते, न पूर्वम् । तस्माद्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम् ।

ननु 'स्वर्गकामो यजेत, न कलंजं भक्षये'दित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ

---

नन्वेतेन प्रकृतप्रश्नस्य किमुत्तरमायातमिति चेदुच्यते—यस्याज्ञस्य देहादावहमित्यभिमानस्तस्यैव कर्मणि प्रवृत्तस्य देहान्यात्मदर्शने सति देहादौ ममेत्यभिमानः, कर्ताहं भोक्ताहमित्यभिमानश्च । तथा च देहभिन्नात्मदर्श्यप्ययं कर्तृत्वाद्यभिमानसद्भावादज्ञ एव । यस्तु कर्मण्यप्रवृत्तो देहान्यात्मदर्शी, यश्च कर्मणि प्रवृत्तोऽपि देहान्याकर्त्रभोक्त्रात्मदर्शी स विद्वान् देहादिकं तदाश्रयं कर्म तत्फलादिकं वा ममत्वेन न पश्यति- असङ्गत्वादकर्तृत्वादभोक्तृत्वान्निर्विकारत्वाच्चात्मनः । तस्मात्प्राकृतसम्बन्धापेक्षया शास्त्रार्थविषयप्रतिपत्तिर्देहभिन्नात्मदर्शिनोऽपि कर्तृभोक्त्रात्मदर्शिनो देहादिसम्बद्धात्मदर्शिनश्चाज्ञस्यैव भवति । न त्वकर्त्रभोक्त्रसङ्गात्मदर्शिनः प्राज्ञस्य- तस्य देहादौ ममाभिमानस्याप्यभावात् । न देहादिभिर्विदुषः प्राकृतोऽपि सम्बन्धगन्धः कश्चिदस्ति । अज्ञानकृतो हि प्राकृतस्सम्बन्धः ।

**तस्मादिति** । यस्माद्देहादावहंममाभिमानवतः कर्तृभोक्त्रात्मदर्शिन एव शास्त्रं प्रवर्तकं, निवर्तकं न तु देहादावहंममाभिमानरहितस्यासङ्गाकर्त्रभोक्त्रात्मदर्शिनस्तस्मादित्यर्थः । अविद्वांसोऽविद्यावन्तः । अनात्मसु देहादिष्वहंममाभिमानहेतुरज्ञानमविद्या । अविद्याकार्यत्वात्तदभिमानोऽप्यविद्यैव । अविद्वांसो विषयश्शास्त्रार्थप्रतिपत्त्यर्हत्वेन गोचरो यस्य तदविद्वद्विषयम् । अविद्वदधिकारिकमिति यावत् । नच विधिप्रतिषेधशास्त्रस्यार्थवत्त्वेऽप्यविद्वद्विषयत्वेन मोक्षशास्त्रं तु व्यर्थमेव- तत्राविदुषामप्यधिकाराभावादिति वाच्यं, अविद्वांसो ह्यात्मानं संसारिणं बद्धं मन्यमानास्तन्मोचनाय गुरोस्सकाशाच्छास्त्रमधिगत्य शमदमादिसम्पादनद्वारा ज्ञानं सम्पाद्य मुच्यन्त इति न मोक्षशास्त्रस्याप्यनर्थकत्वं- तस्याप्यविद्वद्विषयत्वात् । तस्मात्सर्वाण्यपि विधिप्रतिषेधमोक्षशास्त्राण्यविद्वद्विषयाण्येव । तत्र विधिप्रतिषेधशास्त्रं सकामाज्ञविषयं, मोक्षशास्त्रं तु निष्कामाज्ञविषयमिति विवेकः । नच मोक्षकामिविषयमिति वाच्यं, मोक्षकामस्य कामाभावरूपत्वात् । निष्कामो हि मुमुक्षुः । यः पुंसां बन्धहेतुस्स एव कामो न त्वन्य इति सिद्धान्तात् ।

ननु 'कर्ता शास्त्रार्थवत्त्वा'दिति व्यासेन शास्त्रस्यार्थवत्त्वं साधितं कर्तुस्सत्त्वात् । प्रकृते तु कर्तुरभावाच्छास्त्रं व्यर्थमेवेत्यापतितम् । अतस्सूत्रविरोध इत्याक्षिपति—**नन्विति** । शास्त्रार्थयज्ञाद्यनुष्ठाने अज्ञा न प्रवर्तन्ते- तेषां देहात्मवादित्वाद्देहस्य चेहैव नाशात्स्वर्गादिफलभोक्तुरभावाद्देहस्यैव कर्तृत्वाद्व्यर्थं कर्मानुष्ठानमिति दृष्ट्या । तथा प्राज्ञा अपि न प्रवर्तन्ते- देहव्यतिरिक्ताऽकर्त्रभोक्त्रात्मदर्शित्वात्तेषाम् । तस्मात् 'स्वर्गकामो यजे'तेत्यादिविधिशास्त्रं, 'न कलञ्जं भक्षये'दित्यादिप्रतिषेधशास्त्रं च व्यर्थमेव- शास्त्रार्थानुष्ठातुरभावादित्यर्थः । देहात्मदृष्टीनां चेत्यनन्तरमप्रवृत्ताविति शेषः । यद्वेत्यादावात्मव्यतिरेकदर्शिनां केवलं देहात्मदृष्टीनां चाप्रवृत्तावित्यन्वयः ।

केवलदेहाद्यात्मदृष्टीनां च। अतः कर्तुरभावाच्छास्त्रानर्थक्यमिति चेन्न; यथाप्रसिद्धित
प्रवृत्तिनिवृत्त्युपपत्तेः। ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते, तथा नैरात्म्यवा
नास्ति परलोक इति न प्रवर्तते। यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथा
पत्त्यानुमितात्मास्तित्व आत्मविशेषानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रव
इति सर्वेषां नः प्रत्यक्षम्। अतो न शास्त्रानर्थक्यम्।

विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेन्न; कस्यचि
विवेकोपपत्तेरनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्यात्; यथेदानीं न च विवेकिनमनुवर्त

---

अत इति। अज्ञानां विज्ञानां च शास्त्रार्थानुष्ठानाप्रवृत्तेरित्यर्थः। कर्तुः शास्त्रार्थानुष्ठातुः
कर्तुरभावे- त्वमेवं कुरु, त्वमेवं मा कुरु- इति शासनस्य व्यर्थत्वादिति भावः। परिहरति—नेति
यथाप्रसिद्धे पूर्वोक्तरीत्या देहादन्य आत्मा कर्ता भोक्ता चास्तीति ज्ञानवत्त्वेन प्रसिद्धे पुरुषे
प्रवृत्तिनिवृत्त्योरुपपत्तेः। संग्रहोक्तं वाक्यमेव विवृणोति—ईश्वरेति। ईश्वरक्षेत्रज्ञयोरेकत्वं द्रष्टुं शी
मस्येतीश्वरक्षेत्रज्ञैकत्वदर्शी। ब्रह्मवित्कर्मणीति शेषः। तावन्न प्रवर्तते नैव प्रवर्तते। नैरात्म्यवा
शून्यवादी- देहात्मवादीति यावत्। बौद्धादिर्नास्तिक इति भावः। परलोको नास्तीति बुद्ध्या कर्म
न प्रवर्तते। उभयातिरिक्तः कर्मितया प्रसिद्ध आस्तिकस्तु वैदिकः शास्त्रप्रामाण्यनिश्चयाद्विधिप्र
षेधशास्त्रस्यान्यथानुपपत्त्या देहातिरिक्तस्य कर्तुरात्मनोऽभावे प्रामाण्यानुपपत्त्या हेतुना अनुमितात्म
स्तित्वः- अनुमितमात्मास्तित्वं येन स तथोक्तः। देहातिरिक्तः कश्चिदात्मास्ति कर्ता भोक्ता
शास्त्रप्रामाण्यस्यान्यथानुपपत्तेरित्यनुमानेनैवात्मानं ज्ञातवानित्यर्थः। अत एवात्मविशेषानभिज्ञः- अ
र्त्रभोक्तृसच्चिदानन्दलक्षण आत्मेत्येवं विशेषाकारेणात्मानं नाभिजानातीत्यर्थः। अत एवात्मनो भोक्तृ
त्वभ्रमात्कर्मफले स्वर्गादौ सञ्जाता तृष्णाऽभिलाषो यस्य स तथोक्तः। एवंविधः पुरुषः श्रद्दधानस्स
कर्मणि प्रसर्तत इत्येतत्सर्वेषां नः प्रत्यक्षमनुभवसिद्धम्।

अत इति। देहातिरिक्तकर्तृभोक्त्रात्मवादिनः कर्मिणोऽज्ञस्य सत्त्वात्कर्तुरित्यर्थः। शास्त्रा
नर्थक्यं न- उक्तलक्षणं कर्तारमुपलभ्यैव 'कर्ता शास्त्रार्थवत्त्वा'दित्युक्तं व्यासेनेति न सूत्रविरोधः। ना
शास्त्रानर्थक्यदोषोऽस्माकमिति भावः। नन्वेवंविधस्य कर्तुर्दुर्लभत्वाच्छास्त्रस्यानर्थक्यमेवेत्याक्षिपति-
विवेकिनामिति। विवेकिनां ब्रह्मविदां कर्मणि प्रवृत्त्यदर्शनात्। 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जन
इति न्यायेनाविवेकिनामपि विवेक्यनुसारिणां कर्मण्यप्रवृत्तौ सत्यां शास्त्रानर्थक्यं यथाप्रसिद्धस्य कर्तु
र्दुर्लभत्वादिति भावः।

परिहरति—नेति। कर्तार एव सुलभाः, विवेक्येव दुर्लभः। कुतः? कस्यचिदेव सुकृतिनः
'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत' इति न्यायेन विवेकस्य ज्ञानस्योपपत्तेः प्राप्तेः। इद
भङ्ग्यन्तरेणाह—अनेकेष्विति। 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धा
कश्चिन्मां वेत्ति तत्त्वत' इति गीतावचनादिति भावः।

मूढाः, रागादिदोषतन्त्रत्वात्, प्रवृत्तेरभिचारादौ च प्रवृत्तिदर्शनात्, 'स्वाभाव्याच्च प्रवृत्तेः— 'स्वभावस्तु प्रवर्तत' इति ह्युक्तम् ।

तस्मादविद्यामात्रं संसारो यथादृष्टविषय एव । न क्षेत्रज्ञस्य केवलस्याविद्या तत्कार्यं च । न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम् । नह्यूषरदेशं स्नेहेन पङ्कीकर्तुं

---

ननु भवतु कश्चिदेव विवेकी, तदनुवर्तिनस्तु बहवः स्युरत आह—यथेति । मूढा विवेकिनमिदानीं यथा नानुवर्तन्ते तथा पूर्वमपि भविष्यत्कालेऽपीत्यर्थः । यद्वा यथेत्यस्य तावदित्यर्थः । इदानीं विवेकिनं मूढा नैवानुवर्तन्ते । तत्र हेतुमाह—रागादीति । प्रवृत्तेः रागादिदोषतन्त्रत्वात् । रागादिदोषदूषिता मूढा विवेकिनं नैवानुवर्तन्ते, किंतु रागादिदोषवशात्कर्मण्येव प्रवर्तन्ते ।

ननु रागादिदोषवशात्कर्मणि न प्रवर्तन्ते मूढाः, किंतु श्रेष्ठाचरणदर्शनादेव । श्रेष्ठा हि जनकादयः कर्मणि प्रवृत्ताः । उक्तं च भगवतापि 'वर्त एव च कर्मणि, मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ ! सर्वश' इत्यत आह—अभिचारेति । अभिचारश्शत्रुमारणकर्म । आदिपदात्परदारगमनादिकम् । मूढा इदानीं हिंसादिकर्मणि प्रवर्तमाना दृश्यन्ते, किं ते श्रेष्ठाचरणानुसारात्तत्र प्रवृत्ताः ? उत रागादिदोषवशात् ? नाद्यः- श्रेष्ठानां हिंसादिनिषिद्धकर्मस्वप्रवृत्तत्वात् । अतः परिशेषाद्रागादिदोषवशादेव । तथा च य एव दोषोऽभिचारादौ पुंसां प्रवर्तकः स एव रागादिदोषो यज्ञादिकर्मस्वपि प्रवर्तक इत्यवश्यमभ्युपेयं- प्रवृत्त्यैक्यात् । एकत्र दृष्टस्यैव कारणस्येतरत्राभ्युपगमनीयत्वात् । रागादिदोषोऽज्ञानां कर्मणि प्रवर्तकः- प्रवृत्तिहेतुत्वादभिचारादाविवेत्यनुमानात् । न हि कोऽपि जनकेन कर्म कृतं मया कर्तव्यमिति कुरुते, किंतु कर्मणा स्वर्गादिफलं स्यादिति स्वर्गादिफलरागेणैव । यथा शत्रौ द्वेषेणाभिचारं करोति तद्वदिति ।

नच श्रीकृष्णवाक्यविरोधः, रागादिदोषात्स्वत एव कर्मणि प्रवृत्तानामपि विहितकर्मसु रुच्युत्पादनार्थं तथोक्तत्वात् । न केवलं प्रवृत्तेः रागादिदोषतन्त्रत्वं, किंतु स्वभावत्वमपीत्याह—स्वाभाव्याच्चेति । स्वभावत एव पुंसां प्रवृत्तिर्भवतीत्यर्थः । तत्र गीतां प्रमाणयति—स्वभावस्त्विति । धर्माधर्मलक्षणसंस्कारवशात्प्रवृत्तिस्वभावा एव सन्तो जायन्ते मूढा जन्मत आरभ्य भोजनादिकर्मसु प्रवर्तनस्वाभाव्यात्तथैव यज्ञादिकर्मस्वपि स्वभावत एव प्रवर्तन्त इति भावः ।

तस्मादिति । यस्मादविद्वद्विषयं शास्त्रं तदर्थानुष्ठानं च तस्मादित्यर्थः । अविद्यामात्रोऽविद्याकृत इत्यर्थः । यथादृष्टो यथाप्रसिद्धः कर्मी अज्ञः तद्विषय एव संसारः । एवकारार्थमाह—नेति । केवलस्य क्षेत्रज्ञस्याविद्यातत्कार्यं च नास्ति- विदुष आत्मत्वात् । क्षेत्रज्ञस्य विदुषो नास्त्यविद्यादिकमिति न विद्वद्विषयस्संसार इत्यर्थः । नन्वविवेकिभिरात्मनि कल्पितोऽप्यविद्यामयस्संसार आत्मानं बध्नीयादेवेत्यत आह—न चेति । मिथ्यात्वेन ज्ञायत इति मिथ्याज्ञानं मिथ्याभूतं वस्तु । प्रातिभासिकं गन्धर्वनगररज्जुसर्पस्वप्नरथादिकं, परमार्थवस्तु गगनरज्ज्वादिकम् । कर्म दूषयितुं स्वतादात्म्यमापादयितुमित्यर्थः । स्वस्वधर्मांस्तत्र प्रसञ्जयितुमिति यावत् । नैव समर्थम् । तत्र दृष्टान्तमाह—

शक्नोति मरीच्युदकम् । तथाऽविद्या क्षेत्रज्ञस्य न किञ्चित्कर्तुं शक्नोति । अतश्चेदमुक्तं—'क्षेत्रज्ञं चापि मां विद्धि', 'अज्ञानेनावृतं ज्ञान'मिति च ।

अथ किमिदं संसारिणामिव 'अहमेवं ममैवेद'मिति पण्डितानामपि, शृण्विदं

---

न हीति । मरीच्युदकं कर्तृ । स्नेहेन द्रवेण । ऊषरदेशं पङ्किलं कर्तुं नैव शक्नोति । यथार्थमुदकं मरुभूमिं प्रविष्टं चेत्स्वधर्मं द्रवं तस्यास्सम्पाद्य तां पङ्किलां करोति, मरीचिकोदकं तु न तथेत्यर्थः । दार्ष्टान्तिकमाह—तथेति । अविद्या क्षेत्रज्ञस्य किञ्चिदपि संसारित्वं कर्तुं न शक्नोति- मिथ्यात्वा-दविद्यायाः । अनाद्युपादानत्वे सति मिथ्यात्वं ह्यविद्याया लक्षणम् । मिथ्यात्वं सदसदनिर्वाच्यत्वम् । तूलाज्ञानमविद्येति पक्षे तूपादानत्वे सति मिथ्यात्वमिति तल्लक्षणम् । उभयथापि मिथ्यैवाविद्या । अवि-द्याया एव मिथ्यात्वे तत्कार्यसंसारमिथ्यात्वे न विप्रतिपत्तिः । नच सत्यैवाविद्येति वाच्यं, 'नाऽसतो विद्यते भावो नाऽभावो विद्यते सत' इत्युक्तन्यायेन सत्याया अविद्याया ज्ञानेन निवृत्त्ययोगात् । नहि ज्ञाननिवर्त्यं वस्तु क्वापि सत्यं दृष्टं- रज्जुज्ञाननिवर्त्यसर्पादेर्मिथ्यात्वदर्शनात् । नाप्यत्यन्तमसत्या-शशशृङ्गवदप्रतीत्यभावात् । यस्मात्प्रतीयते बाध्यते च तस्मान्मिथ्यैवाविद्या रज्जुसर्पादिवदिति ।

न चेतिवाक्यस्यान्योऽप्यर्थः प्रतिभाति- तथाहि- मिथ्या च तदज्ञानं च मिथ्याज्ञानं परमार्थवस्तु परमार्थसत्यं ब्रह्म दूषयितुं संसारीकर्तुं मिथ्याभूतं कर्तुं वा न समर्थं सत्यमिथ्यावस्तुनोरितरेतरतादात्म्या-द्यनुपपत्तेरिति भाव इति ।

ननु मिथ्याज्ञानेनापि सत्यवस्तुनो दोषस्स्यादिति शङ्कायां लोकप्रसिद्धं दृष्टान्तमाह— नहीति । पुनरपि सुबोधाय दार्ष्टान्तिकमाह—तथेति । एतेनाज्ञैरात्मनि कल्पितेन संसारेण न कोपि लेपः क्षेत्र-ज्ञस्य यथाऽज्ञकल्पितमरीचिकोदकेन मरुभूमेर्द्रवाभाव इति सिद्धम् । यद्वा अविद्यया क्षेत्रज्ञे कल्पितेन संसारेण तस्य न कोपि लेपः, यथा अविद्यया मरुभूमौ कल्पितेन जलेन तस्याऽद्रवाभाव इति सिद्धम् । ततश्चाज्ञानादात्मानं क्षेत्रज्ञं संसारिणं मन्वन्तु नामाज्ञाः, न तावताऽज्ञप्रत्ययमात्रेणात्मनः कोपि संसारः । नहि गगनं नीलमिति बालप्रत्ययमात्रेण गगनस्य नैल्यसम्भवः । तस्मान्नास्ति क्षेत्रज्ञस्य किञ्चिदपि संसारित्वम् ।

अत इति । क्षेत्रज्ञस्य वस्तुतोऽसंसारित्वादित्यर्थः । क्षेत्रज्ञो वस्तुत ईश्वर एव, अज्ञानेन तदज्ञान-स्यावरणात्क्षेत्रज्ञस्संसारीति जन्तवो मुह्यन्तीतीदमुक्तं भगवतेति शेषः । ननु यदि विद्वद्दृष्ट्याऽसंसार्येव क्षेत्रज्ञः, अविद्वद्दृष्ट्यैव संसारी, तर्ह्यज्ञानामिव विदुषामप्यनात्मनि देहादावहमिदमिति ममेदमिति च कोऽयमभिमानः ? संसारहेतुरयमभिमानोऽज्ञानप्रयुक्तो हि; अज्ञानं च न युक्तं विद्यावताम् । तस्मा-द्विदुषामप्यनात्मस्वहंममाभिमानसत्त्वाद्देहात्मनोस्संसर्गस्सत्य एवेति देहादिमत्त्वात्संसार्येव क्षेत्रज्ञ इत्याश-येन पृच्छति द्वैती—अथेति । आह सिद्धान्ती—शृण्विति । क्षेत्रे शरीरे एव यदात्मदर्शन-मात्मेतिबुद्धिस्तदिदं तेषामहमिदं ममेदमित्यभिमानिनां पाण्डित्यं विद्वत्ता । अयं भावः—अत्यन्तं

तत्पाण्डित्यं, यत् क्षेत्र एवात्मदर्शनम् । यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुः ततो न भोगं कर्म वाऽऽकांक्षेयुः 'मम स्या'दिति । विक्रियैव हि भोगकर्मणी । अथैवं सति फलार्थित्वादविद्वान् प्रवर्तते, विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्यकरणसङ्घातव्यापारोपरमे निवृत्तिरुपचर्यते ।

इदं चान्यत्पाण्डित्यं केषांचिदस्तु-- क्षेत्रज्ञ ईश्वर एव, क्षेत्रं च अन्यत् क्षेत्रज्ञस्यैव विषयः, अहं तु संसारी सुखी दुःखी च, संसारोपरमश्च मम कर्तव्यः, क्षेत्रक्षेत्रज्ञविज्ञानेन

---

मूढा देहमेवात्मानं मन्यन्ते, आस्तिकास्तु देहादन्यं कर्तारं भोक्तारं चात्मानं मन्यन्त इत्यास्तिकानां देहेऽहमभिमानाभावेऽप्यन्तःकरणेऽहमभिमानोऽस्ति-- अन्तःकरणधर्माणां भोक्तृत्वादीनामात्मन्यध्यासात् । न ह्यन्तःकरणाद्विलक्षणमात्मानं ते विदुः । ततश्च देहे ममाभिमानस्तेषामिति । उक्तार्थानभ्युपगमे दोषमाह—यदीति । यदि तेषां वैदिकानामन्तःकरणे क्षेत्रेऽहंममाभिमानाभावस्तर्हि कर्तुर्भोक्तुश्चान्तःकरणाद्विलक्षणमविक्रियमेव क्षेत्रज्ञमात्मानं पश्येयुः; यदि तथा पश्येयुस्ततस्तर्हि ममायं भोगस्स्यादिति भोगं कर्म वा न कांक्षेयुः । हि यस्माद्भोगाः कर्माणि च विक्रियैव तस्माद्विक्रियारहिते आत्मनि भोगाद्ययोगान्नास्त्यविक्रियात्मदर्शिनां भोगादिकांक्षा । एवं सति अविक्रियात्मदर्शिनां भोगादिकांक्षाऽभावे सतीत्यर्थः । क्षेत्र एवात्मदर्शने सतीति वा । अविद्वान् क्षेत्रात्मदर्शी कर्ता भोक्ता चात्मेति प्रतिपद्यमान इत्यर्थः । फलार्थित्वाद्धेतोः प्रवर्तते कर्मणि प्रवृत्तो भवति । अविक्रियमात्मानं द्रष्टुं शीलमस्यास्तीत्यविक्रियात्मदर्शी, तस्य विदुषस्त्वात्मनोऽभोक्तृत्वेन फलार्थित्वाभावात्फलाकांक्षाऽभावाद्धेतोः प्रवृत्त्यनुपपत्तिः ।

ननु प्रवृत्तिवन्निवृत्तिरपि कर्मैवेति 'कर्मण्यकर्म यः पश्ये'दिति श्लोकभाष्ये प्रोक्तत्वात्कथमकर्तुर्विदुषो निवृत्त्युपपत्तिरत आह—प्रवृत्त्यनुपपत्तौ सत्यां निवृत्तिरुपचर्यत इति । कार्यकरणसङ्घातस्य व्यापारः कर्म यज्ञादिलक्षणः तस्योपरमो निवृत्तिरित्युपचारादुच्यते । कार्यकरणसङ्घातव्यापारादुपरतो भवति । न त्वहं व्यापारोपरमं करोमीति मन्यते, येन निवृत्तिः कर्म स्यादिति भावः । तस्मात्कर्तृभोक्त्रन्तःकरणतादात्म्याध्यासशालिनां वैदिकानां सम्यग्दर्शनशून्यानामेवाहंममाभिमानो न तु तत्त्वविदाम् ।

अन्यदिति । पूर्वोक्तादितरत् । केषांचिदिति । द्वैतिनामित्यर्थः । तत्पाण्डित्यमेव दर्शयति—क्षेत्रज्ञ इत्यादिना, ईश्वर एवेति । नतु जीव इत्येवकारार्थः । स्वस्य संसारित्वात्क्षेत्रज्ञस्य चासंसारित्वादिति भावः । क्षेत्रज्ञस्य साक्षिण ईश्वरस्य विषयो गोचरः तत्प्रकाश्यमिति यावत् । क्षेत्रं चान्यत्क्षेत्रज्ञाज्जीवाच्च विलक्षणमेव । अहं क्षेत्रक्षेत्रज्ञयोरन्यस्संसारी जीवः । कुतः ? यतस्सुखी दुःखी च भवामि, क्षेत्रक्षेत्रज्ञविज्ञानेन ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेन । भ्रमरकीटन्यायादिति भावः । मम संसारोपरमः कर्तव्य इतीदमन्यत्पाण्डित्यं केषांचिदस्त्वित्यन्वयः । क्षेत्रज्ञमेव

ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति। यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इति। एवं मन्वानो यस्स पण्डितापशदः संसारमोक्षयोश्शास्त्रस्य चार्थवत्त्वं करोमीत्यात्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसम्प्रदायरहितत्वात्, श्रुतहानिमश्रुतकल्पनां च कुर्वन्। तस्मादसम्प्रदायवित् सर्वशास्त्रविदपि मूर्ख इवोपेक्षणीयः।

---

संसारिणं मन्यन्ते पूर्वोक्ताः। अमी तु क्षेत्रज्ञमीश्वरं मन्वानाः। तस्मादन्यमेव संसारिणमात्मानं मन्यन्त इति भेदः।

किमिदं पाण्डित्यं दुष्टमत आह—यश्चेति। यश्च बुध एवमुक्तरीत्या बुद्ध्यते वेत्ति यश्च गुरुः शिष्यानेवं बोधयति। किं बुद्ध्यते किं वा बोधयतीत्यत आह—नासौ क्षेत्रज्ञ इति। असौ जीवः क्षेत्रज्ञो न भवतीति। य एवं मन्वान एतादृशज्ञानवान् स पण्डितापशदो नीचपण्डितः। संसारमोक्षयोर्मिथ्यात्वे शास्त्रमनर्थकं स्यादिति तत्सत्यत्ववर्णनद्वारा शास्त्रस्यार्थवत्त्वं सम्पादयामीति प्रवृत्त इति शेषः। मन्यमान इति वा। अत एवात्मानं हन्ति नाशयति संसारादनिर्मोचनद्वारेत्यात्महा। एवंविधस्स पण्डितापशदः स्वयं मूढस्सन्नन्यांश्च व्यामोहयति। कुतः? शास्त्रार्थसम्प्रदायरहितत्वात्। शास्त्रस्य यस्सम्प्रदायसिद्धोऽर्थस्तद्ज्ञानशून्यः। स्वस्य सम्प्रदायविद्गुरूपदेशाभावादिति भावः। व्यासशुकादिगुरुशिष्यपरम्परा सम्प्रदाय इत्युच्यते। तं विन्दति भजत इति सम्प्रदायवित्। तत्परम्पराप्रविष्ट इति यावत्। स चासौ गुरुर्गोविन्दयोगीन्द्रः, तदुपदेशश्शङ्कराचार्यस्यास्तीति शङ्करोक्त एवार्थो ग्राह्यः। व्यासो हि मूलकर्ता स्वाभिप्रायं स्वशिष्याय स्वपुत्राय च यथावद्बोधयामास। स च शुको गौडपादाय शिष्याय, स च गौडपादो गोविन्दयोगीन्द्राय, स च शङ्करायेत्ययं गीतार्थसम्प्रदायः। अयं च शङ्करस्स्वाभिप्रायं सर्वजनसुलभं चकार भाष्यरचनाद्वारेति कृत्वा य एतद्भाष्यपाठकस्स च सम्प्रदायविद्गुरुरेव। अन्ये तु रामानुजादयो दर्शितसम्प्रदायशून्या एवेति कृत्वा तद्भाष्यपाठकोऽपि सम्प्रदायरहित एव। शास्त्रार्थस्य यस्सम्प्रदायो बोधकबोद्ध्यरूपगुरुशिष्यादिपरम्परा तद्रहितत्वा।तदन्तःप्रवेशाभावादित्यक्षरार्थः।

अस्माद्धेतोः श्रुतहानिं यथाश्रुतार्थपरित्यागमश्रुतकल्पनामयथाश्रुतार्थकल्पनां च कुर्वन्, शास्त्रस्य स्वातन्त्र्येण कञ्चिदपार्थं परिकल्पयन्नित्यर्थः। कुर्वन्सन्नन्यान्व्यामोहयतीति सम्बन्धः। तस्मादिति। यस्मादेवं पण्डितापशदः स्वयं मूढोऽन्यान् व्यामोहयति तस्मादित्यर्थः। यस्माच्छ्रुतहानिमश्रुतकल्पनां च करोति तस्मादिति वा। सर्वशास्त्रविदप्यसम्प्रदायवित्स पण्डितापशदो मूर्ख इवाज्ञ इवोपेक्षणीयः, नतु संसेव्यश्शिष्यैः- तदुपदिष्टार्थस्य प्रमाणविरुद्धत्वेनानर्थहेतुत्वाच्छिष्यस्य। कथमिति चेदुच्यते—'इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते' इति शरीरस्य क्षेत्रत्वमुक्त्वा 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' इति शरीरज्ञातुः क्षेत्रज्ञत्वमुक्तं भगवता। शरीरज्ञातृत्वं च शरीरिणो जीवस्य सर्वानुभवसिद्धं—मनुष्योऽहं स्थूलोऽहं ममाङ्गं मम हस्त इत्यादिप्रतीतेः। तस्य च क्षेत्रज्ञस्य- 'क्षेत्रज्ञं चापि मां विद्धि' इतीश्वरामेद उक्तः। मामित्यस्मच्छब्दार्थस्य श्रीकृष्णस्येश्वरत्वस्य सर्वसम्मतत्वात्।

एवं यथाश्रुतमर्थं विहाय जीवो न क्षेत्रज्ञः, किंत्वीश्वर एव क्षेत्रज्ञ इत्यर्थवर्णनमश्रुतकल्पनमेव। क्षेत्रज्ञेश्वरादन्यस्य जीवस्य तद्ध्यानेन तत्स्वरूपावस्थितिरित्यप्ययुक्ता- अन्यस्यान्यस्वरूपापत्त्ययोगात्, विद्यमानरूपपरित्यागे जीवस्य नाशप्रसङ्गात्, रूपान्तरपरिग्रहे च जन्मप्रसङ्गात्, तथा च सति जीवस्यानित्यत्वप्रसङ्गात्। घटो हि कम्बुग्रीवादिस्वाकारपरित्यागे नष्ट इति, कपालात्मना जात इति च, ततोऽनित्य इति च प्रसिद्धम्। नच पूर्वरूपमपरित्यज्यैव जीव ऐश्वरं रूपं भजत इति वाच्यं, रूपद्वयसामानाधिकरण्यायोगात्, दृष्टान्ताभावाच्च। नच भ्रमरकीटन्यायोऽत्र दृष्टान्त इति वाच्यं, कीटस्यापि कीटरूपत्यागादेव भ्रमररूपप्राप्तेः। नहि कीटभ्रमररूपद्वयस्यैकत्रोपलम्भः, येन कीटः कीटरूपमपरित्यज्यैव भ्रमररूपं प्राप्त इत्युच्येत। कथं वा कीटस्य कीटरूपत्यागं विना भ्रमररूपप्राप्तिस्संभवेत्? कीटभ्ररूपयोरन्योन्यविलक्षणत्वात्। अविलक्षणत्वे च कीटोऽयं भ्रमरोऽयमिति विवेकव्यवहारानुपपत्तेः। नच घटरूपं परित्यज्य कपालरूपं प्राप्तस्य मृद्द्रव्यस्य नित्यत्वदर्शनात्पूर्वरूपपरित्यागपूर्वकोत्तररूपस्वीकारेऽपि न जीवस्यानित्यत्वदोष इति वाच्यं, घटकपालद्वयानुगतस्य मृद्द्रव्यस्यैकत्वादस्तु नित्यत्वं, प्रकृते तु कीटभ्रमरयोरिव जीवेश्वरयोरेकात्मत्वाभावान्न भवेज्जीवस्य नित्यत्वम्। किंच मृद्द्रव्यस्य नित्यत्वेऽपि तद्विकारयोर्घटकपालयोरनित्यत्वमेव यथा तथा जीवेश्वरयोरनित्यत्वमेव स्यात्तदनुगतस्य यस्य कस्यापि वस्तुनस्सत्यत्वं नित्यत्वं च स्यात्। तच्चानुगतं वस्तु नास्त्येव तव मते। तत्सत्त्वे वा जीववदीश्वरोऽप्यनित्य एव स्यादिति हन्त! महदनिष्टं यज्जीवनित्यत्वं साधयतस्तवेश्वरानित्यत्वमपि प्राप्तम्।

यदि जीवेश्वरद्वयानुगतचैतन्यमेव नित्यं सत्यं च घटकपालद्वयानुगतमृद्द्रव्यवदित्यभ्युपैषि, तर्हि मृदात्मत्वेन घटकपालयोरिव चैतन्यात्मत्वेन जीवेश्वरयोरप्येकत्वं स्यादेवेति स्वमतभङ्गः, परमतस्वीकारश्च तव।

किंच जीवेश्वरयोः किं घटपटयोरिव रूपतो भेदः? यद्वा लवणकर्पूरयोरिव धर्मतः? यद्वा घटयोरिव व्यक्तितः? अथवा घटरूपयोरिव पदार्थतः? यद्वा वाय्वाकाशयोरिव गुणतः? अथवा घटकलशयोरिव नामतः? न तावदाद्यः- नीरूपत्वाद्द्वयोः। न द्वितीयः- निर्धर्मकत्वात्। न तृतीयः-- व्यक्तिद्वयानुपलम्भात्, अव्यक्तत्वेन व्यक्तेरेवाभावाच्च। न चतुर्थः- आत्मत्वेनोभयोरेकपदार्थत्वात्। न पञ्चमः- निर्गुणत्वात्। अतष्षष्ठः पक्षः परिशिष्टः। घट इति, कलश इति च यथैकस्यैव वस्तुनो नामद्वयं, तथा जीव इतीश्वर इति चैकस्यैव चैतन्यस्य नामद्वयमिति। तस्माज्जीवेश्वरयोर्भेदवादो नोपपद्यते। नचाभेदवादोऽप्ययुक्त एव- भेदप्रसक्तिं विना भेदनिषेधायोगात्, भेदस्याभावे प्रसक्त्ययोगाच्चेति वाच्यं, अज्ञदृष्ट्या जीवेश्वरभेदस्य प्रसक्तत्वादिति। नचान्तःकरणावच्छिन्नत्वमायावच्छिन्नत्वरूपविशेषणभेदाज्जीवेश्वरभेद इति वाच्यं, निर्विशेषचिन्मात्रे विशेषणायोगात्। अत एव हि निर्धर्मक आत्मेत्युच्यते। नच परिपूर्णं चैतन्यमन्तःकरणादिना परिच्छिद्यते। भवतु वा घटाकाशमठाकाशयोरिवौपाधिकभेदः, न स जीवेश्वरवास्तवभेदजननक्षमः- उपाधिभेदस्याप्रयोजकत्वात्। नहि घटमठभेदादाकाशस्य भेदः। नह्युपाधितो भिद्यमानं किंचन वस्तु दृश्यते। अत एव किं जीवेश्वरयो-

यत्तूक्तम्—'ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्गः' इत्येतौ दोषौ प्रत्युक्तौ-- 'विद्याविद्ययोर्वैलक्षण्याभ्युपगमा-दिति। कथम् ? अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति।

---

रुपाधितो भेदो वेति न विकल्पितं प्राक्- दृष्टान्ताभावात्। नच घटाकाशमठाकाशौ दृष्टान्ताविति वाच्यं, तद्भेदस्यासम्प्रतिपन्नत्वात्। सम्प्रतिपन्नो हि दृष्टान्ततया स्वीकार्यः। तस्मादयुक्तोऽप्रमाणश्च जीवेश्वरभेदवादः। नच सप्रमाण एवेति वाच्यं, 'स आत्मा तत्त्वमसि' इत्यादिप्रमाणविरोधात्। नच 'द्वा सुपर्णा'विति श्रुतिः प्रमाणमिति वाच्यं, तस्य सत्त्वजीवपरत्वेन व्याख्यातत्वात्। यद्वा प्रमातृसाक्षिपरत्वात्। साक्षिण्येव कूटस्थे प्रमातृत्वस्य कल्पितत्वात्साक्ष्येव जीव इति न प्रमातृसाक्षिणो-र्वास्तवः कश्चिद्भेदः। अमुमेव प्रमातारमध्यस्ताहङ्काररूपं जीवं मन्यन्तेऽविद्वांसः। नचाहङ्कारस्स एव जीव इति वाच्यं, अहङ्कारस्य सुषुप्तौ लयदर्शनाज्जीवस्यानित्यत्वापत्तेः, अहङ्कारलयसाक्षित्वेन सुषुप्तौ जीवस्य सत्त्वाच्च।

तस्मादप्रमाण एव जीवेश्वरभेदवादः। एवमप्रमाणत्वादयुक्तत्वादेव च- 'अन्योऽसावन्योऽह-मस्मीति न स वेद यथा पशु'रिति च भिन्नात्मज्ञानी निन्दितः श्रुत्या पशुरिति। इदमेवाभिप्रेत्य पशुत्वं मूर्खत्व इवेत्युक्तमाचार्यैः। एवं भेदवादिनः पशोर्मूर्खस्य दुर्वारं संसारभयम्। 'य उदरमन्तरं कुरुते, अथ तस्य भयं भव'तीति श्रुतेः। ईश्वरस्यासंसारित्वेन तस्माद्भिन्नस्य जीवस्य संसारित्वेनैव भाव्यत्वाच्च। तथा च संसारनिवर्तकसम्यग्दर्शनप्राप्तियोग्यं मनुष्यजन्म प्राप्यापि यस्सम्यग्दर्शनमसम्पाद्यात्मानं संसरान्न मोचयति स मनुष्यापशद आत्महा भवत्येव। आत्मानं हन्ति संसारपातनेन नाशयतीत्यात्महा इति व्युत्पत्तेः। अस्य च नरकप्राप्तिः श्रुत्यैवोक्ता- 'अन्धं तमः प्रपद्यन्ते ये के चात्महनो जना' इति। तस्मा-त्स्वयं नरकं गमिष्यन्नन्यानपि गमयतीत्ययमुपेक्षणीय एव- दुष्टं दूरतो वर्जयेदिति न्यायात्। अन्यथा एतदनुसारिणामन्येषामप्यन्धतमःप्राप्तेरवर्जनीयत्वात्। यद्यप्यात्मा न केनचिद्धन्यते- 'नायं हन्ति न हन्यत' इति गीतावचनात्तथापि अज्ञानकल्पितः प्रमातृलक्षण आत्मा हन्यत एवामीभिः- असंसार्यात्माहं ब्रह्मेतिज्ञानेन प्रमातुस्सकाशात्संसारनिवृत्तेः, एतद्ज्ञानाभावे तदनिवृत्तेश्च। अन्यथा शास्त्रमनर्थकमेव स्यात्। तस्मादयमात्महैव। अनेनात्मत्वेनाभिमतस्य प्रमातुस्संसारपतनरूपहानिसद्भावादिति। तस्मा-दसंसारीश्वर एव क्षेत्रज्ञ इति स्थितम्।

एतावता ग्रन्थसन्दर्भेण किं लब्धं तदाह—यत्त्वित्यादिना। कुतः प्रत्युक्तावत आह—विद्येति। विद्याविद्ययोः परस्परं विलक्षणत्वाद्विद्यया असंसारीश्वरत्वमात्मनः क्षेत्रज्ञस्य, अविद्यया तु संसारित्वमिति भेदाभ्युपगमात्। ननु विद्यया संसाराभावेऽप्यात्मनोऽविद्यया संसारोऽस्त्येवेति संसा-रित्वं पक्षे प्राप्तमीश्वरस्येत्यत आह—अविद्येति। अविद्याकृतसंसारेण नात्मनः कोऽपि लेपो मरी-च्युदकेन मरुदेशवदिति पूर्वोक्तार्थमाह—अविद्येति। नन्वेवं संसारिणोऽभावे संसाराभावप्रसङ्गः

तथा च दृष्टान्तो दर्शितो मरीच्यम्भसोषरदेशः नार्द्रीक्रियत इति । संसारिणोऽभावात्संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः ।

नन्वविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषः, तत्कृतं च सुखित्वदुःखित्वादिप्रत्यक्षमुपलभ्यत इति चेन्न, ज्ञेयस्य क्षेत्रधर्मत्वात्, ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत्किञ्चित्क्षेत्रज्ञस्य दोषजातमविद्यमानमासंजयति तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव न क्षेत्रज्ञधर्मत्वम् । न च तेन क्षेत्रज्ञो दुष्यति, ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः । यदि हि संसर्ग-

---

प्राप्तोऽत आह—सोपि दोषः प्रत्युक्त इति । तत्र हेतुमाह—संसारेति । संसारसंसारिणोरुभयोरप्यविद्याकल्पितत्वेन मिथ्यात्वाद्विदुषां तदभाव इष्ट एव- विद्यादशायां तदुभयादर्शनात् । नह्यन्तःकरणादात्मनि विवेचिते सति कोऽपि संसार्युपलभ्यते । अन्तःकरणतादात्म्याध्यासमापन्नो हि प्रमाता संसारसुखदुःखवत्त्वात् । नचान्तःकरणस्य संसार इति वाच्यं, आत्मतादात्म्याध्यासाभावे केवलान्तःकरणस्य जडत्वेन संसारानुपपत्तेः । नहि घटादीनां जडानां संसारो दृश्यते । तस्मादात्मान्तःकरणाविवेकमूलकस्संसारः । संसारी प्रमाता चेति नास्ति विवेकिदृष्ट्या कोऽपि संसारस्संसारी वेति स्थितम् ।

अविद्यावत्त्वात्संसारित्वं क्षेत्रज्ञस्येति पूर्वोक्तं परिहृतं च दोषं पुनरुत्थाप्य परिहरति स्थूणानिखननन्यायेन दोषपरिहारदृढीकारार्थं—नन्विति, तत्कृतमिति । अविद्यावत्त्वप्रयुक्तमविद्याकृतमिति यावत् । प्रत्यक्षमुपलभ्यते सर्वैरनुभूयत इत्यर्थः । परिहरति—नेति । हेतुमाह—ज्ञेयस्येति । ज्ञेयस्याविद्यावत्त्वस्य क्षेत्रधर्मत्वात् । अविद्या कस्यचित्करणस्यैव धर्म इति पूर्वमुक्तं करणस्य क्षेत्रत्वान्न तेनास्य व्याघातः । ननु ज्ञेयधर्मेणाप्यविद्यया ज्ञातुर्दोषस्स्यादत आह—ज्ञातुरिति । तत्कृतेति । ज्ञेयधर्माविद्याकृतेत्यर्थः । ज्ञेयघटधर्मो जाड्यादिर्न हि ज्ञातुः कमपि दोषमापादयन् दृष्ट इति भावः । दोष इत्युपलक्षणं गुणस्यापि । भाष्ये दोषशब्दस्तु संसाररूपदोषपर एव । ननु मास्तु संसारित्वदोषः क्षेत्रज्ञस्य, किंचिद्ज्ञत्वादिदोषस्त्वपरिहार्योऽत आह—यावदिति । यावत्किंचिदिति यत्किंचिदित्यर्थः । दोषजातं दोषगणं, आसञ्जयसि आ समन्तात्सङ्गतं करिष्यसि; सम्भावयसीति यावत् । तस्य सर्वस्यापि दोषजातस्य ज्ञेयत्वोपपत्तेः; ज्ञेयत्वादित्यर्थः । क्षेत्रधर्मत्वमेव । अत्र दोषशब्दो गुणस्याप्युपलक्षणं—गुणदोषशून्यत्वादात्मनः । 'अपदोषतैव विगुणस्य गुणः' इति माघोप्याह । यद्वा गुणा अपीह दोषत्वेनैव व्यपदिश्यन्ते- गुणानामपि संसारहेतुत्वेन दोषत्वात् । एवकारार्थमाह—न क्षेत्रज्ञधर्मत्वमिति । यो यो धर्मस्साक्षिणा क्षेत्रज्ञेन ज्ञायते स सर्वोपि क्षेत्रधर्म एव । अत एव निर्धर्मकस्साक्षीति सिद्धान्त इति भावः ।

ननु भवतु क्षेत्रधर्म एवाविद्या, तथापि तेन क्षेत्रधर्मेण क्षेत्रज्ञस्य भवतु संसारित्वदोषः, यथाऽग्निधर्मेणौष्ण्येन लोहस्य तापकत्वदोषोऽत आह—नचेति । तेन क्षेत्रधर्मेणाविद्ययेति यावत् । क्षेत्रज्ञो न दुष्यति दोषं न प्रतिपद्यते । हेतुमाह—ज्ञेयेनेति । अग्निलोहयोस्तु ज्ञेयत्वादुभयोस्संसर्गोऽस्तु, क्षेत्रक्षेत्रज्ञयोस्तु ज्ञेयज्ञात्रोस्संसर्गो नोपपद्यत इत्यर्थः । उपपद्यत एवेति वदन्तं प्रत्याह—

स्स्यात् ज्ञेयत्वमेव नोपपद्येत। यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखित्वादि च कथं भोः! प्रत्यक्षमुपलभ्यते कथं वा क्षेत्रज्ञधर्मः 'ज्ञेयं च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ' इत्यवधारिते 'अविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्व'मिति विरुद्धमुच्यते अविद्यामात्रावष्टम्भात्केवलम्।

---

यदि हीति। ज्ञातृज्ञेययोस्संसर्गस्स्याच्चेत्तर्हि ज्ञातुर्ज्ञातृत्वमेव नोपपद्यते। अग्निसंसर्गाल्लोहस्याग्न्यात्मत्वमिव ज्ञेयसंसर्गाद्ज्ञातुर्ज्ञेयात्मत्वप्राप्तौ कथं ज्ञातृत्वं तस्य स्यान्न कथमपीति भावः। एवं यो यो धर्मो ज्ञात्रा ज्ञायते स सर्वोऽपि ज्ञेयस्य धर्म एवेति स्थिते आह—यदीति। अविद्यावत्त्वं दुःखित्वादि च यद्यात्मनो धर्मस्तर्हि कथं भोः! कथं वा भोः! इति पूर्वपक्षिसम्बोधनं वा। प्रत्यक्षमुपलभ्यते ज्ञायते अविद्यावत्त्वं दुःखित्वं च कर्म। ज्ञेयं च तत्सर्वमविद्यावत्त्वादिकं कथं वा क्षेत्रज्ञधर्मस्स्यान्न कथमपीत्यर्थः। ज्ञेयस्य क्षेत्रज्ञधर्मत्वं, क्षेत्रज्ञधर्मस्य च ज्ञेयत्वमित्युभयं विरुद्धमेवेति भावः।

इदमेवाह—क्षेत्रेति। क्षेत्रज्ञातैव क्षेत्रज्ञः, नतु क्षेत्रमित्येवकारार्थः। एवमवधारिते सति अविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं, तस्य च क्षेत्रज्ञविशेषणस्य प्रत्यक्षोपलभ्यत्वमिति च विरुद्धमिदमविद्यामात्रावष्टम्भात्केवलमुच्यते। क्षेत्रज्ञस्य दुःखित्वादि प्रत्यक्षमुपलभ्यत इति ह्युक्तं पूर्वपक्षिणेति भावः। क्षेत्रज्ञविशेषणत्वमिति पदं स्वयमेव व्याख्याति—क्षेत्रज्ञधर्मत्वमिति। एवं विरुद्धार्थकथने हेतुरविद्यावष्टम्भमात्रमेव। अविद्या चेयं मायैव। नतु पूर्वोक्ततामसप्रत्ययः। माया च मूलाज्ञानम्। अवष्टम्भो नामावलम्बनम्।

नच क्षेत्रधर्मवत्क्षेत्रज्ञधर्मोऽपि क्षेत्रज्ञेन ज्ञायत एव, अन्यथा ज्ञानानन्दादिक्षेत्रज्ञधर्माणामभावापत्तेरिति वाच्यं, 'सच्चिदानन्दं ब्रह्म' इति श्रुत्या ज्ञानानन्दसद्रूपे क्षेत्रज्ञे ज्ञानानन्दादिधर्मायोगात्। ज्ञानानन्दादिरात्मनः स्वरूपमेव। अत एव निर्धर्मक आत्मेति सिद्धान्तः। नच ज्ञात्रानुभूयमानस्यानन्दस्य न ज्ञातृस्वरूपत्वमिति वाच्यं, अहमानन्दमनुभवामीति त्रिपुट्या अदर्शनात्। नहि सुषुप्तिमूर्छादौ त्रिपुटी दृश्यते, किंतु केवलमनुभव एव- तस्यैवानन्दरूपत्वात्सत्यत्वाच्च। अहं सुखमनुभवामीति तु अन्तःकरणधर्मस्य सुखस्यैवानुभवः, न त्वात्मानन्दस्य। तस्मादनुभव एवानन्दस्सन् च। स एव क्षेत्रज्ञः। नहि केवलेऽनुभवे यः कोऽपि धर्मोऽस्ति, येन क्षेत्रज्ञस्सधर्मकः स्यात्। तस्माद्ज्ञातुरात्मनस्स्वस्वरूपमेव ज्ञानमानन्दश्च नतु गुण इति सिद्धान्तः। एवं सति ज्ञानानन्दादेस्साक्षिरूपत्वेन स्वत एव भानमुपपद्यते। नच ज्ञानादीनामात्मधर्मत्वव्यवहारविरोध इति वाच्यं, आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः। अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति वचनात्पृथगवभासप्रयुक्तत्वाद्व्यवहारस्य।

ननु सच्चिदानन्दानामात्मस्वरूपत्वमस्तुनाम, सर्वान्तरत्वसर्वनियामकत्वसर्वशेषित्वसर्वाधारत्वापहतपाप्मत्वादयो धर्मा आत्मनस्सन्ति वा न वा? आद्ये- ते धर्माः किमात्मना वेद्यन्ते उतान्येन? नात्मना- ज्ञातृधर्माणां ज्ञातृवेद्यत्वानुपपत्तेस्त्वयैवोक्तत्वात्। नान्येन- आत्मान्यस्य सर्वस्यापि जडत्वात्।

अत्राह—साऽविद्या कस्येति । यस्य दृश्यते तस्यैव । कस्य दृश्यत इत्यत्रोच्यते—'अविद्या कस्य दृश्यते' इति प्रश्नो निरर्थकः । कथम् ? दृश्यते चेदविद्या तद्वन्तमपि पश्यसि । न च तद्वत्युपलभ्यमाने 'सा कस्य ?' इति प्रश्नो युक्तः । न हि गोमत्युपलभ्य-

---

द्वितीये- 'एको देव' इत्यादिश्रुतिविरोधः—तत्र सर्वान्तरत्वादिधर्माणामुक्तत्वात्, अनुभवविरोधश्चेति चेत्, मैवम्—यदि सर्वं सत्यं स्यात्तर्हि सर्वान्तरत्वादिधर्मा आत्मनस्सत्यास्स्युः; ननु सर्वस्य सत्यत्वं- 'तत्सत्यमतोऽन्यदार्त'मिति श्रुत्या ब्रह्मण एकस्यैव सत्यत्वात्तदन्यस्य सर्वस्यापि मिथ्यात्वात् । तस्मादविद्ययाऽऽत्मनि कल्पिता एव सर्वान्तरत्वादिधर्मास्सर्वप्रपञ्चवत् । तथा तद्धर्माणां साक्षिभास्यत्वं च कल्पितमेवेति ज्ञातृधर्माणां ज्ञातृवेद्यत्वं, न वा ज्ञातृवेद्यानां ज्ञातृधर्मत्वम् । नचैवं ज्ञेयस्य तद्धर्माणां तस्य तेषां ज्ञातृवेद्यत्वस्यापि मायया कल्पितत्वमेवेति वाच्यं, इष्टापत्तेः ।

ननु सेयमविद्या किमात्मसम्बन्धिनी, उतानात्मसम्बन्धिनी ? नाद्यः- असङ्गस्वप्रकाशस्यात्मनोऽविद्यासम्बन्धायोगात् । नान्त्यः- अनात्मनो जडस्याज्ञानाश्रयत्वायोगात् । नच स्वतन्त्रैवेति वाच्यं, जडत्वेन पारतन्त्र्यादित्यभिप्रेत्याविद्याया आश्रयजिज्ञासया पृच्छति—अत्रेति । नच करणधर्मोऽविद्येति पूर्वमुक्तमिति वाच्यं, तामसप्रत्ययरूपाविद्यायाः करणधर्मत्वस्य तत्रोक्तत्वान्मायारूपाविद्याया आश्रयस्य पृष्टत्वादिहेति । अत्रास्मिन्नंशे आह पूर्ववादीति शेषः । किमाहेत्यत आह—सेति । सा यदवष्टम्भात्केवलं विरुद्धमुच्यते सा अविद्या अनाद्यनिर्वाच्यं मायानामकं मूलाज्ञानम् । कस्येति सम्बन्धसामान्ये शेषषष्ठी । कस्य सम्बन्धिनीत्यर्थः । किमाश्रयेति यावत् ।

अथ सिद्धान्ती—किं त्वयाऽविद्याया आश्रयमात्रं पृच्छ्यते ? उत तद्विशेष इति विकल्प्य प्रथमे प्रश्नस्यानवकाशं मत्वाऽऽह—यस्येति । यस्याविद्या दृश्यते तस्यैव । यस्येति तस्येति च शेषषष्ठ्यौ । अविद्या यदाश्रयत्वेन दृश्यते स एवाविद्याया आश्रय इत्यर्थः । अयं भावः—किमविद्या दृश्या उताऽदृश्या ? दृश्यत्वेऽविद्यायाः पारतन्त्र्यात्किञ्चिन्निष्ठत्वेनैव तद्दर्शनादाश्रयमात्रं प्रष्टव्यमदृश्यत्वे त्वविद्याया अप्रकाशत्वादसिद्धिरेव स्यादिति ।

ननु मया अविद्याया आश्रयविशेषः पृच्छ्यते इत्याह पूर्ववादी—कस्येति । किमाश्रयाऽविद्या दृश्यत इत्यर्थः । अविद्याया आश्रयविशेषः क इति यावत् । अविद्याया दृश्यमानत्वादाश्रयविशेषस्यात्मनोऽपि स्वानुभवसिद्धत्वात्प्रश्नस्यानवकाशत्वमित्युत्तरमाह सिद्धान्ती—अत्रेति । अत्रास्मिन् प्रश्ने उच्यते उत्तरं मयेति शेषः । किमुच्यतेऽत आह—अविद्येति । कस्याविद्येति सम्बन्धः । किमाश्रया अविद्येत्यर्थः । कस्मात्प्रश्नो निरर्थक इति पृच्छति पूर्ववादी—कथमिति । प्रश्नानर्थक्यं स्फुटयति सिद्धान्ती—दृश्यत इति । त्वयेति शेषः । अविद्या दृश्यते चेत्तर्हीति शेषः । तद्वन्तमविद्यावन्तमपि पश्यसि जानासि । साश्रयस्य हि वस्तुनो दर्शनमाश्रयदर्शनं विना न सम्भवतीति कृत्वा कथं तवाविद्याश्रयवस्तुदर्शनं विनाऽविद्यादर्शनं जातमित्यर्थः । तथापि कथं प्रश्नवैयर्थ्यमत आह—नचेति । तद्वतीति अविद्यावतीत्यर्थः । सेति । अविद्येत्यर्थः । अविद्याया अविद्यावतश्च दर्शने

माने 'गावः कस्य ?' इति प्रश्नोऽर्थवान् भवति। ननु विषमो दृष्टान्तः-- गवां तद्वतः प्रत्यक्षत्वात्तत्सम्बन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः, न तथाऽविद्या तद्वांश्च प्रत्यक्षौ यतः प्रश्नो निरर्थकस्स्यात्, अप्रत्यक्षेणाविद्यावताऽविद्यासम्बन्धे ज्ञाते किं तव स्यात् अविद्याया अनर्थहेतुत्वात्परिहर्तव्या स्यात्। यस्याविद्या, स तां परिहरिष्यति। ननु मै वाविद्या। जानासि तर्ह्यविद्यां तद्वन्तं चात्मानम्। जानामि, नतु प्रत्यक्षेण। अनुमाने चेज्जानासि कथं सम्बन्धग्रहणम् ? नहि तव ज्ञातुः ज्ञेयभूतयाऽविद्यया तत्काले सम्बन्ध

---

सत्यविद्या कस्येतिप्रश्नो न युज्यत इति यावत्। तत्र दृष्टान्तमाह—नहीति। गावोऽस्य सन्तीति गोमान्, तस्मिन् गोमति पुरुषे गवां तद्वतश्च दर्शने सत्येव गोमान् 'देवदत्तो मया दृष्ट इति प्रत्ये विष्णुमित्रः, नतु तत्प्रत्ययानन्तरं कस्य गाव इति पृच्छति। विदितार्थे प्रश्नानवकाशादिति भावः ननु गाव इव गोमानिव चाविद्या तद्वांश्च न मया प्रत्यक्षेण दृश्येते, येन प्रश्नो निरर्थकः स्यात् किंतु अप्रत्यक्षेणैवेति कृत्वा न मम प्रश्नस्यानर्थक्यमित्याह पूर्ववादी—नन्विति। अविद्यायाः प्रत्य क्षत्वाभ्युपगमेऽविद्यावतोऽपि प्रत्यक्षत्वमभ्युपगन्तव्यं स्यादिति कृत्वा उभावपि न प्रत्यक्षावित्युक्तम् अविद्यावतः परोक्षत्वेऽपि प्रश्नो व्यर्थ एवेत्याह सिद्धान्ती—अप्रत्यक्षेणेति। अप्रत्यक्षेणाविद्याव सहाविद्यासम्बन्धे ज्ञाते सिद्धे सति तव किं समाधानं स्यान्न किमपि। अविद्यावतोऽप्रत्यक्षत्वेऽ तेनाऽविद्यासम्बन्धे सिद्धे प्रष्टुस्तव प्रश्नानर्थक्यसमाधानं न किमप्यस्तीत्यर्थः। अविद्यया सम्बन्ध कश्चिदस्तीति परोक्षज्ञाने सत्यपि कस्याविद्येति प्रश्नो निष्फल एवेति भावः। ननु दुष्टाविद्यापरि हारार्थत्वेन प्रश्नस्सफल एवेत्याह पूर्ववादी—अविद्याया इति। अनर्थश्शोकमोहादिलक्षणस्संसारः परिहर्तव्येति। अविद्येति कर्तृपदशेषः। ननु य एवाविद्यावान् स एव स्वानर्थहेतुमविद्यां परिहरिष्य तीति कृत्वा किं तवाविद्याश्रयविशेषजिज्ञासाप्रयुक्तप्रश्नेन फलमित्याह सिद्धान्ती—यस्येति। त्वत् परोक्षेण ज्ञातेयमविद्या यस्य सम्बन्धिनी स एवैनां परिहरिष्यतीति किं तवान्यदीयाविद्यापरिहारेण भावः। ननु नाहमन्यदीयाविद्यापरिहारार्थं पृच्छामि, किंतु मदीयाविद्यापरिहारार्थमेवेत्याह—नन्विति ननु यदि त्वदीयैवाविद्या त्वया परिजिहीर्षिता तर्हि त्वमविद्यां तद्वन्तंचात्मानं जानास्येवेति कस्याऽविद्ये प्रश्नो व्यर्थ एवेत्याह सिद्धान्ती—जानासीति। ननु यद्यहं गोमन्तं देवदत्तमिवाऽविद्यावन्तमात्मा प्रत्यक्षेण जानामि तर्हि व्यर्थ एव स्यात्प्रश्नः, नतु तथा जानामि; किंत्वहमविद्यावानविद्याकार्यशोकमोहादि मत्त्वाद्व्यतिरेकेण मुक्तात्मवदित्यनुमानेन जानामि; तस्मान्न प्रश्नानर्थक्यमित्याह पूर्ववादी—जानामीति जानामि परोक्षेणेति शेषः। प्रत्यक्षेण तु न जानामीत्यन्वयः। अविद्यायास्तद्वतो मम चाऽप्रत्यक्षत्व त्पारोक्ष्येण तदुभयं विदित्वा कस्याऽविद्येति पृच्छामीति भावः। नन्वनुमानेन चेत्त्वमविद्यां तद्वन्तं जानासि तर्हि तव कथं स्वस्याऽविद्यायाश्च वर्तमानस्य सम्बन्धस्य ग्रहणमित्याक्षिपति—अनुमानेनेति नन्वनुमानेनैव सम्बन्धोपि गृह्यतां; का तत्रानुपपत्तिरत आह सिद्धान्ती—नहीति। तत्काल इति यस्मिन्कालेऽविद्यां जानासि तस्मिन्काल इत्यर्थः। आत्माऽविद्याग्रहणसमयेऽविद्यासम्बन्धं गृहीतुं

ग्रहीतुं शक्यते, अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात् । नच ज्ञातुरविद्यायाश्च सम्बन्धस्य यो ग्रहीता ज्ञानं चान्यत्तद्विषयं सम्भवति, अनवस्थाप्राप्तेः । यदि ज्ञातापि ज्ञेयसम्बन्धो ज्ञायते अन्यो ज्ञाता कल्प्यः स्यात् , तस्याप्यन्यः तस्याप्यन्य इत्यनवस्था अपरिहार्या । यदि पुनरविद्या ज्ञेया अन्यद्वा ज्ञेयं ज्ञेयमेव, तथा ज्ञातापि ज्ञातैव, न ज्ञेयं भवति । यदा

---

शक्नोतीत्यत्र को हेतुरित्यत्राह—अविद्याया इति । अविद्यां विषयत्वेनैव गृहीत्वा तद्ज्ञातृत्वेनैवोपयुक्तस्यात्मनो न सम्बन्धज्ञातृत्वसम्भव इत्यर्थः । ननु योऽविद्यां गृह्णाति तस्य ज्ञातुरात्मनोऽन्य एव ज्ञाता आत्माविद्यासम्बन्धं गृह्णातु को दोषस्तत्राह—नचेति । ज्ञातुरात्मनोऽविद्यायाश्च यस्सम्बन्धस्तस्य यो ग्रहीता स न सम्भवति; तद्विषयमविद्यात्मसम्बन्धविषयमन्यच्च ज्ञानं न सम्भवति । असम्भवे हेतुमाह—अनवस्थाप्राप्तेरिति । अनवस्थामेव दर्शयति—यदीति । ज्ञेयेन सम्बन्धो यस्य स ज्ञेयसम्बन्धो ज्ञातापि । यद्वा ज्ञाता ज्ञेयसम्बन्धश्चेत्यर्थः । ज्ञायेत यदि तर्ह्यस्य ज्ञानायान्यो ज्ञाता कल्प्यः स्यात् , अन्यं ज्ञातारं विना प्रकृतज्ञातुः ज्ञेयत्वायोगात् । स चान्यो ज्ञाता केनचिदपरेण ज्ञायेतैव प्रकृतज्ञातृवदिति कृत्वा अन्यज्ञातृज्ञानायापरो ज्ञाता कल्प्यः; स चान्यो ज्ञाता केनचिदितरेण ज्ञात्रा ज्ञायेतैव ज्ञातृत्वांशेऽविशेषात्प्रकृतान्ययोरस्य चेत्येतस्यापरस्य ज्ञातुः ज्ञानार्थमितरो ज्ञाता कल्प्य इत्यनवस्थाऽपरिहार्या स्यात् ।

नन्वेवं ज्ञातुरात्मनो ज्ञेयत्ववचने भवत्यनवस्थादोष इति ज्ञातुः ज्ञेयत्वं मा भून्नाम, अविद्यात्मसम्बन्धस्य ज्ञेयत्वे काऽनुपपत्तिरिति चेत् , मैवम्—ज्ञातुरात्मनो ज्ञेयत्वं विना तन्निष्ठाविद्यासम्बन्धस्य ज्ञेयत्वायोगात् । आत्माविद्योभयपदार्थज्ञानाधीनं ह्यात्माविद्यासम्बन्धज्ञानमिति । अत एव ज्ञातुरात्मनः कर्मकर्तृत्वविरोधादपि नाविद्यात्मसम्बन्धस्य ज्ञेयत्वमित्यभियुक्ताः ।

ननु अविद्यावत आत्मनोऽनुमानवेद्यत्वं यथा दुष्टं तथा प्रत्यक्षवेद्यत्वमपि दुष्टमेवेति कृत्वाऽनुमानेन चेज्जानासि कथं सम्बन्धग्रहणमित्याचार्यैः कुतो भाषितमिति चेदुच्यते—स्वप्रकाशस्यात्मनः नित्यापरोक्षचैतन्यरूपत्वान्नास्यात्मनः प्रत्यक्षत्वे कापि विप्रतिपत्तिः- 'यत्साक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः, आत्मप्रत्यक्षस्य सार्वजनीनत्वाच्च । नहि कोऽपि ममाहमप्रत्यक्ष इति मन्यते । नचैतावन्मात्रेण ज्ञातुर्ज्ञेयत्वसम्भवः- प्रमाणव्यापारप्रयुक्तत्वाद्ज्ञेयत्वस्य । तथाहि चक्षुरादीन्द्रियव्यापारानन्तरं घटसुखादिप्रत्यक्षसम्भवाद्घटादेः ज्ञेयत्वमात्मा तु प्रमाणव्यापारात्प्रागेवास्तीति भातीति च कथं तस्य ज्ञेयत्वं ? न कथमपीति ।

एवमात्मनः प्रत्यक्षत्वेनाज्ञेयत्वे सिद्धे' अविद्यायाश्च न जानामीत्यनुभवबलेन प्रत्यक्षत्वे सिद्धे तत्सम्बन्धोऽपि प्रत्यक्ष एवेति कृत्वा नास्त्यविद्यावत आमनः प्रत्यक्षत्वे कोऽपि दोष इति । ननु यद्येवं ज्ञातुर्ज्ञेयत्ववचनेऽनवस्थादोषस्तर्हि ज्ञातुर्ज्ञेयत्वं मास्त्वित्याह—यदीति । आत्मातिरिक्तं सर्वमप्यविद्यादिकं वस्तु- जडत्वाद्ज्ञेयमेव न ज्ञातृ । आत्मैक एव चेतन-

चैवमविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचिद्दुष्यति ।

नन्वयमेव दोषः-- यद्दोषवत्क्षेत्रविज्ञातृत्वं, न विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञा

---

त्वात् ज्ञातैव न ज्ञेय इत्यर्थः । ननु आत्मा ज्ञातैव भवतु, अविद्या ज्ञेयैव भवतु किमेता
स्वप्रकाशासङ्गचिद्रूपस्य परमात्मनः कथमविद्यासङ्ग इत्यत्र समाधानमायातमित्यत आह—यदेति
यदा चैवमात्मा ज्ञातैव न ज्ञेयः, अविद्यादिकं ज्ञेयमेव न ज्ञातृ इति नियमस्सिद्धस्तदेति ज्ञे
किंचिदपि न दुष्यतीति । न कोपि दोष इत्यर्थः । आत्मन्यविद्यासम्बन्धस्याप्रामाणिकत्वादिति भा

अत्रेदमाकूतम्---स्फीतालोकवति सूर्ये पेचकानुभवसिद्धान्धकारवदसङ्गस्वप्रकाशेऽप्यात्मन्य
जनानुभवसिद्धमस्ति किञ्चिदज्ञानमप्रामाणिकं मिथ्याभूतमनिर्वाच्यम् । सूर्ये पेचकानुभवसिद्धं त
इवात्मन्यज्ञानुभवसिद्धमज्ञानमपि कालत्रयेऽपि नास्तीति कृत्वा कथमात्मन्यविद्यासम्बन्ध इति प्र
व्यर्थ एव । नहि वयमात्मन्यविद्यासम्बन्धं सत्यं ब्रूमः; अज्ञदृष्ट्या त्वात्मन्यविद्यासम्बन्धोऽस्त्येव कि
न्मिथ्याभूतोऽप्रामाणिकः- अहमज्ञ इति तदनुभवस्य दुरपलापत्वात् । इदं चाज्ञानुभवसिद्धमात्मा
मज्ञानं नातीव विचारणीयमविचारसिद्धत्वादस्येन्द्रजालादिवत् । एवमज्ञानस्यैवाविचारसिद्धत्वे कथं पु
स्तस्यात्मनि सम्बन्धस्य विचारक्षमत्वं स्यात् ? न कथमपि । तस्मादात्मन्यविद्यासम्बन्धो दुर्निरू
एवमात्मन्यविद्यासम्बन्धस्यैव दुर्निरूपत्वे कथं पुनरविद्याकार्यदुःखादिसम्बन्धस्य सुनिरूपत्वं स्यात्?
कथमपि । तस्मादसङ्गस्वप्रकाशचिद्रूप एवात्मा, न त्वविद्यादुःखादिसम्बद्धः ।

नचाज्ञोऽहं दुःख्यहमित्यादिप्रत्यक्षसिद्धस्य कथमज्ञानदुःखादिसम्बन्धस्यात्मन्यपलाप इति वा
प्रत्यक्षसिद्धस्यापि प्रमाणविरुद्धस्यार्थस्य रज्जुसर्पादेरिवापलापस्य सुशकत्वात्कर्तुम् । आत्मन्यज्ञाना
सम्बन्धस्याप्रमाणिकत्वं तु दर्शितमेवाचार्यैः । तदेव पुनरपि सुखबोधाय दर्शयामि- आत्मनानुभूय
इमेऽज्ञानदुःखादयः किमात्मधर्माः ? उतानात्मधर्माः ? नाद्यः- आत्मधर्माणामात्मनानुभूयमानत्वायोगा
आत्मधर्मानुभवितुरात्मान्तरस्य चाभावात्, सत्त्वे चानवस्थादोषात्, 'नान्योऽतोस्ति द्रष्टा' ।
श्रुतिविरोधाच्च । अतः परिशेषादनात्मनोऽन्तःकरणादेरेव धर्माः । तेषां चानात्मधर्माणां कथमात्म
सम्बन्धः ? नहि घटधर्माणां कम्बुग्रीवादीनां द्रष्टर्यात्मनि सम्बन्धः । नचान्तःकरणस्याज्ञाना
कथमचेतनस्येति वाच्यं, आत्मप्रतिबिम्बग्रहणेन तस्य सचेतनत्वात् । अमी चानात्मधर्मा अनादिमा
स्वात्मन्यध्यस्ता रज्जौ सर्पवदिति हेतोः प्रत्येति लोकोऽहमज्ञो दुःखी चेति । अमीभिश्चाध्यस्तैर
दुःखित्वाद्यैरात्मनो न कोऽपि दोषः । यथा बालेनाध्यस्तैस्तलमलिनत्वाद्यैर्गगनस्य न कोऽपि
तद्वदिति । आत्मनानुभूयमाना चेयमनादिमाया नात्मधर्मः स्वानुभूतस्य स्वधर्मत्वायोगात् । नाप्यना
धर्मः- मायाकार्यत्वादनात्मनः । तस्मादनिर्वाच्यैव धर्मत्वेन धर्मित्वेन वा मायेति ।

ननु क्षेत्रज्ञस्यानात्मनोऽविद्यादुःखित्वादिभिरनात्मधर्मैर्मास्तु नाम कोऽपि दोषः, तैस्सह सं
भावात् । तथाप्यस्त्येव कश्चिद्दोष इत्याह पूर्ववादी—ननु इति । क्षेत्रं जानातीति क्षेत्रज्ञ

त्वोपचाराद्यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारः, तद्वत्। यथाऽत्र भगवता क्रियाकारक-

---

व्युत्पत्तेः। आत्मनः क्षेत्रज्ञत्वात् क्षेत्रस्य चान्तःकरणशरीरादिलक्षणस्य दुःखजरादिदोषयुक्तत्वाद्दोषयुक्त-क्षेत्रदर्शनमात्मनो दोष एव- दुष्टभार्यापुत्रादिदर्शनवत्। क्षेत्रज्ञस्य क्षेत्रे स्वीयाभिमानसत्त्वादिति भावः। परिहरति सिद्धान्ती—नेति। आत्मनः क्षेत्रज्ञत्वलक्षणं ज्ञातृत्वमपि न तात्त्विकमविक्रियस्यात्मनो ज्ञातृत्वायोगात्। ज्ञातृत्वं हि विकारः। किंतु ज्ञानस्वरूप एवात्मा- 'सत्यं ज्ञान'मिति श्रुतेः।

ननु ज्ञानस्यापि कथमविक्रियत्वम्? घटज्ञानं पटज्ञानमित्यादिभेदरूपविकारदर्शनादितिचेत्, मैवम्—घटादिविषयाणामेव तत्र भेदः, नतु ज्ञानस्य। सर्वदाप्येकरूपैव हि संवित्। या स्वय-म्प्रभत्वादात्मानमन्यांश्चावभासयति सूर्यादिप्रकाशवत्। नहि घटप्रकाशकुड्यप्रकाशकुसूलप्रकाशादिषु घटादिभेदेपि प्रकाशभेदः- सर्वत्र प्रकाशस्यैकरूपत्वात्। नच घटज्ञानादयो वृत्तय इति वाच्यं, वृत्तीनां जडत्वेन ज्ञानत्वाभावात्। वृत्तिप्रतिफलितचैतन्यस्य ज्ञानत्वेन वृत्तीनां ज्ञानत्वोपचारात्। तस्मादयं घट इत्यादिजन्यज्ञानहेतुभूतबुद्धिवृत्तिष्वनुगतं घटादीनां भेदेऽपि स्वयमभिन्नमत एवाविकारि यद्ज्ञानं तदेवात्मेति नं ज्ञानस्वरूपस्यात्मनः कोऽपि विकारः। नहि कामिनीकुचादिकं पश्यतः पुरुषस्य चित्त-क्षोभादिविकारे सत्यपि कामिनीकुचादिज्ञानस्य कोऽपि विकारः। तस्माद्ज्ञानस्वरूपस्याविक्रियस्यात्मन औपचारिकमेव ज्ञातृत्वं, न वास्तवमिति न तस्य ज्ञातृत्वप्रयुक्तदोषः।

ननु कथं ज्ञानस्य ज्ञातृत्वोपचारोऽत्र आह दृष्टान्तम्—यथेति। अग्नेरुष्णतामात्रेण यथा तापक्रियोपचारः, अग्निः केवलमुष्ण एव, नतु तापक्रियाकर्ता। कर्तृत्वस्य चेतनधर्मत्वात्। नह्यचेतनं वस्तु क्वापि किमपि कर्म कुर्वद्दृश्यते। अग्नेरचेतनत्वं च प्रत्यक्षम्। अतो नाग्निस्तापकः। एव-मतापकत्वेऽप्यग्निर्दहतीति तापक्रियाकर्तृत्वमग्नावुपचर्यते- उष्णत्वात्। तस्मादुष्णत्वमात्रेण यथाऽचेत-नस्य तापकत्वरूपचेतनधर्मोपचारः- अग्निर्दहतीति तद्वत्। प्रकाशकत्वमात्रेण ज्ञानस्वरूपस्य क्षेत्रज्ञस्य ज्ञातृत्वोपचारः- क्षेत्रज्ञः क्षेत्रं जानातीति। एतेन क्षेत्रज्ञेश्वरस्य सर्वावभासकत्वलक्षणं सर्वज्ञत्वमिति सूचितम्। नच कथमेतत्क्षेत्रवर्तिनः क्षेत्रज्ञस्य सर्वावभासकत्वं सर्वस्यासन्निहितत्वादिति वाच्यं, य एवैतत्क्षेत्रे वर्तते स एव सर्वक्षेत्रेष्वपि- 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!' इत्युक्त-त्वात्। तथा च सर्वक्षेत्रवर्तिनस्सर्वव्यापिनोऽस्य सर्वमपि सन्निहितमेवेति। सर्वावभासकत्वात्सर्वज्ञ एव क्षेत्रज्ञ ईश्वरः, नतु किंञ्चिद्ज्ञो जीवः। नच क्षेत्रज्ञस्सर्वमवभासयन् सन् प्रत्यक्षो न भवतीति वाच्यं, अवभासयन् सन्नपि क्षेत्रज्ञः किं तव प्रत्यक्षः? नाहं क्षेत्रज्ञं जानामीति तव प्रतीतेः। अत एव ह्यज्ञानवान् भवान्। यदि तव क्षेत्रज्ञप्रत्यक्षं, तर्हि विद्वानेव भवेत्। नच जानाम्यहं क्षेत्रज्ञमिति वाच्यं, किं गुरुशास्त्रोक्त्या परोक्षेण जानासि? यद्वा अपरोक्षेण? आद्ये- तयैव सर्वज्ञमपि विद्धि। द्वितीये- क्षेत्रज्ञसाक्षात्कारवतस्तव। "सर्वमहं न जानामीति कथमज्ञानसद्भावः? क्षेत्रज्ञसाक्षात्कारेण सकार्यस्य सर्वस्याप्यज्ञानस्य नष्टव्यत्वात्, सूर्यसाक्षात्कारेण तिमिरस्येव। तस्मात्क्षेत्रज्ञप्रत्यक्षं विना

फलात्मत्वाभाव आत्मनि स्वत एव दर्शितः—अविद्याध्यारोपित एव क्रियाकारकादिरात्मन्युपचर्यते; तथा तत्रतत्र 'य एनं वेत्ति हन्तारं', 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि

---

क्षेत्रज्ञधर्माणां सर्वज्ञत्वसर्वान्तर्यामित्वादीनां प्रत्यक्षं नैव भवेत्तत्संशयो वा नैव निवर्तेतेति कुरु श्रवणमननादिकं क्षेत्रज्ञप्रत्यक्षार्थित्वं चेत्तव। श्रवणादावशक्तश्चेन्निर्विकल्पसमाधिं कुरु। तत्राप्यशक्तश्चेत्सविकल्पसमाधिं कुरु। तत्राप्यशक्तश्चेत्कर्मयोगमनुतिष्ठ। ननु क्षेत्रज्ञोऽसंसारीश्वरस्सर्वज्ञ इति भगवदुक्तार्थे संशयमकार्षीः। 'संशयात्मा विनश्यति' इति संशयात्मनस्संसारनरकादिलक्षणविनाशसम्भवात्। तस्मादास्तिकैस्सर्वैरपीश्वरवचनस्य ग्राह्यत्वादसंसारिसर्वज्ञेश्वर एव क्षेत्रज्ञः। तथैव विदुषामनुभवश्चेति संक्षेपः।

ननु भगवता नायमर्थो दर्शित इत्यत्राह—यथाऽत्रेत्यादि। अत्रास्मिन्श्लोके अस्मिन्नध्याये वा अविद्याध्यारोपितमेव क्रियाकारकादि आत्मन्युचर्यते। स्वतस्तु आत्मनि क्रियाकारकफलात्मत्वाभाव एवेति भगवता यथाऽत्र दर्शितं तथा तत्रतत्र भगवता दर्शितमित्यन्वयः। आत्मनि क्रियाकारकफलात्मत्वमौपचारिकमेवाविद्याध्यारोपितत्वं, नतु वास्तवं- स्वतोऽभावात्। यद्धि स्वाभाविकं तद्वास्तवमिति, यदागन्तुकं तद्दोषादिजन्यत्वादवास्तवमिति हि प्रसिद्धम्। रज्जौ स्वाभाविकरज्जुत्वस्य वास्तवत्वदर्शनादागन्तुकसर्पत्वस्य मिथ्यात्वदर्शनाच्च। तस्मादात्मनि क्रियाकारकफलात्मत्वं मिथ्यैवेत्ययमर्थः कारुणिकेन भगवता बहुषु प्रदेशेषु प्रकृतस्थलवद्दर्शित एवेत्यर्थः। एतेन एतच्छ्लोकस्यापार्थकल्पने तत्तत्प्रकरणविरोध इति बहुप्रकरणसंवादित्वादस्य श्लोकस्यायमेवार्थस्समीचीन इति च ज्ञायते।

क्रियाकारकफलात्मत्वाभाव इति। क्रियाया देहाश्रयत्वात्क्रियाशब्देन देहो लक्ष्यते, कारकाणि करणानि मन इन्द्रियाणि, फलं विषयश्शब्दादिः- तस्यैव भोग्यत्वेन फलत्वात्, स्वर्गादावपि तेषामेव शब्दादीनामनुभवात्। नहि विषयपञ्चकातिरिक्तं किंचिद्भोग्यमस्ति जगति। तानि क्रियाकारकफलानि आत्मा स्वरूपं यस्य तस्य भावः क्रियाकारकफलात्मत्वं, तस्याभावस्तथोक्तः। आत्मा न कार्यकरणसङ्घातरूपः, किंतु सच्चिदानन्दरूप एव- सच्चिदानन्दानामेवात्मनः स्वाभाविकत्वात्। क्रियाकारकफलानि त्वविद्यया आत्मन्यध्यस्तानि- रज्जौ सर्पवत्। अधिष्ठानस्याध्यस्तात्मत्वं तु क्वापि सत्यत्वेन न दृष्टं- रज्जोस्सर्पात्मत्वस्य सत्यत्वेनादर्शनात्। तस्मादधिष्ठानस्यात्मनोऽध्यस्तक्रियाकारकफलात्मत्वं कल्पितत्वेन मिथ्यात्वादौपचारिकमेवेति भावः। उपचर्यत इति। अध्यस्यत इत्यर्थः। उपचारो ह्यध्यासः। अन्यत्रान्यधर्मारोपस्यैवोपचारत्वादिति। यथा माणवके सिंहत्वोपचारः। सिंहो माणवक इति ह्यौपचारिकः प्रयोगः। न चाविद्याध्यारोपितमुपचर्यत इति पौनरुक्त्यं शङ्क्यं, अविद्याध्यारोपितमित्यस्याविद्यया कृतमित्यर्थात्। अथवाऽध्यस्तमित्येवार्थोऽस्तु, न पुनरुक्तिः। अविद्यया तावदात्मनि क्रियाकारकादीनामध्यासः, पश्चात्क्रियाकारकादिधर्मस्यात्मन्यध्यास इति। अयमेवान्योन्याध्यास इत्युच्यते। अन्योन्यधर्माध्यासस्यैवान्योन्याध्यासत्वात्। तथा चाविद्याध्यारोपितमित्यनेन

सर्वशः', 'नादत्ते कस्य चित्पाप'मित्यादिप्रकरणेषु दर्शितः। तथैव च व्याख्यातमस्माभिः। उत्तरेषु च प्रकरणेषु दर्शयिष्यामः।

हन्त! तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावे, अविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्तव्यान्येव न विदुषामिति प्राप्तम्। सत्यमेवं प्राप्तमेतदेव च 'नहि देहभृता

---

धर्म्यध्यासस्य उपचर्यत इत्यनेन धर्माध्यासस्य चोक्तत्वान्न पुनरुक्तिः। तत्र धर्म्यध्यासात्क्रियाकारकादिप्रतीतिः। धर्माध्यासात्तु मनुष्योऽहं, काणोऽहं, सुख्यहमित्यादिप्रतीतिरिति विवेकः। अज्ञानकार्योऽयमेवाध्यासस्सर्वसंसारहेतुरिति संक्षेपः।

तत्र तत्रेत्यस्यार्थमाह—य एनमित्यादिप्रकरणेष्विति, तथैवेति। यथा भगवता दर्शितं तथैवेत्यर्थः। एतेनान्येषां व्याख्यातॄणां भगवदनभिप्रेतार्थवर्णनं मूलस्येति सूच्यते। दर्शयिष्याम इति। इममेवार्थमिति शेषः। नन्वेवमात्मनि स्वतः क्रियाकारकफलात्मत्वाभावे विदुषां सर्वकर्माभावः प्राप्त इति पृच्छति—हन्त! तर्हीति। अविदुषामविद्यायास्सत्त्वादविद्यावस्थायामात्मनि क्रियाकारकफलात्मतायाः प्रतिभानादविद्वांसो ब्राह्मणोऽहं स्वर्गादिकं मे भूयादिति कर्मणि प्रवर्तन्ते- फलहेत्वोरात्माभिमानात्। विदुषां त्वविद्याया अभावाद्विद्यावस्थायामात्मनि क्रियाकारकफलात्मताया अप्रतीतेर्विद्वांसस्सच्चिदानन्दलक्षणोऽहमित्यात्मयाथात्म्यज्ञानेन फलहेत्वोरनात्मनोरात्माभिमानाभावाद्ब्राह्मणोऽहं स्वर्गादिकं मे भूयादिति कर्मणि नैव प्रवर्तन्ते। एवं विदुषां शास्त्रार्थे कर्मण्यप्रवृत्तौ शास्त्रस्यार्थजरतीयन्यायेन नैरर्थक्यमर्धांशतः प्राप्नोति। अथ वा मूढविषयत्वेन कृष्यादिवद्बुद्धागमादिवद्वा विद्वद्ब्राह्मणाग्राह्यत्वेन सर्वात्मना व्यर्थत्वमेव भवेत्। विद्वद्ग्राह्यमेव हि सार्थकम्। एवं शास्त्रानर्थक्यदोषः पुनः प्राप्त इति पूर्वपक्ष्याशयः। प्रश्नमङ्गीकरोति—सत्यमिति, एतदेवेति। विदुषां कर्माभावमेवेत्यर्थः। ये कर्मण्यधिकृता अज्ञास्ते शास्त्रार्थकर्मणि न प्रवर्तेरन्- यदि तर्हि शास्त्रमनर्थकं स्याद्विधिप्रतिषेधात्मकं- अज्ञार्थमेव तच्छास्त्रस्य प्रवृत्तत्वात्। न तु विदुषां प्रवृत्त्यभावेन शास्त्रस्यानर्थक्यं विद्वदर्थे शास्त्रस्याप्रवृत्तत्वात्। नहि नटार्थे निर्मितं भरतशास्त्रं ब्राह्मणादीनां तत्राप्रवृत्तिमात्रेण निरर्थकमिति वक्तुं शक्यते एकदेशेन सर्वात्मना वा। यद्यदर्थे निर्मितं तत्र ते यदि न प्रवर्तेरन् तर्हि तदनर्थकं स्यात्। न त्वन्येषामप्रवृत्त्या। यथा देवदत्तार्थे राज्ञा कारिते गृहे यदि देवदत्तो न निवसेत्तर्हि तदनर्थकं स्यात्- तद्वत्। नच विधिप्रतिषेधशास्त्रं विद्वदविद्वत्साधारण्येन प्रवृत्तमिति वाच्यं, 'वेदाविनाशिनं नित्यं य एनमजमव्ययम्। कथं स पुरुषः पार्थ! कं घातयति हन्ति कम्' इति विदुषां सर्वकर्माभावं वदन्नीश्वरः कथं विद्वदर्थे विधिप्रतिषेधशास्त्रं निर्मायात्? तस्माद्विद्वदर्थमीश्वरेण शास्त्रस्यानिर्मितत्वाद्विदुषां न तत्राप्रवृत्त्या ना शास्त्रस्य सर्वात्मनाऽर्धांशेन वा नैरर्थक्यम्। नहि ब्राह्मणार्थे निर्मितेषु वैश्वदेवादिषु शूद्रादीनामप्रवृत्तौ शास्त्रस्यानर्थक्यम्। प्रत्युत प्रवृत्तावेवानर्थक्यम्। अन्यधर्मेऽन्यप्रवृत्तेर्नरकहेतुत्वात्। धर्माधर्मनिरूपणद्वारा लोकान्नरकादुत्तारयितुं हि शास्त्रमीश्वरेण निर्मितम्। तस्माद्विदुषां सर्वकर्मसन्न्यासिनां कर्मणि प्रवृत्तिर्नरकहेतुरेव। अविदुषां कर्मिणां कर्मण्यप्रवृत्तिरपि नरकहेतुरेव।

शक्य'मित्यत्र दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय नि ज्ञानस्य या परा' इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चनेनेत्युपसंह्रियते ॥२

य एतदजानन्तो मूढा विद्वदनुसारेण स्वयमपि कर्मसु न प्रवर्तन्ते, तेषामज्ञानामप्रवृत्त्यापि न शास्त्र वैयर्थ्यमेकदेशेन प्राप्नोति । पुरुषापराधमात्रेण शास्त्रं न दुष्यतीति हेतोः । 'नहि रोगिनिन्दया स कदलीफलं विरसं भवेत् । परं तु येऽधिकृता अपि कर्मणि न प्रवर्तन्ते त एव दुष्यन्ति । ये यत्रा कृतास्ते तत्राप्रवृत्त्या दुष्यन्ति, तच्छास्त्रं तु न दुष्यति- यथा जलाहरणकर्मण्यधिकृतस्तत्राप्रवृ दुष्टोऽयमिति स्वामिना हन्यते, नतु स्वाम्याज्ञा दुष्यति तद्वत् ।

तस्मात्कर्मण्यधिकृतैरेवाज्ञैः, त्रैवर्णिकैः कर्म विहितं कार्यं निषिद्धं तु परित्याज्यं, नतु सन्न्य सिनो विधिनिषेधौ स्तः' । यथा वा स्त्रीशूद्रादीनामिति । विदुषां सर्वकर्मसन्न्यास एव प्राप्तः । अ मर्थः पूर्वमपि बहुशः प्रपञ्चितश्शङ्कराचार्यैः । लोकानुग्रहार्थमुत्तरत्रापि वक्ष्याम इत्याह—नहीति प्रकरणान्तरं दर्शयति—सर्वेति । 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति श्लोकव्याख्या समये इत्यर्थः । तस्यैव श्लोकस्य सर्वशास्त्रार्थोपसंहारप्रकरणत्वात् । ननु यदुत्तरत्र दर्शयिष्यते तदि वक्तव्यमत आह—अलमिति । वाचामधिकविस्तारस्य जिज्ञासुजनमनःक्लेशावहत्वादिति भावः उपसंह्रियते संक्षिप्यते समाप्यत इति यावदिति ।

अत्राह रामानुजः—क्षेत्रज्ञं चापि मां विद्धीति सामानाधिकरण्यदर्शनादीश्वरस्यैव सतोऽज्ञ नात् क्षेत्रज्ञत्वमिव भवति, तन्निवृत्त्यर्थश्चायमेकत्वोपदेशः, अनेन चाप्ततमभगवदुपदेशेन रज्जु न सर्प इत्याप्तोपदेशेन सर्पत्वभ्रमनिवृत्तिवत् क्षेत्रज्ञत्वभ्रमो निवर्तत इति केचिदाहुरिति । अ वेदान्तदेशिकश्चार्थमस्य सर्वज्ञस्येश्वरस्यैव सतोऽज्ञानात् क्षेत्रज्ञत्वभ्रमो भवति, स एव चेश्वरः क्षेत्र योपदिशतीति च व्याकुलभाषिणस्ते इति ।

अत्र विचार्यते—नाद्वैतिभिरस्माभिरीश्वरस्यैवाज्ञानात् क्षेत्रज्ञत्वमित्युक्तम् । किं तर्हीश्वर सतः क्षेत्रज्ञस्याज्ञानात्संसारित्वमित्युक्तम् । तस्मान्नेश्वरस्य क्षेत्रज्ञत्वभ्रमः, किंत्वीश्वरस्य क्षेत्रज्ञत्वं प्रमै ईश्वरस्यैव क्षेत्रज्ञत्वात्तस्य चासंसारित्वात् । अतस्मिंस्तद्बुद्धिर्हि भ्रमः । ईशनक्षेत्रज्ञानरूपप्रवृत्तिनिमि भेदादीश्वरक्षेत्रज्ञशब्दद्वयवाच्यत्वमेकस्यैव सच्चिदानन्दस्य । तस्मादीश्वरस्येश्वरत्वमिव क्षेत्रज्ञत्वमपि भ्रमः । ईश्वरस्य साक्षित्वं च श्रुतिसिद्धं- 'साक्षी चे'तेति मन्त्रात् । क्षेत्रज्ञत्वमेव हि साक्षित्वं सा त्पश्यति सर्वं साक्षीति व्युत्पत्तेः, ज्ञेयस्य सर्वस्यापि क्षेत्रत्वाच्च । उदासीनत्वे सति द्रष्टृत्वं हि लोकेऽ साक्षित्वम् । तथा द्रष्टुरीश्वरस्योदासीनत्वादेवाविक्रियत्वम् । नहि विवदमानाविव साक्षी सुखदुःखा विकारं प्राप्नोति । अत एव हि तस्योदासीनत्वम् । एवमविक्रियत्वादेवासंसारित्वमीश्वरस्य । सुख दुःखादिविकारस्यैव संसारत्वात् । तस्मादसंसारीश्वर एव क्षेत्रज्ञ इत्यस्माभिरुच्यते । सत्य एवायम नतु रज्जुसर्पवद्भ्रमः रज्जौ सर्पस्येव ईश्वरे क्षेत्रज्ञः कल्पित इत्यस्माभिरनुक्तत्वात् ।

एवं स्थिते य ईश्वरस्य क्षेत्रज्ञत्वभ्रम इत्यस्माभिरुक्तमिति मन्यन्ते त एव भ्रान्ताः, न त्वीश्वरः नापि वयम् । तेषां तु युष्माकं भ्रम उपपन्न एव- भ्रमहेतोरज्ञानस्य सत्त्वात् । अत एवाज्ञानाद्धि युष्माकं क्षेत्रज्ञादन्य ईश्वर इति क्षेत्रज्ञस्संसारी जीव इति च भ्रमः । तथा क्षेत्रज्ञं चापीति श्लोकस्यापार्थकल्पनं च । कथम् ? उच्यते- क्षेत्रज्ञं च मां मदात्मकं विद्धि अपिशब्दात् क्षेत्रमपि मदात्मकं विद्धीति । अस्मिंस्तव व्याख्याने क्षेत्रज्ञास्मच्छब्दयोः प्रतीयमानस्य मुख्यसामानाधिकरण्यस्य भङ्ग एको दोषः । मामित्यसमस्तपदस्य मदात्मकमिति समासकल्पनमन्यः । आत्मशब्दस्य स्वरूपार्थकत्वे स्वमतप्रच्युतिरपरः । यथा देहस्य जीवश्शरीरित्वादात्मा तथा जीवस्य शरीरस्य शरीरित्वादीश्वर आत्मेत्यात्मशब्दस्य शरीर्यर्थवर्णने नित्ये जीवे शीर्यत इति व्युत्पत्तिसिद्धशरीरशब्दप्रवृत्तिनिमित्ताभावोऽन्यः । एतद्दोषपरिहाराय अनित्यत्वस्वीकारे 'अजो नित्य' इति गीताविरोधोऽपरः । आत्मा शेषीत्यर्थवर्णने अनन्यशेषतया सर्वशेषितया च प्रसिद्धस्यात्मनो जीवस्य ईश्वरशेषत्वकल्पनमन्यः । देहो जीवस्येव जीव ईश्वरस्यापृथक्सिद्धविशेषणत्वादीश्वरात्मक इति वर्णने तु दृष्टान्तदार्ष्टान्तिकयोरुभयोरप्यनुपपत्तिरेव- ज्ञेयज्ञात्रोर्देहजीवयोर्ममेदमित्यहमिति च पृथक्प्रतीयमानयोरपृथक्सिद्धत्वयोगात् । देहात्पृथग्जीवस्यासिद्धौ बौद्धमताभ्युपगमप्रसङ्गः । देहात्मवादित्वात्तेषां बौद्धानाम् । जीवात्पृथग्जीवस्यासिद्धौ देहस्य मरणाभावप्रसङ्गः- जीवापेतशरीरस्यैव मृतत्वव्यवहारात् । सर्वदापि जीवादपृथक्सिद्धत्वाच्च देहस्य । एवं जीवात्पृथगीश्वरस्यासिद्धावीश्वरस्य संसारित्वप्रसङ्गः । जीवेश्वराभेदस्वीकारेण स्वमतप्रच्युतिः, परमतप्रवेशश्च । सर्वदापीश्वरस्य जीववैशिष्ट्ये सत्यग्निसङ्गाल्लोहस्यौष्ण्यमिव जीवसङ्गादीश्वरस्यापि संसारित्वप्रसङ्गश्च । जीवेश्वरयोर्नियाम्यनियामकभावाद्यसिद्धिश्च । ईश्वरापृथग्जीवस्यासिद्धौ जीवस्य संसारिणोऽभावप्रसङ्गः, संसाराभावप्रसङ्गश्च । ईश्वरनियाम्यत्वमेव जीवस्य स्वभाव इत्यप्ययुक्तम्—सुषुप्तौ जीवेश्वरयोर्नियाम्यनियामकभावस्य चादर्शनात् । नहि सुषुप्तौ जीवः केनचिन्नियम्यमानो दृष्टः । नहि स्वभावः क्वचिदप्यपैति । किंच अध्यासं विना अन्येन केनापि हेतुना यदि जीवो देहात्मकः, देहो वा जीवात्मकः स्यात्तर्हि तद्दृष्टान्तेन जीवस्येश्वरात्मत्वमीश्वरस्य वा जीवात्मत्वमुच्येत । न तु तथास्ति । नहि विद्वान् कोऽपि स्वं देहात्मकं जानाति, देहं वा स्वात्मकम् । किंतु स्वस्मादन्यमेव देहं देहादन्यमेव स्वं च वेत्ति । य आत्मानं मनुष्यं वेद स ह्यविद्वान् । भगवान् सर्वज्ञः कथमात्मानं जीवं जीवं वा आत्मानं विद्यात् ? येन जीवो मदात्मक इति ब्रूयात् । तस्माद्देहात्मनोर्जीवेश्वरयोर्वा सामानाधिकरण्यंप्रति नापृथक्सिद्धविशेषणत्वं हेतुः, किं त्वज्ञानमेव । दृश्यते तु- 'क्षेत्रज्ञं चापि मां वि'द्धीति जीवेश्वरयोस्सामानाधिकरण्यं; तद्धेतुरज्ञानं तु ईश्वरे न सम्भवतीति दुष्टमेव तवेदं व्याख्यानम् । नहि त्वदुक्तविधया स्वापृथक्सिद्धविशेषणं जानन्नपि देहं विवेकी कोऽपि मनुष्यं मां विद्धीति ब्रूते, येनेश्वरस्सर्वज्ञो जीवं मां विद्धीति ब्रूयात् । यस्तु देवं मां विद्धीति ब्रूते तस्य देहात्माभिमानो नैव नष्टः- देवत्वमनुष्यत्वादेर्देहधर्मत्वेन जीवधर्मत्वाभावात् । एवमीश्वरस्यापि जीवे आत्माभिमानो न नष्ट इति यदि ब्रूषे तर्हि तस्यासर्वज्ञत्वप्रसङ्गः । यदि नष्ट इति

ब्रूषे तर्हि जीवं मां विद्धीत्युपदेशानुपपत्तिरिति । क्षेत्रस्य तु ईश्वरात्मत्वमस्त्येव- ईश्वरे तस्य क
तत्वेन ईश्वरस्वरूपत्वादधिष्ठानस्वरूपं ह्यध्यस्तं वस्तु । ईश्वरस्य क्षेत्रान्तरात्मत्वाच्चास्तु क्षेत्रस्येश्वरात्मत्व
तथापि अपिशब्दान्न सोऽर्थ इह व्यङ्ग्यतया विवक्षितः । सर्वक्षेत्रेष्विति कण्ठत एव ईश्वरस्य
क्षेत्रान्तरात्मत्वस्योक्तत्वात् । क्षेत्रेषु वर्तमानो हि क्षेत्रान्तरात्मा । ईश्वरे कल्पितत्वात्क्षेत्रमीश्वरात्म
मिति तु न तव मतम् । अतस्तस्येह विवक्षितत्वं त्वया न वक्तव्यं स्वमतभ्रंशपरमतस्वीकारदोषा
त्तव । तथा सर्वक्षेत्रेषु क्षेत्रज्ञमिति जात्येकवचनमिति तव वचनं चायुक्तम्—सर्वक्षेत्रेष्विति ब
निर्देशस्वारस्यभङ्गात् । जात्येकत्वस्वीकारे प्रमाणाभावात् । सत्यां तादृशविवक्षायां क्षेत्रज्ञानपि
विद्धीत्येव ब्रूयाद्बादरायणः । नापि सच्चिदानन्दलक्षणे क्षेत्रज्ञे जातिः काचिदस्ति । किंच यदि व्य
भेदस्स्यात्तर्हि जातिभेदो नास्तीति वक्तुमुचितं, नतु व्यक्तिभेदोऽस्ति । अव्यक्तत्वादक्षरस्य क्षेत्रज्ञ
नहि निराकारस्य वायोराकाशस्य वा व्यक्तिभेदोऽस्ति, येन निराकारस्य जीवस्य स स्यात् । त
त्क्षेत्रज्ञानेकत्वमप्रमाणमेव । नच सुखदुःखादिसाङ्कर्यप्रसङ्गः- तस्यान्तःकरणधर्मत्वादन्तःकरणानां च
कत्वात् । नापि विभोः क्षेत्रज्ञस्यानेकत्वं भवितुमर्हति- परिच्छिन्नानामिवान्तःकरणानम् । नच क्षेत्रज्ञे
परिच्छिन्न एवेति वाच्यं, तथा सत्यनित्यत्वप्रसङ्गात् । एवं नित्याद्विभोः ज्ञातुश्च जीवादीश्वरस्य
प्रयुक्तो भेदस्त्वया विवक्षितः ? अनित्यत्वपरिच्छिन्नत्वज्ञेयत्वप्रयुक्त इव देहस्य भेदः न किंप्रयुक्तो
सत्यत्वादीनामीश्वरेऽपि सत्त्वात् । नच सर्वज्ञत्वादिप्रयुक्त इति वाच्यं, तस्य मायाधर्मत्वेनेश्वरधर्म
भावात् । सर्वावभासकत्वलक्षणसर्वज्ञत्वस्य जीवेऽपि सत्त्वात् । तस्मान्न जीवेश्वरभेदः । नापि जी
नेकत्वम् । तादृशज्ञानस्य च संसारहेतुत्वेन न सम्यग्ज्ञानत्वमपीत्यलम् ।

अथ यदप्याह रामानुजः—अयमुपदेष्टा भगवान् वासुदेवः किमात्मयाथात्म्यसाक्षात्का
निवृत्ताज्ञानः, उत न ? आद्ये- निर्विशेषचिन्मात्रैकस्वरूपे आत्मन्यतद्रूपाध्यासासम्भावनया कौन्तेया
भेददर्शनं, तान्प्रत्युपदेशादिव्यापाराश्च न सम्भवन्ति । अथात्मसाक्षात्काराभावादनिवृत्ताज्ञानश्चेत्तर्ह्यज्ञ
देवात्मज्ञानोपदेशासम्भव इति, तत्तुच्छम्—य आत्मानं निवृत्ताज्ञानमनिवृत्ताज्ञानं वा मन्यते स
एव । आत्मनि कालत्रयेऽप्यज्ञानाभावात् । अज्ञानप्रसक्तिं विना तन्निवृत्त्ययोगाच्च । वासुदेवस्त्वा
वेति कृत्वा कथं तस्याज्ञानप्रसङ्गः, तन्निवृत्तिर्वा ? यश्चैनं वासुदेवं कौन्तेयाय कमप्यर्थमुपदिश
मन्यते स आत्मतत्त्वयाथात्म्यगन्धशून्य एव । नहि निर्विशेषचिन्मात्र आत्मा कस्मैचित्किमप्यु
दिशेत्- वागाद्यभावात् । यस्तूपदिशन् दृश्यते स कार्यकरणसङ्घात एव नात्मा । नहि ज्ञाता परमा
केनचिद्दृश्येत । कार्यकरणसङ्घातस्य च भेददर्शनोपदेशादिव्यापारा उपपद्यन्त एव । आत्मैकत्वे
सङ्घातानामनेकत्वात्परस्परं भेदात्करणादिमत्त्वाच्च । नच जडत्वान्नोपपद्यन्त इति वाच्यं, आत्मप्रति
नेन चैतन्यलाभात्सङ्घातस्य । तस्माद्देहे गच्छति सति अहं गच्छामीति यथा अज्ञानां भ्रमस्तथा स
वदति सति आत्मा वदतीति, सङ्घाते शृण्वति सति आत्मा शृणोतीति चाज्ञानां भ्रमः । एवमुपदेश
सुदेवपुत्रे सङ्घातविशेषे, श्रोतरि च कौन्तेये सङ्घातविशेषे यस्यात्मेति भ्रमस्तस्य तव देहात्माभिमानि
पाण्डित्यमहो !

नन्तु मास्त्वात्मन्युपदेशादिव्यवहारः, यस्सङ्घातविशेषमहमित्यस्मिन्मन्यते स वासुदेवः प्रमाता किमात्मयाथात्म्यसाक्षात्कारेण निवृत्ताज्ञानः? उत न? आद्ये- भेददर्शनाद्यनुपपत्तिः। द्वितीये-- उपदेशानुपपत्तिरिति, चेन्मैवमपि—आत्मैकत्वं प्रमातृभेदं च विदुषः कृष्णस्य भेददर्शनोपदेशाद्युपपद्यत एवेति। यदि प्रमातृभेदो न स्यात्तर्हि कौन्तेयादिभेददर्शनानुपपत्तिः स्यात्। यद्यात्मैकत्वदर्शनं न स्यात्तर्ह्यात्मोपदेशो न स्यात्। नत्वेतदस्ति। प्रमातृभेदस्य सत्त्वात्प्रमातृविशेषस्य च कृष्णस्यात्मैकत्व-दर्शनसत्त्वादिति भावः।

नन्तु यः प्रमाता आत्मानं सच्चिदानन्दमद्वितीयं ब्रह्म पश्यति स विद्वान् कृष्णः पुनरात्मानं प्रमातारं कथं जानीयात्कथं वा कौन्तेयायोपदिशेदिति चेत्, मैवमपि—व्यवहारपरमार्थदशयोर्भेदेन तदुपपत्तेः। यथा तव समाधिव्यवहारदशयोर्भेदः, यथा वा शूद्रदीनामतिमूर्खाणामपि निद्राव्यवहारदशयो-र्भेदः। अथ वा निद्राजागरणदशयोः। प्रमाता यदा आत्मानं साक्षात्करोति, साहि परमार्थदशा। न तथा कोऽपि वक्ता कोऽपि श्रोता कश्चिदुपदेशो वा विद्यते। यदा तूपदेशादिव्यवहारं करोति साहि व्यवहारदशा; तदा वक्तृश्रोतृशास्त्राणि सन्त्येवेति न काप्यनुपपत्तिः।

नन्तु व्यवहारदशायामपि विदुषः प्रमातुरहं ब्रह्मेति, ज्ञानमस्ति वा? न वा? आद्ये- अद्विती-यत्वाद्ब्रह्मण उपदेशानुपपत्तिः। द्वितीये- अज्ञत्वादेवोपदेशानुपपत्तिरिति चेत्, मैवमपि—व्यवहार-दशायां ब्रह्मात्मज्ञानस्य परोक्षकल्पत्वेन भेददर्शनोपदेशयोरुपपत्तेः। अपरोक्षत्व एव भेददर्शनाभावः। परोक्षज्ञानस्याप्यभाव एवाज्ञत्वादुपदेशाभाव इति हेतोः। नचापरोक्षतया दृष्टस्यात्मनः कथं पुनः परोक्षत्वमिति वाच्यं, यावद्विदेहकैवल्यमविद्याया दग्धपटवत्सत्त्वात्। अविद्याऽऽवरणाद्ध्यात्मनः पारोक्ष्यम्। नच प्रकाशरूपस्यात्मनः कथमज्ञानावरणमिति वाच्यं, अहमज्ञ इत्यनुभवबला'दज्ञानेनावृतं ज्ञान'मित्यादिशास्त्रप्रामाण्याच्च। आत्मनोऽज्ञानावरणाभ्युपगमात्। तस्माद्व्यवहारदशायां गुरुशिष्य-शास्त्रादिसर्वद्वैतसत्त्वाद्भेददर्शनादिकमुपपद्यत एव वसुदेवसूनोः प्रमातुः कृष्णस्येति स्थितम्।

वस्तुतस्तु तव मतएवायमुपदेशानुपपत्तिदोषः, तथाहि- जीवान्तर्यामी जीवशरीरकः परमात्मा शरीरं जीवं स्वात्मकं जानन् कथं तस्मा उपदिशेत्? जीवोऽन्योऽहमन्यस्तस्माच्च जीवो मदात्मक इति ज्ञाने सति ह्युपदेश उपपद्यते। नहि मनुष्योऽहमिति मन्यमानः कोऽपि मूढश्शरीराय स्वात्मकाय किमप्युपदिशति। देवदत्तोऽहमन्यः विष्णुमित्रोऽयमपरः, अतो नायं मदात्मक इति ज्ञानाद्धि देवदत्तो गुरुर्विष्णुमित्राय किमप्युपदिशति। नच जीवस्यान्तरात्माऽहं जीवादन्य इति ज्ञानादुपदिशतीति वाच्यं, देहादन्योऽहं देहस्यान्तरात्मेति ज्ञानादपि जीवस्य देहं प्रत्युपदेशादर्शनात्। नच देहस्याचेतनत्वादुप-देशानुपपत्तिरिति वाच्यं, जीवे सति देहस्य चेतनत्वात्। कथमन्यथा चेतनाचेतनव्यवहारः? नहि गच्छन्तं वदन्तं वा देहं कोऽप्यचेतनं मन्यते। किंतु मृत्पाषाणादिकमेव। नापि जीवः स्वान्तरवस्थितं स्वस्मै कमप्युपदिशन्तं स्वस्मादन्यं स्वस्य शरीरिभूतं कञ्चन पश्यति, येन तदनुभवबलाद्वा स्वशरीराय जीवाय शरीरीश्वर उपदिशतीत्यभ्युपगम्येत।

नच कृष्णार्जुनोपदेशदृष्टान्तबलादभ्युपगन्तव्यमिति वाच्यं, अर्जुनाद्बहिरुपलभ्यमानस्य कृष्णस्यार्जुनान्तस्स्थितिप्रयुक्तान्तरात्मत्वायोगात् । नच य एव कृष्णशरीरान्तरात्मा स एवार्जुनशरीरान्तरात्मेति वाच्यं, एकात्मवादप्रसङ्गात् । अनेकात्मवादी हि भवान् । नचार्जुनशरीरे अन्तरात्मतया स्थितो यस्स एव कृष्णशरीरे प्रमातृतयां स्थितस्सन्नर्जुनशरीरस्थप्रमात्रे उपदिशतीति वाच्यं, कृष्णशरीरप्रमातर्यप्यर्जुनशरीरप्रमातरीवान्तरात्मनोऽवश्यं स्थातव्यतयाऽर्जुनप्रमात्रन्तर्यामिणः कृष्णप्रमातृरूपत्वासम्भवात् । किंतु कृष्णप्रमात्रन्तर्यामिरूपत्वमेव तस्य । अन्यथा अन्तर्यामिणः प्रमातृरूपत्वेऽन्तर्यामित्वभङ्गप्रसङ्गात् । प्रमातुरन्तस्स्थित्वा प्रमातारं यमयतीति ह्यन्तरात्मेत्युच्यते । कृष्णप्रमातुरेवार्जुनान्तर्यामित्वे कृष्णप्रमात्रन्तर्यामिणोऽर्जुनान्तर्यामिणोऽप्यन्तर्यामीति प्राप्तत्वाच्च । नचेष्टापत्तिः- अन्तर्यामिणोऽप्यन्तर्यामिणोऽन्यस्य कल्पने तस्याप्यन्यस्य कल्पनीयतयाऽनवस्थादोषात् । अन्तर्यामिब्राह्मणविरोधाच्च । तस्मादन्तर्यामिण ईश्वरस्य स्वशरीरभूतान् जीवानुद्दिश्योपदेशो नोपपद्यते । जीवानां स्वशरीरत्वेन स्वाभिन्नत्वात्स्वस्य च करणाभावादिति ।

यदपि तेनोक्तम्—एवमादिवादा अनाकलितश्रुतिस्मृतीतिहासपुराणन्यायस्ववाग्विरोधैरज्ञानिभिर्जगन्मोहनाय प्रवर्तिता इति, तदप्ययुक्तम्—अत्राह वेदान्तदेशिको युक्तमेवेति । कथम् ? उच्यते- शङ्करमते भेदश्रुतयः, सगुणश्रुतयः, अन्तर्यामिश्रुतयः, प्रकृतिपुरुषनित्यत्वश्रुतयः तथाविधाश्च स्मृत्यादयो विरुद्धा एव । अभेदश्रुत्यादयश्च मुख्यार्थपरित्यागेन निर्विशेषलक्षकतया तैरेवाभ्युपगमान्मुख्यार्थप्रतिपादकाकारेण विरुद्धाः । विजयव्यवस्थादिभिर्विरोधपरिहारे सम्भवति सति बाध्यबाधकभावाभ्युपगमान्न्यायविरोधः । ब्रह्म निर्विशेषमेवंत्वादित्यत्र हेतुसाध्यधर्मान्वयावश्यम्भावात् । अनुभूतिरवेद्येत्यत्रानुभूतिशब्दबोध्यत्वादेरवश्याभ्युपगन्तव्यत्वाच्च स्ववचनविरोधः । एवं ब्रह्म न शब्दप्रतिपाद्यमित्यादिष्वपि भाव्यमिति ।

अथ कथमयुक्तमिति चेदुच्यते—व्यवहारः परमार्थ इति, अविद्या च विद्या चेति चास्त्यवस्थाद्वयम् । तद्धि न स्वकपोलकल्पितं, किंतु श्रुतिसिद्धमेव । दर्शिताश्च श्रुतयः प्रकृतश्लोकभाष्ये एव शङ्कराचार्यैः । स्मृतिसिद्धं च । स्मृतीनामपि तत्रैव तैरेव दर्शितत्वात् । एवं पुराणादिष्वपि प्रसिद्धमेवानुभवसिद्धं च । एवं सति यावद्व्यवहारं यावदविद्यं वा जीवेश्वरभेदादय उपपद्यन्त एव । 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगष्षडस्माकमनादय' इति वचनात् । व्यवहारदशायामविद्यावस्थायां जीवेश्वरभेदसत्त्वा'द्वा सुपर्णा' इत्यादिभेदश्रुत्युपपत्तिः । ईश्वरस्य सत्यकामत्वसर्वेश्वरादिगुणसत्त्वात्सत्यकामस्सत्यसङ्कल्प इत्यादिसगुणश्रुत्युपपत्तिः । जीवेश्वरयोर्नियाम्यनियामकभावसत्त्वाद्य आत्मनि तिष्ठन्नित्याद्यन्तर्यामिश्रुत्युपपत्तिः । विद्यासूर्योदयपर्यन्तं प्रकृतिरूपान्धकारस्य सत्त्वात्प्रकृतेर्नित्यत्वव्यवहारः । यथा प्रलये नंक्ष्यमाणानामपि मृत्तिकादीनां यावत्प्रपञ्चं सत्त्वान्नित्यत्वव्यवहारो घटादीनां तथाऽसत्त्वादनित्यत्वव्यहारश्च तद्वत्प्रकृतेरपि सापेक्षनित्यत्वसत्त्वान्नित्यत्वश्रुत्यविरोधः । पुरुषस्यात्मनस्तु पारमार्थिकत्वेन निरपेक्षनित्यत्वमस्त्येवेति न पुरुषनित्यत्वप्रतिपादकश्रुतिविरोधोऽस्माकम् ।

एवं स्मृत्यादयोऽप्यविरुद्धा एव- तत्त्वमसीत्याद्यभेदश्रुतयस्तु परमार्थदशायां विद्यावस्थायां निर्विशेषं ब्रह्मैकमेवास्तीति लक्षणया प्रतिपादयन्तीति न तच्छ्रुतिविरोधः । नच मुख्यार्थपरित्यागाद्विरोध इति वाच्यं, सति तु मुख्यार्थबाधे लक्ष्यार्थस्यैव स्वीकार्यत्वात् । नच मुख्यार्थस्य बाधो नास्तीति वाच्यं, तत्पदमुख्यार्थस्य सर्वज्ञपरोक्षेश्वरस्य त्वंपदमुख्यार्थस्य किञ्चिद्ज्ञप्रत्यक्षजीवस्य च असिपदोक्तैक्यानुपपत्तेः । नच ईश्वरात्मको जीव इत्यर्थवर्णने मुख्यार्थस्याबाध इति वाच्यं, त्वं जारिणी माभूरिति वधूमनुशास्य श्वश्रूः स्वयं जारिण्यभूदिति लोकन्यायात् तव लक्ष्यार्थस्वीकारदोष इत्यस्मानाक्षिप्य त्वं लक्ष्यार्थमेव स्वीकरोषीत्यहो! तव विद्यावैभवम् । तत्पदस्येश्वरात्मक इत्यर्थो हि न मुख्यः । किमिति त्वया यथाश्रुतं जीवेश्वरयोर्मुख्यं सामानाधिकरण्यं नाभ्युपेयते । यदि विरोधादिति ब्रूषे तर्हि तथैवास्माकमपीति विद्धि । नच तत्पदे एकस्मिन्नेवास्माभिर्लक्षणा स्वीकृता, त्वया तु पदत्रयेऽपीति वाच्यं, यथैकस्मिन्पदे लक्षणा तव न दुष्यति तथा पदत्रयेऽप्यस्माकं नैव दुष्यतीति ।

किंच लाक्षणिकोऽप्यस्मदुक्तार्थो निरवद्यः । त्वदुक्तस्तु सावद्य एव । तच्च दर्शितमिहैव मां मदात्मकमिति त्वदुक्तार्थविमर्शनप्रकरण इतीहोपरम्यते । 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिनिर्गुणश्रुतयस्तु विद्यादशायां निर्गुण एवात्मेति बोधयन्तीति नास्माकं तद्विरोधः । निर्गुणशब्दस्य हेयगुणरहित इति त्वदुक्तार्थ एव दुष्टः । गुणशब्देन दोषप्रतिभटानामेव ग्रहीतुमुचितत्वात्- 'गुणदोषौ बुधो गृह्णन्नित्यादिप्रसिद्धेः । नचैवं तवापि मते निर्दोषत्वं न स्यादात्मन इति वाच्यं, निर्गुणश्चेति चकारेण अपहतपाप्मेति श्रुत्यन्तरेण वा निर्दोषत्वलाभात् । तथा अभेदश्रुतिभेदश्रुतीनां निर्गुणश्रुतिसगुणश्रुतीनां च विद्याऽविद्यारूपदशाभेदाद्विषयव्यवस्था कृतैवास्माभिः । बाध्यबाधकभावस्तु विद्यया अविद्याया बाध्यमानत्वाद्विद्याविषयाभिरभेदश्रुतिभिरविद्याविषयाः भेदश्रुतयो बाध्यन्त इत्यभिप्रायेणोक्तः । भेदश्रुतीनां बाधो नाम तदर्थस्य विद्यावस्थायामप्रामाण्यमेव । यथा रज्जुज्ञानेन सर्पज्ञानस्याप्रामाण्यं तद्वत् । नचैवमप्रमाणमर्थं कथं ब्रूयाच्छ्रुतिरिति वाच्यं, अविद्यावस्थायां प्रमाणत्वात्तदर्थस्य जीवेश्वरभेदादिरूपस्य । तस्मादविद्यावस्थाविषयजीवेश्वरभेदादिप्रतिपादकश्रुतीनां- 'द्वा सुपर्णा' इत्यादीनां, विद्यावस्थाविषयजीवेश्वराभेदादिप्रतिपादकश्रुतीनां तत्त्वमसीत्यादीनां च विभिन्नविषयत्वान्न कोऽपि बाध्यबाधकभावः कल्पयितुं शक्यते । तस्मान्नास्ति न्यायविरोधः ।

ननु निर्विशेषं ब्रह्मेति स्ववचनं विरुद्धं, ब्रह्म निर्विशेषं चिन्मात्रत्वाद्व्यतिरेकेण घटवदिति ब्रह्मणि पक्षे निर्विशेषत्वचिन्मात्रत्वरूपसाध्यहेतुभूतयोर्धर्मयोरवश्यम्भावित्वान्निर्विशेषत्वचिन्मात्रत्वरूपधर्मद्वयात्मकविशेषवत्तो ब्रह्मणो निर्विशेषत्वासम्भवाचेति चेत्, मैवम्—सविशेषं ब्रह्मेति वदतस्तव मतेपि किं ब्रह्मणि वर्तमाना विशेषास्सविशेषरूपा उत निर्विशेषाः? आद्ये- तेष्वपि विशेषेषु वर्तमाना विशेषास्सविशेषा इत्येवमनवस्थादोषः । द्वितीये- निर्विशेषेषु ब्रह्मणि वर्तमानेषु विशेषेषु निर्विशेषत्वमस्ति वा नवा? आद्ये- अस्मासु पातितो दोषस्त्वय्यपि पतति । द्वितीये- निर्विशेषत्वाभावे कथं

निर्विशेषत्वं तेषाम् ? नहि घटत्वाभाववान् घटः स्यात्, येन निर्विशेषत्वाभाववद्वस्तु निर्विशे स्यात्। तस्मात्स्ववचनव्याघातदोषोऽपरिहार्य एवेति नात्र दोषेऽस्माभिस्समाधानं वक्तव्यम्। यो दोषस्तव मते न स्यात्, अस्मन्मते स्यात्स एवास्माभिः परिहर्तव्यः।

नन्वस्मन्मते प्रसक्तोऽयं दोषः कथं परिहार्य इति यद्यस्मदीयः पृच्छेत्तर्हि ब्रूमः- निर्वि शेषत्वं न विशेषरूपं, नापि सविशेषरूपं, विरोधात्। किंतर्हि निर्विशेषरूपमेव। यथा निर्धर्मत्वं धर्मरूपं, किंतु निर्धर्मरूपमेव। नच दृष्टान्ते विवदितव्यं- निर्धर्मत्वस्य धर्मरूपत्वे निर्धर्मे धर्मायोग न्निर्धर्मत्वरूपधर्मवत्तद्वस्तु। निरर्थकं नैव स्यात्, नच सधर्मकमस्त्विति वाच्यं, निर्धर्मकस्य सधर्मक च परस्परं विलक्षणत्वात्। निर्धर्मकं न स्वप्नेऽपि सधर्मकं भवितुमर्हति।

ननु निर्धर्मकं निर्विशेषं निर्गुणं वा वस्त्वेव नास्ति, सर्वमपि वस्तु सधर्मकं सविशेषं सगुण मेवात एव निर्धर्मत्वनिर्विशेषत्वनिर्गुणत्वानां दुर्वचत्वादभाव इति चेत्, मैवम्—यावद्विशेषाभाव निर्विशेषत्वं, यावद्धर्माभावो निर्धर्मत्वं, यावद्गुणाभावो निर्गुणत्वमिति तेषां सुवचत्वात्। नच याव द्विशेषाभावोऽपि विशेषरूप एवेति वाच्यं, विशेषस्य भावरूपत्वाद्विशेषाभावस्य चाभावरूपत्वाद्विशे भावाभावस्यैव पुनर्भावरूपत्वाच्च न विशेषाभावो विशेषरूपः, किंतर्हि निर्विशेषरूप एव। एवं धर्मा भावो निर्धर्मरूप एव, गुणाभावोऽपि निर्गुणरूप एव। तस्माद्विशेषाभाववति ब्रह्मणि न कोऽ विशेष आसञ्जनीयः। विशेषविरोधिनस्तदभावस्य तत्र सत्त्वात्। नचैवं विशेषाभावरूपधर्मसत्त्वा न्निर्धर्मकं ब्रह्म न भवेदिति वाच्यं, विशेषाभावस्याभावरूपत्वेन धर्मस्य च भावरूपत्वेन विशेषाभाव धर्मरूपत्वाभावात्। तस्मान्न्यायमते निर्विकल्पज्ञानवदस्मन्मते निर्विशेषब्रह्मणस्सिद्धिरिति।

वस्तुतस्तु निर्विकल्पज्ञानमेव ब्रह्म। तार्किकास्तु नैतज्जानन्तीति बोध्यम्। तस्माद्ब्र निर्विशेषं चिन्मात्रत्वाद्व्यतिरेकेण घटादिवदिति प्रयोगो निर्दुष्ट एव। नच विशेषाभावरूपत्वेन निर्वि शेषत्वस्य विशेषरूपत्वाभावेऽपि चिन्मात्रत्वस्य भावरूपत्वेन विशेषरूपत्वाच्चिन्मात्रत्वरूपविशेषवतो ब्रह्म कथं निर्विशेषत्वमिति वाच्यं, चिन्मात्रत्वं चिदेवेत्यभ्युपगमात्। अन्यथा चिति चित्त्वमस्ति, चित्त्वे पुनश्चित्त्वत्वमस्ति, तस्मिंस्तु चित्त्वत्वत्वमस्तीत्येवं कल्पयितव्यत्वेनानवस्थापत्तेः। तस्माच्चिन्मात्र चिद्रूपमेव। नतु धर्मः, निर्धर्मिकायां चिति धर्मायोगात्।

नचैवं चिति चित्त्वाभावे कथं चित्पदप्रयोगस्तस्मिन्निति वाच्यं, जाड्याभावरूपस्य चित्त्वस्य सत्त्वात्। अत एव सत्यज्ञानादिशब्दानां ब्रह्मणि लक्षणा स्वीकृता। अनृतत्वाभावजाड्याभावादिरू प्रवृत्तिनिमित्तभेदेन ब्रह्मणि प्रयुक्तास्सत्यज्ञानादिशब्दाः केवलं चैतन्यं लक्षणया बोधयन्तीति। तस्मा चिद्रूपं जाड्याभावरूपं वा चिन्मात्रत्वं न धर्म इति न चिन्मात्रत्वेन ब्रह्मणस्सविशेषत्वप्रसङ्ग इति सिद्ध निर्विशेषं ब्रह्मेति।

तथा अनुभूतिशब्दबोद्धव्याया अनुभूतेः कथमवेद्यत्वमित्यपि न युक्तः प्रश्नः—अनुभूतेर्वेद्य

सति तदनुभूतिकर्मकस्य तद्वेदितृकर्तृकस्यानुभवस्य पुनर्वेद्यत्वं स्यादित्येवमनुभवपरंपरा प्रसज्यते, ज्ञानस्य च ज्ञेयत्वं विरुद्धम् । ज्ञानं हि विषयि, ज्ञेयं तु विषय इति भेदात् । नच ज्ञातुरात्मनो ज्ञानत्वमयुक्तमिति वाच्यं, अनुभवस्य वेद्यत्वाभावे सति स एव सर्ववेत्तेत्यनुभवस्यैव ज्ञातृत्वोपचारात् । सर्वमप्यनुभवे विषयीभवतीति युक्तमनुभवस्य विषयिण आत्मत्वम् । नचैवमनुभवशब्दवेद्येऽनुभवे कथमवेद्यत्वमिति वाच्यं, अनुभवशब्दो हि जडो नात्मानमनुभवं वेदितुमर्हति । नचावेद्यं वस्तु इदमनुभव इति वेदितुं कथं शक्यत इति वाच्यं, वेदनमात्रे वेद्यत्वस्योपचारात् । नचावेद्यवस्तुनः कथं सत्तानिश्चय इति वाच्यं, स्वप्रकाशत्वात् । नहि स्वप्रकाशे स्वात्मवस्तुनि सत्तासंशय उपपद्यते । नचावेद्यं वस्त्वनुभवशब्देन कथं बोधयितुं शक्यमिति वाच्यं, सर्वं वेत्त्यनुभवः न केनापि वेद्यत इति वक्तुं कः पुनस्तव वाग्बन्धः । तथा ब्रह्म न शब्दप्रतिपाद्यमित्यपि न विरुद्धम् । नच ब्रह्मशब्देन स्वयं प्रतिपादयन्नपि ब्रह्म कथं शब्दप्रतिपाद्यं नेति ब्रूषे इति वाच्यं, ब्रह्म ब्रह्मशब्दलक्ष्यं वस्तु शब्दैस्सत्यब्रह्मादिशब्दैरभिधया न प्रतिपाद्यत इति तदर्थात् । ततश्च ब्रह्मादिशब्दानां लक्षणया तत्र प्रवृत्तिरिति ।

ननु किं तत् यत्र ब्रह्मादिशब्दानां लक्षणया प्रवृत्तिरिति चेदुच्यते—चैतन्यमिति । नच चैतन्यशब्दवाच्यत्वं कथं वा तस्येति वाच्यं, ब्रह्मणस्सुतरामपि शब्दाविषयत्वेऽव्यवहार्यत्वप्रसङ्गात् । 'शास्त्रयोनित्वा'दिति सूत्रविरोधात् । शास्त्रैकवेद्यत्वं हि ब्रह्मणस्तेनोच्यते- शास्त्रं हि शब्दात्मकम् । 'वेदैश्च सर्वैरहमेव वेद्य' इति वक्ष्यमाणगीताविरोधश्च । शब्दविषयत्वे च- 'यद्वाचानभ्युदितं येन वागभ्युद्यते, यन्मनसा न मनुते येनाहुर्मनो मतम्', 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः, कथं चरन्ति श्रुतयस्साक्षात्सदसतः परे' इति, 'अव्यक्तोऽक्षर' इत्यादि श्रुतिस्मृतिपुराणविरोधः । तस्मात्परमार्थत एव शब्दाविषयं ब्रह्म । तथा शब्दादीनामेवाभावात्कथं पुनस्तद्वेद्यत्वं ब्रह्मणः प्रसज्येत ? व्यवहारतस्तु शब्दविषयमेव- शास्त्रयोनित्वाद्ब्रह्मणः । अविद्यया कल्पितं हि ब्रह्मणि शास्त्रं यथा तथा शास्त्रवेद्यत्वमपि कल्पितमतएव ब्रह्मणो ज्ञेयत्वमुपचारादित्युक्तम् ।

तस्माद्व्यवहारदशायां शब्दप्रतिपाद्यमेव ब्रह्म । अथवा शब्दैर्ब्रह्म इदमीदृशमिति प्रतिपादयितुं न शक्यते- निर्विशेषत्वादित्यभिप्रायेण ब्रह्म न शब्दप्रतिपाद्यमित्युक्तं, नतु ब्रह्मादिशब्दाविषयत्वादिति संक्षेपः ।

वस्तुतस्तु श्रुतिस्मृत्यादिविरोधा अशनय इव पतन्ति परेषामेव शिरस्सु । तथाहि- 'ऐतदात्म्यमिदं सर्वं, स आत्मा, तत्त्वमसि', 'नान्योऽतोऽस्ति द्रष्टा', 'अयमात्मा ब्रह्म', 'प्रज्ञानं ब्रह्म', 'सच्चिदानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'निष्कलं निष्क्रियं शान्तं', 'साक्षी चेता केवलो निर्गुणश्च', 'एकमेवाद्वितीयं ब्रह्म', 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति', 'य उदरमन्तरं कुरुते, अथ तस्य भयं भवति', द्वितीयाद्वै भयं भवति', 'अशब्दमस्पर्शमरूपमव्ययम्', 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः', 'असङ्गो ह्ययं पुरुषः', 'यत्र नान्यत्पश्यति नान्यत्

श्रृणोति नान्यद्विजानाति स भूमा यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्', 'नेह नानास्ति किंच' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्', 'स सोम्येदमग्र आसीत्', 'ब्रह्मैवेदममृतं पुरस्तात्', 'यत्तदद्रेश्यमग्राह्यम्', 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते', 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्यादि श्रुतयः, 'अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः', 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि', 'क्षेत्रज्ञं चापि मां विद्धि', 'ज्ञानी त्वात्मैव मे मतम्', 'वासुदेवस्सर्वमिति', 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्', 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योयमुच्यते', 'भूतभृन्नच भूतस्थो भूतात्मा भूतभावनः' 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः', 'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः, शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते', 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः', 'अहमेवासमेकोऽग्रे नान्यद्यत्सदसत्परम्', 'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः, लीलया वापि युज्येरन् निर्गुणस्य गुणाः क्रियाः', 'सेयं भगवतो माया यन्न येन विरुद्ध्यते, ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्', 'यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः, दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः', 'देशतः कालतो योऽसावस्थातः स्वतोऽन्यतः, अविलुप्तावबोधात्मा स युज्येताजया कथम्' इति स्मृत्यादयश्च परमेश्वरं प्रकृत्यादिसङ्गरहितं ब्रुवन्तीति चिदचिद्विशिष्टेश्वरवादविरोधः। गुणक्रियादिरहितं ब्रुवन्तीति सगुणकर्त्रीश्वरवादविरोधः। जीवेश्वराभेदं ब्रुवन्तीति तद्भेदवादविरोधः । एकमात्मानं ब्रुवन्तीति नानात्मवादविरोधः। अद्वितीयं ब्रह्म ब्रुवन्तीति प्रकृतिपुरुषेश्वरत्रयनित्यत्ववादविरोधः। ब्रह्म सत्यं जगन्मिथ्येति ब्रुवन्तीति जगत्सत्यत्ववादविरोधः। चिद्रूपमेवेश्वरं ब्रुवन्तीति चिद्विशिष्टेश्वरवादविरोधः। ज्ञानानन्दस्वरूपमेवात्मानं ब्रुवन्तीति ज्ञानानन्दगुणकेश्वरवादविरोधः। कालत्रयेऽपीशितव्याभावं ब्रुवन्तीतीश्वरनियन्तृत्ववादविरोधः। ब्रह्मणोऽज्ञेयत्वं ब्रुवन्तीति ज्ञेयत्ववादविरोधः। ईश्वरस्यैवाज्ञानेन संसारित्वं ब्रुवन्तीति बद्धमुक्तजीवद्वयाभ्युपगमविरोधः। एवमादयश्शतशस्सहस्रशो वा सन्तीत्यलम्।

न्यायविरोधस्तु अद्वितीयादिशब्दानां स्वसमानद्वितीयवस्तुरहितत्वाद्यपार्थकल्पनादिभिः स्फुट एव। स्ववचनविरोधस्तु- एकमेवाद्वितीयमसङ्गं च ब्रह्म प्रकृतिपुरुषविशिष्टं, ज्ञानगुणक ईश्वरो ज्ञानस्वरूपः, आनन्दगुणक ईश्वर आनन्दस्वरूपः, अविक्रिय ईश्वरो जगद्रूपेण परिणतः, जीवरूप ईश्वरो जीवान्तरः, द्रष्टेश्वरो भक्तदृग्गोचरः, अनित्यं जगत्सत्यं, नित्यो जीवस्संसारी, सच्चिदानन्दात्मक ईश्वरस्सचिदानन्दः, चिद्रूपो जीवश्चिद्रूपेश्वरस्य शरीरं, अज्ञो जीवो ज्ञानरूपः, अणुर्जीवस्सर्वगः परिच्छिन्नो जीवो नित्य एवमादिः। एवं विरुद्धत्वादुपेक्ष्यं परेषां मतम्।

ननु श्रुत्याद्यविरुद्धमेवास्माकं दर्शनं, तथाहि- 'अस्मान्मायी सृजते विश्वमेतदस्मिंश्चान्यो मायया सन्निरुद्धः', 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्', 'क्षरं प्रधानममृताक्षरं हरः', 'क्षरात्मानावीशते देव एकः', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्', 'ज्ञा

द्वावजावीशनीशौ', 'नित्यो नित्यानां चेतनश्चेतनानाम्', 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति', 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति', 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीँ सरूपां, अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः', 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी', 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः', 'जुष्टं यदा पश्यत्यन्यमस्य महिमानमिति वीतशोकः', 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्यात्मा शरीरम्', योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद', 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः', 'अन्तःप्रविष्टश्शास्ता जनानाँ सर्वात्मा', 'तदैक्षत बहु स्यां प्रजायेय', 'तत्तेजोऽसृजत', 'सोऽकामयत', 'स तपोऽतप्यत', 'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्याद्याः श्रुतयः, 'प्रकृतिं विद्धि मे परां जीवभूताम्', 'सर्वभूतानि कौन्तेय! प्रकृतिं यान्ति मामिकाम्', 'मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्' इति स्मृतयः जीवेश्वरभेदादौ प्रमाणमितिचेत्, मैवम्—श्रुतीनां स्मृतीनां च त्वया कल्पितत्वाद्विरुद्धार्थस्य ।

तथाहि- 'अस्मान्मायी सृजत' इति श्रुतेः मायी ईश्वरो जगत्सृजति, अन्यो जीवस्तु मायया जगति निरुद्ध इति हि त्वयोच्यते- 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवा'णीति श्रुत्यन्तराव् । 'ममैवांशो जीवलोके जीवभूतस्सनातन' इति स्मृतेश्च । ईश्वरांशो जीव इति तावदविरुद्धम् । ईश्वरस्य जगत्स्रष्टृत्वे तदंशस्य तत्र सन्निरोध इति तु विरुद्धम् । नह्यंशिन ईश्वरादन्यो भवितुमर्हत्यंशो जीवः । एवं सर्वांशसमष्टेरेवांशीश्वरत्वेन सर्वजीवसंसारोऽपीश्वरस्य प्राप्तः । नचांशादन्य एवांशीति वाच्यं, काप्यंशिनोऽन्यस्यांशस्यादर्शनात् । नचैवमीश्वरादनन्य एव जीवः, किंतु जीवादेवेश्वरोऽन्य इति वाच्यं, तथा सति ईश्वरादनन्यत्वेन जीवस्याप्यसंसारित्वसर्वज्ञत्वादिप्रसङ्गात् । किंच चिदचिद्विशिष्टेश्वरस्यांशोऽपि चिदचिद्विशिष्ट एव भवितुमर्हति । नचेष्टापत्तिः- चिदेव जीव इति तवाभ्युपगमात् । नच चिदचिद्विशिष्टेश्वरस्य यश्चिदंशः स जीव इति वाच्यं, तथा सति अचितोपीश्वरांशापत्तेः । ईश्वरात्सकाशाच्चितोऽचितश्च पृथक्करणे ईश्वरस्यैवासिद्धेः । नच चिदचिदीश्वरनामकं पदार्थत्रयमस्तीति वाच्यं, तर्हीश्वरांशो जीवो नैव भवेत्- चिदचिद्विलक्षणत्वादीश्वरस्य ।

अपिच किमीश्वरः चिद्रूपः? यद्वा अचिद्रूपः? अथवा चिदचिद्रूपः? अथवा चिदचिदनिर्वाच्यः? नाद्यः- जीवत्वापत्तेः । न द्वितीयः- जडत्वापत्तेः । न तृतीयः- एकस्योभयरूपत्वायोगात् । न चतुर्थः- मिथ्यात्वापत्तेः । चित्त्वेनाचित्त्वेन वा अनिर्वाच्यं वस्तु हि मिथ्याभूतमेव । अथवा शशशृङ्गादिवदसदेव । तादृशवस्तुनोऽसम्भवात् । सच्चिदानन्दं ब्रह्मेत्यादिश्रुतिविरोधाच्चेश्वरस्य चिदचिद्विलक्षणत्वासिद्धिः । नचेश्वरस्य ज्ञातृत्वाच्चितो ज्ञानत्वाच्च न चिद्रूप ईश्वरः, किंतु चिद्युक्त इति वाच्यं,

तर्हि जीवस्यापि चिद्युक्तत्वमेव स्याद्ज्ञातृत्वात् । नचेष्टापत्तिः- जीवेश्वरवैलक्षण्यासिद्धेः । तस्मादीश्व-
रांशस्य जीवस्येश्वरादन्यत्वमसिद्धम् । नहि महाकाशांशस्य घटाकाशस्य महाकाशादन्यत्वम् । तथा
ईश्वरादनन्यो जीवः कथं मायया सन्निरुद्ध्येत ? ईश्वरवत्तदंशोऽपि जीवो ह्यसंसारी भवितुमर्हति । मह-
काशवत्तदंशो घटाकाशो निर्लेपो न दृश्यते किम् । नचैवं कथं श्रुतेरर्थवत्त्वमिति वाच्यं, मायया जी-
ईश्वरादन्य इव सन्निरुद्ध इव च प्रतीयते, नतु वस्तुत इति तदर्थात् ।

एतेन ब्रह्मण एव जीवत्वमज्ञानादिति प्रलापो निर्मूलित' इति वेदान्तदेशिकप्रलापो निर्मूलितः
अज्ञानाद्गगनस्य नैल्यमिव रज्जोस्सर्पत्वमिव स्वपतो देशान्तरगन्तृत्वमिव ब्रह्मणो जीवत्वमुपपद्यत इ-
मायायां सर्वसम्भवादिति न्यायात् । नचेश्वरे कथमज्ञानमिति वाच्यं, एवंविधजीवत्वादिभ्रमजननशक्ते-
रेवाज्ञानत्वात् । एवं शक्तिमत्त्वादेव मायीत्युच्यत ईश्वरः ।

ननु कस्य भ्रम इति चेद्यस्यास्ति तस्यैव । ममैवास्तीतिचेत्तर्हि तवैवास्तु । कथमीश्वरांशस्य
मम जीवस्य भ्रम इति चेत्स्वस्येश्वरांशत्वापरिज्ञानादेव । ननु जीवत्वभ्रमादीश्वरांशत्वापरिज्ञानं, तदपरि-
ज्ञानाज्जीवत्वभ्रम इत्यन्योन्याश्रय इतिचेत् , मैवम्—अनादित्वात् । ननु मायानाम प्रकृतिरेव नार्था-
न्तरमिति चेत्सैव प्रकृतिरज्ञानमज्ञानस्यैव जगदुपादानत्वात् ।

ननु क्षरं प्रधानमक्षरः पुरुषस्तयोः पतिरीश्वर इति क्षरं प्रधानमिति श्रुत्योच्यत इति परस्पर-
विलक्षणं त्रयमिति चेत्, मैवम्—भोक्तुर्विकारिणो जीवस्याक्षरत्वायोगात् । भोक्ता हि भोगसिद्ध्य-
सिद्धिनाशादिना विक्रियते । 'कूटस्थोऽक्षर उच्यत' इत्यविक्रियो ह्यक्षरः । सविक्रियो नश्यति घटादे-
स्सविकारस्य नाशदर्शनादक्षरस्त्वविनाशीति कथं भोक्तुरक्षरत्वं प्रकृतिपुरुषयोर्नित्यत्वेन प्रधानस्य क-
वा क्षरत्वम् ? क्षरति नश्यतीति हि क्षरं तस्मात्प्रधानपरिणामभूतं देहादिकं क्षरं- 'क्षरस्सर्वाणि भूता-
नीति स्मरणात् । सर्वेषां भूतानां प्रधाने लयदर्शनात्प्रधानमक्षरं, क्षेत्रज्ञ ईश्वरस्तु- 'एको देव' इति
बोध्यम् । यद्वा ज्ञाननाश्यत्वात्प्रकृतिः क्षरं, हरः परमात्मा अक्षरं, क्षरात्मानावित्यत्रात्मशब्दस्तु-
प्रकृतिवाची क्षरशब्दो भूतवाची ।

नच प्रकृतावात्मशब्दप्रयोगे विवदितव्यं; स्वभावे आत्मशब्दप्रयोगात् । स्वभावस्यैव प्रकृति-
त्वाच्च । ईश्वरस्य स्वभावो हि प्रकृतिः । नच 'प्रधानक्षेत्रज्ञपति'रिति श्रुत्यन्तरात्क्षरात्मानौ प्रधानक्षेत्रज्ञा-
वेवेश्वरस्यैव तत्पतित्वमिति वाच्यं, प्रधानक्षेत्रज्ञपतिरिति श्रुतौ प्रधानशब्दः प्रकृतिवाची, क्षेत्रज्ञशब्द-
भूतशब्दवाचीत्यभ्युपगमात् । सचेतनानि हि भूतानि क्षेत्रं जानन्ति आत्मचैतन्यप्रतिफलनवशात् । नच
'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इति गीताविरोधः, यस्य ज्ञातृत्वमेकमेवास्ति न ज्ञेयत्वं स एव क्षेत्रज्ञ
इति वादात् । ब्रह्मादिभूतानि तु घटादिकं जानन्त्यपि ज्ञायन्त एवात्मना साक्षिणेति न मुख्यं
ज्ञातृत्वं तेषाम् ।

यद्वा यस्स्वयमेव जानाति स क्षेत्रज्ञः । भूतानि तु न स्वतो ज्ञातुं क्षमन्ते- जडत्वात् । कि-

त्वात्मप्रतिफलनवशादेवेति न क्षेत्रज्ञत्वं भूतानाम् । तस्माच्छ्रुतौ क्षेत्रज्ञशब्दो भूतपर एव । कूटस्थ आत्मा क्षेत्रज्ञस्तु गुणेशत्वान्निर्गुणश्च । नहि गुणानामीशो गुणवान्भवेत् । एवं निर्गुणत्वादेवाविक्रियः क्षेत्रज्ञ आत्मा ।

ननु गुणेश ईश्वर एव, न त्वात्मा- आत्मेश्वरमिति श्रुत्यन्तरादिति चेत्, मैवम्—आत्मनः प्रकृतेरीश्वर आत्मेश्वर इति तदर्थात् । आत्मा चेश्वरश्चात्मेश्वर इति वा । कथमन्यथा- 'अहमात्मा गुडाकेश!' इति स्मरणादात्मन एव सत ईश्वरस्य भवेदात्मेश्वरत्वमुपपन्नम् ।

ननु जीव आत्मा, ईश्वरस्तु- परमात्मा । अज्ञो जीवः, प्राज्ञ ईश्वरः । परतन्त्रो जीवः, स्वतन्त्र ईश्वरः । तथाच श्रुतिः- 'ज्ञाज्ञौ द्वा वजावीशनीशाविति' इति चेत्, मैवम्—यः प्रकृतिविविक्तमात्मानं वेत्ति स विद्वानात्मज्ञः, य स्तं न जानाति सोऽज्ञः- आत्मविद एवात्मत्वात्स ईशः, अनात्मविदस्तु संसारित्वात्सोऽनीशः । उभावप्यजावेव अनात्मविदः प्रमातुरपि वस्तुत आत्मत्वात् । अनात्मतादात्म्याध्यासतदभावप्रयुक्तभेदेन तु द्वावित्युक्तं न त्वात्मभेदात् ।

नन्वात्मभेदोऽस्त्येव- 'नित्यो नित्याना'मिति श्रुतेः । तथा जीवेश्वरभेदोऽप्यस्ति- 'एको बहूनां यो विदधाति कामा' निति तत्रैव दर्शनादिति चेत्, मैवम्—कार्यकरणसङ्घाताभिमानिनां ब्रह्मादिस्तम्बपर्यन्तानां प्रमातॄणां वस्तुत आत्मत्वेन नित्यत्वान्नित्यानामित्युक्तं, व्यवहारतो बहुत्वाद्बहूनामित्युक्तम् । तेषां हि कामप्रदः क्षेत्रज्ञ ईश्वर आत्मैक एव । यद्वा कामप्रद ईश्वरोऽप्यत्र प्रमातैव—तस्य चात्मत्वेन नित्यत्वं, व्यवहारतो हि जीववदीश्वरः प्रमाता परमार्थतस्त्वीश्वरवज्जीव आत्मेति सिद्धान्तात् ।

ननु जीवो भोक्ता, प्रधानं भोग्यमीश्वरः प्रेरिता, पृथगीश्वरज्ञानादेव मुक्तिरिति भोक्ता भोग्यं प्रेरितारं चेत्यादि श्रुतिसिद्धमिति चेत्, मैवम्—अन्तःकरणतादात्म्याध्यासापन्नस्य प्रमातुर्भोक्तृत्वादात्मन एवायस्कान्तशिलालोहन्यायेनाविक्रियस्यैव प्रेरकत्वात् । भिन्नात्मज्ञानस्य भयादिहेतुत्वस्य श्रुतिसिद्धत्वेन भिन्नात्मज्ञानं मोक्षहेतुरित्यर्थवर्णनस्यायुक्तत्वात् । स्वस्माद्भिन्नमीश्वरं सर्वेऽपि मूर्खाः परोक्षत्वेन जानन्तीति तेषामपि तेन मोक्षप्रसङ्गात् । अपरोक्षत्वेन ज्ञानं तु न सम्भवति, द्रष्टुरीश्वरस्य जीवदृश्यत्वासम्भवात् । अपरोक्षेण परमात्मदर्शने सत्यपि राजदर्शनेन प्राकृतस्येव न दुःखनिवृत्तिः, किंतु तापातिशय एव- स्वस्मादुत्कृष्टदर्शनस्य तापहेतुत्वात् । नह्यसंसारीश्वरदर्शनेन जीवस्य स्यात्संसारनिवृत्तिः । नचार्थिना दृष्टो याचितश्च राजा यथा तस्य धनादिकं ददाति, तथा जीवेन दृष्टस्सेवितो याचितश्चेश्वरस्तस्य मोक्षं दिशतीति वाच्यं, मोक्षस्य देयत्वेन साध्यत्वेऽनित्यत्वप्रसङ्गात् । अविक्रियस्य चेश्वरस्य दातृत्वायोगात् । दातृत्वं हि विकारः ।

ननु साक्षिण ईश्वराद्भिन्न एव भोक्ता जीवः- 'तयोरन्य' इतिश्रुतेरिति चेत्, मैवम्—त्वया जीवत्वेनाभिमतस्य प्रमातुरेव भोक्तृत्वं, न त्वात्मनः- आत्मा हि साक्षी स एवेह अन्यःस्वनश्नन्नभि चाक-

शीतीत्युच्यते । असावेवात्मा प्रमातुस्स्वरूपमिति वस्तुत आत्मभूत एव प्रमाता । कथमन्यथा साक्षि
अनुभूतानां स्वापाज्ञानानन्दानां प्रमात्रा स्मर्यमाणत्वं सुखमहमस्वाप्सं न किंचिदवेदिषमिति ।

ननु न क्षेत्रज्ञ आत्मा साक्षी- सुषुप्तिमूर्छाप्रलयेषु तस्यात्यन्तमज्ञत्वेन साक्षित्वासम्भवादिति चे
मैवम्—अनुभवपूर्वकत्वेन स्मरणस्य दर्शितस्मरणेनानुभवस्य कल्प्यमानत्वात् । नच भ्रान्तिसिद्ध
तदज्ञानं सुखमहमस्वाप्समितीति वाच्यं, सुषुप्तौ तवाज्ञत्वं किं त्वया वेद्यते ? उतान्येन ? न त्वया
ज्ञानाभावात् । नान्येन- अन्यस्याभावात् । 'यत्र सर्वमात्मैवाभूत्तत्र केन कं पश्ये' दिति श्रुत्या सु
प्त्यादिषु सर्वद्वैताभावो हि प्रोच्यते । नचेश्वरेण वेद्यत इति वाच्यं, कथं तत्त्वया ज्ञातुं शक्यते
तस्मादसाक्षिकमिदमज्ञत्वमसिद्धमेव शशशृङ्गादिवत् । तथा सुषुप्तिरप्यसिद्धैव स्यात्तस्या अपि साक्षिणो
भावात् । तवासाक्षित्वाच्च । किंच सुप्तादुत्थितो भवान् केनचिदसुप्तेन किं त्वयैतावन्तं कालमनुभू
मिति पृष्टः किमुत्तरं ब्रूते ? न किंचिदपीति ब्रूषे त्वम् । तच्चोत्तरमयुक्तं स्यात्, यत्किञ्चिद्ज्ञानं
नास्तीत्याकारकज्ञानस्याप्यज्ञस्य तवायोगात् । तस्मात्स्वापादिषु तवाज्ञानाद्यनुभवोऽस्त्येवेति साक्ष्येवात्मा
साक्षिरूपेणानुभूतस्याज्ञानादेस्तव साक्षिणोऽन्यस्य प्रमातुः स्मरणायोगात्प्रमाता साक्षिणो नात्यन्तं भिन्न
नाप्यभिन्नः- प्रमातृसाक्षिणोरसंसारतदभावप्रयुक्तभेददर्शनात् । एवं साक्षिणस्सकाशाद्भिन्नत्वेनाभिन्नत्वे
वा प्रमातुर्दुर्वचत्वान्मिथ्यात्वमेव । अज्ञानेन तु साक्षिण्यात्मनि कल्पितं प्रमातृत्वम् । अत एव अज्ञ
संसरति, ज्ञानी तु नेतीममर्थमाह श्रुतिः- 'अजामेका'मिति ।

नच जीवः प्रकृतिं जुषमाणस्संसरतीश्वरस्तु भुक्तभोगां तां जहातीति श्रुत्यर्थ इति वाच्यं, ईश्व
रस्य नित्यमुक्तत्वेन पूर्वं प्रकृतिभोगात्संसार इति वक्तुमयुक्तत्वात् । प्रकृतिभोगाभावे भुक्तभोगामि
वचनविरोधात् । प्रकृतिं भुञ्जानस्य बद्धस्येश्वरस्य मोचकान्तराभावेन मुक्त्यभावप्रसङ्गात् । नच जी
भुक्तभोगामिति वाच्यं, भुक्तेति भूतार्थक्तप्रत्ययश्रवणात् । जीवा इदानीमपि प्रकृतिं भुञ्जते हि । तस्मा
द्विद्वदविद्वत्परैवेयं श्रुतिः । विद्वान् हि विद्योदयात्प्राक्प्रकृतिं भुक्त्वा विद्योदयानन्तरं जहातीति
नचैकस्यैवात्मनः कथं विद्वदविद्वद्भेद इति वाच्यं, प्रमातृभेदप्रयुक्तत्वात्तद्व्यवहारस्य । अथवा उपाधि
भेदादिति ।

ननु विदुषापि कथं प्रकृतिस्त्यक्तुं शक्यते ? अन्ताभावात् । तथा च श्रुतिः- 'गौरनाद्यन्तवती'
इति चेत्, मैवम्—यावद्व्यवहारं यावद्विद्योदयं वा तस्या अन्ताभावस्य विवक्षितत्वात् । 'ज्ञानेन
तदज्ञानं येषां नाशितमात्मन' इत्यज्ञानस्य ज्ञाननाश्यत्वस्मरणात् । ज्ञानाज्ञानविरोधस्य सम्मतत्वाच्च
नच ज्ञानाभाव एवाज्ञानमिति वाच्यं, अहं ज्ञानाभाववानिति प्रतीत्यभावात् । ज्ञानाभावस्याभावरूपत्वे
ज्ञानावरणतायोगात् । नच तेजोऽभावरूपस्य तमस इवावरणत्वं सम्भवतीति वाच्यं, तमसोऽपि भावरूपत्वा
भ्युपगमात् । तमो द्रव्यमावरकत्वात्कुड्यादिवदित्यनुमानात् । अन्धकारस्य चक्षुर्ग्राह्यत्वाच्च घटवत्
नच घटाभावोऽपि चक्षुर्ग्राह्य एवेति वाच्यं, घटाभावाधिकरणस्य भूतलस्यैव चक्षुर्ग्राह्यत्वात् । तस्मा
तमोवदज्ञानं भावरूपमेव । अत एव 'अज्ञानेनावृतं ज्ञान'मित्यादि सङ्गच्छते ।

ननु 'अजो ह्येक' इति श्रुतेर्विद्वदविद्वद्विषयत्वस्य वक्तुं शक्यत्वेऽपि समाने वृक्षे इति श्रुतेः तत्त्वं वक्तुमशक्यं- समान इति दर्शनात् । समानो हि वृक्ष एकं शरीरम् । तत्र निमग्नः पुरुषो जीवो मुह्यमानोऽसामर्थ्याच्छोचति ईश्वरं तन्महिमानं च यदा पश्यति तदा जीवो वीतशोको भवतीतिश्रुत्यर्थोदतो जीवेश्वरौ भिन्नावेवेतिचेत्, मैवम्—प्रमातृसाक्षिपरत्वादेतच्छ्रुतेः । प्रमाता हि शरीरतादात्म्याध्यासं प्रपद्य शरीरे निमग्नः, साक्षी तु तदभावादनिमग्नः । सुषुप्तौ साक्षिणो नहि शरीरतादात्म्याध्यासो दृश्यते, तद्वज्जागरस्वप्नयोरपीति मन्तव्यम् । अविकारित्वेन ज्ञातृत्वस्यैव साक्षिलक्षणत्वात् । जागरादावपि वृत्त्यभावदशायां साक्षिस्वरूपं बोद्धुं शक्यमेवासंसारित्वरूपम् । अयं च साक्षिप्रमातुरात्मैव । ततश्च यदा प्रमाता अहं ब्रह्मास्मीतिविद्याबलादात्मानं साक्षिणं स्वयम्प्रकाशत्वादिरूपं तन्महिमानं च पश्यति, तदा नाहं संसारी मम साक्षित्वादिति निश्चित्य वीतशोको भवति । ननु स्वान्येश्वरज्ञानात्त्वस्य संसारनिवृत्तिः- रङ्गनायकाद्यर्चादर्शनेन संसारनिवृत्त्यदर्शनात् । तव मते अर्चा अपीश्वरस्वरूपभूता हि । तस्मान्नेयं श्रुतिर्जीवेश्वरभेदं साधयितुं क्षमते ।

नन्वेवं य आत्मनि तिष्ठन्नित्यन्तर्यामिब्राह्मणं भेदं साधयतीति चेन्मैवमपि—आत्मशब्दस्य तत्र बुद्ध्याद्यन्यार्थत्वात् । नच साक्षिपर एवेति वाच्यं, साक्षिण एव सर्वान्तरत्वेन सर्वात्मभूतत्वात्साक्षिण आन्तरस्यान्यस्य साक्षिणोऽदर्शनात् । तत्कल्पने तस्याप्यन्यस्साक्षी तस्याप्यन्यस्साक्षी कल्प्येतेत्यनवस्थादोषात् । 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुत्या साक्ष्यन्तरनिषेधात् । साक्षी चेतेति श्रुत्या ईश्वरस्यैव साक्षित्ववचनान्न साक्षिणः पर ईश्वरः, किंतु साक्षी क्षेत्रज्ञ एवेश्वरः । नचेश्वर एव साक्षी, नतु क्षेत्रज्ञ इति वाच्यं, असाक्षिणः क्षेत्रज्ञत्वायोगात् । नहि स्वविकारं स्वयं पश्येत् । अतः प्रमातुर्विकारिणः स्वविकारदर्शनासम्भवात्प्रमातृविकाराभिज्ञः प्रमातुरन्य एव क्षेत्रज्ञस्साक्षीति ।

ननु जीवसाक्षिणः परिच्छिन्नस्याक्षरादिसर्वान्तरात्मत्वं न सम्भवति । तस्मात्सर्वभूतान्तरात्मा नारायण एव, नतु साक्षी क्षेत्रज्ञ इति चेत्, मैवमपि—'चेतनाचेतनभिदा कूटस्थात्मकृता नहि । किंतु बुद्धिकृताभासकृतैवेत्यवगम्यता'मितिवचनादचेतनेष्वपि साक्ष्यस्त्येव, प्रमाता तु नास्ति । तथाच प्रमातैव परिच्छिन्नः, साक्षी तु पूर्ण एव । अत एवायमेकः साक्षिभेदे मानाभावात् । ज्ञातृत्वादेव देवः स्वयम्प्रकाशः सर्वप्रमात्रन्तर्यामित्वान्नारायणश्च । देहेषु मृतेष्वपि प्रमातारो न रीयन्ते न क्षीयन्त इति नरास्सर्वभूतानि तेषां समूहो नारं तदयनं स्थानं यस्य स नारायण इति व्युत्पत्तेः । एवं सर्वत्रावस्थितस्यापि साक्षिणस्सर्वेण सह सङ्गाभावादाकाशवदपहतपाप्मत्वम् । पाप्मशब्दस्सर्वविकारोपलक्षकः—विकाराणां दोषत्वात्पाप्मत्वमिति ।

नन्वेवं साक्षिणस्सर्वशासनं न घटते- ईश्वरधर्मत्वाच्छासनस्य । साक्षिणश्चाविक्रियत्वादितिचेत्समानोऽयं दोषस्तवापि । साक्षी चेतेतिश्रुतिप्रामाण्यादीश्वरस्य साक्षित्वं त्वयाभ्युपगतमेवेति कथमीश्वरस्यापि साक्षिणश्शासनसम्भव इति । तर्हि कथं श्रुत्युपपत्तिरिति यदि ब्रूयादस्मदीयस्तर्हि ब्रूमः—

अयस्कान्तशिलालोहन्यायेनाविक्रियस्यैव साक्षिणश्शास्तृत्वोपपत्तिरिति । गमनादिविक्रियारहितैव ह्य- स्कान्तशिला लोहमाकर्षति । तस्मा'दन्तःप्रविष्टश्शास्ता जनाना'मिति श्रुतिरपि साक्षिपरैव । तस्य सर्वात्मत्वात् । सर्वेषां प्रमातॄणां जनानामात्मा हि सः । एवं शास्तृत्वादेव साक्षिण ईश्वरशब्दवाच्य- मपि सङ्गच्छते ।

नन्वस्य साक्षिणस्स्रष्टृत्वं नोपपद्यते- स्रष्टृत्वस्य सङ्कल्पपूर्वकत्वात्सङ्कल्पस्य मनोधर्मत्वात्साक्षि- मनोऽभावादितिचेत्समानोऽयं दोषस्तवापि । नहीश्वरस्य मनोऽस्ति- महाभूतसत्त्वांशप्रकृतिकस्य मन- कथं महाभूतसृष्टेः प्राक्सत्त्वं स्यात् ? नचेश्वरस्य मायया सङ्कल्पोपपत्तिरिति वाच्यं, तथैव साक्षिणो तदुपपत्तेः । नच कथं ज्ञानस्वरूपस्य साक्षिणोऽज्ञानसम्बन्ध इति वाच्यं, यथा तवेश्वरस्य सर्वज्ञस्याज्ञा- सम्बन्धस्तथैवेति । साक्षिस्वरूपभूतज्ञानस्याज्ञानाविरोधित्वात्प्रत्युताज्ञानस्यापि भासकत्वात्साक्षिणोऽप्यज्ञा- सम्बन्ध इत्यस्मदीयान्प्रत्युत्तरम् । सच साक्ष्यज्ञानयोस्सम्बन्धः जगद्रूपकार्यान्यथानुपपत्त्या कल्पित एवे न वस्तुतोऽस्ति- जगत एव वस्तुतोऽभावात् । अत एवासङ्गाद्वितीयत्वमात्मनः । नच पारमार्थिकमे जगदिति वाच्यं, सुषुप्तिप्रलयादावसत्त्वात् । नच सूक्ष्मरूपेण प्रलयादावप्यस्तीति वाच्यं, सु- सूक्ष्मरूपेणाप्यसत्त्वात् । नच किं तत्र मानमिति वाच्यं, 'यत्र सर्वमात्मैवाभूत्तत्र केन कं पश्ये- दित्यादिश्रुतेरेव प्रमाणत्वात् । नच सुषुप्तौ अज्ञानादिकमस्त्येवेति तथैव मुक्तावपीति कल्प्यत इ- वाच्यं, मुक्तावज्ञानसत्त्वे सुप्तवन्मुक्तस्यापि पुनरावृत्तिप्रसङ्गात् ।

ननु सुप्तदृष्ट्या जगत इव मुक्तदृष्ट्या अज्ञानस्याप्यभावेऽपि तदितरदृष्ट्या तदस्त्येवेति क- मज्ञानाभाव इति चेत्, मैवम्—मुक्तदृष्ट्या अज्ञानाभावस्यैव अस्माभिरुच्यमानत्वात् । वस्तुत यदेव मुक्तदृष्ट्यास्ति तदेव सर्वदाप्यस्ति मुक्तस्य विद्वत्त्वात् । न ह्यविदुषो मुक्तिः, विदुषश्चात्मत- न्मुक्त आत्मैव । तद्दृष्ट्या तु किमपि नास्त्येव- आत्मन एकस्यैव सत्त्वात्तस्मात्कालत्रयेऽपि परमार्थे जगदज्ञानं वा नास्त्येव, तत्प्रतीतिस्तु मिथ्यैव । अत एव ब्रह्मण एकत्वाद्युपपत्तिः ।

ननु निर्गुणस्य साक्षिणः कामायोगा'त्सोऽकामयते'तिश्रुतिस्सगुणमीश्वरं ब्रूत इति कृत्वा स- एवेश्वरः, नतु निर्गुणसाक्षी भवेदीश्वर इतिचेत्, मैवम्—निर्गुणस्यापि साक्षिणो मायया कामो- पत्तेः । यथा जीवस्य मनोधर्माः कामसङ्कल्पादयः तथा ईश्वरस्य मायाधर्माः कामादयः । मा- खल्वीश्वरस्साक्षी ।

ननु 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुत्युक्तोऽनुप्रवेशः पूर्णस्य साक्षिणो न घटत इति- त्समानोऽयं दोषस्तवापि पूर्णत्वेनाभिमतत्वादीश्वरस्य त्वया । नच जीवरूपेणेश्वरस्यानुप्रवेशस्सम्भवती- वाच्यं, जीवाद्विलक्षणस्येश्वरस्य जीवरूपानुप्रवेशासम्भवात् । नच अन्तर्यामिरूपेणानुप्रवेश इति वाच्यं प्रवेशात्प्रागेव तत्र सत्त्वादन्यथा अपूर्णत्वापत्तेः । अस्मदीयान्प्रति तु पूर्णस्यापि साक्षिणोऽन्तःकरणो- हितत्वेन रूपेणान्तःप्रवेशोपपत्तिरित्युत्तरम् । नच अन्तःकरणोपहित एव साक्षीति वाच्यं, अन्तःकर-

णोपहितोऽपि साक्षीति वक्तव्यम् । अविद्योपहितस्य अथवा मायोपहितस्यापि साक्षित्वात् । अविद्येति मायेति च पर्यायशब्दौ । नच अविद्योपहितस्य कथमन्तःकरणोपहितत्वमिति वाच्यं, मठोपहितस्याप्याकाशस्य मठान्तस्थघटोपहितत्वदर्शनात् । नच अविद्यान्तःकरणभेदात्तदुपहितयोरपि भेद इति वाच्यं, औपाधिकभेदस्याप्रयोजकत्वात् । नहि घटमठभेदेऽप्याकाशो भिद्यते । नन्वन्तःकरणावच्छिन्नो जीवः, तदुपहितो जीवसाक्षी, मायावच्छिन्न ईश्वरस्तदुपहित ईश्वरसाक्षीति वेदान्तपरिभाषायां दृश्यत इतिचेत्तस्य मतान्तराभिप्रायत्वान्न तद्विरोधोऽस्य । 'साक्षी चे'तेति श्रुत्या ईश्वरस्यैवेह सक्षित्वेन प्रतिपादनान्नेश्वरादन्यः कश्चन साक्षी कल्प्यः, तस्यैव साक्षिणोऽन्तःकरणोपहितत्वसम्भवान्न साक्ष्यन्तरकल्पना युक्ता ।

नन्वेवं साक्ष्येकत्वे श्रुत्युपपत्तावपि नानुभवोपपत्तिः- देवदत्तयज्ञदत्तयोस्साक्ष्येकत्वे सति देवदत्तसाक्ष्यनुभूतस्वापादीनां देवदत्तप्रमात्रेव यज्ञदत्तप्रमात्रापि स्मर्यमाणत्वापत्तेरितिचेन्नयं दोषः—साक्षी यदन्तःकरणोपहितस्सन्यदनुभूतवान् तदन्तःकरणावच्छिन्नेनैव तत्स्मर्यत इति कल्पनेनादोषात् ।

ननु 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति कथं भूतपञ्चकात्मत्वं साक्षिणो ज्ञानस्वरूपस्य ? (वाय्वाकाशावमूर्तौ सच्छब्दवाच्यौ, तेजोजलपृथिव्यस्तु त्यच्छब्दवाच्या इति विवेकः) नच तव मतेऽप्यस्त्ययं दोष इति वाच्यं, मम मते ईश्वरस्य चिदचिद्विशिष्टत्वेनाचिदंशप्रयुक्तभूतात्मत्वसम्भवादिति चेन्मैवम्—साक्षिणोऽपि मायया जगदात्मत्वोपपत्तेः । स्थाणोः पुरुषात्मत्वस्य रज्जोस्सर्पात्मत्वस्य गगनस्य नीलात्मत्वस्य च दर्शनात् । नच अचिद्रूपमायायाः कथं चिति साक्षिणि सम्भव इति वाच्यं, चिच्छक्तेरेव मायात्वात् । हन्त ! तर्हि अचिद्विशिष्ट एव साक्षी कथं चिन्मात्र इति चेत्, मैवम्—'निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिव'दिति कार्यगम्याया मायाशक्तेरग्निशक्तिवन्मिथ्यात्वात् । नह्यग्नेः पृथगपृथग्वा अग्निशक्तिर्दृश्यते, नाप्यग्निशक्त्या सद्वितीयत्वमग्नेः । अग्निरेकः तच्छक्तिरन्येति पदार्थद्वयत्वेनाग्रहणात् । तद्वत्साक्षिणः पृथङ्मायाशक्तिरपीति । तस्मान्न मिथ्याभूतया मायया साक्षिणः स्याद्वैशिष्ट्यं गन्धर्वनगरेणेव गगनस्य । अतश्चिन्मात्र एव साक्षी ।

अत्रेदं रहस्यम्—रज्जुस्वरूपेऽज्ञाते सति सर्पभ्रमोदयवत्साक्षिस्वरूपसाक्षात्काराभावे जगद्भ्रमोदय इति हेतोस्साक्षी मायया जगत्सृजतीत्युच्यते, नतु वस्तुतस्साक्षी जगज्जनयति । अविक्रिये तस्मिन् स्रष्टृत्वायोगात् । अत एव न तत्र कापि माया विद्यते । सर्जनशक्तेरेव मायात्वात् । अत एव एकमेवाद्वितीयं ब्रह्मेति सजातीयविजातीयस्वगतभेदशून्यस्साक्षीत्युच्यते श्रुत्या । चेतनान्तराभावात्सजातीयभेदाभावः । अचेतनाभावाद्विजातीयभेदाभावः । वृद्ध्यादिविकाराभावात्स्वगतभेदाभाव इत्यद्वैतं ब्रह्म । तस्मिन्न कोऽपि जीवेश्वरादिभेदः प्रसञ्जयितुं शक्यते श्रुत्यादिविरोधादिति । प्रकृतिं विद्धीत्यादिस्मृतयस्तु शङ्कराचार्यैरेवाद्वैतपरतया व्याख्याता इति नेह तासां पुनर्व्याख्यानं क्रियते । तस्माच्छ्रुतयः स्मृतयो वा जीवेश्वरभेदादौ न प्रमाणं, किंत्वज्ञानमेकमेव ।

वस्तुतस्तु द्वैतिनां जीवेश्वरभेदवादिन्यः श्रुतयः प्रमाणमभेदवादिश्रुतयस्तु कण्ठपाशाः, अद्वैतिनां तु व्यवहारदशायां भेदश्रुतयः, परमार्थतस्त्वभेदश्रुतयश्च प्रमाणमिति न श्रुतिविरोधलेशोऽपि ।

विशिष्टाद्वैतिनां तु श्रुतिसामञ्जस्यं मनागपि नास्ति । विशिष्टाद्वैतस्य क्वापि श्रुतावदर्शनात् । एवंवि भेदाभेदश्रुतीनां परस्परविरोधपरिहाराय प्रवृत्तमस्मदीयं मतमिति ब्रुवाणा वैष्णवा अवैदिकैरेव सम्मान्या नच श्रुतिविरुद्धमपि न्यायाविरुद्धमस्मद्दर्शनमिति वाच्यं, विशिष्टत्वद्वैतत्वयोरेकत्वासम्भवेन विशिष्टाद्वै शब्दप्रयोगस्यैवान्याय्यत्वात् । नच विशिष्टं च तदद्वैतं च विशिष्टाद्वैतमिति नास्माभिरुच्यते, किंतु विशिष्टयोरद्वैतमित्युच्यत इति वाच्यं, विशिष्टयोरभेदासम्भवात् । नहि दण्डविशिष्टपुरुषः पटविशि पुरुषादनन्यो भवेत् । नच सूक्ष्मचिदचिद्विशिष्टस्येश्वरस्य स्थूलचिदचिद्विशेष्टेश्वरस्य चाद्वैतमुच्यते स्माभिरिति वाच्यं, स्थूलसूक्ष्मयोः परस्परविरुद्धयोरद्वैतायोगात् । नच विशेषणांशपरित्यागेन विशेष स्यैक्यमुच्यत इति वाच्यं, अस्मन्मतप्रवेशप्रसङ्गात् । तत्त्वमसीत्यत्रैवमेव ह्यस्माभिरुच्यते । न वयं जीवेश्वरभेदं ब्रूमः, येन युष्मन्मतप्रवेशः स्यात् । किंतु ईश्वरस्यैवेति वाच्यं, ईश्वरस्यैक भेदप्रसक्तेरेवाभावेन तन्निषेधायोगात् । किंच श्रीरामपरशुरामयोरिव सूक्ष्मचिदचिद्विशिष्टस्थूलचिदचि द्विशिष्टयोर्द्वयोरुपलम्भे सति ईश्वरत्वेनाभेदश्शक्यते वक्तुं तयोः, न तथास्ति । प्रलयकाले सूक्ष्मोपाधे प्रपञ्चे स्थूलोपाधेश्चोपलम्भात् । नच य एव प्रलये सूक्ष्मोपाधिविशिष्टस्स एवाधुना स्थूलोपाधिविशि इत्युच्यते । यथा य एव पूर्वं दशरथादवतीर्णस्स एवेदानीं वसुदेवादितिवदिति वाच्यं, स्थूलसूक्ष्म रूपेणोपाधौ विक्रियमाणायामप्युपहितो नैव विक्रियत इत्यविकारीश्वरप्रतिपादनेनैवाभीष्टे सिद्धे विशिष्टा द्वैताख्याश्रौतमतान्तरकल्पनस्यायुक्तत्वात् । एवं य एव कीटशरीरगस्स एवेदानीं मनुष्यशरीरग इति जीवानामपि विशिष्टाद्वैतकल्पनप्रसङ्गादिति ।

यच्च रामानुजेनोक्तं—नास्मन्मते यः कश्चिदपि विरोधः, तथाहि- अनेन जीवेनात्मनानु प्रविश्येति जीवस्य यच्छ्रुतं ब्रह्मात्मकत्वं तदात्मशरीरभावनिबन्धनमेव । 'तदनुप्रविश्य सच्च त्यच्चाभव' दित्यनेनैकार्थ्यात् । कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमात्मैवेति कारण त्कार्यस्यानन्यतया एकविज्ञानेन सर्वविज्ञानं चोपपद्यते, सर्वे वाचकाश्शब्दाश्चिदचिद्विशिष्टपरमात्म वाचका इति सर्ववेदवेद्यत्वं मुख्यं ब्रह्मणस्सिद्ध्यति । स्थूलसूक्ष्मभेदाद्ब्रह्मैव चिदचिद्विशिष्टं कार्यं, कारण चेति सङ्घातस्योपादानत्वेऽपि चिदचिद्ब्रह्मणां न स्वभावसङ्करः । परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावादविकृतत्वमुपपन्नतरम् । स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुनः आत्म तयावस्थानात्कार्यत्वमप्युपपन्नं ब्रह्मणः । अवस्थान्तरापत्तिरेव हि कार्यता । निर्गुणवादश्च परस्य ब्रह्मणो हेयगुणसम्बन्धादुपपद्यते । ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञेश्वरस्य स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रकाश तया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । नेह नानास्तीत्यादिना तु अब्रह्मात्मकवस्तुनानात्वं प्रति षिध्यते । ब्रह्मण एव नानाप्रकारेणावस्थितत्वात् । एवं चिदचिदीश्वराणां स्वरूपस्वभाववैलक्षण्यं भेदाभेदवादोपपत्तिरिति ।

तत्सर्वं तुच्छं—तथाहि- 'अनेन जीवेनात्मनानुप्रविश्ये'तिश्रुतेर्जीवशरीरेणानुप्रविश्येति हि

तवाभिमतोऽर्थः । आत्मशब्दस्य शरीरवाचित्वदर्शनादिति तन्न सङ्गच्छते- चिदचिद्विशिष्टेश्वरस्य चिच्छरीरेण प्रवेशायोगात् ।

ननु ईश्वरस्य शरीरं चिदचिन्मिश्रमिति नास्माभिरुच्यते, किं तर्हि चिदेकं शरीरमचिदन्यच्छरीरमीश्वरस्येत्युच्यते इति चेन्नैतदपि युक्तम्—अचिदमिश्रितस्य चिन्मात्रस्येश्वरशरीरस्यादर्शनात् । जीवो ह्यन्तःकरणाद्यचिन्मिश्रितः । चिन्मिश्रितस्याचितो देहस्येश्वरशरीरत्वानुपपत्तेश्च ।

ननु ईश्वरस्य पाषाणादिकमचेतनं शरीरं, चेतनो जीवश्च शरीरं जीवशरीरत्वाद्देहश्च जीवद्वारा शरीरमिति चेन्नैतदपि युक्तम्—देहे स्वत ईश्वराभावप्रसङ्गात् । समाने वृक्ष इति श्रुत्या जीववदीश्वरस्यापि देहे सत्त्वश्रवणाच्च । जीवे देहादुत्क्रान्ते सति ईश्वरस्यापि जीवद्वारा उत्क्रान्तत्वेन मृते तस्मिन्नचेतने शरीरे ईश्वरासत्त्वेन सर्वमचिद्वस्त्वीश्वरशरीरमित्यभ्युपगमभङ्गप्रसङ्गाच्च । अथ, जीवे देहे मृदादौ चास्तीश्वर इति वर्णने देहे ईश्वरद्वयसत्त्वप्रसङ्गात् । देहे कश्चिदीश्वरः देहान्तस्थजीवे कश्चनेश्वर इति ।

ननु देहे पररूपेण जीवेऽन्तर्यामिरूपेण चास्तीश्वर इति चेन्नैतदपि युक्तम्—जीववदीश्वरस्यापि देहित्वप्रसङ्गात् । देहे वर्तमाने परे जीवो वर्तत इति जीवस्य परान्तर्यामित्वप्रसङ्गाच्च । किंच यदि चिदचिच्छरीरो भवेदीश्वरस्तर्हि चिदचित्पदार्था ईश्वरो न भवन्ति । तथाच दृश्यमानं चिदचिदात्मकं सर्वमपि जगदीश्वरो न भवति । नचेष्टापत्तिः- सर्वं ब्रह्मेति श्रुतिविरोधात् । वासुदेवस्सर्वमिति गीताविरोधात् । सर्वशरीरकं ब्रह्मेत्यर्थवर्णने तु सर्वशब्दे लक्षणास्वीकारदोषात् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुत्या जगतो बहिर्वर्तमानस्य ब्रह्मणः जगच्छरीरत्वाद्ब्रह्मशरीरकं जगदिति वक्तुं शक्यत्वात् । 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इति परमात्मनः श्रुत्युक्तपरिपूर्णत्वभङ्गप्रसङ्गाच्च । नहि ब्रह्मातिरिक्तस्य कृत्स्नस्य जगतः सत्त्वे ब्रह्मणः स्यात्पूर्णत्वम् । एवं चिदचिदात्मकस्य सर्वस्य जगतोऽब्रह्मत्वे कथं ब्रह्मणस्सर्वशब्दवाच्यत्वमपि भवेत् । सर्वशरीरत्वात्सर्वशब्दवाच्यत्वमिति तु न युक्तं- जीवे मनुष्यादिशब्दवाच्यत्वव्यवहारवदीश्वरे सर्वशब्दवाच्यत्वव्यवहारस्याप्यविवेकमूलत्वापत्तेः । नहि शरीराज्जीवं विविच्य जानन् कोऽपि विद्वान् जीवं मनुष्यं पशुं वा ब्रूयात् । नचैवमविवेकादेव सर्वशब्दवाच्यत्वमस्तीश्वरस्येति वाच्यं, 'वेदैश्च सर्वैरहमेव वेद्य' इति कथं सर्वज्ञेश्वरस्य स्वस्मिन् सर्वशब्दवेद्यत्वभ्रमः ? (वेदाः खलु शब्दात्मकाः) ।

किंच यदि घटपटादयस्सर्वे शब्दा ईश्वरमेव ब्रूयुस्तर्हि घटपटादिपदार्थवाचकशब्दानामेवाभावात्सर्वव्यवहारलोपप्रसङ्गः । घटशब्दस्य घटान्तर्यामिशब्दस्य चैकेश्वरवाचकत्वं विरुद्धम् । सर्वे वाचकाश्शब्दाश्चिदचिद्विशिष्टपरमात्मवाचका इति स्ववचोविरोधश्च । चिदचिद्विशिष्टसमासगतचिदचिच्छब्दयोः परमात्मवाचित्वे परमात्मविशिष्टपरमात्मेत्यपार्थप्रसङ्गात् । परमात्मावाचित्वे सर्वे शब्दाः परमात्मवाचका इत्यस्यासिद्धेः ।

किंच परमात्मवाचका इत्ययं शब्दः परमात्मानं वक्ति वा न वा? आद्ये- तस्य शब्दविशे णत्वासिद्धिः। द्वितीये- सर्वशब्दवाच्यत्वभङ्गप्रसङ्गः। अपिच अपरमात्मेति शब्दः परमात्मानं वक्ति वा न वा? आद्ये- नञ्समासविरोधः। द्वितीये- सर्वशब्दवाच्यत्वभङ्गप्रसङ्गः। किंच नास्तीति शब्द ईश्वरं ब्रूते वा न वा? आद्ये- ईश्वरस्य सद्रूपत्वासिद्धिः। द्वितीये- सर्वशब्दवाच्यत्वभङ्गप्रसङ्गः तथा शब्दावाच्य इति शब्द ईश्वरं ब्रूते वा न वा? आद्ये- शब्दवाच्यत्वविरोधः। द्वितीयेऽपि- एव। तथा चिच्छब्देनेश्वर उच्यते वा लक्ष्यते वा? नाद्यः- चितो जीवस्यानीश्वरत्वात्। अन्त्ये सर्वे शब्दाः परमात्मवाचका इत्यभ्युपगमविरोधः। तस्माच्चिदचिदादिशब्दानां तद्विशिष्टेश्वरे लक्षणैवावश्यं स्वीकर्तव्या। तस्मान्न मुख्यं सर्वशब्दवाच्यत्वमस्ति ब्रह्मणः। नापि शरीरशरीरिभाव निबन्धनं जीवस्य ब्रह्मात्मकत्वम्। नच 'सच्च त्यच्चाभव'दित्यनेनैकार्थ्यभङ्गप्रसङ्गः, मायया ईश्वरस्य जगद्रूपत्वसिद्धेः।

ननु जीवब्रह्मणोश्शरीरशरीरिभावनिबन्धनभेदासत्त्वे कथं मुख्याभेदः? कथं वा आत्मनेति श्रुत्युपपत्तिरिति चेदुच्यते—जीवब्रह्मणोस्सच्चिदानन्दरूपत्वान्मुख्य एवाभेदः। सति मुख्यस्याभेदस्य सम्भवे लाक्षणिकशरीरशरीरिभावादिप्रयुक्ताभेदकल्पनं चान्याय्यम्। आत्मनेत्यस्य तु शरीरेणेति नार्थः किंतु स्वरूपेणेति। जीवेन स्वरूपेण प्रविश्येत्यर्थः। अन्तःकरणोपहितत्वेन रूपेण प्रविश्येति यावत् अन्तःकरणोपहितचैतन्यस्यैव जीवत्वात्। परिपूर्णस्येश्वरस्य यदन्तःकरणोपहितत्वं तदेव जीवरूपानुप्रवेश इतीहोच्यते। नहि मुख्यः प्रवेशस्सम्भवति- प्रवेशात्प्रागेव तत्र सत्त्वात्पूर्णस्य चैतन्यस्य ब्रह्मण इति।

अथ यदुक्तं कार्यावस्थः कारणावस्थश्च परमात्मैवेति, तदयुक्तम्—परमात्मनोऽविक्रियस्या वस्थाऽयोगात्। सविक्रियस्य हि देहस्य बाल्याद्यवस्था दृष्टा नाविक्रियस्यात्मनः। नच स्वशरीरयो श्चिदचितोर्थे कार्यकारणावस्थे ते परमात्मन उच्येत इति वाच्यं, किं विवेकेनोच्येते यद्वा अविवेकेन नाद्यः- शरीरशरीरिविवेके सति शरीरावस्थानां शरीरिण्ययोगात्। द्वितीये तु- अविवेकमूल त्वद्वचनमप्रमाणमेव। नहि देहदेह्यविवेकप्रयुक्तः देही जीर्णो जातो मृत इति व्यवहारः प्रमाणं स्यात् नचैवमेकविज्ञानेन सर्वविज्ञानोपपत्तिः, सूक्ष्मचिदचिद्विशिष्टेश्वरज्ञानस्य स्थूलचिदचिद्विशिष्टेश्वरज्ञानवत्सर्व विज्ञानरूपत्वेनैकविज्ञानरूपत्वाभावात्। यद्वा स्थूलचिदचिद्विशिष्टेश्वरज्ञानस्य सूक्ष्मचिदचिद्विशिष्टेश्वरज्ञानव त्सर्वविज्ञानरूपत्वाभावादिति कारणज्ञानेन हि कार्यज्ञानं प्रतिज्ञायते। ईश्वरस्तु कारणमेवेति कथं तस्य कार्यत्वम्?

ननु सूक्ष्मयोश्चिदचितोः कारणत्वं, स्थूलयोस्तु कार्यत्वमिति चेन्मैवमपि—ईश्वरस्येश्वरं प्रति चिदचितोः चिदचितौ प्रति कारणत्वाद्ययोगात्। नहि पटः पटं प्रति तन्तुस्तन्तुं प्रति वा कारणं कार्यं वा स्यात्। नच स्थूलं वृक्षं प्रति सूक्ष्मस्य बीजस्य कारणत्ववत् स्थूलौ चिदचितौ प्रति सूक्ष्मचिदचितोः कारणत्वमिति वाच्यं, बीजांकुरयोरिव कार्यकारणयोर्नामभेदेन भवितव्यत्वात्प्रकृते चिदचितोरेव कार्य

त्वेन कारणत्वेन च नामभेदादर्शनात् । नहि सूक्ष्मावस्था मृत् स्थूलावस्थां मृदं प्रति कारणमिति कोऽपि वदेद् । किंतु घटं प्रति मृत्कारणमिति । रूपभेदनामभेदौ हि कार्यकारणयोरावश्यकौ । नीरूपत्वाच्चिति रूपभेदस्सुतरां नास्त्येव । तस्मात्कारणस्य परमात्मनो ज्ञानेन कार्यस्य जगतो ज्ञानमित्येवावश्यं वाच्यं, एवं परमात्मनः कारणत्वे सति अजस्य जीवस्य कार्यत्वायोगाज्जीवपरमात्मनोरभेदसिद्धिः । कारणात्कार्यस्यानन्यत्वेन कारणपरमात्मज्ञानात्कार्यजगद्ज्ञानसिद्धिरिति । नच कार्यस्य मुख्यमेव ब्रह्मत्वमस्तीति वाच्यं, सर्वकारणस्य निष्कारणस्य ब्रह्मणः कार्यत्वायोगात् । कार्यत्वे सत्यनित्यत्वप्रसङ्गात् । तस्मात्कारणमेव ब्रह्म न कार्यं, जगत्कार्यमेव न कारणम् ।

ननु कारणभूतमृद एव घटरूपेण कार्यत्वदर्शनाद्ब्रह्मैव कार्यमिति चेन्नैवम्—मृदो घटात्मनेव ब्रह्मणो जगद्रूपेण परिणामाभावात् । नहि मृद्घटयोरिव जगद्ब्रह्मणोरेकद्रव्यत्वं, येन कार्यकारणयोरैक्यं मुख्यं स्याज्जगद्ब्रह्मणोः । ब्रूषे हि त्वमपि चेतनाचेतनात्मकाज्जगतो विलक्षणं ब्रह्मेति । नह्येकद्रव्यत्वे सति वैलक्षण्यं वक्तुमुचितम् । वयमपि ब्रूमोऽचितो जगतस्सकाशादत्यन्तविलक्षणं चिद्रूपं ब्रह्मेति । नचाज्ञानविशिष्टं ब्रह्म जगद्रूपेण परिणतमिति भवति ब्रह्मणः कारणत्वं कार्यत्वं चेति वाच्यं, अज्ञानस्यैव तत्रापि जगद्रूपेण परिणामो नतु ब्रह्मण इति; जगदज्ञानयोरेव कार्यकारणभावात् । न ह्यविक्रियस्य ब्रह्मणः कार्यरूपेण परिणाम उपपद्यते । नच सूक्ष्मे अज्ञाने स्थूलजगदाकारेण परिणते सति तदान्तरं ब्रह्मापि सौक्ष्म्यं विहाय स्थौल्यं भजत इति वाच्यं, ब्रह्मण्यविक्रिये नित्ये स्थूलत्वसूक्ष्मत्वयोरयोगात् । एकामवस्थां विहायान्यामवस्थां गच्छद्धि वस्तु लोकेऽनित्यं दृश्यते । यथा बाल्यावस्थां विहाय यौवनावस्थां गच्छतो देहस्यानित्यत्वम् । तस्मान्नास्ति ब्रह्मणोऽवस्थान्तरप्राप्तिः । तस्मादज्ञानगते एव सौक्ष्मस्थौल्ये अविवेकाद्ब्रह्मण्यध्यस्येते । नतु वस्तुतस्सूक्ष्मं स्थूलं वा ब्रह्म- परिपूर्णत्वादविक्रियत्वात्सदैकरूपत्वान्नित्यत्वाच्च ब्रह्मणः । नच चितोऽपि सौक्ष्म्यस्थौल्यावस्थे स्त इति वाच्यं, तत्सत्त्वे जीवस्याप्यनित्यत्वप्रसङ्गात् । नित्यो जीवोऽविक्रियश्चेति हीहापि प्रतिपादितं गीतायाम् ।

नच स्थूलावस्थस्याचिद्वस्तुन आत्मतयावस्थानात्कार्यत्वं ब्रह्मण इति वाच्यं, मनुष्यादिशरीरेष्वात्मतया अवस्थानाज्जीवस्यापि कार्यत्वप्रसङ्गात् । एवंविधकार्यत्वस्य च आत्मानात्मविवेकप्रयुक्तत्वेनाग्राह्यत्वात् । नहि देहस्य जन्मवत्त्वेन कार्यत्वे जीवस्यापि कार्यत्वं मुख्यं भवितुमर्हति । आदिमतो हि वस्तुनः कार्यत्वं मुख्यम् । अनादित्वान्निर्गुणत्वाच्च न ब्रह्म जीवो वा कार्यं भवितुमर्हति । नच न निर्गुणं ब्रह्म, किंतु सगुणं निर्दोषमेवेति वाच्यं, ब्रह्मणि वर्तमानानां गुणानां ब्रह्मभास्यत्वायोगात्साक्ष्यन्तराभ्युपगमेऽनवस्थादोषात् । गुणस्य गुण्यन्तरत्वेन ब्रह्मणोऽपि सगुणत्वे ब्रह्मान्तरत्वाद्गुणस्य सर्वान्तरत्वं ब्रह्मणो न स्यात् । ज्ञानस्वरूपत्वाच्च ब्रह्मणो न सगुणत्वोपपत्तिः ।

नच ज्ञानस्वरूपं ब्रह्मेति वादः ब्रह्मणो ज्ञानैकनिरूपणीयत्वाभिप्रायक इति वाच्यं, सर्वस्यापि वस्तुनो ज्ञानैकनिरूपणीयत्वेन ज्ञानस्वरूपत्वप्रसङ्गात् । अयं घट इति ज्ञानेन हि घटोऽपि निरूप्यते ।

नच ज्ञानगुणकत्वाद्ज्ञानैकनिरूपणीयत्वमिति वाच्यं, मनसोऽपि ज्ञानगुणकत्वात्कामसङ्कल्पादिज्ञाना हि मनसो गुणाः । ततश्च मनोऽपि ज्ञानस्वरूपं स्यात् । स्वप्रकाशतया ज्ञानस्वरूपत्वमिति युक्तमेव । ज्ञानस्यैव स्वप्रकाशत्वात् । ज्ञानं हि न परप्रकाश्यं प्रकाशवत् । सर्वस्यापि ज्ञानप्रकाश्यत्वात्सर्वावभासकं च ज्ञानं प्रकाशवत् । यदि ज्ञानप्रकाशकमन्यत्स्यात्तर्हि किं तद्ज्ञानमुताज्ञानम् नहि ज्ञानाज्ञानातिरिक्तं किंचिद्वस्त्वस्ति । आद्ये- तस्याप्यन्यदित्यनवस्था । द्वितीये- अज्ञानस्य ज्ञाना भास्यस्य ज्ञानावभासकत्वविरोधः । तस्मिंश्च सदैकरूपे ज्ञाने ब्रह्मणि कालत्रयेऽपि जगदभावादद्विती ब्रह्म । नच 'नेह नाना'स्तीतिश्रुत्या अब्रह्मात्मकवस्तुनानात्वं प्रतिषिध्यत इति नाद्वैतत्वं ब्रह्मण इ वाच्यं, ब्रह्मणश्चिदचिद्विलक्षणत्वेन चिदचितोर्ब्रह्मरूपत्वाभावात्कथं तयोर्ब्रह्मात्मकत्वम् । नच ब्रह्म आत्म यस्य तद्ब्रह्मात्मकमिति व्युत्पत्त्या सर्वं जगद्ब्रह्मात्मकमेव- ब्रह्मणस्सर्वान्तरात्मत्वादिति वाच्यं, एवंवि वस्तुनानात्वप्रतिषेधे कतिपयवस्तुसत्त्वस्य सिद्धत्वात् । श्रुतौ नानेति किंचनेति च पदयोरेव दर्शने अब्रह्मात्मकेति स्वकपोलकल्पितपदस्याप्रमाणत्वात् । अथवा तवेदं युक्तमेव- अद्वितीयमित्यस्य स्वसमान द्वितीयरहितमिति, ज्ञानमानन्दमित्यस्य ज्ञानगुणकमानन्दगुणकमिति, तत्त्वमित्यस्य त्वच्छरीरकं तदिति कल्पयितुः । नहि यथाश्रुतार्थस्वीकारस्तवोचितो विशिष्टाद्वैताख्यमश्रौतं मतं कल्पयितुः ।

यच्चोक्तं—ब्रह्मैव नानाप्रकारमवस्थितमिति, तदप्ययुक्तम्—निष्प्रकारे ब्रह्मणि नानाप्रकारा योगात् । नच प्रकृतेर्नानाप्रकारत्वाद्ब्रह्मापि नानाप्रकारमिति वाच्यं, घटकरकादिनानाप्रकारावस्थिता मृदि वर्तमाने आकाशे नानाप्रकारादर्शनात् । सर्वत्राप्येकरूपमेव हि ब्रह्म गगनवत् । अनेकरूपत्वे सविक्रियत्वेनानित्यमेव स्यात् । नहि त्वदभिमतजीवोऽपि पक्षिपशुकीटमनुष्यादिनानाविधशरीरानुगतोऽ भजते नानाप्रकारतां किंपुनर्ब्रह्म । नचाविवेकाज्जीवो नानाप्रकारतां भजत इति वाच्यं, अविवेका प्यन्यस्य वस्तुनोऽन्यवस्तुत्वासम्भवात् । नह्यविवेकादप्यग्निर्जलं भवति । यद्वा शीतो भवति । न मनुष्योऽहमित्यभिमानाद्भवति जीवो मनुष्य इति वाच्यं, तथासति मनुष्यदेहस्येहैव नाशाज्जीवस्या नाशः स्यात् । नहि रज्जौ सर्पोऽयमिति भ्रमाद्रज्जुस्सर्पो भवति । तस्मादन्यत्रान्यबुद्धिर्भ्रम एव । तादृश भ्रममात्रेणान्यस्यान्यत्वं न भवतीति जीवे मनुष्यत्वादिदेहप्रकाराः । एवं मनुष्यत्वादिप्रकारशून्यं जी दर्शयितुं हीदं गीताशास्त्रं प्रवृत्तं 'न हन्यते हन्यमाने शरीरे' इत्यादिदर्शनात् । देहात्मभ्रमेण शोचतोऽ र्जुनस्य शोकापनोदो हि देहविलक्षणात्मस्वरूपकथनसाध्यः । नत्वविवेककृतमनुष्यत्वादिप्रकारवज्जीव कथनसाध्यः । तस्माद्देहादत्यन्तविलक्षणे जीवे देहप्रकारः कोऽपि न सम्भवति यथा तथा जगतोऽत्यन्त विलक्षणे ब्रह्मणि जगत्प्रकारः कोऽपि न सम्भवत्येव । जीवस्य देह इव ब्रह्मणस्सर्वमपि शरीरमिति हि त्वयैवोच्यते । नह्यविवेकं विना शरीरधर्माश्शरीरिणि सम्भवन्ति । एवं जगद्धर्माणामनृतत्वनश्वरत्व जडत्वादीनां ब्रह्मण्यसम्भवे देहधर्माणां जरामरणादीनां सूक्ष्मदेहधर्माणां सुखदुःखादीनां कारणदेहधर्माणां मोहादीनां च जीवेऽसम्भवे ब्रह्मणो जीवस्य च स्वरूपं चैतन्यमात्रमेवावशिष्टम् । तस्य च कालत्रया

'इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते' इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते- 'तत्क्षेत्रं यच्च' इत्यादि व्याचिख्यासितस्य हि अर्थस्य संग्रहोपन्यासः न्याय्य इति—

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

तदिति। यत् निर्दिष्ट'मिदं शरीर'मिति तत्। तच्छब्देन परामृशति। यच्चेदं निर्दिष्टं क्षेत्रं यत् यादृक् यादृशं स्वकीयैर्धर्मैश्चशब्दस्समुच्चयार्थः। यद्विकारि यो विकारो

---

बाध्यत्वात्सत्यत्वं परमप्रियत्वादानन्दरूपत्वमिति सच्चिदानन्दं ब्रह्मैव जीवः निष्प्रकारकत्वेन परिपूर्णत्वेन च चैतन्यस्य भेदकप्रकाराभावान्न भेदः कश्चिदपीति स्थितमद्वैतम्।

अत एवोक्तम्—'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!' इति। एतदद्वैतज्ञानस्यैव जीवे कल्पितसर्वसंसारतमोनिरसनभास्करत्वात्सम्यग्ज्ञानत्वम्। यद्धि सर्वानर्थनिबर्हणक्षमं तद्धि सम्यग्ज्ञानम्। अस्य च सम्यग्ज्ञानत्वं न मन्दप्रज्ञपुरुषकल्पितं, किंतु सर्वज्ञेश्वरोक्तमेवेति सत्यमेव। एतदभिप्रायेणैवोक्तम्—'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद्ज्ञानं मतं मम' इति ॥२॥

तदितिश्लोकमवतारयति—इदमिति। व्याचिख्याचितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति हेतोः 'इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयत' इत्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य 'तत्क्षेत्रं य'च्चेत्यादिरयं संग्रहश्लोक उपन्यस्यत इत्यन्वयः। व्याख्यातुमिष्टस्य व्याचिख्यासितस्य वक्ष्यमाणस्येत्यर्थः। संग्रहेण संक्षेपेणोपन्यासः कथनं संग्रहोपन्यासः। न्यायादनपेतो न्याय्यः। इत्यादीत्यादिपदात्-- 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद' इत्यस्य ग्रहणम्। क्षेत्राध्यायार्थस्य- प्रकृतक्षेत्रक्षेत्रज्ञविभागयोगाख्यत्रयोदशाध्यायार्थस्येत्यर्थः। इत्यादीत्यादिपदात् 'यादृक्च यद्विकारि यतश्च यत्, स च यो यत्प्रभावश्च तत्समासेन मे शृणु' इत्यस्य ग्रहणम्। संग्रहश्लोक इति। संगृह्यते संक्षेपेणोच्यतेऽध्यायार्थोऽस्मिन्निति संग्रहः स चासौ श्लोकः संग्रहेणाध्यायार्थप्रतिपादकः श्लोक इत्यर्थः। अयमिति। प्रकृत इत्यर्थः। उपन्यस्यते उच्यते। पूर्वश्लोके इदं शरीरमिति यन्निर्दिष्टं तदिह तच्छब्देन परामृश्यत इत्याह—यदिति। यच्चेत्यस्यान्वयमाह—इदं निर्दिष्टमिति। इदंशब्देन निर्दिष्टमित्यर्थः। इदमित्यनुकरणशब्दः। इदमा निर्दिष्टमिदंनिर्दिष्टमिति समासः। अध्याहारोऽयम्। यच्चेदं निर्दिष्टं तत् क्षेत्रं यादृक्च यद्विकारि यतश्च यदुत्पद्यते। यः क्षेत्रज्ञ इति निर्दिष्टः स च यत्प्रभावश्च तत्समासेन मे वाक्यत इति शेषः। शृणु!

यादृशमिति। यद्धर्मकमित्यर्थः। उक्तानुक्तसंग्राहकश्चकार इत्याह—चशब्द इति। यादृक्त्वस्य यद्विकारित्वादिना सह समुच्चयार्थ इति वा। यश्चासौ विकारो यद्विकारः सोऽस्यास्तीति यद्विकारि।

यस्य तद्यद्विकारि, यतो यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च । तत्क्षेत्रक्षेत्रज्ञयोः याथात्म्यं यथाविशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु, तच्छ्रुत्वाऽ वधारयेत्यर्थः ॥३॥

---

मत्वर्थीय इनिः । यद्विकारकमित्यर्थः । यस्माच्चोपादानादित्यर्थः । यच्छब्दार्थमाह—कार्यमिति उत्पद्यत इति वाक्यशेष इति । प्रकृतवाक्ये उत्पद्यत इति क्रियापदस्य शेष इत्यर्थः । यत्कार्यं यदुपादानकमिति वाक्यार्थः । उपाधिकृताश्शक्तयश्चक्षुराद्युपाधिकृता दर्शनादिशक्तयः । यथाविशेषितमिति । यथोक्तविशेषणमित्यर्थः । वाक्यतः शृण्वित्यस्यानन्वयादाह—श्रुत्वेति । अवधारय निश्चिनु । निश्चयेन विद्धीत्यर्थः ।

क्षेत्रस्य के धर्माः के विकाराः क्षेत्रशब्दवाच्यानां पदार्थानां मध्ये कस्य कार्यस्य किमुपादानं क्षेत्रज्ञस्य के प्रभावाः ? इति प्रश्नचतुष्टयस्येहोत्तरमुच्यते संक्षेपेणेत्यर्थः । क्षेत्रस्य धर्मा विकारा उपादानं क्षेत्रज्ञप्रभावश्चेहोच्यन्ते संक्षेपेणेति यावत् । नच ज्ञानज्ञेययोः प्रकृतिपुरुषयोश्च वक्ष्यमाणत्वात्कथमिह संक्षेपश्लोके तदग्रहणमिति वाच्यं, ज्ञानप्रकृत्योः क्षेत्रत्वात् , ज्ञेयपुरुषयोः क्षेत्रज्ञत्वाच । चात्रापि विवदितव्यं, 'बुद्धिरव्यक्तमेव च' इत्यव्यक्तस्य प्रकृतेस्साक्षादेव क्षेत्रत्वस्य वक्ष्यमाणत्वाद्ज्ञानस्य बुद्धिधर्मत्वाच । 'परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः पर' इति पुरुषस्य ज्ञेयपरमात्मत्वकथनात् क्षेत्रज्ञस्य पुरि सत्त्वेन पुरुषत्वस्य सम्मतत्वाच ।

यत्तु रामानुजः—तत् क्षेत्रं यच्च यद्द्रव्यम् । यादृक्च येषामाश्रयभूतं यद्विकारि ये चास्य विकाराः यतश्च यतो हेतोरिदमुत्पन्नं यस्मै प्रयोजनायोत्पन्नमित्यर्थः । यत् यत्स्वरूपं चेदं स च । स च क्षेत्रज्ञो यः यत्स्वरूपो यत्प्रभावश्च ये चास्य प्रभावाः तत्सर्वं समासेन संक्षेपेण मे मत्तः शृण्विति तन्मन्दम्—शब्दादिगुणानामपि क्षेत्रत्वेन क्षेत्रं द्रव्यमेवेति नियमाभावात् । नच जडाजडद्रव्ययोः किं द्रव्यमित्यर्थ इति वाच्यं, उभयविधद्रव्यस्यापि क्षेत्रत्वाक्रान्तत्वात् । चेतनानि मनुष्यादिभूतान्यचेतनानि मृत्पाषाणादीन्यपि ज्ञेयत्वात्क्षेत्रशब्दवाच्यान्येव हि । न चात्माऽजडद्रव्यं तदन्यत्सर्वं जडद्रव्यं परमात्मा तूभयविलक्षण इति वाच्यं, आत्मनो द्रव्यत्वे मानाभावात् । नच तर्कशास्त्रं मानमिति वाच्यं तद्रीत्या परमात्मनोऽप्यजडद्रव्यत्वात् । नच वेदान्ताः प्रमाणमिति वाच्यं, तत्र चिद्रूपः परमात्मेति दर्शनात् । जीवस्यापि चिद्रूपत्वदर्शनाच्च । नच ज्ञानगुणकत्वाज्जीवो द्रव्यमिति वाच्यं, परमात्मनोऽपि तव मते ज्ञानगुणकत्वेन चिद्द्रव्यापत्तेः ।

तस्मादचिद्वस्त्वेव द्रव्यं गुणवत्त्वात् । न तु चिद्वस्तु द्रव्यं निर्गुणत्वादिति स्थिते कथं क्षेत्रद्रव्यविशेषनिर्धारणार्थः प्रथमयच्छब्द इति कल्पयितुं शक्येत ? नच पृथिव्यप्तेजआदिषु किं द्रव्यं क्षेत्रमित्युच्यत इति वाच्यं, न्यायशास्त्रपठितात्मव्यतिरिक्ताष्टद्रव्याणामपि क्षेत्रत्वेन तद्विशेषनिर्धारणाभाव

तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥

ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितम् । छन्दोभिः छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाभावैर्नानाप्रकारैः पृथग्विवेकतो गीतं, किंच ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि तानि पदान्युच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयाथात्म्यं गीतमित्यनुवर्तते । 'आत्मेत्येवोपासी'तेत्येवमादिभिः ब्रह्मसूत्रपदैरात्मा ज्ञायते, हेतुमद्भिर्युक्तियुक्तैः विनिश्चितैः निस्संशयरूपैः निश्चयप्रत्ययोत्पादकैरित्यर्थः ॥४॥

---

किंच 'इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयत' इति शरीरस्य क्षेत्रत्वस्योक्तत्वाच्छरीरस्य चाचित्त्वात् किंचिद्द्रव्यं क्षेत्रमुताचिद्द्रव्यमिति शङ्काया एवानुदयात्कथमत्र क्षेत्रस्य यद्द्रव्यत्ववादः । एवं यत्स्वरूपं चेदमित्यप्यनर्थकमेव । इदंशरीरमित्यनेन स्वरूपस्याप्युक्तत्वात् । तथा स च क्षेत्रज्ञो य इत्यप्यपार्थ-- 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद' इत्युक्तत्वाज्जीवः क्षेत्रज्ञ इति । नच क्षेत्रज्ञस्य स्वरूपमनुक्तमिति वाच्यं, एतद्यो वेत्तीत्यनेन ज्ञानस्वरूपत्वस्योक्तत्वात् । मे इत्यस्य मत्त इत्यर्थवर्णनमप्ययुक्तं, पञ्चम्यां म इत्यादेशाभावादस्मच्छब्दस्येति ॥३॥

ऋषिभिरिति । पूर्वश्लोकोक्तं तत्पदमिहानुवर्तते । तत्क्षेत्रक्षेत्रज्ञयाथात्म्यं बहुधा ऋषिभिर्गीतम् । विविधैश्छन्दोभिः पृथग्गीतं विनिश्चितैर्हेतुमद्भिर्ब्रह्मसूत्रपदैश्चैव गीतमित्यन्वयः । यद्वा तत्र ऋषिभिः विविधैश्छन्दोभिः विनिश्चितैर्हेतुमद्भिर्ब्रह्मसूत्रपदैश्चैव बहुधा पृथग्गीतमित्यन्वयः । वसिष्ठादिभिरित्यादिपदाद्विश्वामित्रयाज्ञवल्क्यादिग्रहणम् । बहुप्रकारमिति । एक एवार्थो बहुभिः प्रकारैरुक्त इत्यर्थः । ऋगादीनीत्यादिपदाद्यजुरादिग्रहणम् । विवेकत इत्यात्मानात्मविवेकादित्यर्थः । ब्रह्मसूत्राणि शारीरकसूत्राणि, तानि च तानि पदानि च ब्रह्मसूत्रपदानि ब्रह्मप्रतिपादकानि सूत्रभूतानि वाक्यानीत्यर्थः । पद्यते ब्रह्म एभिरिति पदानि । ननु कानि तानि ऋगादीनि क्षेत्रक्षेत्रज्ञयाथात्म्यप्रतिपादकानीत्यत आह—'आत्मेत्येवोपासीत' इत्येवमादिभिरिति । आदिपदात्- 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिग्रहणम् । वसिष्ठसंहितादिषु तु वसिष्ठाद्युक्तश्लोका ज्ञेयाः- 'ज्ञोऽत ए'वेत्यादिब्रह्मसूत्राणि तद्ग्रन्थे द्रष्टव्यानि ।

ननु पद्यते एभिर्ब्रह्मेति पदत्वमुक्तं ब्रह्मसूत्राणां तत्कुतोऽत आह—ब्रह्मसूत्रेति । आत्मा ज्ञायत इति । अनात्मविवेकादिति भावः । हेतवो युक्तयस्सन्त्यत्रेति हेतुमन्ति तैर्हेतुमद्भिः । अत एव विनिश्चितैरिति । युक्तियुक्तत्वेन निश्चयप्रत्ययोत्पादकत्वाद्ब्रह्मसूत्रैरात्मा ज्ञायत इति ब्रह्मसूत्राणां पदत्वं युक्तमिति भावः । निश्चयप्रत्यय इति । आत्मा देहादिभ्यो विलक्षणस्सच्चिदानन्दब्रह्मरूप इति निश्चयज्ञानमित्यर्थः । तस्मान्मद्वक्ष्यमाणार्थस्य श्रुतिस्मृतिन्यायसिद्धत्वाच्च ग्राह्यत्वमिति भावः ॥४॥

स्तुत्या अभिमुखीभूतायार्जुनायाह भगवान्—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥५॥

महाभूतानीति । महाभूतानि महान्ति च तानि भूतानि च महाभूतानि, तेषां महत्त्वं सर्वविकारव्यापकत्वात् द्रष्टव्यम् । तानि भूतानि च सूक्ष्माणि न स्थूलानि। स्थूलानि त्विन्द्रियगोचरशब्देन अभिधायिष्यन्ते। अहङ्कारो महाभूतकारणं अहम्प्रत्ययलक्षणः। अहङ्कारकारणं बुद्धिरध्यवसायलक्षणा। तत्कारणमव्यक्तमेव च, न व्यक्तमव्यक्तं अव्याकृतमीश्वरशक्तिः- 'मम माया दुरत्य'येत्युक्तम् । एवशब्दः प्रकृत्यवधारणार्थ उक्तः। एतावत्येवाष्टधा भिन्ना प्रकृतिः। चशब्दो भेदसमुच्चयार्थः। इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वात् बुद्धीन्द्रियाणि; वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि; तानि दश एकं च; किं तत् ? मन एकादशं सङ्कल्पाद्यात्मकं, पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः तान्येतानि साङ्ख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥५॥

---

महाभूतानीति । सर्वविकारास्सर्वकार्याणि । सूक्ष्माणीत्यपञ्चीकृतानीत्यर्थः । प्रकृत्यवधारणार्थ इत्यस्यार्थं स्वयमेवाह—एतावत्येवेति । भेदसमुच्चयः प्रकृत्यवान्तरभेदसमुच्चय इत्यर्थः। बुद्ध्युत्पादकत्वात् ज्ञानजनकत्वात्। शब्दादय इति। शब्दादिगुणकपञ्चस्थूलभूतानीत्यर्थः । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधास्यन्त इत्युक्तत्वात् । स्थूलसूक्ष्मभेदाद्भूतानि दश, ज्ञानकर्मभेदादिन्द्रियाणि दश, मनोबुद्ध्यहङ्कारभेदादन्तःकरणत्रयं, प्रकृतिरेका मिलित्वा चतुर्विंशतिः। कपिलावतारोक्तसाङ्ख्याद्भिन्नमस्ति किञ्चित्साङ्ख्यं नाम मतम् । यत्रायं तत्त्वसंग्रहश्लोकः—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इति । सप्तमहदहङ्कारपञ्चतन्मात्राणि । षोडश इन्द्रियदशकं स्थूलभूतपञ्चकं मनश्च । अत्र महत्तत्त्वं बुद्धिरिति विवेकः। पुरुषस्तु पञ्चविंश आचक्षत इति कथयन्ति । साङ्ख्या आचक्षत इत्यनेन न वेदान्तमते तत्त्वत्वमेतेषामिति सूचितं- ब्रह्मभिन्नस्य सर्वस्याप्यतत्त्वत्वात्। 'तत्त्वं नारायणः पर' इति श्रुतेः।

ननु इदं शरीरं क्षेत्रमिति पूर्वमुक्तमिदानीं तु महाभूतानीत्याद्यन्यदुच्यत इति कथं स्ववचोव्याघाताभाव इति चेत्, नैष दोषः—दर्शितचतुर्विंशतितत्त्वात्मकत्वात्त्रिविधस्य शरीरस्य । तथाहि- अव्यक्तं मूलप्रकृतिरज्ञानं कारणशरीरम् । मनोबुद्ध्यहङ्काराः पञ्चतन्मात्राणि दशेन्द्रियाणि च लिङ्गशरीरम्। स्थूलभूतानि पञ्च तु स्थूलशरीरं स्थूलभूतकार्यत्वादस्येति। एतच्छरीरत्रयातिरिक्तपदार्थाभावादिदं शरीरं क्षेत्रमित्युक्तम्। चतुर्विंशतितत्त्वानि हि शरीरत्रयम् । चतुर्विंशतितत्त्वसमष्टिसङ्घातरूपमिदं शरीरं चतुर्विंशतितत्त्वानि च क्षेत्रमिति फलितार्थः ।

ननु इन्द्रियगोचरशब्देन यदि शब्दादिविषया गृह्यन्ते तर्हि स्थूलभूतपञ्चकस्याक्षेत्रत्वं; यदि स्थूलभूतानि गृह्यन्ते तर्हि शब्दादिविषयाणामक्षेत्रत्वमिति चेत्, नैष दोषः— शब्दादिविषयपञ्चकाति-

अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकाः तेऽपि क्षेत्रधर्मा एव, नतु क्षेत्रज्ञस्ये-
त्याह भगवान्—

इच्छा द्वेषस्सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥

इच्छेति । इच्छा यज्जातीयं सुखात्मकमर्थमुपलब्धवान् पूर्वं पुनस्तज्जातीयं समुप-
लभमानस्तमर्थं समादातुमिच्छति सुखहेतुरिति; सेयमिच्छान्तःकरणधर्मः ज्ञेयत्वात्क्षेत्रम् ।
तथा द्वेषः यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान् पुनस्तज्जातीयमर्थमुपलभमानः तं द्वेष्टि,
दुःखहेतुरिति सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वा-
त्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं; ज्ञेयत्वात्तदपि क्षेत्रम् । सङ्घातो देहेन्द्रियाणां संहतिः ।
तस्यामभिव्यक्तान्तःकरणवृत्तिः तप्त इव लोहपिण्डे अग्निरात्मचैतन्याभासरसविद्धा चेतना
। च क्षेत्रं ज्ञेयत्वात् । धृतिः यया अवसादप्राप्तानि देहेन्द्रियाणि विष्टभ्य ध्रियन्ते सा च

त्कस्थूलभूतपदवाच्यवस्तुन एवाभावात् । नहि गन्धरसाद्यतिरिक्तपृथिवीजलादिसद्भावः । बुद्ध्या
पृथिवीजलादिभ्यस्सकाशाद्गन्धरसादिषु विवेचितेषु सत्सु पृथ्व्यादीनां निस्तत्त्वत्वसिद्धेः । अत एव
साङ्ख्यैरपि पृथिव्यादयः पञ्च शब्दादयः पञ्च च पृथङ्न गृहीताः । तस्माच्छब्दादय एव शब्दादि-
गुणकपञ्चभूतानीति स्थितम् । ततश्च शब्दादिगुणानां गगनादिद्रव्याणां च क्षेत्रत्वमिति सिद्धम् ।
न च प्राणस्य पृथगनुक्तिरिति वाच्यं, तस्यान्तरवायुत्वेन वायावन्तर्भावादिति ॥५॥

इच्छेति । यज्जातीयमिति । यस्यां जातौ भवमित्यर्थः । सुखात्मकं सुखहेतुभूतमित्यर्थः ।
अर्थं पदार्थं चूतफलादिकमिति भावः । उपलब्धवाननुभूतवान् । समुपलभमानः पश्यन् । सुखहेतु-
रितिहेतोः पुनस्तमर्थं समादातुमिच्छतीत्यन्वयः । सेयमिति । पूर्वानुभूतसजातीयसुखहेतुपदार्थादान-
कामना इच्छेत्युच्यते । इच्छा अन्तःकरणस्य धर्मः ज्ञेयत्वात्सुखादिवदिति । इच्छा क्षेत्रं ज्ञेयत्वा-
त्सुखादिवदिति च प्रयोगौ सूचयति अन्तःकरणस्येत्यादिना—तथेति । पूर्ववाक्यार्थसमाप्तिद्योतक-
मव्ययम् । अनुकूलमिति । यस्मिन्ममेदमनुकूलमिति बुद्धिः पुंसां तत्सुखं किं स्वरूपं तदित्यत आह—
सत्त्वात्मकमिति । अन्तःकरणसत्त्वगुणपरिणामविशेष एव सुखमित्यर्थः । एतद्विपरीतं दुःखमित्याह—
प्रतिकूलात्मकमिति । सङ्घाते या चेतना सा च क्षेत्रमेव । सङ्घातशब्दार्थमाह—देहेति । संहतिः
संश्लेषः । तस्मिन् तप्ते लोहपिण्डेऽग्निरिव अभिव्यक्ता आत्मचैतन्याभासरसविद्धा अन्तःकरणवृत्तिः
चेतना । अभिव्यक्ता प्रकटीभूता तत्तादात्म्यं प्राप्तेति यावत् । आत्मनो यश्चैतन्याभासः चित्प्रतिफलनं
स एव रसः तेन विद्धा व्याप्ता । अन्तःकरणस्य वृत्तिः परिणामविशेषः । स्थूलोऽहं, काणोऽहं, सुख्यह-
मित्याद्याकारिका सा चेतनेत्युच्यते । धृतिर्धैर्यम् । अवसादं शैथिल्यात्मकं नाशं विष्टभ्य संस्तभ्य ।

ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणम् । यदुक्तं तदुपसंहरति- एत
समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य सं
'इदं शरीरं क्षेत्र'मित्युक्तं, तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥६॥

---

ननु इच्छाद्वेषादीनामेव क्षेत्रत्वे कामसङ्कल्पश्रद्धाह्रीभीत्यादीनां किं न क्षेत्रत्वमत अ
सर्वेति । इच्छादयः केचिदन्तःकरणधर्मा इहोपात्ता अमी चोपलक्षणतया सर्वानप्यन्तःकरण
क्षेत्रमिति ज्ञापयन्तीत्यर्थः ।

ननु इच्छादयः क्षेत्रधर्मा एव, नतु क्षेत्रज्ञधर्मा इत्यवतारिकायामुक्तमिदानीं त्विच्छादयः
मित्येवोच्यते; अतो विरोध इति चेन्नैवम्—अन्तःकरणादिवदन्तःकरणादिधर्माणामपि क्षे
नाविरोधात् । नहि क्षेत्रक्षेत्रज्ञातिरिक्तं क्षेत्रधर्मात्मकं किञ्चिद्वस्त्वस्ति । दृग्दृश्ययोर्द्वयोरेवा
पदार्थत्वात् । दृगेव क्षेत्रज्ञः, दृश्यं तु क्षेत्रमिति विवेकः । **महदादिनेति** । आदिपदात्त
क्ताहङ्कारतन्मात्रादिग्रहणम् । तेषां सर्वेषामपि मूलप्रकृतिकार्यत्वेन विकारत्वात् । **क्षेत्रमिति** ।
लक्षणमिति भावः । तस्या एव महदादिविकारसहितत्वात् । मूलप्रकृतिः महदादिविकारा इच्छादि
एतत्सर्वमपि दृश्यं क्षेत्रमेवेति निर्गलितार्थः ।

ननु इदंशरीरं क्षेत्रमिति पूर्वमुक्तमिदानीं तु महाभूतानीत्यादिना ततोऽन्यदेव क्षेत्रमि
अत आह—**यस्येति, क्षेत्रभेदजातस्येति** । क्षेत्रशब्दवाच्यप्रकृतिमहदादिभेदसमूहस्य । इह
निर्दिष्टानां महाभूतादीनां क्षेत्रभेदानां समष्टिरेव शरीरं पूर्वं क्षेत्रमित्युक्तमिति न विरोध इति
महाभूतादिभेदभिन्नं धृत्यन्तं तत् क्षेत्रं व्याख्यातमिति सम्बन्धः ।

**यत्तु रामानुजः**—इच्छा द्वेषस्सुखं दुःखमिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते, यद्य
नीच्छादीन्यात्मधर्मभूतानि, तथाप्यात्मनः क्षेत्रसम्बन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्य
इति, **तत्तुच्छम्**—कामस्सङ्कल्प इत्यारभ्य तत्सर्वं मन एवेति मनोधर्मत्वश्रवणादिच्छादीनाम् ।
धर्मत्वे सुषुप्तौ मनसि लीने सति तद्दर्शनप्रसङ्गात् । इच्छादिविकाराणामात्मनि सत्त्वे सवि
प्रसङ्गादात्मनस्तेन चानित्यत्वदोषप्रसङ्गात् । स्वधर्मस्य स्ववेद्यत्वानुपपत्त्या आत्मना वेद्यमाना
दीनामात्मधर्मत्वायोगाच्च । न च 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समु
इति मुक्ताश्रितत्वेन कामसङ्कल्पयोश्श्रवणादात्मधर्मावेवैताविति वाच्यं, सगुणमुक्तिं प्राप्तपुरुष
त्तच्छ्रुतेः । सगुणमुक्तौ हि हिरण्यगर्भलोके मनआदयस्सन्ति । नहि कैवल्ये कामादिसद्भावः
तत्रापि विवदितव्यं- सुप्तिमृतिमूर्छासु कामाद्यदर्शनादात्मनस्तेन न्यायेन मुक्तावपीत्यनुमानात् । '
सम्पत्त्यो'रिति सूत्रेण 'तत्र केन कं पश्ये'दित्यादिश्रुतेः सुषुप्तिमुक्तिविषयत्वस्य स्थापितत्वात् ।
च श्रवणदर्शनादिसर्वज्ञाननिषेधाच्च । न च सुखादय आत्मधर्मभूतज्ञानावस्थाविशेषा इति
आत्मनो ज्ञानस्वरूपस्य धर्मभूतज्ञानस्यैवाभावात् । नहि स्वरूपभूते ज्ञाने धर्मभूतं किंचिद्

वितुमर्हति । तस्यापि धर्मभूतज्ञानस्य ज्ञानस्वरूपत्वे तस्मिन्नपि धर्मभूतज्ञाने ज्ञानान्तरमित्येवमनवस्था-दोषात् । ज्ञानस्वरूपत्वाभावे ज्ञानत्वस्यैवासिद्धेः । नच धर्मधर्मिणोरुभयोरेकमेव ज्ञानं स्वरूपमिति वाच्यं, धर्मधर्मिभेदासिद्धेः । नच सोऽकामयतेतीश्वरस्य करणरहितस्य कामः श्रूयत इति 'कामादय आत्मधर्मा इति वाच्यं, मायया ईश्वरस्य कामसङ्कल्पसम्भवान्मायाधर्मावेव कामसङ्कल्पौ जगत्सृष्टि-विषयाविति । नच मुक्तिकालिकब्रह्मानन्दानुभवरूपसुखस्य मुक्तात्मधर्मत्वात्तत्साजात्येन सुखं सर्वम-प्यात्मधर्म एवेति वाच्यं, तत्सुखस्यात्मस्वरूपत्वेनात्मधर्मत्वायोगात् । सच्चिदानन्दं हि ब्रह्म । ब्रह्मा-नन्दानुभवोऽप्यात्मानन्दान्नातिरिच्यते । लौकिकसुखानुभवस्तु सुखादतिरिच्यते । सुखस्य विषयत्वात् ज्ञानस्य विषयित्वाच्च । नह्यानन्दानुभवादन्यः कोऽपि मुक्तावस्ति । अनुभवितुरन्यस्य सत्त्वे त्रिपुट्या-'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिविरोधात् । आत्मनो ज्ञानस्वरूपत्वप्रतिपादकश्रुतिविरोधाच्च ।

ननु ज्ञानत्वेन प्रसिद्धाः कामसङ्कल्पादयो यदि मनोधर्मत्वेन मनोवृत्तिरूपाः स्युः तर्हि वृत्तीनां जडत्वाद्ज्ञानत्वप्रसिद्धिविरोधः, विषयप्रकाशनासामर्थ्यं च । नच वृत्तीनां चैतन्यसम्बन्धेन विषयप्रका-शनसामर्थ्यमिति वाच्यं, निर्विशेषचैतन्यस्य सर्वविषयविमुखस्य विषयप्रकाशायोग्यत्वेन तत्साहाय्यस्य शतमप्यन्धानां न पश्यतीतिन्यायेन विषयप्रकाशसामर्थ्यानापादकत्वात् । निर्विशेषचैतन्यस्य तद्योगत्वे तेनैव प्रकाशाद्युपपत्तौ वृत्त्यवच्छेदकल्पनाया अनर्थकत्वात् । नच संसारदशायां संकुचितस्य तस्य विषय-व्यवस्थौपयिकतया साफल्यमिति वाच्यं, तस्य सङ्कोचाङ्गीकारे निर्विकारत्वादिप्रतिपादकश्रुत्यादिविरोधा-च्चक्षुरादिवृत्तिभिरेव विषयव्यवस्थोपपत्तेश्च । धर्मभूतज्ञानस्य च विकारोऽङ्गीकृत एवेति न किंचिदनुप-पन्नमस्माकमिति चेत् , मैवम्—यद्यात्मा ज्ञानस्वरूपो न स्यात्तर्हि विषयप्रकाशो न स्यात् , ज्ञान-स्वरूपत्वं तु श्रुत्यादिसिद्धम् । नच निर्विशेषत्वेन निर्धर्मके आत्मनि प्रकाशकत्वधर्मायोग इति वाच्यं, अप्रकाशकत्वस्याप्ययुक्तत्वात् । प्रकाशकत्वस्य प्रकाशादनतिरिक्तत्वाद्ज्ञानस्य च प्रकाशात्मकत्वात् । व्यापकत्वाच्च साक्षिचैतन्यस्य न विषयवैमुख्यम् । अविद्यान्तःकरणादीनां साक्षिभास्यत्वेऽपि घटादीनां वृत्तिभास्यत्वान्न वृत्तिवैयर्थ्यम् । अन्तःकरणोपहितस्य साक्षिचैतन्यस्य चक्षुरादिद्वारा वृत्तिनिर्गमनं विना घटादिबाह्यविषयसंसर्गाभावान्न साक्षिभास्यत्वं घटादीनाम् ।

वस्तुतस्तु--साक्षिणाप्यविद्यादयोऽविद्याकारवृत्त्यैवावभास्यन्त इति बोध्यम् । तप्तलोहस्याग्नितादात्म्या-दौष्ण्यमिव वृत्तेश्चित्प्रतिफलनाद्भासकत्वं सम्भवति । अन्तःकरणोपहितत्वेन हेतुना साक्षिचैतन्यस्य स्वतस्सर्वविषयानवभासकत्वेऽपि न सङ्कोचः । यथा घटोपहितत्वेन हेतुना घटाकाशस्य सर्वव्यापित्वा-भावेऽपि न सङ्कोचः- दृश्यमानसङ्कोचस्यातात्त्विकत्वादौपाधिकत्वेन । यद्धि स्वाभाविकं तद्धि तात्त्विकम् । यथा गगनस्य नीरूपत्वम् । तस्मान्नात्मनः कोऽपि विकारः । वस्तुतस्तु चैतन्य-स्यान्तःकरणेन निरवयवस्य परिच्छेदायोगात्पूर्णमेव साक्षिचैतन्यमिति बोध्यम् । धर्मभूतज्ञानं तु नास्त्यात्मन इति प्रागेव निराकृतम् । वृत्तिज्ञानं तु मनोधर्म एव नात्मधर्मः, निर्धर्मकत्वादात्मन इति संक्षेपः ॥६॥

क्षेत्रज्ञः वक्ष्यमाणविशेषणः। यस्य स प्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं प्रा... त- ज्ञेयं यत्तत्प्रवक्ष्यामि' इत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान्। अधु... तद्ज्ञानसाधनगणममानित्वादिलक्षणं यस्मिन् सति तद्ज्ञेयविज्ञाने योग्योऽधिकृतो भव... यत्परस्सन्न्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाद्ज्ञानशब्द... विदधाति भगवान्—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥

अमानित्वमिति। अमानित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं, तदभा... मानित्वम्। अदम्भित्वं- स्वधर्मप्रकटीकरणं दम्भित्वं, तदभावोऽदम्भित्वम्। अहिंसा- अ... सनं प्राणिनामपीडनम्। क्षान्तिः परापराधप्राप्तावविक्रिया। आर्जवं- ऋजुभावोऽवक्रत्व... अचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम्। शौचं कायम... मृज्जलाभ्यां प्रक्षालनं; अन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौच... स्थैर्यं स्थिरभावः, मोक्षमार्गे एव कृताध्यवसायत्वम्। आत्मविनिग्रह आत्मन उपकारतया... कारकस्य आत्मशब्दवाच्यस्य कार्यकरणसङ्घातस्य विनिग्रहः, स्वभावेन सर्वतः प्रवृ...

---

अमानित्वमिति, वक्ष्यमाणेति। अनादिमत्परं ब्रह्मेत्यादिनेति भावः। अमृतत्वं मोक्षः... क्षेत्रज्ञम्। नच ज्ञेयं ब्रह्म वक्ष्यतीति वाच्यं, क्षेत्रज्ञस्यैव ज्ञेयत्वात्। उक्तं हि 'क्षेत्रज्ञं चापि मां वि...' इति। अमानित्वादिलक्षणं तद्ज्ञानसाधनगणं क्षेत्रज्ञज्ञानसाधनचयं भगवान्विदधातीत्यन्वयः। मुमु... क्षेत्रज्ञसाक्षात्कारायामानित्वादयो गुणा आत्मनस्सम्पाद्या इति भगवता विधीयत इत्यर्थः। विदधा... त्यनेन यथाऽज्ञस्य चित्तशुद्धये कर्मयोगो विहितः तथा मुमुक्षोरमानित्वादिगुणयोगो विहित... ज्ञायते। ननु ज्ञानमेवार्जुनेन पृष्टमिति तदेव वाच्यमित्यत आह—ज्ञानसाधनत्वाद्ज्ञानश... वाच्यमिति। आत्मसाक्षात्काररूपे ज्ञाने ज्ञातव्यविशेषाभावेन प्रश्नायोगाद्ज्ञानसाधनविशेषजिज्ञा... ज्ञानप्रश्नोऽर्जुनस्यापीति बोध्यम्।

परापराधेति। परकर्तृकापराध इत्यर्थः। अविक्रियेति। स्वापराधकर्तृषु कोपादिविक... भावः। अवक्रत्वमकौटिल्यम्। यः शास्त्रार्थे स्वयमाचरन्नन्यानप्याचरयति स विद्वानाचार्य इत्युच्य... सच शास्त्रार्थः प्रकृते मोक्षसाधनान्येवेत्यभिप्रेत्याह—मोक्षेति। श्रोतुमिच्छा शुश्रूषा, तत्प्रयुक्त... कार्यकरणमपि शुश्रूषेत्युच्यते। आदिशब्देन नमस्कारादिग्रहणम्। प्रयोगः करणम्। तेन ... सेवनमुपासनमित्युच्यते। शौचं शुचित्वं तद्द्विविधं- कायिकं मानसिकं चेत्याह—कायेति। ... पक्षाणां वैराग्यशान्त्यादीनां भावनया आत्मनि सम्पादनेनेत्यर्थः। कृताध्यवसायत्वं कृतनिश्चयत्व... आत्मनः क्षेत्रज्ञस्य निग्रहाद्यविषयत्वादाह—कार्यकरणसङ्घातस्येति। ननु कथं तस्यात्मश... वाच्यत्वमत आह—आत्मन उपकारतयेति। यद्यपि क्षेत्रज्ञस्य न कोऽप्युपकारोऽपकारो वा त...

सन्मार्गे एव निरोध आत्मविनिग्रहः ॥७॥

किंच—

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥

इन्द्रियार्थेष्विति । इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यं, अनहङ्कारोऽहङ्काराभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं- जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिषु दुःखान्तेषु प्रत्येकं दोषानुदर्शनम् । जन्मनि

---

साधनानुष्ठातॄणां प्रमातर्येवात्माभिमानादुक्तमात्मन उपकारतयेति । प्रमातुर्हि पश्वादिशरीराणि ज्ञान-साधनानुष्ठानायोग्यानीति तद्योग्यत्वान्मनुष्यशरीरमुपकारकं- मनुष्यशरीरे एव मनसोऽपि विवेकादिज्ञान-लाभान्मनुष्यशरीरस्थस्यैव लिङ्गशरीरस्यापि प्रमातृपकारकत्वम् ।

तस्मात् स्थूलसूक्ष्मशरीरद्वयस्य कार्यकरणसङ्घातनामकस्य विनिग्रहः कर्तव्यो मुमुक्षुणा । सर्वत इति । सर्वविषयेष्वित्यर्थः । सन्मार्ग एवेति । मोक्षमार्गे एव निरोधः प्रवर्तनं स्थापनमिति यावत् । देहादिभिर्मोक्षसाधनान्येव यथाऽनुष्ठीयेरन् ऐहिकामुष्मिकफलहेतूनि नरकहेतूनि वा विहितानि निषिद्धानि च कर्माणि यथा नानुष्ठीयेरन् तथा प्रयत्नमात्मविनिग्रह इति भावः ॥७॥

इन्द्रियेति । इन्द्रियाणां करणानामर्था विषया इन्द्रियार्थाश्शब्दादयः । आदिपदात्स्पर्शरूपरस-गन्धग्रहणम् । ते चेष्टानिष्टभेदेन द्विविधाः, पुनश्च दृष्टादृष्टभेदेन द्विविधाः । दृष्टा ऐहिकाः, अदृष्टा आमुष्मिकाः । तत्र दृष्टानिष्टविषयेष्वदृष्टानिष्टविषयेषु च पुंसां स्पृहैव नास्तीति तद्वैराग्यप्रतिपादनं व्यर्थमित्यभिप्रेत्याह—दृष्टादृष्टेष्टविषयभोगेष्विति । भुज्यन्त इति भोगाः । दृष्टाश्चादृष्टाश्च दृष्टादृष्टाः ते च ते इष्टा विषया भोगाश्च तेषु । यद्वा भोगा अनुभवा दृष्टादृष्टेष्टविषयाणां भोगा इति समासः, तेषु । लाक्षणिकोऽयमर्थः- इन्द्रियार्थशब्दस्येन्द्रियार्थभोगरूपार्थवर्णनात् । स्त्रीपुत्रपशुगृहादिषु रम्भादिषु चेति भावः । विगतो रागः स्पृहा यस्मात्स विरागः, तस्य भावो वैराग्यं रागाभाव इति यावत् । न अहङ्कारोऽनहङ्कार इति नञ्समासः । नञोऽभावार्थकत्वादाह—अहङ्काराभाव इति । देहादिष्वह-मित्यभिमानाभावः । अहङ्कारस्य बलवदनिष्टहेतुत्वादावश्यकोऽस्य परित्याग इत्याह—एव चेति । वसत्यस्मिन्निति वासो गर्भः कुक्षिस्स चासौ वासो गर्भवासः तस्माद्योनिद्वारेण निस्सरणं बहिर्निर्गमनम् । यद्वा गर्भे वासो निवासो गर्भवासः, स च योनिद्वारनिस्सरणं च तयोस्समाहारो गर्भवासयोनिद्वार-निस्सरणं, मलमूत्रादिदुर्गन्धप्रचुरे करचरणचालनाद्यवकाशशून्ये मातृकुक्षौ विष्ठायां क्रिमिरिव निवास एको दोषः, सूक्ष्मान्मूत्रक्लिन्नाच्च योनिद्वारान्निस्सरणमन्यो दोष इति जन्मनि द्विविधदोषानुदर्शन-मित्यर्थः । उपलक्षणमिदमन्येषामपि दोषाणां सत्त्वात् । मातृभुक्तकटूष्णरसपानजन्यसन्तापः, उच्छ्वास-निश्वासनिरोधः, करणानामस्वातन्त्र्यमित्यादयः । यद्वा गर्भवासशब्देनैव तत्प्रयुक्तसर्वदोषग्रहणमिति । आलोचनमिति । अनेन मम पुनर्जन्म भूयाद्विषयसुखलाभार्थमिति पुरुषस्य कामना निवर्तेत इति

गर्भवासयोनिद्वारनिस्सरणं दोषः, तस्यानुदर्शनमालोचनम् । तथा मृत्यौ दोषानुदर्शनं, तथ
जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादि
दोषानुदर्शनम् । तथा दुःखेष्वाध्यात्मिकाधिभौतिकाधिदैविकनिमित्तेषु । अथ वा दुःखान्ये
दोषो दुःखदोषः । तस्य जन्मादिषु पूर्ववदनुदर्शनं दुःखं जन्म दुःखं मृत्युः दुःखं जरा दुः
व्याधयः दुःखनिमित्तत्वाजन्मादयो दुःखम् । न पुनः स्वरूपेणैव दुःखमित्येवं जन्मादि
दुःखदोषानुदर्शनाद्देहेन्द्रियादिविषयभोगेषु वैराग्यमुपजायते । ततः प्रत्यगात्मनि प्रवृत्ति
करणानामात्मदर्शनाय । एवं ज्ञानहेतुत्वाद्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥८॥

---

भावः । मृत्यौ प्राणोत्क्रमणकफरज्जुकण्ठबन्धनश्वासनिरोधादयो दोषाः, तेषामालोचनेन यदि म
पुनर्जन्म स्यात्तर्हि पुनरपि मृत्युस्स्यात्स च मृत्युर्बहुदोषग्रस्तत्वान्मम माभूदिति जन्ममृत्युहरमोक्षा
यतत इति भावः । प्रज्ञानिरोधो बुद्धिमान्द्यं, शक्तिनिरोधश्चक्षुरादीनां पादादीनां च रूपादिग्रहणे
गमनादिषु चासामर्थ्यं, तेजोनिरोधो निर्वीर्यत्वम् । दारापत्यादितिरस्कृतत्वमप्यन्यो दोषो जरायामि
त्याह—परिभूतता चेति । पुत्रादयो हि धनधान्यार्जनाद्यसमर्थं वृद्धमधिक्षिपन्ति । तदधिक्षे
दुस्सह इति भावः । व्याधिषु शिरोरोगादिषु तापाशक्तिमनःक्षोभादिदोषानुदर्शनम् । तेन च रोग
निलये शरीरे स्पृहाभावस्सिद्ध्यतीति भावः । आत्मनि सङ्घाते भवा आध्यात्मिका ज्वरादयः, आधि
भौतिका वाताग्न्यादिभूतप्रयुक्ताः, आधिदैविका दैवादापतिताः; ते त्रयो निमित्तानि येषां ते
तथोक्तेषु दुःखेषु मनःक्षोभादिदोषानुदर्शनम् । अर्थान्तरमाह—अथ वेति । दुःखस्यैव दोषत्वाद्दुः
पुनर्दोषदर्शनमित्यस्वरसादर्थान्तरं वर्णितमाचार्यैरिति बोध्यम् । जन्मादिषु दुःखरूपदोषस्यानुदर्श
मित्यर्थः । जन्मादिषु दुःखहेतुत्वरूपदोषदर्शनमिति यावत् । दुःखस्य स्वरूपत एकत्वेऽपि विषय
भेदाद्बहुत्वमित्यभिप्रेत्याह—दुःखान्येव दोष इति । अनुचिन्तनप्रकारमेव दर्शयति—दुःखं जन्मे
त्यादिना । ननु दुःखहेतूनां जन्मादीनां कथं दुःखस्वरूपत्वमत आह—दुःखनिमित्तत्वादिति

ननु जन्मनि दुःखं मृत्यौ दुःखमित्येवं दोषानुदर्शनमिति कुतो नोक्तमिति चेदुच्यते—
जन्मनि दुःखमस्तीत्येवमुक्तौ दुःखादन्यस्यापि कस्यचित्सत्ता प्रतीयते । जन्म दुःखमित्युक्तौ
दुःखमेव तत्रास्ति न त्वन्यत्किमपीति प्रतीयत इति । अत एव स्मृत्यन्तरेऽपि- 'जन्म दुःखं ज
दुःखं जाया दुःखं पुनः पुन'रिति दृश्यते । जन्मादिषु दुःखदोषानुदर्शनस्य संसारे वैराग्योत्पत्तिः
फलमित्याह—जन्मादिष्विति । वैराग्यस्य फलमाह—तत इति । वैराग्यादित्यर्थः । आत्मदर्शना
करणानां प्रत्यगात्मनि प्रवृत्तिर्भवतीत्यन्वयः ।

यद्यपि संस्कृतस्य मनस एकस्यैव करणस्यात्मनि प्रवृत्तिस्तथापि मनोऽधीनत्वात्सर्वकरणानां
करणानामित्युक्तम् । अन्तःकरणस्यात्मनि प्रवृत्तिश्चक्षुरादीनां तु विषयेष्वप्रवृत्त्या आत्मनि प्रवृत्तिरु
चर्यत इति भावः । एवमिति । वैराग्योत्पादनद्वारा आत्मन्यन्तःकरणस्य प्रवृत्तिहेतुत्वेनेत्यर्थः । ज्ञान
हेतुत्वादिति । आत्मसाक्षात्कारसाधनत्वात् । ज्ञानमुच्यते ज्ञानमित्युच्यते । उपचारेणेति भावः ॥८॥

किंच—

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥९॥

असक्तिरिति । असक्तिस्सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रम् ; तदभावोऽसक्तिः । अनभिष्वङ्गोऽभिष्वङ्गाभावः । अभिष्वङ्गो नाम आसक्तिविशेष एवानन्यात्मभावनालक्षणः । यथाऽन्यस्मिन् सुखिनि दुःखिनि वा 'अहमेव सुखी दुःखी च' जीवति वा मृते वा 'अहमेव जीवामि मरिष्यामि' चेति । क्वेत्याह—पुत्रदारगृहादिषु- पुत्रेषु दारेषु गृहेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु । तच्चोभयं ज्ञानार्थत्वाद्ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता । केष्वित्याह—इष्टानिष्टोपपत्तिषु- इष्टानामनिष्टानां चोपपत्तयः सम्प्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता । इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥९॥

किंच—

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥

मयीति । मयि च ईश्वरेऽनन्ययोगेनापृथक्समाधिना 'नान्यो भगवतो वासुदेवात्परोऽस्ति, अतस्स एव नो गति'रित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगः तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी । सा च ज्ञानं विविक्तदेशसेवित्वं—

---

असक्तिरिति । सक्तिस्सङ्गः, न सक्तिरसक्तिः । प्रीतिमात्रमिति । प्रीतिविशेषस्यानन्यात्मभावनालक्षणस्याभिष्वङ्गशब्देन वक्ष्यमाणत्वादिति भावः । सङ्गनिमित्तात्पुत्रादिविषयादात्मनोऽनन्यत्वेन भावनाऽनन्यात्मभावना । अनन्योऽनतिरिक्तः स चासावात्मा तस्य भावनेति समासः । भावना चिन्तनम् । अनन्यात्मभावनामेव दर्शयति—यथेति । अन्यस्मिन् स्वस्मादितरस्मिन् दारापत्यमित्रादौ सुखिनि सति 'अहमेव सु'खीति, तस्मिन् दु खिनि सति 'अहमेव दुःखी'ति, तस्मिन् जीवति सति 'अहमेव जीवा'मीति, तस्मिन् मृते सति 'अहमेव मरिष्या'मीति च । एवंरूपः प्रत्ययोऽनन्यात्मभावनेत्युच्यते । अहमेव मृत इति प्रतीत्ययोगान्मरिष्यामीत्युक्तमिति बोध्यम् । उभयमिति । असक्तिरनभिष्वङ्गश्चेत्यर्थः । तुल्यमविकृतत्वादेकरूपं चित्तं यस्य तस्य भावस्तुल्यचित्तता । ज्ञानमिति । ज्ञानहेतुत्वाद्ज्ञानमित्यर्थः । एवमन्यत्रापि बोध्यम् ॥९॥

मयीति । अनन्योऽपृथग्भूतस्स चासौ योगोऽनन्ययोगस्तेन । व्यभिचरितुं शीलमस्या अस्तीति व्यभिचारिणी सा न भवतीत्यव्यभिचारिणी । व्यभिचारोनाम एकत्र स्थिताया अन्यत्र गमनम् । वासुदेवभजनस्य देवतान्तरविषयत्वं व्यभिचार इति भावः । न चानन्ययोगेनेत्यनेन पुनरुक्तिरव्यभिचारित्वस्य—

विविक्तस्स्वभावतः संस्कारेण वाऽशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेव-
गृहादिभिर्विविक्तो देशः तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वं
विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्ते उपजायते। अतो
विविक्तदेशसेवित्वं ज्ञानमुच्यते। अरतिररमणं; क्व? जनसंसदि; जनानां प्राकृतानां संस्कार-
शून्यानामविनीतानां (कलहोन्मुखितचित्तानां) संसत्समवायो जनसंसत्; न संस्कारवतां
विनीतानां संसत्- तस्याः ज्ञानोपकारकत्वादतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वाद्ज्ञानम् ॥१०॥

किंच—

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतद्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥

अध्यात्मेति। अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं, तस्मिन्
नित्यभावः नित्यत्वम्। अमानित्वादीनां ज्ञानसाधनानां भावना परिपाकनिमित्तं तत्त्वज्ञानम्।

---

बुद्धिगतत्वेन भक्तिगतत्वेन च भेदात्। बुद्धिर्ज्ञानमात्मतत्त्वस्य। तच्च दर्शितं नान्यो भगवत इत्यादिना।
भक्तिरात्मचिन्तनमिति विवेकः। ध्यानमिति यावत्। मानसी क्रियेयम्। मलमूत्रादयोऽशुचिपदार्थः।
आदिशब्दात्कण्टकादिग्रहणम्। भयशब्दस्सर्पचोरव्याघ्रत्रयान्वयी- सर्पभयं चोरभयं व्याघ्रभयमिति।
आदिपदात्पिशाचभयादिग्रहणम्। ग्राम्यजनसञ्चारादिग्रहणं च। अरण्यं नदी पुलिनं देवतागृहमादिपदा-
त्पर्वतदर्यादिग्रहणम्। विविक्त इति। विजनः परिशुद्धश्चेत्यर्थः। प्रसीदति प्रसादमधिगच्छति।
अन्यत्र तु क्षोभं प्राप्नोतीति भावः। तत इति। चित्तप्रसादादित्यर्थः। आत्मादीत्यादिपदादनात्म-
ग्रहणम्। अनात्मानोऽपि भावयितव्या एव त्याज्यत्वार्थमिति भावः। अथ वा परमात्माऽऽदिपदार्थः।
प्रत्यगात्मपरमात्मनोरेकत्वेन चिन्तनमात्मपरमात्मभावना। प्राकृता विषयप्रवणा ग्राम्या मूर्खास्तेषां
सभायां हि स्त्रीद्यूतपानादिप्रसङ्ग एव, नतु भगवत्कथेतिहेतोस्तत्रारतिरावश्यकी। संस्कारश्शास्त्रार्थपरि-
ज्ञानं शमदमादिश्च तद्वतां सतां सभायां हि भगवत्कथा प्रस्तूयत इति न तत्रारतिः कार्या। अतएव-
'सत्सङ्गत्वे निस्सङ्गत्वं निस्सङ्गत्वे निर्मोहत्वम्। निर्मोहत्वे निश्चलतत्त्वं निश्चलतत्त्वे जीवन्मुक्ति'रिति
सत्सङ्गस्स्तूयते ॥१०॥

अध्यात्मेति। आत्मन्यध्यात्ममात्मविषयमित्यर्थः। आत्मशब्दस्योपलक्षणत्वमभिप्रेत्याह—
आत्मादिविषयमिति। यद्वा आत्मानं देहमधिकृत्य वर्तमानं सर्वमध्यात्ममित्युच्यते, तस्याध्यात्म-
स्यात्मादेर्ज्ञानम्। आदिपदादनात्मनां परमात्मनो वा ग्रहणं पूर्ववत्। अध्यात्मज्ञानं तस्मिन् नित्यत्वं
नित्यमपि स्थितिरित्यर्थः। सर्वदाप्यात्मादिभावनेत्यर्थः। न त्वध्यात्मज्ञाने नित्यत्वबुद्धिः। आत्मान्य-
स्यानित्यत्वेन तद्बुद्धेरप्रमात्वादनुपयुक्तत्वाच्चेति भावः। भावनायाः परिपाकस्य निमित्तं कारणमि-
त्यध्यात्मज्ञाननित्यत्वस्य विशेषणम्। अध्यात्मज्ञाननित्यत्वादमानित्वादिभावनापरिपाको भवतीत्यर्थः।

तस्य अर्थः मोक्षः संसारोपरमः; तस्य आलोचनं तत्त्वज्ञानार्थदर्शनं; तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं, ज्ञानार्थत्वात् । अज्ञानं यत् अतः अस्मात् यथोक्तादन्यथा विपर्ययेण मानित्वं दम्भित्वं हिंसा अक्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥

---

तस्मात्तत्परिपाकार्थमध्यात्मज्ञाननित्यत्वमावश्यकं मुमुक्षोरिति भावः । तत्त्वज्ञानमात्मसाक्षात्कारः । तस्यार्थः फलं मोक्षः । मोक्षशब्दार्थमाह—**संसारोपरम इति** । बन्धाभावस्य मोक्षत्वादिति भावः । **आलोचनमिति** । तत्त्वज्ञानादेव मोक्षो भवति नान्यस्मादित्येवंरूपमिति भावः । **तत्साधनेति** । तत्त्वज्ञानसाधनेत्यर्थः । यथा कर्मफलस्वर्गाद्यालोचनं विना कर्मण्यप्रवृत्तिस्तथेति भावः । एतत्पूर्वोक्तं तदेवाह—**अमानित्वादीति** । अमानित्वमादिर्यस्य तदमानित्वादि । तत्त्वज्ञानार्थदर्शनमन्तो यस्य तत्तत्त्वज्ञानार्थदर्शनान्तं गुणवृन्दमिति विशेष्यशेषः ।

ननु गुणवृन्दस्य कथं ज्ञानत्वप्रवचनमत आह—**ज्ञानार्थत्वादिति** । ज्ञानमर्थः फलं यस्य तत्त्वात् । ज्ञानायेदं ज्ञानार्थं तत्त्वादिति वा । **यथोक्तादिति** । पूर्वोक्तादित्यर्थः । विपर्ययेणेत्यनन्तरं भातीति शेषः । यदतोऽन्यथा भाति तदज्ञानमित्यन्वयः । किं तद्यदतो विपर्ययेण भातीत्यत आह—**मानित्वेति** । मानित्वादयोऽज्ञानकार्यत्वादज्ञानत्वेन विज्ञेया इत्यर्थः । ननु ज्ञानाभावरूपत्वेन- ज्ञानाभावस्याभावत्वेनैव मानित्वादिभावकारणत्वायोगात् । मानित्वादीनां च लोके ज्ञानत्वेनैव व्यवहारो नतु ज्ञानाभावरूपत्वेनेति न मानित्वादिकं ज्ञानाभावः ।

ननु- अमानित्वादेर्विज्ञेयत्वमस्तुनाम अनुष्ठानार्थं मानित्वादेः कुतो विज्ञेयत्वमत आह—**संसारस्य परिहरणायेति** । यथाऽनुष्ठानाय धर्मः, परिहरणायाधर्मश्च शास्त्रेण विज्ञेयस्तथाऽमानित्वादिकमनुष्ठानाय, मानित्वादिकं परिहरणाय च विज्ञेयमिति भावः । मानित्वादौ परिहृते सति संसारः परिहृतो भवतीति संसारपरिहरणाय मानित्वादिपरिहारः कर्तव्य इति तत्त्वम् ।

ननु संसारपरिहाराय मानित्वादिपरिहारः किमिति कार्योऽत आह—**प्रवृत्तिकारणत्वादिति** । मानित्वादेरिति शेषः । आत्मश्लाघादम्भादिहेतोर्हि यज्ञादिषु प्रवर्तते मूढजनः ।

यत्तु रामानुजः—तत्त्वज्ञानार्थचिन्तनमितिपाठं परीकल्प्य, तत्त्वज्ञानप्रयोजनं यच्चिन्तनं तन्निरतत्वमित्यवोचत् , **तत्तुच्छम्**—तत्त्वज्ञानार्थचिन्तननिरतत्वमितिपदाभावात् । लाक्षणिकार्थकल्पनस्यान्याय्यत्वात् । किं तत्तत्त्वज्ञानार्थं चिन्तनमिति प्रश्नस्योद्भूतत्वेन तदुत्तरस्यादर्शनान्मुमुक्षूणां कथं प्रवृत्तिः स्यात् ? न ह्यविदितेऽर्थे कस्यापि प्रवृत्तिर्भवेत् । एवं सङ्घाते चेतना धृतिरित्यत्रापि सङ्घातश्चेतनाधृतिरिति पाठं प्रकल्प्य चेतनस्य जीवस्याधृतिराधारस्सङ्घातः शरीरमिति यद्व्याचख्यावयं, तच्च तुच्छम्—इदं शरीरं क्षेत्रमिति पूर्वं सौलभ्येनोक्तस्यार्थस्य सङ्घातश्चेतना धृतिरिति क्लेशेन कथनं हि दुष्टं पुनरुक्तं च ॥११॥

यथोक्तेन ज्ञानेन ज्ञातव्यं किम्? इत्याकांक्षायामाह—'ज्ञेयं यत्त'दित्यादि। यमा नियमाश्च अमानित्वादयः, न तैर्ज्ञेयं ज्ञायते। न ह्यमानित्वादि कस्यचिद्वस्तुनः च्छेदकं दृष्टम्। सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते। न विषयेण ज्ञानेनान्यदुपलभ्यते, यथा घटविषयेण ज्ञानेनाग्निः। नैष दोषः— ज्ञाननिमि द्ज्ञानमुच्यत इति हि अवोचाम। ज्ञानसहकारिकारणत्वाच्च—

ज्ञेयं यत्तत्प्रवक्ष्यामि यद्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

ज्ञेयमिति। ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावत् वक्ष्यामि। कि

---

ज्ञेयमिति। यत् ज्ञेयं ज्ञातुं योग्यं मुमुक्षुभिर्विद्वद्भिरिति वा। यत् ज्ञात्वा विद्वानमृतं मश्नुते प्राप्नोति, तद्वस्तु प्रवक्ष्यामि। अनादिमत्परं ब्रह्म ज्ञेयं, तत्परं ब्रह्म सदिति नोच्यते, दिति च नोच्यते। पूर्वोक्तस्य चास्य च सङ्गतिं दर्शयति—यथोक्तेनेति, ज्ञानेनेति। ज्ञानस रित्यर्थः। तेषामेव पूर्वोक्तत्वात्। ज्ञानसाधनानां ज्ञेयज्ञापकत्वं नास्तीत्याक्षिपति—नन्विति। नित्वादयो यमनियमाश्च पूर्वोक्ता इति शेषः। यमनियमादिभिरात्मविनिग्रहो भवतीत्यात्मविनि शब्देन यमनियमादयो लक्ष्यन्त इति बोध्यम्। आदिपदादासनप्राणायामादिग्रहणम्। परिच्छे भेदकम्। नन्वमानित्वादेः कुतो वस्तुपरिच्छेदकत्वाभावोऽत आह—सर्वत्रेति। तदेव त ज्ञानमेव। ननु कोऽयं नियमोऽत आह—नहीति। तत्र दृष्टान्तमाह—यथेति। एतेन ज्ञानोपलभ्यमानत्वात् ज्ञानपरिच्छेद्यत्वमिति सूचितम्। घट इहास्तीतिज्ञानं हि पटादिभ्यः देश कालान्तरवर्तिघटेभ्यश्च परिच्छिद्य घटं प्रकृतमुपलम्भयति।

ननु घटे वर्तमानश्शुक्लगुणो नीलघटात्प्रकृतघटं परिच्छिद्य बोधयत्येव। कथमन्यथा विशेषणस्योप व्यावर्तकत्वं लक्षणं स्यात्तस्माद्ज्ञानमेव वस्तुनः परिच्छेदकमिति नियमस्यासिद्धिरिति चेत्, मैवम् तत्रापि घटश्शुक्ल इति शुक्लगुणज्ञानस्यैव परिच्छेदकत्वात्। न ह्यज्ञातश्शुक्लगुणो घटं परिच्छेत्तुं क्ष तस्माद्विशेषणज्ञानस्योपाधिज्ञानस्य च वस्तुपरिच्छेदकत्वमिति कृत्वा ज्ञायमानस्यैव विशेषणस्योपा व्यावर्तकत्वं लक्षणम्। उपाधिविशेषणयोर्ज्ञानेनैव परिच्छेददर्शनाच्च। कथमन्यथा विशेषणमिदमु रयमिति व्यवहारस्स्यात्? तस्माद्ज्ञानमेव ज्ञेयपरिच्छेदकं नामानित्वादिकमिति कृत्वा कथमुक्त नित्वादिना ज्ञातव्यमिति पूर्वपक्षः।

परिहरति तं सिद्धान्ती—नैष दोष इति। यथोक्तेन ज्ञानेनेत्यस्य अमानित्वादि जन्येनेत्यमानित्वादिसाधनसहकृतेनेति वा ज्ञानेनेत्यर्थात्पूर्वोक्तदोषाभाव इति भावः। प्रेत्युपसर्ग माह—प्रकर्षेणेति। यावदर्थमाह—यथावदिति। तत्प्रवचनं किं फलं- किं फलं यस्य त बहुव्रीहिः। इति शङ्कायां प्ररोचनेनोपच्छन्ददेन। मृतं मृतिः तदभावोऽमृतमित्यभिप्रेत्याह

तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह—यद्ज्ञेयं ज्ञात्वाऽमृतममृतत्वमश्नुते, पुनर्न म्रियत इत्यर्थः । अनादिमत्- आदिरस्यास्तीत्यादिमत्,न आदिमत् अनादिमत् । किं तत् ? परं 'निरतिशयं ब्रह्म' ज्ञेयमिति प्रकृतम् ।

अत्र केचित्—'अनादि मत्परं' इति पदं छिन्दन्ति, बहुव्रीहिणा उक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति । अर्थविशेषं च दर्शयन्ति—अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति । सत्यमेवमपुनरुक्तं स्यादर्थश्चेत्सम्भवति । नतु अर्थस्सम्भवति, ब्रह्मणः सर्वशेष-

---

अमृतमिति । प्रकृतदेहपरित्यागरूपमरणस्यावर्जनीयत्वादाह—पुनर्न म्रियत इति । मुच्यत इति यावत् । पुनर्जन्मप्रयुक्तत्वात्पुनर्मरणस्य मुक्तौ पुनरावृत्त्यभावेन पुनर्जन्माभावाच्चेति भावः ।

आदिः कारणं, तदस्यास्त्यस्मिन्निति मतुपि आदिमत् । ततो नञ्समासे अनादिमत् । कारणरहितमित्यर्थः । अजमिति यावत् । ज्ञेयमिति । क्षेत्रज्ञलक्षणं ब्रह्मैवात्र ज्ञेयमित्युच्यत इत्यर्थः । 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतेरिति भावः ।

ननु क्षेत्रज्ञो ज्ञातैवेति पूर्वमुक्तं, कथमधुना तस्य ज्ञेयत्वमिति चेत्, नैष दोषः—ज्ञानस्वरूपे क्षेत्रज्ञे ज्ञातृत्वस्याप्ययुक्तत्वात्तद्वत् ज्ञेयत्वस्याप्यौपचारिकत्वात् ।

ननु नान्योतोऽस्तीति द्रष्टेति द्रष्ट्रन्तरनिषेधादेकस्यैवात्मनः कथं ज्ञातृत्वं ज्ञेयत्वं च कर्तृकर्मविरोधादिति चेत्, मैवम्—ज्ञाता प्रमाता, सहि स्वस्वरूपमात्मानं क्षेत्रज्ञं ज्ञानस्वरूपं संस्कृतमनसा जानातीत्येकस्यैवात्मनोऽन्तःकरणावच्छिन्नस्वरूपेण ज्ञातृत्वमन्तःकरणवृत्त्यवच्छिन्नस्वरूपेण ज्ञानकरणत्वमन्तःकरणोपहितत्वरूपेणाविद्योपहितत्वरूपेण वा ज्ञेयत्वं, स्वतस्तु ज्ञानत्वमित्यभ्युपगमात् । तस्मात्प्रमात्रा संस्कृतमनसा ज्ञातव्यमेव क्षेत्रज्ञलक्षणं ब्रह्म । ज्ञेयमिति प्रकृतमिति । अस्मिन् प्रकरणे ज्ञेयत्वेन निर्दिष्टमित्यर्थः ।

ननु न आदिर्यस्य तदनादीति बहुव्रीहिणैव मतुबर्थस्योक्तत्वा'न्न कर्मधारयान्मत्वर्थीय' इति शास्त्रात् व्यर्थोऽत्र मतुप्प्रत्ययः । 'तत्पुरुषस्समानाधिकरणः कर्मधारय' इति यत्र समानाधिकरणं पदद्वयमस्ति तत्र कर्मधारयसमासमकृत्वा बहुव्रीहिसमासे कृते सत्येव मत्वर्थलाभात्कर्मधारयान्मत्वर्थीयप्रत्ययो न कर्तव्यः, यथा पीताम्बर इति बहुव्रीहिणैव पीताम्बरवत्त्वरूपेऽर्थे सिद्धे सति, पीतं च तदम्बरं च पीताम्बरमिति कर्मधारयं कृत्वा, पीताम्बरमस्यास्तीति पीताम्बरवानिति मतुब्विधानं व्यर्थं तद्वत् न आदिरनादिरनादिरस्यास्तीत्यनादिमदिति मतुब्विधानं व्यर्थमिति भावः । इमं दोषमपाकर्तुं च अनादीत्येवपदविभागः कर्तव्य इत्याक्षिपति—अत्र केचिदिति ।

ननु मत्परमित्यस्य कोऽर्थस्त्वन्मतेऽत आह—अर्थविशेषमिति । तमेव दर्शयति—अहमिति । अहं परा यस्य तन्मत्परमम् । वासुदेव ईश्वरः । सहि ब्रह्मण ईशनरूपा पराशक्तिः । ब्रह्मण एव सशक्तिकस्येश्वरत्वादीश्वरस्य ब्रह्मशक्तित्वेन निर्देशः । परिहरति सिद्धान्ती—सत्यमिति ।

प्रतिषेधेनैव विजिज्ञापयिषितत्वात् । 'न सत्तन्नासदुच्यत' इति विशिष्टशक्तिमत्त्वप्र
विशेषप्रतिषेधश्च इति विप्रतिषिद्धम् । तस्मान्मतुपः बहुव्रीहिणा समानार्थत्वेऽपि श्रो
श्लोकपूरणार्थः । अमृतत्वफलं ज्ञेयं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह—न स
ज्ञेयमुच्यत इति नाप्यसत् तदुच्यते ।

ननु महता परिकरबन्धेन कण्ठरवेणोद्घुष्य 'ज्ञेयं प्रवक्ष्यामि' इति, अननुरूप
'न सत्तन्नासदुच्यते' इति न, अनुरूपमेवोक्तम् । कथं ? सर्वासु ह्युपनिषत्सु ज्ञेयं ब्रह्म-
नेति' 'अस्थूलमनणु' इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते । 'न इदं तत्' इति
अगोचरत्वात् ।

ननु न तदस्ति, यद्वस्तु अस्तिशब्देन नोच्यते, अथ अस्तिशब्देन नोच्यते,

---

मत्परमित्यस्य त्वदुक्तार्थस्सम्भवति चेत्तव मते पुनरुक्तिदोषो न स्यात् । अर्थस्तु नैव सम्भवति ।
हेतुमाह—ब्रह्मण इति । निर्विशेषस्यैव ब्रह्मण इह ज्ञापयितुमिष्टत्वादिति । कथमिदं ज्ञा
आह—न सदिति । सत्त्वासत्त्वविशेषशून्यस्यैव ब्रह्मण इहोच्यमानत्वादित्यर्थः ।

ननु निर्विशेषमेव ब्रह्म मत्परं भवतु को दोषस्तत्राह—विशिष्टेति । ईश्वराख्यशक्तिमत्त्व
विशेषप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धं विरुद्धम् । तस्मादिति । त्वदुक्तार्थस्य विव
नासम्भवादित्यर्थः । अनादि परं ब्रह्मेत्युक्तौ श्लोको न पूर्येताष्टाक्षरपादत्वादनुष्टुभ इति हेतोर
मत्परं ब्रह्मेत्युक्तम् ।

न चानादि परमं ब्रह्मेत्युक्तौ श्लोकः पूर्येतेति वाच्यं, आर्षेयग्रन्थेषु स्थितस्य गतिश्चिन्त्ये
न्यायेन पाठान्तरकल्पनाशङ्काया अकर्तव्यत्वात् । परं ब्रह्मेत्यनेनैवाभीष्टसिद्धौ परमं ब्रह्मेतिपाठ
गौरवावहत्वेन दुष्टत्वाच्च । अमृतत्वं मोक्षः फलं यस्मात्तदमृतत्वफलं यद्ज्ञानादमृतत्वं भवति तदित्य
अभिमुखीकृत्येति । श्रोतारमिति शेषः । आह भगवानिति शेषः । ज्ञेयं प्रवक्ष्यामीत्युद्घुष्येत्यत्र
उद्घोषं कृत्वा उद्घुष्य । न सत्तन्नासदुच्यत इत्यननुरूपमुक्तमिति पूर्वपक्षः । नेति परिह
कथमिति । कथमनुरूपमुक्तमिति प्रश्नः । उत्तरमाह—सर्वास्विति । हि यस्मात्सर्वासूप
निर्विशेषमेव ब्रह्म निर्दिश्यते । श्रुतिमेव दर्शयति—नेतीति । विशेषाः स्थूलत्वाणुत्वह्रस्वत्वा
तेषां प्रतिषेधेन निषेधमुखेनेत्यर्थः । इदं तदिति तु न निर्दिश्यते- कुतः ? अगोचरत्वादविषयत्वा
'यतो वाचो निवर्तन्ते' इति श्रुतेरिति भावः ।

अननुरूपत्वमेव स्फुटयति पूर्ववादी—नन्विति । यद्वस्त्वस्तीतिशब्देनोच्यते तद्व
विद्यत एव । तत् विद्यमानं वस्तु नास्तीति ज्ञेयमिति च विप्रतिषिद्धम् । तथा ज्ञेयं तदस्ति ।
शब्देन नोच्यत इति च विप्रतिषिद्धम् । अयमर्थः—यत्परं ब्रह्म ज्ञेयमिति वदसि तद्वस्त्वस्ति
न वा ? अस्तित्वे सच्छब्दवाच्यस्य ज्ञेयस्य तस्य ब्रह्मणः कथं सच्छब्दाविषयत्वम् ? वदसि हि
सत्तदिति । द्वितीये- असतस्तस्य ब्रह्मणः कथं ज्ञेयत्वम् ? न हि शशशृङ्गादिकं ज्ञातुं

तद्ज्ञेयम्। विप्रतिषिद्धं च- 'ज्ञेयं तत्' 'अस्तिशब्देन नोच्यते' इति च। न तावन्नास्ति, नास्तिबुद्ध्यविषयत्वात्।

ननु सर्वा बुद्धयः अस्तिनास्तिबुद्ध्यनुगता एव, तत्रैवं सति ज्ञेयमपि अस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, न; अतीन्द्रियत्वेन उभयबुद्ध्यनुगतप्रत्ययाविषयत्वात्। यद्धीन्द्रियगम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्, नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात्। इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतः- 'न सत्तन्नास'दित्युच्यते।

---

युज्यते वा। तस्माद्यदि ज्ञेयं ब्रह्मास्ति तर्हि सच्छब्देनोच्यत एव, यदि ब्रह्म नास्ति तर्हि तद्ज्ञेयं न भवत्येवेति कथं ज्ञेयस्य ब्रह्मणोऽस्तिशब्दाविषयत्वं, कथं वाऽसतो ब्रह्मणो ज्ञेयत्वमिति।

परिहरति—नेति। ब्रह्मण इति शेषः। अस्तिनास्तिबुद्ध्योरविषयत्वादगोचरत्वात्। ब्रह्म हि घटवदस्तीति वा शशशृङ्गमिव नास्तीति वा वक्तुं न शक्यते- सदसद्बुद्ध्यविषयत्वात्। एवं सत्त्वासत्त्वरहितत्वादेव निर्विशेषत्वं ब्रह्मणः। अन्यथा घटवत्सविशेषमेव स्यात्सच्छब्दवाच्यत्वे सति ब्रह्म। ननु यद्यस्तिबुद्धेर्नास्तिबुद्धेश्चाविषयं ब्रह्म तर्हि ब्रह्मबुद्धेरप्यविषयमेव। अस्तिनास्तिबुद्ध्यननुगतबुद्धेरेवाभावादिति शङ्कते—नन्विति। सर्वत्र सद्बुद्धिरसद्बुद्धिश्चेति बुद्धिद्वयमेवोपलभ्यते, घटबुद्धिपटबुद्धिकुड्यबुद्धिकुसूलबुद्धिशशशृङ्गबुद्धिनरशृङ्गबुद्ध्यादयस्तु सद्बुद्धिविशेषा असद्बुदिविशेषा वा भवन्तीति सद्बुद्ध्या असद्बुद्ध्या वानुगतत्वं घटबुद्ध्यादीनाम्। एवं सति ब्रह्मबुद्धिरपि सद्बुद्ध्यनुगता वा स्यादसद्बुद्ध्यनुगता वा स्यान्न त्वतिरिक्ता। सदसद्बुद्ध्यननुगतबुद्धेरेवाभावात्। तथा च ज्ञेयं ब्रह्मापि सद्बुद्ध्यनुगतब्रह्मबुद्धिविषयं वा स्यादसद्बुद्ध्यनुगतब्रह्मबुद्धिविषयं वा स्यादिति कृत्वा सद्बुद्धेरसद्बुद्धेर्वा विषयमेव स्याद्ब्रह्म न त्वविषयम्। अन्यथा ब्रह्मबुद्धेरप्यविषयत्वेन ज्ञेयं ब्रह्मेति वक्तुमशक्यत्वादिति भावः।

अमुं पूर्वपक्षं परिहरति—नेति। अतीन्द्रियत्वेनेन्द्रियागोचरत्वेन हेतुना। उभयबुद्धी सदसद्बुद्धी तदनुगतः प्रत्ययो ब्रह्मबुद्धिः। तस्या अविषयत्वात्। तदेवोपपादयति—यदिति। हिः प्रसिद्धौ। यदिन्द्रियगम्यं घटादिकं वस्तु तदस्तिबुद्ध्यनुगतस्य सद्बुद्ध्यनुगतस्य प्रत्ययस्य घटादिबुद्धेर्विषयं वा स्यात्। नास्तिबुद्धिरसद्बुद्धिः। तदनुगतस्य प्रत्ययस्य घटादिबुद्धेर्विषयं वा स्यात्। घटस्य भावाभावाभ्यामुभयबुद्ध्यनुगतप्रत्ययविषयत्वमिति भावः। इदं तु ज्ञेयमतीन्द्रियत्वेन हेतुना घटवदुभयबुद्ध्यनुगतप्रत्ययविषयं न भवति। अस्यातीन्द्रियत्वे हेतुमाह—शब्दैकप्रमाणगम्यत्वादिति। 'शास्त्रयोनित्वा'दित्यधिकरणे स्थापितं ब्रह्मणश्शब्दप्रमाणैकवेद्यत्वम्। अत इति। सदसद्बुद्ध्यनुगतप्रत्ययाविषयत्वाद्ब्रह्मण इत्यर्थः। तद्ब्रह्म सदिति नोच्यते, असदिति च नोच्यते, सद्बुद्धि-

विषयं हि वस्तु सदित्युच्यते, असद्बुद्धिविषयं त्वसदित्युच्यते, उभयबुद्ध्यविषयत्वाद्ब्रह्म नोभयथे
इति भावः ।

ननु ज्ञेयं ब्रह्म किं ब्रह्मबुद्धिविषयमुत तदविषयम् ? आद्ये- सद्बुद्धिविषयत्वमसद्बुद्धिवि
वा प्राप्तं ब्रह्मणः । द्वितीये- ब्रह्मबुद्ध्यविषयं तद्वस्तु ब्रह्म कथं स्यात् ? न हि घटबुद्ध्यविषयं
पटः घटस्स्यादिति चेत्, उच्यते—यदि ब्रह्म इन्द्रियगम्यं स्यात्तर्हि ब्रह्मबुद्धिरुभयबुद्ध्यनुगता
स्यात् । नतु तथास्ति । तस्मान्न सद्बुद्धिविशेषो नाप्यसद्बुद्धिविशेषो भवति ब्रह्मबुद्धिरिति;
बुद्धिविषयं तद्वस्तु ब्रह्म भवत्येवेति ।

ननु यद्वस्तु सद्बुद्धेरसद्बुद्धेश्चाविषयं तद्वस्तु मिथ्याबुद्धिविषयमेव, सदसदनिर्वचनीयत्व
मिथ्यात्वादिति किं ब्रह्म मिथ्याबुद्धिविषयं मायादिवदितिचेत्, मैवम्—मिथ्याबुद्धेरपि वस्तुतः
द्बुद्धिविशेषत्वात् । यद्वा मिथ्यांबुद्धेरप्यविषयमेव ब्रह्म- ब्रह्मबुद्धेर्मिथ्याबुद्धित्वाभावात्तद्विशेषत्वाभावा

ननु नासत इतिश्लोकभाष्ये सर्वत्र सद्बुद्धिरसद्बुद्धिश्चेति बुद्धिद्वयोपलब्धेरित्युक्तमाचा
इह तु सद्बुद्धिरसद्बुद्धिर्ब्रह्मबुद्धिर्मिथ्याबुद्धिरिति बुद्धिचतुष्टयमुच्यते त्वया परस्परानानुगतं, तत्र
विरोधः । सर्वं जगदसद्बुद्धिविषयं, ब्रह्मैकमेव सद्बुद्धिविषयमित्यविनाशिश्लोकभाष्ये आचार्य
तैरेवेह न सद्बुद्धिविषयं ब्रह्मेत्युच्यत इति द्वितीयः । घटादेस्सद्बुद्धिविषयत्वमुच्यत इति तृती
'मनसैवानुद्रष्टव्य'मिति मनइन्द्रियगम्यस्य ब्रह्मणो धर्मादिवदतीन्द्रियत्वमुच्यत इति चतुर्थः । यद
न्द्रियत्वेन ब्रह्म सदसद्बुद्ध्यविषयं स्यात्तर्हि धर्मादपि शास्त्रैकप्रमाणत्वेनातीन्द्रियत्वात्सदसद्बुद्ध्यवि
स्यादिति ब्रह्मणोऽसदृशस्य धर्मादिसादृश्यं स्यादिति पञ्चमः । सद्रूपस्य ब्रह्मणस्सच्छब्दावाच्यत्वमु
इति षष्ठः । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रित्यादिश्रुतिविरोधस्सप्तम इतिचेत्, उच्य
यत्कालत्रयाबाध्यं नित्यं वस्तु तत्सत्, अन्यदसदितिबुद्ध्या नासत इत्यादौ ब्रह्मैव सत्, जगद
त्युक्तम् । तथैव सद्बुद्धिरसद्बुद्धिश्चेति बुद्धिद्वयमेवोपलभ्यत इत्युक्तम् । दृग्दृश्यभूतब्रह्मजगदति
पदार्थासत्त्वात्तद्विषयस्य बुद्धिद्वयस्यैवोपलम्भात्- मिथ्याबुद्धेश्चासद्विषयत्वादसद्बुद्धित्वमेव । ब्रह्मबु
सद्विषयत्वात्सद्बुद्धित्वमेव । ततो न बुद्धिचतुष्टयप्रसङ्गः । विषयचतुष्टयाभावात् । इदमेवाभि
श्रुत्यापि ब्रह्मणोऽस्तित्वमुच्यते सद्रूपत्वं च । इह तु यदिन्द्रियगम्यं तदेव वस्तु सद्वाऽसद्वा भव
त्युच्यते । तथा च त्रिकालाबाध्यत्वरूपपूर्वोक्तसत्तात इन्द्रियगम्यत्वरूपा इहोक्ता सत्ता भिद्यत ए
इन्द्रियगम्यत्वरूपाया एतत्सत्ताया ब्रह्मण्यभावाद्घटादिषु सत्त्वाच्च ब्रह्मणस्सद्बुद्ध्यविषयत्वं घटादेस्तद्वि
चोच्यत इति न पूर्वोत्तरविरोधः । मनसोऽनिन्द्रियत्वादिन्द्रियत्वे वाऽसंस्कृतमनसो ब्रह्मदर्शनेऽ
णत्वाच्चातीन्द्रियत्वमुच्यते ब्रह्मणः । धर्मादेरतीन्द्रियत्वांशे ब्रह्मसादृश्ये सत्यपि त्रिकालबाध्यत
तन्नास्तीति न ब्रह्मणोऽसदृशत्वभङ्गप्रसङ्गः ।

नहि शास्त्रैकवेद्यत्वे सति ब्रह्मसदृशस्स्यादिति स्वर्गादिलोकोऽस्माकमिन्द्रियागोचरो भवि
मर्हति । इन्द्रियगम्यवस्तुवाचिना सच्छब्देनातीन्द्रियं ब्रह्म नोच्यत इति न ब्रह्मणस्सद्रूपत्वासम्भ

यत्तूक्तम्—विरुद्धमुच्यते- 'ज्ञेयं तत्', 'न सत्तन्नासदुच्यते' इति, न विरुद्धम्—'अन्यदेव तद्विदितादथोऽविदिताद'धीति श्रुतेः । श्रुतिरपि विरुद्धार्था इतिचेत्- यथा यज्ञाय शालामारभ्य 'को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वे'तीत्येवमितिचेत्, न; विदिताविदिताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात् । 'यद्यमुष्मि'न्नित्यादि तु विधि-

---

त्रिकालाबाध्यचैतन्यवाचिना सच्छब्देनोच्यमानत्वाद्ब्रह्म इति । ननु तन्नास्ति ज्ञेयं भवति ज्ञेयं तदस्ति । अस्तिशब्देन नोच्यत इति विप्रतिषिद्धमिति यदुक्तं तस्य का गतिरित्यत आह—यत्त्विति । ज्ञेयं तन्न सत्तन्नासदुच्यत इति विरुद्धमुच्यत इति यत्तूक्तं तन्न विरुद्धमित्यन्वयः । अविरुद्धत्वे श्रुतिं प्रमाणयति—अन्यदिति । तद्ब्रह्म विदितादन्यदविदिताच्चान्यदित्यर्थः । विदिताविदिताभ्यां तत्पृथग्बोधस्वरूपकमिति भावः । अतीन्द्रियत्वेनास्तिनास्तिशब्दाभ्यां यन्नोच्यत इति वयं ब्रूमः तद्ब्रह्म यदि ज्ञेयं स्यात्तर्हि विरुद्धवादः स्यात् । ननु तद्ज्ञेयं, किंतु ज्ञानमेव । ज्ञेयत्वे सति ब्रह्मणः केनचिद्विदितत्वमेव स्यादथवा केनचिदविदितत्वं स्यात् । यथा ज्ञेयो घटः केनचिद्विदितः केनचिदतिबालेनाविदितश्च भवति । ब्रह्म तु न केनापि विदितं नाप्यविदितं तस्मान्न ज्ञेयं ब्रह्म । अत्रास्य ज्ञेयत्ववचनं त्वौपचारिकमित्यभिसन्धिः । एवं ब्रह्मणो ज्ञेयत्वेऽसिद्धे अविद्यमानस्य कथं ज्ञेयत्वम्? ज्ञेयस्य वा कथमविद्यमानत्वमिति विरोधद्वयमपास्तम् । अनया चान्यदेवेतिश्रुत्या अतीन्द्रियत्वेन सदसच्छब्दवाच्यमपि तद्ब्रह्म ज्ञानस्वरूपत्वाद्विद्यमानमेव । ज्ञानं हि त्रिकालाबाध्यमिति ज्ञायते । नच यदि ज्ञानं सर्वदास्ति तर्हि घटादयस्सर्वदा भासेरन्निति वाच्यं, ज्ञानं हि स्वविषयं सर्वमवभासयत्स्वयमवभासते । घटादयो विषयास्तु न सर्वदा ज्ञानस्य विषया भवन्ति, येन सर्वदा घटादिस्फुरणं स्यात् । किंतु कदाचित्किञ्चिदेव ज्ञानस्य विषयो भवति । यथेदानीं घटः क्षणान्तरे पटः क्षणान्तरे पुस्तकं निद्रायामज्ञानमित्येवम् । तस्माद्विषयाणां क्षणिकत्वेऽपि विषयिणो ज्ञानस्य त्रिकालाबाध्यत्वलक्षणं सत्यत्वमस्त्येव । अत एव- 'सत्यं ज्ञानमनन्तं ब्र'ह्मेति श्रुतिरुपपद्यते । तदेव ज्ञानं ब्रह्म । ननु ज्ञेयमिति ।

ननु विरुद्धार्थत्वाच्छ्रुतिरप्यप्रमाणमेवेति शङ्कते—श्रुतिरपीति । यज्ञाय शालामारभ्य प्रवृत्ता अन्तर्हितो हि देवलोको मनुष्यलोकाश्चास्माल्लोकात्प्रेतव्यमिवेत्याहुः- 'कोहि तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा नवे'तीतिश्रुतिस्संशयात्मकत्वाद्विरुद्धार्था यथा तद्वदन्यदेवेतिश्रुतिरपि विरुद्धार्थेति चेन्नैवं वक्तव्यमिति शेषः । ब्रह्म प्रतिपादयितुं प्रवृत्तत्वात्प्रकृतश्रुतेरित्याह—विदितेति । अवश्यविज्ञेयार्थो ब्रह्म । ननु यद्यमुष्मिन्निति श्रुतिरपि ज्ञेयार्थप्रतिपादनपरैवेत्यत आह—यदीति । विधेर्यज्ञविधेश्शेषभूतोऽर्थवादः । प्रधानो विधिः यजेतेत्यादिः । अर्थवादस्त्वप्रधानत्वात्तच्छेषभूतः । विधिशेषत्वेनैवार्थवादानामुपयोगो नतु स्वातन्त्र्येणेति भवत्वर्थवादवाक्यस्य स्वार्थे तात्पर्याभावादप्रामाण्यम् । प्रकृतश्रुतिस्तु ब्रह्मप्रतिपादनपरत्वात्प्रधानवाक्यमेवेति न दृष्टान्तसम्प्रतिपत्तिरिति भावः ।

शेषोऽर्थवादः। उपपत्तेश्च सदसदादिशब्दैर्ब्रह्म नोच्यत इति। सर्वो हि शब्दोऽर्थप्रकाशना प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसम्बन्धद्वारेण सङ्केतग्रहणं सव्यपेक्षोऽर्थं प्रत्या यति; नान्यथा- अदृष्टत्वात्। तद्यथा- 'गौः' 'अश्व' इति वा जातितः, 'पचति' 'पठति' इ वा क्रियातः, 'शुक्लः' कृष्ण' इति वा गुणतः, 'धनी' 'गोमान्' इति वा सम्बन्धतः। नतु ब्र जातिमत्, अतो न सदादिशब्दवाच्यम्। नापि गुणवत् येन गुणशब्देनोच्येत निर्गुणत्वा नापि क्रियाशब्दवाच्यं निष्क्रियत्वात्- 'निष्कलं निष्क्रियं शान्त'मिति श्रुतेः। नच सम्ब एकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च। न केनचिच्छब्देनोच्यत इति युक्तं; 'यतो वा निवर्तन्त' इत्यादिश्रुतिभ्यश्च ॥१२॥

---

न केवलं श्रुतिरेव प्रमाणं, किंतूपपत्तिरपीत्याह—उपपत्तेश्चेति। उपपत्तिर्युक्तिः। ज्ञेयम ब्रह्म सदादिशब्दैर्नोच्यत इत्यत्रोपपत्तेश्च सत्त्वान्न विरुद्धवादप्रसङ्ग इत्यर्थः। चकारो दर्शितश्रुतिसमु यार्थः। उपपत्तिमेव दर्शयति—सर्व इत्यादिना युक्तमित्यन्तेन। अर्थप्रकाशनार्थाय वक्तृभिरि शेषः। प्रयुक्तः श्रोतृभिः श्रूयमाणस्सर्वशब्दः जातिक्रियागुणसम्बन्धद्वारेण सङ्गतिग्रहणसव्यपेक्षस्स प्रत्याययति न त्वन्यथा। लोके अन्यथा अदृष्टत्वादिति। अर्थो घटादिः तत्प्रकाशनमेवा प्रयोजनं तस्मै। तदर्थमित्यर्थः। सर्वश्शब्दस्सर्वविधश्शब्दः; सर्वे शब्दा इति यावत्। जात्येकत्व सव्यपेक्षस्सापेक्षः प्रत्याययति बोधयति। अन्यथा जात्यादिद्वारेण सङ्गतिग्रहणनिरपेक्षस्सन्नित्यर्थः न अर्थं न प्रत्याययतीत्यर्थः। अदृष्टत्वादनुपलभ्यमानत्वादित्यर्थः। गोत्वाश्वत्वादिकं जातिः अनेकव्यक्तिष्वनुगतो धर्मो जातिः। कर्मेन्द्रियनिर्वर्त्या क्रिया पचनपठनादिः। शुक्लकृष्णादयो गुणाः स्वस्वामिभावादयस्सम्बन्धाः। निर्धर्मकत्वाद्ब्रह्मणि न जातिः, निष्क्रियत्वान्न क्रिया, निर्गुणत्वान्न गु एकत्वान्न सम्बन्ध इति ब्रह्म जात्यादिमन्न भवति। अत इति। जात्यादिशून्यत्वाद्ब्रह्मण इत्यर्थः ब्रह्म सदसदादिशब्दवाच्यं न भवति। सच्छब्दो हि सत्तारूपजातिमद्वस्तुवाची। आदिपदादसच्छब्द ग्रहणम्। सच असत्त्वरूपधर्मवद्वस्तुवाची। ब्रह्मणि तु न सत्ता विद्यते, नाप्यसत्त्वमिति कृत्वा सदि असदिति वा वक्तुं ब्रह्म न शक्यते। नापि गुणवदिति। ब्रह्मेति शेषः। येनेति। गुणवत्त्वे त्यर्थः। गुणशब्देनेति। शुक्लकृष्णादिना कुतो न गुणवद्ब्रह्मात आह—निर्गुणत्वादिति। शु ब्रह्म कृष्णं ब्रह्मेत्येवं वक्तुं न शक्यत इत्यर्थः। क्रियाशब्दः क्रियावाचिशब्दः। सम्बन्धोऽस्यास्ती सम्बन्धि। कस्मान्न सम्बन्धि ब्रह्मेत्यत आह—एकत्वादिति। ननु एकमेव ब्रह्मास्तु, अनेकब्रह्मा न सन्तु, घटपटादिवस्तुभिरन्यसम्बन्धित्वं स्यादेवेत्यत आह—अद्वयत्वादिति। द्वितीयं वस्तु ना ब्रह्मणः- 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतेरिति भावः। एतेन शब्दप्रवृत्तिनिमित्तानां जातिगुणक्रियास न्धानां ब्रह्मण्यभावाद्ब्रह्म न शब्दप्रतिपाद्यमिति सिद्धम्। अस्यैव ब्रह्मगतशब्दाप्रतिपाद्यत्वस्य। हेत्वन्त माह—अविषयत्वादिति। वाचामगोचरत्वादित्यर्थः। नच ब्रह्मापि विषय एवेति वाच्यं, वि यित्वात्तस्य। कुतोऽस्य विषयित्वमत आह—आत्मत्वादिति। आत्मनो विषयित्वमनात्मनां सर्वे

विषयित्वं च- 'विषयविषयिणो'रिति सूत्रभाष्ये स्पष्टम् । ज्ञानस्वरूपत्वादात्मा विषयी, ज्ञेयत्वादन्यत्सर्वं विषय इति । यद्वा शब्दप्रवृत्तिनिमित्तानां जात्यादीनामभावेन सदादिशब्दावाच्यत्वेऽपि ब्रह्मणस्संज्ञामात्रप्रयोजकयदृच्छाशब्दवाच्यत्वं स्यादित्यत आह—अविषयत्वादिति । संज्ञासंज्ञिसम्बन्धवत्येव वस्तुनि डित्थडवित्थादिसंज्ञाशब्दाः प्रवर्तन्ते, ब्रह्म न च सम्बन्धीत्युक्तं तस्माद्यदृच्छाशब्दानामप्यविषयमेव ब्रह्म । 'न नामरूपे गुणदोष एव वा' इति ब्रह्मणि नाम्नोऽप्यभावादिति ।

एवं ब्रह्मणस्सर्वशब्दाविषयत्वे हेत्वन्तरमाह—आत्मत्वाच्चेति । येनात्मना सर्वे शब्दाः प्रकाश्यन्ते तमात्मानं पुनः कश्शब्दः प्रकाशयेत् ? शब्देन ह्यर्थः प्रकाश्यते । अर्थप्रकाशकत्वमेव हि शब्दस्य शक्तिः । तद्रहितस्तु भेर्यादिशब्दवच्छ्रोत्रप्रवेशमात्रफलकत्वाद्व्यर्थ एव । इयं च शब्दशक्तिर्ब्रह्मणि विधुरैव- 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभा'तीति च श्रुतेः । सर्वावभासके ब्रह्मणि शब्दावभास्यत्वासम्भवात् । य आत्मा घटोयं पटोयमितिवच्छब्दोऽयमिति जानाति स आत्मा घटेनेव शब्देन कथं बोध्येत ? न कथमपीत्यर्थः ।

ननु जडेन शब्देन यदि घटो बोध्येत तर्ह्यात्मा न बोध्यत इति वक्तुं युक्तं तदेव न सम्भवतीतिचेत्, मैवम्—घट इतिशब्दो जडत्वात्स्वयं घटं न वेत्तुनाम, अन्यस्मै पुरुषाय तु घटं बोधयत्येव । आत्मा तु नैवं घटवच्छब्देन बोध्यत इत्यदोषात् ।

ननु आत्मशब्दोऽप्यात्मानं बोधयत्येव घटमिवेति चेत्सत्यं बोधयति, कस्मै बोधयतीति वक्तव्यम् । न तावदात्मने- बोधनात्प्रागप्यपरोक्षत्वादात्मनः । आत्मा हि स्वयम् । नहि स्वस्य स्वयं परोक्षः कदाचिदपि । नाप्यन्यस्मै- आत्मान्यस्य सर्वस्यापि जडत्वात् । न च प्रमात्रे इति वक्तव्यं, तस्यापि वस्तुत आत्मत्वादिति । तदेवमात्मत्वान्न शब्दप्रतिपाद्यत्वं ब्रह्मण इति स्थितम् ।

ननु यदि ब्रह्म शब्दाप्रतिपाद्यमिन्द्रियागम्यं च तर्हि तुच्छमेवेति चेत्, मैवम्—आत्मत्वेन नित्यापरोक्षत्वात् । तुच्छं हि न प्रतिभाति कदाचिदपि शशशृङ्गवत् । ननु यद्येवमतीन्द्रियं शब्दाविषयमपि ब्रह्म नित्यापरोक्षमात्मत्वादिति न तत्र चक्षुरादेरिव शब्दस्यापि कोऽप्युपकारस्तर्हि व्यर्थं शास्त्रमितिचेन्न व्यर्थम्—अतीन्द्रियश्शब्दाविषयो नित्यापरोक्षश्चैतन्यरूप आत्मैव ब्रह्मेत्येतदर्थज्ञानाय शास्त्रस्यावश्यकत्वात् । न हि शास्त्रं गुरूपदेशं वा विना औत्पत्तिकेन ज्ञानेन यः कोऽपि यथोक्तमर्थं जानीयात् । गुरुशास्त्रसत्त्वेऽपि यः कश्चिन्महामतिरेव यथोक्तमर्थं वेत्ति- 'श्रुत्वाप्येनं वेद न चैव कश्चि'दित्युक्तत्वात् । न पुनस्सर्वे श्रोतारश्शास्त्रस्य । किंपुनर्गुरुशास्त्राभावे । सर्वो ह्यौत्पत्तिकेन ज्ञानेनात्मानं मनुष्यं जातं वृद्धं सुखिनं दुःखिनं वा मन्यते । न त्वविक्रियं सच्चिदानन्दं ब्रह्म ।

नच कोऽयमात्मन्येवान्यभ्रम इति वाच्यं, नहि दृष्टेऽनुपपत्तिरिति न्यायात् । अयुक्तोऽप्यात्मन्यन्यभ्रमो नापलायितव्योऽनुभवबलात् । नापि तद्धेतुविचारः कर्तव्यः । किंतु केवलं परिहर्तव्यः । रोगिणा हि स्वानुभवसिद्धस्य रोगस्य नाशायैव यतितव्यं, न तु रोगहेतुत्वादिविचारः कर्तव्यः- निष्फ-

त्वादिति । यथा रोगस्य भेषजं प्रसिद्धं तथा प्रकृतसंसारभ्रमस्य तत्त्वज्ञानं नाशकत्वेन प्रसिद्धं तच्च शास्त्रतो गुरूपदेशाद्वा सम्पाद्यमिति महाफलमेव वेदान्तशास्त्रं साक्षादात्मबोधनाशक्तत्वेऽप्यात्म कल्पितसर्वभ्रमनिवृत्तिकरतत्त्वज्ञानजनकत्वादिति ।

ननु शास्त्रे श्रूयमाणात्मब्रह्मसच्चिदादिशब्दाः किमात्मानं बोधयन्तस्सन्तस्संसारभ्रमं नि यन्ति ? उताबोधयन्तः ? आद्ये- ब्रह्म न शब्दप्रतिपाद्यमित्यस्य विरोधः । द्वितीये- आत्माबो कथं संसारभ्रमनिवृत्तिः ? न हि कल्पितसर्पभ्रमनिवृत्तिरधिष्ठानरज्जुतत्त्वज्ञानं विना सम्भवतीति चे मैवम्—आत्मब्रह्मादिशब्दा आत्मानमिदं तदिति न प्रतिपादयन्ति, किं त्वनात्माब्रह्मासदादि विलक्षणत्वेन केवलं प्रतिपादयन्ति । ततश्च श्रोतुरात्मन्यनात्माब्रह्मासदादिभ्रमो निवर्तते । अहमा ब्रह्म सच्चिदानन्दमिति ज्ञानं जायते । ततस्संसारो निवर्तत इति । न चेदं तदिति कुतो न प्र पादयन्तीति वाच्यं, अविषयत्वादात्मनः । इदंशब्दो हि विषयमभिधत्ते । चाक्षुषश्रावणादिप्रत्यक्षवि वस्तुन्येवेदंशब्दप्रयोगात् । आत्मा तु विषय्येवेति न विषयः । नहि चाक्षुषादिप्रत्यक्षविषय आत्म अतीन्द्रियत्वात् । अनुभवरूपो ह्यात्मा अनुभवश्च स्वैकवेद्य इति सम्प्रतिपन्नमिति ।

ननु आत्मशब्द आत्मानं न प्रतिपादयतीति विरुद्धं- यथा घटशब्दो घटं न प्रतिपादयतीति चे विरुद्धम्—घटं न प्रतिपादयतीत्यत्र घटशब्देन किं त्वया विवक्षितम् ? कम्बुग्रीवाद्याकारवन्मृत्ति विशेषो विवक्षितः । स चेन्द्रियगोचर एवेति युक्तं तस्य घटशब्देन प्रतिपादनम् । आत्मानं न प्र पादयतीत्यत्र आत्मशब्देन किं त्वया विवक्षितम् ? यद्विवक्षितं तद्यदि त्वं शब्देन प्रतिपादयेः, तर्हि शब्दोऽन्यो वा प्रतिपादयेदेवात्मानम् । नतु त्वमात्मशब्देन मया विवक्षितमिदमिति वक्तुं श निर्विशेषत्वात्तस्येति । तस्मात्केनचिच्छब्देनाप्यात्मा नोच्यत इति युक्तम् ।

ननु पुरुषबुद्धितन्त्रत्वादुपपत्तिर्न प्रमाणमत आह—यत इति । श्रुतिमूलत्वादुपपत्तिः प्रमा मेवेति भावः । इत्यादीत्यादिपदात्- 'यद्वाचानभ्युदित'मित्यादिग्रहणम् । चकारात्- 'ब्रह्मन्ब्रह्मण्य र्देश्ये निर्गुणे गुणवृत्तयः । कथं चरन्ति श्रुतयस्साक्षात्सदसतः परे' इत्यादिस्मृतिग्रहणमनुभवस्य ग्रहणम् । एवं श्रुतियुक्त्यनुभवसिद्धत्वाच्छङ्कराचार्योक्त एवार्थो ग्राह्यः । अतीन्द्रियत्वाद्ब्रह्म घटव सत्, शब्दैकवेद्यत्वादशून्यत्वादात्मत्वाच्च शशशृङ्गवत् न चासत्, निर्विशेषत्वाद्ब्रह्म सदसच्छब्दवा न भवति घटादिवत् । ज्ञानस्वरूपत्वाद्ब्रह्म ज्ञेयं न भवति घटवत् । ब्रह्म परमनादिमत्त्वाद्घटव क्षेत्रज्ञ एव परं ब्रह्म अद्वितीयज्ञानस्वरूपत्वाद्घटवत् । क्षेत्रज्ञाभिन्नं ब्रह्मैव मुमुक्षुभिर्ज्ञेयं ब्रह्मात्मज्ञानं मोक्षहेतुत्वाद्घटवत् । इति व्यतिरेकदृष्टान्तोपनिबद्धाः प्रयोगा इह सूच्यन्ते ।

न चान्वयदृष्टान्ताः किमिति न दर्शिता इति वाच्यं, ब्रह्मण एकस्यैव निर्विशेषसत्यज्ञाना रूपत्वेन तदन्यस्य सर्वस्यापि सविशेषानृतजडदुःखरूपत्वेन चान्वयदृष्टान्ताभावादिति संक्षेपः ।

**यत्तु रामानुजः**—ब्रह्मभिन्नस्य क्षेत्रज्ञस्य स्वरूपमिह विशोध्यते, अमानित्वादिसाधनैः ज्ञेयं प्राप्यं यत्प्रत्यगात्मस्वरूपं तत्प्रवक्ष्यामि, यद्ज्ञात्वाऽमृतं जन्ममरणादिरहितमात्मानं प्राप्नोति । अनादि, तत एवानन्तं च । मत्परमहमेव परश्शेषी यस्य तत् । ब्रह्म बृहत्त्वगुणयोगि । शरीरादर्थान्तरभूतं स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः । 'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च' इत्यादिषु ब्रह्मशब्द आत्मन्यपि प्रयुज्यते । न सत्तन्नासदुच्यते । कार्यकारणरूपावस्थाद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यत इति, **तत्तुच्छम्**—किं प्रत्यगात्मस्वरूपं प्रत्यगात्मनो भिन्नमुताभिन्नम् ? नाद्यः- स्वस्मात्स्वस्वरूपस्य भिन्नत्वायोगात् । न द्वितीयः- अभिन्नत्वे प्राप्तुः प्रत्यगात्मनः स्वस्वरूपस्य प्राप्यत्वायोगात् । **तथा** ज्ञाधातोः ज्ञानार्थकत्वस्य प्रसिद्धत्वेन तद्विहाय प्राप्त्यर्थकल्पनं **चायुक्तम्**—ज्ञेयं प्राप्यमिति । अनादीत्यनेनैव कार्यावस्थारहितत्वस्योक्तत्वेन न सदुच्यत इत्यस्य पुनरुक्तिः । अणोर्जीवस्य बृहत्त्वगुणस्तावदयुक्तः, येन ब्रह्मशब्दवाच्यस्स्याज्जीवः ।

नच मुक्तौ स्वरूपाविर्भावदशायां बृहत्त्वं स्यादिति वाच्यं, मुक्तौ पूर्वमवस्थितात्स्वरूपात्किमन्यदाविर्भवति ? उत तदेव ? आद्ये- पूर्वस्थितस्वरूपत्यागाज्जीवस्य मरणं, स्वरूपान्तराविर्भावात्तु जन्मेति जन्ममरणवाननित्य एव स्याज्जीवः । तच्चाविर्भूतं स्वरूपमनित्यमेव स्यात् । यद्यत्सादि तत्तत्सान्तमिति व्याप्तेः । द्वितीये- पूर्वमेवाप्रस्थितस्य पुनराविर्भावोऽयुक्तः- आविर्भावात्प्रागेव स्थितत्वात् । तथा बृहत्त्वमपि किमपूर्वमाविर्भवति ? उत पूर्वमेवावस्थितम् ? नाद्यः- बृहत्त्वस्याविर्भावेऽसत्यनित्यत्वप्रसङ्गात् । आविर्भावात्प्रागेव स्थितत्वे पुनराविर्भावायोगाच्च । किंचाविर्भवदिदं बृहत्त्वं जीवस्याणुत्वमपहृत्याविर्भवति वा ? उतानपहृत्य ? आद्ये- जीवस्य नाशप्रसङ्गः- अणुस्वरूपत्वाज्जीवस्य । द्वितीये- बृहत्त्वस्यासिद्धिः- बृहत्त्वविरोध्यणुत्वस्य वर्तमानत्वात् ।

किंच यदि स्वभावादणुरपि मुक्तौ बृहत्त्वमापद्येत जीवस्तर्हि जीवस्सावयव एव स्यात् । न ह्यणुपरिमाणं वस्तु बह्वणुसंयोगं विना मध्यमपरिमाणमपि भवेत्किं पुनर्महत्परिमाणम् । सावयवत्त्वे चानित्य एव स्यात् । निरवयवो जीव इति तवाप्यभिमतत्वेन तद्विरोधश्च । नच संसारदशायां शरीरादिपरिच्छेदाज्जीवस्याणुत्वं, मुक्तौ तु तद्राहित्यादूबृहत्त्वमिति वाच्यं, अपरिच्छेद्यस्य जीवस्य परिच्छेदायोगात् । परिच्छेद्यत्वे च घटादिवदनित्यत्वप्रसङ्गात् ।

किंच शरीरादिना कस्य परिच्छेदः ? न जीवस्य- परिच्छिन्नस्यैव जीवत्वेन परिच्छेदात्प्राग्जीवस्यैवाभावात् । भावे त्वपरिच्छिन्न एव सः । नचेष्टापत्तिः- अपरिच्छिन्नस्याणुत्वासम्भवात् । नापि परमात्मनः- तस्य परिच्छेदे सति जीवत्वप्रसङ्गात् । परमात्मनस्सकाशाद्भिन्नो हि तव मते जीवः ।

ननु मास्तु बृहत्त्वगुणयोगः, रूढ्यैव ब्रह्मशब्द आत्मवाची- ब्रह्मणो हि प्रतिष्ठेतिप्रयोगादिति चेत्, **मैवम्**—तत्रापि ब्रह्मशब्दस्य परमात्मवाचित्वस्यैव वक्ष्यमाणत्वात् । परमात्मन्येव रूढत्वाच्च ।

प्रत्यगात्मनि तु परमात्माभेदाद्ब्रह्मशब्दप्रयोगः। नच ब्रह्मणो हि प्रतिष्ठेत्यत्र ब्रह्मशब्दस्य पर वाचित्वे कथं स्वस्य स्वयमेव प्रतिष्ठा स्यादिति वाच्यं, परमात्मनः प्रत्यगात्मा प्रतिष्ठा इति माणत्वात्।

तथा मत्परमित्यप्ययुक्तं-- बन्धदशायां जीवस्येश्वरशेषत्वेऽपि मुक्तौ न तच्छेषत्वं कल शक्यम्। ईश्वरवज्जीवस्यापि मुक्तस्य बृहत्त्वात्सच्चिदानन्दरूपत्वाच्च तव मतानुसारेणापि। मुक्तौ जीवस्येश्वरसाधर्म्यं भवतीति वदति भवान्। 'मम साधर्म्यमागता' इति गीतां च तत्र प्रमाण नहि समानधर्मवतोर्वस्तुनोः परस्परं शेषशेषिभावः कल्पयितुं शक्यते। धनिकत्वदारिद्र्याद्यस धर्मकयोर्हि राजभृत्ययोश्शेषशेषिभावो दृश्यते लोके। राज्ञोरपि सार्वभौममण्डलाधिपयोरसमानधर्म रेव शेषशेषिभावः। दम्पत्योरपि भार्यात्वभर्तृत्वरूपासमानधर्मकयोरेव। एवं पुत्रपित्रादीनामपि पालकत्वादिरूपासमानधर्मकाणामेवेति न समानधर्मकयोः क्वचिदपि शेषशेषिभावः। नच जीवा उत्कृष्टधर्मक इति वाच्यं, 'मम साधर्म्यमागता' इति गीताविरोधात्।

ननु जीवेश्वरयोरुभयोरपि सच्चिदानन्दरूपत्वेऽपि जीवस्य मुक्तस्य न जगद्व्यापारः, ईश्वर सोऽस्तीति जीवादुत्कृष्ट एवेश्वर इतिचेत्, मैवम्—सगुणमुक्तिक्षेत्रं हिरण्यगर्भलोकं प्रविष्टा जीवानां जगद्व्यापाराभाव इति सूत्रकाराभिमतत्वेन तेषां शरीरादिपरिच्छेदसत्त्वात्परिच्छिन्नानां मुक्तानामपरिच्छिन्नेश्वरसाधर्म्यासम्भवात्। नच मुक्तजीववदीश्वरोऽपि सशरीर एवेति वाच्यं, सशरी तस्य हिरण्यगर्भस्य विष्णोश्शिवस्यान्यस्य वा जीवत्वेनेश्वरत्वाभावात्। अशरीरो हीश्वरः। ई बृहत्त्वेन शरीरादिपरिच्छेदासम्भवात्। 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिना परमात्मनोऽशरी प्रतिपादनाच्च। नच मुक्तजीव ईश्वरवदशरीर एवेति वाच्यं, शरीराभावे जीवेश्वरभेदकोपाध्य जीवेश्वरभेदस्य दुर्वचत्वात्। न ह्यपरिच्छिन्नं बृहत्त्वगुणयोगि परिपूर्णं वस्तुद्वयं भवितुमर्हति। वस्तुना ईश्वरस्य, ईश्वरवस्तुना जीवस्य च परिच्छेदसम्भवेनापरिच्छिन्नत्वायोगात्। अत एव पूर्णत्वयोरप्ययोगात्। देशतः कालतो वस्तुतश्च परिच्छेदशून्यं हि वस्त्वपरिच्छिन्नं ब्रह्मेत्युच्यते। ब्रह्मणस्स्वशरीरभूतेन जीवेन नास्ति परिच्छेद इति वाच्यं, जीवस्यापि शरीरेण परिच्छेददर्शन शरीरशरीरिणौ किं पदार्थद्वयमुतैकः पदार्थः? आद्ये- परस्परपरिच्छेदस्सिद्ध एव। द्वितीये- श शरीरिभावस्यैवासिद्धिः।

तस्माद्यदि जीवेश्वरौ द्वौ स्तस्तर्हि जीवेन परिच्छेदादीश्वरस्यैव पूर्णत्वलक्षणं बृहत्त्वमसिद्ध तीश्वर एव न ब्रह्म, किंपुनर्जीवः। अहो! तव पाण्डित्यप्रकर्षः! येन जीवस्य ब्रह्मत्वं साधि त्वया ब्रह्मण एव ब्रह्मत्वं लोपितम्। एतेन मुक्तिदशायां प्रकृतिसत्त्वमप्यपास्तम्—सत्यां प्र ब्रह्मणः प्रकृतितः परिच्छेदसम्भवात्। तस्मात्परमार्थतो न जीवेश्वरभेदोऽस्ति, नापि प्रकृतिस्त जगद्वाऽस्ति। अत एव 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतिरुपपद्यत इति स्थितमद्वैतम्॥१२॥

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयन् तदाशङ्कानिवृत्त्यर्थमाह—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

सर्वत इति। सर्वतः पाणिपादं सर्वतः पाणयः पादाश्चास्य इति सर्वतःपाणिपादं तत् ज्ञेयम्। सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञस्यास्तित्वं विभाव्यते। क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते, क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम्। क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति, तदपनयनेन ज्ञेयत्वमुक्तम्- 'न सत्तन्नासदुच्यते' इति। उपाधिकृतं मिथ्या-

---

सर्वत इति। पूर्वोत्तरश्लोकयोश्शङ्काद्वारेण सङ्गतिं दर्शयति—सच्छब्देति। ज्ञेयस्य ब्रह्मणस्सच्छब्दप्रत्ययाविषत्वादसत्त्वाशङ्कायां प्राप्तायां सत्यां तदस्तित्वं ज्ञेयस्य सत्त्वम्। यद्यपि न सत्तदुच्यत इत्यनेन प्राप्ता तदसत्त्वशङ्का नासत्तदुच्यत इत्यनेन निराकृतैव, तथापि सच्छब्दप्रत्ययाविषयस्य तस्य कथमसच्छब्दवाच्यत्वाभाव इति प्राप्तैव पुनस्तदसत्त्वाशङ्केति बोध्यम्। सर्वतः पाणिपादमित्यादयस्त्रयोऽलुक्समासाः 'हलदन्तात्सप्तम्याःसंज्ञाया'मित्यसंज्ञात्वेऽप्यत्र प्रयोगस्त्वार्षः। तत्सर्वतः पाणिपादं सर्वतोऽक्षिशिरोमुखं सर्वतश्श्रुतिमच्च भवति। तल्लोके सर्वमावृत्य तिष्ठति। यद्वा सर्वतः पाणिपादं, सर्वतोऽक्षिशिरोमुखं सर्वतश्श्रुतिमत्सत्। लोके सर्वमावृत्य तिष्ठति। सर्वतः सर्वत्र। ननु कथं ब्रह्मणो निराकारस्य सर्वतः पाणिपादत्वमत आह—सर्वप्राणिकरणोपाधिभिरिति। सर्वेषां प्राणिनां यानि करणानीन्द्रियाणि पाण्यादीनि तान्येवोपाधयस्तैः। सर्वप्राण्यन्तरात्मनः क्षेत्रज्ञस्य सर्वक्षेत्रोपाधिकत्वात्सर्वक्षेत्रगतास्सर्वेऽपि पाणयः पादा उपाधय एवेत्यौपाधिकमस्य सर्वतः पाणिपादत्वं, न तु स्वाभाविकमिति भावः। अमीभिरेवोपाधिभिरुपहितस्य क्षेत्रज्ञस्यास्तित्वं निश्चीयत इत्याह—सर्वप्राणीति। उपाधीनामिन्द्रियगम्यत्वेन सत्त्वात्। सद्भिरमीभिरात्माऽनुमीयते- उपहितपरतन्त्रत्वादुपाधीनाम्। आत्मा तावदस्ति पाण्याद्युपाधिमत्त्वाद्घटोपाधिकाकाशवदिति। पाण्याद्युपाधयः कस्यचित्परतन्त्रा उपाधित्वात्कुण्डलवतिदि च प्रयोगादिति भावः।

ननु सर्वप्राणिकरणानां कुतः क्षेत्रज्ञोपाधित्वमत आह—क्षेत्रज्ञस्येति। क्षेत्रज्ञस्य क्षेत्राणि सर्वाण्युपाधयः। तद्द्वारा पाण्यादयोऽप्युपाधय एव। पाण्यादीनां क्षेत्रपदवाच्यशरीरावयवत्वादिति भावः। यद्वा सङ्घातश्शरीरं यथा क्षेत्रं तथा पाण्यादयोऽपि क्षेत्रमेव; ज्ञेयत्वादितिकृत्वा क्षेत्रोपाधिकत्वात्क्षेत्रज्ञस्य पाण्यादय उपाधय एवेति भावः। इदमेवाह—क्षेत्रं चेति। आदिपदाच्छिरोऽक्ष्यादिग्रहणम्। अनेकधेति। अष्टधा भिन्ना प्रकृतिस्तावत्क्षेत्रमित्युक्तं, तत्प्रकृतिविकारभूतं सर्वमपि दृश्यं तथैव क्षेत्रं ज्ञेयत्वादिति।

ननु किमिदमौपाधिकं सर्वतः पाणिपादत्वादिकं क्षेत्रज्ञस्य सत्यमत आह—तदिति। क्षेत्रज्ञस्य क्षेत्रोपाधिकृतं च तत्सर्वं विशेषजातं सर्वतः पाणिपादत्वादिधर्मजातं मिथ्यैव। उपाधिधर्माणामुपहिते

रूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते- 'सर्वतः पाणिपाद'मित्यादि । तथा

---

वस्तुतोऽसम्भवादिति भावः । इत्येवं मिथ्यात्वाद्धेतोः । तदपनयनेन मिथ्याभूतोपाधिकृतविशेषा
नयनेन । सर्वविशेषप्रतिषेधेनेत्यर्थः । ज्ञेयत्वमुक्तं क्षेत्रज्ञस्येति शेषः । निर्विशेषं ब्रह्म ज्ञेयमिति
केनोक्तमित्यतस्तद्वाक्यमेव दर्शयति—न सदिति । ननु न सदित्यादिना निर्विशेषब्रह्मणो ज्ञे
मुक्त्वा कथमिह सर्वतःपाणिपादमित्यौपाधिकं सविशेषत्वमुच्यते तस्य ब्रह्मण इत्यत आह—उपाधि
अस्तित्वाधिगमाय ज्ञेयस्य सद्भावज्ञानायेत्यर्थः । ज्ञेयधर्मवदिति । ननु वस्तुतो ज्ञेयधर्म इति
सर्वतः पाणिपादमित्याद्युच्यत इत्यन्वयः । औपाधिकं सर्वतः पाणिपादत्वादिलक्षणं मिथ्यारूपं ज्ञे
त्वेन परिकल्प्य ज्ञेयस्यास्तित्वाधिगमायोच्यत इत्यर्थः । निर्विशेषचिन्मात्रस्य स्वस्वरूपेण बोध
मशक्यत्वात्तत्र कल्पितमौपाधिकं मिथ्यारूपमाश्रित्य तत्सद्भावं प्रतिपादयति भगवान्सर्वतःपाणि
मित्यादिनेति भावः । उक्तार्थे वृद्धसम्मतिं दर्शयति—तथा हीति । निष्प्रपञ्चं निर्विशे
अध्यारोपापवादाभ्यां प्रपंच्यते प्रतिपाद्यत इत्यर्थः । अध्यारोपो निर्विशेषे ब्रह्मणि केषां चिद्विशे
कल्पनम् । अपवादः कल्पिततद्विशेषाणां निरसनमिति विवेकः । अत एव विद्यारण्यगुरूभिरप्यु
'अवाङ्मानसगम्यं तं श्रुतिर्बोधयितुं गिरा । जीवमीशं जगद्वापि समाश्रित्य प्रबोधये'दिति ।
ङ्मानसगम्यस्य वस्तुन इदं तदिति वक्तुमशक्यत्वात्तत्र जीवेशत्वादिविशेषान्परिकल्प्य तन्निरसन
तद्वस्तु प्रतिपादयितुं शक्यत इति तदाशयः । यथा गगनस्वरूपानभिज्ञेन पृष्टः कश्चिद्विद्वान् किं
मिति । तं प्रत्युत्तरयति- यदुपरि नीलं दृश्यते तद्गगनमिति । तस्य श्रोतुर्नीलं गगनमिति प्रत्यय
नन्तरं तु गगनं न नीलं, किंतु नीरूपमेव नैल्यं कल्पितं तत्रेति बोधयति । एवं बोधने तु मिथ्या
नैल्यं त्यक्त्वा वस्तुभूतं गगनं प्रत्येति स श्रोता, तथा किं ब्रह्मेत्यविदुषा पृष्टो विद्वान् तं प्रत्युत्त
'अन्नं ब्रह्म, कं ब्रह्म, खं ब्रह्म, मनो ब्रह्म, जीवो ब्रह्म, ईशो ब्रह्म, सर्वं ब्र'ह्मेति । तस्य श्रोतुरन्नं
ब्रह्मेति प्रत्ययजननान्तरं तु न ब्रह्मान्नत्वादिविशेषवत्, किंतु निर्विशेषमेव । अन्नादयः कल्पिता
बोधयेत् । एवं बोधने तु मिथ्याभूतं विशेषजातं त्यक्त्वा वस्तुभूतं ब्रह्म निर्विशेषं प्रतिपद्यते स श्रो
अयं चाध्यारोपापवादन्यायः अन्नं ब्रह्मेत्यादिभिर्नेतिनेतीत्यादिभिश्च श्रुतिभिस्सूचितः । ता हि
ब्रह्मण्यन्नादिकं परिकल्प्य नेतिनेतीत्यनेन सर्वं विशेषजातं निरस्यन्ति । एवं प्रकृतेऽपि सर्वतः
पादमित्यादिना ज्ञेयब्रह्मणि पाणिपादादीनध्यारोप्य (परिकल्प्य) पश्चात् न सत्तन्नासदुच्यत इति सर्व
विशेषजातनिरसनमुखेन निर्विशेषं ब्रह्म प्रतिपादयति भगवानिति ।

ननु नात्राध्यारोपापवादन्यायः प्रवर्तते, अध्यारोपात्प्रागेवापवादस्योक्तत्वादिति, चेन्नैष दो
'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति पश्चादप्यपवादस्य वक्ष्यमाणत्वात् । न सत्तन्नास
इत्यनेन निर्विशेषं ब्रह्म केवलमुपक्षिप्तम् । तस्य च ज्ञेयत्वाद्यर्थं सर्वतः पादत्वादयो विशेषाः परि
तास्तस्मिन् सर्वतःपाणिपादमितिश्लोकेन । एवं कल्पितविशेषजातनिरसनमुखेन निर्विशेषं ब्रह्म
पाद्यते सर्वेन्द्रियेत्युत्तरश्लोकेनेत्यत्र क्रमो ज्ञेय इति । उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमा

सम्प्रदायविदां वचनं-'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यते' इति। सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयः ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि-- 'ज्ञेयस्य' इत्युपचारत उच्यन्ते । तथा व्याख्येयमन्यत् । सर्वतः पाणिपादं तत् ज्ञेयम् । सर्वतोऽक्षिशिरोमुखं सर्वतः अक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतश्श्रुतिमत् श्रुतिः श्रवणेन्द्रियं, तद्यस्य तच्छ्रुतिमत्, लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥१३॥

---

धर्मवत्परिकल्प्योच्यते सर्वतः पाणिपादमित्यादीति यदुक्तं तदेव विशदयति—सर्वत्रेति । सर्वत्र जगतीत्यर्थः । सर्वेषां देहानां मनुष्यादिशरीराणामवयवत्वेन रूपेण गम्यमानाः प्रतीयमानाः पाणिपादादयः, आदिपदाच्छिरोऽक्ष्यादिग्रहणम् । ज्ञेयस्य ब्रह्मणश्शक्तयो ज्ञानबलक्रियात्मिकाः, तासां सद्भावोऽस्तित्वं निमित्तं येषां तानि स्वकार्याणि ग्रहणादीनि येषां ते ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति हेतोः ज्ञेयस्य ब्रह्मणस्सद्भावे लिङ्गानि ज्ञापकानि साधनानीति यावत् । वह्नेस्सद्भावे धूमवदिति भावः । एवं ज्ञेयसद्भावं प्रति लिङ्गभूताः पाणिपादादयो ज्ञेयस्यावयवा इति शेषः । सम्बन्धिन इति वा । उपचारत उच्यन्त इति ।

अयमर्थः— चक्षुश्श्रोत्रपाणिपादादिषु दृश्यमानाः ज्ञानक्रियादिशक्तयः स्वकारणशक्तिपूर्विकाः-- कार्यशक्तेः कारणशक्तिपूर्वकत्वात् मृच्छक्तिपूर्वकघटशक्तिवदित्यनुमानेन चक्षुरादिशक्तिभिर्ब्रह्मशक्तयोऽनुमीयन्ते । शक्तयश्शक्तिमद्वस्त्वाश्रया गुणत्वाच्छुक्लादिवदिति प्रयोगाच्छक्तिभिश्शक्तिमद्वस्तु ज्ञाप्यते । एवं सति पाणिपादादयस्स्वशक्त्यनुमितकारणशक्तिद्वारा शक्तिमद्ज्ञेयं ब्रह्म गमयन्तीति पाणिपादादयो ज्ञेयसद्भावे लिङ्गानि । अमीभिश्च लिङ्गैः पाण्यादिभिः ज्ञेयब्रह्मसत्त्वं ज्ञाप्यते, यथा धूमलिङ्गेन पर्वते वह्निसत्त्वं तद्वदिति ।

तथेति । यथा सर्वतःपाणिपादमित्येतद्व्याख्यातं तथा अन्यत्सर्वतोऽक्षिशिरोमुखमित्याद्यपि व्याख्येयमित्यर्थः । अत्र पाणिपादादिशब्दैरिन्द्रियाणामेव ग्रहणम् । तानि चेन्द्रियाणि मनोरूपान्तरिन्द्रियगम्यान्येवेतीन्द्रियाणां नातीन्द्रियत्वप्रसङ्गः । निकायस्समूहः । स्थितिं गतिनिवृत्तिं 'ष्ठा गतिनिवृत्तौ'विति धात्वर्थपाठात् । न चलतीति, परिपूर्णत्वादिति भावः । अनेन च तिष्ठतीत्यनेन ज्ञेयस्य ब्रह्मणस्सद्भावस्सूच्यते । नहि शशशृङ्गं तिष्ठतीत्युच्यते । न चलतीत्यनेन च त्रैकालिकी ब्रह्मणस्सूच्यते सत्ता । नहि चलतो घटस्य त्रैकालिकी सत्ता दृश्यते । तस्मान्निर्विशेषं परिपूर्णं ब्रह्मैकमेव सदिति पर्यवसन्नार्थः ।

यत्तु रामानुजः— तत्परिशुद्धात्मस्वरूपं सर्वतःपाणिपादादिकार्यशक्तं- 'अपाणिपादो जवनो ग्रहीता' इति श्रुत्या परमात्मनस्तथात्वान्मुक्तजीवस्यापि तत्साम्यापत्त्या तथात्वमिति, लोके यद्वस्तुजातं तत्सर्वं व्याप्य तिष्ठति देशादिपरिच्छेदरहिततया सर्वगतमित्यर्थ इति, तत्तुच्छम्— अकर्तुरात्मनः

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाद्ज्ञेयस्य तद्वत्ताशङ्का माभूदित्येवमर्थः श्लो रम्भः—

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

सर्वेति । सर्वेन्द्रियगुणाभासं सर्वाणि च तानि इन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रि कर्मेन्द्रियाख्यानि, अन्तःकरणे च बुद्धिमनसी, ज्ञेयोपाधित्वस्य तुल्यत्वात्सर्वेन्द्रियग्रह

पाणिपादादिकार्यकर्तृत्वायोगात् । 'निष्कलं निष्क्रियं शान्त'मिति श्रुतेरात्मनि ग्रहणादिक्रियायोगा श्रुतिस्तु- सर्वेन्द्रियोपाधिगुणानुगुणजवनादिशक्तिमत् ज्ञेयमित्येवं प्रदर्शनार्था । ईश्वरशक्त्यैव हि सर्व करणानि सशक्तिकानि । जीवस्याणोर्बृहता परमात्मना साम्यकथनं तु विदुषां हासायैव । एवम् परिच्छिन्नस्य देशादिपरिच्छेदराहित्यं, तत्प्रयुक्तं सर्वगतत्वं च सुतरामयुक्तम् ।

यत्तु मुक्तिदशायामपि जीवोऽणुस्वरूप एव, अन्यथा अणुत्वपरित्यागपूर्वकबृहत्त्वावि स्वरूपविकारप्रसङ्गेन निर्विकारश्रुतिविरोधादिति वेदान्तदेशिको वदन् धर्मभूतज्ञानद्वारा जीवस्य व्यापित्वमुक्तवान्, तच्चायुक्तम्—मूलेऽसतो धर्मभूतज्ञानाख्यद्वारस्य कल्पनं न न्याय्यमिति । नि मेकज्ञानस्वरूपजीवे धर्मभूतज्ञानासम्भवस्तु प्रागेव प्रतिपादितः । नापि मुक्तस्य परमपदनिलयस्य धर्म ज्ञानेनापि सर्वव्याप्तिः । सर्वस्य वस्तुजातस्य ब्रह्माण्डान्तर्गतत्वात्परमपदस्य च ब्रह्माण्डाद्बहिस्थत्वा नच गृहाद्बहिस्थः पुरुषश्चक्षुषा गृहान्तरस्थं घटमिव ब्रह्माण्डान्तस्स्थमपि सर्वं धर्मभूतज्ञानेन व्याप्नोती वाच्यं, तथासति संसारदुःखाकुलानेकप्राणिदर्शनप्रयुक्तदुःखस्य मुक्तेष्वपि सम्भवप्रसङ्गात् । स्व ज्ञानस्य निर्विकारत्वेऽपि धर्मज्ञानस्य सुखदुःखाद्यनेकविषयकत्वेन सविकारत्वाज्जीवस्य धर्मतस्सविका प्रसङ्गात् । अस्मन्मते तु त्वदुक्तधर्मज्ञानस्यान्तःकरणधर्मत्वेन न धर्मतस्सविकारत्वप्रसङ्गात् । अस्मन् तु त्वदुक्तधर्मज्ञानस्यान्तःकरणधर्मत्वेन न धर्मतस्सविकारत्वं जीवस्य । एवमीश्वरीयसर्वविषयकज्ञानस्य मायाधर्मत्वेन न धर्मतस्सविकारत्वमीश्वरस्य । किंच धर्मभूतमिदं वृत्तिज्ञानं क्षणिकमिति कथं सर्वव्यापित्वम्? न ह्येतस्मिन् क्षणे वर्तमानस्सुखादिपदार्थः क्षणान्तरे वर्तते । ततः क्षणान्तरीयज्ञान कथमेतत्क्षणवर्तिसुखादिव्यापित्वम्? तस्माज्जीवस्याणोर्येनकेनापि प्रकारेण सर्वगतत्वं न सिद्ध्यति सर्वगतत्वाद्देशाद्यपरिच्छिन्नं परिपूर्णं ब्रह्मैव जीव इति स्थितमद्वैतम् ॥१३॥

सर्वेति । पूर्वोत्तरश्लोकयोश्शङ्काद्वारा सङ्गतिं दर्शयति—उपाधीति । तद्वत्ताशङ्का पा पादादियुक्तत्वशङ्का । अन्तःकरणस्यैकत्वेऽपि मनोबुद्धिभेदेन द्विविधत्वादाह—अन्तःकरणे चेति अन्तःकरणभूत इत्यर्थः । यथेन्द्रियाणि दश प्रसिद्धानि ज्ञेयस्य क्षेत्रज्ञस्योपाधयस्तथा बुद्धिमनसी अ ज्ञेयस्योपाधित्वात्सर्वेन्द्रियशब्देन प्रतिपाद्येते इत्यर्थः । मनइन्द्रियं न भवतीति मतमाश्रित्येदमु मनोऽपीन्द्रियमेवेति मते तु न काप्यनुपपत्तिः ।

गृह्यन्ते । अपि च अन्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतोऽन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसङ्कल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैः व्यापृतमिव तद्ज्ञेयमित्यर्थः । 'ध्यायतीव लेलायती'वेति श्रुतेः । कस्मात् पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह—सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः । अतो न करणव्यापारैर्व्यापृतं तद्ज्ञेयम् । यस्त्वयं मन्त्रः 'अपाणिपादो

ननु दशेन्द्रियाण्येव ज्ञेयस्योपाधिः, मनोबुद्धी तु नैवोपाधिरित्युच्यतामत आह—अपि चेति । इन्द्रियप्रवृत्तेर्मनःप्रवृत्तिपूर्वकत्वेनान्तःकरणोपाधिद्वारेणैव श्रोत्रादीनि ज्ञेयस्योपाधयः, नतु स्वत इत्यर्थः । आत्मनोऽन्तःकरणमुपाधिः, अन्तःकरणस्य तु श्रोत्रादीनीत्यन्तःकरणोपहितस्यैवात्मनश्श्रोत्रादीन्युपाधिर्न केवलात्मनः । आत्मेन्द्रिययोरन्तःकरणेन व्यवधानादिति भावः । आत्मनि तावदन्तःकरणमध्यस्यते, पश्चात्त्विन्द्रियाणीति कृत्वाऽन्तःकरणस्यात्मनस्सन्निहितोपाधित्वमिन्द्रियाणां तु व्यवहितोपाधित्वमिति तत्त्वम् ।

अत इति । सर्वेन्द्रियग्रहणेन दशेन्द्रियाणां मनोबुद्ध्योरपि ग्रहणादित्यर्थः । सर्वेन्द्रियशब्दवाच्यानामन्तःकरणबहिष्करणानां मनोबुद्धिज्ञानकर्मेन्द्रियाणामुपाधिभूता गुणास्सर्वेन्द्रियगुणाः । यथा आत्मनोऽन्तःकरणमुपाधिरन्तःकरणस्य च श्रोत्रादीनि तेषां गुणा अपि तथैवोपाधय इत्यर्थः । उपाधिलक्षणस्य व्यावर्तकत्वस्य गुणेष्वपि सत्त्वात् । अध्यवसायरूपो हि गुणो बुद्धिं सङ्कल्पगुणवतो मनसो व्यावर्तयति । तथा च परम्परयेन्द्रियवत्तद्गुणा मनोबुद्धिगुणाश्चात्मन उपाधिभूता एव । यद्वाऽध्यवसायाद्यतिरेकेण बुद्ध्याद्यभावादन्तःकरणात्मकोपाधिभूता बहिष्करणात्मकोपाधिभूताश्च गुणा एव ।

गुणानेव दर्शयति—अध्यवसायेति । अध्यवसायो बुद्धेर्गुणस्सङ्कल्पो मनसश्श्रवणं श्रोत्रस्य वचनं वाचः । आदिपदाद्दर्शनग्रहणादिग्रहणम् । कथमवभासतेऽत आह—सर्वैति । तद्ज्ञेयं सर्वेन्द्रियव्यापारैरध्यवसायश्रवणादिभिर्व्यापृतमिव सव्यापारमिवावभासत इति शेषः । उपाधिभूतेष्वन्तरिन्द्रियबहिरिन्द्रियतद्गुणेष्वात्मन्यध्यस्तेषु सत्स्वात्मा सव्यापार इव भातीत्यर्थः । तत्र श्रुतिं प्रमाणयति—ध्यायतीवेति । बुद्धौ ध्यायन्त्यां ध्यायतीव, तस्यां चलन्त्यां लेलायति चलतीव । आत्मेति शेषः । इवशब्दान्न वस्तुतो ध्यायति लेलायति वेत्यर्थः । व्यापृतमिवेत्यत्रेवशब्दाच्च न वस्तुतो व्यापृतमित्यर्थः । कुतो ब्रह्म वस्तुतो न व्यापृतमित्याक्षिपति—कस्मादिति । सर्वेन्द्रियविवर्जितमित्यत्रापीन्द्रियशब्दोऽन्तरिन्द्रियबहिरिन्द्रियोभयपर इत्याह—सर्वकरणरहित इति । अन्तःकरणबहिष्करणरहित इत्यर्थः । अतस्सर्वकरणराहित्यादित्यर्थः । यदि करणान्यात्मनस्सन्ति तर्हि करणव्यापारैरात्मनो व्यापारवत्त्वं स्यात् । नतु तथा । करणरहितत्वादात्मन इति भावः । न च करणानि कर्तृपरतन्त्रत्वात्कर्तुरेव, कर्ता चात्मैवेति कथं करणाभाव आत्मन इति वाच्यं, अकर्तृत्वादात्मनः । यः करणैर्व्याप्रियते स कर्ता प्रमातैव ।

जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्ण' इत्यादिस्स सर्वेन्द्रियोपाधिगुणानुगुण्यभज शक्तिमत् तद्ज्ञेयमित्येवं प्रदर्शनार्थः। नतु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः। 'अ मणिमविन्दत्' इत्यादिमन्त्रार्थवत् । तस्य मन्त्रस्य अर्थः । यस्मात् सर्वकरणवर्जितं ज्ञे तस्मादसक्तं सर्वसंश्लेषवर्जितम् । यद्यप्येवं तथापि सर्वभृच्च एव । सदास्पदं हि सर्वं स

---

नतु करणाभावेऽप्यात्मनस्सव्यापारत्वं ब्रूते श्रुतिरिति कथमव्यापृतत्वमात्मन इत्याक्षेपं हृ निधाय समाधत्ते—यस्त्विवति । मन्त्रश्रुतिः । पादरहितोऽप्यात्मा जवनो वेगशीलः; पाणिरहितोऽ ग्रहीता सर्वं गृह्णाति; अचक्षुरपि पश्यति; स आत्माऽकर्णोऽपि शृणोतीत्यादिः । यो मन्त्रस्तो मन्त्रस्तु ज्ञेयं ब्रह्म सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमदित्येवं प्रदर्शनार्थो बोधनफलको भवती शेषः । सर्वेन्द्रियोपाधिगुणानां गमनग्रहणादीनामानुगुण्यस्य भजनमेव शक्तिर्यस्य तद्भजने शक्ति तदिति वा तथोक्तम् । तस्मात्सर्वेन्द्रियानुग्राहकसर्वशक्तिमत्त्वस्य माययाऽऽत्मनि सम्भवादुच्य आत्मा- 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्ण' इति । न तु निष्क्रियत्वादात्म स्साक्षादेव तस्मिन् ग्रहणादिक्रियास्सम्भवन्तीत्येवमसम्भवार्थवर्णनं श्रुतेरपि घटत इत्याह—न त्विति यदि साक्षादात्मनि गमनादिक्रियास्स्युस्तर्हि- 'निष्कलं निष्क्रियं शान्त'मिति श्रुतिविरोधः । तस् च्छ्रुत्यन्तराविरोधाय प्रकृतमन्त्रस्यार्थवत्तार्थं च प्रकृतमन्त्रार्थ एवं वर्णनीयः । सर्वेन्द्रियोपाधिगुणानुगु भजनशक्तिमानात्मेति ।

नतु मुख्यार्थपरित्यागेन तदन्यार्थकल्पनं श्रुतौ क्वापि न दृष्टमत आह—अन्ध इति । 'अ मणिमविन्दत्, तमनङ्गुलिरावयत्, अग्रीवःप्रत्यमुञ्चत्, तमजिह्वा असश्चत' इत्यरुणम् । अस्य मन्त्रस्य यथाश्रुतार्थः प्रत्यक्षादिप्रमाणविरुद्धः । 'पंगुः पर्वतशृङ्गमेति बधिरो गाथां शृणोत्यादरा'दि लौकिकवाक्यवत् । नहि चक्षुरंगुलिग्रीवाजिह्वारहितानां मणिदर्शनतद्ग्रहणतद्धारणतद्वर्णनानि सम्भव पंगुबधिरयोः पर्वतशृङ्गारोहणगाथाश्रवणवत् । तस्मादन्ध इति मन्त्रस्य प्रत्यक्षाद्यविरुद्धः कोऽप्यर्थोऽ वाच्यः । अन्यथा निरर्थकत्वे विरुद्धार्थकत्वे वा वेदस्याप्रामाण्यापत्तेः । कथमिति चेदुच्यते-अन् दयस्स्वप्ने मणिदर्शनादिकं कृतवन्त इति, मनसा कृतवन्त इति वा । कथमन्यथाऽन्धादीनां मणिद नादिकं सम्भवेत् ? कथं वा सर्वतः परिपूर्णस्यात्मनश्चलनं, सर्वेण सर्वदा सम्बद्धस्य च ग्रहणादि वोपपद्येत ? इति बोध्यम् ।

अत्र 'अन्धो मणिमविन्द'दितिमन्त्रो यथाऽर्थशून्यस्तथाऽपाणिपाद इति मन्त्रोऽप्यर्थशून्य ए 'पंगुः पर्वतशृङ्गमे'तीति लौकिकवाक्यवदिति केचिद्वदन्ति, तत्तु भाष्याननुगुणं, वेदस्य निरर्थकत्वेना माण्यापादनं चेत्युपेक्ष्यम् । संश्लेषस्सम्बन्धस्सङ्ग इति यावत् । 'असङ्गो ह्ययं पुरुष' इति श्रुतेरि भावः । यदि करणयुक्तं स्यात्तर्हि परिच्छिन्नमेव स्यात्, करणवतो देहस्य परिच्छेददर्शनादित्य सन्धिः । एवमिति । असङ्गमित्यर्थः । तथापीति । असक्तत्वेऽपीत्यर्थः । कथमस्य सर्वभृत्त्व

सद्‌बुद्ध्यनुगमात् । नहि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतस्सर्वभृत्सर्वं बिभर्तीति स्यादिदं चान्यद्ज्ञेयस्य सत्त्वाधिगमद्वारं- निर्गुणं सत्त्वरजस्तमांसि गुणास्तैः वर्जितं तद्ज्ञेयं, तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ च उपलब्धृ तद्ज्ञेयमित्यर्थः ॥१४॥

---

आह—सदिति । हि यस्मात्सर्वं सदास्पदं सदाश्रयं सति कल्पितमिति यावत् । सदास्पदत्वे हेतुमाह—सर्वत्रेति । यथेदमर्थे कल्पिते सर्परजतादाविदंबुद्धिरनुगता इदं रजतमयं सर्प इति, तथा सन् घटस्सन् पट इति प्रतीतिदर्शनादिति भावः ।

ननु जलादीनां सदास्पदत्वेऽपि मृगतृष्णिकादीनां निरास्पदत्वमेव मिथ्यात्वाचेषामित्यत आह—नहीति । मरुभूम्यवच्छिन्नसद्वस्त्वास्पदैव मृगतृष्णिका । आदिपदाद्रज्जुसर्पशुक्तिरजतादिग्रहणम् । तेऽपि रज्जुशुक्त्याद्यवच्छिन्नसदास्पदा एव । अत एव मृगतृष्णिकास्तीत्येवं सत्सामानाधिकरण्यप्रतीतिः । अत इति । एवं सर्वस्य सति कल्पितत्वेन सदास्पदत्वादेवेत्यर्थः । सर्वं बिभर्तीति सर्वभृत् । सर्वस्य स्वस्मिन् कल्पितत्वेन मिथ्यात्वादेव न तेन सर्वेण क्षेत्रज्ञस्य सद्वितीयत्वादिकमिति बोध्यम् । अन्यथा असक्तसर्वभृत्त्वयोर्विरुद्धधर्मयोरेकत्र सामानाधिकरण्यायोगात् । वस्तुतोऽसक्तमपि मायया सर्वभृदिति भावः । एवं क्षेत्रज्ञस्य सर्वभृत्त्वात् सर्वोपाधिभिरस्यास्तित्वं विभाव्यते । अथास्यास्तित्वाधिगमे द्वारान्तरं दर्शयतीत्याह—स्यादिति । इदं चान्यद्ज्ञेयस्य सत्त्वाधिगमद्वारं स्यात् । तदेव द्वारान्तरं दर्शयति—निर्गुणमित्यादिना । निर्गुणस्याप्यस्य क्षेत्रज्ञस्य यद्‌गुणभोक्तृत्वमस्ति तेन लिङ्गेन ज्ञेयस्य सत्त्वमधिगम्यत इत्यर्थः । नच सत्त्वादिगुणाभावेऽपि कल्याणगुणास्सन्तीति कथं निर्गुणत्वं ब्रह्मण इति वाच्यं, सत्त्वात्मकत्वात्कल्याणगुणानाम् । एतेन सत्त्वादिगुणाभावेऽपि कल्याणगुणास्सन्तीति निर्गुणश्रुतिस्सत्त्वादिगुणराहित्यप्रदर्शनपरैवेति परोक्तमपास्तम् ।

कथं गुणानां भोग्यत्वमत आह—शब्दादीति । शब्दादयो विषयास्स्वसंसर्गेण पुरुषस्य सुखं दुःखं मोहं च जनयन्तीति शब्दादिद्वारा सुखाद्यात्मना सत्त्वादीनां परिणाम इति सत्त्वादिगुणपरिणामास्सुखदुःखमोहा भोग्या एवेति गुणानां भोग्यत्वमुक्तम् । उपलब्धृ ज्ञातृ । एतेन भोक्तृत्वलक्षणोऽपि विकारो नास्ति क्षेत्रज्ञस्येति सूचितम् । ज्ञातृत्वरूपभोक्तृत्वस्यैवेहोक्तत्वात् । ज्ञातृत्वं च साक्षित्वम् । तच्चोदासीनत्वे सति साक्षाद्द्रष्टृत्वरूपम् । उदासीनस्य ह्यविक्रियत्वं लोकतश्च सिद्धम् । नहि सुखादिकं साक्षात्पश्यन्नात्मा सुखादिना विक्रियते । अन्तःकरणं हि सुखादिना विक्रियमाणं दृश्यते साक्षिणा । कथं साक्षिणा दृश्यमानास्सुखादयस्साक्षिधर्मास्साक्षिभोग्या वा भवेयुः ? तस्मात्सुखादिसाक्ष्येवात्मेह गुणभोक्तृत्वेनोच्यते ।

नन्वेवं सुखदुःखादिज्ञातृत्वं कथं ज्ञेयस्य सद्भावं प्रतिपादयेदिति चेत्, उच्यते—सुखादयस्सज्ञातृकाः ज्ञेयत्वाद्घटवदितिप्रयोगात् ज्ञेयैस्सुखादिभिः ज्ञाता क्षेत्रज्ञोऽनुमीयत इति । एवंविधं सद्रूपं क्षेत्रज्ञलक्षणं ब्रह्म ज्ञेयमित्याह—तदिति । अर्थ इति । प्रकृतश्लोकस्येति भावः ।

किंच—

बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥

बहिरिति। बहिः त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं

---

यत्तु रामानुजः—सर्वेन्द्रियगुणाभासं सर्वेन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थं स्वभा स्सर्वेन्द्रियविवर्जितं विनैवेन्द्रियवृत्तिभिस्सर्वं जानाति। असक्तं स्वभावतो देवादिदेहसङ्गरहितं स्सर्वदेहभरणसमर्थं निर्गुणं स्वभावतस्सत्त्वादिगुणरहितं गुणानां सत्त्वादीनां भोक्तृभोगसमर्थं तत्तुच्छम्—आत्मनस्स्वभावतः सर्वेन्द्रियविवर्जितत्वमसक्तत्वं निर्गुणत्वं चेत्युक्तौ सर्वेन्द्रियगुणाभा सर्वभृत्त्वं गुणभोक्तृत्वं चेत्येतत्त्रयं स्वभावतो नास्तीति सिद्धम्।

ननु तर्हि किं तत्त्रयं स्वरूपतोऽस्ति, यद्वा उपाधितः? नाद्यः- स्वरूपे तदयोगात्। नान्त्यः परिशुद्धात्मस्वरूपस्येहोच्यमानत्वेनौपाधिकधर्मकथनायोगात्। निरुपाधिकं हि परिशुद्धात्मस्वरू उपाधिरहितत्वस्यैव परिशुद्धस्वरूपत्वात्। इन्द्रियवृत्तीनामेवोपाधित्वेनोपाधित इन्द्रियवृत्तिभिर्विष ज्ञातुं समर्थमित्यप्ययुक्तम्। आत्मनं इन्द्रियवृत्तिभिर्विषयज्ञानसामर्थ्यमस्तीत्याबालगोपालं प्रसिद्ध तत्कथनमपि व्यर्थत्वेन शास्त्रस्याप्रामाण्यापादकमित्ययुक्तमेव। अज्ञातार्थज्ञापनं हि शास्त्रस्य प्रामा वहम्। सर्वेन्द्रियगुणैराभासो ज्ञानं यस्येति समासेनेन्द्रियवृत्तिभिर्विषयान् जानातीत्येव सिद्ध विषयज्ञानसमर्थमिति समर्थपदस्य मूलाद्बहिःकल्पनं चायुक्तम्। निरिन्द्रियपरिशुद्धमुक्तात्मस्व स्येन्द्रियवृत्तिभिर्विषयज्ञानसामर्थ्यमस्ति वा नवेति सन्देहोऽतिमूढानामपि न जायत इति व्यर्थमेवैतत्कथ

सर्वेन्द्रियविवर्जितमित्यस्य यथाश्रुतमिन्द्रियरहितत्वरूपमर्थं विहाय विनैवेन्द्रियवृत्तिभिस्सर्वं जा तीत्यर्थवर्णनमप्ययुक्तं- लाक्षणिकत्वात्। सर्वावभासकस्य स्वप्रकाशस्यात्मनो विनैवेन्द्रियवृत्तिभि ज्ञानकथनमप्यकिञ्चित्करम्। आत्मनस्सर्वदेहभरणसामर्थ्यस्य जीवापाये शरीरपतनदर्शनेन सर्वैर्वि मेवास्तिकैरिति तत्कथनं चानर्थकम्। एकैकदेहभरणसमर्थ एवात्मा, नतु युगपत्सर्वदेहभरणसमर्थ तत्कथनमयुक्तं च। मृत्पाषाणाद्यशेषदृश्यवस्तुवाचिनस्सर्वशब्दस्य देहपरत्वेन सङ्कोचोऽप्ययु देवादिदेहसङ्गरहितस्य देवादिदेहभरणसामर्थ्यमस्ति वा न वा? इति सन्देहस्यैवानुदयेन तत्सा प्रतिपादनं चायुक्तम्। देहानामेवोपाधित्वेनोपाधितो देहभरणसमर्थमित्यप्ययुक्तम्। सर्वभृच्छ सर्वं बिभर्तीत्येव यथाश्रुतार्थत्वेन तं विहाय सर्वभरणसमर्थमित्यर्थकथनं चायुक्तम्। एवं गुणभो शब्दस्यापि गुणभोगसमर्थमित्यर्थकथनमयुक्तम्। मुक्तात्मस्वरूपस्य परिशुद्धस्य निर्गुणत्वेन गुण सामर्थ्यमस्यास्ति वा नवेति शङ्काया एवानुदयेन तत्कथनं चानर्थकम्। बद्धदशायामिव मुक्तद मप्यात्मनो देहादिसत्त्वे सर्वदापि देहादिसङ्गोऽस्त्येवात्मन इति कथमसक्तत्वं स्वभावतोऽपि स्यादात्म गुणभोगसत्त्वे वा कथमविक्रियत्वम्? जक्षणादिश्रुतिस्तु हिरण्यगर्भलोकप्राप्तजीवपरैव न मुक्तात्मपरा॥

बहिरिति। नात्र बहिश्शब्देन गृहादिभ्यो बहिर्भावो विवक्षितः, किं तु देहादेवेत्या

बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वाऽन्तरुच्यते- 'बहिरन्त'श्चेत्युक्ते मध्येऽभावे प्राप्त इदमुच्यते- अचरं चरमेव च, यच्चराचरं देहाभासमपि तदेव ज्ञेयं, यथा रज्जुसर्पाभासः। यद्यचरं चरमेव च स्याद्व्यवहारविषयं सर्वं ज्ञेयं, किमर्थं 'इद'मिति सर्वैर्न विज्ञेय-

---

त्वगिति। अविद्ययाऽऽत्मत्वेन गृहीतं, यद्वाऽविद्ययाऽऽत्मनि कल्पितं तयैवात्मत्वेन गृहीतमिति शेषः। कल्पनेऽविद्या कर्त्री, ग्रहणे तु हेतुरिति विवेकः। त्वच एव देहपदार्थमांसाद्यपेक्षया बाह्यत्वाह—त्वक्पर्यन्तमिति। तमेव देहमेव। अन्तश्शब्देन देहादन्तर्भावो विवक्षित इत्याह—यथेति। प्रत्यगात्मन एव सर्वान्तरत्वेन तमपेक्ष्येत्युक्तम्। भूतानां कार्यकरणसङ्घातात्मकानां ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां देहाद्बहिः, देहेन्द्रियप्राणमनोऽज्ञानानां स्थूलसूक्ष्मकारणशरीरभूतानामन्तश्च तद्ज्ञेयं वर्तत इति शेषः। प्रत्यग्रूपेणान्तः पररूपेण बहिश्चेति विवेकः। अन्तःकरणोपहितत्वं चैतन्यस्य प्रत्यक्त्वं, मायोपहितत्वं तु परत्वं, चैतन्यमेव क्षेत्रज्ञ इति बोध्यम्।

प्रत्यगात्मपरमात्मभेदवादिनां तु नैतत्सिद्ध्येत्- यदात्मनो बहिरन्तर्व्याप्तिः- अन्तस्स्थितस्य प्रतीचो बहिस्स्थित्ययोगाद्बहिस्स्थितस्य परस्यान्तस्स्थित्ययोगात्। एवं क्षेत्रज्ञस्यान्तर्बहिर्व्यापकत्वादेव सर्वव्यापकत्वमेकत्वं च श्रुतिसिद्धं सङ्गच्छते। तथाहि श्रुतयः- 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः, एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मे'त्याद्याः।

ननु देहादन्तर्बहिरेवास्ते क्षेत्रज्ञः, नतु देहः क्षेत्रज्ञ इति कथं सर्वव्यापित्वं क्षेत्रज्ञस्य? कथं वा सर्वं ब्रह्मेति श्रुत्युपपत्तिरिति शङ्कते—बहिरिति। मध्य इति। अन्तर्बहिःप्रदेशयोर्मध्यप्रदेश इत्यर्थः। यत्र देहोऽस्ति तत्रेति भावः। अभावे क्षेत्रज्ञस्यासत्त्वे प्राप्ते सति। अचरं चरमेव चेतीदमुत्तरमुच्यते-- यच्चरं जङ्गममचरं स्थावरं तरुगुल्मलतादिकं तदपि ज्ञेयमेव। कथं चराचरस्य ब्रह्मत्वमत आह—देहाभासमिति। देहरूपेणापाततोऽविचारतो भासत इति देहाभासम्। अज्ञानादेव चराचरस्य देहत्वेन प्रतीतिः, विचारात्तु चराचरं सर्वमपि ब्रह्मैवेति मध्येऽपि ब्रह्मैवास्तीत्यर्थः। ब्रह्मणि कल्पितस्य देहाभासस्य (देहभ्रमस्य) अधिष्ठानरूपत्वादिति भावः। तत्र दृष्टान्तमाह—यथेति। रज्जौ कल्पितस्सर्पाभासो यथा रज्जुरूप इति शेषः। नच ज्ञेये ब्रह्मणि चराचरस्याविद्याकल्पितत्वे विवदितव्यं- 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतिभ्यः, स्वप्नदशायामात्मनि रथादिकल्पनस्य दर्शनाच्च। कारणव्यतिरेकेण कार्यं नास्ति। मृद्व्यतिरेकेण घटादर्शनाद्रज्जुव्यतिरेकेण सर्पादर्शनाच्चेत्याद्युक्तिभ्यश्च।

ननु यदि व्यवहारविषयं चराचरं सर्वमपि ब्रह्मैव, तर्हि कुतोऽस्य इदन्त्वेनाविज्ञेयत्वमित्याक्षिपति—यदीति। व्यवहारविषयं चरमचरं च सर्वं ज्ञेयमेव स्याद्यदीत्यन्वयः। किमर्थमिदं ब्रह्मेति सर्वैर्न विज्ञेयमिति प्रश्नः। विज्ञेयत्वे हेतुप्रदर्शनायाह—व्यवहारविषयमिति। मनुष्योऽयं ब्राह्मणोऽयमित्यादिप्रतीतिगोचरमित्यर्थः। चराचरस्येदंतदितिव्यवहारविषयत्वाच्चराचरात्मकं ब्रह्मापि इदंतदितिव्यवहारविषयं स्यादेव- यथा रज्जुसर्पाभासवद्रज्जुरपि व्यवहारविषयस्तद्वदिति भावः। उच्यते उत्तरमिति शेषः। सत्यं युक्त एव प्रश्न इत्यर्थः। यद्यपि ब्रह्मेति पदद्वयस्य शेषः- सर्वाभासं सर्वजगद्रूपे-

मित्युच्यते- सत्यं सर्वाभासं, तत्तथापि व्योमवत्सूक्ष्मम् । अतस्सूक्ष्मत्वात्स्वेन रूपेण तद्
मप्यविज्ञेयमविदुषाम् । विदुषां तु 'आत्मैवेदं सर्वं ब्रह्मैवेदं सर्व'मित्यादि प्रमाणतो
विज्ञातम् । अविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वात् । अन्तिके च
त्मत्वादविदुषाम् ॥१५॥

णापाततो भासत इति सर्वाभासं, तथापि सर्वाभासत्वेऽपीत्यर्थः । सूक्ष्मत्वे दृष्टान्तमाह—व्यो
दिति । सर्वव्यापकं वाय्वादिसर्वजगदधिष्ठानं च व्योम यथा सूक्ष्ममतीन्द्रियत्वात्तद्वद्ब्रह्मापीत्यर्थः।
सर्वैश्चक्षुषा गृह्यमाणस्य व्योम्नः कथमतीन्द्रियत्वमिति वाच्यं, यच्चक्षुषा गृह्यते न तद्व्योम, किंतु
वारकं तेजस्तमो वा । नहि नीरूपं व्योम चक्षुषा ग्रहीतुं शक्यते । रूपग्राहकमेव हि
शब्दादिरूपत्वाभावान्नापि श्रोत्रादिभिर्गृह्यते व्योम । एवमतीन्द्रियत्वादेव व्योम्नस्साक्षिभास्यत्व
पेयते । नच वायुरपि तादृश एवेति वाच्यं, नीरूपोऽपि वायुस्त्वगिन्द्रियेण गृह्यत एव स्पर्शात्मक

नचैवं शब्दात्मकत्वाद्व्योमापि श्रोत्रेण गृह्यत इति वाच्यं, श्रोत्रेण भेर्यादिशब्दं प्रतिपद्य
यः कोऽप्यनुन्मत्तः पुरुषो न मया व्योम प्रतिपन्नमिति वेत्ति । प्रतिध्वनिरेव हि व्योम्नो
नच सर्वे जना अवकाशं व्योमेति प्रतिपद्यन्त एवेति कथं तस्य सूक्ष्मत्वमिति वाच्यं, औपाधि
व्योम्नो रूपं सर्वे व्योमत्वेन प्रतिपद्यन्ते नतु निरुपाधिकम् । व्योम्न उपाधिस्तु तेजस्तमसो
दित्युक्तमेव । किंच नावकाशमात्रस्य व्योमत्वमवकाशस्य धर्मत्वादाकाशस्य चावकाशधर्मकत्वेन
त्वात् । स चावकाशो न चक्षुर्ग्राह्यो नीरूपत्वात् । किं तर्हि अवकाशस्यावधिभूता ये भित्त
पदार्थास्त एव चक्षुषा गृह्यन्ते । तस्मादवकाशस्याकाशस्य वा नेन्द्रियगम्यत्वमित्यतीन्द्रियत्वात्सू
व्योम । नचैवं व्योमैव क्षेत्रज्ञ इत्युच्यतामिति वाच्यं, जडत्वात्साक्षिभास्यत्वा'दात्मन आकाशः
इति श्रुत्या कार्यत्वात्सावकाशत्वाद्व्योम्नः । ज्ञानस्वरूपत्वात्स्वप्रकाशत्वात्सर्वावभासकत्वादना
निरवकाशत्वाच्च क्षेत्रज्ञस्य ।

अत इत्यस्यार्थं स्वयमेवाह—सूक्ष्मत्वादिति । तद्ज्ञेयं स्वेन रूपेणाविदुषामविज्ञे
विदुषां नित्यविज्ञातमेवेत्यन्वयः । सूक्ष्मार्थदर्शिनो हि विद्वांसः । ननु कथं विदुषामप्यतीन्द्रि
दर्शित्वमत आह—आत्मैवेदं सर्वमित्यादिप्रमाणत इति । अतीन्द्रियार्थदर्शने शास्त्रमेव कारणं
शास्त्रं विदुषामस्तीति विदुषां नित्यापरोक्षमेव ब्रह्म स्वात्मत्वादिति भावः । ननु अविदुषामपि
मेव ब्रह्म जगद्रूपत्वाद्ब्रह्मण इत्यत्राह—स्वेन रूपेणेति । सच्चिदानन्दादिरूपेणेत्यर्थः । नतु
जगद्रूपेणेति भावः । सर्पाभासाधिष्ठानं रज्जुरिन्द्रियगम्यत्वात्सर्वैर्विज्ञेयैव । जगदाभासाधिष्ठानं
सूक्ष्मत्वात्सर्वैरविज्ञेयमेव । नचैवं शून्यत्वप्रसङ्गः, विद्वद्भिः ज्ञेयत्वाद्ब्रह्मणः । अविद्वद्भिरपि
विज्ञेयत्वादिति तत्त्वम् । एवं सूक्ष्मत्वेनाविदुषामविज्ञाततया दूरस्थं तदित्याह—अविज्ञातत
'दूरात्सुदूरे तदिहान्तिके च' इति मुण्डकश्रुतिरिहानुसन्धेया ।

नन्वविज्ञातत्वमात्रेण कथं सर्वव्यापिन आत्मनो दूरस्थत्वमत आह—वर्षेति । यो हि

गन्त्रा बहुभिर्वत्सरैः प्राप्यते स तस्य गन्तुर्दूरस्थ इति प्रसिद्धं, यस्तु बहुभिरपि वत्सरैर्नैव प्राप्यते तस्य दूरस्थत्वं किंपुनर्वक्तव्यम् ? ब्रह्म तु कोटिसङ्ख्याकवर्षसहस्रैरपि अविद्वद्भिर्नैव प्राप्यत इति कृत्वाऽतीव दूरस्थमविदुषामित्यर्थः । यद्यपि शतसंवत्सरा एव नृणां परमायुः, तथाप्यनेकजन्मगतायुःपरिगणनया कोटिसङ्ख्याकवर्षसहस्रसिद्धिरिति बोद्धव्यम् । यद्वा देवानामनेकसंवत्सरपरिमितायुष्कत्वात्तद्दृष्ट्योक्तमिति बोध्यम् ।

वस्तुतस्तु अपरिमितसंवत्सराभिप्रायेणैव वर्षसहस्रकोट्येत्युक्तः, नतु सङ्ख्याविशेषे वक्तुस्तात्पर्यम् । ततश्चाविदुषामतीव दुर्लभं ब्रह्मेति फलितार्थः । अविदुषां दूरस्थमपि तद्ब्रह्म विदुषामन्तिके समीपे एव वर्तत इति शेषः । तत्र हेतुमाह—आत्मत्वादिति । आत्मा हि स्वयम् । नचाविदुषां कुतस्तन्नात्मेति वाच्यं, यद्यप्यविदुषामप्यात्मैव, तत्तथापि अविद्वांसस्तदात्मत्वेन न जानन्ति- देहात्मभ्रमजीवेश्वरभेदभ्रमादिदूषितहृदयत्वात् । अत एवाविदुषां तत्परोक्षमिव भाति । यथा निधिज्ञस्य सन्निहितोऽपरोक्षोऽपि निधिस्तदविज्ञस्य दूरस्थः परोक्षश्च तद्वदात्मज्ञस्य सन्निहितो नित्यापरोक्षोऽप्यात्मा अनात्मज्ञस्य दूरस्थः परोक्षश्चेति भावः । एतेनैकस्यैव ब्रह्मणः कथं दूरस्थत्वान्तिकस्थत्वरूपविरुद्धधर्मसामानाधिकरण्यमिति प्रत्युक्तम्—विद्वदविद्वद्विषयभेदेन तदुपपत्तेर्दर्शितत्वादिति ।

यत्तु रामानुजः—पृथिव्यादीनि भूतानि परित्यज्याशरीरो बहिर्वर्तते, तेषामन्तश्च वर्तते, स्वभावतोऽचरं देहित्वे चरं च, एवं सर्वशक्तियुक्तं सर्वज्ञं तदात्मतत्त्वमस्मिन् क्षेत्रे वर्तमानमप्यतिसूक्ष्मत्वात्संसारिभिरविज्ञेयमिति, तत्तुच्छम्—किं मुक्तिदशावस्थितं परिशुद्धात्मस्वरूपं सशरीरमुताशरीरम् ? यद्वोभयात्मकम् ? आद्ये- शरीराद्बहिर्वृत्तिरसिद्धा । द्वितीये- तदन्तर्वृत्तिरयुक्ता । तृतीये-- सशरीरत्वाशरीरत्वयोर्विरुद्धयोस्सामानाधिकरण्यायोगस्स्फुट एवेति नोभयात्मकत्वसिद्धिः । नच कदाचित्सशरीरमशरीरं च कदाचिदिति वाच्यं, परिशुद्धात्मस्वरूपस्य कादाचित्कसशरीरत्वाद्ययोगात् । उपाधिकृतं हि सशरीरत्वमात्मनस्स्वाभाविकं त्वशरीरत्वमेव । नहि सशरीरत्वमशरीरत्वं चेत्युभयं स्वाभाविकं भवितुमर्हति । यद्धि स्वाभाविकं तद्धि परिशुद्धं रूपमात्मनः । औपाधिकस्योपाधिप्रयुक्तत्वेनापरिशुद्धत्वात् । एवमशरीरस्य परिशुद्धात्मस्वरूपस्य कथं भूतानामन्तर्वृत्तिः ? सत्यां ह्यन्तर्वृत्तौ सशरीरत्वं स्यात्तस्य । परिशुद्धात्मस्वरूपकथनप्रकरणे देहित्वे चरं चेति कथमुच्यते ? नहि परिशुद्धमात्मस्वरूपं देहवद्भवति । देहवत्त्वस्यापरिपशुद्धिहेतुत्वात् ।

किंच- आत्मनस्स्वाभाविकमचरत्वंप्रति किं पूर्णत्वं हेतुः ? उत करणराहित्यम् ? नाद्यः-- अणोस्तस्य पूर्णत्वायोगात् । पूर्णस्य च तस्य देहेन परिच्छेदायोगाच्च । नान्त्यः- 'अपाणिपादो जवनो ग्रहीता' इति श्रुत्या करणाभावेऽपि गमनादिक्रियावत्त्वप्रतिपादनात् । एवं निर्हेतुकाचरत्वासिद्धौ चरत्वमेव स्वाभाविकमिति सिद्धमात्मनः । ततश्च श्रुतिस्मृत्यादिविरोधः । किञ्चिद्ज्ञोऽल्पशक्तिर्जीवस्सर्वज्ञस्सर्वशक्तिरीश्वर इति जीवेश्वराभेदासिद्ध्यर्थं ब्रुवताममीषां सर्वज्ञं सर्वशक्तियुक्तं परिशुद्धात्मस्वरूपमिति प्रवचनं विरुद्धम् । यद्येवं जीवस्सर्वज्ञस्सर्वशक्तिश्च स्यात्तर्हि किमर्थं जीवादन्येश्वरकल्पनम् ? जगत्स्रष्टृत्वा-

किंच—

अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तद्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

अविभक्तमिति। अविभक्तं च प्रतिदेहं व्योमवत्तदेकम्। भूतेषु सर्वप्राणिषु वि-मिव च स्थितं देहेष्वेव विभाव्यमानत्वात्। भूतभर्तृ च भूतानि बिभर्तीति तद्ज्ञेयं भर्तृ च स्थितिकाले। प्रलयकाले च ग्रसिष्णु ग्रसनशीलम्। उत्पत्तिकाले प्रभवि-प्रभवनशीलम्। यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥१६॥

---

र्थं हीश्वराभ्युपगमः। तच्च जगत्सृष्ट्यादिकं सर्वज्ञसर्वशक्तिमत्पुरुषसाध्यमिति जीवादेव सम्भवः। इदं चेश्वरादन्यस्य जीवस्य सर्वज्ञत्वादिप्रवचनं श्रुतिविरुद्धम्। 'स सर्वज्ञस्सर्ववित्' शक्तिर्विविधैव श्रूयत' इतीश्वरस्यैव तद्धर्मवत्त्वश्रवणात्। जीवस्य किञ्चिद्ज्ञत्वादेरनुभवसिद्धस्य दु-त्वाच्च। किं चान्तर्बहिश्च भूतानामिति मूलस्य कदाचिदन्तः कदाचिद्बहिरित्यर्थकल्पनं कदाचित्पदाध्याहारे प्रमाणाभावात्। भूतानां बहिरित्यस्य पृथिव्यादिभूतानि परित्यज्येत्यर्थ आकाशपरित्यागस्य दुष्करत्वात्। आकाशो हि सर्वव्यापकः। ब्रह्माण्डाद्बहिरप्यवका-नाकाशसत्त्वात्। नहि त्वदभिमते वैकुण्ठलोकेऽप्यवकाशाभावो येनाकाशाभावस्स्यात्, अवका-ह्याकाश इति ॥१५॥

अविभक्तमिति। अविभक्तं विभागरहितम्। किंप्रयुक्तोऽस्य विभागोऽत आह—प्र-मिति। देहे देहे प्रतिदेहं, देहभेदेऽपि नात्मभेद इत्यर्थः। तत्र दृष्टान्तमाह—व्योमव-यथा व्योम प्रतिघटं न भिद्यते तथाऽयमात्मा प्रतिदेहं न भिद्यत इत्यर्थः। अत एव तद्ब्रह्मैकम् स्वतोऽविभक्तत्वेऽप्यज्ञानाद्विभक्तमिव भातीत्याह—भूतेष्विति। ननु सर्वव्यापिनः कथं स्थितिरुच्यतेऽत आह—देहेष्विति। विभाव्यमानत्वादुपलभ्यमानत्वात्। अन्तर्मुखानां विदु-एवात्मसाक्षात्कारसम्भवाद्देहेषु स्थितमित्युच्यत इति भावः। विभक्तमिवेतीवशब्दान्न वस्तुतोऽस्य पूर्णस्य विभागसम्भव इति सूच्यते। बिभर्ति धरति। प्रकर्षेण बहुधा भवनं प्रभवनं 'तदैक्षत ब-प्रजायेय' इति श्रुतिसिद्धबहुभवनमित्यर्थः। भूतानां सर्वेषां सृष्टिस्थितिलयकारणमिति पदत्र-'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविश'न्तीति श्रुतेरिति आत्मन्येवाविद्याकल्पितं भूतजातं तत्रैव वर्तते, तत्रैव लीयते चेति परमार्थः। तत्र दृष्टान्त-यथेति। मिथ्याकल्पितस्य सर्पादेः रज्ज्वादिर्यथा स्थित्यादिहेतुस्तद्वदित्यर्थः। रज्जावज्ञा-जायते, तत्रैव वर्तते, पुनस्तत्रैव लीयते; एवं शुक्तिकायां रजतं जायते, वर्तते, लीयते च यथा त-भावः। एतेन जगतस्सृष्टिस्थितिलयहेतुः क्षेत्रज्ञादन्यः कश्चनेश्वर इत्यपास्तम्।

यत्तु रामानुजः—अविभक्तं ज्ञानैकाकारतया जातित एकं, अविदुषां देवोऽयं मनु-मिति विभक्तमिव स्थितं, भूतभर्तृ शरीरं बिभर्ति, ग्रसिष्णु अन्नादिकमत्ति, प्रभविष्णु प्रस्तानाम-

किंच सर्वत्र विद्यमानमपि सन्नोपलभ्यते चेत्, ज्ञेयं तमस्तर्हि, न, किं तर्हि ?

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७॥

ज्योतिषामिति । ज्योतिषामादित्यादीनामपि तद्ज्ञेयं ज्योतिः । आत्मचैतन्य-

---

रेतोरक्तादिरूपेण परिणामहेतुरिति, तत्तुच्छम्—अव्यक्तस्यात्मनो व्यक्तितो नानात्वायोगात्कथं जात्येकत्वम् ? निर्धर्मके आत्मनि धर्मायोगात्कथं वा जात्येकत्वम् ? सति व्यक्तितो नानात्वे विदुषामपि विभक्तत्वेन प्रतिभायादेवेति कथमविदुषां विभक्तमिवेत्युच्यते ? विदुषां देवत्वादिभ्रमाभावेऽप्यहमिति स इति त्वमिति देवदत्त इति च प्रमा भवत्येव हि । यथा देवत्वादिस्स्थूलदेहधर्म इति त्वं जानासि तथा सुखित्वादिकं सूक्ष्मदेहधर्म इति मोहः कारणदेहधर्म इति च जानीहि । एवं शरीरत्रयमात्मनस्सकाशाद्विवेचिते तु किमात्मनो भेदकं स्याद्येनात्मनो नानात्वं स्याद्व्यक्तितः । तस्मात्त्वमहमित्यादिभेदोऽपि भ्रम एव, न प्रमा ।

नच 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपा' इतीश्वरेणैवोक्तत्वात्प्रमैवेति वाच्यं, लोकदृष्ट्या तथोक्तत्वात् । यदुक्तमात्मा शरीरं बिभर्तीति तदयुक्तं- प्राणादीनामेव शरीरभर्तृत्वात् । एवं ग्रसनादिकमपि प्राणादिधर्म एव नात्मधर्मः । अन्यथा सविकारत्वप्रसङ्गादात्मनः । न ह्यात्मा किञ्चिद्ग्रसितुं क्षमतेऽन्नादिकं करणरहितत्वात् । किंतु प्राणाधिष्ठितं शरीरमेव मुखेन गिलति । शरीरमेव च तदन्नादे रक्ताद्यात्मना परिणामहेतुश्च । न च मृतशरीरं किमपि न ग्रसेदिति वाच्यं, प्राणाधिष्ठितं शरीरमित्युक्तत्वात् । न च जीवापेतस्य शरीरस्य ग्रसनाद्यदर्शनाज्जीवधर्मा एव ग्रसनादय इति वाच्यं, जीवस्य क्षेत्रज्ञलक्षणस्य परिपूर्णत्वेनापगमासम्भवात् । यस्तु शरीरादपैति स लिङ्गशरीरावच्छिन्नः प्रमातैव । तस्य च न स्वतो ग्रसनकर्तृत्वं- शरीरस्यैव स्थूलस्य भोगायतनत्वेन तं विना ग्रसनासम्भवात् । नापि केवलशरीरस्य तदस्ति- सुषुप्तिमूर्छादौ तदर्शनात् । किं तर्हि लिङ्गशरीरस्थूलशरीरोभयावच्छिन्नस्यैव प्रमातुश्शरीरावयवद्वाराऽन्नादिग्रसनं, मनोद्वारा सुखाद्युपभोगश्चेति कृत्वा प्रमात्रधिष्ठितशरीरस्यैवान्नग्रसनादिकं, नतु क्षेत्रज्ञस्यात्मनः । तस्य शरीरात्प्रमातुश्च विलक्षणत्वादिति ॥१६॥

ज्योतिषामिति । सूक्ष्मत्वात्तदविज्ञेयमित्यनेन सर्वत्र विद्यमानं सदपि ज्ञेयं सर्वैर्नोपलभ्यत इत्युक्तत्वेन । तत्राक्षिपति—सर्वत्रेति । सर्वत्र विद्यमानं सदपि ज्ञेयं नोपलभ्यते चेत्तर्हि ज्ञेयं तमोऽज्ञानमेवेति प्रश्नः । नेति परिहारः । तर्हि किमिति पुनः प्रश्नः ? ज्योतिषामपि तज्ज्योतिरित्युत्तरम् । अज्ञानं ह्यतीन्द्रियत्वात्सर्वैर्नोपलभ्यते । किं त्वहमज्ञ इत्यनुभवबलादेवाध्यवसीयते । ततः किमज्ञानस्वरूपं ब्रह्मेति प्रष्टुराशयः । अज्ञानस्यावरणस्वभावत्वाद्ब्रह्मणश्च सर्वावभासनस्वभावत्वान्नाज्ञानस्वरूपं ब्रह्म, किंतु ज्योतीरूपमेवेत्युत्तरयितुराशयः ।

ननु यदि ब्रह्म तेजोरूपं तर्हि किमादित्यादितेजो ब्रह्मेत्यत आह—ज्योतिषामपि तज्ज्योतिरिति । आदित्यादयो हि घटादिपदार्थानवभासयन्तीति ज्योतिश्शब्देनोच्यन्ते । भासकत्वस्य ज्योति-

ज्योतिषा इद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते- 'येन सूर्यस्तपति तेजसेद्धः', '...
भासा सर्वमिदं विभा'तीत्यादिश्रुतिभ्यः। स्मृतेश्चेहैव- 'यदादित्यगतं तेज' इत्या...
तमसोऽज्ञानात्परमसंस्पृष्टमुच्यते । ज्ञानादेर्दुःखसम्पादनबुद्धया प्राप्तात्रसादस्योत्तमम...

---

लक्षणत्वात् । तेऽप्यादित्यादय आत्मचैतन्येन भास्यन्त इति ज्योतिषामपि ज्योतिर्ब्रह्मेत्युच्य...
अज्ञानेन तु घटादिपदार्था आव्रियन्त एवेति सर्वावभासकस्य ब्रह्मणो नाज्ञानरूपत्वं, नापि कि...
पदार्थावभासकतेजोरूपत्वं, किंतु चैतन्यरूपत्वमेवेति भावः ।

ननु भासकानामादित्यादिज्योतिषां कुतः पुनर्भास्यत्वमित्यत: श्रुत्यादीन् प्रमाणयति- ज्योति...
त्यादीन् । ज्योतिषा चैतन्येनेद्धानि भासितानि सन्ति दीप्यन्ते भासन्ते आदित्यादिज्योतींषीति श्रु...
येन चैतन्यलक्षणेन तेजसा इद्धो दीप्तस्सन् सूर्यस्तपति । तस्यात्मनो भासा स्वरूपचैतन्येन सर्व...
जगद्विभाति। स्मृतेश्चेति चकारादनुभवग्रहणम्। आत्मना हि सूर्यचन्द्रनक्षत्राग्निविद्युद्दीपादिज्योति...
दृश्यन्ते। अत आत्मभास्यत्वं तेषाम्।

ननु सूर्यादिभिर्घटादयः प्रकाशिता एव, नतु विदिताः, आत्मना तु घटादिर्विदित एव, ...
प्रकाशित इति कथं वेदितुरात्मनो भासकत्वमिति चेत्, मैवम्—सूर्यादिज्योतींषि जडत्वाद्घटा...
श्चेतनेभ्यः प्रकाशयन्ति, आत्मा तु चेतनत्वात्सर्वमात्मने प्रकाशयतीति सर्वत्र ज्ञानजनकत्वमेव प्रक...
कत्वम्। ततश्चात्मविदिता घटादय आत्मप्रकाशिता एव । सूर्यादिभिः पुरुषेभ्यो बोधिता घटा...
सूर्यादिप्रकाशिता एव। अयं घट इति बोधजनकत्वाद्धि दीपेन घटः प्रकाशित इत्युच्यते। तद...
कत्वाच्च तमसा घट आवृत इत्युच्यते । तस्मात्प्रकाशनवेदनयोरेकार्थत्वमेव । लौकिकास्तु प...
बोधनं प्रकाशनं- यथा दीपो घटं पुरुषाय बोधयति, स्वयं- बोधनं तु वेदनं- यथा आत्मा घटं बुद्ध...
इति भेदं परिकल्प्य व्यवहरन्ति । तस्माद्घटादिवत्सूर्यादिज्योतींष्यपि ज्ञेयत्वादात्मभास्यानी...
ज्योतिषामपि ज्योतिरेव तत्। नच ज्ञेयस्यापि सूर्यादिवदन्यावभास्यत्वं शङ्क्यं, स्वप्रकाशज्ञानलक्ष...
णत्वस्य। अन्यथा अनवस्थादोषापत्तेः।

ननु 'ज्योतिषामपि तज्ज्योतिस्तमसोऽपि तमः किमु' इति शङ्कायां 'तमसश्चापि तज्ज्यो...
रित्याह भगवान् हरिः', 'तमसः परमुच्यत' इति । अज्ञानवाची तमश्शब्दस्तत्कार्यमोहादेरप्युपल...
इत्याह—अज्ञानादेरिति। परं विप्रकृष्टम् । फलितमाह—असंस्पृष्टमिति । तमसेति शे...
तमस्संस्पर्शरहितमित्यर्थः। यद्वा संस्पृष्टमिति भावे क्तः। संस्पर्श इत्यर्थः। न विद्यते संस्पृष्टं ...
तदसंस्पृष्टं तमसः परमसंस्पृष्टं संस्पर्शरहितमिति स एवार्थः। उच्यते शास्त्रेणेति शेषः। ज्योतिषा...
तमसोऽप्यवभासकं ज्योतिर्भिरिव तमसाप्यसंस्पृष्टं तदित्यर्थः। नच भासकस्य भास्येन संसर्गा...
भासनं न स्यादिति वाच्यं, भासकस्य दीपज्वालादेर्घटादिना सति संसर्गे घटादिभानासम्भवात्। ...
घसंस्पृष्टस्यैव हि दीपस्य घटादिभासकत्वम् । चक्षुरपि न स्वसंस्पृष्टं करतलादिकं भासयति, ...
व्यवहितमेव । एवमात्मापि सूर्यादिभिरसंस्पृष्ट एव तान् भासयति, नतु संस्पृष्ट इति । यद्वा

सूर्यादिज्योतींष्यज्ञानेनावृतानि- चक्षुर्वृत्त्या सूर्याद्यावारकाज्ञाननाशे सत्येव सूर्यादिभानात् । घटाज्ञाननाशे घटभानवत् । नहि चक्षुषि निमीलिते सूर्यादयो ज्ञायन्ते केनचित् । एवं ज्योतिषां ज्योतिस्तदपि किमज्ञानेनावृतमिति शङ्कायामाह भगवान्— तमसः परमुच्यत इति । सूर्यादीनामिवात्मनो नास्त्यज्ञानसंसर्गः, येनात्मनस्सूर्यादीनामिव तम आवरणं स्यात् । नन्वेवमावृतत्वे सत्यात्मनस्सदापि भानं स्यादिति चेत्सत्यं- सर्वदापि भात्येव तत् । नहि कोऽपि घटो न भातीतिवदहं न भामीति मन्यते । नित्यापरोक्षोह्यात्मा सर्वस्य । अत एव नात्मभानार्थं चक्षुरादीनां करणत्वं, नहि कोऽपि सूर्यमिवात्मानं चक्षुषा पश्यति ।

किंच येनेदं सर्वं ज्ञायते तमात्मानं केन विजानीयात्- 'विज्ञातारमरे केन विजानीया'दित्यादिश्रुतेश्च नात्मनो भास्यत्वं, येन तस्याज्ञानावरणत्वं स्यात् । सूर्यादयो घटादिभासका अपि चक्षुरादिभास्या इति भास्यत्वाद्भवति तेषामज्ञानावरणं, न त्वात्मनस्सर्वावभासकस्य स्वप्रकाशस्य अनन्यावभास्यस्य । यद्येवंविध आत्माप्यावृतस्स्यात्तर्हि तं कः पुनर्भासयेत् । सर्वेऽप्यात्मचैतन्याभासलब्धज्ञानशक्तयो हि मन आदिपदार्थाः स्वतस्तु जडा एव । तस्माज्जगदान्ध्यप्रसङ्ग एवेति ।

किंच यद्यात्माऽऽवृतस्स्यात्तर्हि तदात्मन आवरणं केन भास्येत ? न तावदात्मना तस्यावृतत्वात् । नाप्यन्येन- तस्य जडत्वात् । एवमसाक्षिकमात्मावरणं कथमभ्युपगन्तुं युज्यते । तस्मादनावृतस्स्वप्रकाश एवात्मेति सिद्धान्तः । नचैवमात्मसाक्षात्कारार्थिकाया अहं ब्रह्मास्मीतिबुद्धिवृत्तेरनावश्यकत्वाच्छास्त्रं व्यर्थमिति वाच्यं, यद्यपि सर्वे आत्मानं विदन्ति, तथापि न सच्चिदानन्दरूपत्वेन विदन्ति, किं तु देवोऽहं मनुष्योऽहमित्याद्याकारेण विदन्ति- यथा बालास्सूर्यं विदन्त्येव, नतु प्रकाशात्मकत्वेन विदन्ति, किंतु फलत्वेन विदन्ति तद्वत् । तस्य च भ्रमस्य निवृत्त्यर्थं शास्त्रमावश्यकं- यथा बालस्य पित्राद्युपदेशः- 'यस्त्वया फलत्वेन ज्ञायते सोऽसौ न फलं, किं तु प्रकाशात्मकस्सूर्य ए'वेति तद्वत् । 'भो शिष्य ! यस्त्वया मनुष्याद्यात्मत्वेन ज्ञायते नासौ त्वं, किंतु सच्चिदानन्दं ब्रह्मैव त्वम'सीति गुरुकर्तृकश्शास्त्रोपदेश आवश्यक इति भावः । नच नित्यापरोक्षे आत्मनि कथं देहादिभ्रमसम्भव इति वाच्यं, किमस्माकं भ्रमकारणविचारेण ? भ्रमस्य सार्वजनीनस्य दुरपलापत्वात्तन्निरासायैव यतितव्यं येन केनापि हेतुना । शिरोरोगे सति तन्निरासायाजामोदगन्धस्तत्र लिप्यते, न तु कुत इदं जातमिति विचारेण किमपि फलमिति । अथापि वक्तव्यमिति यद्याग्रहस्तर्हि ब्रवीमि- बुद्धिगताज्ञानदोष इति । यथा चक्षुर्गततिमिरादिदोषो द्विचन्द्रभ्रमस्य । यथा वा निद्रादोष आत्मनि शिरश्छेददर्शनभ्रमस्य । कस्य भ्रम इति चेद्यो भ्रान्तस्तस्यैव । प्रपञ्चितं चैतत्प्रागित्युपरम्यत इह । यद्यात्मनि कथंचिदपि भ्रमाज्ञानाद्ययोग इति तवाग्रहस्तदयोगोऽस्माकमलङ्कारायैव । नहि वयं भ्रमादिकमात्मनि युक्तमिति ब्रूमः, किंत्वयुक्तमित्येव । अयुक्तस्यापि प्रतीतिर्गगननैल्यादिप्रतीतिवदुपपद्यत एव मायावशान्नतु वस्तुत इति संक्षेपः । तस्मादनावृतमेव तद्ब्रह्म ।

ननु यथोक्तममानित्वादिकं दुःखेनापि सम्पादयितुमशक्यमिति कोऽपि विद्वानमानित्वादिसम्पादने न प्रयतते । अविदुषां तु नात्र शास्त्रार्थेऽधिकारः- तेषां कर्मण्येवाधिकारात् । तस्माद्व्यर्थोऽयं

माह—ज्ञानममानित्वादि। ज्ञेयं 'ज्ञेयं यत्तत्प्रवक्ष्या'मीत्यादिनोक्तम्। ज्ञानगम्यं ज्ञेयं ज्ञातं सद्ज्ञानफलमिति ज्ञानगम्यमुच्यते; ज्ञायमानं तु ज्ञेयम्। तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम्। तत्रैव हि त्रयं विभाव्यते ॥१७॥

---

शास्त्रार्थ इति शङ्कते—ज्ञानादेरिति। विदुषां तु ज्ञानादेर्दुःखसम्पादनबुद्ध्या तत्रेति शेषः। अवसादस्य प्राप्तौ सत्यामित्यन्वयः। तुशब्दोऽविद्वद्वैलक्षण्यार्थः। अविदुषामत्रानधिकारादिति भावः। ज्ञानादेरित्यादिपदाद्ज्ञेयग्रहणम्। सूक्ष्मत्वात्तदविज्ञेयमिति ज्ञेयस्यापि दुर्विज्ञेयत्वेन तत्सम्पादनं दुष्करमिति भावः। दुःखेन सम्पादनं यस्य तद्दुःखसम्पादनं, दुस्सम्पादमित्यर्थः। तदिति बुद्धिः दुःखसम्पादनबुद्धिस्तया तत्र ज्ञानादिसम्पादने प्राप्तावसादस्य प्राप्तशैथिल्यस्य निरुद्योगस्येत्यर्थः। उत्तम्भनार्थमुत्साहजननार्थमित्यर्थः। आह भगवान् ज्ञानं ज्ञेयमित्यादिश्लोकोत्तरार्धमिति शेषः। उक्तमिति ब्रह्मेति शेषः। ज्ञेयस्य ज्ञानगम्यस्य च ब्रह्मत्वात्पुनरुक्तप्राप्तौ तन्निरासायाह—ज्ञेयमेवेत्यादि। ज्ञायमानं ब्रह्म ज्ञेयम्। ज्ञातं ब्रह्म तु ज्ञानगम्यमिति न पौनरुक्त्यं- ज्ञायमानत्वज्ञातत्वोपाधिभेदेनैकस्य ब्रह्मणो भेदेन निर्देशात्। कथं ज्ञातस्य ब्रह्मणो ज्ञानगम्यत्वमत आह—ज्ञानफलमिति। फलं साधनेन गम्यते (प्राप्यते), ब्रह्म च ब्रह्मज्ञानेन गम्यत इति ब्रह्मज्ञानस्य फलं ब्रह्मैवेत्यर्थः। ब्रह्मणो नित्याप्तत्वात्कथं तस्य फलत्वमत आह—ज्ञातं सदिति। नित्याप्तमपि ब्रह्म ज्ञातं सदेव फलं भवति अज्ञातस्य ज्ञातत्वेऽप्यनाप्तस्य फलत्वायोगात्। स्वगृहस्थो हि निधिर्नित्याप्तोऽप्यज्ञातत्वान्न फलम् परगृहस्थो निधिर्ज्ञातोऽप्यनाप्तत्वान्न फलमिति भावः। एतेन नित्याप्तस्य ब्रह्मणो ज्ञानं निष्फलमिति शङ्का परास्ता।

ज्ञानं ज्ञेयं ज्ञानगम्यं चेत्येतत्त्रयं सर्वस्य हृदि विष्ठितमित्यन्वयः। हृच्छब्दो न हृत्पुण्डरीकपरः तत्र यथोक्तत्रयस्यासत्त्वात्किन्तु बुद्धिपर इत्याह—हृदि बुद्धाविति। प्राणिजातस्य प्रमातृवर्गस्येत्यर्थः। कथं बुद्धावपि तत्त्रयस्य स्थितिरत आह—तत्रैवेति। बुद्धावेवेत्यर्थः। विभाव्यते ज्ञायत इत्यर्थः विचार्यत इति वा। स्वबुद्धिस्थत्वेन ज्ञानादिसम्पादनस्य सुलभत्वाद्विदुषां न तत्रावसादः कर्तव्य इति भावः। नच अमानित्वादेर्बुद्धिगम्यत्वेऽपि- 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेर्मनसोऽप्यगोचरस्य ब्रह्मणः कथं बुद्धिगम्यत्वमिति वाच्यं, 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रितिश्रुतेर्ब्रह्मणो बुद्धिगम्यत्वात्। असंस्कृतमनसोऽगोचरत्वेन पूर्वश्रुत्यविरोधाच्च। वस्तुतः अमानित्वादिज्ञानसम्पादनमेव दुष्करं, ज्ञेयं तु नित्याप्तत्वात्सुलभमेवेति न तत्सम्पादने कोपि विदुषामवसाद इति बोध्यम्।

रामानुजस्तु—तदात्मस्वरूपं ज्ञानं ज्ञानैकाकारमिति ज्ञेयं, तच्च ज्ञानगम्यमिति व्याचष्टे तन्मन्दम्—'ज्योतिषामपि तज्ज्योति'रित्यनेन ज्ञानैकाकारत्वस्योक्तत्वाद्ज्ञानमित्यस्य पुनरुक्तेः। इति शब्दाध्याहारगौरवाच्च। तद्ज्ञानं ज्ञानगम्यं चेत्येतावतैव विवक्षितार्थसिद्धौ ज्ञेयमित्यस्यानर्थकत्वाच्च ज्ञानमिति ज्ञेयमितिवद्ज्ञानगम्यमिति ज्ञेयमित्यपि वक्तव्यत्वापत्तेश्च ॥१७॥

यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥

इतीति । इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च- 'ज्ञेयं यत्तत्प्रवक्ष्या'मीत्यादि 'तमसः परमुच्यत' इत्येवमन्तमुक्तं समासतस्संक्षेपतः । एतावान् हि सर्वो वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन् सम्यग्दर्शने कोऽधिक्रियत इत्युच्यते—मद्भक्तो मयि परमेश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावः । यत्पश्यति शृणोति स्पृशति वा 'सर्वमेव भगवान्वासुदेव' इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तस्स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥१८॥

---

इतीति । यथोक्तार्थस्य पूर्वोक्तार्थस्य उपसंहार एवार्थः फलं यस्य स यथोक्तार्थोपसंहारार्थः । उपसंहृत्य संक्षिप्य क्रोडीकृत्येति वा । गुरूणामपि गुरुः परमगुरुः । वासुदेवे प्रत्यगभिन्ने परमात्मनि । सर्वमात्मेति भावो बुद्धिस्सर्वात्मभावः । सर्वात्मभावस्य वासुदेवे समर्पणप्रकारमेव दर्शयति—यत्पश्यतीत्यादिना । वाशब्दाद्यज्जिघ्रति यदास्वादयति यत्सङ्कल्पयति यन्निश्चिनोति यदनुभवतीत्यादिग्रहणम् । तत्सर्वं शब्दस्पर्शरूपरसगन्धसुखदुःखादिकं विषयजातमुपलक्षणमिदं येन पश्यति येन जिघ्रतीत्यादेश्चक्षुरादिकरणजातस्य अहङ्कारस्य च कर्तुः । अनात्मजातं सर्वमपीति भावः । भगवान्वासुदेव एव— 'सर्वं ब्र'ह्मेतिश्रुतेः । 'वासुदेवस्सर्व'मिति गीतायाश्च । सर्वस्य वासुदेवे कल्पितत्वात्कल्पितस्य चाधिष्ठानात्मकत्वादिति भावः । ग्रहो ज्ञानं बुद्धिरन्तःकरणम् । यस्सर्वं वासुदेव इति प्रत्येति स ज्ञानी मद्भक्त इत्यर्थः । मद्भावायेति । मम परमात्मनस्सच्चिदानन्दलक्षणो यो भावस्स मद्भावः तस्मै । ब्रह्मभूयायेत्यर्थः । उपपद्यते युज्यते । कल्पत इति यावत् । मद्भावं प्रतिपद्यत इत्यर्थः । फलितमाह— मोक्षं गच्छतीति ।

ननु मुक्तौ सर्वेन्द्रियनिषेधेन तदधीनज्ञानाभावात्पाषाणकल्पत्वमात्मन इति कोऽस्मै स्थावरत्वरूपमुक्तये स्पृहयेद्विना त्वादृशं मूढम्? नच कोऽपि न स्पृहयेत् को दोष इति वाच्यं, मुमुक्षोरेवाभावेन शास्त्राधिकार्यलाभाच्छास्त्रमनर्थकमेवेति चेत्, मैवम्—सुषुप्तौ सर्वेन्द्रियनिषेधेन तदधीनज्ञानाभावेऽपि स्वस्य पाषाणकल्पत्वं जानन्नपि त्वं सुषुप्तिं न स्पृहयसि किम्? यदि न स्पृहयसि तर्हि कतिपयदिनैरेव संसिद्धिं गमिष्यसि । यदि स्पृहयसि तर्हि तथैव मुक्तिं वयं स्पृहयामहे । नच सुषुप्तावानन्दोऽस्ति स चाविद्यावृत्तिभिरनुभूयते जीवेनेति वाच्यं, अज्ञानवत्यामेव सुषुप्तावानन्दसद्भावे तद्रहितायां मुक्तावानन्दो नास्ति किम्? नच विद्यमानोऽप्यानन्दः करणाभावान्नानुभूयते मुक्ताविति वाच्यं, अननुभूतानन्दस्य कथं सद्भावाभ्युपगमः? यो हि जडाभिरपि वृत्तिभिरानंदमनुभवति स

किं स्वत आनंदमनुभवितुं न शक्नुयात् ? भवतु वा वृत्तिभिरानंदस्यानुभवः तासां वृत्तीनां केनानुभवः यदि वृत्तयः केनापि नानुभूयन्ते तर्हि तद्वृत्तिसत्त्वे किं प्रमाणम् ? न ह्यसाक्षिकं किमपि वस्त्वभ्यु गम्यते । घटमनुभवन्ती हि चक्षुर्वृत्तिः किं त्वया नानुभूयते ? अनुभूयते चेत्तथैवाविद्यावृत्तिरप्यनुभूय एवात्मनेति विद्धि । यथा सुखरूपान्तःकरणवृत्तिरात्मनानुभूयते तद्वत् । यस्सुखरूपवृत्तिप्रतिफलि मात्मानन्दं सुखरूपवृत्तीश्चानुभवति स आत्मा किं स्वरूपानन्दं नानुभवेत् ? वस्तुतस्तु मुक्तात्मन स्याननुभाव्यत्वमस्तु नाम, अनुभवरूपत्वं केन वार्यते ? अनुभवरूपो ह्यानन्द आत्मा । एवमन भाव्यत्वादेव ह्यात्मानन्दस्यानुभवरूपत्वम् । नहि स्वप्रकाशोऽनुभवः केनाप्यनुभूयते । अनुभवस्य भाव्यत्वायोगात्, तद्योगे वाऽनवस्थादिदोषापत्तेः । अयं चानुभवरूपो बिम्बभूत आत्मानन्दस्सर्वै प्याकांक्ष्यत एव विद्वद्भिर्यैः सुषुप्तौ स्वप्रतिबिम्बानन्दमनुभूय स्वापानन्तरं सुखमहमस्वाप्समिति स्मर्य कथं तैरज्ञानसम्बन्धरहितोऽपरिच्छिन्नो बिम्बानन्दो न कांक्ष्येत ? सुषुप्तावज्ञानसत्त्वाद्धि तदानीन्तना नन्दाप्रकाशः । एवमप्रकाशमानेऽपि सौषुप्तानन्दे येषां स्पृहा तेषां कथं प्रकाशमानमोक्षानन्दे स्यात्स्पृहा ? येषां प्रकाशमाने परिच्छिन्ने क्षणिके विषयानन्दे स्पृहा तेषां कथं प्रकाशमानेऽपरिच्छि शाश्वते ब्रह्मानन्दे न स्पृहा ? तस्मान्न मुक्तात्मनः पाषाणकल्पता, किं तु स्वस्वरूपानन्दानुभवरूपतैव पाषाणस्य जडत्वादात्मनश्च ज्ञानानन्दरूपत्वादिति ।

ननु सुषुप्तावानन्दस्याप्रकाशमानत्वमज्ञानादित्युक्तं यत्तन्न सङ्गच्छते- आत्मन्यज्ञानावरणाभाव दर्शितत्वादिति चेन्नैष दोषः—ज्ञानानन्दोभयरूप आत्मा, तत्र ज्ञानस्वरूपत्वस्यानावृतत्वेऽपि सुख रूपत्वस्यावृतत्वमेवेति । सर्वो हि जन आत्मानं ज्ञातारं वेत्ति, न तु सुखरूपम् । ततश्चानुभवस्य दुष्कार्थः कल्प्यत इति नातिशङ्कनीयम् । अनुभवावसानत्वात्सर्वस्य । यद्वा सुषुप्तावविद्यावृत्तिप्रति फलित एवानन्दोऽनुभूयत इति स आवृत एव । बिम्बभूतात्मानन्द एवानावृतः । न चानावृत बिम्बभूतानन्दस्य संसारदशायामपि स्फुरणप्रसङ्ग इति वाच्यं, स्फुरतोऽपि तस्यानन्दस्य विषयव्यापृत बुद्धावभानमत एव समाधौ तस्य स्फुरणमिति । नहि भासमानमपि सूर्यं मलदूषितादर्शो गृह्णाति दूषितं चक्षुर्वा । न चात्मनैव गृह्यतां किं बुद्ध्येति वाच्यं, आत्मा सदा स्वानन्दमनुभवन्नेव वर्तते देहात्माभिमानिनस्तु नैतज्जानन्ति । किंतु बुद्ध्यनुभूतं सुखाभासमेव वयं सुखमनुभवाम इति मन्यन्ते बुद्धावात्माभिमानात्तेषाम् । तस्मात्पिण्डं समुत्सृज्य करं लेढीतिन्यायेन मूढा आत्मानन्दानुभवं विहा विषयसुखानुभवमिच्छन्ति । प्राज्ञास्तु विषयसुखं विहायात्मानन्दमनुभवन्ति समाधौ यथा तथा प्रा अद्वैतिनो ब्रह्मानन्दमिच्छन्ति, मूढास्तु वैकुण्ठादिलोकगतं विषयसुखमेवेति युक्तं ब्रह्मविदां ब्रह्मानन्दा भवलक्षणो मोक्षो निरतिशयफलमिति । विज्ञाय मद्भावायेत्यनेनेन च मोक्षस्य ज्ञानमेव साधनं न तस्मा दिति स्थापितम् । 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेः । एतेन कर्मज्ञानसमुच्चयो मोक्षसाधनमित्यपास्तम्

यत्तु रामानुजः—मद्भावायोपपद्यतेऽहमिवासंसारी भवतीति, तन्मन्दम्—सति जीवेश भेदे तत्प्रयुक्तसंसारानिवृत्तेः । औपाधिको हि संसारः । जीवेश्वरभेदश्चोपाधिकृत एवेति । जी

तत्र सप्तमेऽध्याये ईश्वरस्य द्वे प्रकृती उपन्यस्ते- परापरे क्षेत्रक्षेत्रज्ञलक्षणे, 'एतद्योनीनि भूता'नीति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामिति ? अयमर्थोऽधुनोच्यते--

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥१९॥

प्रकृतिमिति । प्रकृतिं पुरुषं चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । न विद्यते आदिर्ययोस्तावनादी; नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुं;

---

स्यान्तःकरणमुपाधिरीश्वरस्याज्ञानमिति सत्यज्ञानादौ कथं तत्प्रयुक्तसंसाराभावः ? निरुपाधिकत्वे च शुद्धचैतन्यस्य भेदकाभावाद्भेदाभाव एवेति ॥१८॥

प्रकृतिमिति । 'प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च । एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव !' इत्यर्जुनेन पृष्टानां मध्ये क्षेत्रं क्षेत्रज्ञो ज्ञानं ज्ञेयं चेति चतुष्टयं निरूपितं कृष्णेन । अथ प्रकृतिपुरुषौ निरूपयितुमारभते—प्रकृतिमित्यादिना । नच तत्क्षेत्रं यच्चेति स च यो यत्प्रभावश्चेति क्षेत्रक्षेत्रज्ञयोरेवेह वक्ष्यमाणत्वेन प्रतिज्ञातत्वाद्ज्ञानज्ञेययोः प्रकृतिपुरुषयोश्च निरूपणमसङ्गतमिति वाच्यं, ज्ञानप्रकृत्योः क्षेत्रत्वात्पुरुषज्ञेययोः क्षेत्रज्ञत्वाच्च स्वप्रतिज्ञातक्षेत्रक्षेत्रज्ञनिरूपणान्तर्गतमेव ज्ञानादिचतुष्टय-निरूपणमिति ।

हे अर्जुन ! ये त्वया षट्पदार्थाः पृष्टास्ते वस्तुतः पदार्थद्वयमेव-- क्षेत्रं क्षेत्रज्ञश्चेति । तत्र क्षेत्रस्यैवावान्तरभेदो ज्ञानममानित्वादिलक्षणम् । तच्चोक्तम् । क्षेत्रं च महाभूतादिकं निरूपितं क्षेत्रज्ञ एव ज्ञेयं ब्रह्म तच्चोक्तम् । यस्त्वव्यक्तलक्षणः क्षेत्रविशेषस्स एव प्रकृतिरित्युच्यते । यः पुनः क्षेत्रज्ञस्स एव पुरुषः । तावेव क्षेत्रक्षेत्रज्ञलक्षणौ प्रकृतिपुरुषौ पुनर्निरूपयामि यत्किञ्चिद्धर्मविशेषप्रदर्शनार्थं शृणि्वत्यभिप्रायेणाह भगवान्—प्रकृतिमित्यादि । ननु क्षेत्रक्षेत्रज्ञयोर्निरूपितत्वात्पुनः प्रकृतिपुरुषनिरूपणं व्यर्थमिति शङ्कायां न व्यर्थं- भूतयोनित्वादिप्रदर्शनार्थत्वादित्याह भाष्यकारः—तत्रेति । तत्र पूर्वोक्त इत्यर्थः । कथं भूतानां क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वमिति प्रश्नस्यायमुत्तरभूतोऽर्थोऽधुनोच्यते ।

ननु प्रकृतिपुरुषयोरनादित्वे नित्यत्वे तद्विशिष्टत्वे चेश्वरस्य प्रकृतिपुरुषेश्वराख्यत्रयोऽपि नित्या एवेतीश्वरः प्रकृतिपुरुषविशिष्ट एवेति च यत्परमतं तत्र प्रविष्टः किल भवन्मताचार्यश्शङ्करभगवत्पाद इति चेत्, मैवम्—ईश्वरस्य स्वरूपभूता जीवलक्षणा प्रकृतिः, स्वभावभूता तु क्षेत्रलक्षणेति सप्तमाध्याय एवोक्तत्वाज्जीवलक्षणस्वरूपातिरिक्तेश्वरस्यैवाभावात् जीवलक्षणेश्वरप्रकृतेर्नित्यत्वं तावदविवादमनादित्वादनन्तत्वाच्च तस्याः । क्षेत्रलक्षणप्रकृतेस्तु यावद्विद्योदयं नित्यत्वात्सापेक्षमेव नित्यत्वं, न तु निरपेक्षं सान्तत्वात्क्षेत्रप्रकृतेः । अस्या अनादित्वं च पराधीनजन्माभावरूपत्वमेव । न ह्यात्मन आकाश आकाशाद्वायुरितिवदात्मनोऽन्यस्माद्वा प्रकृतिर्जायत इति क्वापि श्रूयते । न च सुतरां जन्माभाव इति वाच्यं, 'माया चाविद्या च स्वयमेव भव'तीति जन्मश्रवणात् । न च जीवेशावाभासेन करोतीति तयो-

**प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वं याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलय ते द्वेऽनादी सत्यौ संसारस्य कारणम् ।**

---

मायावशं जन्म श्रूयत इति वाच्यं, ब्रह्मणि निर्गुणे जीवत्वेश्वरत्वयोरौपाधिकत्वेन मायाकृतत्ववर्ण एवं प्रकृतेस्सादित्वादेव सान्तत्वमनित्यत्वं च । नच सत्याविरत्येवोक्तमाचार्यैरिति वाच्यं, व्यावहा सत्यत्वं प्रकृतेः, पारमार्थिकसत्यत्वं पुरुषस्येत्यदोषात् । इदं च पुरुषशब्दवाच्यं जीवलक्षणं चै मीश्वरस्य स्वरूपमितीश्वरस्य तद्वत्त्वमुच्यते । राहोश्शिर इति शिरोवत्त्वमिव राहोः । यद्वा महाका घटाकाश इव जीव ईश्वरस्यांश इति तद्वत्त्वमीश्वरस्योक्तम् । तस्मान्नाचार्यस्य परमतप्रवेशप्रस ते हि पुरुषेश्वरयोस्स्वरूपतस्स्वभावतश्च भेदं वर्णयन्ति- पुरुषस्य चेश्वरशेषत्वं प्रकृतेश्च मुक्तावपि सत्त्वमि

ननु प्रकृतिद्वयवत्त्वस्यैवेश्वरत्वान्मुक्तौ तदभावे ईश्वरस्यानीश्वरत्वप्रसङ्गस्स्यादथ वा ईश्वरा प्रसङ्ग इति चेत्, मैवम्—मुक्तावीशितव्याभावेनेश्वरत्वाभावस्यास्माकमिष्टत्वान्निर्विशेषचिन्मात्र वेश्वरत्वादीश्वराभावप्रसङ्गस्तु न ।

हन्त तर्हि, ईश्वरस्य नित्यत्वात्तत्प्रकृत्योरपि नित्यत्वेन भवितुं युक्तं, प्रकृतिद्वयवत्त्वमेव ही रत्वमिति भाष्यविरोधस्तवेति चेत्, मैवम्—व्यवहारदशामाश्रित्योक्तत्वादस्यार्थस्य । यावद्व्यवहा प्रकृतिपुरुषेश्वरास्त्रयोऽपि नित्याः । पुरुषेश्वरयोर्भेदश्च नित्यः । परमार्थतस्त्वीश्वर एक एव नित्य तस्य पुरुषाद्भेदश्च मिथ्या । प्रकृतिश्च मिथ्यैवेति । अत एव हि 'दूरमेते विपरीते विषूची अ या च विद्येति ज्ञाता' इति श्रुतिर्विद्याऽविद्यामार्गद्वयस्यात्यन्तवैलक्षण्यं ब्रूते । न च विद्यादशायां मस्ति- 'ऐतदात्म्यमिदं सर्वं, नेह नानास्ति किञ्च'नेत्यादिश्रुतिभ्यः । अविद्यया हि ब्रह्मणि जीवत्वे रत्वजगन्ति कल्पितानि । कथं तानि विद्यायामुपलभ्येरन् ? अत एव 'यत्र नान्यत्पश्यति न च्छृणोति नान्यद्विजानाति स भूमा, यो वै भूमा तदमृत'मिति, 'तत्र केन कं पश्ये'दित्यादिश्रु श्चोपपद्यन्ते । एवं जीवेशत्वादिरहितं चिन्मात्रमेव हि लक्षणया तत्त्वमस्यादिमहावाक्यान्यपि बोधय तस्माद्ब्रह्मणः प्रकृतिद्वयवत्त्वरूपमीश्वरत्वमविद्यावस्थायामेव, प्रकृतेश्च नित्यत्वं सत्यत्वं च व्यावहा मेव । एक एवेश्वरः परमार्थतो नित्यस्सत्यश्च । प्रपञ्चितश्चायमर्थोऽविनाशि तु तद्विद्धीत्या भाष्यकृतश्चायमेवाभिप्रेतोऽर्थः । अन्यथा स्ववचोविरोधात् । प्रकृते च याभ्यां प्रकृतिभ्यामी जगदुत्पत्तिप्रलयहेतुरिति वचनात् । नहि परमार्थतो जगदस्ति, येन तदुत्पत्त्यादिकं पारमार्थिकं स्या तद्धेतुत्वं चेश्वरस्य सत्यं स्यात् । तस्माद्व्यावहारिकमेव जगज्जन्मादिहेतुत्वं, तत्प्रयुक्तमीश्वरत्वं ब्रह्मण इति स्थितम् । प्रकृतेर्जगद्रूपेण परिणामाज्जगद्धेतुत्वं पुरुषस्य तु विवर्तनादिति विवेकः । पु ज्ञातृत्वात्प्रकृतेश्च सुखाद्यात्मना परिणामात्संसारकारणत्वं वक्ष्यत इति तदभिप्रायादाह—संसार इति । पुरुषस्य पारमार्थिकसत्यत्वात्प्रकृतेश्च व्यावहारिकसत्यत्वादुक्तम्—सत्याविति । ननु प्र रपि परमार्थतस्सत्येति भ्रमितव्यं, विद्यादशायां तदभावात् । देहादिप्रपञ्चस्तु सादित्वाद्यावद्ब्रह्म प्यस्थिरत्वान्न सत्य इति भावः ।

न आदी अनादीति तत्पुरुषसामासं च केचिद्वर्णयन्ति । तेन हि किलेश्वरस्य कारणत्वं सिद्ध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्न ईश्वरस्य जगतः कर्तृत्वम् । तदसत् प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्व-

---

ननु यद्यनादी प्रकृतिपुरुषौ स्यातां, तर्हि तावेव जगत्कारणभूतौ भवत इति कथमीश्वरस्य जगत्कारणत्वम्? नच प्रकृतिद्वारा जगत्कारणत्वमीश्वरस्येति वाच्यं, अनाद्योस्तयोर्मुख्यकारणत्वमेवोच्यतां किमिति द्वारकारणत्वं, तदतिरिक्तेश्वरकल्पनं वा किमर्थम्? नच जडायाः प्रकृतेरीक्षणायोगात्पुरुषस्य चोदासीनत्वादीश्वरस्य जगत्कारणत्वमुक्तमिति वाच्यं, पुरुषसंसर्गवशेन जडाया अपि प्रकृतेरीक्षणसम्भवाद्यथा जीवचैतन्याभासेन मनस्सङ्कल्पसम्भवः । तौ च प्रकृतिपुरुषौ प्रतीश्वरस्य कारणत्वाभावेनेश्वरस्य सर्वकारणत्वासम्भवाच्च । तस्मान्न प्रकृतिपुरुषावनादी, किंतु सादी एव भवतः । नच प्रकृतिगीतागतानादिवचनविरोधः, न आदी अनादीति तत्पुरुषसमासेन तयोस्सादित्वलाभात् । यद्धि कारणं न भवति तद्धि कार्यमेव भवेत्- कारणभिन्नस्य कार्यत्वात् । आदिपदस्य कारणवाचित्वान्नञश्च तदन्यवाचित्वादिति पूर्वपक्षमुद्भावयति—न आदीति, तेनेति । तत्पुरुषसमासवर्णनेनेत्यर्थः । किलेत्यनेन तद्वर्णनस्यायुक्तत्वं सूच्यते । नेश्वरस्येति । नित्याभ्यामेव प्रकृतिपुरुषाभ्यां जगत्सृष्ट्यादिसम्भवादिति भावः ।

नच सादित्वे तयोः कथं जगत्कर्तृत्वाभाव इति वाच्यं, यस्तयोरादिस्तस्यैव जगत्कर्तृत्वाभ्युपगमः । यथा सादेराकाशस्य वायुकारणत्वेऽपि यदाकाशस्य कारणं तदेव वायोरपीत्यभ्युपगम्यते तद्वत् । परमकारणस्यैवेश्वरस्य कारणत्वं नावान्तरकारणयोः प्रकृतिपुरुषयोराकाशादेरिवेति न प्रकृतिपुरुषयोर्जगत्कारणत्वं सादित्वे स्यादिति भावः । परिहरति—तदसदिति । प्रकृतिपुरुषयोरुत्पत्तेः प्रागीशितव्यवस्त्वभावादीश्वरस्यानीश्वरत्वप्रसङ्गः । तदुत्पत्तेः पश्चात्तु तयोरेवेशितव्ययोस्सत्त्वात्स्यादीश्वरत्वमीश्वरस्येति कृत्वा प्रागित्युक्तम् ।

ननु तव मतेऽपि प्रकृतेस्सम्भूतिश्रवणेन सादित्वात्पुरुषस्यानादित्वेऽपीश्वरादभिन्नत्वात्प्रकृत्युत्पत्तेः प्रागीशितव्याभावेनेश्वरस्यानीश्वरत्वप्रसङ्गोऽस्त्येवेति चेत्, मैवम्—प्रकृतेस्सम्भूतिश्रवणेऽपीयमिदानीं सम्भूतेति वक्तुमशक्यत्वेनानादित्वात् । पुरुषस्येश्वरादभेदेऽपि तद्भेदस्याविद्यया कल्पितस्य पूर्वोक्तन्यायेनैवानादित्वात् । 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगष्षडस्माकमनादय' इति वचनात्प्रकृतिपुरुषयोः प्रागिति वक्तुं न शक्यते । तस्माद्यावदविद्यमनादिकालादारभ्य सर्वदापीशितव्यसत्त्वान्नास्मन्मते ईश्वरस्यानीश्वरत्वप्रसङ्गः । किमीश्वरः प्रकृतिपुरुषौ प्रपञ्चं वा स्वेच्छया सृजति? उत यत्किञ्चिन्निमित्तमाश्रित्य? आद्ये- ईश्वरीयेच्छाया नित्यत्वेन सर्वदापि प्रकृतिपुरुषप्रपञ्चसद्भाव एवेति न संसारनिवृत्तिः । द्वितीये- यन्निमित्तं तद्वक्तव्यं- न तावज्जीवादृष्टाख्यं कर्म- तस्य प्रकृत्यन्तःपातित्वाज्जीवस्य सादित्वेन सान्तत्वाच्चत्कर्मणो निराश्रयस्य सत्त्वायोगात् । जीवस्योत्पत्तेः प्राक्कर्मण एवासम्भवाच्च । कर्ता हि जीवः स्वयमुत्पन्नः कर्म कुर्यान्न त्वनुत्पन्नः । नाप्यज्ञानं- तस्य प्रकृति-

**प्रसङ्गात्संसारस्य च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गाद्बन्धमोक्षाभावप्र**
**नित्यत्वे पुनरीश्वरस्य प्रकृत्योस्सर्वमेतदुपपन्नं भवेत्कथम् ?**

---

त्वात् । एवमनिमित्तस्यापि कार्यस्याभ्युपगमे निर्निमित्तस्संसारो नैव निवर्तेत । विद्यमा ज्ञानान्निवृत्तावपि निर्निमित्तस्संसारः पुनरन्य आपतेदेव । नच कथं भवेदिति वाच्यं, निर्नि प्रति कथमिति निमित्तप्रश्नायोगात् ।

ननु मास्तु संसारस्यानिवृत्तिः को दोषस्तत्राह—**शास्त्रेति** । संसारनिवृत्त्यर्थं हि वे भगवता निर्मितं, तन्निवृत्त्यभावे किमर्थं तच्छास्त्रं ? व्यर्थमेवेत्यर्थः । निर्निमित्तस्य कार्यस्य दुर स्संसारो निर्निमित्तः कदापि न स्यादेवेति बन्धाभावप्रसङ्गः । बन्धपूर्वकत्वान्मोक्षस्य मोक्षा श्चेत्याह—**बन्धमोक्षेति** । बन्धमोक्षयोरभावप्रसङ्गादिति समासः । नच ईश्वरस्य निमित्त निर्निमित्तत्वमिति वाच्यं, ईश्वरस्य मुख्यकारणत्वेन निमित्तकारणत्वायोगात् । प्रकृतिपुरु संसारस्य निमित्तकारणे । तयोश्च तव मते सादित्वान्न कारणत्वमिति ॥ नच प्रकृतिपुरुषयोर भवेयुरमी दोषा इति वाच्यमित्याह—**नित्यत्वे त्विति** । एतत्पूर्वोक्तं सर्वमिति शास्त्रसार्थ मोक्षौ चेत्यर्थः । प्रकृतिपुरुषयोस्संसारनिमित्तयोस्सत्त्वान्न निर्निमित्तत्वं संसारस्य । प्र नाशान्न पुनस्संसारप्रसङ्गः- निमित्ताभावात्; पुरुषस्यैकस्य संसारं प्रत्यनिमित्तत्वात् । ज्ञानज शास्त्रं सार्थकम् । प्रकृतेरनादित्वेन सर्वदापि सत्त्वात्तत्कृतो बन्धोऽस्ति । बन्धस्य सद्भावादेव रूपो मोक्षोऽप्यस्तीति न काचिदनुपपत्तिरिति भावः ।

नच प्रकृतिपुरुषयोरनादित्वे ईश्वरस्य जगत्कारणत्वासिद्धिः, प्रकृतिपुरुषाभ्यां नि मेवेश्वरस्य जगत्कारणत्वात् । वस्तुतो निर्विशेषचिन्मात्रेश्वरस्य जगत्कारणत्वासम्भवात् । न पुरुषयोरेव मुख्यकारणत्वमस्त्विति वाच्यं, प्रकृतेर्जडत्वात्पुरुषस्य चोदासीनत्वात् । नच पु स्प्रकृतेः प्रकृतिसम्बन्धात्पुरुषस्य वा ईक्षणसम्भवात्तयोरेव मुख्यकारणत्वमिति वाच्यं, असङ्ग प्रकृतिसंसर्गायोगात् । प्रकृतिसंसृष्टस्य वा प्रकृतिपरवशत्वेन पुरुषस्य परिच्छिन्नज्ञानस्य सृ योगात् । तादृशपुरुषसम्बन्धेन प्रकृतेर्वा सृष्टिसङ्कल्पायोगात् । ईश्वरस्य तु वशीकृतमा च्छिन्नज्ञानस्य सृष्टिसङ्कल्पोपपत्तिः । प्रकृतेरीश्वरचैतन्याभासेन वृत्तिसम्भवेऽपि न सङ्कल्पयितृत्वं चेतनधर्मत्वादीक्षणस्य । सति मुख्येक्षणे ईश्वरीये प्राकृतगौणेक्षणस्वीकारस्यान्याय्यत्वाच्च । य प्रकृतिपुरुषौ प्रत्यकारणत्वादीश्वरस्य सर्वकारणत्वासिद्धिरिति, तन्न—सर्वं कार्यजातंप्रत्येव णत्वादीश्वरस्येति ।

नन्वसङ्गेश्वरस्य कथं मायित्वम् ? ईश्वरस्यैव पुरुषत्वेन कथमीश्वरस्यापरिच्छिन्न जीवस्य परिच्छिन्नज्ञानत्वं च ? इति चेन्नैष दोषः—विद्यावस्थायामेवेश्वरः पुरुषो वाऽसङ्गः द्यावस्थायां तु माय्येवेश्वरो मायापरतन्त्र एव जीवश्च । विद्यावस्थायामेव पुरुष ईश्वरः,

विकारांश्च गुणांश्चैव वक्ष्यमाणान् विकारान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्च सुख-
खमोहप्रत्ययाकारपरिणतान् विद्धि विजानीहि प्रकृतिसम्भवान्- प्रकृतिरीश्वरस्य विकार-
ारणशक्तिस्त्रिगुणात्मिका माया, सा सम्भवो येषां विकाराणां गुणानां च तान् विकारान्
णांश्च विद्धि प्रकृतिसम्भवान् प्रकृतिपरिणामान् ॥१९॥

ायां तु पुरुष ईश्वराद्भिन्न एव । न चाविद्ययापि कथमीश्वरस्य जीवत्वमिति वाच्यं, मायायां सर्व-
म्भवादिति न्यायात् । यदि वस्तुतो वयमीश्वरस्य जीवत्वं ब्रूमस्तर्हि कथमीश्वरस्य जीवत्वमिति
ायेत, नतु तथा ब्रूमः, नहि रज्जोरविद्यया सर्पत्वं दृश्यमानं विप्रतिषिद्धं, येनेश्वरस्याविद्यया दृश्यमानं
ीवत्वं विप्रतिषिद्धं स्यात् । तस्मादनादिरपि प्रकृतिर्न जगत्कारणं जडत्वात्- 'ईक्षतेर्नाशब्द'मिति
ाच्च । तथाऽनादिरपि जीवो न जगत्कारणं- प्रकृतिपरतन्त्रत्वेनानीश्वरत्वात् । किं त्वीश्वर एव
शीकृतप्रकृतिस्सर्वज्ञस्सर्वशक्तिर्जगत्कारणं यतो वेत्यादिश्रुतेर्जन्माद्यस्य यत इति स्मृतेश्च । एवं जग-
सृष्ट्यादिसमर्थत्वादेवास्येश्वरत्वव्यवहारः । ईश्वरो हि समर्थः । ईष्ट इतीश्वर इति व्युत्पत्तेः । अत
व निरीश्वरसाङ्ख्यवादस्याश्रौतत्वादप्रामाण्यमयुक्तत्वाच्च ।

न चैवं भिन्नेश्वरयोगवादः प्रमाणमिति वाच्यं, जीवेश्वरभेदस्याविद्यया कल्पितत्वेनातात्त्वि-
त्वादद्वैतस्यैव श्रौतत्वाद्युक्तत्वाच्च । तस्मादद्वैतवाद एव श्रुतियुक्त्यनुभवसिद्धत्वात्प्रमाणमिति संक्षेपः ।

नन्वीश्वरप्रकृत्योर्नित्यत्वे कथं सर्वमेतदुपपद्यत इत्याक्षिपति—कथमिति । तयोरेव संसार-
ारणत्वात्सर्वमुपपद्यत इत्यभिप्रेत्य तत्संसारकारणत्वमेव दर्शयति—विकारांश्चेत्यादिना । विकारांश्च
ुणांश्चैव प्रकृतिसम्भवान्विद्धि- प्रकृतिर्मूलप्रकृतिः; विकारा महदादिप्रकृतिकार्याणि; बुद्धिशब्देन मह-
त्त्वस्य ग्रहणम् । आदिपदादहङ्कारपञ्चतन्मात्रदशेन्द्रियप्राणपञ्चकमनसां ग्रहणम् । देहस्स्थूलस्तेन
ञ्चभूतग्रहणम् । पञ्चभूतात्मकत्वात्तस्य । प्रतीयन्त इति प्रत्यया विषयाः, प्रत्यया ज्ञानानि वृत्तय इति
ावदिति वा । वक्ष्यमाणानिति । कार्येत्युत्तरश्लोकेनेति भावः । सम्भवत्यस्मादिति सम्भव उत्पत्ति-
हेतुरित्यर्थः । प्रकृतेस्सकाशात्सम्भव उत्पत्तिर्येषां तानित्यपि वक्तुं शक्यम् । कथं प्रकृतिसम्भवत्वं तेषा-
ित आह—प्रकृतिपरिणतानिति । मूलप्रकृतिरेकैव । मृद्द्रव्यमेकं घटकपालकरकाद्याकारेणेव
बुद्ध्यादिविकाराकारेण सुखदुःखादिगुणाकारेण च परिणतेत्यर्थः । गुणानां स्वरूपेण दुर्ज्ञेयत्वादाह—
सुखाद्याकारपरिणतानिति । एतेन 'तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च य'दितिश्लोकप्रतिज्ञातार्थ
उक्तप्रायः । सर्वविकारयुक्तं सर्वगुणयुक्तं च प्रकृतिलक्षणं क्षेत्रमेव । सर्वं कार्यं प्रकृतित एव जायत
इति चेहोक्तत्वात् । महाभूतानीतिश्लोकेन तु सार्धेन क्षेत्रं पूर्वमेव दर्शितमिति बोध्यम् ।

नचैवं सर्वस्य जगतः प्रकृतिसम्भवत्वे कथमीश्वरस्य जगत्कर्तृत्वमिति वाच्यं, ईश्वरसङ्कल्पवशा-
देव तदीया प्रकृतिरियं जगदाकारेण परिणतेति जगत्कर्तृत्वमीश्वरस्य । यथा कुलालसङ्कल्पकृतिभ्यां
घटाद्याकारपरिणामवत्यामपि मृदि घटादिकर्तृत्वं कुलालस्य तद्वत् । नचैवं प्रकृतेरेव जगदुपादानत्वे

**के पुनस्ते विकारा गुणाश्च प्रकृतिसम्भवाः ?**

**कार्यकरण(कारण)कर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥**

**कार्येति । कार्यकरणकर्तृत्वे- 'कार्यं शरीरं, करणानि च तत्स्थानि त्रयोदश । स्यारम्भकाणि भूतानि पञ्च, विषयाश्च प्रकृतिसम्भवा विकाराः पूर्वोक्ता इह कार्य**

---

ईश्वरस्याभिन्ननिमित्तोपादानत्वं न सङ्गच्छत इति वाच्यं, जगद्विवर्ताधिष्ठानत्वेन तादृशप्रकृत्यधिष्ठा वा ईश्वरस्य कर्तृत्वोपादानत्वयोस्सिद्धेः । अत एव याभ्यां प्रकृतिभ्यामीश्वरो जगत्सृष्ट्यादिहे भाषितमाचार्यैः ।

ननु ईश्वरस्य जगत्सृष्ट्यादिहेतुत्वे प्रकृतिरेवोपयुज्यते· प्रकृतिपरिणामत्वाज्जगतः । न इति कथं याभ्यां प्रकृतिभ्यामित्युक्तमिति चेत् , मैवम्—भोक्तुरभावे भोग्यस्य जगतोऽप्यभा त्पुरुषस्य भोक्तृत्वं भोग्यजगत्सद्भावं प्रति निमित्तमिति पुरुषस्यापि द्वारकारणत्वमुक्तमिति । ईश्वरः द्वारा जगत्सृजति, तच्च सृष्टं जगत्पुरुषद्वारा भुंक्त इति प्रकृतिपुरुषाभ्यां जगद्धेतुत्वमीश्वरस्येति यद्वा यत्पुरुषस्य स्वरूपभूतं कूटस्थचैतन्यं तत्रैव देहादिप्रपञ्चस्याविद्यया कल्पितत्वात्पुरुषस्यापि जग मिति । नचैवमीश्वरस्य जगद्धेतुत्वाभ्युपगमभङ्गप्रसङ्गः· ईश्वरस्यैव कूटस्थत्वात् । अथवा देह व्यष्टिप्रपञ्चाधिष्ठानं कूटस्थचैतन्यमन्तःकरणोपहितत्वात्तस्य । समष्टिप्रपञ्चाधिष्ठानं तु ईश्वरचैतन्यं म हितत्वात्तस्य । तथा च ईश्वरस्य स्वतस्सर्वजगदधिष्ठानत्वं, कूटस्थपुरुषद्वारा तु तत्तद्व्यष्टिदेहा नत्वमिति नेश्वरस्य जगद्धेतुत्वाभ्युपगमविरोधः । नापि पुरुषस्य द्वारकारणत्वाभ्युपगमविरोध इति

यत्तु रामानुजः—विकारानिच्छाद्वेषादीन् गुणानमानित्वादींश्चेति, तदयुक्तम्— दीनामपि गुणत्वादमानित्वादीनामपि विकारत्वाच्चान्यतरशब्देनैव तदुभयग्रहणसम्भवेनान्यत नैरर्थक्यात् ॥१९॥

**कार्येति । शरीरं स्थूलम् । करणान्यन्तःकरणबहिष्करणानि । त्रयोदशेति मनोबुद्ध्य** स्सह ज्ञानकर्मेन्द्रियाणि दशेत्यर्थः । एकस्यैवान्तःकरणस्य मनआदिभेदेन त्रिविधत्वात्त्रयाणां मन्तःकरणत्वेन ग्रहणम् । साधकतमं करणं, श्रवणादिगमनादिमननादिक्रियासु प्रकृष्टोपका च्छ्रोत्रादिपादादिमनआदीनां करणत्वम् । एतेषां त्रयोदशानामपि प्रकृतिकार्यत्वेन करणत्वेऽपि शब्देन ग्रहणमुपपन्नम् । भूतानि पृथिव्यादीनि । विषयाश्शब्दादयः । एते प्रकृतिसम्भवा वि विकारांश्चेति पूर्वश्लोकोक्ताः । त एव विकारा इह कार्यशब्देन गृह्यन्ते, गृह्यतेऽनेनेति ग्रहणं प्रकृतिसम्भवा गुणाः पूर्वश्लोकोक्तास्सुखादय इह करणशब्देन गृह्यन्ते लक्षणयेत्याह—गुणा पूर्वोत्तरश्लोकयोस्समानार्थत्वेन भाव्यत्वादिति भावः । अन्यथा कार्यशब्देन देहग्रहणे करणशब्देन ग्रहणे च सति विषयादिविकारग्रहणं सुखादिग्रहणं च न स्यात् । नचेष्टापत्तिः- पूर्वश्लोके तेषां सर्वे

गृह्यन्ते। गुणाश्च प्रकृतिसम्भवास्सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते। तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते। एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिः, कार्यकारणकर्तृत्वे इत्यस्मिन्नपि पाठे, कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति। अथ वा षोडश विकाराः कार्यं, सप्त प्रकृतिविकृतयः कारणं, तान्येव कार्यकारणान्युच्यन्ते। तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते आरम्भकत्वेनैव। पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते—पुरुषो जीवः क्षेत्रज्ञो भोक्तेति पर्यायस्सुखदुःखानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते।

---

प्रकृतिसम्भवत्वेनोक्तत्वादिहापि तत्कर्तृत्वे प्रकृतिर्हेतुरिति वक्तव्यत्वात्। तदनुक्तौ सुखादीनां प्रकृत्यन्यकर्तृकत्वप्रसङ्गात्। कथं करणग्रहणेन गुणग्रहणमत आह—**करणाश्रयत्वादिति**। सुखादयो ह्यन्तःकरणाश्रयाः। सुखादिवृत्तीनामन्तःकरणपरिणामविशेषरूपत्वात्। उत्पादकत्वं जननमिति यावत्। केन हेतुना कारणत्वमत आह—**आरम्भकत्वेनेति**। तन्तुः पटस्येव मृद्घटस्येवेति भावः। कर्तृत्वे हेतुत्वमित्यस्य कर्तृत्वमित्येव पर्यवसन्नार्थत्वादाह—**कार्यकरणकर्तृत्व इति**। अत एव- 'कार्यकरणकर्तृत्वे कारणं प्रकृतिं विदु'रिति भागवतं च।

प्रकृतिपुरुषावनादी संसारकारण इति पूर्वमुक्तं, कथं तयोस्संसारकारणत्वमिति प्रश्ने विकारांश्चेत्यादिकमुक्तम्। तेन च प्रकृतेस्तावत्संसारकारणत्वं सिद्धमित्याह—**संसारकारणमिति**। देहादिप्रपञ्चस्यैव संसारत्वात्तत्प्रपञ्चारम्भकप्रकृतिस्संसारकारणमित्यर्थः। यद्यस्य परिणामस्तत्तस्य कार्यं, अत्र प्रथमान्तपदार्थः कार्यं विकारः। षष्ठ्यन्तपदार्थः कारणं विकारि। यथा मृदः परिणामो घटो मृदः कार्यमिति कार्यं घटो विकारः, कारणं मृत्तु विकारि। ताभ्यां च विकारविकारिवाचिभ्यां कार्यकारणशब्दाभ्यां पूर्वोक्तान्येव कार्यकरणानि विकारा गुणाश्चोच्यन्ते। ततश्च कार्यकारणकर्तृत्व इति पाठेऽपि स एवार्थः। महदादीनामहङ्कारादीन् प्रति कारणत्वात्प्रकृत्यादीन् प्रति कार्यत्वाच्च कार्यकारणशब्दाभ्यां तद्ग्रहणसम्भवादिति भावः। अस्मिन्नेव पाठेऽर्थान्तरमाह—**अथवेति**। 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इति साङ्ख्योक्तविधया षोडशविकाराणां दशेन्द्रियभूतपञ्चकमनसां कार्यशब्देन ग्रहणम्। मूलप्रकृतिं प्रति विकृतित्वेनेन्द्रियादीन् प्रति प्रकृतित्वेन च प्रकृतिविकृतिभूतानां महदहङ्कारपञ्चतन्मात्राणां सप्तानां कारणशब्देन ग्रहणम्। तेषां कर्तृत्वे सृष्टौ तु मूलप्रकृतिर्हेतुरित्यर्थः। केन रूपेणेत्यत आह—**आरम्भकत्वेनैवेति**। ननु प्रकृतिवत्पुरुषोऽपि किमारम्भकत्वेन संसारस्य कारणम्? यद्वा विवर्ताधिष्ठानत्वेनेति शङ्कायां विवर्ताधिष्ठानत्वेन सर्पस्य रज्जुवत्संसारस्य पुरुषः कारणं भवत्येव। इह तु भोक्तृत्वेनापि कारणमेवेत्युच्यत इत्याह—**पुरुषश्चेति**। उपलब्धृत्वे ज्ञातृत्व इति यावत्। भोक्तृत्वे हेतुर्भोक्तेत्यर्थः। ज्ञातेति यावत्। सुखदुःखयोर्विषयभेदाद्बहुत्वमित्यभिप्रेत्य सुखदुःखानामित्युक्तम्। भोक्तुरभावे भोग्याभावाद्भोक्ता पुरुषस्संसारकारणमिति भावः।

कथंपुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोस्संसा
णत्वमुच्यत इति, अत्रोच्यते—कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणा
पुरुषस्य च चेतनस्यासति तदुपलब्धृत्वे कुतस्संसारस्स्यात् ? यदा पुनः कार्यकरणसुख
स्वरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेना
रूपस्संयोगस्स्यात्, तदा संसारस्स्यादिति। अतो यत्प्रकृतिपुरुषयोः कार्यकरणक
सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद्युक्तमुक्तम्। कः पुनरयं संसारोनाम ?
दुःखसम्भोगस्संसारः पुरुषस्य च सुखदुःखानां भोक्तृत्वं संसारित्वमिति ॥२०॥

---

ननु कार्यकरणकर्तृत्वमात्रेण प्रकृतेर्भोक्तृत्वमात्रेण पुरुषस्य च कथं संसारकारणत्वमित्याशि
कथमिति। समाधानं शङ्कायाः प्रवदामीति प्रतिजानाति—अत्रोच्यत इति। हेतवः कार्यक
फलानि सुखदुःखानि, सुखदुःखहेतुभूतकार्यकरणात्मना कार्यकरणफलभूतसुखदुःखात्मना चे
भोक्तृभोग्ययोरुभयोरभावे संसाररूपभोगस्य कुतस्सद्भावः ? न कुतोऽपीत्यर्थः। यद्यपि देहादिप्रप
संसारस्तथापीह तद्भोगस्संसार इत्युच्यते। ततश्च देहादिप्रपञ्चरूपसंसारं प्रति प्रकृतेरारम्भ
पुरुषस्य विवर्ताधिष्ठानत्वेन च कारणत्वमस्तुनाम। देहादिप्रपञ्चकृतसुखदुःखभोगरूपसंसारं प्रति
प्रकृतिपुरुषयोः कारणत्वमत आह—यदेति, तद्विपरीतस्येति। प्रकृतेः परस्येत्यर्थः। भोग
रूपेण संयोगः।

सोऽयमसङ्गस्य पुरुषस्य कथमित्यत आह—अविद्यारूप इति। मिथ्याभूत इत्यर्थः। 
मयत्वादिति भावः। भोग्यभोक्तृभूतयोः प्रकृतिपुरुषयोस्संयोगस्य भोगरूपसंसारं प्रति निमि
प्रकृतिवत्पुरुषोऽपि संसारस्य कारणमेवेत्यर्थः। प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृ
यत्संसारकारणत्वमुक्तं तद्युक्तमेवोक्तमित्यन्वयः। कः पुनरयं संसारः यत्कारणत्वं प्रकृतिपुरुषं
पृच्छति—क इति। उत्तरमाह—संसारो नाम सुखदुःखसम्भोग इति। उक्तलक्षणसंसारव
पुरुषस्य संसारित्वव्यहार इत्याह—पुरुषस्येति। सुखदुःखभोगरूपसंसारवत्त्वात्पुरुषस्संसारी
इत्यर्थः। न चाविक्रियस्य पुरुषस्य कथं भोक्तृत्वमिति वाच्यं, मिथ्याभूतभोक्तृत्वे विवादाभो
'क्षेत्रज्ञं चापि मां विद्धी'त्यसंसारित्वं ह्यात्मनस्तत्त्वमित्युक्तम्।

यत्तु रामानुजः—कार्यकरणानां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हे
तत्तुच्छम्—प्रकृतिपरिणामभूतानां कार्यकरणानामेव पुरुषाधिष्ठितानां क्रियाकारित्वे सम्भवति
कोऽर्थः पुरुषाधिष्ठितप्रकृतेस्तद्धेतुत्ववर्णनेन ? नच पुरुषाधिष्ठिता बुद्धिस्तद्धेतुरिति वाच्यं, तस्या
न्तःकरणत्वेन करणान्तर्गतत्वात्। नच पुरुषाधिष्ठिताज्ञानं तद्धेतुरिति वाच्यं, सुषुप्तावपि पुरुषा
ताज्ञानसत्त्वेन कार्यकरणानां क्रियाकारित्वप्रसङ्गात्। किं च प्रकृतेः क्रियाकारित्वे
हेतुस्तदेव पुरुषाधिष्ठितत्वं कार्यकरणानां क्रियाकारित्वेऽपि हेतुरिति कृत्वा अधिष्ठाता

यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते—

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

पुरुष इति । पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः; प्रकृतिमात्मत्वेन गत इत्येतत् । हि यस्मात्तस्माद्भुंक्ते उपलभत इत्यर्थः । प्रकृतिजान् प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान् 'सुखी दुःखी

---

एव कार्यकरणानां क्रियाकारित्वे हेतुस्स्यात् । नचेष्टापत्तिः- कर्तृत्वे हेतुः प्रकृतिर्भोक्तृत्वे हेतुः पुरुष इति मूलोक्तार्थविरोधात् । न च सत्यपि मूलविरोधे- 'कर्ता शास्त्रार्थवत्त्वा'दिति सूत्रानुसारादयमर्थः कल्प्यत इति वाच्यं, 'प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः । यः पश्यति तदात्मानमकर्तारं स पश्यति' इति, 'प्रकृत्या क्रियमाणानि गुणकर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यत' इत्यादिशास्त्रादकर्तुरात्मनः कर्तृत्वं प्रतिपादयितुं न तत्सूत्रं शक्नुयात्, किं त्वहङ्कार एव कर्तेति सूत्रकारस्याप्याशयः । सूत्रकारगीताकारयोरेकत्वेन विरुद्धार्थकथनासम्भवात् । तस्मात्प्रकृतिरेव कर्त्री, पुरुष एव भोक्तेति स्थितम् ।

नच जडायाः प्रकृतेः कथं कर्तृत्वमिति वाच्यं, ईश्वरेक्षणवशात्तस्याः कर्तृत्वलाभात् । नचाविकारस्य पुरुषस्य कथं भोक्तृत्वमिति वाच्यं, साक्षित्वरूप भोक्तृत्वस्याविकारत्वात् । ननु सुखदुःखसाक्षात्काररूपभोगस्याविकारत्वेऽपि सुखदुःखानुभवरूपभोगस्य सुख्यहं दुःख्यहमिति प्रतीतिसिद्धस्य कथं विकारत्वाभाव इति चेत्सत्यं विकार एव सः- अविकारेऽपि पुरुषे सविकारोऽविद्यावशात्सम्भवत्येव-- गगने नैल्यमिव । यथा अकर्तर्यपि पुरुषे गन्ताहं ग्रहीताहमित्यादिप्रतीतिसिद्धं कर्तृत्वमज्ञानात्सम्भवति तद्वत् । अयमेवार्थ उत्तरश्लोके स्फुटीभविष्यति ॥२०॥

पुरुष इति । यद्यस्मादित्यर्थः । तस्मादिति शेषः । तस्य पुरुषस्य तत्संसारित्वं प्रति किं वा निमित्तम् । यद्वा तत्संसारित्वं किंनिमित्तं किंहेतुकमिति बहुव्रीहिः । इतिशङ्कायां प्राप्तायां सत्यामिति शेषः । उच्यते उत्तरमिति शेषः । हि यस्मात्पुरुषः प्रकृतिस्थो भवति तस्मात्प्रकृतिजान् गुणान् भुंक्ते अनुभवति । कथं पुरुषस्य प्रकृतिस्थत्वमत आह—प्रकृतिमिति । गतः प्राप्तः । अहमेव प्रकृतिरिति प्रकृतितादात्म्यमापन्न इत्यर्थः । यद्यपि पुरुषस्य प्रकृतौ तत्कार्ये वा न साक्षादात्मभावस्तथापि अहमज्ञ इति, अहं कर्तेति, अहं मनोमीति, अहं निश्चिनोमीति, अहं पश्यामीति, अहं स्पृशामीति, अहं वदामीति, अहं जिघ्रामीति, अहं गच्छामीत्येवमादिरूपेण तद्धर्मानात्मन्यध्यस्यतीति बोध्यम् । क्वचित्कार्यविशेषे देहादौ तु साक्षादेवात्मभावोऽध्यस्यते । देवोऽहं मनुष्योहमित्यादिप्रतीतेः । एवमनात्मभिः प्रकृतितत्कार्यादिभिस्तद्धर्मैश्च आत्मन्यध्यस्तैर्भवत्यात्मनस्संसारो मिथ्याभूत इति सिद्धमध्यासस्य संसारनिमित्तत्वम् । शरीरादेरन्नादिभोगवन्नात्मनस्सुखादिभोगः, किं तर्हि चक्षुरादेर्घटाद्युपलब्धिवदात्मनः सुखाद्युपलब्धिरेवेत्याह—उपलभत इत्यर्थ इति । जानातीति यावत् । वस्तुतस्सुखादि-

मूढः पण्डितोऽह'मित्येवम्। सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः आत्मभावस्संसारस्य स प्रधानं कारणं जन्मनः- 'स यथाकामो भवति तत्क्रतुर्भव'तीति श्रुतेः। तदेतदाह—कारणं हेतुः, गुणसङ्गो गुणेषु सङ्गः। अस्य पुरुषस्य भोक्तुः सद- द्योनिजन्मसु-- सत्यश्चासत्यश्च योनयस्सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सद... जन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गः। अथ वा सदसद्योनिज... अस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम्। सद्योनयो देवादियो...

---

साक्षिभूतस्यात्मनस्सुखादिभोगासम्भवादिति भावः। सुखाकारेण सत्त्वगुणस्य दुःखाकारेण रजो... मोहाकारेण तमोगुणस्य च परिणामात्सुखादीनां प्रकृतिजगुणत्वेन व्यवहारः।

पण्डित इति। सत्त्वगुणपरिणामः पाण्डित्यमिति बोध्यम्। यद्यपि सुखदुःखादिसाक्षी हि पुरुषः सुखमहं जानामि दुःखमहं जानामीत्येवं प्रतीयात्, नतु सुख्यहं दुःख्यहमित्येवं, सुख- दुःखादेरन्तःकरणधर्मत्वेन पुरुषस्य तद्वत्ताऽभावात्। तथाप्यनात्मतादात्म्याध्यासवशात्सुख्यहं दुःख्यह- मित्येवं प्रत्येति। नतु सुखमहं जानामीत्येवमिति भावः। यद्वा भुंक्ते उपलभते अनुभवतीति तद- अनुभवप्रकारमेव दर्शयति—सुखीत्यादिना। सुखी दुःखी मूढः पण्डितोऽहमित्येवं प्रकृति- गुणान् भुंक्त इत्यन्वयः। पुरुषस्य संसारं प्रति नाविद्यामात्रं कारणं, नापि तत्कार्यभूतास्सुखदुःखा... कारणं, नापि तत्साक्षात्कारः कारणं, सुषुप्तौ यथोक्तसर्वसत्त्वेऽपि पुरुषस्य संसारादर्शनात्। अध्यास एव कारणमित्याह—सत्यामित्यादिना। अविद्यायां सत्यामपि न सा प्रधानकारणं, त्वन्यदेवेत्येतदर्थमपि शब्दग्रहणम्। भुज्यमानेषु ज्ञायमानेषु गुणेषु यः पुरुषस्य आत्मभावरूपस्स पुरुषस्य जन्मनस्संसारस्य प्रधानं कारणमविद्यादयस्त्वप्रधानं कारणमिति भावः। अविद्याद्यभावेऽप्य- योगात्। आत्मभाव आत्मबुद्धिः। ममेमे गुणा इति गुणानामात्मन्यध्यास इति यावत्। भाव- शब्दोऽत्रात्मीयवाची। इयं च गुणेष्वात्मीयबुद्धिरुपलक्षणं- गुणवत्यन्तःकरणे आत्मबुद्धेः। धर्मा- द्धर्म्यध्यासस्यापि संसारकारणत्वाद्धर्म्यध्यासपूर्वकत्वाच्च धर्माध्यासस्य। किंतु सच धर्म्यध्यासः साक्षादुपलभ्यते। अहं मन इति प्रतीत्यभावात्। ततश्च धर्माध्यासेनानुमीयते। अत एव धर्मा- ध्यास एव साक्षादुपलभ्यमानस्संसारहेतुत्वेन भाष्ये निर्दिष्ट इति बोध्यम्।

सङ्गस्य संसारहेतुत्वे श्रुतिं प्रमाणयति—स इति। स पुरुषो यथाकामो यादृशकामो भवति, तत्क्रतुस्तादृशकामप्रदक्रतुकर्ता भवति। स्वर्गकामो ज्योतिष्टोमं करोति पशुकामः कारीरेष्टिमिति काम्येषु स्वर्गादिषु यः पुरुषस्य ममायं भूयादिति सङ्गः, स एव यज्ञाद्यनुष्ठापनद्वारा देवादि- प्राप्तिलक्षणसंसारहेतुरिति श्रुत्यभिप्रायः। अस्य सदसद्योनिजन्मसु गुणसङ्गः कारणम्। सद् देवादिशरीरं, असन्निकृष्टं पश्वादिशरीरं, तयोर्योनय उपस्थेन्द्रियाधिष्ठानानि गुदानि। तद्युक्ताः कोशा वा तासु जन्मान्युत्पत्तयः। तेष्विति विषयसप्तमी। अस्येति। पुरुषानुभवसिद्धस्येत्यर्थः। गुणसङ्गस्सत्त्वादिगुणयुक्तस्सङ्गः कामः। सत्त्वगुणवशात्पुरुषो मम देवयोनिजन्म भूयादिति काम...

असद्योनयः पश्वादियोनयः । सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः ।

एतदुक्तं भवति—प्रकृतितत्त्वाख्याऽविद्या, गुणेषु च सङ्गः कामस्संसारस्य कारणमिति । तच्च परिवर्जनायोच्यते- अस्य च निवृत्तिकारणं ज्ञानं सवैराग्यसन्न्यासं गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम् । 'यद्ज्ञात्वाऽमृतमश्नुत' इत्युक्तं चान्यापोहेनातद्धर्माध्यारोपेण च ॥२१॥

---

रजोगुणवशात्तु मम मनुष्यजन्म भूयादिति, तमोगुणवशात्तु मम पशुजन्म भूयादिति, गुणपरतन्त्रो ह्यज्ञो जीवस्त्वानिष्टमपि कांक्षत्येव तत्रेष्टबुद्ध्या- यथा कर्मपरतन्त्रः पुरुषस्त्वानिष्टमपि परद्रव्यापहारादिकं कांक्षति, यथा वा रुग्णस्त्वानिष्टमपि चूतफलादिकं तद्वत् । एवं कामयमानश्च स स्वकामानुगुण्येन तत्तज्जन्म प्रतिपद्यत इति गुणप्रयुक्तो देवादियोनिजन्मसङ्ग एव पुरुषस्य संसारकारणमित्यर्थः । पुण्यमयत्वाद्देवादियोनयस्सद्योनयः । पापमयत्वात्पश्वादियोनयोऽसद्योनयः । पुण्यपापोभयात्मिकास्तु मनुष्ययोनयः । सदसद्योनिष्विव मनुष्ययोनिष्वपि सङ्गसम्भवात्तासामपीह ग्रहणमित्याह—सामर्थ्यादिति । सदसद्योनिग्रहणबलादित्यर्थः ।

यद्वा समस्तपदसामर्थ्यादिति । सच्च तदसच्च सदसत्, तस्य योनिस्सदसद्योनिरिति समासे कृते उभयात्मकमनुष्ययोन्यर्थलाभादिति भावः । अविरुद्धा इति । पुण्यपापोभयात्मकत्वादिति भावः । पुण्ययोनयः पापयोनयश्च परस्परं विरुद्धाः पुण्यपापयोर्विरुद्धत्वात् । मनुष्ययोनयस्त्वविरुद्धा इत्यभिसन्धिः । यद्वाऽविरुद्धा नोत्कृष्टा नाप्यपकृष्टाः, किंतु समाना इत्यर्थः । फलितं वदामीत्याह—एतदिति । प्रकृतिस्थत्वमात्मानात्मनोस्तादात्म्याध्यासः । अविद्या गुणेषु सङ्गः । आत्मन्यनात्मधर्माध्यासः । कामस्स्वर्गादिकामना । इत्येतच्चतुष्टयं संसारस्य कारणमित्येतदुक्तं भवतीत्यन्वयः । गुणसङ्गशब्दस्य द्वेधाऽर्थवर्णनाद्धर्माध्यासकामयोस्सिद्धिः । प्रकृतिस्थ इति पदेन प्रकृतेरपि कारणत्वस्य सूचितत्वाद्धर्म्यध्यासाविद्ययोस्सिद्धिरिति विवेकः । ननु किमर्थमुक्तं संसारकारणमत आह—तच्चेति । संसारकारणं तच्छब्दार्थः । अस्य च संसारस्येत्यर्थः । सवैराग्यसन्न्यासं वैराग्यसन्न्याससहितं ज्ञानं निवृत्तिकारणम् ।

किं तद्ज्ञानमत आह—गीताशास्त्रे प्रसिद्धमिति । गीताशास्त्रे कुत्र प्रकरणे प्रसिद्धमत आह—पुरस्तादिति । किं विषयं तद्ज्ञानमत आह—क्षेत्रेति । ननु पुरस्तादुपन्यस्तस्य क्षेत्रक्षेत्रज्ञविषयस्य ज्ञानस्य संसारनिवृत्तिकारणत्वं कुत्रोक्तमत आह—यद्ज्ञात्वेति । अमृतं मोक्षो हि संसारनिवृत्तिः । दृश्यं क्षेत्रं नाहं क्षेत्रज्ञ ईश्वर एवाहमिति ज्ञानात्सर्वसंसारनिवृत्तिरविद्याकल्पितत्वात्संसारस्य पुरुषे रज्जौ सर्पवदिति भावः । यद्ज्ञात्वेति ज्ञेयं कथमुक्तमत आह—अन्यापोहेनेति । अन्यापोहोऽन्यनिरसनं तेन 'न सत्तन्नासदुच्यत' इति निषेधमुखेनेत्यर्थः । प्रकारान्तरमाह—तद्धर्मेति । सर्वतः पाणिपादं तदित्यादिरूपेणेति भावः ।

यत्तु रामानुजः—प्रकृतिसंसर्गवशात्पुरुषस्य सत्य एव बन्धः, प्रकृतिसंसर्गस्य गु हेतुः। स च बीजांकुरन्यायात्प्रवाहानादिः। अमानित्वादिभिस्तु गुणसङ्गो निवर्तत इति, तत्तुच्छ 'असङ्गो ह्ययं पुरुष' इति श्रुतेरसङ्गस्य पुरुषस्य प्रकृतिसङ्गस्सत्यः कथं भवितुमर्हति ? किं स्सत्यस्स्यान्नैल्यगुणसङ्गः ? यदि प्रकृतिस्सत्या स्यात्तर्हि पुरुषस्य तत्सङ्गस्सत्यस्स्यात्। नहि स्सत्या- 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुत्या, 'नेह नाना' इत्यादिश्रुत्या च ब्रह्मणि द्वितीयवस्तुम कथं प्रकृतेरेवासत्यत्वे तत्सङ्गस्सत्यस्स्यात् ? एवं प्रकृतिसङ्गस्यैवासत्यत्वे तत्प्रयुक्तगुणसङ्गस्य ब कथं सत्यत्वम् ? किंच प्रकृतिसङ्गप्रयुक्तस्य गुणसङ्गस्य प्रकृतिसङ्गं प्रति हेतुत्वं तु सुतरामयु न च बीजांकुरादिप्रसङ्गः। प्रकृतिसङ्गस्यानादित्वाद्गुणसङ्गस्य सादित्वाच्च। न च प्रकृतिरेवा तत्सङ्गस्तु सादिरेवेति वाच्यं, अनाद्योः प्रकृतिपुरुषयोरन्योन्यसङ्गरहितयोस्सत्त्वे प्रमाणाभावात्। प पश्चात्तत्सङ्गहेत्वभावेनासिद्धेस्सङ्गस्य। न चाज्ञानं सङ्गहेतुरस्तीति वाच्यं, अज्ञानस्यैव प्रकृति प्रकृतेरन्यत्वे चाज्ञानस्य तदज्ञानपुरुषयोस्सङ्गोऽस्ति वा न वा ? आद्ये- कस्तत्सङ्गहेतुः ? द्वि सङ्गहेत्वभावे सङ्गरूपकार्यस्य सिद्धिः कथम् ? यद्यज्ञानपुरुषयोरन्यस्सङ्गहेतुस्स्यात्, तेन सह पु सङ्गे को हेतुः ? एव मनवस्थादोषप्राप्तिः। नच तत्परिहारायाज्ञानपुरुषयोस्सङ्गं प्रत्यज्ञानमेव हे वाच्यं, स्वसङ्गंप्रति स्वस्यैव हेतुत्वे आत्माश्रयादिदोषप्रसङ्गात्। तस्मादनादिरेव प्रकृतिपुरुष उक्तं हि- 'अविद्यातच्चितोर्योगष्षडस्माकमनादय' इति। एवमनादिरयं प्रकृतिसङ्गो गुण हेतुरेव। प्रकृतिपुरुषसङ्गजन्यत्वाद्गुणानां तद्द्वारा तत्सङ्गस्य च तज्जन्यत्वात्। एवं सति गु प्रकृतिपुरुषसङ्गहेतुरिति कथनं तु मृदुत्पत्तिं प्रति घटो हेतुरितिवाक्यवत्परिहासास्पदमेव।

यच्चानेनोक्तम्—अमानित्वादिभिस्सत्योऽपि बन्धो निवर्तत इति, तदयुक्तम्— क्वापि निवृत्त्यदर्शनान्निवर्तमानस्य सत्यत्वादर्शनाच्च। नच दण्डप्रतिहत्या सत्योऽपि सर्पो निवर्तत तया तस्य मरणदर्शनादिति वाच्यं, तत्सर्पसत्यत्वस्य विप्रतिपन्नत्वात्। सम्प्रतिपन्नं हि दृष्टा वाच्यम्। नच तव मते ब्रह्मान्यस्य सर्वस्याप्यसत्यत्वाद्दृष्टान्तासिद्धिरिति वाच्यं, तथा दृष्टान्त देव सर्वं मिथ्येत्यस्माभिरुच्यमानत्वात्। श्रुतियुक्त्यनुभवविरुद्धस्य चार्थस्याग्राह्यत्वात्। श्रुतिस्त 'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्य'मिति, 'तत्सत्यं स आत्मा तत्त्वमसि', 'अतोऽन्यदार्त'मिति ब्रह्मणस्सत्यत्वमन्यस्य च मिथ्यात्वं ब्रूते। युक्तिश्च- ब्रह्म सत्यं त्रिकालाबाध्यत्वाद्व्यतिरेकेण घ जगन्मिथ्या प्रतीतिसमयनियतसत्ताकत्वात्स्वप्नरथादिवदिन्द्रजालादिवच्चेति व्यतिरेकदृष्टान्तप्रयोगा बोध्या। इति स्वन्दवदृष्टान्ते सम्प्रतिपन्ने 'ब्रह्म सत्यं जगन्मिथ्ये'त्यस्मदभ्युपगमो व्याहन्येत। जगत्सत्यं प्रतीयमानत्वाद्ब्रह्मवदिति वाच्यं, ब्रह्मणि हेत्वसिद्धेः। नहि ब्रह्मणो ज्ञेयत्वमस्ति स्वरूपत्वात्तस्य। धर्मादिवच्छास्त्रैकगम्येऽतीन्द्रिये ब्रह्मवस्तुनि प्रतीयमानत्वायोगात्। यदि वद्धि प्रतीयमानं सुखादिकं घटादिकं च। ब्रह्म तु न चक्षुरादिभिर्दृश्यते, नापि मनसा 'अप्राप्य मनसा स'हेति श्रुतेः, 'यत्तदद्रेश्यमग्राह्य'मिति श्रुतेश्च। तस्मात्प्रतीतिरूपे ब्रह्मणि हेत्व

तस्यैव पुनस्साक्षान्निर्देशः क्रियते—

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२॥

उपद्रष्टेति । उपद्रष्टा समीपस्थस्सन् द्रष्टा स्वयमव्यापृतः । यथा ऋत्विग्यजमानेषु

---

ननु जगत्सत्यं त्रिकालाबाध्यत्वाद्ब्रह्मवदिति प्रयोगः । नच हेत्वसिद्धिः पक्षे- प्रलयेऽपि सूक्ष्म-रूपेण जगतस्सत्त्वादिति चेन्मैवमपि—किं स्थूलं जगत्त्रिकालाबाध्यमुत सूक्ष्मम् ? नाद्यः- तस्य प्रलयेऽसत्त्वात् । नान्त्यः तस्य प्रपञ्चकालेऽसत्त्वात् । नच स्थूलसूक्ष्मोभयात्मकं जगत्सत्यमिति वाच्यं, उभयात्मकजगत एवासिद्धेः । नहि स्थूलं जगत्सूक्ष्मात्मकं सूक्ष्मं जगत् स्थूलात्मकं वा भवेत् । स्थूल-सूक्ष्मत्वयोर्विरुद्धधर्मयोर्युगपत्सामानाधिकरण्यायोगात् । नच प्रकृतिस्सत्या त्रिकालाबाध्यत्वाद्ब्रह्मवदिति वाच्यं, तत्रापि किं स्थूला प्रकृतिस्सत्या ? उत सूक्ष्मा ? आद्ये- प्रलये तदभावान्न सत्यत्वम् । द्वितीये- प्रपञ्चे तदभावादिति । नचैवं स्थूलं ब्रह्म सत्यं किं सूक्ष्ममिति विकल्प्यत इति वाच्यं, ब्रह्मणि स्थूलत्वाद्यभावात् । 'अस्थूलमनण्वह्रस्व'मिति श्रुतेः ।

वस्तुतस्तु मुक्तौ प्रकृतेस्तत्कार्यस्य वा असत्त्वान्न कालत्रयाबाध्यत्वलक्षणं सत्यत्वं तस्यास्तस्य वेति बोध्यम् । एवं प्रकृतितत्कार्ययोरसत्यत्वे सिद्धे तत्प्रयुक्तगुणसङ्गस्य बन्धस्य वा सिद्धमेवासत्यत्व-मेवं बन्धस्यासत्यत्वादेव ज्ञानात्तन्निवृत्तिः । 'यद्ज्ञात्वाऽमृतमश्नुत' इति ह्युक्तम् । नहि ज्ञानेन निवर्त-मानस्य क्वापि सत्यत्वं दृष्टम् । त्वदभिप्रायानुसारेणापि सत्यसर्पस्य ज्ञानादनिवृत्तेः रज्जुसर्पस्यैव रज्जु-ज्ञानान्निवृत्तेः । नचामानित्वादिसाधनैर्निवर्तत इति वाच्यं, अमानित्वादयो हि ज्ञानसाधनानि, नतु मोक्षसाधनानि । ततश्चामानित्वादिसाधनजन्यज्ञानादेव बन्धनिवृत्तिः । 'एतद्विज्ञाय मद्भक्तो मद्भावा-योपपद्यत' इति ह्युक्तम् ।

यदप्यनेनोक्तम्—सदसद्योनिजन्मस्वित्यस्य साध्वसाधुषु योनिष्विति, तदप्ययुक्तम्—योनि-गतसाधुत्वासाधुत्वयोर्योन्याश्रयशरीरगतसाधुत्वासाधुत्वप्रयुक्तत्वेन तद्विहायैतत्कल्पनस्यायुक्तत्वात् । नहि योनीनां स्वतस्साधुत्वासाधुत्वे स्तः । मनुष्यपश्वादियोनीनां सर्वासामपि मलादिदूषितत्वांशे एकत्वादिति ॥२१॥

उपद्रष्टेति । तस्यैव पुरुषस्य पुनस्साक्षात्स्वेन रूपेणेत्यर्थः । एतेन पुरुषस्य पूर्वश्लोकोक्तं संसारित्वमाध्यासिकरूपमेव, नतु स्वाभाविकमिति सूचितम् । निर्देशः प्रतिपादनं क्रियते- उपद्रष्टेति श्लोकेनेति भावः । अस्मिन् देहे वर्तमानः परः पुरुषः उपद्रष्टेति, अनुमन्तेति, भर्तेति, भोक्तेति, महेश्वर इति, परमात्मेति चापि श्रुताविति शेषः । उक्तो भवति । उप समीपे पश्यतीत्युपद्रष्टा । ननु किमपि करोतीत्याह—स्वयमिति । अव्यापृतः व्यापाररहितः । उदासीनत्वे सति द्रष्टृत्वमुपद्रष्टृत्वं साक्षित्वमिति यावदिति भावः । नच सन्निहितत्वमपि लक्षणे निवेशनीयमिति वाच्यं, असन्निहितस्य दर्शनायोगात् । आत्मनश्च नित्यसन्निहितत्वात् । एवंविधस्योपद्रष्टृत्वे दृष्टान्तमाह—यथेति । तटस्थ-

यज्ञकर्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतो यज्ञविद्याकुशलः ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता। तद्वच्च कार्यकरणव्यापारेष्वव्यापृतोऽन्यस्तद्विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टोपद्रष्टा। अथ वा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारः, तेषां बाह्यो देहः, तत आरभ्यान्तरतमश्च प्रत्यक्समीपे आत्मा द्रष्टा यतः परोऽन्तरतमो नास्ति द्र

स्समीपस्थः। यज्ञकर्मस्वव्यापृत इति यावत्। क्रियानन्वयित्वं हि तटस्थत्वम्। तटस्थशब्दार्थं स्वयमाह—अव्यापृत इति।

यद्वा समीपस्थत्वमात्रमेव तटस्थत्वमिह विवक्षितं, ततो नाव्यापृतपदस्य पुनरुक्तिः। यज्ञदर्शनार्थमागतस्यालोकजनस्याज्ञस्य व्यावृत्तये आह—यज्ञेति। ऋत्विजो यजमानस्य च ये व्यापारास्तद्वर्तमानानां गुणानां दोषाणां चेक्षिता ज्ञाता। एवंविधो यथा यज्ञकर्मण्युपद्रष्टा तद्वत्प्रकृतमाह—कार्येति। अन्यः कार्यकरणेभ्यः ऋत्विग्यजमानस्थानीयेभ्यः परः। तेभ्यः कार्यकरणेभ्यो विलक्षणः सामीप्येन समीपस्थित्येत्यर्थः। द्रष्टा साक्षात्कर्ता। कार्यकरणेषु कर्मसु व्यापृतेषु सत्सु स्वयं समीपस्थस्सन् तत्सर्वं साक्षात्करोतीत्यर्थः। सूर्यस्सव्यापारं जगदिवेति भावः।

अर्थान्तरमाह—अथवेति, तेषामिति। मध्य इति शेषः। तत आन्तरं द्रष्टृ चक्षुः, तत आन्तरतरं मनः, तत आन्तरतमा द्रष्ट्री बुद्धिः, ततोऽप्यतिशयेनान्तरतमः प्रत्यगात्मा। न तस्यान्तरोऽस्त्यन्तः तस्यैव सर्वान्तरत्वात्। न चान्तर्यामीश्वरोऽस्तीति वाच्यं, 'एष त आत्मान्तर्याम्यमृतः' इति प्रत्यगात्मन एवान्तर्यामित्वात्। न चात इति प्रतीचो निर्देश इति वाच्यं, प्रमातृवाचित्वात्तस्य। प्रमातुर्हि स्वस्वरूपं प्रत्यगिति तस्यात्मत्वेन व्यपदेशः। तस्मादन्तर्यामिब्राह्मणं सर्वमपि प्रत्यगात्मपरमेव। परमात्माभिन्नत्वाच्च प्रत्यगात्मनः। एवं सर्वान्तरत्वादेव प्रत्यगात्मनस्समीपद्रष्टृत्वादुपद्रष्टृत्वम्। नच कस्य समीप इति वाच्यं, स्वस्यैवेति। आत्मा ह्यात्मानो निरतिशयसमीपस्थः। स्वेन स्वस्य नित्यासत्वेन दूरस्थत्वासम्भवात्। नच स्वस्यैव कथं स्वसमीपस्थत्वमिति वाच्यं, अरोपात्। स्वस्मिन् स्वसमीपस्थत्वं ह्यारोप्यते। ममात्मा सन्निहित इति व्यवहारात्। प्रत्यगपेक्षया तु बुद्धिः किञ्चिद्दूरस्था- अनात्मत्वात्तस्याः। तदपेक्षया मनः पुनः किञ्चिद्दूरस्थं- बुद्ध्या व्यवधानात्। तदपेक्षया चक्षुर्दूरस्थं- मनोबुद्धिद्वयव्यवधानात्। तदपेक्षया देहोऽतिदूरस्थः- मनोबुद्धिचक्षुस्त्रयव्यवधानात्। तदपेक्षया घटादयो यद्यपि दूरस्थास्तथापि न ते द्रष्टारः, किंतु दृश्या एव। यद्यपि बुद्ध्यादयोऽपि दृश्या एव, तथापि तेषां द्रष्ट्रात्मतादात्म्याध्यासाद्द्रष्टृत्वसम्भवः। ब्राह्मणोऽहं जानामि, घटं पश्यामि, अहमिदं मनोमि, अहमिदं निश्चिनोमीत्येवं प्रतीतेः। चक्षुश्शब्दश्च ज्ञानेन्द्रियपञ्चकोपलक्षणार्थः। अहं शृणोमीत्येवं श्रोत्रादेरपि द्रष्टृत्वप्रतीतिदर्शनात्।

ननु मनोबुद्ध्योरेकान्तःकरणात्मकयोः कथमन्तर्बहिर्भाव इति चेदुच्यते—मनोमयकोशाद्विज्ञानमयकोशस्यान्तरत्वेन श्रुतिप्रतिपादनात्। न च प्राणमयानन्दमयकोशयोः कस्मान्नेह ग्रहणमिति

सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात्। यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा। अनुमन्ता चानुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्ताऽनुमन्ता च। अथ वा अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता। अथ वा प्रवृत्तान्स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता। भर्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां

---

वाच्यं, तयोर्द्रष्टृत्वप्रतीत्यदर्शनात्। नच श्रुतावपि मनोमयाद्विज्ञानमयकोशस्य बुद्धेरान्तरत्वप्रतिपादनं कुत इति वाच्यं, सङ्कल्पपूर्वकत्वान्निश्चयस्य। पूर्वं सङ्कल्प्य हि पश्चान्निश्चिनोति। एवं निश्चयस्य सङ्कल्पादान्तरत्वादूबुद्धेरान्तरत्वम्। निश्चयात्मिका हि बुद्धिः, सङ्कल्पात्मकं हि मनः। एवं देहादि-बुद्ध्यन्तसर्वद्रष्टॄनन्तरत्वादात्मन उपद्रष्टृत्वम्। अर्थान्तरमाह—यज्ञेति। उपद्रष्टृशब्दोऽत्र तत्सदृशे लाक्षणिकः। सिंहो माणवक इत्यत्र सिंहशब्दवत्। तथाच उपद्रष्टा यज्ञे प्रसिद्धः तत्तुल्यत्वादात्मा-प्युपद्रष्टेत्युच्यते। उपद्रष्टृतुल्य इत्युपद्रष्टृशब्दस्य पर्यवसन्नार्थः। आत्मन उपद्रष्टृतौल्यं च प्रागेव प्रतिपादितम्।

तदेव संक्षेपेण पुनराह—सर्वेति। सर्वेषां कार्यकरणतद्व्यापाराणामन्यत्र ऋत्विग्यजमानव्यापा-राणां विषयीकरणं साक्षात्कारः तस्मात्सर्वविषयीकरणात्। अयं हेतुरथवेति पक्षान्तरेऽप्यन्वेति। सर्वेषां देहादिबुद्ध्यन्तानां द्रष्ट्राभासानां दृश्यानां विषयीकरणाद्दर्शनादिति। सर्वथापि साक्षित्वमुप-द्रष्टृत्वमिति सिद्धम्। एवमुपद्रष्टृशब्दं व्याख्यायाथानुमन्तृशब्दं व्याख्याति—अनुमन्ता चेति, कुर्वत्स्विति। अन्येषु क्रियाः कुर्वत्सु सत्स्वित्यर्थः। तत्क्रियासु विषय इति विषयसप्तमी। परितोष-स्सन्तोषः। तत्कर्ता अनुमननकर्ता। कार्यकरणादिषु कर्मव्यापृतेषु सत्सु स्वयमकुर्वन्नपि कृतकृत्य इव तृप्यतीत्यर्थः। नित्यतृप्तत्वादात्मन आनन्दरूपत्वाच्चेति भावः। नचैवं तेष्वकुर्वत्सु सत्स्वपरितोष आत्मन इति वाच्यं, आनन्दरूपे आत्मनि दुःखहेतोरपरितोषस्यायोगात्। कार्यकरणानां देहेन्द्रियमनसां प्रवृत्तयो व्यापाराः गमनदर्शनमननादयस्तासु कार्यकरणप्रवृत्तिषु तदनुकूलस्तत्प्रवृत्त्यनुकूलः विभाव्यते ज्ञायते। तेन तथाविभावनेन हेतुना। स्वव्यापारेष्विति। कार्यकरणानां ये नियतव्यापारास्तेष्वित्यर्थः। प्रवृत्तान् कार्यकारणात्मकान् कर्तॄनिति भावः। न निवारयतीति। नच प्रेरयतीति शङ्क्यम्। प्रवृत्तेस्तेषां स्वाभाविकत्वेन परप्रेरणायोगत्। आत्मनश्चोदासीनस्य प्रेरकत्वासम्भवाच्च।

भर्ता भरणकर्ता। किं तद्भरणं यत्कर्तृत्वेनात्मा भर्ता स्यादत आह—भरणं नामेति। देहेन्द्रियमनोबुद्धीनां स्वरूपधारणं भरणं, देहादीनि स्वस्वरूपं स्वयं धर्तुं न क्षमन्ते, किं त्वात्मानुग्रहा-देव। आत्मानुग्रहश्चात्मचैतन्यस्य देहादिषु प्रतिफलनं देहादीनां स्वरूपं च चैतन्याभासः। चेतनव-दाभासन्ते हि देहादयः। तदेतदाह—देहेति। संहतानामन्योन्यं मिलितानां देहेन्द्रियमनोबुद्धीनां यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेत्यन्वयः। कीदृशानां देहादीनामत आह—चैतन्याभासानामिति।

यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेति भर्ताऽऽत्मा इत्युच्यते । भोक्ता- अग्न्युष्णवन्नि
चैतन्यस्वरूपेण बुद्धेस्सुखदुःखमोहात्मकाः प्रत्ययास्सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जाय
माना विभक्ता विभाव्यन्त इति भोक्ताऽऽत्मा उच्यते । महेश्वरस्सर्वात्मत्वात्स्वतन्त्र

चैतन्यस्याभासः प्रतिफलनं यासु तसां तथोक्तानाम् । किं तत्र निमित्तमत आह—चैतन्येति । पारमा
परमार्थसता निमित्तभूतेन चैतन्यात्मना चैतन्यस्वरूपेणेति । मुखं मुकुरस्थप्रतिमुखस्येव पारमार्थिक
चैतन्यं देहादिगतात्मचैतन्याभासस्य निमित्तमित्यर्थः । देहादिस्वरूपभूतचैतन्याभासस्य बिम्बभूत
चैतन्यनिमित्तकत्वाद्देहादिस्वरूपधारणरूपभरणकर्ता आत्मेति फलितार्थः । आत्मचैतन्यप्रतिफलनवश
देहादयश्चेतनवदाभासन्त इति कृत्वा देहादीनां चेतनीकरणरूपं भरणमात्मायत्तमेवेति भर्तृत्वमा
इति भावः ।

ननु उपाधेर्दर्पणस्य यदि मुखाभासः स्वरूपं स्यात् तदा देहाद्युपाधीनां चैतन्याभासः स्व
स्यात् । नतु तथास्ति । ततः कथमुक्तं देहादीनां चैतन्याभासः स्वरूपमिति चेदुच्यते—केवल
जस्य मृदात्मकस्य मुखाभासस्वरूपाभावेऽपि साभासदर्पणस्य मुखाभासस्स्वरूपमेव । मृदंशस्येवाभासा
दर्पणे दर्शनात् । आभासस्थले मृदंशादर्शनाच्च । तत्रापि मृदंशदर्शने आभासाभावप्रसङ्गात् ।
साभासानां देहादीनामाभासः स्वरूपमेव । चेतनोऽहं मनुष्य इत्यादिव्यवहारेण मनुष्यदेहादेश्चे
तत्त्वोपलम्भात्तस्य च चैतन्यस्य चैतन्याभासरूपत्वाच्चेति । नहि स्वप्रतिफलितचैतन्यस्य स्वस्वरू
नाग्रहणे चेतनोऽहं मनुष्य इत्यादिव्यवहार उपपद्यते । नच चेतनोऽहं मनुष्य इति व्यवहर्तोऽ
कथमीदृशं ज्ञानमिति वाच्यं, आत्मचैतन्याभासवानहं मनुष्य इति ज्ञानाभावेऽपि चेतनोऽहं म
इति ज्ञानसत्त्वात्तदभिमतमनुष्यचैतन्यस्य च चैतन्याभासरूपत्वादिति । बालाः खलु दर्पणप्रतिफलि
मुखाभासं मुखत्वेनैव गृह्णन्ति । किं तावता प्रतिबिम्बस्य बिम्बत्वं स्यात्? तस्मादज्ञा देहादि
चैतन्यं स्वरूपचैतन्यमेव मन्यन्ते । वस्तुतस्तु तत्प्रतिफलितचैतन्यमेवेति देहादिगतचैतन्याभासस्य
चैतन्यनिमित्तकत्वाद्देहादिस्वरूपभूतचैतन्याभासधारणमात्मनस्सम्भवत्येवेति युक्तमुक्तमात्मा भर्तेति ।

यद्वा साभासानां देहादीनां यत्स्वरूपं तस्य धारणमात्मकृतमेव । आत्मसत्तास्फुरणानुगमं
देहादिस्वरूपस्य सत्तास्फूर्तिलाभात् । तस्मात्स्वसत्तया स्फुरणेन च देहादीन् संहतान् साभा
बिभर्तीति भर्तायमात्मा । चैतन्यात्मपारार्थ्येनेति पाठे तु देहादीनां चैतन्याभासत्वं चैतन्यात्मपारा
निमित्तेन जातमिति । अयमाशयः—लोके चैतन्यत्वेनाभिमता देहादयः न चेतनाः- चैतन्यात्मपा
त्वात् । नहि देवदत्तपरार्थस्य घटस्य चेतनत्वं दृष्टं लोके । नहि घटो जलादिकं स्वार्थं बिभर्ति,
पुरुषार्थमेवेति सर्वमपि परार्थं वस्तु जडमेव । नच परश्चैतन्यात्मैक एवेति देहादयश्चैतन्यात्मपा
एव । आत्मनस्सुखदुःखादिभोगावच्छेदकत्वाद्देहादीनामेवं सति देहादीनां चैतन्यमाभासमात्रमेव
तत्स्वरूपधारणमात्मकृतमेव । भोक्तेति । बुद्धेर्जायमानास्सर्वविषयविषया विभक्तास्सुखदुःखमोहात्म

महानीश्वरश्चेति महेश्वरः । परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पिताना-

चैतन्यात्मग्रस्ता इव स्थिताः प्रत्यया अग्न्युष्णवन्नित्यचैतन्यस्वरूपेण विभाव्यन्त इति हेतोरात्मा भोक्तेत्युच्यत इत्यन्वयः । बुद्धेस्सकाशाज्जायमाना उत्पद्यमानास्सर्वे विषयास्स्रक्चन्दनरोगादयो विषया येषां ते तथोक्ताः । इष्टानिष्टविषयप्राप्त्यादिजन्या इत्यर्थः । विभक्ताः परस्परमसंकीर्णाः सुखादिस्वरूपाः प्रत्यया वृत्तिज्ञानानि । चैतन्यात्मना चैतन्यस्वरूपेण स्वरूपचैतन्येनेति यावत् । ग्रस्ता इव गिलिता इव स्थिताः । चैतन्याभासरसविद्धत्वाद्वृत्तीनां गिलितत्वोत्प्रेक्षेयम् । अत एव वृत्तीनां जडानामपि ज्ञानत्वेन व्यवहार इति भावः । अग्नेरुष्णवदात्मनस्स्वरूपभूतं नित्यचैतन्यं तेन विभाव्यन्ते ज्ञायन्ते । साक्षिचैतन्येनैव वृत्तीनामवभास्यमानत्वात् । घटादीनामिव सुखादिवृत्तीनामपि वृत्त्यन्तरभास्यत्वाऽभ्युपगमेऽनवस्थादोषप्रसङ्गात् । अविद्यान्तःकरणादिवद्वृत्तयस्साक्षिभास्या एव । अग्न्युष्णवदिति दृष्टान्तेन चैतन्यमात्मन एव स्वरूपं, बुद्ध्यादेस्तु- अग्नितादात्म्याल्लोहादेरिव आत्मतादात्म्याध्यासप्रयुक्तमिति गम्यते । साभाससुखादिबुद्धिवृत्तिसाक्षात्कारादात्मनो भोक्तृत्वमिति फलितार्थः । एतेन सुखादिभोगस्तत्प्रयुक्तो विकारो वा बुद्धेरेव, नत्वात्मन इति सिद्धम् । एतद्बुद्धितादात्म्याध्यासात्तत्पूर्वकबुद्धिधर्माध्यासाच्चात्मनस्संसारित्वं, नतु स्वत इति भावः । 'साभासबुद्धेः कर्तृत्वमवच्छिन्नेऽविकारिणि । साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽबुधै'रिति स्मृत्यन्तराच्च । जीवत्वं संसारित्वमित्यर्थः । बुद्धिधर्मस्तदिति भावः । नच उपद्रष्टृभोक्तृपदयोः पुनरुक्तिस्साक्षित्व एव पर्यवसानात्तद्द्वयस्येति वाच्यं, कार्यकरणतद्व्यापारद्रष्टृत्वेन, बुद्धिवृत्तिद्रष्टृत्वेन च भेदात् । सर्वान्तरतमद्रष्टृत्वेन, बुद्धिवृत्तिद्रष्टृत्वेन वा भेदात् । एकस्यैव साक्षित्वस्य विषयभेदाद्द्वेधा निर्देशोऽपि न पुनरुक्तिरिति भावः ।

**महेश्वर इति** । स्वतन्त्रस्य राजादेरीश्वरत्वं तावत्प्रसिद्धमिति स्वातन्त्र्यमेवेश्वरत्वम् । तेऽपि राजादय ईश्वरा दैवादिपरतन्त्रा एवेति न महेश्वराः । यस्मादधिको नास्त्यन्य ईश्वरः, यस्य वा नास्तीश्वरो नियामको स हि महेश्वरः । ब्रह्मादयोऽपि कालादिपरतन्त्रा एवेति न महेश्वराः, किं तु पुरुष एक एव महेश्वरः । न चास्य नियामकः कश्चिदस्ति सर्वात्मत्वादस्य । एक एव हि पुरुषः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तेषु सर्वक्षेत्रेषु वर्तत आत्मत्वेन सर्वेषां भूतानामात्मनि कल्पितत्वेन कल्पितानामधिष्ठानरूपत्वेन च सर्वभूतानामधिष्ठानभूतो हि सर्वात्मा पुरुषः ।

नच कथमन्तःकरणोपहितत्वेन परिच्छिन्नस्य पुरुषस्य सर्वाधिष्ठानत्वमिति वाच्यं, अन्तःकरणस्यापि पुरुषे कल्पितत्वेन तस्य कल्पितान्तःकरणस्य पुरुषपरिच्छेदकत्वासम्भवात् । परिच्छिन्नं हि पुरुषमन्तःकरणं परिच्छेत्तुं न क्षमते- पुनरुक्त्यादिदोषात् । किं त्वपरिच्छिन्नमेव । अपरिच्छिन्नस्य च तस्य वस्तुतोऽन्तःकरणपरिच्छेदासम्भवात्कथं परिच्छिन्नत्वं पुरुषस्य ? तस्मादपरिच्छिन्न एव पुरुषेऽन्तःकरणादिकं सर्वं जगत्कल्पितमिति सर्वाधिष्ठानत्वं पुरुषस्य सिद्धम् । अत एवास्य प्रत्यगात्मनोऽपि परमात्मत्वमिहैवोच्यते- 'परमात्मेति चाप्युक्त' इति ।

मविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा । सोऽन्तः 'परमात्मे'त्यनेन श

---

**ननु** कूटस्थे व्यष्टिदेहादिरध्यस्तः, परमात्मनि तु सर्वं जगदिति पूर्वमुक्तं त्वयेति । **दोषः**—कूटस्थपरमात्मनोरन्तःकरणोपहितत्वमायोपहितत्वरूपकल्पितभेदमाश्रित्य तथोक्तत्वात् । मन्यथा तत्त्वमस्यादिना कूटस्थपरमात्माभेदः प्रतिपाद्येत ?

**ननु** किं भिन्नयोः कूटस्थपरमात्मनोरभेदः प्रतिपाद्यते, उताभिन्नयोः ? नाद्यः- भिन्न रभेदासम्भवात् । नान्त्यः- अभेदे कूटस्थपरमात्मनोरिति भेदेन निर्देशायोगादिति चेत्, मैवम् एकस्मिन्नेवात्मनि लौकिकैस्तार्किकादिभिश्च प्रसञ्जितस्य कूटस्थपरमात्मत्वरूपभेदस्य तत्त्वमसील निरस्यमानत्वादिति । एवं सर्वात्मत्वादेव स्वतन्त्रत्वं च पुरुषस्य । सति हि परवस्तुनि तत्त स्यात्पुरुषस्य । तदेव नास्ति- पुरुषात्मकत्वात्सर्वस्य । सच्चिदानन्दरूपपुरुषस्य सर्वस्मात्पृथक्करणे तन्तोरिव सर्वस्यैवाभावप्रसङ्गात्पटाभावप्रसङ्गवत् । अत एव तन्तुपरतन्त्रपटवत्सर्वमपि पुरुषपरतन्त्रमे तस्मात्पुरुष एव महेश्वर इत्याह सर्वात्मत्वादित्यादिना—**परमात्मेति** । परम उत्कृष्टश्चासावात्मे परमात्मा ।

**ननु** किमयमात्मनां मध्ये उत्कृष्ट आत्मा ? उतानात्मनां मध्ये ? नाद्यः- अनेकात्माभावा नान्त्यः- अनात्मनां मध्येऽनात्मन एव कस्यचिन्निर्धारणीयत्वेनात्मनिर्धारणायोगात् । न हि मनुष्या मुत्तमस्सुर इति वक्तुमुचितम् । अत आह—**देहादीनामिति** । अविद्यया प्रत्यगात्मत्वेन कल्पित देहादीनामव्यक्तान्तानां मध्ये परम इति । अज्ञानाद्बौद्धादयः केचिद्देहमेवात्मानं मन्यन्ते, के दिन्द्रियाणि, केचित्प्राणं, केचिन्मनः, केचिद्बुद्धिं, प्राज्ञास्तु देहादिविलक्षणमेव प्रत्यञ्चमित्येवं भि अज्ञप्राज्ञाभ्यामात्मत्वेन गृह्यमाणानां देहेन्द्रियमनोबुद्धिपुरुषाणां मध्ये पुरुषस्य परमत्वं निर्धा परमात्मेतिशब्देनेति । अव्यक्तशब्दोऽत्र बुद्धिपरः । प्रकृतेस्साक्षादात्मत्वेनाग्रहणात् । यदि काणोऽ मितिवदज्ञोऽहमित्यात्मनीन्द्रियधर्मवत्प्रकृतिधर्मस्याध्यासः धर्म्यध्यासं सूचयतीत्यात्मनि प्रकृत्यध्यासोऽ स्तीत्युच्यते, तर्ह्यव्यक्तशब्दः प्रकृतिपर एव ।

**वस्तुतस्तु** अव्यक्तशब्दोऽत्र प्रत्यगात्मपर एव- करणागोचरत्वलक्षणाव्यक्तत्वस्यात्मनि द तत्वात्- 'अव्यक्तोऽक्षर उच्यत' इत्युक्तत्वात् । एवमव्यक्तशब्देन पुरुषग्रहणे सत्येव निर्धारणमुपप पुरुषस्य । कथमन्यथा देहादीनामनात्मभूतानां मध्ये निर्धारणं स्यादात्मनः ? देहादिमध्ये तस सत्त्वात् । यद्येवं तर्हि प्रत्यगात्मत्वेन कल्पितानामित्यस्य कथमव्यक्ते समन्वयः पुरुषे इति चे **दोषः**—छत्रिणो गच्छन्तीतिवल्लक्षणयाऽकल्पितेऽपि पुरुषे तदन्वयात् । यद्वा प्रत्यगात्मसहितानामि शेषः । ततश्च देहादयो बुद्धिपर्यन्ता ये कल्पितात्मानः, यश्च कल्पितः प्रत्यगात्मा तेषां सर्वेषां म प्रत्यगात्मा परम इति । सत्यसर्पमिथ्यासर्पयोर्यथा सत्यसर्प उत्कृष्टस्तथाऽकल्पितात्मकल्पितात्मनोर्म अकल्पितात्मोत्कृष्ट इति भावः । किंलक्षणोऽयमकल्पितात्मेत्यत आह—**उपद्रष्टृत्वादिलक्षण** इति

**चाप्युक्तः कथितश्श्रुतौ । कासौ ? अस्मिन्देहे पुरुषः परोऽव्यक्तात्, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धीत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥२२॥**

---

यद्वा कुतः प्रत्यगात्मनः परमत्वमत आह—**उपद्रष्टृत्वेति** । हेतुगर्भमिदं विशेषणम् । तथा चोपद्रष्टृत्वादिलक्षणवत्त्वात्परमः पुरुष इत्यर्थः । देहादयस्तु दृश्यत्वविकारित्वप्रमुखासल्लक्षणत्वादनुत्कृष्टा इति भावः । स पुरुष इत्यर्थः । कुत्रोक्तोऽत आह—**श्रुताविति** । श्रुतिमेव दर्शयति—**अन्यःपरमात्मेति** । श्लोकस्थेतिशब्दार्थमाह—**अनेन शब्देनेति** । श्रुतिसिद्धत्वादयमर्थस्सर्वैरास्तिकैर्ग्राह्य इति भावः । किं चोक्त इत्यनेन कर्तुरीश्वरस्याक्षेपः । येनेश्वरेण वेदे प्रोक्तस्सोऽयमर्थस्तेनैव गीतायामप्युच्यत इति भावः । देहपदान्वयायाकांक्षामुद्भावयति—**कासाविति** । असौ पुरुषः कास्तीत्यर्थः । **देहेऽस्मिन्निति** । अस्मिन् दृश्यमाने मनुष्यपश्वादिलक्षणे देहे । जात्येकवचनं सर्वक्षेत्रेष्वित्युपक्रमे प्रोक्तत्वात् । वर्तमान इति शेषः । यद्वा कासावुपलभ्यत इति शेषः । अस्मिन्देहे बुद्ध्यादिसाक्षित्वेनोपलभ्यमान इत्यर्थः । 'मनीषिणोऽन्तर्हृदि सन्निवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः । वह्निं यथा दारुषु पाञ्चदश्यं मनीषया निष्कर्षन्तीह गूढ'मिति भागवतात् । इह देह इत्यर्थः । एतेन सर्वव्यापिनः पुरुषस्य कथं देहेऽस्मिन्नित्युक्तिरिति शङ्का परास्ता । **पर इति** । अन्य इत्यर्थः । विलक्षण इति यावत् । कस्मादित्यत आह—**अव्यक्तादिति** । प्रकृतेः परत्वे प्रोक्ते सति तत्कार्येभ्योऽपि परत्वं सिद्ध्यतीति भावः । यद्वा कार्यात्मना परिणताच्चाव्यक्तात्पर इति । कोऽसौ पुरुषोऽत आह—**उत्तम इति** । 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत' इति पूर्वार्धे, कूटस्थोऽव्यक्तम् । अन्यः क्षराक्षराभ्यां भूततत्प्रकृतिभ्यामितरः । **एतेनाव्यक्तादिति स्वेनाध्याहृतं गीतासिद्धमेवेति सूचितम्** । अतो न स्वकपोलकल्पनप्रसङ्गः । **वक्ष्यमाण इति** । पञ्चदशाध्याय इति भावः । न केवलं वक्ष्यमाणः, किं तूक्त एवापीत्याह—**क्षेत्रज्ञं चेति** । उपन्यस्त उदाहृतः । **एतेन पूर्वोत्तरग्रन्थसन्दर्भानुगुणेन मध्येऽपि स एवार्थो ग्राह्य इति सूचितम्** । ततश्च पुरुषस्याभ्याससूचितः । असकृद्वचनं ह्यभ्यासः । एवं पुरुषस्य परमात्मत्वमसकृदुक्तमिति जीवेश्वराभेद एव प्रमाणं, न तु तद्भेद इति भेदवादस्याप्रमाणत्वं सिद्धम् । यो वक्ष्यमाणो यश्चोपन्यस्तस्स एव पुरुष इह व्याख्यायोपसंहृत इति व्याख्याय प्रतिपाद्य उपसंहृत इत्यर्थः ।

**यत्तु रामानुजः**—अस्मिन्देहेऽवस्थितो यः पुरुषो देहप्रवृत्त्यनुगुणसङ्कल्पादिरूपेण देहस्योपद्रष्टाऽनुमन्ता च भवति, तथा देहस्य भर्ता देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता च भवति, एवं देहनियमनेन देहभरणेन देहशेषित्वेन च देहेन्द्रियमनांसि प्रति महेश्वरो भवति, देहेन्द्रियमनांसि प्रति परमात्मेति चाप्युक्तः, पुरुषः परोऽपरिच्छिन्नज्ञानशक्तिः, अनादिप्रकृतिसम्बन्धकृतगुणसङ्गादेतद्देहमात्रमहेश्वरो भवति, देहमात्रपरमात्मा च भवतीति, **तदेतत्सर्वमतितुच्छम्**—स्थूलदेहप्रवृत्त्यनुगुणसङ्कल्पस्य सूक्ष्मदेहभूतमनोधर्मत्वेन पुरुषस्य सङ्कल्पायोगात् । न ह्यन्यधर्मोऽन्यस्य सम्भवति विनाऽ-

ध्यासात्। स चाध्यासस्त्वया नाङ्गीकृत एव, परमेश्वरस्यापि स्वाभाविकमेवेक्षणमिति वदसि हि। किं पुनर्जीवस्य। यदि जीवस्य सङ्कल्पस्स्वाभाविक एव स्यादग्न्युष्णवत्तर्हि सुषुप्तावपि स दृश्ये मूर्छादिष्वपि दृश्येत। नतु तथा दृश्यते। तस्मान्न पुरुषधर्मस्सङ्कल्पः। तथा सुखदुःखभोगस्य धर्मत्वेन न पुरुषस्य सुखदुःखभोक्तृत्वं संसारलक्षणं सम्भवति। 'अविकार्योऽयमुच्यत' इति ह्युक्तं तत्कथमस्य विकारस्स्यात्सुखादिभोगरूपः ?

नच गुणसङ्गाद्भवतीति वाच्यं, 'असङ्गो ह्ययं पुरुष' इति श्रुत्युक्तासङ्गपुरुषस्य गुणसङ्गा वात्। तथा प्रकृतिसङ्गोऽपि नार्ह आत्मनः। अस्मन्मते तु सङ्गस्य मिथ्याभूतत्वादात्मनि पत्तिः। त्वं हि सङ्गं सत्यं ब्रवीषि, त्वादृशो हि विद्वांसः पुरुषगतेश्वरत्वस्य सङ्कोचं सम्भावये मत्वैव भगवता बादरायणेन महेश्वरशब्दः प्रयुक्तः। तथापि यदि सङ्कोचं त्वं ब्रवीषि देहादीन महेश्वर इति कस्तर्हि तव शासिता ? एवं महच्छब्दस्यानर्थक्यसम्पादनेन स्फुटं तव मूलच्छेदापत्ति 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्रुतिसंवादी हि महेश्वरशब्दस्यात्र प्रयो देहेन्द्रियमनांसि प्रतीति कथं मूलाद्बहिः कल्पनं तव ? ईश्वरे योगरूढयोर्महेश्वरपरमात्मशब्दयो जीवेश्वरभेदे कथं प्रयोगस्स्याज्जीवविषयः ? देहमात्रमहेश्वर इति देहमात्रपरमात्मेति च किं गीता कापि प्रयोगोऽस्ति ? येन तदनुरोधेन महेश्वरपरमात्मशब्दयोस्तादृशार्थकथनं युज्येत।

किंच कर्माधीनकरणप्रवृत्तेरस्य जीवस्य संसारिणः कथं देहमात्रं प्रत्यपीश्वरत्वम् ? व्याधि हि पदमपि चालयितुं न क्षमते। यदि देहस्वतन्त्रस्स्यात्तर्हि कथं सर्वेऽपि जीवा देहं परित्यज्य प्रेमास्पदं गच्छेयुः कालवशाद्यमलोकादिकम् ? तस्मात्कालकर्मादिपरतन्त्रे देहे न स्वातन्त्र्यं जीव एवं देहमात्रं प्रत्यपीश्वरत्वस्यैवासिद्धौ कुतः पुनर्महेश्वरत्वसिद्धिः पुरुषस्य ? 'देहः किमन्नदातुः निषेक्तुर्मातुरेव' चेति हि भागवते स्मर्यते। अन्नदातृपितृमातृभार्याराजशुनकाग्न्यादयो हि बहव देहस्येश्वराः। यस्य पुनरज्ञस्यैतद्देहेऽहममिमानस्सोऽप्यन्नदात्रादिपरतन्त्र एव। भृत्यादीनां राज पारतन्त्र्यस्य दर्शनात्। देहस्य राजचोदितक्रियाकारित्वेन हि भृत्यस्य राजपारतन्त्र्यम्। तस्माद्दे स्वाभिमानेन जीवमपि परतन्त्रयति तद्देहे कथं जीवस्य स्वातन्त्र्यम् ? जीवस्य गमनादिसङ्कल्पे स्वातन्त्र्यं- कर्माधीनत्वात्सङ्कल्पस्य। नहि कोऽपि स्वानिष्टं संसारं स्वेच्छया सङ्कल्पयेत्। 'स्मृतिर्ज्ञानमपोहनं च' इति स्मरणादीनां भगवदायत्तत्वं च वक्ष्यति भगवानेवेहैव। एवं संसा जीवस्य क्वचिदपि स्वातन्त्र्याभावादेव ह्यनीश्वरत्वमुच्यते- 'ज्ञाज्ञौ द्वावजावीशनीशौ' इति। यस्त्वसंसारी जीवः प्राज्ञस्स सर्वं प्रत्यपीश्वर एवेति कथं तस्य देहमात्रेश्वरत्वं वक्तुं शक्यते ? न च मीश्वरं प्रत्यपि जीवस्येश्वरत्वमिति वाच्यं, ईश्वरस्यैव जीवत्वात्। उक्तं हि- 'क्षेत्रज्ञं चापि मां विद्धीति। अर्चारूपस्त्वदभिमतेश्वरस्तु जीवस्याज्ञस्यापि परतन्त्र एव। करणकलेवरादिमतां श्रीराम न दशरथादिजीवाज्ञापरिपालकत्वेन तत्पारतन्त्र्यं प्रसिद्धमेव। यः पुनरीश्वरस्स्वान्तरोऽशरीरस्य

तमेतं यथोक्तलक्षणमात्मानम्—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥

य इति । य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेनायमहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैस्स्वविकारैस्सह निवर्तितामभावमापादितां विद्यया सर्वथा सर्व-

स्वतन्त्रस्सर्वशेषी । स च प्रत्यगात्मैव- तस्यैव सर्वान्तरत्वादिति युक्तं महेश्वरत्वं प्रत्यगात्मनः । न च प्रत्यगात्मा परमात्मपरतन्त्र एवेति वाच्यं, यः परमात्मपरतन्त्रस्सोऽज्ञः प्रमातैव, न कूटस्थः । यः कूटस्थस्स परमात्मैव न परतन्त्र इति । नचानुभवसिद्धस्य राजादिपारतन्त्र्यस्य जीवगतस्य कथमपलाप इति वाच्यं, य आत्मानं राजादिपरतन्त्रं मन्यते स देहाद्यात्माभिमानवानेव, नतु तद्विलक्षणमात्मानं वेत्ति । नहि देहादिविलक्षणस्य राजादिपारतन्त्र्यं वक्तुं शक्यते । किं सुप्तिमृतिमूर्छासु स्वस्य राजादिपारतन्त्र्यानुभवः ? किंच राजभृत्ययोः प्रमातृभेद एव न स्वात्मभेदः । आत्मनस्सर्वैकत्वादिति कथमात्मनः पारतन्त्र्यप्रसक्तिरेकस्याद्वितीयस्य ब्रह्मण आत्मनः ? नचैवमात्मनोऽपरतन्त्रत्वेऽपि न सर्वं प्रति स्वातन्त्र्यमिति वाच्यं, आत्मनश्चेतनत्वादन्यस्य च जडत्वाज्जडस्य च चेतनपारतन्त्र्यस्य सर्वविदितत्वादिति । एवमात्मनोन्यस्य तत्समस्य तदधिकस्य वा अभावात्सर्वं प्रत्यात्मा परमात्मैव, नतु देहमात्रंप्रति । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः । नच श्रुतिरीश्वरपरेति वाच्यं, ईश्वरस्यैवात्मत्वादिति संक्षेपः ॥२२॥

य इति । य एवं पुरुषं गुणैस्सह निवर्तितामिति शेषः । प्रकृतिं च वेत्ति स सर्वथा वर्तमानोऽपि भूयो नाभिजायते । कथं पुरुषस्य वेदनमत आह—साक्षादात्मभावेनेति । तदेवाभिनीय दर्शयति—अयमहमस्मीति । अयं प्रत्यगभिन्नः परमात्मा पुरुषोऽहमस्मीत्यर्थः । 'अहं ब्रह्मास्मीति, अयमात्मा ब्र'ह्मेति च श्रुतेरिति भावः । कृतात्मसाक्षात्कार इत्यर्थः । अयं घट इति यथा घटमपरोक्षीकृतवांस्तथा स्वात्मानमप्ययमहमस्मीति साक्षात्कृतवानिति यावत् । कया निवर्तितामत आह—विद्ययेति । विद्यया ब्रह्मात्मसाक्षात्कारेण । सत्यात्मसाक्षात्काररूपसूर्योदये सकार्यमविद्यालक्षणं तमो निवर्तत इत्यर्थः । नच नाशमापादितायाः प्रकृतेः कथं ज्ञानमिति वाच्यं, निवृत्तप्रकृतेः ज्ञानाविषयत्वेऽपि प्रकृतिनिवृत्तेर्ज्ञानविषयत्वेन तथोक्तत्वात् ।

ननु गुणैस्सह प्रकृतिं वेदेत्येव मूले स्थितत्वान्निवर्तितामिति पदाध्याहारो निर्मूलत्वादप्रमाण इति चेत्, मैवम्—सत्यात्मसाक्षात्कारे वेद्यानां प्रकृतितद्गुणानामभावेन तद्दर्शनासम्भवात् । आत्मसाक्षात्कार एव हि प्रकृतितत्कार्यानुभवात्मकसंसारस्यावधिः । यथा सूर्यसाक्षात्कारो निशायास्तत्कार्यपिशाचादीनां च दर्शनस्यावधिः । आत्मसाक्षात्काररूपविद्यावस्थायां हि- 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दिति श्रुत्या सर्वद्वैतदर्शनाभावः प्रतिपादितः । तस्मान्निवर्तितामिति पदमवश्यमध्याहर्तव्यमन्यथाऽर्थानुपपत्तेः । स इति । य आत्मसाक्षात्कारनिवृत्ताज्ञानतत्कार्यस्स इत्यर्थः । न च

प्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभि
नोत्पद्यते, देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात्किमु वक्तव्यं स्ववृत्तस्थो न
इत्यभिप्रायः ।

---

कृतात्मसाक्षात्कार इत्यनेनैव निवृत्ताज्ञानत्वस्य लाभात्प्रकृतिं च गुणैस्सहेत्युक्तिर्व्यर्थेति वाच्यं, आत्मसा
त्कारानन्तरमपि प्रकृतितत्कार्यसद्भावशङ्का कस्यचित्स्यादिति तन्निरासाय तद्वचनात् । अथ वा,
साक्षात्कारो द्विविधः- परोक्षोऽपरोक्षश्चेति । तत्र परोक्षात्मज्ञानान्न प्रकृत्यादिनिवृत्तिः, किं त्वपरो
साक्षात्कारादेवेति कृत्वा य एवं वेत्ति पुरुषमित्यनेनापरोक्षात्मसाक्षात्कार एव विवक्षित इति
प्रकृतिं च गुणैस्सहेत्युक्तम् । **सर्वप्रकारेणेति** । स्नानसन्ध्यादिकं विहाय बालोन्मत्तपिशाचादिव
मार्गेणेत्यर्थः । 'निस्त्रैगुण्ये पथि विरचतां को विधिः को निषेध' इति शुकवचनादिति
विद्यमानो वर्तमान इत्यर्थः । मुक्तिं यास्यतीति किमु वक्तव्यमित्यन्वयः । **एतेना** विहितमार्ग
विदुषा नाऽभिनिवेशः कर्तव्य इति सूचितम् । सर्वथेत्यनेन च विहितमार्गेऽपि नाभिनिवेशः कार्य
ततश्च यथाप्रारब्धं विदुषां कार्यकरणानि देवार्चनस्नानशौचभिक्षादौ विहिते प्रवर्तन्तामथवा अवधूत
उभयथापि न विदुषः कापि क्षतिः- कार्यकरणेषु तस्याहंममाभिमानाभावादिति सिद्धम् ।

**भूयो नाभिजायते** पुनर्जन्म न प्रतिपद्यत इत्यर्थः । तदेवाह—**पतित इति** ।
प्रारब्धे विदुषश्शरीरे प्रारब्धावसानात्पतिते मृते सति अन्यो देहो देहान्तरं तस्मै । देहान्तरं परि
त्यर्थः । फलितमाह—**देहान्तरमिति** । जीवस्याजस्य ज्ञानात्प्रागपि न जन्मसम्भवः । किंपुन
त्पश्चादिति भावः ।

नन्वेवं भूयो नाभिजायत इत्ययुक्तम्—भूय इत्यनेनेतःप्राग्जन्मसद्भावसूचनादजस्य
जन्मायोगाच्चेति चेत्सत्यमत एव देहान्तरं न गृह्णातीति तदर्थ उक्तः । विद्यमाने देहे नष्टे सति
मृत इति, देहान्तरपरिग्रहे जीवो जात इति चाज्ञाः पश्यन्ति देहजन्मनाशावात्मनि । देहे जाते मृते
जीवो जातो मृत इति लोकव्यवहारदर्शनात् । इमौ चाज्ञानमूलौ जन्मनाशौ जीवस्य न स्त इत्य
जीवः । अपि तु अज्ञानवशाद्देही प्रकृतदेहं परित्यज्य देहान्तरं परिगृह्णात्यनादिकालादारभ्य त
ज्ञाने नष्टे देहान्तरं न परिगृह्णाति, ज्ञानोदयात्प्राक्परिगृहीतं देहं तु त्यजतीति । अयं च प्रकृत
त्यागस्सर्वव्यापिन आत्मनो न सम्भवत्येव, तथापि विद्वद्देहाश्रयप्राणादीनां वाय्वादिषु लयाद्वि
विद्वद्देहं विदुषात्मना त्यक्त इति लोका मन्यन्ते । यथा वा निष्प्राणं पाषाणादिकमविद्वांस आत्म
मन्यन्ते ।

नच विदुषोऽपि प्राणोत्क्रमणमस्त्येवेति कथं तल्लय इति वाच्यं, 'तत्त्वविदः प्राणा नोत्क्राम
अत्रैव समवलीयन्त' इति श्रुतेः । प्राणादिष्वात्माभिमानिनि प्रमातरि विद्यया ब्रह्मभावं गते
चैतन्याभासशून्याः प्राणादयः स्वस्वकार्येषु लीयन्त एव, नतूत्क्रमणादिषु क्षमन्ते । चैतन्याभास

नन्तु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः, तथापि प्राग्ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तानेकजन्मकृतानि तेषां च फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि, कृतविप्रणाशो हि न युक्त इति। यथा फले प्रवृत्तानामारब्ध-

---

त्वात्प्राणादीनामुत्क्रमणादिसामर्थ्यस्येति भावः। नच विद्यमानचैतन्याभासे नष्टेऽपि पुनश्चैतन्याभासान्तरं गृह्णीयुरेव प्राणाद्युपाधयः बिम्बचैतन्यस्य सर्वव्यापिनस्सन्निहितत्वादिति वाच्यं, चैतन्याभासनाशसमकालमेव प्राणाद्युपाधिनाशात्। यद्वा प्राणाद्युपाधीनां चैतन्याभासान्तरग्रहणशक्तिनाशात्। अथवा प्राणाद्युपाधिनाशानन्तरमेव चैतन्याभासस्य चैतन्येनैक्यप्राप्तिः, नाशसमकालमेवेति वा। दर्पणनाशे मुखप्रतिबिम्बस्य मुखैक्यप्राप्तिवत्। प्राणादीनामुपाधीनां लयं प्रति तु प्रारब्धनाशसहकृत आत्मसाक्षात्कारो हेतुरिति। एवं विद्वच्छरीरात्प्राणोत्क्रमणासम्भवादेव शरीरे पतित इत्युक्तं, नतूत्क्रान्तप्राण इति। शरीरस्य पतनं नाम प्राणनादिक्रियाशून्यत्वम्। मृत्पाषाणादिवदचेतनत्वेन भूमौ पतनमिति वा। तस्मादात्मसाक्षात्कारनिवृत्ताज्ञानतत्कार्यः प्रमाता ब्रह्मभावं गच्छति। 'ब्रह्मविद्ब्रह्मैव भवति', 'तरति शोकमात्मवित्' इत्यादिश्रुतेरिति स्थितम्।

नन्तु विद्यया प्रकृतितद्गुणेषु नाशमापादितेषु सत्सु कथं विदुषस्सर्वथा वर्तनं सम्भवेत्सत्सु देहेन्द्रियादिषु? कथं वा प्रकृतितद्गुणानां नाशस्सम्भवेद्विदुष इति चेन्नैष दोषः—प्रकृतितद्गुणानां नाशापादनं नामात्मैवेदं सर्वं नात्मव्यतिरेकेण किंचिदस्तीत्यनुसन्धानम्। तेन हि प्रकृतितद्गुणानामप्रतीतिः, किंतु ब्रह्मण एकस्यैव प्रतीतिः। नच प्रतीत्यभावमात्रेण कथं स्वरूपतः प्रकृतितद्गुणानां नाश इति वाच्यं, सुषुप्तौ जगतोपि प्रतीत्यभावमात्रेण नाशसम्भवात्। नहि विद्यमानमपि देहादिजगत् सुप्तपुरुषदृष्ट्या अस्ति। एवं विद्वद्दृष्ट्या नास्त्येव जगत्। सर्वथा वर्तनं च विदुषो न स्वदृष्ट्या सम्भवति, किंतु लोकदृष्ट्या। लोको हि कार्यकरणेषु व्यापृतेषु व्यापृत आत्मेति मन्यन्तेऽविद्यावशात्। एवं विदुषः प्राणोत्क्रमणाद्यभावश्च लोकदृष्ट्यैवोक्तं, नतु विद्वद्दृष्ट्या- 'अप्राणो ह्यमनाश्शुभ्र' इति न सन्ति हि विदुषः प्राणादयः। आत्मा हि विद्वान्। आत्मनि हि बन्धमोक्षादयो न सन्तीति प्रागेव बहुशः प्रतिपादितम्। तस्मादविदुषो बन्धव्यवहारवद्विदुषो मोक्षव्यवहारश्च लोकस्याविद्याकृत एव। तस्माद्विदुष आत्मनः प्रकृतितद्गुणदेहेन्द्रियादयो नैव सन्तीति कुतस्सर्वथावर्तनसम्भवः न कुतोऽपि। लोकदृष्टिमाश्रित्य तु 'सर्वथा वर्तमानोऽपि न स भूयोऽभिजायत' इत्युक्तमिति सर्वमनवद्यम्।

नन्विति। 'न स भूयोऽभिजायत' इत्युक्तमिदं वचनमयुक्तं, तेन वाक्येन हि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तः। विचार्यमाणे तु विदुषोऽपि पुनर्जन्माभावो न सम्भवति। न हि विद्योदयसमकालमेव विद्वान् शरीरं परित्यजति, किं तर्हि प्रारब्धावसान एव- 'प्रारब्धं भोगतो नश्ये'दिति शास्त्रात्, 'देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रति समीक्षत एव सासु'रिति भागवताच्च। स्वारम्भकं कर्म प्रारब्धकर्मेत्यर्थः। येन प्रकृतदेह आरब्धस्तत्कर्म प्रारब्धमित्युच्यत इति भावः। यथा सत्यपि

जन्मनां कर्मणाम् । न च कर्मणां विशेषोऽवगम्यते । तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन्; संहतानि वा सर्वाण्येकं जन्मारभेरन् । अन्यथा कृतविप्रणाशे सति सर्वत्रानाश्वासप्रसङ्गः, शास्त्रानर्थक्यं च स्यादित्यत इदमयुक्तमुक्तं- 'न स भूयोऽभिजायते' इति; न; 'क्षीयन्ते चास्य कर्माणि, ब्रह्म वेद ब्रह्मैव भवति, तस्य तावदेव चिरं, इषीकातूलवत्सर्वाणि कर्माणि प्रदूयन्त' इत्यादिश्रुतिशतेभ्य उक्तो विदुषस्सर्वकर्मदाहः । इहापि चोक्त

---

विद्यायां प्रारब्धं स्वं फलमदत्त्वा न नश्यति तथा सञ्चितकर्माण्यागामिकर्माणि च स्वं स्वं फलम नैव नश्यन्ति । इह जन्मनि पूर्वजन्मसु वा ज्ञानोत्पत्तेः प्राक्कृतानि कर्माण्यनारब्धकार्याणि सञ्चितानीत्युच्यन्ते । तेषां सञ्चितानां द्विविधत्वमिह जन्मकृतत्वेन, पूर्वजन्मकृतत्वेन च । ज्ञानोत्पत्त्युत्तरकालमिह जन्मनि कृतान्यनारब्धकार्याणि कर्माण्यागामीनीत्युच्यन्ते । अमीषां त्रिविधकर्मणाम फलप्रदत्वेन नाशो न युक्त इति त्रीणि जन्मानि स्युरेव विदुषः । नहि कृतविप्रणाशो युक्तः । कृतस्य कर्मणः फलमदत्त्वा नाशः कृतविप्रणाश इत्युच्यते । फले फलदाने । आरब्धं जन्म यैस्तेषामारब्ध जन्मनां कर्मणां, प्रारब्धानामित्यर्थः । विशेषो भेदः । आगामीनि सञ्चितानि च कर्माणि फलमदत्त्वा न नश्यन्ति प्रारब्धकर्मवत्कर्मत्वादिति कृतविप्रणाशस्यायुक्तत्वादिति वा प्रयोगः ।

त्रिप्रकाराणीति । त्रिविधानि, अतिक्रान्तानेकजन्मकृतानि, इह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतान्यनन्तरं कृतानि चेति । ननु त्रिप्रकाराणामपि कर्मणामेकस्मिन्नेव जन्मनि फलदानात् कृतविप्रणाशोऽस्तु, किमिति जन्मत्रयाभ्युपगम इति शङ्कायां सत्यमित्याह—संहतानि वेति । संहतानि कर्माणि मिलितानि भूत्वा एकं जन्मारभेरन् । ननु कृतविप्रणाशमात्रेण विदुषः पुनर्जन्मसम्भवप्रतिपादनमयुक्तमित्यत आह—अन्यथेति । तस्यैवार्थमाह—कृतविप्रणाश इति । सतीति शेषः । सर्वत्रापि यज्ञादिवैदिककर्मस्वनाश्वासप्रसङ्गो यथा नास्तिकानाम् । सत्यनाश्वासे न कोऽपि प्रवर्तेतास्तिकोऽपि । मया क्रियमाणेनानेन कर्मणा मम स्वर्गादिकं स्यादिति निश्चयपूर्विका कर्मणि प्रवृत्तिरज्ञानां वैदिकानाम् । भवत्वप्रवृत्तिः किं तत इत्यत आह—शास्त्रेति । यज्ञादिकर्तृपुरुषाभावे यज्ञादिप्रतिपादकं शास्त्रं व्यर्थमेव स्यात् । न च शास्त्रस्य वैयर्थ्यमिष्टमीश्वराज्ञारूपत्वात् । तन्न्यायेन प्रकृतगीताशास्त्रस्यापि व्यर्थत्वप्रसङ्गात् । इतिशब्दः पूर्वपक्षोपपादनसमाप्तौ । अत इति । कृतविप्रणाशस्यायुक्तत्वेन विदुषः पुनर्जन्मसम्भवादित्यर्थः । पूर्वपक्षं परिहरति—नेति । विदुषा प्रारब्धकर्मफलं भोक्तव्यं, न त्वागामिसञ्चितकर्मफलमित्ययं विशेषश्शास्त्रादेवावगम्यते । तथाहि—

श्रुतयस्तावत्- अस्मिन् परावरे परे ब्रह्मादयोऽवरे यस्मात्तस्मिन् परावरे प्रत्यगभिन्ने परमात्मनि दृष्टे साक्षात्कृते सति, अस्य साक्षात्कर्तुः कर्माणि क्षीयन्ते- फलमप्रदायैव नश्यन्ति । यो ब्रह्माहमस्मीति वेद स ब्रह्मैव भवति न तु पुनर्जन्म प्रतिपद्यत इत्येवकारार्थः । तस्य विदुषस्तावदेव देहाव्यावसानमेव चिरं विलम्बो मोक्षं प्रतीति शेषः । यावन्न विमोक्ष्ये प्रकृतिशरीरं न त्यजति ।

'यथैधां'सीत्यादिना सर्वकर्मदाहः । वक्ष्यति च । उपपत्तेश्च-- अविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तरांकुरमारभन्ते: इहापि च 'साहङ्काराभिसन्धीनि कर्माणि फलारम्भकाणि, नेतरा'णीति । तत्र तत्र भगवतोक्तम् । 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुन'रिति च । अस्तुतावद्ज्ञानोत्पत्तेरुत्तरकालकृतानां कर्मणां ज्ञानेनैव दाहः- ज्ञानसहभावित्वात् । न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानां कर्मणामतीतजन्मकृतानां च दाहो युक्तः । न, 'सर्वकर्मा'णीति विशेषणात् ।

---

शरीरपतनानन्तरं सम्पत्स्यते मुक्तिं यास्यतीत्यर्थः । इषीका मुञ्जान्तर्गतसूक्ष्मावयवस्तन्तुरूपः । तद्वत्तूलवच्च सर्वाणि कर्माणि विदुष इति शेषः । प्रदूयन्ते प्रकर्षेण विनाश्यन्ते । ज्ञानाग्निनेति शेषः । 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा' आदिपदात्-- 'ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधा' इत्यादिग्रहणम् । सर्वकर्मदाह उक्त इत्यन्वयः । वक्ष्यति च ज्ञानात्कर्मक्षयमिति भावः । उपपत्तिमेव दर्शयति—अविद्येति । अविद्याकामक्लेशा एव बीजानि चूतादिफलान्तर्गतसारांशाः । तान्येव निमित्तं येषां तानि तथोक्तानि । कर्माणि चूतादिफलस्थानीयानीति भावः । जन्मान्तररूपमंकुरमारभन्ते । जनयन्तीति यावत् । इहजन्मन्यपि साहङ्काराभिसन्धीनि- अहंकरोमीत्यहङ्कारः कर्तृत्वाभिमानरूपोऽभिसन्धिः फलाकांक्षा, तद्युक्तानि कर्माणि कृष्यादीनि फलारम्भकाणि सस्यादिफलं जनयन्ति । इतराण्यहङ्काराभिसन्धिरहितानि कर्माणि ग्रामं गच्छतस्तृणस्पर्शनादीनि फलारम्भकाणि न भवन्ति । तथाऽहङ्कारफलाभिसन्धिरहितानि विदुषः कर्माण्यपि जन्मान्तररूपफलारम्भकाणि न भवन्ति । तत्सहितान्यविदुषः कर्माण्येव जन्मान्तरमारभन्ते । यथा निर्बीजानि फलानि नांकुरमारभन्ते तथाऽविद्याकामादिरहितानि विदुषः कर्माणि पुनर्जन्म नारभन्ते । यथा सबीजानि फलान्यंकुरमारभन्ते तथाऽविद्याकामादिसहितान्यविदुषः कर्माणि जन्मान्तरमारभन्त इति फलितार्थः । इतीत्यस्योपपत्तेश्चेत्यनेनान्वयः । भगवताऽप्युपपत्तिवचनं दर्शितमित्याह—तत्र-तत्रेति । यथा अग्न्युपदग्धानि बीजानि व्रीह्यादीनि पुनर्न प्ररोहन्त्यंकुररूपेण न प्रादुर्भवन्ति नांकुरमारभन्त इति यावत् । तथा ज्ञानदग्धैः क्लेशैः क्लेशहेतुभिः कर्मभिर्निमित्तैरात्मा जीवः पुनर्न सम्पद्यते जन्म न प्राप्नोति । अग्निना बीजगतरोहणशक्तिरिव ज्ञानेन कर्मगतपुनर्जन्मप्रदानशक्तिर्दह्यत इति भावः ।

ननु ज्ञानात्प्राक्कृतानां कर्मणां साहङ्कारफलाभिसन्धिकत्वादविद्यादिमत्त्वाच्च पुनर्जन्मप्रदानशक्तिरस्त्येव, ज्ञानादनन्तरमेव हि विद्वानभिमानाभिसन्धिराहित्येन कर्माणि कुरुते, ततश्चागामिकर्मणामेव ज्ञानेन पुनर्जन्मप्रदानशक्तिनाश इत्याक्षिपति—अस्त्वित्यादिना । ज्ञानेन सह भवन्तीति ज्ञानसहभावीनि, तेषां भावस्तत्त्वं तस्माद्ज्ञानसहभावित्वात् । ज्ञानसहितत्वादित्यर्थः । ज्ञानपूर्वकत्वादिति यावत् । ज्ञानेनैव कर्मणां दाहोऽस्तु इत्यन्वयः । नत्विति । दाहो न युक्त इत्यन्वयः । ज्ञानसहभावित्वाभावादिति भावः । परिहरति—नेति । हेतुमाह—सर्वेति । 'ज्ञानाग्निस्सर्वकर्माणि भस्मसा-

ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामितिचेत्, न;- सङ्कोचे कारणानुपपत्तेः। यत्तु
'यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने
तथाऽनारब्धफलानामपि कर्मणां क्षयो न युक्त' इति, तदसत्- कथम्? तेषां मुक्ते-
ष्वप्रवृत्तिफलत्वात्। यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्ध-
क्षयात्पतनेनैव निवर्तते, एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कार-
क्षयात्पूर्ववत्प्रवर्तत एव। यथा स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तो

---

रकुरुते तथा' इति श्लोके कर्मशब्दस्य सर्वशब्देन विशेषणादित्यर्थः। सर्वाणि कर्माणीति विशे-
दिति पाठे इषीकातूलवदिति श्रुताविति बोध्यम्।

ननु ज्ञानोत्तरकालभाविकर्मणां निरवशेषत्वसिद्धये सर्वपदविशेषणमस्त्वित्याक्षिपति—ज्ञानो-
परिहरति—नेति। सर्वशब्दस्य ज्ञानोत्तरकालभाविकर्मपरत्वेन सङ्कोचे कारणं नास्तीत्यर्थः। ननु
सर्वशब्दसङ्कोचो न न्याय्यः, तर्हि प्रारब्धकर्माण्यपि गृह्यन्तां, यदि प्रारब्धकर्मग्रहणं तव नेष्टं,
तद्वत्सञ्चितकर्मग्रहणं मम नेष्टमित्याक्षिपति—यत्त्विति, उक्तमिति। यथा फले प्रवृत्तानामारब्धक-
कर्मणामित्यनेनेति भावः। सत्यपि ज्ञाने फलदानाय प्रवृत्तानि वर्तमानजन्मारम्भकाणि कर्माणि यथा न
क्षीयन्ते तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्त इति यत्तूक्तमित्यन्वयः। प्रारब्धकर्मणां
सञ्चितागामिकर्मणामपि भोगं विना क्षयो न युक्त इत्यर्थः। परिहरति—तदसदिति। कथमि-
त्याक्षिपति—कथमिति। हेतुमाह—तेषामिति। तेषां प्रारब्धकर्मणां मुक्तेषुवत्प्रयुक्तबाणानां
प्रवृत्तफलत्वात्। प्रवृत्तमारब्धं फलं यैस्तानि प्रवृत्तफलानि तत्त्वात्। दृष्टान्तं विवृणोति—यथेति।
पूर्वमादौ लक्ष्यवेधाय लक्ष्यस्य मृगादेर्वेधाय हिंसनाय धनुषस्सकाशान्मुक्तः धनुषा मुक्त इति वा ध-
धानुष्केण प्रयुक्त इति यावत्। इषुः लक्ष्यवेधोत्तरकालमपि आरब्धवेगक्षयाद्धेतोः पतनेन भुवि प-
नैव निवर्तते। मृगशरीरं भित्वा स्ववेगानुगुणं किंचिद्दूरं गत्वा वेगे नष्टे सति भुवि पततीत्यर्थः
नतु सति वेगे मृगशरीरभेदनसमकालमेव पततीति भावः। दार्ष्टान्तिकमाह—एवमिति। आसंस्का-
वेगक्षयात्संस्कारवेगनाशपर्यन्तमित्यर्थः। पूर्वेति। शरीरस्थितिप्रयोजननिवृत्तेः पूर्वं यद्ज्ञानमहं
ममेदमित्याकारकं तेन संस्कृतेनान्तःकरणेन हेतुना विदुषां ज्ञानोत्पत्त्यनन्तरं शरीरस्थित्या न किं-
त्प्रयोजनमस्ति- कर्मकरणाद्यभावात्। तथापि शरीरं न पतति- प्रारब्धकर्मावसानाभावात्। मुक्ते-
स्थानीयं प्रारब्धकर्म। लक्ष्यवेधस्थानीया शरीरस्थितिप्रयोजननिवृत्तिः। आरब्धवेगक्षयस्थानीय-
स्संस्कारक्षयः। लक्ष्यवेधोत्तरकालशरगमनस्थानीया शरीरस्थितिप्रयोजननिवृत्त्युत्तरकाल(ज्ञानोत्पत्त्युत्तर-
काल)देहादिप्रवर्तकत्वरूपकर्मप्रवृत्तिरिति विवेकः। पूर्वज्ञानसंस्कृतेनेत्यनेन संस्काररूपं तद्ज्ञानं द-
पटवद्बन्धकमिति गम्यते। अथागामिसञ्चितकर्मणोः प्रारब्धकर्मवैलक्षण्यं सदृष्टान्तमाह—स एवेति।
प्रवृत्तिनिमित्तं लक्ष्यं तत्प्रत्यनारब्धवेगः कुतो वेगस्यानारम्भक इत्यत आह—अमुक्त इति। मुक्त-
स्यारब्धवेगत्वम्। कुत्र स्थितोऽत आह—धनुषि प्रयुक्त इति। अनुसंहित इत्यर्थः। उपसंहि-

प्युपसंह्रियते तथाऽनारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति, पतितेऽस्मिन् विद्वच्छरीरे 'न स भूयोऽभिजायत' इति युक्तमेवोक्तमिति सिद्धम् ॥२३॥

---

धानुष्केणेति शेषः । धनुषो मुक्तस्तु नोपसंहर्तुं शक्यत इति भावः । दार्ष्टान्तिकमाह—तथेति । स्वाश्रयमन्तःकरणं तत्स्थान्येव निर्बीजीक्रियन्ते पुनर्जन्मजननासमर्थानि क्रियन्त इत्यर्थः । धानुष्क-स्थानीयो विद्वान् धनुस्स्थानीयमन्तःकरणं तत्स्थेषुस्थानीयानि तत्स्थकर्माणि, उपसंहारस्थानीयं तु निर्बीजीकरणमिति विवेकः । ज्ञानात्प्राक्फलाभिसन्ध्यादिमन्त्यपि कर्माणि सञ्चितानि ज्ञानादनन्तरं फलाभिसन्ध्यादिपरित्यागे सति स्वं फलं प्रदातुं न क्षमन्त इति भावः ।

नन्वेतेन कृतविप्रणाशदोषः कथं परिहृत इति चेदुच्यते—अविद्वद्विषय एव कृतविप्रणाशो दोषश्शास्त्रानर्थक्यापादकत्वादविद्वांसो हि शास्त्रार्थाधिकारिणः, विद्वद्विषयस्तु कृतविप्रणाशो गुण एव मोक्षप्रदत्वेन मोक्षशास्त्रसार्थक्यावहत्वात् ।

ननु यद्यविद्वद्विषयाण्येव कर्माणि, तर्हि विदुषामागामिकर्मोपन्यासः कथमिति चेन्नैष दोषः—सर्वथा वर्तमान इत्यनेन सूचितानामवधूतचेष्टानां कर्मत्वेनोपन्यासात् । यद्वा जनकादीनां विदुषा-मागामिकर्मसत्त्वादिति । प्रपञ्चितं चैतदादावेव जनकादीनां कर्म न कर्म फलाभिसन्ध्याद्यभावाद्वासुदेव-कर्मवदिति । तस्मादस्मिन् विद्वच्छरीरे पतिते सति स विद्वान् भूयो नाभिजायते । प्राणाद्युपाधीनां स्वस्वकारणेषु लीनत्वादिति भावः । लिङ्गशरीरसत्त्वप्रयुक्तं हि पुनर्जन्म । तच्च नष्टमिति न विदुषः पुनर्जन्मप्रसङ्गः ।

यत्तु रामानुजः—सर्वथा वर्तमानोऽपि देवमनुष्यादिदेहेष्वतिमात्रक्लिष्टप्रकारेण वर्तमानोऽपि स प्रकृतिपुरुषविवेकसम्पन्नो भूयो नाभिजायते, प्रकृत्या सम्बन्धं नार्हति, आत्मानं प्राप्नोतीति, तन्मन्दम्—विदुषो देवादिदेहस्थितिप्रयुक्तक्लेशायोगात् । अविदुषः प्रकृतिपुरुषविवेकायोगाच्च । न ह्यसङ्गं सच्चिदानन्दमद्वितीयं परं ब्रह्मात्मानं विदुषः कोऽपि क्लेशो भवितुमर्हति । न ह्यानन्दे आत्मनि क्लेशो युज्यते । क्लेशो हि दुःखम् । अपरिच्छिन्नस्य पूर्णस्यात्मनः कथं शुकस्येव पञ्जरे देहे वर्तनं क्लेशकारणं स्यात् ? किमाकाशो घटे क्लिष्टस्सन्वर्तते ? सरूपस्य हि वस्तुनः करचर-णादिचालनाक्षमस्वरूपावकाशवद्वस्तुनि स्थितिः क्लिष्टा स्यात् । न तु नीरूपस्य तत्रापि निरवयवस्य । आत्मा हि नीरूपो निरवयवश्च । न हि सर्वव्यापी विभुरात्मा देह एव वर्तेत । निर्विकारे चात्मनि कथं क्लेशरूपविकारसद्भावः ? 'अविकार्योऽयमुच्यते' इति ह्युक्तम् । एवं स्थिते य आत्मानं देहपरिच्छिन्नं देहेऽतिमात्रक्लेशेन वर्तमानं मन्यते स मूर्ख एवेति कथं तस्य प्रकृतिपुरुषविवेक-सद्भावः ? असङ्गस्य पुरुषस्य प्रकृतितो विवेचितस्य विवेचनात्प्राक्पश्चाद्वा कथं प्रकृतिसङ्गः ? कथं वा गुणसङ्गः । एवं प्रकृत्यादिसङ्गरहितस्य कथं वा क्लेशः ? कथं वा देहस्थितिः ? देहे स्थितस्य क्लेशमनुभवतो मम देहो देहेऽहमित्यभिमन्यमानस्य कथं वा पुनर्देहाप्राप्तिः ? पुनर्जन्महेत्वोरज्ञानाभि-मानयोस्सत्त्वात् । एवंविधस्य कथमात्मप्राप्तिर्न कथमपीति ॥२३॥

अत्रात्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥२४॥

ध्यानेनेति । ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यश्श्रोत्रादीनि क
मनस्युपसंहृत्य, मनश्च प्रत्यक्चेतयितर्येकाग्रतया यच्चिन्तनं तद्ध्यानं; तथा ध्यायतीव
ध्यायतीव पृथिवी, ध्यायन्तीव पर्वता इत्युपमोपादानात् । तैलधारावत्सन्ततोऽविच्छिन्न
ध्यानं; तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना स्वेनैव प्रत्यक्
ध्यानसंस्कृतेनान्तःकरणेन केचिद्योगिनः । अन्ये साङ्ख्येन योगेन । साङ्ख्यं नाम 'इमे
रजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण
त्मेति चिन्तनम् । एष साङ्ख्यो योगस्तेन 'पश्यन्त्यात्मानमात्म'नेति वर्तते । कर्म

---

ध्यानेनेति । आत्मदर्शनमात्मसाक्षात्कारः । तस्मिन्विषये । विषयेभ्यः प्रत्याहृत्येति
उपसंहृत्येति । निर्व्यापारीकृत्येत्यर्थः । मनोव्यापारपूर्वकत्वाच्छ्रोत्रादिव्यापारस्य श्रोत्रादीनां
संहार उक्तः । चेतयति स्वाभासेन बुद्ध्यादिकं देहान्तं चेतनीकरोतीति चेतयिता- आत्मा,
क्चेतयिता प्रत्यगात्मा, तस्मिन् मनश्चोपसंहृत्य मनोऽपि निर्व्यापारीकृत्वेत्यर्थः । यच्चिन्तनं त
मित्युच्यते । चिन्तने करणं तु संस्कृतमन्तःकरणमेव- तद्धर्मत्वाद्ध्यानस्य । एवमेकाग्रात्मचि
ध्यानत्वे प्रमाणमाह—ध्यायतीवेति । निर्व्यापारेषु बकादिषु ध्यायतीवेति ध्यातृसादृश्यप्रति
नहि बकादीनां वस्तुतो ध्यानप्रसक्तिः, बकस्य मत्स्यग्रहणप्रवणस्य प्रत्यक्चिन्तनासम्भवात्,
पर्वतयोरचेतनत्वाच्च- किंतु यथा निर्विकल्पसमाधिस्था योगिनः प्रत्यगात्मानं ध्यायन्ति तथेमे बका
ध्यायन्त इव निर्व्यापारतया वर्तन्त इति । तस्मात्कार्यकरणानां निर्व्यापारत्वे सति यदेकाग्र
तद्ध्यानमेवं निर्विकल्पसमाधेर्ध्यानत्वं प्रदर्श्य सविकल्पसमाधेस्तत्प्रदर्शयति— तैलधारावद्
सन्ततोऽविच्छिन्नश्च यः प्रत्ययोऽहंब्रह्मेति बुद्धिवृत्तिस्तद्ध्यानम् । तेन निर्विकल्पेन सविकल्प
द्विविधेन ध्यानेनेत्यर्थः । आत्मनि बुद्धावधिष्ठाने । आत्मस्वरूपाभिव्यक्तिस्थानत्वं बुद्धेरिति
केन पश्यन्तीत्यत आह—ध्यानेनेति । ध्यानेन संस्कृतेन निश्चलीकृतेनान्तःकरणेन 'मनसै
द्रष्टव्य'मिति श्रुतेरिति भावः ।

के ते केचिदत आह—योगिन इति । साङ्ख्यं नाम चिन्तनमित्यन्वयः । चिन्तनप्र
दर्शयति—इम इति । य इमे गुणास्सत्त्वरजस्तमांसीति ये च तद्व्यापारास्सुखदुःखमोहात्म
स्तेषां साक्षिभूतः । अत एव तेभ्यो गुणेभ्यो विलक्षणः । अत एव नित्यः । एवंविध
यच्चिन्तनं तत्साङ्ख्यमित्युच्यते । एष आत्मज्ञानात्मको योगस्साङ्ख्ययोगः । तेनात्मनात्मानं प
एते योगिभ्योऽन्ये साङ्ख्या इत्यर्थः । कर्मयोगेनेति । चित्तसमाधानात्मकयोगत्वं कथं क

कर्मैव योग ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग उच्यते गुणतः; तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥२४॥

अन्ये त्वेवमजानन्तश्श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥२५॥

अन्ये त्विति । अन्ये त्वेतेषु विकल्पेष्वन्यतमेनाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्यः, आचार्येभ्यश्श्रुत्वा 'इदमेव चिन्तयत' इत्युक्ता उपासते श्रद्दधानास्सन्तश्चिन्तयन्ति; तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतत् । श्रुतिपरायणाश्श्रुतिश्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः । केवलं परोप-

---

आह—योगार्थत्वादिति । चित्तसमाधानार्थत्वादित्यर्थः । योगार्थं कर्म योग इति कथमुच्यतेऽत आह—गुणत इति । उपचारादित्यर्थः । लक्षणयेति यावत् । ननु कर्मानुष्ठानेन कथमात्मदर्शनमत आह—सत्त्वेति । सत्त्वमन्तःकरणं तस्य शुद्धिर्नैर्मल्यं विक्षेपाभाव इति यावत् । ततो ज्ञानोत्पत्तिः तद्द्वारेण । अपरे कर्मिण इत्यर्थः । अनेन श्लोकेन ध्यानयोगः कर्मयोगो ज्ञानयोगश्चेति त्रय उपाया आत्मदर्शने प्रोक्ताः । तत्राप्रतिबन्धसन्न्यासिरूपोत्तमाधिकारिविषयस्साङ्ख्ययोगः, सप्रतिबन्धसन्न्यासिरूपमध्यमाधिकारिविषयो ध्यानयोगः, असन्न्यासिविषयस्तु कर्मयोग इति विवेकः । ध्यानयोग एवोत्तमाधिकारिविषयः, ज्ञानयोगस्तु मध्यमविषय इति केचित् ।

रामानुजस्तु—निष्पन्नयोगानां ध्यानयोगे, अनिष्पन्नयोगानां ज्ञानयोगे, उत्तमानां कर्मयोगेऽधिकार इत्युवाच । तदसत्—विदुषामुत्तमानां सन्न्यास एवाऽधिकार इति स्थापितत्वात्पूर्वमेव । न ह्यात्मानं सच्चिदानन्दलक्षणमविक्रियमकर्तारं पश्यन्तो विद्वांसः कर्म कुर्युः- देहाद्यभिमानपूर्वकत्वात्कर्मयोगस्य । असमाहितचित्तानां यदि ज्ञानयोगेऽधिकारस्स्यात्तर्हि विन्ध्यः प्लवेत्सागरे । चित्तसमाधानपूर्वको ह्यात्मानात्मविवेकः । आत्मा हि निरतिशयसूक्ष्मः । कथं तद्ज्ञानं विक्षिप्तचित्तस्य सम्भवेत् ? असमाहितचित्तो हि बाह्यं घटादिवस्त्वपि न सम्यग्ग्रहीतुं शक्नुयात्किंपुनरन्तरात्मानमणोरणीयांसम् । ये तु समाहितचेतसः प्राज्ञास्तेषां चित्तविक्षेपादिरूपप्रतिबन्धाभावेन सुलभ एवात्मसाक्षात्कार इति किमर्थस्तेषां ध्यानयोगो यमनियमादिसाधनसापेक्षत्वेन क्लेशावहः ॥२४॥

अन्ये त्विति । एवमजानन्तः अन्ये तु अन्येभ्यः श्रुत्वा उपासते । श्रुतिपरायणास्ते चापि मृत्युमतितरन्त्येव । एतेषु पूर्वोक्तेषु विकल्पेषु ध्यानयोगज्ञानयोगकर्मयोगाख्येषूपायविकल्पेष्वन्यतमेन । बहूनां निर्धारणे डतमच् । येनकेनापि योगेनात्मानमजानन्तो ज्ञातुमसमर्था इत्यर्थः । अहं ब्रह्मास्मीत्युपदेशं श्रुत्वा । फलितार्थमाह—इदमेव चिन्तयतेत्युक्ता इति । आचार्यैरिति शेषः । आत्मानं ब्रह्मत्वेन न जानन्ति । किंतु अहंब्रह्मास्मीतीदं त्वं सर्वदा चिन्तय (सततमविच्छिन्नं यथातथा आवर्तय) इति गुरुभिरुपदिष्टास्सन्तश्श्रद्धया ये यथोपदिष्टमुपासते तेऽपि मोक्षं यास्यन्तीत्यर्थः । श्रुतिपरायणा इत्यस्य फलितार्थमाह—केवलमिति । परोपदेश एव प्रमाणं येषां ते परोपदेशप्रमाणकाः । विवेक

देशप्रमाणकास्स्वयं विवेकरहिता इत्यभिप्रायः। किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा
किनो मृत्युमतिक्रामन्तीत्यभिप्रायः ॥२५॥

क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं 'यद्ज्ञात्वाऽमृतमश्नुत' इत्युक्तं, तत्
द्धेतोरिति, तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते—

यावत्संजायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ! ॥२६॥

यावदिति। यावद्यत्किञ्चित्संजायते समुत्पद्यते सत्त्वं वस्तु। किं विशेषेण ? नेत्या
स्थावरजङ्गमं स्थावरं च जङ्गमं च, क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायत इत्येवं विद्धि विजा
हे भरतर्षभ !

कः पुनरयं क्षेत्रक्षेत्रज्ञयोस्संयोगोऽभिप्रेतः ? न तावद्रज्ज्वेव घटस्यावयव
द्वारकस्सम्बन्धविशेषस्संयोगः क्षेत्रेण क्षेत्रज्ञस्य सम्भवति- आकाशवन्निरवयवत्वात्।

---

आत्मानात्मविवेकः । तेऽपीत्यपिशब्दसूचितामर्थापत्तिमाह—किम्विति । प्रमाणं शा
स्वतन्त्राः। शास्त्रार्थपरिज्ञानक्षमा इत्यर्थः। अतिक्रामन्तीति किमु वक्तव्यमित्यन्वयः।

यत्तु रामानुजः—येऽन्येभ्यः श्रुत्वा कर्मयोगादिकमुपासते ते, ये च श्रुतिपरायणा
मृत्युमतितरन्तीत्यवदत्, तत्तुच्छम्—यत्तच्छब्दद्वयाध्याहारपूर्वकवाक्यभेदकल्पनस्यायुक्तत्वात्।
श्रुत्वेत्यस्य श्रुतिपरायणा इत्यस्य च पौनरुक्त्यदोषनिरासाय वाक्यभेद आवश्यक इति वाच्यं,
परायणत्वादेव श्रुत्वोपासत इति हेतुहेतुमद्भावेनापौनरुक्त्यात् ॥२५॥

यावदिति, अत्रेति। अस्मिन्नध्याय इत्यर्थः। 'क्षेत्रज्ञं चापि मां वि'द्धीति, क्षेत्रज्ञेश्वरै
विषयं ज्ञानं 'यद्ज्ञात्वाऽमृतमश्नुत' इति मोक्षसाधनमित्युक्तम्। कस्माद्धेतोस्तद्ज्ञानं मोक्षसाधनं
शङ्कायां तद्धेतुप्रदर्शनार्थमयं यावदितिश्लोक आरभ्यते। स्थावरजङ्गमं यावत्किञ्चित्सत्त्वं
तत्क्षेत्रक्षेत्रज्ञसंयोगाज्जायत इति विद्धि। यावच्छब्दस्य यदित्यर्थः। किं विशेषेणेति। कीदृशं
स्त्वित्यर्थः। कश्चासौ विशेषः किंविशेषस्तेन युक्तं सत्त्वमित्यक्षरार्थः। स्थावरं तरुगुल्मादिकं,
पशुपक्ष्यादिकं च चेतनजातमित्यर्थः। अचेतनजातं तु मृत्पाषाणादिकं क्षेत्रमेवेति भावः।

नन्वसङ्गस्य क्षेत्रज्ञस्य कथं क्षेत्रेण सह संयोग इत्यभिप्रेत्याक्षिपति—कः पुनरिति।
घटयोर्हि परस्परावयवसंश्लेषद्वारा संयोगाख्यः कश्चित्सम्बन्धविशेषोऽस्ति, न तादृशः क्षेत्रक्षेत्रज्ञयो
मर्हति- क्षेत्रस्य सावयवत्वेऽपि क्षेत्रज्ञस्य निरवयवत्वात्। नहि घटरज्ज्वोरिव घटाकाशयो
स्स्यात्। नच मृद्घटयोरिव क्षेत्रक्षेत्रज्ञयोस्समवायस्सम्बन्धः, क्षेत्रज्ञादुपादानात्क्षेत्रं जातमिति,
त्क्षेत्रज्ञो जात इति वा क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमात्। इतरस्य क्षेत्रक्षेत्रज्ञयो
इतरमन्यतरं प्रति कार्यकारणभावस्यानभ्युपगमात्। न च 'यतो वा इमा'नीति श्रुत्या क्षेत्रज्ञ

समवायलक्षणः- तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमादिति, उच्यते-- क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणस्संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत्। सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः। यथा शास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात्क्षेत्रात् मुंजादिव इषीकां यथोक्तलक्षणं क्षेत्रज्ञं

---

क्षेत्रं प्रति कारणत्वमस्तीति वाच्यं, परिणाम्युपादानत्वलक्षणकारणत्वाभावात्। परिणाम्युपादानकारणस्यैव कार्येण सह समवायसम्बन्धाभ्युपगमात्। क्षेत्रज्ञस्तु विवर्तोपादानं सर्पाभासस्य रज्जुवत्। नहि रज्जुसर्पाभासयोर्लोके समवायसम्बन्धो दृश्यते। तस्मात्संयोगलक्षणस्समवायलक्षणो वा सम्बन्धो नास्ति क्षेत्रक्षेत्रज्ञयोरिति कथमुक्तं क्षेत्रक्षेत्रज्ञसंयोगादिति। एवं संयोगासम्भवादेव हि 'असङ्गो ह्ययं पुरुष' इति श्रुत्युपपत्तिः। तस्माच्छ्रुतिविरुद्धो निरुपपत्तिश्च प्रकृतगीतोक्तार्थोऽप्रमाण एवेति पूर्वपक्षः।

समाधानमुच्यतेऽस्य मयेति प्रतिजानाति—उच्यत इति। क्षेत्रक्षेत्रज्ञयोरध्यासरूपस्संयोगोऽस्तीति न काचिदनुपपत्तिः। अध्यासरूपसंयोगस्य मिथ्यात्वेन नासङ्गश्रुतिविरोध इत्याह—क्षेत्रेत्यादिना। विषयो ज्ञेयं, विषयि ज्ञानं ज्ञानस्वरूपत्वादात्मनः। भिन्नस्वभावयोस्सच्चिदानन्दस्वभाव आत्मा, अनृतजडदुःखात्मकं क्षेत्रमिति भावः। इतरस्मिन् क्षेत्रे इतरस्य क्षेत्रज्ञस्य तद्धर्माणां चैतन्यादीनां चाध्यासः। तथेतरस्मिन् क्षेत्रज्ञ इतरस्य क्षेत्रस्य तद्धर्माणां सुखादीनां चाध्यासः। यथा देवोऽहं मनुष्योऽहमिति धर्म्यध्यासः, सुख्यहं दुःख्यहं पश्याम्यहमित्यादिर्धर्माध्यासः। स लक्षणं यस्य स तथोक्त इति संयोगविशेषणम्। एतस्याध्यासस्य किंनिमित्तमत आह—क्षेत्रक्षेत्रज्ञेति। इदं क्षेत्रमयं क्षेत्रज्ञ इति क्षेत्रक्षेत्रज्ञयोर्यस्स्वरूपविवेकस्तदभाव एव निबन्धनं निमित्तं यस्य स तथोक्तः। क्षेत्रक्षेत्रज्ञसंयोग इहाभिप्रेत इति शेषः। तत्र दृष्टान्तमाह—रज्ज्विति। तच्छब्दस्य रज्जुशुक्तिकादिस्वरूपाण्यर्थः। तेषां विवेकरूपस्य विज्ञानस्याभावाद्धेतोरध्यारोपितैस्सर्परजतादिभी रज्जुशुक्तिकादीनां यथा संयोग इतरेतराध्यासलक्षणस्तद्वदिति। रज्जुसर्पयोरिव शुक्तिकारजतयोरिव च स्वरूपविवेकाभावेन क्षेत्रक्षेत्रज्ञयोः, इतरेतरतादात्म्याध्यासलक्षणस्संयोग उपपद्यत इत्यर्थः। रज्जौ सर्पस्येव शुक्तिकायां रजतस्येव च क्षेत्रज्ञे क्षेत्रस्याविद्यया कल्पितत्वेनारोप्याधिष्ठानयोस्संयोगादिरूपसम्बन्धाभावेऽप्यध्यासरूपसम्बन्धसत्त्वात्क्षेत्रक्षेत्रज्ञसंयोगोऽध्यासरूप एवेति भावः।

अस्य चाध्यासरूपसम्बन्धस्य किं लक्षणमत आह—सोऽयमिति। मिथ्याज्ञानं भ्रमस्तदेव लक्षणं यस्य स तथोक्तः। अतस्मिंस्तद्बुद्धेरध्यासरूपत्वाद्भ्रम एवाध्यास इति भावः। एतेन क्षेत्रक्षेत्रज्ञसंयोगो भ्रान्तिसिद्ध एव, न तात्त्विक इति सिद्धम्। यद्वा मिथ्या च तदज्ञानं च मिथ्याज्ञानं, तदेव लक्षणं स्वरूपं यस्य स मिथ्याज्ञानलक्षणः। कार्यस्य कारणस्वरूपत्वादज्ञानकारणस्याध्यासस्याज्ञानमेव स्वरूपं घटस्य मृदिवेति भावः। एतेनाविद्याकृतः क्षेत्रक्षेत्रज्ञसंयोगो रज्जुसर्पसंयोगव-

प्रविभज्य 'न सत्तन्नासदुच्यत' इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः प
क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवत्- 'असदेव सदिवावभासत' इति ।
निश्चितविज्ञानो यः तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानम् । तस्य

---

दिति अविद्याया मिथ्यात्वात्तत्कृतसंयोगोऽपि मिथ्यैवेति सूचितम् । एतदर्थमेव हि मिथ्या
विशेषितमज्ञानमाचार्यैः ।

एतस्य चाध्यासरूपस्य मिथ्याज्ञानस्य निवृत्त्युपायं दर्शयति यथाशास्त्रमित्यारभ्य मिथ्या मित्यन्तेन ग्रन्थेन । यथाशास्त्रं वेदान्तशास्त्रमनतिक्रम्य तदुक्तविधयेत्यर्थः । क्षेत्रक्षेत्रज्ञयोर्यो लक्षण स्सत्यत्वमिथ्यात्वादिस्वरूपभेदः, तत्परिज्ञानं पूर्वं यस्य तत्तथेति प्रविभज्यमानमित्यस्य विशेषण प्राग्दर्शितमहङ्कारादिकं रूपं यस्य तस्मात्प्राग्दर्शितरूपात्क्षेत्रात्सकाशान्मुञ्जात्सकाशादिषीकामिव प्र भज्यमानं विविच्य गृह्यमाणमित्यर्थः । यथोक्तानि लक्षणान्यनादित्वसाक्षित्वादीनि यस्य तं यथो लक्षणं क्षेत्रज्ञं ब्रह्मस्वरूपेण यः पश्यतीत्यन्वयः । कीदृशं क्षेत्रज्ञमत आह—निरस्तसर्वोपाधिवि मिति । केनोक्तं तत्राह- न सत्तन्नासदुच्यत इत्यनेन वाक्येनोक्तं ज्ञेयत्वेनोक्तश्चायमेवेत्याह—ज्ञे मिति । क्षेत्रं चासदेव सदिवावभासत इति यः पश्यतीत्यन्वयः ।

कथमसतस्सद्रूपेण भानमित्यतो दृष्टान्तान्याह—मायेति । मायया इन्द्रजालेन नि हस्तिहर्म्यादयस्तद्वत् । स्वप्ने दृष्टानि वस्तूनि रथादयस्तद्वत् । तानि हि निद्रया मायाशक्त्या क तानि । गगने कल्पितगन्धर्वनगरादिवच्चेति । ननु भुवि मूर्तिमत्यां मायया हस्त्यादिनिर्माणं नाम, कथं पुनरमूर्ते ब्रह्मणीत्यत आह—गगने गन्धर्वनगरादिवदिति । नन्वनात्मनि गन्धर्वनगरादिनिर्माणं मायया क्रियेत नाम, कथं पुनरात्मन्येवेत्यत आह—स्वप्नदृष्टवस्तुवदि स्वप्नपदार्था हि निद्रयाऽऽत्मन्येव कल्पिताः ।

एतेन क्षेत्रज्ञे क्षेत्रमिदं मायया कल्पितमिति सूचितम् । यथा मायामयहस्तिहर्म्यादिप असन्तोऽपि सन्त इव प्रतिभान्ति तद्वत्क्षेत्रमसदपि सदिवावभासत इत्यर्थः । एतेन क्षेत्रस्य श शृङ्गादिसाम्यं निरस्तं प्रतीयमानत्वात् । न हि शशशृङ्गादिकं प्रतीयते केनापि । ब्रह्मवत्सत्यत्वं निरस्तं बाध्यमानत्वात् । यथा प्रबोधादिना स्वप्नपदार्थादयो बाध्यन्ते तथा क्षेत्रमपि विद्यया बा इति । एवं प्रतीयमानत्वाद्बाध्यमानत्वाच्च क्षेत्रमिदमसदिति सदिति वा वक्तुं न युज्यते, किं मिथ्येत्येव वक्तुं युज्यते । प्रतीयमानत्वे सति बाध्यमानत्वं हि मिथ्यात्वं- रज्जुसर्पादावुक्त दर्शनात् । रज्जुसर्पादयो हि मिथ्यात्वेन सम्प्रतिपन्नाः । नच विद्यादशायामपि क्षेत्रमस्तीति वा 'नेह नाना'स्तीति श्रुतिविरोधात् । तस्माद्ब्रह्मैकमेव प्रत्यगभिन्नं सत्यं, क्षेत्रं मिथ्यैव । एवं यो निश्चि विज्ञानः, निश्चितं विज्ञानं ब्रह्माहमस्मीति ज्ञानं यस्य स तथोक्तः । तस्य मिथ्याज्ञानमपगच्छ त्यन्वयः । तत्र हेतुमाह—यथोक्तेति । सम्यग्दर्शनेन हि ब्रह्मात्माभेदलक्षणेन मिथ्याज्ञानं बाध्य

हेतोरपगमात्- 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह' इत्यनेन 'विद्वान् भूयो नाभिजायत' इति यदुक्तं तदुपपन्नमुक्तम् ॥२६॥

---

सूर्येण तम इव । ननु मूलाज्ञाननाशं विना कथं मिथ्याज्ञाननाशोऽत आह—तस्येति । मिथ्याज्ञानस्य जन्महेतोर्मूलाज्ञानस्यापगमादिति । अहं ब्रह्मास्मीति सम्यग्दर्शनेन मूलाज्ञानं सकार्यं निवर्तत इत्यर्थः । अज्ञानकार्यं ह्यध्यासरूपं मिथ्याज्ञानं, मिथ्या च तद्ज्ञानं च मिथ्याज्ञानमितीह समासः । भ्रमरूपं ज्ञानमिति यावत् । अविद्याकृतः क्षेत्रक्षेत्रज्ञसंयोगो विद्यया निवर्त्यते । अविद्याकृतो रज्जुसर्पाभाससंयोगो यथा रज्जुयाथात्म्यज्ञानेन निवर्त्यते । आत्मयाथात्म्यज्ञानमेव हि विद्या, न तर्कव्याकरणादिपाण्डित्यम् । आत्मनि चाविद्यया कृते क्षेत्रे विद्यया नाशिते सति क्षेत्रक्षेत्रज्ञसंयोगोऽपि नष्ट एव- क्षेत्रस्यैवाभावात् । इयं च विद्या बुद्धिवृत्तिरूपा क्षेत्रं नाशयित्वा स्वयमपि नश्यति- कतकरजो यथा जलगतं मालिन्यं नाशयित्वा स्वयमपि नश्यति तद्वत् । तस्मादात्मनो विद्यया च न द्वैतप्रसङ्ग इति स्थितमद्वैतम् । सम्यग्ज्ञानादज्ञानतत्कार्यनिवृत्त्या मुक्तिरिति स्थिते फलितमाह—य एवमिति । उपपन्नं युक्तम् ।

यत्तु रामानुजः—यावत्सत्त्वं जायते तावत्संयोगादेव जायते संयुक्तमेव जायत इति, तदयुक्तम्—यावच्छब्दस्य साकल्यार्थमुक्त्वा तावच्छब्दाध्याहारस्य गौरवावहत्वाद्यावच्छब्दार्थस्यापि साकल्यत्वेन पुनरुक्तत्वाच्च । किंचित्त्वसकलत्वयोरेकत्र स्थातुमयुक्तत्वाच्च । उत्तरवाक्यगततच्छब्दान्वयाय यच्छब्दस्याध्याहर्तव्यापत्तेश्च । सकलं सत्त्वं सञ्जायते सकलं संयोगाज्जायत इति वाक्यद्वयकल्पनं चायुक्तं- सकलं सत्त्वं संयोगाज्जायत इत्येकवाक्यस्यैव न्याय्यत्वात् ।

तच्छब्दो जन्मपरामर्शीति वेदान्तदेशिकोक्तिश्चायुक्ता —मूलस्थस्य सञ्जायत इति पदस्यैवात्रापि वाक्ये समन्वये नेष्टसिद्धौ तद्विहाय तत्सत्त्वजन्म भवतीति क्रियान्तराध्याहारस्यायुक्तत्वात् । न च यावच्छब्दो यच्छब्दार्थवाचक इति वाच्यं, तच्छब्दप्रतिद्वन्द्वितया यावच्छब्दनिर्देशस्यैव यावच्छब्दस्य यच्छब्दार्थकत्वगमकत्वात् । नच न निघण्टुप्रमाणमस्तीति वाच्यं, महर्षिप्रयोगस्यैव निघण्टुत्वात् । तस्माद्यत्किञ्चित्सत्त्वं जायते तत्सर्वं संयोगादेव जायत इति व्याख्येयम् । यत्किञ्चिच्छब्दद्वयसामर्थ्यात्सर्वसिद्धिरिति न यच्छब्दस्य मन्दप्रयोजनत्वशङ्कापि । यच्च संयोगात्सञ्जायत इत्यस्य संयुक्तमेव जायत इत्यर्थ इति, तच्चायुक्तम्—तस्माद्वाक्यात्तादृशार्थालाभात् । संयोगो हि सत्त्वं प्रति कारणतया निर्दिष्टः । अन्यथा सर्वं सत्त्वं क्षेत्रक्षेत्रज्ञसंयुक्तमित्येव ब्रूयान्न तु संयोगाज्जायत इति । किंच यत्क्षेत्रक्षेत्रज्ञसंयुक्तमेव जायत इति त्वं वदसि किं तद्वस्तु ? नच सत्त्वमिति वाच्यं, नहि तत्संयुक्तत्वप्रयोजकक्षेत्रक्षेत्रज्ञाभ्यामन्यत् । यो हि यत्संयुक्तस्स हि तस्मादन्यः । यथा रज्जुसंयुक्तो घटो रज्जोरन्यः । नच क्षेत्रक्षेत्रज्ञसंयुक्त ईश्वर इति वाच्यं, तस्य जन्मायोगात् ।

तस्मात्क्षेत्रक्षेत्रज्ञसंयुक्तस्य ताभ्यामन्यस्य जायमानस्य वस्तुनोऽभावात्क्षेत्रक्षेत्रज्ञसंयुक्तं सत्त्वं जायत इत्ययुक्तम् । नच क्षेत्रक्षेत्रज्ञद्वयमितरेतरसंयुक्तं सञ्जायत इत्यर्थ इति वाच्यं, जन्मनः प्रागेव सिद्धयो-

'न स भूयोऽभिजायत' इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः। जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः; अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥

सममिति । समं निर्विशेषं, तिष्ठन्तं स्थितिं कुर्वन्तं, क ? सर्वेषु समस्तेषु

---

रन्योन्यसंयुक्तयोः कथं पुनर्जन्म देहदेहिनोः ? नच जन्मनः प्राक् सूक्ष्मरूपेण स्थितयोस्संयुक्तयोः क्षेत्रक्षेत्रज्ञयोः स्थूलरूपापत्तिरूपं जन्म भवतीति वाच्यं, क्षेत्रज्ञस्याविकारस्य स्थूलसूक्ष्मत्वविकारायोगात् नापि सूक्ष्मरूपावस्थितक्षेत्रसंयुक्तः क्षेत्रज्ञः स्थूलरूपावस्थितक्षेत्रसंयुक्तत्वरूपेण जायत इति प्रकृतश्लोकादुक्तार्थालाभात् ।

ननु तव पक्षेऽपि क्षेत्रक्षेत्रज्ञसंयोगाज्जायमानं तत्सत्त्वं किं तदुभयात्मकमुत न ? आद्ये- प्रागेव सिद्धस्योभयात्मकस्य तस्य कथं पुनर्जन्म ? अन्त्ये अनुभयात्मकं हि सत्त्वं नास्तीति मैवम्—अष्टधा परिणता प्रकृतिः क्षेत्रं क्षेत्रज्ञ ईश्वरः तयोर्य आध्यासिकसम्बन्धस्स सर्वभूतोत्पत्ति निमित्तम् । पुरुषाधिष्ठितमहाभूतादिलक्षणक्षेत्रकार्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तभौतिकप्राणिजातस्य । केवलप्रकृतेः केवलेश्वराद्वा जगज्जायते, किंतु प्रकृतिसंयुक्तात्पुरुषात्पुरुषाधिष्ठितायाः प्रकृतेर्वा सम्भवति जगत् । तस्मात्प्रकृतिपुरुषसंयोगस्सर्वप्राण्युत्पत्तिनिमित्तमिति ।

यद्वा क्षेत्रं मूलप्रकृतिः, क्षेत्रज्ञ ईश्वरस्तदुभयसंयोगान्महदहङ्काराद्युत्पत्तिद्वारा सर्वभूतोत्पत्ति कार्यकरणसङ्घातात्मकं चरमचरं च प्राणिजातं क्षेत्रपरिणामभूतं क्षेत्रज्ञादन्यदेवेति युक्तं तस्य ज तदेवेह सत्त्वशब्देन गृह्यते, नतु क्षेत्रज्ञस्तस्य जन्मायोगात् । 'अजो नित्य' इति दर्शितत्वा अस्मिंश्च सत्त्वे चैतन्याभासदर्शनाच्चैतन्याभासस्य च चैतन्यांशत्वात्कारणक्षेत्रक्षेत्रज्ञयोरिव कार्यक्षेत्र ज्ञयोरपि अध्यासलक्षणसम्बन्धोऽस्तीति कृत्वा सोऽयं कार्यक्षेत्रक्षेत्रज्ञसंयोगः कारणक्षेत्रक्षेत्रज्ञसंयोग एवेति कारणक्षेत्रक्षेत्रज्ञसंयोगाच्चिदाभाससंयुक्तस्य कार्यक्षेत्रस्य जन्म भवतीति भावः । एतेन प्र पुरुषस्तत्संयोगश्चेति त्रयं भूतोत्पत्तिं प्रति निमित्तमिति सिद्धम् । नच प्रकृतिपुरुषसंयोग एक निमित्तमित्युक्तमिति वाच्यं, भूतोत्पत्तिं प्रति तत्संयोगस्य कारणत्वेऽपि संयोगं प्रति तयोः कार दिति । यद्वा संयोगद्वारा प्रकृतिपुरुषद्वयं निमित्तम् । अथवा प्रकृतितत्संयोगद्वारा पुरुष एव निमित्तम् ।। यतो वेत्यादिश्रुत्यनुसारेण पुरुष एवेश्वरो जगत्कारणमिति वक्तव्ये तद्विहाय प्रकृति संयोगः कारणमिति कथनं तु अज्ञानमूलकप्रकृतिपुरुषसंयोगस्य जगत्कारणत्वेन, ज्ञानात्तत्संयोगनि सर्वसंसारनिवृत्तिः स्यादिति सूचनार्थमिति बोध्यम् ॥२६॥

सममिति । वृत्तवर्तिष्यमाणयोस्सङ्गतिसूचनाय वृत्तमनुवदति—न स भूय इत्यादि उक्त इत्यन्तेन ग्रन्थेन । सम्यग्दर्शनफलं ज्ञानफलभूतो जन्माभाव उक्तः । अत इति । अवि

ब्रह्मादिस्थावरान्तेषु प्राणिषु; कम्? परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनः अपेक्ष्य परमश्चासावीश्वरश्चेशनशीलश्चेति परमेश्वरः; तं सर्वेषु भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि--विनश्यत्सु इति, तं च परमेश्वरमविनश्यन्तमिति, भूतानां परमेश्वरस्य च अत्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथम्? सर्वेषां हि भावविकाराणां जनिलक्षणः भावविकारो मूलं च;

---

निमित्तकक्षेत्रक्षेत्रज्ञसंयोगस्य जन्मकारणत्वादित्यर्थः । तस्या इति । जन्मकारणभूतसंयोगकारणभूताया इत्यर्थः । जन्मनः परमकारणभूताया इति यावत् । अविद्याया निवृत्तौ क्षेत्रक्षेत्रज्ञसंयोगो निवर्तते, ततश्च जन्म निवर्तत इति तावदविद्यैव विद्यया निवर्तनीयेति भावः । उक्तमपि सुबोधाय पुनरुच्यत इत्याह—उक्तमपीति । एतेन ज्ञानस्य दुर्बोधत्वं सूचितम् । न ह्यात्मन्यनादिकालानिरूढोऽनात्माभिमानस्संसारित्वभ्रमश्च सुखेन निवर्तते । नापि तदनिवृत्तिं विना ब्रह्माहमस्मीति निरूढं ज्ञानं भवति । तस्मात्पुनःपुनरुच्यते आत्मतत्त्वं कृपालुना भगवता भक्तानुग्रहार्थमिति भावः । शब्दान्तरेणेति । भङ्ग्यन्तरेणेत्यर्थः । यः विनश्यत्सु सर्वेषु भूतेषु समं तिष्ठन्तमविनश्यन्तं परमेश्वरं पश्यति स एव पश्यति । निर्विशेषं तथातथेति स्थितिक्रियाविशेषणम् । एकरूपेणेत्यर्थः । सच्चिदानन्दस्वरूपेणेति यावत् । निर्विशेषमिति परमेश्वरविशेषणं वा । सर्वेषु तिष्ठन्तमित्यनेनात्मभेदस्याप्रामाण्यं सूचितम् । आधारबहुत्वस्याधेयैकत्वस्य च बहुवचनैकवचनाभ्यामुक्तत्वात् । ततश्चौपाधिकभेदोऽप्यात्मन्यप्रमाण इति सिद्धम् । स्थितिं गतिनिवृत्तिं कुर्वन्तं, न हि परिपूर्णमचलं वस्तु क्वापि गच्छेदिति भावः । एतेन सर्वव्यापित्वलक्षणं विभुत्वं सिद्धम् । ब्रह्मा हिरण्यगर्भः । प्राणिनः कार्यकरणसङ्घातात्मकाः । परम उत्कृष्टः । किमपेक्षयास्योत्कर्षोऽत आह—देहेति । आत्मत्वेनाविद्यया परिकल्पितेभ्यो देहात्मेन्द्रियात्ममनआत्मबुद्ध्यात्माव्यक्तात्मभ्य उत्कृष्टः । अहमज्ञ इतिप्रतीत्याऽज्ञानस्याप्यात्मत्वमवगम्यत इत्यभिप्रेत्योक्तमव्यक्तात्मेति । न त्वज्ञानमहमिति साक्षादज्ञाने आत्मत्वप्रतीतिः कस्यापि । काणोऽहं बधिरोऽहमित्यादिप्रतीत्या त्विन्द्रियस्यात्मत्वमिति बोध्यम् । नहि कोऽपि चक्षुरहं श्रोत्रमहमिति प्रत्येति । देहो हि घटपटादीनामीशनशीलः । देहपरतन्त्रत्वात्तेषाम् । स चेन्द्रियपरतन्त्र इन्द्रियव्यापारपूर्वकत्वाद्देहव्यापारस्येति देहस्येशनशीलानीन्द्रियाणि । तेषां मन ईश्वरं तस्य बुद्धिरीशनशीला । तस्या अज्ञानममीषां सर्वेषामपीशनशील आत्मेति परमेश्वरत्वमात्मन इति भावः । न चाज्ञानस्येशनशीलः परमात्मैव न त्वात्मेति वाच्यं, आत्मन एव परमात्मत्वात्, 'परमात्मेति चाप्युक्त' इति ह्युक्तम् । तं चेति । विशिनष्टीति शेषः ।

ननु भूतानां विनश्यत्स्विति विशेषणदानं परमेश्वरस्याविनश्यन्तमिति विशेषणदानं च व्यर्थमित्यत आह—भूतानामिति । वैलक्षण्यं भेदः । एतेन भूतानि प्राणिनो जीवा आत्मशब्दवाच्या एवेत्यपास्तम् । भूतविलक्षणपरमेश्वरस्यैवात्मत्वात् । भूतानामनात्मत्वाचत्र दृश्यमानचैतन्यस्य चाभासभूतत्वादिति । कथं वैलक्षण्यप्रदर्शनमित्याक्षिपति—कथमिति । तदेवोपपादयति—सर्वेषामिति । भवन्तीति भावाः पृथिव्यादिपदार्थाः । तेषां विकाराः--जायते--अस्ति--वर्धते--विपरिणमते--अपक्षीयते--

जन्मोत्तरकालभाविन अन्ये सर्वे भावविकाराः विनाशान्ताः; विनाशात्परो न कश्चि भावविकारः, भावाभावात्सति हि धर्मिणि धर्माः भवन्ति; अतोऽत्यन्तभावविकारा वादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः। तस्मात्सर्वभूतैरेवा

---

नश्यति--इति षट्। तेषां मध्ये जनिलक्षणो भावविकारो मूलमादिः प्रथम इत्यर्थः। अन्ये भावि विनाशान्तास्सर्वे पञ्चेत्यर्थः। भावविकारा जन्मोत्तरकाले भवन्तीति जन्मोत्तरकालभाविनः। भावि देहादिभावस्य सत्तावृद्धिपरिणामापक्षयनाशदर्शनाज्जनिरूपविकार एव तेषामादिरित्यर्थः। ननु नावः नन्तरं कोऽप्यस्तु विकार इति विकाराणां विनाशान्तत्वकथनमयुक्तमित्यत आह— विनाशा विनाशोऽदर्शनं तं प्राप्तस्यासतो वस्तुनश्शशशृङ्गादितुल्यस्य कथं पुनर्भावविकारप्राप्तिः? सन्पदार्थः। तद्विकाराश्च सत एव वस्तुनो भवितुमर्हन्ति- न त्वसत इति भावः। इदमेव भावाभावादिति। भावस्य सत्पदार्थस्याभावात्। नन्वसतोऽपि विकारा भवन्त्वत आह— सति देव धर्मिणि देहादिभावपदार्थे सति धर्मा भवन्ति। धर्मिण एवाभावे कथं धर्मभवनं, न कथमपि

नतु 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति गीतावचनादेव नष्टस्य पुनर्जन्मादे विकार उपलभ्यते, दृश्यते च नष्टस्यापि देहस्य भस्मात्मना जन्म। घटस्य च कपालात्मना तस्मान्नान्त्यविकारो नाश इति चेत्, मैवम्— यदि निर्वाणस्य प्रदीपस्य पुनरागमनं भवेत्तर्हि पुनर्जायेत। गीतावचनं तु देहजन्मनाशप्रयुक्तजन्मनाशवन्तं जीवमभिप्रेत्य प्रवृत्तं मृतस्य देहादुत्क्रान्तं प्राणोपाधिकस्य जीवस्य देहान्तरप्राप्तिरूपं जन्म ध्रुवमिति, प्रकृतदेहत्यागरूपं मरणं च तस्य ध्रुवमित्यभि देहे भस्मतामापन्ने सति देहो जात इति व्यवहाराभावान्न देहस्य भस्मात्मना जन्म, किंतु भस्मीकरण देहस्य नाश एव। करचरणादिमत्पिण्डविशेषो हि देहः। यदि स देहस्याकारो भस्मनि भावे तर्हि देहः पुनर्जात इति वक्तुमुचितम्। यो यस्य नियत आकारस्तन्नियताकारादर्शनमेव हि नाशः। तस्माद्भस्मीभूतस्य देहस्य पुनर्जन्म भवेद्यदि निर्वाणस्य प्रदीपस्य पुनरागमनं भवेदेव। सज्जन्मर वादिनापि देहारम्भकपृथिव्यादिद्रव्यस्य देहरूपत्वं विहाय भस्मरूपप्राप्तिरिति वदतापि देहरूपस्य मवश्यमभ्युपेयमेवेति देहो नष्ट एव। न हि करचरणाद्यवयवसन्निवेशात्मकमाकारं विहाय कश्चि पदार्थोऽस्ति। स च देहे भस्मीभूते सति नैव दृश्यत इति देहस्यादर्शनरूपो नाशो युक्त एव। विका चादर्शनं गतस्य देहस्य नष्टदीपवन्नास्ति पुनरुदयः। न हि भस्मीभवनात्पूर्वं दृष्टः पित्रादिदेहः पुत्रादिना पुनर्दृश्यते, येन नाशानन्तरं द्रव्यस्य पुनर्जन्मविकारापत्तिः। नच दीपो नष्टः पुनरुदेत्यत्रिकाल संयोगाद्वर्तेरिति वाच्यं, नष्टादन्यस्या एव दीपज्वालायाः पुनरुदयात्। सोऽयं दीप इति प्रत्यभिज्ञा भ्रम एव, न प्रमा। नष्टस्य पुनरुदितस्य च दीपस्य भेदात्। तस्मान्नष्टस्य करचरणाद्याकारवतो देहस्य कम्बुग्रीवाद्याकारवतो घटस्य वा न पुनर्जन्म। ये तु दृश्यन्ते भस्मकपालादयस्ते घटादिपदार्थाः। भस्मनि कपालादौ वा देह इति घट इति च लोकानां प्रत्ययादर्शनात्। विरुद्धार्थो हि न ग्राह्यः। नापि नष्टस्य पुनर्जन्म शास्त्रसिद्धं जीवस्यैव नित्यस्य देहान्तरप्राप्तिरूपं पुनरेषां

शास्त्रसिद्धं न त्वनित्यस्य देहस्य । अत एव ह्यनित्यत्वं देहस्य । यत्पुनरदर्शनं- तस्मान्नाशानन्तरं भावस्यैवाभावाद्भावस्य सत्त्वे नाशस्यैवायोगान्नास्ति कोऽपि भावविकार इति भावविकाराणां नाश एव परमावधिः । अत इति । नाशात्परस्य भावविकारस्याभावादित्यर्थः । आत्मन इति शेषः । अन्त्यभावविकारस्य नाशस्याभावानुवादेनाभावस्य पूर्वं बहुवारं प्रतिपादितत्वादिह तत्प्रतिपादनमनुवादभूतमेवेति भावः । तत्पूर्वभाविनः नाशात्प्राक्तनास्सर्वे जन्मादयो विकारास्तत्कार्यैस्सह प्रतिषिद्धा भवन्ति ।

ननु अविनश्यन्तमित्यनेन नाशाभाव एव प्रतिपादित इति कथं जन्मादिविकाराभावसिद्धिरिति चेदुच्यते—यस्य नाशो नास्ति तस्य जन्मापि नास्ति । जन्मपूर्वकत्वान्नाशस्य । जातस्य हि घटस्य नाशो दृश्यते, न त्वजातस्य । न ह्यजातस्य शशशृङ्गस्य नाशप्रतीतिः । यद्धि जन्मना दृष्टिपथं गतं तदेव हि प्राप्तुमर्हत्यदर्शनरूपं नाशम् । आत्मा न जायते, नाशरहितत्वाद्यन्नाशवत्तदेव जायते, यथा घट इति प्रयोगः । नच जन्मवानपि भूम्याकाशादिर्नित्यः- तस्य नाशादर्शनादिति वाच्यं, येनाकाशादेर्नाशो न दृष्टः तेन त्वया किमाकाशादेर्जन्म दृष्टम्? तव स्वादृष्टे भूम्यादिनाशे यथा अप्रत्ययः तथा स्वेनादृष्टे भूम्यादिजन्मन्यप्रत्ययो युक्त एव । ओमितिचेत्तर्हि भूम्यादेर्जन्माभावादेव नाशाभावमभ्युपगच्छ । यदि शास्त्रान्निश्चेतुमिच्छसि, तर्हि 'आत्मन आकाशस्सम्भूत' इत्यादिशास्त्रादाकाशादीनां जन्म, तत्प्रयुक्तं नाशं च प्रत्येहि । न चाकाशादिनाशे शास्त्रं प्रमाणं नास्तीति वाच्यं, 'यत्प्रयन्त्यभिसंविशन्ति' इत्यादि शास्त्रस्य सत्त्वात् । तस्माच्छास्त्रादुपपत्तेश्च जन्मनाशयोर्न क्वापि सामानाधिकरण्यव्यभिचारः । एवं नाशाभावेन जन्माभावे सिद्धे सत्तावृद्ध्यादीनां जन्मपूर्वकाणां भावविकाराणामभावोऽपि सिद्ध्यति । नहि जन्मरहितस्य सत्तावृद्ध्यादयो दृश्यन्ते । जातस्यैव देहादेस्ते दृश्यन्ते ।

नुन वृद्धिपरिणामादीनां विकाराणां जन्मपूर्वकत्वेऽपि सत्तारूपविकारस्य न जन्मपूर्वकत्वं, जन्मरहितेऽपि ब्रह्मणि सत्ताया दर्शनात् । सच्चिदानन्दं ब्रह्मेति हि श्रूयते- 'अविनाशि तु तद्विद्धी'ति स्मर्यते, सत्त्वं ब्रह्मण इति चेत्, मैवम्—किं देहादयो जन्मनः प्राक् सन्ति? उत पश्चात्? नाद्यः- जन्मनः प्राग्देहोऽस्तीति व्यवहारादर्शनात्, किंतु पश्चादेव । तस्माद्देहादिगतं सत्त्वं जन्मरूपविकारपूर्वकमेव । ब्रह्मगतं तु सत्त्वं न जन्मपूर्वकं- जन्माभावाद्ब्रह्मणः । अत एव हि कालत्रयाबाध्यं ब्रह्म । नहि जन्मनः प्रागसद्वस्तु कालत्रयाबाध्यं भवितुमर्हति । असत्त्वादेव जन्मनः प्राक्काले । तथाच त्रिकालाबाध्यत्वलक्षणं ब्रह्मगतं सत्त्वं न विकारः- अकार्यत्वात्तस्य । कार्यं हि विकारः । देहादिगतं सत्त्वं तु इन्द्रियगोचरत्वलक्षणं तद्धि विकारः- जन्मान्तरभावित्वेन कार्यत्वात् । इन्द्रियगोचरत्वाद्धि जातं देहमस्तीति प्रत्येति लोकः । देहस्तावज्जायते समनन्तरमेवेन्द्रियगोचरो भवतीति जन्मपूर्वकत्वं सत्तायाः । नहि जन्मनः प्रागिन्द्रियगोचरत्वं देहस्य । तस्मादिन्द्रियगोचरत्वरूपसत्ताविकारो वृद्ध्यादिविकारवज्जन्मपूर्वक एव । अमी एवेन्द्रियगोचरीभवनयोग्याः पदार्था भावशब्देनोच्यन्ते देहादयः । एषां चामी विकारा जन्मादयस्सम्भवन्ति । आत्मा त्वतीन्द्रियः । न तस्य कोऽपि भावविकारः ।

मत्यन्तमेव परमेश्वरस्य सिद्धं, निर्विशेषत्वमेकत्वं च । य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति ।

ननु सर्वोऽपि लोकः पश्यति किंविशेषणेनेति । सत्यं पश्यति; किंतु विपरीतं पश्यति । अतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति, तमपेक्ष्य एकचन्द्रदर्शी विशिष्यते- स एव पश्यतीति; तथैवेहापि एकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यः विशिष्यते- स एव पश्यतीति । इतरे पश्यन्तोऽपि

---

एवमविकारस्य परमेश्वरस्य सर्वभूतवैलक्षण्यमत्यन्तं सिद्धमेव । सविकारत्वाद्भूतानाम् । हीन्द्रियगोचराणि ब्रह्मादिस्तम्बपर्यन्तानि द्विपरार्धशतसंवत्सरादिपरिमितायुष्कालानि क्षेत्रक्षेत्रज्ञ... जातानि वर्धमानानि विपरिणममानान्यपक्षीयमाणानि चेति षड्भावविकारवन्त्येव- 'यतो वा भूतानि जायन्ते' इत्यादिश्रुतेः । तस्मात्सविकारेभ्यो भूतेभ्यो निर्विकारः सर्वभूतान्तरात्मा परमेश्वरोऽत्यन्तं विलक्षण एव । एवं निर्विकारत्वादेव निर्विशेषः । विशेषो हि विकारः । एवं स... विजातीयस्वगतभेदरूपविशेषाभावादेव एकश्चेत्याह—निर्विशेषत्वमेकत्वं चेति । सिद्धमिति... पश्यति जानाति दृशेः ज्ञानार्थकत्वस्यापि सत्त्वात् । स पश्यतीति । स विद्वानित्यर्थः ।

ननु सर्वोऽपि लोकः परमेश्वरं पश्यत्येव- आत्मत्वात्तस्य । आत्मा ह्यात्मनः नित्य... आत्मा हि स्वयम् । नहि स्वस्य स्वयं कदाचिदपि परोक्षस्स्यात्तस्माद्यः पश्यति स एव पश्यतीत्ययुक्तमित्याक्षिपति—नन्विति । विशेषणं पृथक्कथनम् । तेन पूर्वपक्षमङ्गीकरोति—सत्यं पश्यतीति । सर्वलोक आत्मानं परमेश्वरं पश्यत्येव, किंतु विपरीतं यथातथा पश्यति, आत्मानं विपरीतलक्षणं पश्यतीति वा । अत इति । सर्वलोकस्य विपरीतात्मदर्शित्वादित्यर्थः । विशिनष्टि यथोक्तात्मदर्शिनं विशिष्य कथयति । कथं विशिनष्टीत्यत आह—स एव पश्यतीति । य एवं परमेश्वरं पश्यति स एव विद्वान्, अन्ये तु विपरीतदर्शिनो मूढा एवेत्यर्थः ।

यद्वा य आत्मानं परमेश्वरं पश्यति स एव परमेश्वरं पश्यति । अन्ये तु परमेश्वरं न पश्यन्ति । आत्मभिन्नत्वात्परमेश्वरस्य तद्दृष्ट्या । अथवा य एवं यथोक्तं परमेश्वरं पश्यति स सम्यक्पश्यति । अन्ये तु मिथ्यैव पश्यन्तीत्यर्थः । तत्र दृष्टान्तमाह—यथेति । तिमिरोपहतदृष्टिः पश्यति, निर्दोषदृष्टिश्च चन्द्रं पश्यति । तत्र तिमिरदृष्टिश्चन्द्रमनेकत्वेन पश्यति । अन्यस्तु यथार्थत्वेन पश्यति । एवं सति यश्चन्द्रमेकं पश्यति स एव पश्यति, न त्वन्ये, तेषामनेकचन्द्रदर्शित्वात् विशिष्यते उत्कृष्टत्वेन कथ्यत इत्यर्थः ।

अविभक्तमिति । उपाधिकृतविभागरहितमित्यर्थः । विभक्ता उपाधित इत्यर्थः । ... चात्मान इति ये विपरीतं पश्यन्ति ते विभक्तानेकात्मविपरीतदर्शिनः । एतेनात्मनो ये किल... नानात्वं वदन्ति, त एव विपरीतदर्शिन इत्युक्तौ किंपुनस्स्वत एव नानात्ववादिन इत्यर्थापत्तिसिद्ध...

न पश्यन्ति, विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥२७॥

यद्वा विभक्तास्स्वत एव परस्परं भिन्ना अत एवानेके आत्मान इति विपरीतं पश्यन्ति ये ते तथोक्ताः। स एव पश्यनीति विशिष्यत इत्यन्वयः। इतरे भिन्नानेकात्मदर्शिनः पश्यन्तोऽप्यात्मानं न पश्यन्ति। कुतः? विपरीतदर्शित्वात्। तत्र दृष्टान्तमाह—अनेकचन्द्रदर्शिवदिति। यथा चन्द्रं पश्यन्तोऽप्यनेकचन्द्रदर्शिनो नैव पश्यन्ति तद्वदित्यर्थः। प्रत्यक्षेऽपि चन्द्रे एकस्मिन् तिमिरोपहतदृष्टीनां यथा नानाचन्द्रबुद्धिर्नित्यापरोक्षेऽप्येकस्मिन्नात्मनि निर्विशेषेऽविद्यादूषितबुद्धीनां नानात्मबुद्धिस्संसार्यात्मबुद्धिरीश्वराद्भिन्नात्मबुद्धिरनात्मन्यात्मबुद्धिश्चेति भावः।

यत्तु रामानुजः—एवमितरेतरयुक्तेषु सर्वेषु भूतेषु देवादिविषयाकाराद्विविक्तं तत्तत्तत्तद्देहेन्द्रियमनांसि प्रति परमेश्वरत्वेन स्थितमात्मानं ज्ञातृत्वेन समानाकारं तेषु देहादिषु विनश्यत्सु विनाशानर्हस्वभावेनाविनश्यन्तं यः पश्यति स आत्मानं यथावस्थितं पश्यतीति, तत्तुच्छम्—सर्वेषु भूतेषु तिष्ठन्तमिति पदत्रयस्यैकवाक्यत्वेन प्रतीयमानस्य सर्वेषु भूतेषु देवादिविषमाकाराद्विविक्तमिति सर्वेषु भूतेषु स्थितमिति च वाक्यद्वयत्वेन व्याख्यानस्याप्रमाणत्वात्। देवादिविषमाकाराद्विविक्तमिति वाक्याध्याहारस्यान्याय्यत्वात्। सर्वेषु भूतेष्विति पदस्य त्रेधाऽऽवृत्तौ प्रमाणाभावात्सर्वेषु भूतेषु विविक्तं, सर्वेषु भूतेषु स्थितः, सर्वेषु भूतेषु विनश्यत्स्वविनश्यन्तमिति कथनमयुक्तमेव। तथा परमेश्वरमित्यस्य तत्तद्देहेन्द्रियमनांसिप्रति परमेश्वरत्वेनेत्यप्ययुक्तम्—मूलाद्बहिर्बहुपदकल्पनस्यायुक्तत्वात्परमेश्वरमित्यस्यैव विशेष्यत्वेन तद्विशेषणीकरणस्यात्मानमितिपदाध्याहारस्य चाप्रमाणत्वात्। सममित्यस्य ज्ञातृत्वेन समानाकारमित्यप्ययुक्तं- मूलाद्बहिर्बहुपदकल्पनस्यात्रापि सत्त्वात्।

नच श्लोकस्य सूत्रवत्स्थितत्वात्तद्गतपदान्वयाय मूलाद्बहिर्बहुपदकल्पनं न्याय्यमिति वाच्यं, तद्विनाप्यन्वयसम्भवस्य दर्शितत्वात्तत्कल्पनस्यान्याय्यत्वमेवेति। नच शब्दतोऽन्याय्यत्वेऽपि न्याय्यमेवार्थत इति वाच्यं, अर्थतोऽप्यन्याय्यत्वात्। तथाहि- यद्यात्मा देवादिविषमाकारैस्संयुक्तस्स्यात्तदोच्येत विविक्त इति। न ह्यास्तिकः कोऽपि देहादिविलक्षणं कर्तारं भोक्तारं चात्मानं विदन् करचरणादिमन्तमात्मानं जानीयाद्बौद्धवत्। किंतु मम देह इत्येव प्रत्येति। स च प्रत्ययो देवादिविषमाकाराद्वियुक्त आत्मेत्युपदेशान्नैवापगच्छति। गृहाकाराद्विविक्तस्यापि बौद्धाभिमतदेहात्मनो गृहे ममत्वप्रत्ययस्य सत्त्वात्। देहादीन्प्रति परमेश्वरत्वं तु महेश्वर इत्यत्र निरस्तम्। ज्ञातृत्वेन समानाकारमात्मानमित्यप्ययुक्तं, केनास्यात्मनस्समानाकारता? न तावदनात्मना- तस्य जडत्वात्। नाप्यात्मना-- स्वस्यैवात्मत्वात्। न च परमात्मनेति वाच्यं, सर्वज्ञेश्वरगतसर्वज्ञत्वरूपज्ञातृत्वस्य किञ्चिद्ज्ञजीवगतकिञ्चिद्ज्ञत्वरूपज्ञातृत्वस्य च भेदात्। नाप्यन्येनात्मनेति वाच्यमात्मानमित्येकत्वेनैवानेकात्मवादस्य निर्मूलितत्वात्! न चात्मानमिति जात्येकत्वमिति वाच्यं, आत्मनि जातेरेवाभावात्। किंच भवतु वाऽज्ञानकृत आत्मकृत आत्मभेदः, तथापि नात्मनां परस्परं साम्यं- तर्कशास्त्रवित्त्वरूपज्ञातृत्वस्य

व्याकरणशास्त्रवित्त्वरूपज्ञातृत्वस्य च पुरुषद्वयनिष्ठस्य भेदेन ज्ञातृत्वसाम्याभावात् । यदि तु ज्ञान-मेव ज्ञातृत्वमिति गृह्यते, तर्हि तस्य निरुपाधिकस्य ज्ञानस्य भेदकाभावात्सिद्धमेवैकत्वं ज्ञानस्वरूपस्यात्मनः ।

यच्च वेदान्तदेशिकेनोक्तम्—क्षेत्राकारपरिणतप्रकृतिबहुत्वाच्चत्तच्छरीरसंयुक्ताः पुरुषा अपि बहव एव । सर्वत्र पार्थक्येन सुखदुःखाद्युपलब्धेः । नच निरवयवस्यात्मनः कथं संयोग इति वाच्यं, युतसिद्धयोस्सम्बन्धस्संयोग इति लक्षितसंयोगस्य निरवयवेऽपि सम्भवात् । निरवयवयोर्निरवयवसावयवयो-स्सावयवयोश्च संयोगस्सम्भवत्येव । आत्मन्यध्यासलक्षणस्सम्बन्धो नोपपद्यत एवेति, तत्तुच्छम्-युतसिद्धयोस्सावयवयोरेव सम्बन्धस्संयोग इति लक्षणात् । अन्यथा निरवयवयोर्निरवयवसावयवयोः सम्बन्धस्यैवाभावेन तल्लक्षणस्य दुष्टत्वप्रसङ्गात् । नहि कपिना वृक्षस्संयुक्त इतिवदाकाशेन वृक्षस्संयुक्त इति लोके कोऽपि प्रत्येति । घटाकाशो वा मठाकाशेन संयुक्त इति च प्रत्येति । संयुक्तव्यवहार-हेतुर्हि संयोगः । नच विभुराकाशः, विभुत्वं च सर्वमूर्तद्रव्यसंयोगित्वमित्यस्त्येव निरवयवस्याप्याका-शस्य घटादिसंयोगः । तथाऽऽत्मा मनसा संयुज्यते मन इन्द्रियेणेत्यात्मादीनां निरवयवानामेव संयोग इति वाच्यं, उक्ततर्कशास्त्रस्याप्रमाणत्वात् । अत एव हि तर्कशास्त्रमधीयानो गर्दभात्मना पुनर्जायत इति स्मर्यते । 'असङ्गो ह्ययं पुरुष' इत्यादिश्रुतिविरुद्धं ह्यात्ममनस्संयोगप्रतिपादनादिकम् । घटाका-शयोस्संयुक्तत्वव्यवहाराभावेनाकाशस्य मूर्तद्रव्यसंयोगित्वरूपविभुत्वं चायुक्तम् । नच गुणगुणिनोरिव समवायसम्बन्धोऽस्तु क्षेत्रक्षेत्रज्ञयोरिति वाच्यं, गुणिनि गुण इव निर्विशेषे क्षेत्रज्ञे कालत्रयेऽपि क्षेत्र-रूपविशेषसत्त्वायोगात् । सत्त्वे पुनर्गुणाद्गुणिन इव क्षेत्रात्क्षेत्रज्ञस्य विभाग एव न सिद्ध्येत् । चेष्टापत्तिः, प्रकृतिवियुक्तमात्मानं प्रपद्यत इति त्वयैवोच्यमानत्वात् । एवमसङ्गस्य पूर्णस्य चैतन्यस्य क्षेत्रज्ञस्य भेदकोपाधिसम्बन्धासम्भवादेक एवात्मा । तस्मिन्ननेकत्वबुद्धिस्त्वध्यासकृतैव । न चात्मनि कथमध्यास इति वाच्यं, रज्जौ सर्पस्येवात्मनि संसारस्याध्यासस्सम्भवत्यविषयेत्युक्तत्वात् । नच दृश्ये रज्ज्वादौ सर्पादिभ्रमस्स्यान्नाम, कथं पुनर्द्रष्टर्येव स्वस्मिन् देवादिभ्रम इति वाच्यं, नहि वयं द्रष्टुरात्मनः क्षेत्रज्ञस्य स्वस्मिन्ननात्मभ्रमो भवतीति वदामः, किंतु प्रमातुरात्मन्यनात्मभ्रम इति ब्रूमः । ननु प्रमातैवं क्षेत्रज्ञ आत्मेति वाच्यं, सत्यं प्रमातैव क्षेत्रज्ञो ज्ञातृत्वात्तथापि यावत्पर्यन्तं प्रमाता संसारिण-मात्मानं मन्यते तावत्पर्यन्तं क्षेत्रज्ञोऽपि सन् प्रमाता क्षेत्रज्ञाद्भिन्न इव, विद्यावस्थायामेव प्रमातुः क्षेत्र-ज्ञात्मत्वमविद्यावस्थायां तु संसारित्वमेवेति युक्तस्संसारिणः प्रमातुरात्मन्यप्यनात्मभ्रमः । अविद्या-वत्त्वाविद्यावतो ब्राह्मणस्यात्मनि क्षत्रियभ्रमवदिति ।

यच्चानेनोक्तमविनश्यन्तमिति विशेषणं जीवपरत्व एव घटते, न त्वीश्वरपरत्वे- देहाभिमानिनो हि जीवं विनश्यन्तं मन्यन्ते, न त्वीश्वरमिति विनाशप्रसक्तेरेवाभावादीश्वरस्य तन्निषेधो व्यर्थ इति, तत्तुच्छम्—आस्तिका एवात्राधिकारिणो न तु नास्तिका इति तावदविवादम् । अधीतवेदवेदान्ता

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते—

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥२८॥

सममिति । समं पश्यन्नुपलभमानः हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयाऽवस्थितमीश्वरमतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः । समं पश्यन् किम्? न हिनस्ति हिंसां न करोति, आत्मना स्वेनैव स्वमात्मानम् । ततो तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम् ।

---

मेव वेदान्तशास्त्रेऽधिकारात् । ते चास्तिका देहादिविलक्षणं नित्यमेवात्मानं मन्यन्ते । अन्यथा स्वर्गादिफलभोगाय यज्ञादिकर्मसु तेषामप्रवृत्त्यापत्तेः । मृतं पित्रादिकं प्रति पिण्डप्रदानाद्ययोगाच्च । तस्मात्कथं जीवेऽपि नाशप्रसक्तिः? यदि देहनाशाज्जीवनाशमेते मन्यन्ते, तर्हि श्रीरामस्य श्रीकृष्णस्य वा परमेश्वरत्वेनाभिमतस्य देहनाशदर्शनादीश्वरस्यापि नाशं ते किमिति न मन्येरन्? ये तु नास्तिकास्ते जीवमिवेश्वरमपि नाभ्युपगच्छन्त्येवेति कथं तद्दृष्ट्या ईश्वरनित्यत्वम्? तस्मादीश्वरवज्जीवेऽपि नाशप्रसक्त्यभावाद्व्यर्थ एव तन्निषेधः । अत एवाविनश्यन्तमित्यस्य निर्विकारत्वप्रतिपादनं फलमित्युक्तमाचार्यैः । न च षड्भावविकाराभाव एव प्रतिपादित इति वाच्यं, यस्य षड्भावविकारास्तस्यैव तदतिरिक्तविकारा अपि । सुखदुःखादिविकाराः खलु जन्मादिविकारप्रयुक्ताः । अत एव सह तत्कार्यैः प्रतिषिद्धा भवन्तीत्युक्तम् । न चात्मनि नाशवद्विकारित्वस्याप्यप्रसक्तिरिति वाच्यं, आस्तिकैरपि कर्ता भोक्तात्मेति गृह्यमाणत्वात् । कर्तृत्वादिकं हि विकारः । तस्मादीश्वरस्यापि क्षेत्रज्ञस्याविनश्यत्त्वमिति विशेषणदानं युक्तमेव । मूढैरास्तिकैर्विपरीतत्वेन (विकारिजीवत्वेन) गृह्यमाणो यः क्षेत्रज्ञस्स वस्तुतो निर्विकारः परमेश्वर एवेति जीवेश्वराभेदरूपमहावाक्यार्थबोधसम्भवात् । न च निर्विकारत्ववचनमात्रेण कथं परमेश्वरत्वं जीवस्येति वाच्यं, निर्विकारित्वप्रतिपादनेनासंसारित्वलाभादसंसारित्वस्य चेश्वरधर्मत्वात् । यो हि सुखदुःखादिभिर्विक्रियते स हि संसारी जीव इति हि सर्वेषामास्तिकानां प्रत्ययः । तस्मान्निर्विकारोऽसंसारी क्षेत्रज्ञ ईश्वर एव, न तु तद्भिन्नः- 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपक्रमादिति ॥२७॥

सममिति । हि सर्वत्र समं यथा तथाऽवस्थितमीश्वरं पश्यन् हि पुरुषः, आत्मना आत्मानं न हिनस्ति । ततः परां गतिं याति । स्तुतिरिति । त्वमिन्द्र इत्यादिवन्मिथ्यार्थप्रवचनरूपा स्तुतिर्नेह ग्राह्या, किंतु यथार्थकथनरूपैव । पश्यन्नित्यनेन चक्षुर्व्यापारो न विवक्षितः- अतीन्द्रियत्वादात्मनः, किंतु बुद्धिव्यापार एवेत्याह—उपलभमान इति । विदन्नित्यर्थः । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रिति श्रुतेरिति भावः । हिशब्दार्थमाह—यस्मादिति । अस्य ततस्तस्मादित्युत्तरेणान्वयः । तुल्यतयेत्येकरूपेणेत्यर्थः । अवस्थानक्रियाया विशेषणमिदम् । पक्षान्तरमाह—समं पश्यन्निति । दर्शनक्रियाया विशेषणमिति भावः । तस्माद्धेतोरित्यर्थः । हेतुमेव दर्शयति—अहिंसना-

ननु नैव कश्चित् प्राणी स्वयं स्वं हिनस्ति, कथमुच्यते अप्राप्तं- न हिनस्ति' इति, यथा 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे' इत्यादि । नैष दोषः- अज्ञानामात्मतिरस्करणोपपत्तेः । सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते, नवं तं चैवं हत्वाऽ

दिति । यद्यपि यो हेतुरहिंसने स एवेह तच्छब्देन ग्राह्यः, तथापि तत्कार्यभूतमहिंसनमिह कार्ये कारणभावोपचारादिति । अहिंसने हेतुस्तु ईश्वरसमदर्शनम् । यस्मादीश्वरं समं पश्यति दात्मानं न हिनस्ति । तस्माच्चाहिंसनात्परां गतिं यातीति परमार्थः । एतेन विषमेश्वर(भिन्नेश्व नस्य आत्महिंसाहेतुत्वं सूचितम् । ते च द्वैतिनः आत्महिंसकत्वादन्धं तम एव प्रपद्यन्ते । तमः प्रपद्यन्ते ये के चात्महनो जनाः' इति श्रुतेः । भिन्नेश्वरज्ञानिनामेवात्महत्वे किं पुनर्नि वादिनां साङ्ख्यानां देहात्मवादिनां बौद्धादीनां वेत्यर्थापत्तिस्सूच्यते ।

ईश्वरसमदर्शिभ्योऽन्येषामात्महत्वमेव दर्शयितुं पूर्वपक्षमुद्भावयति—नन्विति । यः कोऽ मूर्खोऽपि प्राणी स्वयं स्वमात्मानं नैव हिनस्ति । न ह्यात्मनि कस्यापि द्वेषः, येनात्महिंसनं स्यात्, आत्मसुखविघातुकेऽन्यस्मिन्नेव सर्वस्य द्वेषः, तद्धिंसनं च- शत्रुहिंसाया दर्शनात् । आत्मोपभो प्यन्यमेव पश्वादिकं हिंसन्ति, न त्वात्मानमात्मार्थमन्यार्थं वा । एवं सत्यप्रसक्तस्य निषेधायोगा मप्राप्तमात्महिंसनमुच्यते न हिनस्तीति निषेधकथनद्वारा ? न हिनस्तीति निषेधो ह्यात्मनि प्रसञ्जयित्वा निषेधति । तस्मादप्रसक्तस्य हिंसनस्यात्मनि प्रसञ्जनमयुक्तम् । इदं चात्मानं न हि वचनं पृथिव्यामग्निर्न चेतव्य इति प्राप्तिद्वारा निषेधवन्नान्तरिक्षे न दिवीति प्राप्त्यभावाच्चायं मुख्यो नेष्यते यथा तद्वदिहापि प्राप्तिं विना हिंसाया आत्मनि निषेधो न युक्त इत्याह—यथे न चायुक्तोऽयं पूर्वपक्षः- राजादिभीत्या स्वशिरच्छेदकानां जलेऽग्नौ वा स्वयमेव निपत्य मृतानां मानत्वादिति वाच्यं, तत्रापि देहादन्येनैव देहिना देहस्य हिंसितत्वादिति । पूर्वपक्षं परिहरति- दोष इति । एष अप्राप्तात्महिंसननिषेधो दोषो न भवति । कुतः ? अज्ञानामात्मतिरस्करणोप

संग्रहोक्तं विवृणोति—सर्व इति । हिः प्रसिद्धौ, यस्मादिति वा । हन्तीत्यनन्तरं तत शेषः कर्तव्यः । यस्माद्धन्ति सर्वोऽज्ञ आत्मानं तस्मात्सर्वोऽज्ञ आत्महेत्यन्वयः । तिरस्कृत्य तमात्मत्वेनापरिगृह्येत्यर्थः । अनात्मानं देहं स्थूलमात्मत्वेन परिगृह्य देहमेवात्मानं मत्वेत्यर्थः । धर्मौ कृत्वा जन्मान्तर इति भावः । उपात्तं स्वीकृतं तमपि देहं मानुषं हत्वा भोगेन प्रारब्धक वसादनापादनद्वारा नाशयित्वा सञ्चितकर्मप्रयुक्तं नवं नूतनमन्यं देवमनुष्यतिर्यगादिलक्षणं देहमा नोपादत्ते । तमपि पूर्वोक्तविधया हत्वा तस्मादन्यं देहं नवमात्मत्वेनोपादत्ते । एवमात्मत्वेनोपात्त देहात्मानं हन्तीत्यात्महा । अयमर्थः—यद्यपि जीवो 'न जायते म्रियते'वेति, 'नायं हन्ति न ह इति च शास्त्रान्नित्य एव, तथापि मूढो जनः देहादन्यमात्मानं न वेद, किंतु देहमेवात्मानं

तमपि हत्वा अन्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीति आत्महा सर्वोऽज्ञः । यस्तु परमा-
र्थात्मा असावपि सर्वदाऽविद्यया हत इव विद्यमानफलाभावादिति सर्वे आत्महन एवा-

---

स्थूलोऽहं कृशोऽहं रुग्णोऽहं वृद्धोऽहं मनुष्योऽहमित्यादिव्यवहारात् । एवं देहात्माभिमानादेव राजादि-
भीत्या देहात्मानमवसादयितुं मूर्खाश्शिरश्छेदजलाग्निपातादिकं कुर्वन्ति । राजा च देहात्मानमव-
सादयितुमेव सापराधस्य शिरश्छेदादिदण्डं विधत्ते । एवं देहात्मघातुका आत्महनस्तावत्सर्वत्र विदिता
एव । नच जीवेन देहो नाश्यत इति वाच्यं, हस्तेन खड्गेन वा देहस्य नाश्यमानत्वेन देहस्य जीव-
नाश्यत्वादर्शनात् । नहि स्वहस्तमन्यहस्तं वा छिन्दन् मूर्खो जीवो हस्तं छिनत्तीति मन्यते, किं स्वह-
मेव ममैव शत्रोरेव वा हस्तं छिनत्तीति मन्यते । अतो न मूर्खस्य जीवे आत्मबुद्धिः, किंतु देह
एवात्मबुद्धिरिति ।

एवं लोकतः प्रसिद्धमेव तावदात्महिंसनम् । अथ शास्त्रादपि तत्प्रसिद्धमेव । शास्त्रेण हि
पूर्वोत्तरजन्मनी प्रसाधिते कृतविप्रणाशाकृताभ्यागमरूपदोषद्वयनिरासाय दृश्यमानधनिकत्वदरिद्रत्वरुग्णत्व-
नीरोगत्वादिभोगवैचित्र्यनिर्वाहाय च । तच्च जन्म कर्माधीनं विचित्रकर्मकृतत्वात्पश्वादिविचित्रदेहानाम् ।
तच्च कर्म कर्त्रधीनं कृष्यादिकर्मणः कर्त्रधीनत्वदर्शनात् । सच कर्ता देहात्मैव । देहस्यैव स्नानादिकर्मसु
व्यापृतिदर्शनात् । इन्द्रियात्ममन आत्मबुद्ध्यात्मानस्तु देहात्मन एवानुग्राहकाः । तांश्चेन्द्रियाद्यात्मनो
मूढो न जानातीति देहात्मैव सर्वविदितः कर्ता । अयं हि देहात्मा प्रारब्धं कर्म सुखदुःखादिभोगेन
नाशयित्वा देहात्मान्तरोत्पादकं च कर्म कृत्वा प्रकृतदेहात्मानमुत्तरजन्मनि फलोपभोगार्थं नाशयति ।
एवमनादिकालादारभ्य कोटिशो देहात्मनो नाशितवानयमज्ञः, उत्तरत्र च कोटिशो देहात्मनो नाश-
यिष्यति च । अतोऽयमात्महेत्युच्यते, आत्मत्वेन गृहीतानां देहानां नाशकत्वात् । नच देहानां
नाशेऽपि कथमात्मनाश इति वाच्यं, आत्मत्वेन गृहीतत्वाद्देहस्य तन्नाशे आत्मनाशस्तज्जन्मन्यात्मजन्म
च सम्भवत्यज्ञदृष्ट्या । अज्ञो हि देहात्माभिमानाज्जातोऽहं मरिष्येऽहमिति मन्यते ।

ननु आत्मत्वेन गृहीतस्यापि देहस्यानात्मत्वान्न देहात्महिंसको भवत्यात्महेत्यत आह—
यस्त्विति । देहात्मादयो मिथ्यात्मानः- वस्तुतोऽनात्मत्वात् । प्रत्यगात्मा तु परमार्थात्मा- वस्तुत
आत्मत्वात्, सत्यत्वाच्च । य इत्युपक्रमात्स इति शेषः । सोऽसावपीति । सोऽपीति वा पाठः ।
अविद्यया सर्वदा हत एव । अविद्यया परमार्थात्मानमपि हिंसन्त्येवाज्ञा इत्यर्थः । कथमविद्याहतत्वं
परमार्थात्मानः- 'नायं हन्ति न हन्यते' इत्युक्तलक्षणस्येत्यत आह—विद्यमानेति । विद्यमानफलं
सत्त्वस्य फलमित्यर्थः । तदभावात् । यो हि निध्यादिः पदार्थः स्वगतधनादिना लोकं तर्पयति स
निध्यादिर्विद्यत इत्युच्यते । यस्त्वन्यः पिशाचाद्याक्रान्तस्स न लोकोपकारक इति विद्यमानोऽपि न
विद्यत इत्येवोच्यते । तथा विद्यमानोऽपि स्वर्गादिरनुपलभ्यमानत्वादविद्यमान इव भात्यत्र । एवं विद्य-
मानोऽप्यात्मा सच्चिदानन्दमयः अविद्ययावृतत्वादज्ञैर्नोपलभ्यते, नापि तेषां स्वानन्दानुभवं प्रदत्त इत्यविद्य-

विद्वांसः। यस्तु इतरः यथोक्तात्मदर्शी स उभयथाप्यात्मनात्मानं न हिनस्ति न हि
याति परां गतिं, यथोक्तं फलं तस्य भवतीत्यर्थः ॥२८॥

सर्वभूतस्थमीश्वरं समं पश्यन्न हिनस्त्यात्मनाऽऽत्मानमित्युक्तम्। तदनुपपन्नं
कर्मवैलक्षण्यभेदभिन्नेष्वात्मस्वित्येतदाशङ्क्याह—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तदात्मानमकर्तारं स पश्यति ॥२९॥

प्रकृत्येति। प्रकृत्या प्रकृतिः भगवतो माया त्रिगुणात्मिका 'मायां तु प्रकृतिं
दिति मन्त्रवर्णात्। तया प्रकृत्यैव च नान्येन महदादिकार्यकरणाकारपरिणतया
वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैः यः पश्यति

---

मान इव निरर्थक एव। तथा चाज्ञाः विद्यमानस्य सच्चिदानन्दरूपस्याप्यात्मनोऽविद्यया हेतुना
मानत्वनिरर्थकत्वकल्पका इति कृत्वा सर्वेऽविद्वांस आत्महन एव। आत्मत्वेन परिगृहीतस्य दे
परमार्थात्मनश्च दर्शितविधया नाशकत्वादिति भावः। उभयथापीति। आत्मत्वेन परि
देहात्मनः क्षयापादनरूपेण परमार्थात्मनो नैरर्थक्यापादनरूपेण च मार्गद्वयेनेति भावः। आत्मानं
देहात्मानं प्रत्यगात्मानं चेति भावः। अपि चानात्मानं देहान्तःकरणादिकमात्मत्वेन परिगृह्य
स्संसारित्वकल्पनं परमेश्वरे आत्मनीश्वरभिन्नजीवत्वकल्पनं ज्ञानसम्पादनयोग्यं मानुषादिजन्म प्राप्य
कालादारभ्याज्ञानादात्मनि प्रसक्तस्य संसारस्य ज्ञानेनानिर्मूलनं चेत्येवमादीन्यात्महिंसनान्यज्ञानं
रीतज्ञानां च सम्भवन्तीति बोध्यम्। यथोक्तफलं मोक्षः।

यत्तु रामानुजः—न हिनस्ति रक्षति संसारान्मोचयति। ततः परां गतिमात्मानं
तन्मन्दम्—संसारान्मोचयतीत्यनेनैवात्मप्राप्तेस्सिद्धत्वेन पौनरुक्त्यात्। न ह्यात्मा नाम कश्चि
प्राप्यते, किंतु प्राप्त एवात्मनि प्रकृतिसङ्गप्रयुक्तस्संसारो नश्यतीति ॥२८॥

प्रकृत्येति। स्वेषामात्मनां गुणास्सत्त्वादयस्तत्प्रयुक्ता अन्ये च ज्ञानादयः।
ष्टाख्यानि। तेषां वैलक्षण्यं वैषम्यं तत्प्रयुक्तो यो भेदस्तेन भिन्नेषु। भिन्ना एवात्मानः,
गुणकर्माश्रयत्वाद्घटादिवदिति प्रयोगः। एवं भिन्नेष्वात्मसु विषये एकेश्वरात्मदर्शनं पूर्वोक्त
मिथ्याज्ञानरूपत्वादिति भावः। सर्वशः कर्माणि प्रकृत्यैव च क्रियमाणानि यः पश्यति स
मकर्तारं पश्यति। तदेतिपदच्छेदे यदेति शेषः। भगवतः प्रत्यगभिन्नपरमात्मनस्सम्बन्धिनी
त्यैवेत्येवकारार्थमाह—नान्येनेति। नात्मनेत्यर्थः। प्रकृत्यात्मभ्यामन्यस्याभावात्। ननु
कर्मणां क्रियमाणत्वात्कथं 'प्रकृत्येत्युक्तमत आह—महदिति। महत्त्वबुद्धिः। आदिपदान्म
देहग्रहणम्। महदादीनि च कार्यकरणानि च महदादिकार्यकरणानि तेषामाकारस्स्वरूपं तेन
परिणामं प्राप्तया। कार्यकरणसङ्घातात्मिकयेति यावत्। स्थूलसूक्ष्मशरीरद्वयरूपप्रकृत्येति
कर्माणि त्रिविधानि वाचिकमानसिककायिकभेदादित्यभिप्रेत्याह—वागिति। वाचा मनसा

थाऽऽत्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः; निर्गुण-
याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥२९॥

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—

यथा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥३०॥

यदेति । यदा यस्मिन्काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्मिन्नात्मनि

---

रब्धुं शक्यानि योग्यानि वा वाङ्मनःकायारभ्याणि भाषणमननगमनादीनि । सर्वप्राकारैरिति ।
र्वथेत्यर्थः । सर्वविधानीति यावत् । बहुभिर्ज्ञानसाधनमार्गैरिति वोपलभते जानाति । स पूर्वोक्त-
ासावात्मा तद्वात्मा तं तदात्मानम् । कुतो ह्यकर्तृत्वमत आह—सर्वोपाधिविवर्जितमिति । मनोवागा-
पाधिप्रयुक्तत्वान्मननादिकर्तृत्वस्येति भावः । परमार्थं सत्यमात्मानं द्रष्टुं शीलमस्येति परमार्थदर्शी ।
ात्मविदिति यावत् । यथार्थदर्शीति वा । ये त्वात्मानं कर्तारं पश्यन्ति ते तु विपरीतदर्शिन एवेति
ावः । निर्गुणस्य सत्त्वादिगुणरहितस्य । अत एवास्य गुणप्रयुक्तो भेदो न सम्भवतीति भावः ।
कर्तुरिति । अत एवास्य कर्मप्रयुक्तो भेदो न सम्भवतीति भावः । नापि स्वरूपप्रयुक्तो भेदोऽस्ये-
ाह—निर्विशेषस्येति । एवंविधस्यात्मन आकाशस्येव भेदे प्रमाणानुपपत्तेः प्रमाणाभावादित्यर्थः ।
दे यत्प्रमाणं परैरुपन्यस्तमसच्छास्त्रादिरूपं तस्यानुपपत्तेरयुक्तत्वादिति वाऽर्थः । तस्मान्नास्ति स्वगुण-
र्मवैलक्षण्यभेदभिन्नत्वमात्मनः, प्राकृतगुणादीनामात्मसम्बन्धित्वाभावात् ।

अत्र वैलक्षण्यशब्दस्य विशेषार्थकत्वमङ्गीकृत्य गुणानां कर्मणां वैलक्षण्यानां च भेद इत्यपि
याख्यानं सम्भवति । निर्विशेषस्येत्युपसंहारभाष्यानुसारात् । एवं निरुपाधिकस्यात्मनो गुणकर्मादि-
युक्तभेदाभावात्सिद्धमेकेश्वरत्वम् । नच पार्थक्येनोपलभ्यमानानां गुणादीनां का गतिरिति वाच्यं,
कृतिरेव गतिरिति दर्शितत्वाद्भगवता । नच कर्मणामेव प्रकृत्याश्रयत्वं दर्शितमिति वाच्यं, गुण-
युक्तत्वात्कर्मणां गुणानां च प्रकृत्याश्रयत्वस्य भाष्ये दर्शितत्वात्त्रिगुणात्मिका मायेति । विशेषाणां च
गुणकर्मप्रयुक्तत्वात्प्रकृत्याश्रयत्वमेव । स्वरूपप्रयुक्तविशेषाणां च प्रकृतिस्वरूपप्रयुक्तत्वात्प्रकृत्याश्रयत्वमेव ।
था च स्वगुणकर्मवैलक्षण्यभेदभिन्नत्वं कार्यकरणसङ्घाताकारपरिणतप्रकृतेरेव, न तु मूलप्रकृतेस्तस्या
भिन्नत्वात् । नाप्यात्मनस्तस्य गुणादिरहितत्वात् । एवं च सति, अज्ञानान्मूढाः प्रकृतिं तद्धर्मांश्चात्म-
यध्यस्य सगुणः कर्ता सविशेषो बहुविध आत्मेति प्रतियन्ति द्वैतिनस्तार्किकादयः । यथा वा तेभ्योऽ-
प्यतिमूढा देवो मनुष्यः पशुरात्मेति । तस्मात्स्थितमद्वैतम् ॥२९॥

यदेति । यदा विद्वानिति शेषः । भूतपृथग्भावमेकस्थमनुपश्यति तत एव च विस्तारं
पश्यति । तदा ब्रह्म सम्पद्यते । एकस्थं यथातथेति क्रियाविशेषणम् । एकस्थं भूतपृथग्भावमिति वा ।
भूतान्येव पृथग्भूतानि न त्वात्मा । तच्च भूतपृथक्त्वमात्मन्यध्यस्तमविद्ययेत्येकस्थमित्युच्यते । सर्वेषां
भूतानामात्मनि कल्पितत्वात्तद्गतं पृथक्त्वमात्मन्यध्यस्तमिति भावः । अनुपश्यतीत्यत्रोपसर्गार्थमाह—

स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशं, अनु आत्मानं प्रत्यक्षत्वेन पश्यति- 'आ
सर्व'मिति, तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकासं 'आत्मतः प्राण आत्मत
आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरो
वात्मतोऽन्न'मित्येवमादिप्रकारैः विस्तारं यदा पश्यति, ब्रह्म सम्पद्यते ब्रह्मैव भवति
तस्मिन्काल इत्यर्थः ॥३०॥

---

शास्त्रेति। अनुसृत्य पश्यत्यनुपश्यति। आत्मस्थभूतपृथग्भावदर्शनेनात्मदर्शनं सिद्धमित्यभिप्रे
आत्मानं प्रत्यक्षत्वेन पश्यतीति। घटस्थं जलमिति दर्शनस्य यथा जलाधिकरणघटदर्शनात्मक
भूतपृथग्भाव आत्मस्थ इति दर्शनस्य पृथग्भूतभूताधिकरणात्मसाक्षात्कारात्मकत्वमिति भावः।

कथमात्मनः प्रत्यक्षत्वेन दर्शनमत आह—आत्मैवेदं सर्वमिति। 'आत्मैवेदं स
श्रुत्युक्तविषयाऽऽत्मानं प्रत्यक्षत्वेन पश्यतीत्यर्थः। इदं रजतं शुक्तिरितिवदिदं सर्वमात्मेति बा
नाधिकरण्यमुपपद्यत इति भावः। तस्मादेवेत्यात्मनस्सकाशादेवेत्यर्थः। उत्पत्तिविकासा
भूतानामिति भावः। विकाशोऽतिशयः। आत्मन एव सर्वभूतोत्पत्तिंप्रति हेतुत्वे श्रुतिमाह—आ
प्राणो भवतीति शेषः। आत्मतो मनो भवति। आत्मत आकाशो भवति। आत्मत इति
स्तसिः। आत्मन इत्यर्थः। स्मरः कामो भवति। आत्मतस्तेजो भवति। आत्मत आपो भ
आत्मत आविर्भावतिरोभावौ जन्मनाशौ भूतानामिति शेषः। भवतः। आत्मतोऽन्नं भवति।
भूतान्यात्मनस्सकाशादेव भवन्ति। आत्मन्येव वर्तन्ते। आत्मन्येव लीयन्ते। यथा स
रज्जोरेव भवति रज्जावेव वर्तते रज्जावेव लीयते। तस्माद्यथा सर्पाभासो रज्जुरेव तथा ज
त्मैव। इति यस्यात्मतत्त्वसाक्षात्कारस्स ब्रह्म सम्पद्यते ब्रह्म प्राप्नोति। फलितमाह—ब्रह्मैव भव
यद्वा ब्रह्मेति प्रथमान्तं सम्पद्यतेर्भवत्यर्थः। आत्मन एव ब्रह्मत्वादित्यभिप्रायः। 'ब्रह्मविद्ब्रह्मैव भव'तीति।

यत्तु रामानुजः—भूतानां देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिलक्षणं पृथग्भावमेकस्थं प्र
यदा पश्यति नात्मस्थं तत एव प्रकृतित एवोत्तरोत्तरपुत्रपौत्रादिभेदविस्तारं च यः पश्यति
सम्पद्यते अनवच्छिन्नं ज्ञानैकाकारमात्मानं प्राप्नोतीत्यर्थ इति, तन्मन्दम्—भूतानामेव प्र
देवत्वादिकं भूतगतमेव नात्मगतमित्यनुसन्धानेनेष्टसिद्धौ देवत्वादिकस्य प्रकृतिगतत्वानुसन्धाने
भावात्। तथा आधुनिकप्रपञ्चस्य प्रकृतिपरिणामत्वानुसन्धानेनैवेष्टसिद्धौ उत्तरोत्तरपुत्रपौत्रादि
प्रकृतिपरिणामत्वानुसन्धानेन फलाभावाच्च। स्वमते अणोरात्मनः परिच्छिन्नत्वेनापरिच्छिन्नत्वासम्भ
संसारदशायामणुत्वेऽपि मुक्तौ विभुत्वमिति वादेऽणुत्वपरित्यागविभुत्वस्वीकाररूपविकारप्रसङ्गादनि
नित्यत्वप्रसङ्गाच्च। यदितु संसारदशायामात्मपरिच्छेदकस्य बुद्धिरूपोपाधेर्मुक्तौ नष्टत्वाद्विभुरेवात्मे
गम्यते, तर्हि औपाधिकमेवाणुत्वं जीवस्य, न स्वाभाविकमिति कृत्वा विभुरेव जीव इत्यभ्यु
एवं विभुत्वे सिद्धे ईश्वरत्वं च सिद्धमेव। सर्वव्यापित्वस्येश्वरलक्षणत्वात्। नच जीवो नेश्वरः
ईश्वरवद्विभुरिति वाच्यं, एकस्यैव व्यापित्वं सम्भवति नानेकेषामिति। अनेकसत्त्वे नैकस्या
व्यापित्वं सम्भवति परस्परव्याप्त्यभावात्परस्परस्येति ॥३०॥

एकस्यात्मनस्सर्वदेहात्मत्वे तद्दोषसम्बन्धे प्राप्त इदमुच्यते—

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥३२॥

अनादित्वादिति। अनादित्वादनादेर्भावोऽनादित्वं, आदिः कारणं तद्यस्य नास्ति तदनादि। यद्ध्यादिमत्तत्स्वेनात्मना व्येति; अयं त्वनादित्वान्निरवयव इति कृत्वा न

---

अनादित्वादिति। सर्वदेहात्मत्वे सर्वेषां देहानां भूतानामात्मत्वे अन्तरात्मत्वेसति तदन्तःस्थितौ सत्यामित्यर्थः। तेषां भूतानां ये दोषास्सुखदुःखादिविकारास्तेषां सम्बन्धे आत्मनः प्राप्ते सति अनादित्वादितीदं पद्यमुच्यते- आदिमत्कार्यमित्यर्थः। तद्घटादिरूपं कार्यं स्वेनात्मना स्वस्वरूपेण व्येति विकारमाप्नोति, घटादेः कपालत्वादिप्राप्तिरूपविकारदर्शनादिति भावः। यदादिमत् तद्व्येति सावयवत्वाद्यथा घटः। अनादिमानात्मा तु न व्येति निरवयवत्वात्। आदिमत्त्वसावयवत्वविकारित्वानां न क्वापि वैयधिकरण्यलक्षणो व्यभिचारः। यत्सावयवं वस्तु तस्यावयवसङ्कोचविकासाद्यात्मकः स्वरूपविकारः स्यात्, स कथं निरवयवस्य? यच्च सावयवं वस्तु तस्य द्व्यणुकत्र्यणुकादिक्रमेणोत्पत्तिः स्यात्, सा चोत्पत्तिः कथं निरवयवस्य? तस्मान्निरवयवस्यात्मनो न कार्यत्वं, नापि विकारित्वं- सावयवस्यैव देहादेस्तदुभयमपीति कृत्वा अनादित्वादित्यनेन निरवयवत्वं तत्पूर्वकं निर्विकारत्वं चात्मनस्सिद्धमित्यभिप्रायः। एतेनाकाशादिलक्षणं यत्किञ्चिज्जायमानं वस्तु तत्सर्वं सावयवमेव सादित्वादिति सिद्धम्। सूक्ष्मावस्थावस्थितद्रव्यस्य स्थूलावस्थाप्राप्तिरेवोत्पत्तिर्बीजांकुरवन्मृत्पिण्डघटवच्च। साचावयवविकासं विना न घटत इति कृत्वा यत्कार्यं तत्सावयवमिति व्याप्तेर्न क्वापि व्यभिचारः।

ननु कार्येऽप्याकाशे निरवयवत्वदर्शनादस्ति व्यभिचारः- उक्तं हि भाष्यकृद्भिरेवाकाशवन्निरवयवत्वादिति चेत्, मैवम्—निर्धान्ये घटे यावानाकाशोऽस्ति तावानाकाशस्तस्मिन्नेव सधान्ये घटे न दृश्यते, तस्मिन्नेव पुनर्धान्यपरिपूर्णे घटे नैवोपलभ्यते कियानप्याकाशः। अयं चोपलभ्यमानो घटाकाशस्य सङ्कोचनाशादिराकाशावयवनाशं विना न घटते। तस्मात्सावयव एवाकाशः। एवं मठाकाशोपि सावयव एव। निर्जने मठे यावानाकाशस्तावान्न हि सजने तस्मिन्नेव मठे उपलभ्यते। तथा महाकाशोऽपि सावयव एव। गृहादिरहिते बहिर्यावानाकाश उपलभ्यते तत्रैव बहिर्गृहादिनिर्माणे सति तावत आकाशस्यानुपलम्भात्। नचावकाशस्यैव वृद्धिक्षयौ नाशस्येति वाच्यं, अवकाशातिरिक्तस्याकाशस्यैवादर्शनात्। एवं सावयवत्वादे'वात्मन आकाशस्सम्भूत' इति सम्भवश्रवणमाकाशस्योपपद्यते। नच भाष्यविरोधः- मतान्तराभिप्रायेण तद्वचनस्योपपत्तेः। कथमन्यथा घटादिभिराकाशस्य परिच्छेदस्स्यात्? घटादयो हि स्वावयवैराकाशमाक्रम्य तत्राकाशबुद्धिं निरस्य घटादिबुद्धिं जनयन्ति। अत एव हि घटादीनामाकाशपरिच्छेदकत्वम्। नचैवमात्मनोऽप्यहङ्कारादिपरिच्छेद्यत्वात्सावयवत्वमेवेति वाच्यं, यदि सर्पेण रज्जोः परिच्छेदस्स्यात्तर्ह्यहङ्कारादिभिस्स्यादात्मनोऽपि परिच्छेदः। नहि

व्येति । तथा निर्गुणत्वात्सगुणो हि गुणव्ययाद्व्येति; अयं तु निर्गुणत्वाच्च न व्येति ।

सर्प इव कालत्रयेऽप्यस्त्यात्मन्यहङ्कारादिकं जगत्, येन जगता परिच्छेदस्स्यादात्मनः । अत एव जगतो मिथ्यात्वं ब्रवीति श्रुतिः- 'अतोऽन्यदार्त'मिति ।

नहि मिथ्यावस्तुना सत्यवस्तुनः कोऽपि परिच्छेदादिस्सम्भवति- मृगतृष्णोदकेन भूमेः [illegible]त्वादर्शनात् । अत एव 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतिरुपपद्यते । तस्मादपरिच्छिन्नो निरव[illegible]नादिरविकार्येवात्मा । गगनादिकं तु परिच्छिन्नं सावयवं सादि सविकारं च । नच महाकाशो[illegible]च्छिन्न एवेति वाच्यं, घटमठादिभिः परिच्छेदाभावेऽपि महाकाशस्य ब्रह्माण्डकर्परपरिच्छेदो[illegible] भूतलमारभ्य ब्रह्माण्डोर्ध्वकर्परपर्यन्तं व्याप्य वर्तमानो ह्याकाशो महाकाश इत्युच्यते । तस्माद्[illegible] ब्रह्माण्डोर्ध्वकर्पराभ्यां परिच्छिन्न एव महाकाशः । एवं परिच्छिन्नत्वादेव सावयवः । एवं साव[illegible]देव सादिः । एवं सादित्वादेव सविकारश्च । अत एव दृश्यत्वमनात्मत्वं चाकाशस्य । [illegible] आकाश एव स्यादात्माऽऽधुनिकाचलमतरीत्येति संक्षेपः ।

नन्वेवं सावयवत्वेसत्याकाशस्य घटादिभिस्संयोगस्स्यादेव तस्येति कथमुक्तमाकाश[illegible] घटादिसंयोग इति ? कथं वा घटसंयुक्त आकाश इत्याकाशसंयुक्तो वा घट इति व्यवहारा[illegible] भूतलं घटसंयुक्तमितिवदिति चेदुच्यते—आकाशस्य सूक्ष्मत्वात्तदवयवा अप्यतिसूक्ष्मा इति[illegible]माकाशावयवानां घटावयवसंयोगो दुर्विज्ञेयः । एवमाकाशावयवानां तत्संयोगस्य च दुर्विज्ञेय[illegible] सावयव आकाश इति घटसंयुक्त आकाश इति वा न लोकव्यवहारः । अमुमेव लोकव्यवहार[illegible]त्याकाशवन्निरवयवत्वादित्युक्तमाचार्यैः । लोकप्रसिद्धं हि दृष्टान्ततया वक्तव्यम् । शास्त्रदृ[illegible] सावयव एवाकाशः । घटादिभिस्तस्य परिच्छेददर्शनादिति ।

नन्वेवं निरवयवस्यात्मनः क्षेत्रसंयोगो नास्तीत्यत्र किं दृष्टान्तम् ? न हि दृष्टान्तशून्यं[illegible] ग्राह्यः । न ह्यात्मनोऽन्यन्निरवयवं किञ्चिदस्ति- यस्य दृष्टान्तत्वेन स्वीकार्यत्वं स्यादिति चेत्, मैव[illegible] अन्वयदृष्टान्ताभावेऽपि व्यतिरेकदृष्टान्तसत्त्वेन तदर्थस्य ग्राह्यत्वात् । आत्मनः क्षेत्रसंयोगो [illegible] निरवयवत्वाद्व्यतिरेकेण घटादिवदिति प्रयोगसिद्धेः । एवमन्वयदृष्टान्ताभावादेव 'न तत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति श्रुत्युपपत्तिः । ननु स्वरूपतो विकाराभावेऽप्यात्मनो गुणतो विकारस्स्यादत आह- निर्गुणत्वादिति । नीलगुणवतश्चूतफलादेः परिणामावस्थायां नीलगुणनाशपूर्वकपीतगुणावि[illegible] रूपगुणविकारो दृश्यते । तथा काठिन्यगुणतस्तण्डुलसञ्चयस्य पाकवशात्काठिन्यगुणनाशपूर्वकं[illegible] गुणाविर्भावरूपगुणविकारो दृश्यते । तथा निद्रादशायां तमोगुणवतोऽन्तःकरणस्य प्रबोधे तमोगुण[illegible] पूर्वकरजोगुणाविर्भावरूपगुणविकारो दृश्यते । एवं यस्य कस्यापि गुणस्य क्षेत्रज्ञेऽभावान्न विका[illegible] प्रसङ्गस्तस्येति भावः । व्यय इति । विकार इत्यर्थः । अयं परमात्माऽव्ययः- अनादित्वान्निर्गुणत्वा[illegible] यद्धि सादि सगुणं च तद्विक्रियते यथा घट इति ।

परमात्माऽयमव्ययः; नास्य व्ययो विद्यत इत्यव्ययः । यत एवमतश्शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते, तथापि न करोति । तदकरणादेव तत्फलेन न लिप्यते । यो हि कर्ता स कर्मफलेन लिप्यते । अयं त्वकर्ता, अतो न फलेन लिप्यत इत्यर्थः ।

कः पुनर्देहेषु करोति लिप्यते च ? यदि तावदन्यः परमात्मनो देही करोति लिप्यते च, तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं 'क्षेत्रज्ञं चापि मां विद्धी'त्यादि । अथ नास्तीश्वरादन्यो देही कः करोति लिप्यते च ? इति वाच्यं, परो वा नास्तीति सर्वथा

---

यद्वाऽयं परमात्मा स्वरूपतोऽविक्रियः- अनादित्वाद्व्यतिरेकेण घटवत् । अयं परमात्मा गुणतश्चाव्ययः- निर्गुणत्वाद्घटवदिति । यत एवमव्ययः परमात्मा तत इति शेषः । **शरीरस्थ इति ।** ननु सर्वत्रावस्थितस्यात्मनः कथं शरीर एव स्थितिरित आह—**शरीरेष्विति ।** उपलब्धिस्साक्षात्कारः । बुद्धौ खलु विदुषामात्मसाक्षात्कारस्सा च बुद्धिस्सूक्ष्मशरीरभूता स्थूलशरीरस्था चेति बुद्धिस्थस्यात्मनश्शरीरस्थत्वव्यपदेश इति भावः । केन न लिप्यतेऽत आह—**तत्फलेनेति ।** न लिप्यते न सम्बद्ध्यत इत्यर्थः । कर्तुरेव कर्मफलसङ्गरूपो लेपः, न त्वकर्तुः । न ह्येकस्मिन् भोजनादिकर्म कुर्वति सति तस्मादन्योऽकर्ता तत्फलेन क्षुधापनयनादिना लिप्यते । तस्मादकर्तुरात्मनो न कर्मफललेपः । एवं कर्मफललेपाभावादेव निर्विकारत्वमात्मनः । नहि कर्मफलमननुभवतो भवेद्विकारित्वं क्वापि सुखदुःखकामक्रोधजन्मवृद्ध्यादीनां कर्मफलानामनुभवस्यैव विकारत्वात् । तस्मादविकारित्वादात्मनो न कर्मकर्तृत्वं तत्फलभोक्तृत्वं वा सम्भवति विरोधात् । ततश्चाकर्तुरविकारस्यात्मनश्शरीरादिदोषसम्बन्धप्रसक्तिर्नास्ति । सति दोषसम्बन्धे आत्मनस्सविकारत्वप्रसङ्गात् । सति चाकर्तृत्वे आत्मनश्शरीरादिकर्मकृतदोषसम्बन्धायोगाच्च । तस्मादकर्ताऽभोक्ता निर्विकारो निर्गुणोऽनादिरेक आत्मेति सिद्धान्तः ।

ननु यदि देहस्थ आत्मा न करोति लिप्यते न च तर्हि कोऽन्यो देहेऽस्मिन्नहं कर्ता सुखादिभोक्ता चेत्यभिमन्यमानः ? इत्याक्षिपति—**कः पुनरिति ।** किं देहेऽकर्तुरभोक्तुश्चात्मनः कश्चिदन्यो देही विद्यते उत न ? आद्ये- 'क्षेत्रज्ञं चापि मां विद्धी'त्यादिशास्त्रविरोधः । द्वितीये तु—अनुभवविरोध इति भावः । तस्मात्पर ईश्वरादन्यस्संसारी जीवो नास्तीति न वाच्यं, ईश्वरस्य संसारित्वायोगात् । उपलभ्यमानसंसारस्य दुरपलापत्वेनेश्वराद्भिन्नस्य संसारिणो जीवस्यावश्यमभ्युपगन्तव्यत्वाच्चेति भावः । एवं पूर्वपक्षयद्भिर्वैशेषिकैस्साङ्ख्यैर्हतबौद्धैश्च भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तमित्यन्वयः । वैशेषिकास्सगुणमीश्वराद्भिन्नं चात्मानं वदन्ति । साङ्ख्यास्तु नास्त्येवेश्वर इति वदन्ति । दैवादज्ञानाद्वा हता नाशिताः पुरुषार्थाद्भ्रंशिता बौद्धास्तु देहमेवात्मानं वदन्ति ।

तस्मादमीभिश्श्रीकृष्णेन सर्वज्ञेश्वरेण भ्रमप्रमादादिदोषगन्धशून्येन प्रोक्तमुपनिषत्सम्मतं च दर्शनं ज्ञानं मतमिति वा जीवेश्वराभेदरूपमिति भावः । **परित्यक्तमेव ।** दर्शितपूर्वपक्षस्य स्वयं समाधानमनुपलभमानत्वादिति भावः । किमिति परित्यक्तमत आह—**सर्वथेति ।** दर्शनमिति कर्तुरत्रान्वयः ।

दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैस्साङ्ख्यैर्वै
तत्रायं परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' इति । अविद्यामात्रस्व
करोति लिप्यत इति व्यवहारो भवति, न तु परमार्थत एकस्मिन् परमात्मनि

---

दर्शनं सर्वथा दुर्विज्ञेयं विज्ञातुमशक्यम् । ननु स्वदुर्विज्ञेयत्वमात्रेण किं दर्शनं दुष्यतीत्यत
दुर्वाच्यं चेति । वक्तुमशक्यमित्यर्थः । अस्मिन्दर्शने दर्शितपूर्वपक्षस्य समाधानमस्माकं स्वं
समाधाता चान्यो नास्ति समाधानस्य दुर्वचत्वात् । अत एव दर्शनमपि दुर्विज्ञेयं दुर्वा
भावः । यद्वा परो नास्तीति न वाच्यम् । ननु कुतो न वाच्यं, सुवचमेव परो नास्तीत्यत
सर्वथेति । अस्य समाधानमिति शेषः । दर्शितपूर्वपक्षस्य समाधानमस्माकं दुर्विज्ञेयम
दुर्वाच्यं च । इति मत्वेति शेषः । वैशेषिकादिभिर्दर्शनं परित्यक्तमित्यन्वयः ।

ननु किं वैशेषिकाद्यभिमतरीत्या नास्त्यत्र परिहारोऽत आह—तत्रेति । उक्तपूर्वपक्ष
परिहारमेव भगवदुक्तं दर्शयति—स्वभाव इति । तमेव विवृणोति—अविद्येति । अविद्या
तदेवाविद्यामात्रं तदेव स्वभावोऽविद्यामात्रस्वभावः । अविद्यामात्रमित्यर्थः । स्वभावशब्दस्येह
इति भावः । परमात्मनस्स्वभावभूतत्वादविद्यायाः । करोति कर्म लिप्यते च तत्फलेन
कर्ताऽहं भोक्तेतिव्यवहारो भवति । कर्ताऽहं भोक्ताऽहमित्यनुभवसिद्धः कर्तृत्वभोक्तृत्वलक्षण
परमात्मनोऽविद्याकृत एवेत्यर्थः । स्वभावस्त्विति तुशब्दार्थमाह—नत्विति । तदिति कर्तृत्वं
चेत्यर्थः । न त्वस्तीत्यन्वयः ।

अयं भावः—किमविद्यावस्थायां देहे कः करोति लिप्यते चेति त्वं पृच्छसि ? उ
वस्थायाम् ? आद्ये- अविद्यया आत्मनि कल्पितस्य साभासाहङ्कारस्य कर्तुर्भोक्तुश्च सत्त्वा
जीवेश्वरभेदस्यास्माभिस्स्वीकृतत्वादस्त्येवेश्वराद्भिन्नो जीवस्संसारी आत्माऽहङ्कारान्योन्याध्या
कर्ताऽहं भोक्ताहमित्यभिमन्यमानः । तदाश्रयश्च सर्वोऽपि व्यवहार इति नाज्ञानुभवविरोधः । नहि
कर्ताऽहं भोक्तेत्यनुभवः । किं त्वज्ञानामेव । अज्ञविषया ह्यविद्यावस्था । अस्यां चावस्थायां
जीवेश्वरैक्यमुच्यत इति न गीताशास्त्रस्याविद्वदनुभवस्य च परस्परं विरोधः- विभिन्नविषयत्वात् ।
चापीत्यादिकं हि विद्यादशावस्थितं जीवेश्वराद्वैतं ब्रूते । तस्मादविद्यावस्थायां देहे
करोति लिप्यते च । द्वितीये-- न कोऽपि करोति लिप्यते च । विद्यया
नाशितायां तत्कृताध्यासस्यापि नाशादसंसारीश्वर एव जीव इति कर्तारं भोक्ता
महङ्कारमात्मन्यध्यस्य हि कर्ताऽहं भोक्ताऽहमित्यभिमन्यतेऽज्ञः । अध्यासाभावे कर्तृ
त्वादिकम् ? सुषुप्तौ जीवस्याध्यासाभावेन संसारादर्शनात् । अयं चाध्यासोऽज्ञानमूल इति
ज्ञानेन कथमध्यासस्स्यात् ? तस्मान्नास्ति विद्यावस्थायां कर्ता भोक्ता चेश्वरादन्यो जीवः । किं
तृभोक्त्रीश्वर एव जीवः । नचानुभवविरोधः- कर्ताऽहं भोक्तेति विद्वदनुभवाभावात् । नचाविद्व

अत एतस्मिन्परमार्थसाङ्ख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृता विद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥३१॥

विरोधः- अविद्यादशाविषयत्वादविद्वदनुभवस्य । नहि विभिन्नविषययोर्बाधः- विद्वदनुभव एव विद्यादशाविषयः विद्याविद्यादशयोर्भेदात् । विदुषां चाविद्यादशाऽयोगादविदुषां च विद्यादशायोगात् । इमामेव दशामधिकृत्य- 'क्षेत्रज्ञं चापि मां वि'द्धीति गीताशास्त्रं प्रवर्तितं भगवता । तस्मात्परमार्थतोऽसंसारीश्वर एव जीवः । अज्ञानात्तु जीवस्संसारी भिन्न ईश्वरादिति मूढानां व्यवहारः । यथा परमार्थतो नीरूपमेव गगनं बालानां त्वज्ञानान्नीलं गगनमितिव्यवहार इति । **अत एवेति** । परमार्थत आत्मनि कर्तृत्वाद्यभावादेवेत्यर्थः । **एतस्मिन्निति** । प्रकृतगीताशास्त्रोक्त इत्यर्थः ।

**परमार्थसाङ्ख्यदर्शन इति** । साङ्ख्यं द्विविधं परमार्थसाङ्ख्यमपरमार्थसाङ्ख्यं चेति । कपिलेन देवहूतये प्रोक्तं तत्त्वमसीत्याद्युपनिषत्सिद्धं च जीवेश्वराभेदविषयमात्मज्ञानं परमार्थसाङ्ख्यं तदेवेहाप्युच्यते । तत्त्वसङ्ख्यानात्मकं निरीश्वरं साङ्ख्यं त्वपरमार्थम् । तत्र यत्परमार्थसाङ्ख्यरूपं दर्शनं मतमद्वैतमिति यावत् । **ज्ञानमिति वा** । तत्र स्थितानामत एव ज्ञाननिष्ठानां ज्ञाने ब्रह्मात्मदर्शन एव निष्ठा नितरां सर्वदा स्थितिर्येषां तेषामत एव तिरस्कृतस्सर्वोऽपि कर्तृत्वादिलक्षणोऽविद्याव्यवहारो यैस्तेषां विद्यया नाशितत्वादविद्यायास्तत्प्रयुक्तस्य सर्वव्यवहारस्यापि तिरस्कारो लोप इति यावत् ।

परमहंसपरिव्राजकानां कुटीचकबहूदकहंसपरमहंसाख्यचतुर्विधपरिव्राजकमध्ये तुरीयाणां सन्न्यासिनामित्यर्थः । **एतेन** कुटीचकादीनां दण्डकमण्डलुतर्पणादिलक्षणं किञ्चित्कर्मास्तीति सूचितम् । **कर्माधिकारो नास्तीति** । अनेनासंन्यस्तानां श्रौतस्मार्तविहितकर्मपरित्यागो नरकावह इति सूचितं-- तेषां तत्राधिकारसत्त्वात् । येषां यत्राधिकारस्तैस्तत्रावश्यं प्रवर्तितव्यमन्यथा नरकादिदुःखं स्यात्- यथा येषां मन्त्रिभृत्यादीनां यत्र मन्त्रसेवादौ राजविहिते कर्मण्यधिकारस्तैस्तत्र प्रवर्तितव्यमन्यथा राजदण्डदुःखं स्यात्तद्वदिति भावः । **भगवतेति** । य एव प्रवृत्तिलक्षणं निवृत्तिलक्षणं च मार्गद्वयं निर्माय तच्च वेदेन प्राकश्य तदनुविधायिभ्यो भक्तेभ्योऽभ्युदयं निश्श्रेयसं च फलं वितरन् तदननुविधायिनो नरकपातनादिना शिक्षयन् सर्वेश्वरस्सर्वनियन्ता सर्वज्ञस्सर्वविच्च भवति, यस्माद्भीत्यैव 'भीषास्माद्वातः पवत' इत्यादिश्रुत्युक्तविधया वातसूर्यचन्द्राग्नीन्द्रब्रह्मादयस्स्वं स्वमधिकारं निर्वर्तयन्ति यस्माद्भीत्या मृत्युरपि धावति, तेन भगवता दर्शितमिदं शास्त्रं केनापि नातिवर्तनीयमित्यभिप्रायाद्भगवता दर्शितमित्युक्तम् । **तत्रतत्रेति** । 'वेदाविनाशिन'मित्यादिप्रकरणेष्वित्यर्थः ।

**यत्तु रामानुजः**---अयं परमात्मा देहान्निष्कृष्टस्वभावेन निरूपितः शरीरस्थोऽप्यनादित्वादनारम्भत्वादव्ययो व्ययरहितः । निर्गुणत्वात्सत्त्वादिगुणरहितत्वान्न करोति, न लिप्यते देहस्वभावैर्न लिप्यत इति, **तत्तुच्छम्**--- देहाद्यपेक्षयैवास्य परमात्मत्वं, न त्वीश्वरापेक्षया । प्रत्युत ईश्वर एव जीवात्मापेक्षया परमात्मेति धिगस्य दर्शनम् । किं भगवतो व्यासस्य जीवात्मानं निरूपयिष्यतः प्रत्य-

गात्मेति जीवात्मेति वा पदं नास्फुरयेन परमात्मेत्यसकृद्ब्रूयादपरमात्मानं किं वा प्रत्यगात्मेति जीवा-त्मेति वा कथने जीवस्य देहाद्यपेक्षया न सिद्ध्यत्युत्कर्षः? देहापेक्षया जीवस्योत्कृष्टत्वं बौद्धाति-रिक्तसर्वजनविदितमेवेति किं तत्प्रतिपादनेन फलं वा? न करोतीतिपदसन्निधानसामर्थ्यान्न लिप्यत इत्यस्य कर्मफललेपेऽर्थे सिद्धे तं विहाय देहस्वभावैरिति कथं स्वकपोलकल्पितं देहान्निष्कृष्टस्वभावस्य देहस्वभावालेपस्सिद्ध एवेति किमर्थं तद्वचनम्? न हि गृहस्थस्य गृहस्वभावलेपः प्राप्नोति, येन शरीरस्थस्य शरीरस्वभावलेपः प्राप्नोतीति तत्प्रतिषेधाय देहस्वभावैर्न लिप्यत इति वक्तव्यं स्यात्। ह्यप्राप्तप्रतिषेधो न्याय्यः।

यच्च वेदान्तदेशिकः—ज्ञानसङ्कोचरूपव्ययस्य ज्ञानादिगुणानां देहादिप्रेरणरूपकर्तृत्वस्य चात्मनि सत्त्वादिति, तदप्ययुक्तम्—ज्ञानसङ्कोचादिसत्त्वेऽविकारत्वहानेः। न हि स्वरूपेण एव विकाराभाव आत्मनो न तु धर्मत इति सङ्कोचः कल्पयितुमुचितः। तथासति पक्षेणाविकारत्ववि पक्षेण सविकारत्वप्रसङ्गात्। नहि श्रुतिः क्वाप्यात्मानं सविकारं ब्रूते—सविकारत्वेसत्यनित्यत्वापत्तेः। ज्ञानेच्छादयोऽन्तःकरणगुणा एव, न त्वात्मन इति प्रागेव स्थापितं। सत्त्वादिगुणप्रयुक्ताश्च ज्ञानादिगुणाः 'तत्र सत्त्वं निर्मलत्वात्प्रकाशक'मित्यादेर्वक्ष्यमाणत्वात्। मूलभूतसत्त्वादिगुणनिषेधे कथं तत्कार्यभूत ज्ञानादिगुणवत्त्वमात्मनस्स्यात्? न कथमपि। यद्यात्मनः प्रेरणकर्तृत्वं स्याचर्हि न करोतीत्ययुक्तं स्याद्वचनम्। नहि प्रेरणं कुर्वन्नात्मा न करोतीत्युच्येत। नहि न करोतीत्यस्य प्रेरणादेरन्यन्न करो-तीति सङ्कोचः कल्पयितुमुचितः। तथासति देहोऽपि न करोतीति वक्तुं शक्यत्वात्। नहि देहेनापि सर्वं कर्म क्रियते पर्वतोत्क्षेपणवायुस्तम्भनादेरशक्यत्वाद्देहस्य। न चैवमात्मनः प्रेरकत्वाभावेऽन्त-र्यामिश्रुतिविरोध इति वाच्यं, अयस्कान्तशिलालोहन्यायेनाकर्तुरप्यात्मनस्सकाशाच्छरीरादिप्रेरणसम्भवात्। न ह्यस्मद्धृदि यः कोऽपि त्वमेवं कुरु- इति प्रेरणं कुर्वन्नुपलभ्यते। नापि करणरहितस्येश्वरस्य प्रेरण-मपि सम्भवति- करणव्यापारत्वात्प्रेरणस्य वाचिकादिरूपस्य। अथ वाऽऽत्माश्रया मायैव प्रेरयति देहादिकं तच्च मायाकर्तृकं प्रेरणमात्मन्युपचर्यतेऽज्ञानात्। यथा देहे गच्छति सति देही गच्छतीति। एवंभूतानि मयायां प्रेरयन्त्यां सत्यां मायी प्रेरयतीश्वर इति व्यवहारः। इदमेव वक्ष्यति भगवानिह गीताशास्त्रे 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि माय'येति। नच माया करणमेव भ्रामणं प्रति न कर्त्री किं त्वीश्वर एव कर्तेति वाच्यं, 'न तस्य कार्यं करणं च विद्यत' इति शास्त्रादीश्वरस्य करणरहितत्वात्। माया हीश्वरस्य शक्तिर्न तु करणम्। न ह्यग्निशक्तिरग्नेः करणम्। तस्मादीश्वरशक्तिभूतमायानिष्ठं प्रेरणरूपं कर्मेश्वरेऽध्यस्तमिति नेश्वरः प्रेरणकर्ता। किं त्वकर्तैवेश्वर आत्मा। 'प्रकृत्यैव च कर्माणीति ह्युक्तम्। यद्यत्कर्मतया प्रसिद्धं लोके यो यश्च गुणतया प्रसिद्धस्तत्सर्वमपि प्रकृतिगतमेव अत एव 'केवलो निर्गुणश्च, निष्कलं निष्क्रियं शान्त'मित्यादिश्रुत्युपपत्तिः। नच देहाद्याकारपरिणत प्रकृतिकार्यमेव कर्म न मूलप्रकृतिकार्यमिति वाच्यं, गमनादिकर्मणां परिणतप्रकृतिकार्यत्वेऽपि प्रेरणाख्य कर्म मूलप्रकृतिकार्यमेवेति। तत्र च देहप्रेरणमिन्द्रियाकारप्रकृतिकार्यमिन्द्रियप्रेरणं मनःप्रकृतिकार्यं

किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥३२॥

यथेति । यथा सर्वगतं व्याप्यपि सत्सौक्ष्म्यात्सूक्ष्मभावादाकाशं खं नोपलिप्यते न सम्बध्यते; सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥३२॥

किंच—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥३३॥

यथेति । यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविस्सविताऽऽदित्यः, तथा तद्वन्महाभूतादिधृत्यन्तं क्षेत्रमेकस्सन्प्रकाशयति । कः ? क्षेत्री परमात्मेत्यर्थः । रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेष्वेक एवात्मा, अलेपकश्चेति ॥३३॥

---

मनःप्रेरणं च बुद्धिप्रकृतिकार्यं बुद्धिप्रेरणं च मायाकार्यमिति मायायाः परमप्रेरकत्वं सिद्ध्यति । नच जडाया मायायाः कथं प्रेरकत्वम् ? तद्धि चेतनधर्म इति वाच्यं, ईश्वरचैतन्याभाससत्त्वेन मायायास्तदुपपत्तेः । तस्मान्मायाद्वारेणैव प्रेरकत्वमीश्वरस्य स्रष्टृत्वादिवन्न तु स्वत इत्यकर्तैवेश्वर आत्मेति संक्षेपः । हे कौन्तेय ! अनादित्वान्निर्गुणत्वाच्चाव्ययोऽयं परमात्मा शरीरस्थोऽपि न करोति न लिप्यत इत्यन्वयः ॥३१॥

यथेति । सर्वगतमप्याकाशं सौक्ष्म्याद्धेतोर्यथा नोपलिप्यते तथा सर्वत्र देहेऽवस्थितोऽप्यात्मा नोपलिप्यते—न सम्बद्ध्यत इति । घटादिदोषैरिति भावः । सर्वत्र देहे सर्वेषु देहेष्वित्यर्थः । नोपलिप्यते देहादिगतकर्तृत्वभोक्तृत्वादिदोषैर्न सम्बध्यते । देहाद्याश्रयकर्मणा बुद्धिभोग्यकर्मफलेन च नात्मनः कोऽपि सम्बन्धगन्ध इति भावः । देहादिभिर्नित्यसंयुक्तत्वमात्मनो यदिहोक्तं रामानुजेन तत्रागेव निरस्तमसङ्गे निरवयवे आत्मनि देहादिसङ्गासम्भवादिति ॥३२॥

यथेति । एको रविर्यथाकृत्स्नमिमं लोकं प्रकाशयति हे भारत ! क्षेत्री तथा कृत्स्नं क्षेत्रं प्रकाशयति । यथा सूर्यः प्रतिपुरुषं दृश्यमानोऽप्येकस्सन्नेव समस्तं जगदवभासयति तथा क्षेत्रज्ञ ईश्वरः प्रतिदेहं दृश्यमानोऽप्येकस्सन्नेव समस्तं क्षेत्रं प्रकाशयति । तस्मात् द्रष्टृपुरुषभेदेऽपि सूर्यैकत्ववद्देहभेदेप्यात्मैकत्वमेव । तत्रानेकत्वबुद्धिस्तु भ्रम एव- 'एको देवस्सर्वभूतेषु गूढ' इति मन्त्रवर्णाच्च । तथा सर्वावभासकस्यापि सूर्यस्य यथा न सर्वदोषलेपस्तथा सर्वावभासकस्य सर्वज्ञस्य क्षेत्रज्ञस्य न क्षेत्रदोषलेपश्चेति भावः । उभयथापीत्युक्तमेवार्थं प्रपञ्चयति—रविवदिति । सर्वक्षेत्रेष्वात्मन एकत्वे अलेपत्वे च रविर्दृष्टान्तभूत इत्यर्थः । अलेपक इति । लेपकरहित इत्यर्थः । अमुं लेपयितुं कोऽपि न शक्नोतीत्यर्थः । लेपकाभावादेव लेपरहित इति भावः । अलेप इति बहुव्रीहेः कप्प्रत्यय इति वा ।

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः—

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेक-
योगोनाम त्रयोदशोऽध्यायः ।

क्षेत्रक्षेत्रज्ञयोरिति । क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथा प्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्यप्रसादोपदेशजनितमात्मप्रत्यायिकं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च, भूतानां प्रकृतिरविद्यालक्षणाऽव्यक्ताख्या तस्या भूत-

---

लेपरहित इत्यर्थः । प्रकाशयतीत्यनेन च भासकस्य भास्यगुणदोषसम्बन्धो नास्तीति सूच्यते । दीपचक्षुस्सूर्यादीनां घटादिगतनैल्यादिगुणदोषसम्बन्धादर्शनादिति भावः । अत एवासङ्गस्वप्रकाश आत्मा सत्त्वादिगुणादिसङ्गस्तस्मिन्नविद्ययाध्यस्त एव, . न तात्त्विक इति सिद्धमसंसारीश्वरत्वं क्षेत्रज्ञस्य । यत्किलोपन्यस्तमादौ- क्षेत्रज्ञं चापि मां वि'द्धीति तदिह समापितम् ।

रामानुजस्तु-- एकैकं क्षेत्रमेकैकः क्षेत्रज्ञो भासयतीत्युवाच, तदसत्—कृत्स्नं क्षेत्रमिति कृत्स्नत्वविशेषणसङ्कोचायोगात । आपादतलमस्तकं सर्वं शरीरं भासयतीत्यर्थो हि क्षेत्रं भासयतीत्यनेनैव सिद्ध्येत् । नच प्रतिदेहं भिन्ना एवात्मानः- अन्यथा सुखादिव्यवस्थाऽसिद्धेरिति वाच्यं, सुखादीनामन्तःकरणधर्मत्वेनान्तःकरणानां भेदेन च तद्व्यवस्थोपपत्तेः । नच साक्ष्येकत्वे चैत्रसाक्ष्यनुभूतस्य मैत्रान्तःकरणेनानुसन्धानप्रसङ्ग इति वाच्यं, साक्षिणा यदन्तःकरणावच्छेदेन यदनुभूतं तेनैवान्तःकरणेन तत्स्मर्यत इत्यतिप्रसङ्गाभावात् ॥३३॥

क्षेत्रेति । एवं ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञयोरन्तरं भूतप्रकृतिमोक्षं च ये विदुस्ते परं यान्ति। समस्तेति । समस्तस्याध्यायार्थस्य क्षेत्रज्ञाध्यायार्थस्य उपसंहारोऽर्थः प्रयोजनं यस्य सोऽयं तथोक्तश्श्लोकः । क्षेत्रज्ञस्यातीन्द्रियत्वेन घटपटयोरिव क्षेत्रक्षेत्रज्ञयोरन्तरं द्रष्टुं मांसमयं लोकप्रसिद्धं चक्षुरिन्द्रियं न प्रभवतीत्यभिप्रेत्याह भगवान्—ज्ञानचक्षुषेति, आत्मप्रत्यायिकमिति । आत्मप्रत्ययजनकमित्यर्थः । येन ज्ञानेनायमात्मा ब्रह्मेतिनिश्चयो भवति तदित्यर्थः । चक्षुर्वदर्थावभासकत्वाद्ज्ञाने चक्षुष्ट्वारोपः । भूतानां कार्याणां प्रकृतिः कारणं मायेत्यभिप्रायादाह—अविद्येति । अविद्या अज्ञानं लक्षणं स्वरूपं यस्यास्सा । अव्यक्तमित्याख्या नाम यस्यास्सा अव्यक्ताख्या । तस्या इति षष्ठी। अभावगमनं नाशापादनं तावत् ज्ञानचक्षुषा क्षेत्रात्क्षेत्रज्ञं विविच्य ज्ञात्वा पश्चात् क्षेत्रज्ञात्सकाशात् क्षेत्रं विवेचयेत् । एवं विविच्यमाने तु क्षेत्रे क्षेत्रं शनैरभावमेव प्राप्नोति- निस्तत्त्वत्वात् । क्षेत्रस्याभावापादनं च ये विदुः ।

२१

प्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति, यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म, न पुनर्देहमाददत इत्यर्थः ॥३४॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये प्रकृतिपुरुष-विवेकयोगो नाम त्रयोदशोऽध्यायः।

---

यद्वा गमनं प्राप्तिमित्येवार्थः। क्षेत्रज्ञाद्विवेचितं क्षेत्रं स्वयमेवाभावं गच्छतीत्यर्थः। इतीममर्थं ये विदुः कालत्रयेऽपि क्षेत्रज्ञ एक एवाहं ब्रह्मास्मि, क्षेत्रं तु कदाचिदपि नास्तीति ये विदुरिति यावत्। ते परं ब्रह्म यान्ति प्राप्नुवन्ति। नित्याप्तस्य ब्रह्मणः कथं पुनः प्राप्तिरत आह—न पुनर्देहमाददत इति। पुनर्जन्म न भजन्त इत्यर्थः। देहस्वीकारस्यैव जन्मत्वादिति भावः। संसारान्मुच्यन्त इति यावत्। विदेहकैवल्यं प्राप्य परब्रह्मस्वरूपेण वर्तन्ते न पुनस्संसारायागच्छन्तीति फलितार्थः। क्षेत्रक्षेत्रज्ञयोरन्तरदर्शनं विवेचनप्रकारश्चोक्तोऽपि पुनरुच्यतेऽलसानुग्रहार्थम्। तथाहि- दृश्यं सगुणं सक्रियं सविकारमनित्यं क्षेत्रं तद्यदिदन्तयोपलभ्यते, द्रष्टा निर्गुणो निष्क्रियो निर्विकारो नित्यः क्षेत्रज्ञः। योऽस्मिन्देहेऽहमिति स्फुरत्यहङ्कारसाक्षित्वेन सच क्षेत्रज्ञस्सच्चिदानन्दरूपः। तच्च क्षेत्रमनृतजडदुःखात्मकं क्षेत्रमस्ति भाति प्रियं चेति व्यवहारसिद्धानां सत्ताभानानन्दानां क्षेत्रज्ञकारणधर्माणां क्षेत्रकार्ये संक्रान्तानां पृथक्करणे तु क्षेत्रशब्दवाच्यं किमपि नावशिष्यते। नचैवं क्षेत्रज्ञादपि सत्तादिपृथक्करणे किमपि नावशिष्यत इति वाच्यं, यः पृथक्करोति तस्यैव क्षेत्रज्ञस्यावशिष्टत्वात्तस्य च सच्चिदानन्दरूपत्वेन तस्मात्तेषां पृथक्करणायोगाच्च। तथा चैक एव क्षेत्रज्ञोऽहं ब्रह्मास्मि- मयि कालत्रयेऽपि क्षेत्रं नास्ति- मिथ्यात्वात् क्षेत्रस्येति य आत्मवित्स शोकं तरति। 'तरति शोकमात्मवि'दिति श्रुतेः। स ब्रह्म भवति 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेरिति भावः।

यत्तु रामानुजः—भूतप्रकृतिमोक्षं भूतमय्याः प्रकृतेर्भूतानां जीवानां प्रकृतेर्वा मोक्षसाधनममानित्वादिकमवगमय्याचरन्ति ते परं निर्मुक्तबन्धनमात्मानं यान्तीति, तत्तुच्छम्—ये विदुरिति मूलस्य ये विदित्वा आचरन्तीत्यर्थकल्पनस्यायुक्तत्वात्। अज्ञानातिरिक्तप्रकृतिनामकतत्त्वान्तराभ्युपगमस्य, असङ्गपुरुषस्य तत्प्रकृतिकृतसत्यसङ्गाभ्युपगमस्य, संसारदशायामिव मुक्तिदशायामपि प्रकृतिरस्ति, तत्सङ्गस्तु नास्ति पुरुषस्येति कल्पनस्य, मुक्तिदशायामपि न जीवस्य ब्रह्मभावप्राप्तिः, किंतु स्वरूपप्राप्तिरेवेति वर्णनस्य च श्रुतिस्मृतिन्यायादिविरुद्धत्वात्। नहि श्रुतौ प्रधानमिति किंचित्तत्त्वान्तरं श्रूयते—'ईक्षतेर्नाशब्द'मित्यशब्दं हि तत्। श्रुत्यसिद्धत्वाद्धि तस्याशब्दत्वं व्यासेनैव प्रतिपादितम्। नापि तत्सत्त्वे श्रुत्यतिरिक्तं किंचित्प्रमाणं पश्यामः। अपरमार्थसाङ्ख्यबुद्धिपरिकल्पितं हि तत्। तत एवानुमानिकत्वं तस्य। तच्चानुमानिकाधिकरणे निराकृतं भगवता व्यासेनैव। तया च प्रकृत्या असङ्गपुरुषसंसृष्ट इति कथनं महद्विचित्रं- न ह्यसङ्गो निरवयवः पुरुषः केनचित्संसृज्यते। संसृष्टत्वे पुनरसङ्गत्व-

स्वरूपस्यैव नाशप्रसङ्गात् । यदि संसार इव मुक्तावपि प्रकृतिस्स्याचर्हि तया संसृज्येतैव पुरुषः । विभुत्वात्पुरुषस्य व्यापित्वात्प्रकृतेश्च । निरर्थकतत्सद्भावकल्पनस्य चाप्रमाणत्वात् । पुरुषस्य संसारयितृत्वं प्रकृतिसद्भावस्य फलम् । नच सत्त्वादिगुणरहिता परिशुद्धप्रकृतिर्मुक्तविषयेति वाच्यं, निर्गुणप्रकृतेरेवाभावान्निर्गन्धपृथिवीवत् । एवं प्रकृतिमुक्तस्य ब्रह्मभावाप्राप्तिश्च विरुद्धा- प्रकृतिविमोक्षेन तत्कार्यमहदादिसर्वोपाधिनाशान्निरुपाधिकस्य चापरिच्छिन्नस्यात्मनः परिपूर्णचैतन्यरूपत्वेन ब्रह्मभूतत्वाच्च । यद्यात्मा सावयवस्स्यात्तर्हि राहुणा चन्द्रस्येव प्रकृत्या तस्य ग्रासरूपो बन्धः स्यात् । तत्प्रयुक्तो मोक्षश्च स्यात् । सावयवत्वे चात्मनोऽनित्यत्वं स्यात् । अनित्यस्यात्मनो नित्यमोक्षो नैव युज्यते । किंच तव मते ईश्वरस्यैव प्रकृतिमोक्षो नास्तीति किं पुनर्जीवस्य । प्रकृतिपुरुषसंसृष्टो हीश्वरः । य ईश्वरस्स्वस्यैव प्राप्तं प्रकृतिसङ्गं निवारयितुं नेष्टे स कथमन्यस्य जीवस्य तं निराकुर्यात् ? प्रकृतिमुक्तस्य वा जीवस्य प्रकृतिसंयुक्तेश्वरसङ्गो दुर्वार इतीश्वरद्वारा पुनः प्राप्तश्च मुक्तावपि जीवस्य प्रकृतिसङ्गः । पटसंयुक्तघटसंयोगाद्भूतलस्येव पटसङ्गः । नचेश्वरस्य यत्रांशे प्रकृतिसङ्गस्तत्रांशे न पुरुष- सङ्गः, किं त्वन्यांश एवेति वाच्यं, निरवयवेश्वरस्य निरंशस्यांशकल्पनायोगात् । सांशत्वे चानित्यत्व- प्रसङ्गाद्घटादिवदीश्वरस्य । निष्कलश्रुत्या चेश्वरस्य सांशत्वं प्रतिषिद्धमसङ्गश्रुत्या च प्रकृत्यादिसङ्ग 'मेक- मेवाद्वितीय'मिति श्रुत्या च प्रकृत्यादिद्वैतं, तत्त्वमस्यादिश्रुत्या च जीवेश्वरद्वैतमशब्दमितिसूत्रेण च प्रकृते- रज्ञानातिरिक्ततत्त्वान्तरत्वं 'यो वै भूमा तदमृत'मिति श्रुत्या ब्रह्मण एकस्यैव नित्यत्वं सत्यत्वं च 'अतोऽन्यदार्त'मित्यनया सर्वद्वैतस्यासत्यत्वमनित्यत्वं च । उक्तार्थप्रतिपादिकास्स्मृतयस्तु 'मत्तः परतरं नान्यत्किंचिदस्ति धनञ्जय!' इत्याद्या इहैव ग्रन्थे द्रष्टव्याः । तस्माद्विरुद्धं परेषां दर्शनमग्राह्यमेव । श्रुतिस्मृत्याद्यनुगृहीतमद्वैतदर्शनमेकमेव ग्राह्यं मुमुक्षुभिरिति सर्वं शिवम् ॥३४॥

इति श्रीवेलङ्कोण्डोपनामक रामकविकृते श्रीमच्छङ्करभगवद्गीताभाष्यार्कप्रकाशे
प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ।

---

श्रीहयग्रीवाय नमः।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु।

## चतुर्दशोऽध्यायः।

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं- तत्कथमिति तत्प्रदर्शनार्थं 'परं भूय' इत्यादिरध्याय आरभ्यते। अथ वा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं, न तु साङ्ख्यानामिव स्वतन्त्रयोरित्येवमर्थं; प्रकृतिस्थत्वं गुणेषु च सङ्गस्संसारकारणमित्युक्तम्।

---

उत्पद्यमानं सर्वं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं- 'यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम्। क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ!' इति श्लोकेनेति भावः। तत्क्षेत्रक्षेत्रज्ञसंयोगाद्भूतानां जननमित्यर्थः। कथमितिशङ्कायां तत्प्रकारं प्रदर्शयितुं चतुर्दशाध्याय आरभ्यते भगवतेति शेषः। सङ्गत्यन्तरं दर्शयति—अथ वेति। ननु प्रकृतिपुरुषसंयोगाज्जगज्जायत इत्युक्तं; 'क्षेत्रज्ञं चापि मां वि'द्धीत्यादिना पुरुष एवेश्वर इति चोक्तं; ततश्च सिद्धमद्वैतस्य निरीश्वरसाङ्ख्यत्वं पुरुषातिरिक्तेश्वरानभ्युपगमादद्वैतमतेऽपीति शङ्कायां न वयं साङ्ख्या इव प्रकृतिपुरुषयोस्स्वतन्त्रयोरेव जगत्कारणत्वं ब्रूमः, किं त्वीश्वरपरतन्त्रयोरेव। यद्यपि साङ्ख्याः 'न प्रकृतिर्न विकृतिः पुरुष' इति पुरुषस्य जगत्कारणत्वं स्वातन्त्र्येण पारतन्त्र्येण वा न प्रतिपादयन्ति, किंतु स्वतन्त्रायाः प्रकृतेरेव तत्प्रतिपादयन्ति। तथापि छत्रिन्यायेन द्वयोरपीत्युच्यत इति बोध्यम्। एवमद्वैतमते क्षेत्रस्यैवेश्वरपरतन्त्रत्वात्क्षेत्रज्ञस्य चेश्वरत्वेन स्वतन्त्रत्वादुभयोरीश्वरपारतन्त्र्यकथनमपि छत्रिन्यायेनैवेति बोध्यम्।

अयं चेश्वरः क्षेत्रज्ञ उदासीनो न जगत्कारणं, किंतु प्रकृतिस्थो गुणसक्तश्चेत्यस्ति साङ्ख्याद्वैतमतयोर्महद्वैषम्यम्। साङ्ख्यमते प्रकृतिस्स्वतन्त्रा जगद्धेतुः पुरुषस्तूदासीनो न जगद्धेतुरिति। अद्वैतमते ईश्वरपरतन्त्रा प्रकृतिः, तत्संयुक्तः क्षेत्रज्ञश्चोभयं जगत्कारणमिति चाभ्युपगमात्। यद्वा विद्यादशायामेव क्षेत्रज्ञस्येश्वरैकत्वमद्वैतिनो वदन्ति, न त्वविद्यादशायाम्। अविद्यादशायां हि प्रकृतिस्थो गुणयुक्तश्च क्षेत्रज्ञ ईश्वरपरतन्त्र एव प्रकृतिवदिति कृत्वा ईश्वरपरतन्त्रयोः प्रकृतिपुरुषयोर्जगत्कारणत्वं वदतां सेश्वरसाङ्ख्यानामद्वैतिनां, प्रकृतिपुरुषौ स्वतन्त्रौ प्रकृतिश्च जगत्कारणमिति वदतां निरीश्वरसाङ्ख्यानां च महदस्ति वैलक्षण्यमित्येवं प्रदर्शनार्थमेव क्षेत्रज्ञस्य प्रकृतिस्थत्वं गुणेषु सङ्गश्च संसारकारणमित्युक्तम्। 'पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्म'स्विति श्लोकेनेति भावः। न चेश्वरस्यैव क्षेत्रज्ञस्य कथमीश्वरपारतन्त्र्यमिति वाच्यं, वस्तुत ईश्वरोऽपि क्षेत्रज्ञो मायया प्रकृतिस्थत्वादिना जीवभावमापन्नस्सन्नीश्वरपरतन्त्रो भवतीति। न च माययापि कथमयुक्तार्थस्योपपत्तिरिति वाच्यं, मायायां सर्वसम्भवादितिन्यायात्का नामानुपपत्तिः? मायया हि रज्जुरपि सर्पो भवति; गगनमपि नीलं भवति; मरुभूमिरपि जलप्रायप्रदेशो भवति; तल्पे

कस्मिन्गुणे कथं सङ्गः ? के वा गुणाः ? कथं वा ते बध्नन्तीति ? गुणेभ्यश्च मोक्षणं कथं स्यात् ? मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थं च श्रीभगवानुवाच—

श्रीभगवानुवाच— परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यद्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥१॥

परमिति । परं ज्ञानमिति व्यवहितेन सम्बन्धः । भूयः पुनः पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि प्रवक्ष्यामि । तच्च परं परवस्तुविषयत्वात् । किं तत् ? ज्ञानं सर्वेषां ज्ञानानामुत्तमं, उत्तमफलत्वात् । ज्ञानानामिति नाऽमानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति । तानि न मोक्षाय, इदं तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पाद-

---

शयानोऽपि देशान्तरे रथादिभिर्व्याप्रियते; स्वं छिन्नं शिरः स्वयमेव पश्यति; मृतोऽहमिति स्वयमेव रोदिति निद्रायां; चक्षुषस्तिमिरदोषादप्येकं चन्द्रमनेकत्वेन पश्यति; इन्द्रजालेनापि गगने हस्तिहर्म्यादयः कल्प्यन्ते दृश्यन्ते चास्मदादिभिः । तस्मादीश्वरस्यापि क्षेत्रज्ञस्य मायया पारतन्त्र्यादिकं घटत एव । अघटितघटनापटीयस्त्वान्मायाया इति ।

ननूक्तमेव किं तत इत्यत आह—कस्मिन्निति । तत्रेति शेषः । कस्मिन् गुणे क्षेत्रज्ञस्य कथं सङ्गः ? के वा गुणाः ? कथं क्षेत्रज्ञं बध्नन्ति ? कथं क्षेत्रज्ञस्य गुणेभ्यो मोक्षणं स्यात् ? मुक्तस्य च किं लक्षणम् ? इति प्राप्तानां प्रश्नानामुत्तरप्रदानार्थं चायमध्याय आरभ्यते—परमिति । अहमिति शेषः । भूयस्त इति शेषः । ज्ञानानां मध्ये उत्तमं परं तद्ज्ञानं प्रवक्ष्यामि । सर्वे मुनयो यद्ज्ञात्वा इतः परां सिद्धिं गताः । भूय इत्यनेन पूर्वमस्योक्तत्वमवगम्यत इत्यभिप्रेत्याह—पूर्वेष्विति । तत्त्वस्य दुर्बोधत्वात्पुनःपुनश्शब्दान्तरेण प्रतिपादनमिति भावः । प्रवक्ष्यामीति । प्रकर्षेण यथावद्वक्ष्यामि । परवस्तु ब्रह्म । तद्विषये ज्ञानेऽपि परत्वमुपचारादित्याह—परवस्तुविषयत्वादिति । यद्वा ज्ञानस्योत्कर्षापकर्षौ ज्ञेयाधीनौ, न तु स्वत इत्यभिप्रेत्य परवस्तुविषयत्वादित्युक्तम् । ननु प्रथमान्तं ज्ञानं ब्रह्मविषयं, षष्ठ्यन्तज्ञानानि किंविषाणीत्यत आह—यज्ञादीति । यज्ञ आदिर्येषां तानि यज्ञादीनि, तानि च तानि ज्ञेयवस्तूनि यज्ञादिज्ञेयवस्तूनि विषया येषां तानि तथोक्तानि । यज्ञयागपूर्तादिधर्मविषयाणीत्यर्थः । ननु षष्ठ्यन्तज्ञानशब्देन पूर्वाध्यायोक्ता अमानित्वादयो गृह्यन्तां, ते हि ज्ञानत्वेन प्रतिपादिता अत आह—नत्विति । ज्ञानसाधनान्येवामानित्वादीनि, न तु ज्ञानानीति भावः । ननु यद्ब्रह्मविषयं, यच्च धर्मविषयं तदुभयमपि सविषयज्ञानत्वेन तुल्यमेव । निर्विषयं चैतन्यरूपज्ञानमेवोत्तममत आह—उत्तमफलत्वादिति । ननु यज्ञादयोऽप्युत्तमफलान्येव स्वर्गादीनि दिशन्तीत्यत आह—तानि न मोक्षायेति । यज्ञादिविषयज्ञानानि यज्ञाद्यनुष्ठापनद्वारा स्वर्गादीन्येव दिशन्ति, न तु मोक्षं, निरतिशयपुरुषार्थो हि मोक्ष उत्तमफलम् । ननु ब्रह्मज्ञानमपि तादृशमेवेत्यत आह—इदं त्विति । ब्रह्मज्ञानं तु मोक्षाय भवतीति शेषः । अनुष्ठानापेक्षाऽभावश्चाधिकोऽत्र गुणोऽस्तीति बोध्यम् ।

अयं चार्थः परोत्तमशब्दाभ्यां सिद्ध इत्याह—परेति । परविषयमुत्तमफलकं च ज्ञानमपर-

नार्थम् । यद्ज्ञात्वा यद्ज्ञानं ज्ञात्वा प्राप्य मुनयस्सन्न्यासिनो मननशीलास्सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः ॥१॥

अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति—

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥

इदमिति । इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतत् । मम परमेश्वरस्य

---

विषयेभ्योऽनुत्तमफलकेभ्यो ज्ञानेभ्य उत्कृष्टमिति भावः । इदं ज्ञानं परापरवस्तुविषयाणां ज्ञानानां मध्ये परमुत्तमं च परवस्तुविषयत्वान्मोक्षाख्योत्तमफलवत्त्वाच्च । यत्परवस्तुविषयमुत्तमफलञ्च न भवति तद्ज्ञानमपरमनुत्तमं च, यथा घटज्ञानमिति प्रयोगः । पूर्वार्धोक्तस्य ज्ञानस्यैवेह यच्छब्देन ग्राह्यत्वात् । ज्ञानस्य च स्वप्रकाशस्य ज्ञानान्तरवेद्यत्वासम्भवात् तत्कल्पने चानवस्थादोषादाह—प्राप्येति । असन्न्यासिनां श्रवणमननाद्यनधिकाराद्गृहदारापत्यादिदोषणादिव्यग्रतया मननावकाशासम्भवाच्च मुनयो मननशीलास्सन्न्यासिन इत्युक्तम् । तत्त्वविदस्सकाशाद्ज्ञानं प्राप्य श्रुत्वेति यावत् । पश्चात्स्वयं मननं कृत्वेत्यर्थः । यत इमे सन्न्यासिनो मननशीलास्तत एव श्रुत्वा मननं कुर्वन्तीति भावः । यद्वा ज्ञानं प्राप्य; श्रवणमननादिना ज्ञानं लब्ध्वेत्यर्थः । सर्वे प्राचीना याज्ञवल्क्यादयः । देहबन्धनादिति । देहबन्धनं विहायेति ल्यब्लोपे पञ्चमी ।

यत्तु रामानुजः—सत्त्वादिगुणविषयमिदं ज्ञानं प्रकृतिपुरुषविषयज्ञानानामुत्तममित्याह—तत्तुच्छम्—सत्त्वादिगुणविषयज्ञानस्य प्रकृतिविषयज्ञानाद्भिन्नत्वासिद्धेः । प्रकृतेरेव हि गुणास्सत्त्वादयः । सत्त्वादिगुणवती हि प्रकृतिः । पुरुषविषयज्ञानस्य मोक्षप्रदस्य परमात्मवस्तुविषयस्य च कथं सत्त्वादिगुणविषयज्ञानापेक्षया भवेदनुत्तमत्वं, न कथमपीति । यच्च यद्ज्ञानं ज्ञात्वेति, तदप्यसत्—ज्ञानस्य ज्ञेयत्वायोगात् । ज्ञानं हि विषयि, ज्ञेयं तु विषयः । न हि विषयि विषयो भवेत् । अन्यथा घटज्ञानमपि घटो भवेत् ॥१॥

इदमिति । तेषां मोक्षं गतानां किं फलं, को लाभ इति शङ्कायामिदमिति पद्यमुच्यते । तस्याश्च मोक्षाख्यायास्सिद्धेर्गतेरैकान्तिकत्वं ध्रुवत्वं चोच्यते इदमितिपद्येन । इदं वक्ष्यमाणं परवस्तुविषयं ज्ञानमुपाश्रित्य प्राप्य मम साधर्म्यमागताः, मुक्ता इति यावत् । मुनय इति शेषः । सर्गेऽपि नोपजायन्ते प्रलये च न व्यथन्ति । मुक्तानामपुनरावृत्तिः फलमिति भावः । एतेन मोक्षस्य ध्रुवत्वं सिद्धम् । यदेव वक्ष्यमाणं तदेव पूर्वोक्तं चेत्यभिप्रेत्याह—यथोक्तमिति, ज्ञानमिति । अहं ब्रह्मास्मीत्याकारकमिति भावः । तत्प्राप्तौ साधनं दर्शयति—ज्ञानसाधनमनुष्ठायेति । ज्ञानसाधनाऽमानित्वाद्यनुष्ठानद्वारा ज्ञानं प्राप्येति यावत् ।

यद्वा इदं पूर्वोक्तं ज्ञानं ज्ञानसाधनममानित्वादिकमुपाश्रित्यानुष्ठाय । ततस्सम्यग्दर्शनप्राप्तिद्वारा मम साधर्म्यं समानोऽभिन्नो धर्मस्सच्चिदानन्दलक्षणं स्वरूपं यस्य तस्य भावः साधर्म्यं मत्स्वरूपतां मदभिन्न-

साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थः। न तु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोः
नभ्युपगमाद्गीताशास्त्रे। फलवादश्चायं स्तुत्यर्थमुच्यते। सर्गेऽपि सृष्टिकालेपि नोपजा
नोत्पद्यन्ते। प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते- न व्यथन्ते
त्यर्थः ॥२॥

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवस्सर्वभूतानां ततो भवति भारत! ॥३॥

ममेति। मम सर्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिस्सर्वभूता

---

स्वरूपत्वं मद्भावमिति यावत्। आगता ब्रह्मभूता इत्यर्थः। समानधर्मतेति। तुल्यधर्मत्वमित्यर्थ
ननु स्वत एव ब्रह्मभूतस्य कथं पुनः ब्रह्मभावप्राप्तिरुच्यतेऽत आह—स्तुत्यर्थ इति। ननु बद्ध
मोक्षाख्यं स्वरूपातिरिक्तं ज्ञानप्राप्यं किंचित्फलमस्तीति भावः। ब्रह्मण इति। हिरण्यगर्भस्य विना
काले द्विपरार्थावसाने। बहुवचनप्रयोगस्तु लोकव्यवहारसिद्धोपाधिभेदाभिप्रायेण, नत्वात्मभेदाभिप्राये
लोके हि शुको मुक्तो वामदेवो मुक्तो जनको मुक्त इत्येवं व्यवहारो दृश्यते। सच शुकत्ववामदेव
जनकत्वादिश्शरीरगत एव, न त्वात्मगतः- नामरूपाद्यभावादात्मनि।

यत्तु रामानुजः—साधर्म्यं सादृश्यमिति, तत्तुच्छम्—सर्वज्ञसर्वेश्वरसर्वशक्तिसर्वनियाम
सर्वजगत्सृष्टिस्थितिसंहारकर्तृसर्वगकल्याणगुणनिलयपरमात्मसादृश्यस्य किंचिद्ज्ञपरतन्त्राल्पशक्तिनियम्य
जगत्कर्तृनिर्गुणाणुस्वरूपजीवेऽसम्भवात्। नहि मुक्तावप्यणोर्जीवस्यासर्वगस्य भवितुमर्हति सर्वज्ञत्वसर्व
र्यामित्वादीश्वरधर्मसञ्चयः। नच मुक्तौ सर्वव्याप्येव जीव इति वाच्यं, तथासति बहूनां मुक्तजीवा
सर्वव्यापिनां सत्त्वेन सर्वभूतानां हृद्देशे ईश्वरवत्ते सर्वे जीवा अपि वर्तेरन्। नचेष्टापत्तिः- 'ईश्वरस्सर्व
भूतानां हृद्देशेऽर्जुन! तिष्ठ'तीति वक्ष्यमाणत्वेन सर्वे मुक्तजीवा हृद्देशे तिष्ठन्तीति काप्यप्रतिपादनेना
र्यामिब्राह्मणादिषु एकस्यैवेश्वरस्य सर्वभूतस्थितिप्रतिपादनेन च विरोधात्। बहुषु नियामकेषु स
एको बद्धजीवः केन नियमितं कुर्यात्? बहूनां नियामकेश्वराणां सत्त्वे कथमेकेश्वरत्वव्यवहारः! न
मुक्तजीवास्सर्वव्यापिनस्सन्तोऽप्यनियामकास्सन्तस्तूष्णीं वर्तन्त इति वाच्यं, तथासतीश्वरसाधर्म्यायोगात्
एतेषां मुक्तजीवानामीश्वरानियाम्यत्वे ईश्वरस्य सर्वेश्वरत्वाभावप्रसङ्गात्। तन्नियाम्यत्वे च बन्धमुक्त
रविशेषात्। अस्मद्धृदीश्वरसत्त्वं नियमनलिङ्गेनानुमीयते, अनन्तमुक्तजीवसत्त्वं तु केन प्रमा
वेद्यते? न केनापि। नच शास्त्रेणेति वाच्यं, शास्त्रे अनन्ता मुक्तजीवा भूतानां हृदि वर्तन्ते ईश्व
वदिति काप्यप्रतिपादनात्। किंच यत्प्रदेशे जीवास्सन्ति तत्प्रदेशे नेश्वर इति न स्यादीश्वरस्य स
व्यापित्वमपि। प्रकृतिपुरुषसंयुक्तेश्वरस्य प्रकृतिवियुक्तपुरुषस्य वा कथं साम्यम्? यदि मुक्तजीवेश्वर
कचिदंशे साम्यं कचिदंशे वैषम्यमित्युच्यते तर्हि बद्धजीवेश्वरयोरपि ज्ञातृत्वनित्यत्वाद्यंशे साम्यमस्
वेति व्यर्थं स्या'न्मम साधर्म्यमागता' इति वचनम्। आगतेः प्रागेव साधर्म्यसत्त्वादिति ॥२॥

ममेति। क्षेत्रक्षेत्रज्ञसंयोगो भूतकारणमित्युक्तं पूर्वाध्याये। स कीदृशस्संयोग इति शङ्का

कारणम् । सर्वकार्येभ्यो महत्त्वाद्भरणाच्च स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते । तस्मिन् महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि । क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहं, अविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । सम्भव उत्पत्तिस्सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्माद्गर्भाधानाद्भवति हे भारत ! ॥३॥

---

ईदृश इत्युच्यते ममेतिश्लोकेनेत्याह—क्षेत्रेति, स्वभूतेति । ईश्वरस्य सच्चिदानन्दत्वं मायित्वं चेत्यस्ति रूपद्वयम् । वस्तुतस्सच्चिदानन्दो व्यवहारतस्तु मायीति । तत्र व्यवहारत ईश्वरस्य स्वकीयत्वात्स्वभूतैव माया । ईश्वरशक्तेरेव मायात्वादिति भावः । नच स्वभूतेत्यत्र स्वशब्द आत्मवाची किं त्वात्मीयवाच्येवेत्याह—मदीयेति । ननु अव्यक्तस्य कथ महत्त्वं, व्यक्ते हि वस्तुनि महत्त्वमल्पत्वं वा निश्चेतुं शक्यमत आह—सर्वकार्येभ्य इति । सर्वकार्यापेक्षयाधिकत्वात्कारणस्य महत्त्वं प्रकृतेरिति भावः । ननु मिथ्याभूतायाः प्रकृतेः कथं ब्रह्मत्वम् ? सत्यं हि ब्रह्मेत्यत आह—स्वविकाराणामिति । महदहङ्कारभूताद्यात्मविकाराणां बृंहणत्वाद्वर्धकत्वाद्ब्रह्मत्वं प्रकृतेः । बृंहणाद्ब्रह्मेति व्युत्पत्तेरिति भावः । योनिरेवेति । प्रकृतिरेवेत्यर्थः । योनिप्रकृतिशब्दयोर्द्वयोरपि कारणवाचित्वात्प्रकृतौ योनिशब्दप्रयोगः ।

सर्वेति । सर्वेषां भूतानां प्रजापतीन्द्रादीनां प्राणिनां जन्मनः कारणं सृष्टिकर्तेत्यर्थः । यः हिरण्यगर्भः ब्रह्मा तस्य जन्मन उत्पत्तेर्बीजं कारणं क्षेत्रज्ञमिति यावत् । निक्षिपामीति । यथा पिता पुत्रजन्मनः कारणं रेतोरूपं गर्भं स्त्रीयोनौ निक्षिपति- तद्वदिति भावः ।

क्षेत्रे क्षेत्रज्ञं निक्षिपामीत्युक्तवाक्यतस्सिद्धमर्थमाह—क्षेत्रेति । क्षेत्रक्षेत्रज्ञ एव प्रकृतिद्वयं, तदेव शक्ती चिच्छक्तिर्जडशक्तिश्चेति यस्य स तथोक्तोऽहमीश्वरः । अविद्याकामकर्माण्येवोपाधयः तेषां स्वरूपमनुविधातुं शीलमस्येति तं तथोक्तमविद्याकामकर्मरूपोपाधितादात्म्याध्यासमापन्नमित्यर्थः । अविद्याकामकर्मयुक्तमिति यावत् । संसारस्य बीजानीमानि त्रीणीति भावः । अविद्या अज्ञानं, काम इच्छा, कर्मादृष्टं जन्मान्तरीयमिति विवेकः । केवलक्षेत्रज्ञस्य क्षेत्रसंयोगासम्भवादिदं विशेषणमुक्तम् । एतेन वस्तुत ईश्वरस्यापि क्षेत्रज्ञस्य जीवभावः प्राप्तोऽविद्ययेति सिद्धम् । अत एवास्येश्वरपारतन्त्र्यं प्रकृतिपारतन्त्र्यं च । एवंविधं जीवं क्षेत्रेण प्रकृत्या संयोजयामीत्येवं प्रकृत्या पुरुषे संयोजिते सतीश्वरेण ततो हिरण्यगर्भशरीरं जायते, तेन च तच्छरीराभिमानिना हिरण्यगर्भेण सर्वाणि भूतानि सृज्यन्त इत्याह—सम्भव इति ।

अयमभिप्रायः—प्रपञ्चावसाने क्षेत्रज्ञः स्थूलशरीरोपाधीनां सर्वेषां नाशे सति कारणोपाधिभिरविद्याभिस्सूक्ष्मशरीरोपाधिभिः कामाद्याश्रयैर्मनोबुद्ध्याद्यात्मकैर्लिङ्गैश्च सहितस्सन्नीश्वरप्रकृतौ मूलाज्ञाने निलीय वर्तते प्रलयावसानपर्यन्तं, ततः प्रलयावसाने स एव सोपाधिकः क्षेत्रज्ञ ईश्वरसङ्कल्पवशात्पुनः स्थूलशरीरैस्संयुज्यते; तानि च स्थूलशरीराणि न युगपदेवाविर्भवन्ति पूर्वमपि युगपदनष्टत्वात्, किंतु क्रमेणैव । तत्र चादौ हिरण्यगर्भाख्यं स्थूलशरीरं जायते, ततः क्रमेण प्रजापतिमन्वादय इति । अत

एव 'हिरण्यगर्भस्समवर्तताग्रे' इति श्रुतिः । पितृदेहात्पुत्रदेहवद्धिरण्यगर्भदेहात्प्रजापत्यादिदेहसम्भवा-द्धिरण्यगर्भस्य जगत्स्रष्टृत्वव्यपदेशश्चेति ।

ननु क्षेत्रज्ञं लिङ्गिनं क्षेत्रेण संयोजयति, ततो हिरण्यगर्भो जायत इत्ययुक्तं, हिरण्यगर्भस्य स्थूल-शरीरस्य जन्मनः प्राक्तेन सह क्षेत्रस्य संयोगासम्भवादिति चेत्, नैष दोषः—स्थूलशरीराकारपरि-णामोन्मुखप्रकृतिरिह क्षेत्रशब्दार्थः । तेन लिङ्गिनं योजयति, लिङ्गिसंसृष्टं च तत्क्षेत्रं स्थूलशरीराकारेण परिणतं भवति । यथा सजीवं जातं शरीरं पुनर्वृद्ध्या स्थौल्यं भजते तद्वदिति ।

ननु प्रपञ्चदशायां स्थूलोपाधिप्रयुक्त इव प्रलयदशायां सूक्ष्मोपाधिप्रयुक्तोऽस्त्येव क्षेत्रज्ञभेदः, तथाच क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्युक्तिरयुक्तेति चेत्, मैवम्—उपाधिभेदस्य क्षेत्रज्ञभेदाप्रयोजकत्वात् । न हि घटाद्युपाधिभेद आकाशं भेदयेत् । ननु मास्तु क्षेत्रज्ञभेदः, लिङ्गिभेदस्त्वस्त्येव- लिङ्गिनां परस्पर-भेदस्य सम्मतत्वात् । अन्यथाऽन्तःकरणाभेदे सुखदुःखादिसाङ्कर्यप्रसङ्गात् । अमी च लिङ्गिनस्सर्वे प्रलये ईश्वरप्रकृतौ निलीय वर्तन्त इत्युक्तं, तत्र कं लिङ्गिनं केन क्षेत्रेण संयोजयतीश्वरः प्रलयावसाने, इति चेदुक्तमेव भाष्यकारैर्हिरण्यगर्भजन्मनो बीजमिति । यस्य हिरण्यगर्भशरीरप्राप्तिहेतुभूतमदृष्टमस्ति, तं लिङ्गिनं हिरण्यगर्भशरीराकारपरिणामोन्मुखप्रकृत्या संयोजयति तावदीश्वरः । ततस्सचेतनं हिरण्य-गर्भशरीरं जायते, स च तच्छरीराभिमानी हिरण्यगर्भस्स्वयमन्यान् लिङ्गिनः क्षेत्रान्तरैस्संयोजयति, एवं सर्वभूतसम्भवो भवति- 'धाता यथापूर्वमकल्पय'दिति श्रुतेः । धाता विधाता हिरण्यगर्भो ब्रह्मा । न चैवं हिरण्यगर्भकर्तृके जगति कथमीश्वरस्य स्रष्टृत्वमिति वाच्यं, जगत्स्रष्टुर्हिरण्यगर्भस्यापि स्रष्टृत्वेनेश्वरस्य जगत्स्रष्टृत्वमिति । यथा पितृस्रष्टा पितामहः पौत्रस्यापि स्रष्टा तद्वत् । अत एव परमकारणत्व-मीश्वरस्येति ।

एतावता परमेश्वरः स्वप्रकृतौ निलीय वर्तमानं ब्रह्माधिकारप्राप्तियोग्यादृष्टशालिनं लिङ्गिनं क्षेत्रज्ञं स्वसङ्कल्पवशाद्धिरण्यगर्भशरीराकारपरिणामोन्मुखया प्रकृत्या संयोजयतीति फलितार्थस्सिद्धः 'मम योनि-र्महद्ब्रह्म तस्मिन् गर्भं दधाम्यह'मित्यस्य । प्रकृत्या क्षेत्रज्ञस्य संयोजनंनाम तत्तादात्म्याध्यासापादन-मध्यासलक्षणस्संयोग इति दर्शितत्वादाचार्यैः । अयं चाध्यासोऽविद्याकृत एवेति दर्शितं च । तस्मा-दविद्यामय एव सर्वस्सृष्ट्यादिव्यवहारः ।

रामानुजस्तु—अचेतनेऽपरप्रकृतिभूते महति ब्रह्मणि योनिभूते परप्रकृतिभूतं चेतनपुञ्जाख्यं गर्भं दधामि, भोगक्षेत्रभूतयाऽचेतनप्रकृत्या भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः । ततः संयोगाद्ब्रह्मादिस्तम्बपर्यन्तसर्वप्राण्युत्पत्तिरिति जगाद, तन्मन्दम्—चेतनपुञ्जस्य युगपदेव प्रकृतिसंयोगे सति युगपदेव ब्रह्मादिसर्वजगदुत्पत्तिप्रसङ्गात् । पुराणादिसिद्धब्रह्मप्रजापत्यादिपुत्रपौत्रादिक्रमविरोधाच्च । चेतनोपाधिभूतलिङ्गशरीरपुञ्जस्यापरप्रकृतित्वेन चेतनपुञ्जस्य परप्रकृतित्वमात्रासम्भवाच्च । न हि निरुपा-धिकचैतन्यस्य पुञ्जत्वं सम्भवतीति । अन्वयस्तु मम मदीया योनिः प्रकृतिर्महद्ब्रह्मेत्युच्यत इति शेषः । तस्मिन्महति ब्रह्मणि । अन्यत्सुगमम् । मम मदीयं योनिः कारणभूतं महद्यद्ब्रह्म प्रकृतिस्तस्मिन्निति रामानुजीयान्वयः ॥३॥

सर्वयोनिषु कौन्तेय ! मूर्तयस्सम्भवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥

सर्वयोनिष्विति । सर्वयोनिषु देवपितृमनुष्यपशुमृगादिसर्वयोनिषु हे कौन्तेय ! मूर्तयो देहसंस्थानलक्षणा मूर्छिताङ्गावयवा मूर्तयस्सम्भवन्ति यास्तासां मूर्तीनां ब्रह्म महत्सर्वावस्थं योनिः कारणमहमीश्वरो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥४॥

के गुणाः कथं निबध्नन्तीति, उच्यते—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥५॥

सत्त्वमिति । सत्त्वं रजस्तम इत्येवं नामानः । गुणा इति पारिभाषिकश्शब्दः, न

---

सर्वेति । हे कौन्तेय ! सर्वयोनिषु या मूर्तयस्सम्भवन्ति तासां महद्ब्रह्म योनिर्भवति । अहं बीजप्रदः पिता भवामि । सर्वयोनिष्वित्यत्रत्यसर्वशब्दार्थमाह—देवेति । आदिपदात्पक्षिसर्पादिग्रहणम् । योनयो जातयः । मूर्छिताः प्रवृद्धा अङ्गानि करचरणादीन्येवावयवा यसां ता मूर्छिताङ्गावयवाः । स्थावरजङ्गमात्मका देहा मूर्तय इति यावत् । सर्वावस्थं सर्वकार्यावस्थमत एव महद्ब्रह्म प्रकृतिः । बीजं गर्भं क्षेत्रज्ञलक्षणं प्रदत्त इति बीजप्रदः गर्भाधातेत्यर्थः । पितेति । यः प्राकृतः पिता स्त्रीयोनौ गर्भाधातृत्वेन प्रसिद्धस्स न गर्भाधाता, किंतु रेतोनिधातैव । स्त्रीयोन्याकारेणावस्थितायां प्रकृतौ बीजलक्षणगर्भाधाता तु परमेश्वर एव । यद्वा नार्या गर्भाधाता पुरुषः, पुरुषस्य गर्भाधाता तु परमेश्वरः । नहि केवलरेतोनिधनमात्रेण नार्या गर्भो जायते । तस्मात्परमेश्वरः रेतोरूपेणावस्थितायां प्रकृतौ क्षेत्रज्ञलक्षणं बीजं निदधाति, तेन पुरुषस्तावद्गर्भवान् भवति, पश्चात्स्वेन धृतं सजीवरेतोरूपं गर्भं पुरुषः स्त्रीयोनौ निक्षिपति । सा च तेन गर्भवती भवति । एवं स्थिते गर्भाधाता परमेश्वर एव जायमानस्य पिता । अन्यः पिता त्वौपचारिक एवेति कृत्वा अहं बीजप्रदः पितेत्युक्तं भगवता । एतेन पुत्रोत्पत्तिं प्रति प्रकृतपितरौ नैव प्रधानकारणमिति सिद्धम् । अयं चेश्वरः कर्मसापेक्षस्सन्नेव गर्भं दधातीति न वैषम्यादिदोषप्रसक्तिरीश्वरस्य ।

ननु यद्येवं परमेश्वर एव सर्वत्र गर्भाधाता, तर्हि हिरण्यगर्भस्य स्रष्टृत्वाभ्युपगमो व्यर्थ इति चेन्न—हिरण्यगर्भाख्यजीवस्वरूपावस्थितपरमेश्वरसङ्कल्पायत्तः क्षेत्रक्षेत्रज्ञसंयोग इत्यभ्युपगमात् । यद्वा राजचोदितभटकृतशत्रुविजये यथा राजकृतत्वव्यपदेशस्तथा परमेश्वरचोदितहिरण्यगर्भकृतभूतसृष्टौ परमेश्वरकृतत्वव्यपदेशः । अथ वा भूतसृष्टौ परमेश्वर एव मुख्यं कारणं, हिरण्यगर्भस्तु द्वारकारणमिति ॥४॥

सत्त्वमिति । हे महाबाहो ! प्रकृतिसम्भवास्सत्त्वं रजस्तम इति गुणा देहेऽव्ययं देहिनं निबध्नन्तीव । ननु रूपसङ्ख्यापरिमाणसंयोगविभागादिवत्सत्त्वादिगुणत्रयस्येन्द्रियवेद्यत्वाभावादीश्वरशक्ति-

रूपादिवद्द्रव्याश्रिता गुणाः। न च गुणगुणिनोरन्यत्वमत्र विवक्षितम्। तस्माद्गुणा

भूतायाः प्रकृतेश्चाग्निशक्तेरिव द्रव्यत्वाभावाद्द्रव्याश्रितत्वस्य च गुणलक्षणत्वात्कथं प्रकृत्याश्रया सत्त्वादीनां गुणत्वव्यवहारोऽत आह—गुणा इति, पारिभाषिकश्शब्द इति। वेदान्तशास्त्र सिद्धसत्त्वादीनां गुणा इति संज्ञेत्यर्थः। एवं सत्त्वादीनां गुणसंज्ञायाः पारिभाषिकत्वादेव रूपादीनामिव द्रव्याश्रितत्वलक्षणं गुणत्वं नास्तीत्याह—नेति। सत्त्वादय इति शेषः। रूपादिवद्द्रव्याश्रिता गुणा न भवन्ति। प्रकृतेरद्रव्यत्वात्सत्त्वादीनां चातीन्द्रियत्वादिति भावः। तस्मादिति। सत्त्वादीनां रूपादिवद्गुणत्वाभावादित्यर्थः। गुणगुणिनोः सत्त्वादिगुणानां तदाश्रयप्रकृतेश्चेत्यर्थः। अत्र शास्त्रेऽन्यत्वं न विवक्षितम्।

यद्वा गुणगुणिनोः रूपघटयोरिव सत्त्वादिगुणत्रयप्रकृत्योरन्यत्वमत्र न विवक्षितम्। गुणाः प्रकृतिसम्भवा इति सत्त्वादित्रयप्रकृत्योः कार्यकारणभावस्योच्यमानत्वात्कार्यकारणयोश्चानन्यत्वाद्द्रव्य गुणयोश्चानन्यत्वादिति भावः। तथाहि- कारणतन्तुनाशे कार्यपटनाशात्तन्तुव्यतिरेकेण पटादर्शनात् कारणस्यैव कार्यात्मना परिणामदर्शनाच्च कार्यकारणयोरनन्यत्वं स्फुटम्। अन्धेनापि त्वगिन्द्रियेण रूपव्यतिरेकेण घटस्य गृह्यमाणत्वात्पृथिवीं विनापि घ्राणेन गन्धस्य गृह्यमाणत्वाच्च। आमचूतफल समवेतस्य नीलरूपस्य पाकदशायां फलनाशेऽपि नाशसम्भवात्। पीतरूपान्तरस्य फलानुदयेऽप्युत्पत्ति दर्शनाच्च गुणगुणिनोरन्यत्वं स्फुटम्। तस्माद्घटस्य रूपमिव सत्त्वादयो न प्रकृतेर्गुणाः, किं तु प्रकृतेः परिणामा एव मृदः परिणामो घट इव। अमीषु च प्रकृतिपरिणामेषु सत्त्वादिषु गुणव्यवहारः पारिभाषिकः।

नन्वेवं गुणवती प्रकृतिरिति कथं भाष्यते तत्र तत्र भाष्यकारैरेवेति चेदुच्यते—घटवती मृत्तिकेतिवद्गुणवती प्रकृतिरिति व्यवहारात्। कारणे हि कार्यं वर्तते। कारणद्रव्यस्याकारान्तरस्य कार्यत्वात्। यथा मृद्द्रव्यस्य कम्बुग्रीवाद्याकारः कार्यं घट इत्युच्यते। एवं कार्यकारणयोरनन्यत्वे कार्यमिथ्यात्वं कारणसत्यत्वं च श्रुत्युक्तमुपपद्यते। कारणव्यतिरेकेण कार्यस्यासत्त्वं हि कार्यमिथ्यात्वम्। तस्मात्प्रकृतेरनन्यास्सत्त्वादयः प्रकृतिकार्यभूता न प्रकृतिगुणा इति सत्त्वादिगुणवत्त्वप्रयुक्तं द्रव्यत्वं प्रकृतेः। प्रकृतिरूपद्रव्याश्रितत्वप्रयुक्तं गुणत्वं च न सत्त्वादीनामिति स्थितम्। यदि जाड्यादिगुणवत्त्वात्पृथिव्यादिद्रव्योपादानत्वाच्च प्रकृतिर्द्रव्यमेवेत्याग्रहस्तर्हि ज्ञानादिगुणवत्त्वादन्तःकरणाद्युत्पत्ति हेतुत्वाच्च सत्त्वादयोऽपि द्रव्याण्येव स्युरिति कथं सत्त्वादीनां गुणत्वं न कथमपीत्यर्थः।

नन्वेवं सत्त्वादीनां गुणा इत्येव संज्ञा किमिति कल्पिता डित्थादिसंज्ञाः किमिति न कल्पिता अत आह—गुणा इवेति। यद्वा गुणा इति पारिभाषिकश्शब्द इत्येकः पक्ष उक्तः। अथ गुणा इत्यौपचारिकः प्रयोग इति पक्षमन्यमाह—गुणा इवेति। 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियाप्रधानतन्तु' ष्विति कोशादप्रधाने गुणशब्दो वर्तते। परतन्त्राणां चाप्रधानत्वं प्रसिद्धम्। प्रधानो हि राजादि

नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात्क्षेत्रज्ञं निबध्नन्तीव। तमास्पदीकृत्यात्मानं प्रति-
लभन्त इति निबध्नन्तीत्युच्यते। ते च प्रकृतिसम्भवा भगवन्मायासम्भवा निबध्नन्तीव
हे महाबाहो! महान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य स महाबाहुः, तस्य सम्बुद्धिः
हे महाबाहो! देहे शरीरे देहिनं देहवन्तमव्ययं, अव्ययत्वं चोक्तम्-- 'अनादित्वा'दित्यादि-

---

स्वतन्त्रः। गृहे स्वतन्त्रो हि यजमानः प्रधान इत्युच्यते। यथा रूपादिगुणा नित्यमपि द्रव्यमेवाश्रित्य वर्तन्ते न हि घटादिकं विना रूपादिगुणाः पृथगुपलभ्यन्ते ततस्ते द्रव्यपरतन्त्रा एव। द्रव्यसत्ता-भानाधीनसत्ताभानवत्त्वाद्गुणानां तथा सत्त्वादयोऽपि क्षेत्रज्ञं प्रति नित्यपरतन्त्रा एव नित्यं क्षेत्रज्ञपरतन्त्रा इत्यर्थः। एवं परतन्त्रत्वात्सत्त्वादयो गुणा इत्युच्यन्त उपचारादिति भावः।

ननु सत्त्वादीनां कुतः क्षेत्रज्ञपरतन्त्रत्वमत आह—**अविद्यात्मकत्वादिति**। अविद्या प्रकृतिरात्मा स्वरूपं येषां तत्त्वात्। कार्यस्य कारणात्मकत्वादविद्याकार्याणि सत्त्वादीन्यविद्यात्मकान्येव। अविद्या चाचेतनत्वाच्चेतनपरतन्त्रैव- दण्डादिवदित्यविद्यात्मका गुणा अपि चेतनपरतन्त्रा एवेति भावः। यद्वा अविद्यात्मकत्वान्मिथ्याभूतत्वादित्यर्थः। अविद्याया हि मिथ्यात्वं स्वरूपं तदात्मकानां सत्त्वादीनां च तदेवेति। एवं मिथ्याभूतास्सत्त्वादयः क्षेत्रज्ञे कल्पितत्वेन तत्सत्ताभानाधीनसत्ताभानवत्त्वात्तत्परतन्त्रा एव। यथा रज्जुकल्पितसर्पाभासो रज्ज्वधीनसत्त्वादिमत्त्वाद्रज्जुपरतन्त्रस्तद्वदिति भावः। एतेन सत्त्वादिपारतन्त्र्यप्रतिपादनं क्षेत्रज्ञस्याज्ञानविलसितमेवेति सिद्धम्।

नचानुभवसिद्धस्य जीवपारतन्त्र्यस्य कथमपलाप इति वाच्यं, नहि वयमज्ञानुभवसिद्धं जीव-पारतन्त्र्यमपलपामः, किंतु विद्वदनुभवसिद्धं जीवपारतन्त्र्याभावं प्रतिपादयाम इति। ननु यद्येवं स्वतन्त्र ईश्वरः क्षेत्रज्ञस्तत्परतन्त्राश्च गुणास्सत्त्वादयः कथं तर्हि ते तं निबध्नन्तीत्यत आह—**तमिति**। तं गुणकल्पनाधिष्ठानभूतं क्षेत्रज्ञमास्पदीकृत्य आधारीकृत्य आत्मानं स्वरूपं प्रतिलभन्ते प्राप्नुवन्ति। गुणा इति कर्तृपदम्। निरधिष्ठानभ्रमायोगात्। यथा सर्पाभासो रज्जुमास्पदीकृत्य स्वप्रतिष्ठां लभते तद्वदिति भावः। अविद्यया क्षेत्रज्ञे कल्पिता गुणास्तेनैव भास्यमानाश्च सन्तः गुणास्सन्तीति भान्तीति च प्रतिष्ठां लभन्ते। कथमन्यथा जडा मिथ्याभूताश्चेमे गुणा आत्मानं प्रख्यापयेयुरिमे वयं स्म इति। तस्मा-द्गुणानां सत्तास्फुरणे क्षेत्रज्ञाधीन एवेत्यभिसन्धिः।

ननु क्षेत्रज्ञमास्पदीकृत्यात्मानं प्रतिलभन्त इति हेतोः कथं निबध्नन्तीत्युच्यत इति चेदुच्यते— आत्मनि कल्पितत्वेन गुणानामात्मस्वरूपावरणद्वारा तद्बन्धकत्वमिति। कल्पितेन ह्यधिष्ठान-स्वरूपं तिरोधाप्यते- सर्पाभासेन रज्जुस्वरूपवत्। तमास्पदीकृत्यात्मानं प्रतिलभमानत्वेन तस्मिन्कल्पिता-स्ते गुणास्तत्स्वरूपावरकत्वाच्च निबध्नन्तीत्युच्यत इति भावः। नचात्मभास्या गुणाः कथमात्मस्वरूपा-वरका इति वाच्यं, सूर्यभास्यस्य राहोर्मेघस्य वा सूर्यस्वरूपावरकत्वदर्शनात्।

ननु यद्यात्मनि कल्पितैर्गुणैरात्मस्वरूपमाव्रियते, तर्हि लिप्त एव गुणैरात्मेति कृत्वा कथमुक्तं

श्लोकेन। ननु 'देही न लिप्यत' इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते ? परिहृ... मस्माभिरिवशब्देन निबध्नन्तीवेति ॥५॥

---

'शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यत' इत्येवमाक्षिपति—नन्विति, इवशब्देनेति। वस्तु... आत्मानं न निबध्नन्ति, किं तु निबध्नन्त इव दृश्यन्तेऽज्ञैः। न हि परिपूर्णस्वप्रकाशासङ्गाद्वितीय... चिद्रूपात्मनि गुणास्तत्प्रयुक्तावरणादीनि वा भवितुमर्हन्ति। तस्मात्सर्वमिदं मायामयमेव, नतु तात्त्वि... मिति भावगर्भेणेवशब्देन परिहृतं तद्यदाक्षिप्तं पूर्ववादिभिरिति भावः। निबध्नन्तीवेतीवशब्देनेत्यन्वयः... न चायं परिहार आचार्यैस्स्वकपोलकल्पितः, किंतु- 'सेयं भगवतो माया यन्न येन विरुद्ध्यते, ईश्वर... विमुक्तस्य कार्पण्यमुत बन्धन'मिति भागवते बादरायणेनैव भगवता दर्शित इति बोध्यम्। तस्मात्काल... त्रयेऽप्यात्मन्यविद्यागुणसङ्गसंसारादिकं नास्त्येवेति परमार्थः।

यत्तु रामानुजः—सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूतास्तद्विकारेषु महदादिषूद्भूताः देहिनमेनमव्ययं स्वतो गुणसम्बन्धानर्हं देहे वर्तमानत्वोपाधिना निबध्नन्तीति, तत्तुच्छम्—यदि प्रकृतेस्स्वरूपानु... बन्धिनस्ते, तर्हि प्रकृतिं कदाचिदपि न त्यजेयुः। प्रकृत्यवस्थायामनुद्भूता इति त्वयैवोच्यते। कथ... कथमयं विरोधः परिह्रियेत ? नच गुणसाम्यावस्था हि प्रकृत्यवस्था, तस्यां साम्येन वर्तन्त एव सत्त्वादयः... विषमतया तु महदादिषूद्भूता इति चेत्, मैवम्—घटकपालकरकादयस्सर्वेऽपि मृदि साम्येन वर्तन्त... एवेतिवदप्रमाणत्वात्तद्वचनस्य। सत्त्वादीनामन्योन्यवैषम्यं हि स्वरूपं, तेषां साम्यं तु घटकपालादीना... मिव स्वरूपनाशे सत्येव सम्भवति, नतु स्वरूपे सति। प्रकाशकत्वरञ्जकत्वमोहकस्वरूपविरुद्धधर्म... त्रयाणां तेषां कथं साम्यं स्यात् ? दर्शितधर्मरहितायां प्रकृत्यवस्थायां कथं धर्मिसत्त्वमनुमातुं शक्यम् ?

न च महदादिकार्यगतसत्त्वादिभिस्तत्कारणप्रकृतिगतसत्त्वाद्यनुमानमिति वाच्यं, घटादिकार्य... गतकम्बुग्रीवाद्याकारैर्मृद्यपि कम्बुग्रीवाद्याकाराणामनुमेयत्वापत्तेः। न चेष्टापत्तिः, प्रत्यक्षविरोधात्। नच कारणगुणानामेव कार्ये संक्रमणान्महदादिगतसत्त्वादिगुणाः प्रकृतिगुणा एवेति वाच्यं, समवायि... कारणगुणानां रूपादीनामेव कार्ये संक्रमणमिति सिद्धान्तात्। नहि रूपादिगुणेषु सत्त्वादयः पठिताः। नाप्यतीन्द्रियाणां तेषां रूपाद्यनुप्रवेशनं न्याय्यम्। रूपादीनामिन्द्रियगम्यत्वात्। किंच प्रकाशादि... कार्यैकनिरूपणीयत्वान्महदादिषु सत्त्वादयस्सन्तु नाम, कथं पुनः प्रकृत्यवस्थायां तत्सत्त्वं तत्प्रयुक्त... प्रकाशादिकार्याभावात्। महदादिद्वारा प्रकृतेस्तद्वत्तासाधनं तु गौरवावहं व्यर्थं च। सत्त्वादिगुणो... त्पादनशक्तियुक्तत्वमात्रेण तु प्रकृतेर्गुणसाम्यावस्थात्वप्रतिपादनं, न तु त्रयो गुणास्तत्र साम्येन सन्तीति। तथा सति प्रकाशकत्वादितद्धर्माणामपि साम्येन प्रतीतिप्रसङ्गात्।

किंच सत्त्वादीनामुद्भूतत्वं वदता त्वया कार्यत्वमवश्यमभ्युपेयं, ब्रूहि कस्य कार्याणि सत्त्वा... दीनि ? न तावत्प्रकृतिकार्याणि- प्रकृतिस्वरूपानुबन्धित्वात्तेषां गन्धवत्त्वमिव पृथिवीस्वरूपानुबन्धि...

स्वरूपनिरूपकधर्मा हि धर्मिणं कदाचिदपि न त्यजन्तीति वेदान्तदेशिकेनैवोक्तत्वादिह । न ह्युत्पत्तेः प्रागसतां सत्त्वादीनां प्रकृतिस्वरूपानुबन्धित्वं सम्भवति, प्रकृतिरनादिर्हि । नापि पुरुषकार्याणि- तस्या-कर्तृत्वात् । नापीश्वरकार्याणि- प्रकृतिपुरुषद्वारैवेश्वरस्य कर्तृत्वाभ्युपगमात् । न चैवं सत्त्वादयोऽनादय इति वाच्यं, 'गुणाः प्रकृतिसम्भवा' इतीहैवोच्यमानत्वात् । नच प्रकृतौ साम्येन वर्तमाना गुणा वैषम्येण ततो जायन्त इति वाच्यं, साम्येन गुणवर्तनस्य निराकृतत्वात् । समास्सत्त्वादिगुणा अना-दयः, विषमास्तु सादय इति क्वापि शास्त्रेऽदर्शनात् । न च समास्सत्त्वादिगुणा एव प्रकृतिरिति वाच्यं, तथा सति सत्त्वादिगुणातिरिक्तप्रकृतिकल्पनस्य प्रकृतिर्धर्मिपदार्थः, सत्त्वादयस्तु तद्धर्मा इति वादस्य चायुक्तत्वात् ।

तस्माद्यदि प्रकृतिस्वरूपानुबन्धिस्वभावविशेषास्सत्त्वादयस्तर्हि तेषां प्रकृतेस्सकाशात्सम्भवकथनं विरुद्ध्यते । न हि धर्मिणस्सकाशाज्जायमानः क्वापि धर्मो दृश्यते । तथा सति धर्मोत्पत्तेः प्राग्धर्मिण एव धर्मित्वस्याभावप्रसङ्गात् । उत्पत्तेः प्रागपि धर्मस्य सत्त्वे तदुत्पत्त्ययोगाच्च । घटात्सकाशाद्रूप-स्योत्पत्तिप्रसङ्गाच्च । धर्मिपरतन्त्रस्य धर्मस्य केवलं जन्मायोगाच्च । नहि निराश्रयो रूपादिः क्वाप्युप-लभ्यते । अथ यदि प्रकृतेस्सकाशाद्गुणानां सम्भवो यथोक्तोऽभ्युपेयते, तर्हि मृदो घट इव प्रकृते-सत्त्वादयः परिणामा एव, नतु स्वरूपानुबन्धिधर्मविशेषाः । एवं प्रकृतिपरिणामत्वे सति सत्त्वादीनां द्रव्यत्वमेव स्यान्महदादिवत् । युक्तं च द्रव्यत्वं सत्त्वादीनां ज्ञानादिगुणवत्त्वात् । गुणवत्त्वं हि द्रव्यस्य लक्षणम् ।

ननु प्रकृतेर्द्रव्यात्सकाशाज्जायमानास्सत्त्वादयो न द्रव्याणि, किं तु गुणा एव, यथाऽन्तःकरण-द्रव्याज्जायमानास्सुखदुःखादयो न द्रव्याणि, किंतु गुणा एव तद्वत् । ततश्च सुखदुःखादीनामन्तःकरण-धर्मत्ववत्सत्त्वादीनां प्रकृतिधर्मत्वं सिद्ध्यतीति चेत्, मैवम्—न वयं द्रव्याद्गुणा न जायन्त इति ब्रूमः, किं तर्हि- ययोर्गुणगुणिनोस्समवायस्सम्भवतस्स गुणस्तस्माद्गुणिनो न जायत इति ब्रूमः । 'सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥' इति सत्त्वा-दिभ्योऽपि ज्ञानादयो भवन्तीति वक्ष्यमाणत्वाच्च । सुखादीनामन्तकरणधर्मवद्ज्ञानादीनां सत्त्वादि-धर्मत्वाच्च प्रकृतेस्सकाशाज्जायमानास्सत्त्वादयोऽन्तःकरणादिवद्द्रव्याण्येव, न गुणा गुणवत्त्वादिति ।

ननु यदि सत्त्वादयो द्रव्याणि तर्हि किमिति नोपलभ्येरन्निति चेन्नायं नियमः—यद्द्रव्यं तदुपलभ्यमिति । प्रकृतेरप्यनुपलभ्याया द्रव्यत्वाभ्युपगमात्तत्र । यथा महदादिकार्यानुमेया प्रकृतिस्तथा प्रकाशादिकार्यानुमेयास्सत्त्वादय इति । यदि व्यक्तान्येव द्रव्याणीत्युच्येत तर्हि प्रकृतिवत्सत्त्वादिरपि द्रव्यं मा भूदव्यक्तत्वात् । न चैवं सत्त्वादीनां द्रव्यत्वे कुतो महदादिषु तदनुप्रवेश इति वाच्यं, यथा प्रकृति-द्रव्यमपि महदादिषु स्वकार्येष्वनुगता तद्वदिति ।

ननु द्रव्यपरतन्त्रत्वात्सत्त्वादयो गुणा एव नतु द्रव्याणि, शुद्धसत्त्वगुणा माया मलिनसत्त्वगुणा अविद्या । अहङ्कारस्त्रिविधः- सात्त्विको राजसस्तामसश्चेति । पञ्चभूतसत्त्वांशसमष्टिकार्यं मन इत्यादि-

व्यवहारादिति चेत्, मैवम्—परिणामिनः परिणामवत्त्वमुचितं मृद इव घटवत्त्वम्। तथा च घटे मृदीव प्रकृतौ सत्त्वादयश्शुद्धा अशुद्धा वा वर्तन्त एव। तेन शुद्धसत्त्वा माया मलिनसत्त्वाऽविद्येति व्यवहार उपपद्यते। सत्त्वस्य शुद्धिर्नाम रज आद्यनभिभूतत्वं, तदभिभूतत्वं त्वशुद्धत्वमिति विवेकः। एवमुद्भूतगुणा माया महदाद्यात्मना परिणतेत्यहङ्कारस्य त्रिविधत्वं युक्तम्। तथा भूतानां च सत्त्वादिगुणवत्त्वं युक्तमिति।

ननु घटात्मना परिणताया मृत्तिकाया अन्यैव मृत्तिका करकात्मना परिणमते। ननु घटाकारवती सैव मृत्तिका घटाकारानुपमर्देन करकाद्याकारं भजते यथा तथा सत्त्वाद्याकारपरिणतायाः प्रकृतेरन्यैव महदाद्याकारेण परिणमेत। ननु सैव सत्त्वादिगुणाकारानुपमर्देन महदाद्याकारं भजते। एवंविधे महदादिकार्याणां प्रकृतिमयत्वे सत्यपि न सत्त्वादिमयत्वं स्यादिति चेत्, मैवम्—जलसंयोगात्पिण्डाकारेण परिणतो यश्चूर्णपुञ्जस्स एव घटाद्याकारेण परिणमते न त्वपिण्डाकारः। एवमीश्वरसङ्कल्पात्सत्त्वादिगुणत्रयाकारेण परिणामं प्राप्ता या प्रकृतिस्सैव महदाद्याकारेण परिणमते, न त्वन्या। प्रलयेऽपि प्रपञ्चप्रसङ्गात्। प्रलये ह्यपरिणता सत्त्वादिरूपेण प्रकृतिरस्ति। अत एव गुणसाम्यावस्था प्रकृतिरिति प्रवादः। तदानीं सत्त्वादिगुणाभावात्प्रकृतौ। एवं गुणत्रयाकारपरिणतप्रकृतिपरिणामत्वान्महदादीनां गुणत्रयवत्त्वमिति। नच पिण्डाकारपरिणतमृत्कार्येष्वपि घटादिषु पिण्डवत्त्वं नोपलभ्यत इति वाच्यं, चूर्णपुञ्जमेलनविशेषो हि पिण्डः। किं घटे अमिलितश्चूर्णपुञ्जः क्वापि दृश्यते? किंतु मिलित एव। तादृशमिलितचूर्णपुञ्जवत्त्वमेव पिण्डवत्त्वं घटस्येति। तस्मात्प्रकृतेः प्रथमो विकारस्सत्त्वादिगुणत्रयम्। सत्त्वादिरूपविकृतप्रकृतिविकारास्तु महदादय इति सिद्धं सत्त्वादित्रयस्य प्रकृतिविकारत्वेन प्रकृतिमद्द्रव्यत्वम्। अत एवोक्तं- 'गुणाः प्रकृतिसम्भवा' इति। कथमन्यथा सत्त्वादिसमवेतप्रकृतिकार्यत्वं स्यात्सत्त्वादेः रूपसमवेतघटकार्यत्वमिव रूपस्य। तस्मात्सिद्धं सत्त्वादीनां रूपादिवद्गुणत्वम्। यदि सत्त्वादिषु गुणत्वलोभेन प्रकृतिसमवेतत्वं त्यज्यते तर्हि सत्त्वादीनां प्रकृतिस्वरूपनिरूपकधर्मत्वं नैव स्यात्। नहि कपिसंयोगो वृक्षस्य स्वरूपनिरूपकधर्मः स्यात्, येन सत्त्वादिगुणसंयोगः प्रकृतेः स्वरूपनिरूपकधर्मः स्यात्।

नन्वेवं मूलप्रकृतेर्महदाद्याकारपरिणामवत्सत्त्वाद्याकारपरिणामे सति- 'मूलप्रकृतिरविकृति'रिति साङ्ख्यकारिकायां सत्त्वादयः कुतो नोक्ता इति चेत्, पृच्छ साङ्ख्यम्—नहि वयं साङ्ख्याः। एवमादिदोषवशादेव हि साङ्ख्यदर्शनमप्रमाणमिति वयं ब्रूमः। नच सत्त्वाद्याकारपरिणतप्रकृतिरेव महदादिहेतुत्वेन मूलप्रकृतिरितिग्रहणे साङ्ख्यमतं न दुष्यतीति वाच्यं, तादृशप्रकृतेर्विकृतित्वेनाविकृतित्वाभावा'न्मूलप्रकृतिरविकृति'रिति विशेषितत्वाच्च। तस्मात्प्रकृत्यज्ञानाव्यक्तशक्त्यविद्यामायादिपर्यायस्य ईश्वरस्वभावस्य परिणामविशेषा एव सत्त्वादयो ननु गुणाः।

नन्वन्तःकरणपरिणामसुखादिवृत्तीनां गुणत्वात्प्रकृतिपरिणामसत्त्वादित्रयस्य गुणत्वमस्त्विति चेत्, मैवम्—दृष्टान्तासम्प्रतिपत्तेः। न ह्यन्तःकरणपरिणामा वृत्तीर्वयं गुणा इति ब्रूमः, किं तर्ह्यन्तःक-

तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ! ॥६॥

तत्रेति । निर्मलत्वात्स्फटिकमणिरिव प्रकाशकमनामयं निरुपद्रवं सत्त्वं बध्नाति ।

---

णात्मकत्वाद्द्रव्याण्येव । नहि द्रव्यस्य क्वापि गुणाकारेण परिणाम उचितः । कार्यकारणयोस्सालक्षण्यनियमात् ।

नन्वेवं शुक्लादिगुणाः किं कस्यापि विकारा उत न ? आद्ये- यस्य विकारास्ते तत्किं द्रव्यमुतान्यत् ? द्रव्यत्वे कथं द्रव्यस्य गुणरूपेण परिणामः ? अन्यत्तु नास्त्येव । द्वितीये- रूपादीनां जायमानत्वेन प्रसिद्धानामनादित्वमयुक्तमप्रमाणं चेति चेत्, मैवम्—शुक्लादिगुणा द्रव्याश्रितास्सन्त एव जायन्ते, नतु पृथक् । तथा सति वाय्वाकारपरिणतप्रकृतेस्सकाशात्तेजोद्रव्यं जायते, तच्च सरूपं जायत इति नात्र कार्यकारणवैलक्षण्यप्रसङ्गः । वायुतेजसोर्द्रव्यत्वादुभयोरपि । नच सरूपत्वनीरूपत्वाभ्यां वैलक्षण्यमिति वाच्यं, अत्यन्ताभेदे कार्यकारणयोः कार्यकारणभावस्यैवाभावप्रसङ्गात् । कारणे आकाशेऽविद्यमानस्यापि स्पर्शगुणस्य कार्ये वायौ प्रादुर्भावदर्शनाच्च ।

नन्वेवं नीरूपद्रव्यस्य सरूपद्रव्याकारपरिणामेऽपि द्रव्यस्य गुणाकारपरिणामस्सिद्ध इति चेत्, मैवम्—तत्र द्रव्यांश एव परिणतत्वं, गुणांशे तु विवर्तत्वमेवेति । नच कारणे वाय्वादावप्यनुद्भूतरूपमस्तीति वाच्यं, अनुद्भूतत्वेनादृश्यमानस्य रूपस्य सत्त्वे मानाभावात् । एवमात्मन्यप्यनुद्भूतरूपसत्त्वकल्पनप्रसङ्गात् । तस्य च 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिशास्त्रविरोधात् । अनुद्भूतरूपाभ्युपगमेपि तस्यैवोद्भूतरूपत्वेन परिणामो नतु द्रव्यस्येति सिद्धत्वाच्च । तस्मान्न सत्त्वादयो गुणाः, किंतु महदादिवत्प्रकृत्यवस्थाविशेषा एव ।

यच्च सत्त्वादीनामगुणत्वे गुणशब्दप्रसिद्धिर्विरुद्धेति वेदान्तदेशिकः, तदयुक्तम्—गुणशब्दप्रसिद्धेः पारिभाषिकत्वेनैवोपपन्नत्वात् । शास्त्रं ह्यनादिकालात्प्रवृत्तं तद्बलाच्च सत्त्वादीनां गुणशब्दप्रसिद्धिः । यथा मायायाः प्रकृत्यादिशब्दप्रसिद्धिः । नहि शास्त्रं विना मायायाः प्रकृत्यादिशब्दप्रसिद्धिमपि जानीयुः केपि ? तस्माच्छास्त्रसिद्ध एवायमिति नाप्रसिद्धः ।

यच्च देहे वर्तमानत्वोपाधिना निबध्नन्तीति, तदप्ययुक्तम्—घटे वर्तमानत्वोपाधिना गगनस्य घटकृतबन्धाभावाज्जीवस्यापि देहाश्रयगुणकृतबन्धायोगात् । स्वतो बन्धानर्हमिति हि त्वयैवोच्यते । शरीरस्थत्वं च न बन्धहेतुरिति- 'शरीरस्थोपि कौन्तेय ! न करोति न लिप्यत' इत्यनेनोक्तं भगवतैव । तस्मादलेपकस्य बद्धत्वं दुर्घटमेव ॥५॥

तत्रेति । हे अनघ ! तत्र निर्मलत्वात्प्रकाशकमनामयं सत्त्वं सुखसङ्गेन ज्ञानसंगेन च देहिनं बध्नाति । तत्र सत्त्वादीनां मध्य इत्यर्थः । तावदादावित्यर्थः लक्षणमिति । स्वरूपमित्यर्थः ।

कथम् ? सुखसङ्गेन 'सुख्यह'मिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषै[va] सुखे संजनमिति सैषाविद्या, न हि विषयधर्मो विषयिणो भवति। इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता। अतोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे संजयतीव सक्तमिव करोति, असङ्गं सक्तमिव करोति,

---

येनोक्तेन धर्मजातेन सत्त्वं लक्ष्यते तदिति वा। प्रकाशकत्वे सत्यात्मनि ज्ञानसुखासञ्जकत्वं सत्त्वस्य लक्षणम्। आत्मन्यतिव्याप्तिवारणाय विशेष्यदलम्। अविद्यायामतिव्याप्तिवारणाय प्रकाशकत्वे सति विशेषणम्। यदि सत्त्वमप्यविद्यैवेति मतं, तर्हि स्वरूपकथनमात्रपरमेव, तन्न व्यावर्तकमिति बोध्यम्। सत्त्वस्य प्रकाशकत्वे हेतुर्निर्मलत्वादिति। सत्त्वं प्रकाशकं निर्मलत्वात्स्फटिकमणिवदिति। एवं प्रकाशकत्वादेवाऽनामयं, निर्गच्छत्युपद्रवो यस्मात्तन्निरुपद्रवम्। सत्त्वं निरुपद्रवं प्रकाशकत्वादातपवद्व्यतिरेकेणान्धकारवच्च। सत्त्वे प्रवृद्धे सति शमदमादिद्वारा ज्ञानं सम्पादयितुं शक्यत इति हेतोर्निरुपद्रवत्वमुक्तं सत्त्वस्य।

एतेन प्रकाशकत्वं, निरुपद्रवत्वं, ज्ञानसुखासञ्जकत्वं चेति त्रीणि सत्त्वस्य लक्षणभूता धर्मा इति सिद्धम्। बध्नाति देहिनमिति शेषः। बन्धनप्रकारं दर्शयितुमाक्षिपति—कथमिति, सुखसङ्गेनेति। सुखसङ्गजननेनेत्यर्थः। इदमेवाह—सुखस्य संश्लेषापादनेनेति। कीदृशस्य सुखस्य कुत्र संश्लेषापादनमत आह—विषयभूतस्य सुखस्य विषयिण्यात्मनीति। कथं विषयभूतत्वं सुखस्येत्यत आह—सुख्यहमिति। सुख्यहमिति प्रतीतौ हि सुखं विषयभूतमात्मा तु विषयिभूत इति भावः। आत्मवेद्यत्वात्सुखस्यात्मविषयत्वं, सुखवेदितृत्वादात्मनस्सुखविषयित्वं चेति बोध्यम्।

संश्लेषापादनमेवाभिनीय दर्शयति—ममैवं सुखं संजातमिति। यथा पुरुषस्य ममैव सुखं सञ्जातमिति प्रत्ययस्स्यात्तथा पुरुषे विषयिणि विषयभूतं सुखमासञ्जयतीति भावः। किमिदमासञ्जनं सत्यमत आह—मृषैवेति। सत्त्वकर्तृकमात्माधिष्ठानकं सुखासञ्जनं मिथ्यैवेत्यर्थः। एवं मिथ्यात्वादेव सुखासञ्जनमविद्येत्याह—सैषेति। विधेयप्राधान्यात्स्त्रीत्वम्। तदिदं सुखसञ्जनमविद्येत्यर्थः। यद्वा ममैव सुखं सञ्जातमिति सैषा प्रतीतिरविद्येत्यर्थः। तदेवोपपादयति—नहीति। विषयस्यान्तःकरणस्य धर्मस्सुखं विषयिणो न भवति हि। विषयस्य घटस्य धर्मो यथा जाड्यादिर्विषयिणो द्रष्टुर्न भवति तद्वदिति भावः।

ननु सुखं न विषयधर्मः, किंतु विषयिधर्म एव। सुख्यहमिति प्रतीतेरत आह—इच्छादीति। अतस्सुखसञ्जनस्य मृषात्वादित्यर्थः। सत्त्वमिति कर्तुश्शेषः। अविद्ययैव सुखे आत्मानं सञ्जयतीति त्यन्वयः। सञ्जनहेतुरविद्या। किमियमविद्या मूलाज्ञानमुत तूलाज्ञानमत आह—स्वकीयधर्मभूतयेति। स्वशब्दस्सत्त्वगुणपरः। अविद्याया लक्षणमाह—विषयेति। विषयविषयिणोर्मन आत्मनोरविवेको विवेकाभाव एव लक्षणं स्वरूपं यस्यास्तया तथोक्तया। कीदृशं सुखमत आह—अस्वात्मभूत इति।

२१

असुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च, ज्ञानमिति सुखसाहचर्यात्क्षेत्रस्यैव विषयस्यान्तःकरणस्य धर्मः, नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेः, बन्धानुपपत्तेश्च । सुख इव ज्ञानादौ सङ्गो मन्तव्यः । हे अनघ ! अव्यसन ! ॥६॥

रजो रागात्मकं विद्धि तृष्णाऽऽसङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ! कर्मसङ्गेन देहिनम् ॥७॥

रज इति । रजो रागात्मकं रंजनाद्रागो गैरिकादिवद्रागात्मकं विद्धि विजानीहि ।

---

आत्मधर्मभूत इत्यर्थः । अस्वरूपभूत इति वा । नेदं सुखमात्मनः स्वरूपभूत आनन्दः, किंतु मनोवृत्तिप्रतिफलितानन्द एवेति भावः । सञ्जयतेरर्थमाह—असङ्गं सक्तमिति । इवशब्दान्न वस्तुत इति भावः । निर्धर्मकेऽसङ्गे आत्मनि सुखसङ्गायोगादिति भावः । कथमसङ्गं सक्तमिव करोतीत्यत आह—असुखिनं सुखिनमिवेति । असुखिनं सुखरहितमात्मानं सुखिनमिव करोति । सत्त्वं कर्तृ ।

अयमर्थः—सत्त्वगुणप्रयुक्तादात्मानात्मविवेकादनात्मधर्मं सुखमात्मन्यध्यस्य सुख्यहमिति प्रत्येत्यविद्वानिति । ततश्च बद्ध इव भवतीति ज्ञानमत्र न चैतन्यं· तस्यात्मधर्मत्वेन मनोधर्मसुखसाहचर्यान्मनोधर्मवृत्तिज्ञानस्यैव ग्राह्यत्वेन च चैतन्याग्रहणात् । साहचर्यादिति । सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणमिति न्यायादिति भावः । क्षेत्रस्यैव विषयस्य जडस्यान्तःकरणस्य धर्मो वृत्त्यात्मकं ज्ञानमित्यन्वयः । अन्तःकरणस्य विषयात्मना परिणामो वृत्तिः । एवकारार्थमाह—नात्मन इति । आत्मनो धर्मभूतं चैतन्यं नेह ज्ञानशब्देनोच्यत इत्यर्थः । वृत्त्यात्मकं ज्ञानमन्तःकरणस्यैव धर्मो नात्मन इति वा । कुतो वृत्तिज्ञानस्य नात्मधर्मत्वमत आह—आत्मेति । यदि वृत्तिज्ञानमप्यात्मधर्मः स्यात्तर्हि तेनात्मनस्सङ्गो न स्यात् । सङ्गात्प्रागेव तस्य सिद्धत्वात् । नहि वृक्षस्य कपिसङ्गवच्छाखाभ्यसङ्गोऽस्तीति वक्तुं शक्यते । तथाऽन्यधर्मस्यान्यत्राध्यासाद्बन्धः, नतु स्वधर्मस्य क्वापि बन्धकत्वमित्याह—बन्धानुपपत्तेश्चेति ।

एतेन ज्ञानशब्देन चैतन्यग्रहणे चैतन्येन सहात्मनस्सङ्गानुपपत्तिः । चैतन्यस्य बन्धकत्वाभावाद्बन्धानुपपत्तिश्चेति सूचितम् । नन्वनात्मधर्मेण ज्ञानेन कथमात्मनस्सङ्गोऽत आह—सुख इवेति । आध्यासिक एव सङ्गो न तात्त्विक इति भावः । आदिपदाद्रागादिग्रहणम् । सत्त्वगुणप्रयुक्तादात्मानात्मविवेकादनात्मधर्मं ज्ञानमात्मन्यध्यस्य ज्ञान्यहमिति प्रत्येत्यविद्वांस्ततश्च बद्ध इव भवतीतीहाप्यर्थो बोद्धव्यः ।

यत्तु रामानुजः—सत्त्वं पुरुषस्य ज्ञानसुखयोस्सत्यमेव सङ्गं जनयतीति, तदयुक्तम्—निर्धर्मकेऽसङ्गे चात्मनि सत्यसुखज्ञानसङ्गासम्भवात् । नच मिथ्याभूतोऽपि सङ्गो न युक्त इति वाच्यं, गगने नीलरूपेपि नैल्यस्य मिथ्याभूतस्य दर्शनात् ॥६॥

रज इति । रजो रागात्मकं विद्धि । तृष्णाऽऽसङ्गसमुद्भवं तत्कर्मसङ्गेन देहिनं निबध्नाति । यद्वा रजो रागात्मकं तृष्णासङ्गसमुद्भवं च विद्धि । तृष्णासङ्गसमुद्भवं रजो रागात्मकं विद्धीति वा ।

तृष्णाऽऽसङ्गसमुद्भवं तृष्णाऽप्राप्ताभिलाषः, आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणसंश्लेषः
तृष्णाऽऽसङ्गयोस्समुद्भवं तृष्णाऽऽसङ्गसमुद्भवम् । तन्निबध्नाति तद्रजो निबध्नाति कौन्तेय! कर्म
सङ्गेन दृष्टादृष्टार्थेषु कर्मसु संजनं तत्परता कर्मसङ्गः, तेन निबध्नाति रजो देहिनम् ॥७॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥८॥

तम इति । तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि, मोहनं मोह

---

रागात्मकं रजो तृष्णासङ्गसमुद्भवं विद्धीति वा । राग आत्मा स्वरूपं यस्य तद्रागात्मकम् । राग
व्युत्पत्तिमाह—रंजनाद्राग इति । दृष्टान्तमाह—गैरिकादिवदिति । यथा गैरिकादिधातुरसः
रञ्जकस्तद्वदयं मनस इति भावः । रञ्जकत्वे सति देहिनो कर्मासञ्जकत्वं रजसो लक्षणम् । कथं
कत्वमत आह—तृष्णेति । तृष्णासङ्गजननद्वारा रञ्जकत्वं रजस इत्यर्थः । अप्राप्ते वस्तुन्यभि
स्तृष्णा । प्राप्ते वस्तुनि मनसः प्रीतिलक्षणस्संश्लेष आसङ्ग आसक्तिरिति यावत् । दृष्टा पशुपुत्राद
अदृष्टास्स्वर्गादयश्च दृष्टाऽदृष्टा अर्थाः फलानि येषां तेषु दृष्टादृष्टादिषु दृष्टार्थेष्वदृष्टार्थेषु चेत्यर्थः
कर्मसु कृष्यादिषु इष्ट्यादिषु च यस्सङ्गस्सञ्जनं सक्तिस्तात्पर्यमिति यावत् । सकर्मसङ्गः, तेन कर्मसु
कर्मसु सक्तिजननद्वारेत्यर्थः । अन्वयं दर्शयति—निबध्नाति रजो देहिनमिति । रजो दे
निबध्नातीवेत्यर्थः । रजोगुणप्रयुक्तादात्मानात्माविवेकान्मनोधर्मौ तृष्णाऽऽसङ्गावात्मन्यध्यस्य देहाद्य
कर्म चात्मन्यध्यस्यास्मै फलायाहमिदं करोमीति प्रत्येत्यविद्वान् । ततश्च तत्फलमनुभवन् बद्ध
भातीति परमार्थः ।

रामानुजस्तु—रागो योषित्पुरुषयोरन्योन्यस्पृहा, तद्धेतुत्वाद्रागात्मकः । तृष्णा शब्दादि
विषयस्पृहा, सङ्गो पुत्रमित्रादिषु सम्बन्धिषु संश्लेषस्पृहा, तथा देहिनं कर्मसु स्पृहाजननद्वारेण
निबध्नातीति, तन्मन्दम्—एकस्या एव स्पृहाया विषयभेदेन बहुधा निर्देशस्य फलाभावात् । शब्दा
सर्वविषयस्पृहातिरिक्तयोषित्पुरुषान्योन्यस्पृहाद्यभावाच्च ॥७॥

तम इति । अज्ञानजं तमस्तु सर्वदेहिनां मोहनं विद्धि । तमस्त्वज्ञानजं सर्वदेहिनां मोहनं
विद्धीति वा । तत्प्रमादालस्यनिद्राभिर्देहिनं निबध्नाति । अज्ञानं ज्ञानाभावः, नतु प्रकृतिः । स
रजसोरपि प्रकृतिजत्वांशेऽविशेषात् । 'गुणाः प्रकृतिसम्भवा' इति ह्युक्तम् । नचाभावात्कथं भा
स्योत्पत्तिरिति वाच्यं, ज्ञानाभाववत्प्रकृतिजत्वेन ज्ञानाभावजत्वव्यपदेशात् । यद्वा चिदाभासशून्यम
केवलमिहाज्ञानशब्देन विवक्षितं, सत्त्वरजसोः कारणमज्ञानं तु चिदाभासरहितम् । कथमन्यथा स
रजसोरपि चिदाभाससाहित्यप्रयुक्तं ज्ञानं स्यात् । नच सत्त्वादेव ज्ञानं न तु रजस इति वाच्यं, तृ
दीनामपि ज्ञानविशेषत्वात् । नचैवं ज्ञानसङ्गेन देहिबन्धकत्वं रजसोऽप्यस्तीति वाच्यं, ज्ञान
प्रयुक्तकर्मसङ्गेन बन्धकत्वं रजस इति विशेषात् । तृष्णासङ्गव्यतिरिक्तज्ञानसङ्गेन सत्त्वं बध्नाति
विशेषादिति वा ।

मविवेककरं सर्वदेहिनां सर्वेषां देहवताम् । प्रमादालस्यनिद्राभिः प्रमादश्चालस्यं च निद्रा च प्रमादालस्यनिद्राः, ताभिः प्रमादालस्यनिद्राभिस्तत्तमो निबध्नाति हे भारत! ॥८॥

पुनर्गुणानां व्यापारस्संक्षेपत उच्यते—

सत्त्वं सुखे संजयति रजः कर्मणि भारत !
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥

सत्त्वमिति । सत्त्वं सुखे संजयति संश्लेषयति, रजः कर्मणि हे भारत ! संजयतीत्यनुवर्तते । ज्ञानं सत्त्वकृतं विवेकमावृत्याच्छाद्य तु तमस्स्वेनावरणात्मना प्रमादे संजयति; उत प्रमादोनाम प्राप्तकर्तव्याकरणम् ॥९॥

---

वस्तुतस्तु आवरणात्मक आवरणशक्तिप्रधानो वा प्रकृत्यंशोऽत्राज्ञानशब्देन विवक्षित इति वेद्यम् । मोहनमिति । आत्मानात्माविवेको मोहः । ननु सत्त्वरजसोरप्यस्त्येवेदं मोहकत्वमिति चेत्सत्यमस्ति । किं स्वयमात्माऽयमनात्मेति विवेकाभावसत्त्वादिप्रयुक्तः । आत्मानात्माख्यपदार्थज्ञानाभावस्तु तमःप्रयुक्त इति भेदः । अविवेककरमिति । ज्ञानाभावजनकमित्यर्थः । मोहनं भ्रान्तिजनकमिति श्रीधरः । प्रमादोऽनवधानता । आलस्यं मान्द्यम् । निद्रा सुप्तिः । मोहकत्वे सति प्रमादालस्यनिद्राभिरात्मनो बन्धकत्वं तमसो लक्षणम् । तमोगुणप्रयुक्तादविवेकादनात्मधर्मान् प्रमादालस्यनिद्रा आत्मन्यध्यस्य प्रमत्तोऽहमलसोऽहं सुप्तोऽहमिति प्रत्येत्यविद्वान्, ततश्च बद्ध इव भवतीति परमार्थः । प्रमादालस्यनिद्राश्चान्तःकरणधर्मा इति बोध्यम् । नच निद्रायामन्तःकरणस्यैवाभावात्कथं निद्रायास्तद्धर्मत्वमिति वाच्यं, अन्तःकरणस्य प्रकृतौ निलीयावस्थानस्यैव निद्रात्वेन अन्तःकरणनिलयनावस्था निद्रा अन्तःकरणधर्म एवेति ।

श्लोकत्रयस्यायमभिप्रायः—प्रकृतिकार्येऽन्तःकरणे सत्त्वादिगुणत्रयमनुगतमस्ति । तत्रान्तःकरणे गुणत्रयवति यस्सत्त्वांशः तत्कार्ये सुखज्ञाने ते चाविद्यया आत्मन्यध्यस्ते भूत्वा बन्धके भवत इवात्मनः । यो रजोंशः तत्कार्ये तृष्णाऽऽसङ्गौ तत्प्रयुक्तं कर्म च तत्कार्यं तत्त्रयमप्यविद्यया आत्मन्यध्यस्तं सद्बन्धकमिवात्मनः । यश्च तमोंशः, तत्कार्याणि मोहप्रमादालस्यनिद्राः ताश्चाविद्ययाऽऽत्मन्यध्यस्तास्सत्य आत्मनो बन्धका इवेति । सर्वोऽप्ययमात्मबन्धोऽविद्यामयत्वान्मृषैव, न वास्तव इतीवशब्दाभिप्राय इति ॥८॥

सत्त्वमिति । देहिनमिति शेषः । सत्त्वं सुखे सञ्जयति । रजः कर्मणि सञ्जयति । तमस्तु ज्ञानमावृत्य प्रमादे सञ्जयत्युत संश्लेषयति; सङ्गमयतीवेत्यर्थः । केनावृत्येत्यत आह—स्वेनेति । किंरूपेण स्वेनेत्यत आह—आवरणात्मनेति । स्वस्वरूपेणैवावृत्येत्यर्थः । आवारकत्वात्स्वस्वरूपस्य तमस इति भावः । आवरणात्मकं हि तमः, प्रकाशात्मकं तु सत्त्वं, रागात्मकं तु रज इति बोध्यम् । प्रमादशब्दार्थमाह—प्राप्तेति । प्राप्तं शास्त्रादज्ञस्य प्राप्तं यत्कर्तव्यं कर्म तस्याकरणं प्रमाद इत्युच्यते ।

उक्तं कार्यं कदा कुर्वन्ति गुणा इति, उच्यते—

रजस्तमश्चाभिभूय सत्त्वं भवति भारत !
रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥१०॥

रज इति । रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्म सत्त्वं स्वकार्यं ज्ञानसुखादि आरभते हे भारत! तथा रजोगुणस्सत्त्वं तमश्चैवोभावप्यभिभू वर्धते यदा तदा कर्म कृष्यादि स्वकार्यमारभते । तम आख्यो गुणस्सत्त्वं रजश्चोभावप्यभिभू तथैव वर्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते ॥१०॥

यदा यो गुण उद्भूतो भवति, तदा तस्य किं लिङ्गमिति, उच्यते—

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥

सर्वेति । सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु द्वा ष्वन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन्नुपजायते । तदेव ज्ञानं यदैवं प्रका

---

इदमेव ह्यनवधानंनाम यत्कर्तव्यस्य कर्मणोऽकरणम् । कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनव प्रमाद इति रामानुजः, तन्मन्दम्—कर्तव्याकरणस्यैवानवधानत्वेन तदन्यत्र प्रवृत्तिहेतुरनवधानमि कल्पनस्यान्याय्यत्वात् । यो ह्यनवहितचित्तस्स प्राप्तमेव न करोति, किं पुनरप्राप्तं न करोतीति ॥९

रज इति । हे भारत! सत्त्वं कर्तृ रजस्तमश्चाभिभूय भवति । रजः कर्तृ सत्त्वं त श्चाभिभूय भवति । तथा तमः कर्तृ सत्त्वं रजश्चाभिभूय भवति । यदा तदा सत्त्वादयस्स्वं स्वं का मारभन्त इति वाक्यशेषः । अभिभूय तिरस्कृत्य । उद्भवतीति । ननु प्रागेव सिद्धस्य कथं पु रुद्भवोऽत आह—वर्धत इति । लब्धात्मकं प्राप्तप्रतिष्ठम् । आरभते जनयति ।

रामानुजस्तु—सत्त्वादयः प्रकृतिसंसृष्टात्मस्वरूपानुबन्धिन इत्युक्तवान्, तत्तु देहाकारपरि प्रकृतिस्वरूपानुबन्धिनस्सत्त्वादयो गुणा इति। तदीयेनैव वचनेन पराहतम् । न हि प्रकृतिस्वरूपा बन्धिनो गुणाः प्रकृतिविलक्षणात्मस्वरूपानुबन्धिनो भवितुमर्हन्ति । नाप्यात्मस्वरूपस्य प्रकृतिसंसर्ग मस्ति- असङ्गत्वादात्मनो निरवयवत्वाच्च ॥१०॥

सर्वेति । उद्भूतः प्रवृद्धस्तस्य प्रवृद्धगुणस्य गुणवृद्धेरिति वा । लिङ्गं चिह्नं ज्ञापकमि यावत् । इति शङ्कायामुच्यते सर्वद्वारेष्विति श्लोकः । यदाऽस्मिन्देहे सर्वद्वारेषु प्रकाशो ज्ञा मुपजायते तदा सत्त्वं विवृद्धमिति विद्यादुतोपलब्धिर्घटादिज्ञानं, तद्द्वाराणि चक्षुरादिद्वारेण नि तान्तःकरणवृत्त्या हि घटादिकं विषयमुपलभत आत्मा प्रमाता । सर्वेषु द्वारेष्विति न युगपत्, किं क्रमेणेति भावः । न ह्येकमेवान्तःकरणं युगपत्सर्वद्वारेभ्यो निर्गत्य शब्दस्पर्शादिसर्वविषयाकारेण प णन्तुमीष्टे । युगपत्सर्वेन्द्रियज्ञानानुत्पत्तिर्हि मनसो लिङ्गमिति वृद्धव्यवहारात् ।

प्रकाशशब्दार्थमाह—बुद्धेर्व्याप्तिरिति, तदेवेति । प्रकाश एवेत्यर्थः । वलीनत्व

ज्ञानाख्य उपजायते, तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्वमित्युतापि ॥११॥

रजस उद्भूतस्येदं चिह्नम्—

लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥१२॥

लोभ इति । लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भ उद्यमः, केषाम् ? कर्मणाम् । अशमोऽनुपशमो हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा- रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे भरतर्षभ ! ॥१२॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥१३॥

अप्रकाश इति । अप्रकाशोऽविवेकः, अत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावः, तत्कार्यं प्रमादः, मोह एव चाविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन! ॥१३॥

---

सामान्यात् । प्रकाश इति यद्वस्तु तदेवेति वा । प्रकाशनमेवेति वा । ज्ञानमिति । वृत्तिज्ञानमित्यर्थः । ज्ञानप्रकाशेनेति । ज्ञानाख्यप्रकाशेनेत्यर्थः । सूर्यादिप्रकाशव्यावृत्त्यर्थं ज्ञानविशेषणम् । प्रकाशो बुद्धिव्याप्तिस्स एव ज्ञानमिति, ज्ञानस्य प्रकाशत्वविशेषण तु चैतन्यव्यावृत्त्यर्थमिति बोध्यम् । तस्मान्नान्यतरवैयर्थ्यमन्यतरवैयर्थ्यमेव हि पुनरुक्तिदोषबीजं तस्मान्न पौनरुक्त्यम् । उतेत्यव्ययस्यार्थमाह—अपीति । चेत्यर्थः ।

यत्तु रामानुजः—वस्तुयाथात्म्यप्रकाशो ज्ञानमुपजायत इति, तन्मन्दम्—वस्तुयाथात्म्यप्रकाशस्यैव ज्ञानत्वेन ज्ञानप्रकाशयोराधाराधेयभावायोगाद्विषयविषयिभावायोगाच्च ॥११॥

लोभ इति । हे भरतर्षभ ! रजसि विवृद्धे सति लोभः प्रवृत्तिः कर्मणामारम्भोऽशमः स्पृहा इत्येतानि जायन्ते । लिप्सा लब्धुमिच्छा । आरम्भप्रवृत्त्योस्सामान्यविशेषाभावाद्भेद इत्याह—सामान्यचेष्टेति । गमनादिसामान्यव्यापारः प्रवृत्तिः, यज्ञादिकर्मविशेषव्यापार आरम्भ इति विवेकः । कर्मणामिति । यज्ञादीनामित्यर्थः । उपशमो निवृत्तिः, तदभावोऽनुपशमः । फलितार्थमाह—हर्षेति । हर्षरागादिविषयेषु प्रवृत्तिरशम इत्यर्थः । सर्वसामान्यवस्तूनि शब्दादयः । येषु सर्वेषां जन्तूनामभिलाषः । लिङ्गानीति । ज्ञापकानि कार्याणीत्यर्थः । कार्येण हि कारणमनुमीयत इति कारणस्य कार्यं लिङ्गं वह्नेर्धूमवत् । लोभः स्वकीयद्रव्यस्यात्यागशीलतेति रामानुजः । तत्तु- 'कामस्यान्तं तु क्षुत्तृड्भ्यां क्रोधस्यान्तं फलोदयात् । नरो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवं' इति भागवतविरुद्धत्वादुपेक्ष्यम् ॥१२॥

अप्रकाश इति । हे कुरुनन्दन ! तमसि विवृद्धेसत्यप्रकाशोऽप्रवृत्तिः, प्रमादो मोह एव चेत्यादीनि जायन्ते । अत्यन्तमविवेकः स्वपरज्ञानाभावः । तत्कार्यमिति । तमःकार्यमित्यर्थः । एवं तत्कार्यं इत्यत्रापि । मोहशब्दार्थमाह—अविवेक इति । फलितमाह—मूढतेति । अप्रकाशमोहयो-

मरणद्वारेणापि यत्फलं प्राप्यते तदपि सहेतुकं सर्वं गौणमेवेति दर्शयन्नाह—

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥१४॥

यदेति । यदा सत्त्वे प्रवृद्धे तूद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदोत्तमविदां महदादितत्त्वविदामित्येतत् । लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥

रजसीति । रजसि गुणे प्रवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । तथा तद्वदेव प्रलीनो मृतस्तमसि प्रवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥१५॥

---

स्सुतरांज्ञानाभावाल्पज्ञानसत्त्वाभ्यां भेदः । अप्रकाशो ज्ञानाभावः, मोहस्तु विपरीतज्ञानमिति रामानुजः, तदयुक्तम्—विपरीतज्ञानस्य रजआद्युद्रेकदशायामपि सत्त्वात् ॥१३॥

यदेति । तदपि फलं सहेतुकं सकारणं गौणं सत्त्वादिगुणप्रयुक्तमेवेत्यर्थः । यदा देहभृत्सत्त्वे प्रवृद्धे सति तु प्रलयं याति तदा अमलानुत्तमविदां लोकान्प्रतिपद्यते । आत्मेति । अनात्मन्यात्माभिमानवानज्ञ इत्यर्थः । यद्वा आत्मा प्रलयं यातीव लोकान् प्रतिपद्यत इवेति बोध्यम् । नहि वस्तुत आत्मनो मरणादिसम्भवः । उत्तमविदां तत्त्वविदां लोकान्समूहान् प्रतिपद्यते, आत्मविदां कुलेषु जायत इत्यर्थ इति रामानुजः, तन्मन्दम्—लोकशब्दस्य प्रसिद्धं भुवनार्थं त्यक्त्वा अप्रसिद्धसमूहार्थकल्पनं, तत्रापि समूहान् प्रतिपद्यत इत्यस्य कुलेषु जायत इत्यर्थवर्णनं चायुक्तमिति ॥१४॥

रजसीति । देही रजसि प्रवृद्धे सति प्रलयं गत्वा कर्मसङ्गिषु जायते । तथा तमसि प्रवृद्धे सति प्रलीनस्सन् मूढयोनिषु जायते । मनुष्येष्विति देवादीनां कर्माधिकाराभावादिति भावः । एवं सत्त्वे प्रवृद्धे मृतानां देवादिजन्मप्राप्तिरिति सिद्धम् ।

यत्तु रामानुजः—सत्त्वे प्रवृद्धे मृत इहैव मनुष्येषु तत्त्ववित्सु जातस्सन् पुण्यकर्माणि करोति । रजसि तु स्वर्गादिकर्मस्विति, तत्तुच्छम्—स्वर्गादिकर्मणामपुण्यकर्मत्वस्यान्याय्यत्वात् नचात्मयाथात्म्यज्ञानसाधनानि कर्माणि पुण्यकर्माणीति वाच्यं, यज्ञादीनामपि तथात्वात् । नच फलाभिसन्धिरहितानि पुण्यकर्माणीति वाच्यं, तेषां पुण्यपापोभयातिरिक्तत्वात् । पापकर्मवत्पुण्यकर्मापि देवादिजन्मप्रदानद्वारा बन्धकं हि । तस्माद्यानि पुण्यकर्माणि स्वर्गादिसाधनानि तान्येव यज्ञादीनि फलाभिसन्धिरहितानि ज्ञानसाधनानीति नास्ति यज्ञाद्यतिरिक्तं ज्ञानसाधकं पुण्यकर्म । किंच कर्मसङ्गिषु जायत इति रजसि मृते विषय एव स्मर्यते, नतु सत्त्वे मृते विषय इति कथं सत्त्वे मृतानां कर्मसङ्गित्वं कल्पयितुं शक्यमनुच्छृङ्खलप्रवृत्तिना केनापि ? ॥१५॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते—

कर्मणस्सुकृतस्याहुस्सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥

कर्मण इति । कर्मणस्सुकृतस्य सात्त्विकस्येत्यर्थः । आहुश्शिष्टास्सात्त्विकमेव निर्मलं फलमिति । रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः । कर्माधिकारात्फलमपि दुःखमेव, कारणानुरूप्याद्राजसमेव । तथाऽज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य फलं पूर्ववत् ॥१६॥

किंच गुणेभ्यो भवति—

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥

सत्त्वादिति । सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानं, रजसो लोभ एव च, प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव च भवति ॥१७॥

---

कर्मण इति । सुकृतस्य कर्मणस्सात्त्विकं निर्मलं फलमाहुः । रजसस्तु दुःखं फलमाहुः । तमसस्त्वज्ञानं फलमाहुः । सात्त्विकस्य सत्त्वगुणप्रयुक्तस्य । सात्त्विकं सत्त्वप्रधानमत एव निर्मलं फलं देवत्वादिलक्षणं सुखहेतुभूतम् । रजस इति । कर्मप्रकरणादत्र न गुणग्रहणं युक्तमित्याह—राजसस्येति । कर्माधिकारादिति । 'रजः कर्मणि भारत!' इत्युक्तत्वादिति भावः । फलमपीति । यथा कर्म उपकरणादिसम्पादनादिना दुःखं तद्वत्तत्फलमपीत्यपेरर्थः । दुःखं दुःखकरमेवेत्यर्थः । तच्च फलं राजसमेव । कुतः ? कारणानुरूप्यात् । कारणस्य कर्मणो राजसत्वात्तत्फलस्यापि राजसत्वमिति भावः । अधर्मस्येति । हिंसादिलक्षणस्येत्यर्थः । एतेन राजसं कर्म धर्मरूपमिति सूचितम् । पूर्ववदिति । तामसमेवेत्यर्थः । सात्त्विकं कर्म कृत्वा देवत्वादिलक्षणं सुखादिलक्षणं ज्ञानलक्षणं वा फलं लभन्ते । राजसं कर्म कृत्वा मनुष्यत्वलक्षणं विहितानुष्ठानरूपं दुःखात्मकं वा फलं लभन्ते । तामसं कर्म कृत्वा पशुत्वादिलक्षणं मोहाद्यात्मकं फलं लभन्ते । तत्र फलाभिसन्धिरहितं कर्म सात्त्विकं, तद्युक्तं विहितं कर्म राजसं, हिंसादिरूपं तु तामसमिति विवेकः ॥१६॥

सत्त्वादिति । सत्त्वाद्ज्ञानं सञ्जायते, रजसो लोभ एव सञ्जायते च, तमसः प्रमादमोहौ भवतः- अज्ञानमेव भवति च । प्रवृद्धेभ्य एव सत्त्वादिभ्य उक्तकार्यसम्भव इत्यभिप्रेत्याह—लब्धात्मकादिति । रजस्तमोभिभवपूर्वकं प्राप्तप्रतिष्ठादित्यर्थः । एवं लब्धात्मकाद्रजसो लब्धात्मकात्तमसश्चेत्यपि बोध्यम् । अज्ञानं निद्रादिरूपं मूलाज्ञानम् । ज्ञानाभाव इति रामानुजः—अभावस्य जनिलक्षणभावविकारायोगात्तदुक्तमुपेक्ष्यम् ॥१७॥

किंच—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥१८॥

ऊर्ध्वमिति । ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थास्सत्त्वगुणवृत्तस्थाः मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्थाः जघन्यश्चासौ गुणश्च जघन्य गुणो तमः, तस्य वृत्तं निद्रालस्यादि, तस्मिन् स्थिता जघनन्यगुणवृत्तस्था मूढा अ गच्छन्ति पश्वादियोनिषूत्पद्यन्ते तामसाः ॥१८॥

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मके 'सुखी दुःखी मूढोऽहम्'स्मीत्येवंरूपो यस्सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षण संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भ इत्यत आरभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबन्धनश्च पुरुषस्य या गतिरित्येतत् । सर्वं मिथ्याज्ञानमज्ञानमूलं च बन्धकारणं विस्तरेणोक्तं अधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्याह भगवान्—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥

नेति । नान्यं कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्र

---

ऊर्ध्वमिति । ये आमरणं सत्त्वस्थास्ते मरणानन्तरमूर्ध्वं गच्छन्ति । ये त्वेवमामरणं रजस्था मरणानन्तरं पुनरपि मध्य एव तिष्ठन्ति । ये त्वामरणं तमस्स्थास्ते मरणानन्तरमधो गच्छन्ति उत्पद्यन्त इति । देवादिजन्म लभन्त इत्यर्थः । सत्त्वगुणस्य या वृत्तयस्तासु स्थिताः । सात्त्वि कार्यपरा इत्यर्थः । मध्ये तिष्ठन्ति मनुष्येष्वेवोत्पद्यन्ते । राजसा रजोगुणवृत्तिस्थाः । राजसकर्मक इत्यर्थः । तामस इति । तमोगुण इत्यर्थः । स्वार्थेऽण् । उत्कृष्टत्वाद्देवादिजन्मन ऊर्ध्वस्थत्व कृष्टत्वात्पश्वादिजन्मनोऽधस्स्थत्वमुत्कर्षापकर्षरहितत्वान्मनुष्यजन्मनो मध्यस्थत्वमिति भावः । पु प्रयुक्तत्वाद्देवजन्मनोत्कृष्टं, पापप्रयुक्तत्वात्पश्वादिजन्मापकृष्टमुभयात्मकत्वान्मनुष्यजन्म मध्यस्थमिति बोध्य

ऊर्ध्वं गच्छन्ति मुच्यन्त इति रामानुजः, तदयुक्तम्—'नास्त्यकृतः कृते'नेति श्रुत्या सात्त्वि कर्मकरणादपि मुक्त्यसम्भवात् । मुक्तेर्ब्रह्मभावलक्षणाया ऊर्ध्वस्थत्वासम्भवाच्च । परिपूर्णं हि ब्रह्म ॥१८

नेति । वर्तिष्यमाणसङ्गतये वृत्तं कीर्तयति—पुरुषस्येत्यादिना । पुरुषस्य गुणेषु यस्स तत्संसारस्य कारणमिति समासेन पूर्वाध्याये यदुक्तं तदिह विस्तरेणोक्त्वा, इति वृत्तानुकथन कीदृशस्य पुरुषस्य ? मिथ्याज्ञानेन युक्तस्य । किं तन्मिथ्याज्ञानम् ? प्रकृतिमत्त्वरूपं प्रकृतिरस्तीत्येवं कालत्रयेऽप्यविद्यमानायां प्रकृतौ यदस्तित्वज्ञानं तन्मिथ्याज्ञानं, यथा मरुमरीचिकास्वविद्यमाने जले स्तित्वज्ञानम् । एवं प्रकृतावस्तित्वभ्रमो भवतीति भावः ।

२४

विद्वान् सन् नानुपश्यति, गुणा एव सर्वावस्थास्सर्वकर्मणां कर्तार इत्येवं पश्यति, गुणेभ्यश्च

कीदृशेषु गुणेषु ? भोग्येषु सुखदुःखमोहात्मकेषु सत्त्वादिगुणत्रयकार्यत्वात्सुखदुःखमोहानां गुणत्वव्यवहार औपचारिकः। यद्वा द्रव्याश्रितत्वरूपं गुणत्वलक्षणमिह बोध्यं, सुखादीनामन्तःकरण-द्रव्याश्रितत्वाद्गुणत्वमिति। यद्वा सुखदुःखमोहात्मना परिणतत्वात्सत्त्वादिगुणा एव सुखदुःख-मोहात्मका इतीहोच्यन्ते घटरूपा मृदितिवत्। कीदृशस्सङ्गः ? सुख्यहं दुःख्यहं मूढोऽहमित्येवंरूपः। अनात्मधर्माणां सुखदुःखमोहानामात्मन्यध्यासरूपोऽयं सङ्ग इति भावः। तदिति। स सङ्ग इत्यर्थः। सामान्ये नपुंसकं, विधेयप्राधान्यादिति वा।

कीदृशस्य संसारस्य ? सदसद्योनिजन्मप्राप्तिलक्षणस्य। सद्योनयो देवादयः, असद्योनयः पश्वादयः, सदसद्योनयो मनुष्याः; तासु योनिषु जन्मप्राप्तिरेव लक्षणं स्वरूपं यस्य तस्य तथोक्तस्य। समासेन संक्षेपेण। यदुक्तमिति। 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्म'स्विति श्लोकेनेति भावः। तदिहेत्यत्रत्यतच्छब्दार्थमाह—एतत्सर्वं मिथ्याज्ञानमिति। किं तत्सर्वमत आह—गुणस्वरूप-मित्यादि। गुणानां सत्त्वादीनां स्वरूपं प्रकाशकत्वरञ्जकत्वमोहकत्वात्मकं गुणानां वृत्तिं व्यापारं ज्ञानलोभप्रमादाद्यात्मकं गुणानां स्ववृत्तेन स्वीयव्यापारेण पुरुषस्य बन्धकत्वं गुणवृत्तिरेव निबन्धनं बन्धकं यस्य तस्य। गुणवृत्तिभिर्निबन्धनं बन्धो यस्य तस्येति वा। गुणेषु वृत्तिः प्रवृत्तिरेव स्थितिरेवेति वा। निबन्धनं बन्धो यस्य तस्येति वा। गुणवृत्तनिबद्धस्येति नागरपुस्तकपाठः। तदा तृतीयातत्पुरुषः। पुरुषस्य या गतिर्मरणानन्तरं यत्प्राप्यमित्यर्थः। तामिति शेषः।

पूर्वाध्याये यत्समासेनोक्तमिहाध्याये तदेतत्सर्वं मिथ्याज्ञानं विस्तरेणोक्त्वेत्यन्वयः। कीदृशं मिथ्याज्ञानमत आह—अज्ञानमूलबन्धकारणमिति। अज्ञानं मूलं यस्य सोऽज्ञानमूलस्स चासौ बन्धस्तस्य कारणमज्ञानात्प्रपञ्चस्य जातत्वेन, जाते प्रपञ्चे सुखाद्यात्मके पुरुषस्य ममाहमिति प्रत्ययस्य बन्धहेतुत्वेन च। अज्ञानं मिथ्याज्ञानं चेत्युभयं बन्धकारणमित्यर्थः। अज्ञानमूलं च तद्बन्धकारणं चेति वा समासः। मिथ्याज्ञानस्याज्ञानं कारणं तच्च मिथ्याज्ञानं बन्धस्य कारणमित्यर्थः। तस्य च बन्धस्य मोक्षोपायो ज्ञानं वक्तव्यं बन्धं श्रुत्वा भीतानां श्रोतॄणां माभैष्ट- इत्यभयप्रदानार्थमित्यभिप्रय-न्नाह—मोक्षो वक्तव्य इति, अत इति। मोक्षस्य ज्ञानस्य वा तदुभयस्य वा वक्तव्यत्वादित्यर्थः।

यदा द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति, गुणेभ्यश्च परमात्मानं वेत्ति स तदा मद्भावमधि-गच्छति। प्रकृतिस्तावद्गुणत्रयाकारेण परिणता। सा च त्रिगुणात्मिका प्रकृतिर्देहेन्द्रियविषयाकारेण परिणतेति कृत्वा कार्यकरणविषयाकारेण परिणतेभ्यो गुणेभ्य इत्युक्तम्। एतेन प्रकृतेर्गुणत्रयद्वारेणैव जगदात्मना परिणामो नतु स्वत इति सिद्धम्।

गुणा एवेति। कार्यकरणाद्यात्मना परिणतास्सत्त्वादय एवेत्यर्थः। सर्वावस्थास्विति। जाग्रदादिष्वित्यर्थः। सुखित्वदुःखित्वाद्यवस्थास्विति वा। सर्वकर्मणामिति। वाचिककायिक-

परं गुणव्यापारसाक्षिभूतं वेत्ति; मद्भावं मम भावं स द्रष्टाऽधिगच्छति ॥१९॥

कथमधिगच्छतीत्युच्यते—

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

गुणानिति । गुणानेतान् यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतान् त्रीन्

---

मानसिकानां विहितानां प्रतिषिद्धानां सामान्यानां वा सर्वेषां कर्मणाम् । पश्यति जानाति, अनुसन्धत्ते इति यावत् । परमन्यं विलक्षणं वा । परत्वमेव दर्शयितुमाह—गुणव्यापारसाक्षिभूतमिति । गुणानां तद्व्यापाराणां च साक्षाद्द्रष्टारं गुणानां ये व्यापारास्तेषां साक्षाद्द्रष्टारमिति वा । तच्च साक्षित्वं निर्धर्मके आत्मनि कल्पितमेवेति सूचयितुमाह—साक्षिभूतमिति । न तु वस्तुतस्साक्षिणमित्यर्थः । आत्मानमिति शेषः । वेत्ति जानाति । साक्षात्करोतीति यावत् । परोक्षज्ञानात्संसारस्यानिवृत्तेरिति भावः । वासुदेवत्वं ब्रह्मभावम् । कैवल्यमिति यावत् । य एवं वेद तस्यैव वासुदेवस्सर्वमिति सर्वात्म- ज्ञानं तदेव मोक्षकारणमित्याह—वासुदेव इति । सत्यात्मस्वरूपसाक्षात्कारे सर्वस्यात्मनि कल्पितत्वा- त्सर्वमात्मैवेति ज्ञानं जायते; ततश्च सर्वं ब्रह्मस्वरूपेणैव भाति; ब्रह्मातिरिक्तं किञ्चिदपि न भाति; ततः केवलात्मस्वरूपेण जीवद्दशायामेव तिष्ठति विद्वानिति भावः । एतेन विद्वान्मद्भावमधिगच्छतीति वर्तमानक्रियानिर्देशाज्जीवत एव कथं केवलात्मभावप्राप्तिरिति शङ्का परास्ता । सर्वस्य ज्ञानिदृष्ट्या मिथ्यात्वेनात्मनः केवलत्वादिति । अत्र वासुदेवत्वमधिगच्छतीत्युक्ते कथं जीवत एव वासुदेवत्व- प्राप्तिरिति शङ्कायां तदपनोदनायाह—वासुदेवस्सर्वमिति, पश्यन्निति । इति व्याख्येयम् ।

एतच्छ्लोकस्य जीवन्मुक्तिपरत्वं चोत्तरश्लोकभाष्ये स्फुटीभविष्यति । वर्तमानधात्वर्थनिर्देश एव भाष्यस्यापि लिङ्गमिति बोध्यम् । अन्यथा हि मद्भावं सोऽधियास्यतीति ब्रूयात् । अस्योत्तरश्लोकस्य च जीवन्मुक्तिपरत्वादेवार्जुनस्त्रीन्गुणानतिवर्तत इति जीवत एव गुणातिवर्तनं कथमिति प्रवक्ष्यति । अति- वर्तत इति वर्तमानधात्वर्थनिर्देशात्तत्रापि ।

यत्तु रामानुजः—सत्त्वस्थानामूर्ध्वगमनप्रकार एवानेन श्लोकेनोच्यत इति, तत्तुच्छम्— सत्त्वस्थानां ज्ञान्यहं सुख्यहमिति सत्त्वकार्यज्ञानादेरात्मन्यध्यासात् । कथमन्यथा तेषां सत्त्वस्थत्वं स्यात् ? ये तु नाहं सुखीत्यादिप्रकारेणानुसन्दधते ते गुणाऽतीता एव । उक्तं हि 'निस्त्रैगुण्यो भवार्जुने'ति । तस्माद्ज्ञानिविषयमेवेदम् । नच पूर्वं सात्त्विका एवेदानीं ज्ञानिनो जाता इति ज्ञानि- विषयमपीदं सात्त्विकविषयमेवेति वाच्यं, पूर्वं गृहिण एवेदानीं सन्न्यासिनो जाता इति सन्न्यासिविषया दण्डकमण्डलुशिखायज्ञोपवीतत्यागादयः किं गृहिविषया भवन्ति ? तस्मात्सात्त्विकेभ्योऽन्य एवैते ज्ञानिन इति स्थितम् ॥१९॥

गुणानिति । देही देहसमुद्भवानेतान् त्रीन् गुणानतीत्य जन्ममृत्युजरादुःखैर्विमुक्तस्सन्नश्नु-

देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः- जन्म च मृत्युश्च जरा च दुःखानि च जन्ममृत्युजरादुःखानि, तैर्जीवन्नेव विमुक्तस्सन् विद्वानमृतमश्नुते । एवं मद्भावमधिगच्छतीत्यर्थः ॥२०॥

---

मश्नुते । जीवन्नेवेति । अश्नुत इति वर्तमानधातुनिर्देशादधिगच्छत्यतिवर्तत इति पूर्वोत्तरग्रन्थसन्दर्भाच्च जीवन्नेवेत्युक्तम् । मायोपाधिभूतानिति । मायापरिणामत्वाद्गुणा मायाया उपाधिभूता यथा मृदो घटाकार उपाधिः । यद्वा मिथ्याभूताऽऽत्मन उपाधय इति वा । देहस्य समुद्भवो येभ्यस्तान्देहसमुद्भवान् । सत्त्वादिगुणपरिणामत्वाद्देहस्येति भावः । देहस्योत्पत्तिं प्रति बीजभूतान् कारणभूतान् । यद्यपि जन्मादयो दुःखहेतुत्वाद्दुःखानि, तथापि तदतिरिक्तरोगादिसंग्रहाय दुःखग्रहणम् । यद्वा जन्ममृत्युजरादुःखहेतवः । दुःखं तु तज्जन्यं रोगादिजन्यं च । एवं दुःखतत्कारणोभयसंग्राहार्थं जन्ममृत्युजरादुःखैरित्युक्तिः । अथ वा येऽन्ये दुःखहेतवस्ते सर्वे जन्ममृत्युजराप्रयुक्ता एवेति दुःखतद्धेतुजन्मादित्रयरूपकार्यकारणविमुक्तिकथनाय जन्ममृत्युजरादुःखैरित्युक्तम् ।

ननु यदि जीवन्नेव मृत्युना विमुच्येत, तर्हि जीवन्मुक्तस्य विदेहकैवल्यं न स्यादेव । तथा जरया विमुच्येत चेज्जीवन्मुक्तस्सदापि तरुण एव भवेन्न तु वृद्धः । द्वयमपीदमनुपपन्नं जीवन्मुक्तस्यापि वृद्धत्वमृतत्वयोर्दर्शनादिति चेत्, मैवम्—नाहं देहादिः, किं तु ब्रह्मैवाहमस्मीति जानतो जीवन्मुक्तस्य देहाद्याश्रयजन्मादिभिः कथं सङ्गस्स्यात् ? न कथमपि । देहादितादात्म्याध्यासाद्धि जातोऽहं जीर्णोऽहं मरिष्येऽहमितिं प्रत्येत्यविद्वान् । तस्मादविद्ययाऽऽत्मन्यध्यस्तैरनात्मधर्मैर्जन्मादिभिराध्यासिको य आत्मनस्सम्बन्धस्तं विद्यया विद्वान् परिहरतीति जन्मादिभिर्विमुक्त इत्युच्यते विद्वान् । न हि विदुष्यात्मनि जन्मादयस्सन्ति, येन जीवन्मुक्तस्यात्मनो जरामृत्यू पुनस्स्याताम् । विद्वद्देहस्य च जरामृत्यू अवर्जनीये एवेति स्यादेव विदेहकैवल्यं जीवन्मुक्तस्य । अस्य च विदुषो जीवन्मुक्तत्वं विदेहमुक्तत्वं च न स्वदृष्ट्या- विद्वद्दृष्ट्या बन्धमोक्षादिद्वैताभावात् । 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति श्रवणात् । किं त्वज्ञदृष्ट्यैव । अज्ञो हि विद्वच्छरीरे प्राणान् धरति सति विद्वान् जीवन्मुक्त इति, अप्राणे सति विदेहमुक्त इति च प्रत्येति । तस्मान्न कोऽपि दोषः । अमृतं ब्रह्म, अश्नुते प्राप्नोति । इयमेव ब्रह्मप्राप्तिर्मद्भावमधिगच्छतीति पूर्वश्लोकेनोक्तेत्याह—एवमिति ।

यत्तु रामानुजः—अमृतमात्मानमनुभवत्येष मद्भाव इत्यर्थ इति, तत्तुच्छम्—आत्मेश्वरयोर्भिन्नत्वेन कथमात्मप्राप्तेर्भगवद्भावत्वम् ? नच यथाऽहमीश्वर आत्मानमनुभवामि तथा जीवोऽप्यात्मानमनुभवतीत्यर्थ इति वाच्यं, मद्भावशब्दादुक्तार्थालाभात् । नच 'मम साधर्म्यमागता' इति पूर्वोक्तानुगुण्येनेहापि मद्भाव इत्यस्य मत्साधर्म्यमित्यर्थ इति वाच्यं, मद्भावपदानुरोधेन मम साधर्म्यमित्यस्यापि मदभेद इत्येवार्थ इति वक्तुं शक्यत्वात् । नापि 'परमं साम्यमुपै'तीति श्रुतिप्रामाण्यान्मद्भाव इत्यस्य मत्साम्यमित्यर्थ इति वाच्यं, 'ब्रह्मविद्ब्रह्मैव भव'तीत्यादिश्रुत्यन्तरानुरोधेन 'परमं साम्यमुपै'तीति श्रुते-

जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्यार्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीत्य भवति प्रभो !
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥२१॥

कैरिति। कैर्लिङ्गैः चिह्नैः त्रीनेतान्व्याख्यातान्गुणानतीतोऽतिक्रान्तो भवति हेप्रभो! किमाचारः कोऽस्याचार इति किमाचारः, कथं केन च प्रकारेणैतान् त्रीन्गुणानतिवर्ततेऽतीत्य वर्तते ॥२१॥

---

रपि ब्रह्माभेदप्राप्तिपरत्वनिश्चयात्। न च 'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवति मुनेर्विजानत आत्मा भवति गौतम!' इति श्रुतिरिह प्रमाणमिति वाच्यं, शुद्धस्योदकस्येव शुद्धस्यात्मनो न भेदः। यस्तूपाधिप्रयुक्तो भेदस्स उपाधिनाशान्नष्ट इति जीवस्य ब्रह्माभेद एव तच्छ्रुतितात्पर्यात्। कलशे गृहीतं गङ्गोदकं गङ्गायां पुनः कलशादवतारितं चेद्गङ्गाऽभेदमेवयाति। गङ्गातः कलशोदकस्य यो भेदकः कलशात्मक उपाधिस्तस्य त्यागात्। नतु गङ्गासाम्यं प्रयाति- साम्यस्य तत्रादर्शनात्। साम्यं हि वस्तुद्वयोपलब्ध्यधीनम्। प्रकृते तु जलरूपमेकमेव वस्तूपलभ्यत इति कथं साम्यावकाशः? एवमीश्वरचैतन्याज्जीवचैतन्यस्य यो भेदक उपाधिरन्तःकरणात्मकस्तस्य विद्यया नाशे सति जीवचैतन्यमीश्वरचैतन्याभेदमेव प्रपद्यते, न तु साम्यं- भेदकाभावेन भेदाभावात्। न ह्यन्तःकरणनाशानन्तरं चैतन्यद्वयोपलम्भः, येन साम्यस्यावकाशस्स्यात्। तस्मादुपाधिसद्भावदशायामेव जीवेश्वरयोस्साम्यं ज्ञातृत्वादिरूपं, न तूपाधिराहित्य इति न प्रकृतश्रुतेर्जीवेश्वरसाम्यप्रतिपादकत्वं, किं तु तदभेदप्रतिपादकत्वमेव। नहि घटे नष्टे सति घटाकाशमहाकाशयोस्साम्यं भवितुमर्हति, किं त्वभेद एव। न च तादृगेवेति तादृक्छब्दस्वारस्यात्साम्यपरत्वं श्रुतेरिति वाच्यं, तादृक्छब्दस्यापि तदभेद एव तात्पर्यात्न हि न्यायविरुद्धमर्थं श्रुतिरप्यभिप्रेयात्। नापि 'परेण परधर्मा च भवत्येव समेत्य वै' इति वसिष्ठसंहितानुसारात्साम्यस्वीकार इति वाच्यं, किमुपाधिं परित्यज्य परेण समेति जीव उतापरित्यज्य? यदि परित्यज्य समेति तर्हि परधर्मा भवतीत्यस्य पराभेदं प्राप्नोतीत्येवार्थः। द्वितीये तु- परसदृशधर्म इत्येवार्थः। अस्मिन्पक्षे तु समेत्येत्यस्यानुपपत्तिः। सति भेदकोपाधौ तत्सङ्गस्ययोगात्। न च घटपटयोरिव सङ्गतिरिह वाच्या- निरवयवासङ्गचैतन्यस्य तादृशसङ्गायोगात्।

यदि तु शङ्खचक्रादिमानीश्वरोऽत्र परशब्देन विवक्षितस्तर्हि समेत्येत्यस्य सान्निध्यं प्राप्येत्यर्थः। सगुणमुक्तश्चायं जीवः करणकलेबरादिमानेवेति स्वयमपि शङ्खचक्रादिमत्त्वरूपमीश्वरसाधर्म्यं प्राप्नुयादेव। तस्मान्नेयं स्मृतिर्जीवेश्वराभेदं श्रुतिशतसिद्धं निरोद्धुमीष्ट इति। किं च 'यो वै भूमा तदमृतं' तिति श्रुतेरमृतशब्दस्य भूमब्रह्मवाचित्वे सति तमर्थं विहाय जीवब्रह्माभेदं कल्पयित्वा जीवरूपमर्थं वर्णयतस्तव साहसिक्यं प्रति कोनाम बुधो न विस्मयेतेति ॥२०॥

कैरिति, प्रश्नबीजमिति। जीवन्मुक्तेः मोक्षत्वाज्जीवन्मुक्तस्य लक्षणादिजिज्ञासा जाताऽर्जुनस्येति भावः। एतान् त्रीन्गुणानतीतो विद्वान् कैर्लिङ्गैरुपलक्षितो भवति? किमाचारश्च भवति?

गुणातीतस्य लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिन्श्लोके प्रश्नद्वयार्थं प्रति-
वचनं भगवानुवाच । यत्तावत्- 'कैर्लिङ्गैः युक्तो गुणातीतो भवति' तच्छृणु !—

श्रीभगवानुवाच—

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव !**
**न द्वेष्टि सम्प्रवृत्तानि निवृत्तानि न कांक्षति ॥२२॥**

प्रकाशमिति । प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहमेव च तमःकार्य-
मेतानि न द्वेष्टि । सम्प्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि- 'मम तामसः प्रत्ययो
जातः, तेनाऽहं मूढः; तथा राजसी प्रवृत्तिः ममोत्पन्ना दुःखात्मिका, तेनाऽहं रजसा प्रवर्तितः
चलितः स्वरूपात्, कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानात् भ्रंशः, तथा सात्त्विको

---

द्वानेतान् त्रीन्गुणान् कथं चातिवर्तते ? गुणातीतस्य कानि लक्षणानीति प्रथमः प्रश्नः । क आचार
इति द्वितीयः । गुणातिक्रमणे किं साधनमिति तृतीयः । तत्राचारप्रश्नस्यापि लक्षणे पर्यवसानं बोध्यम् ।
आचारविशेषस्यापि जीवन्मुक्तचिह्नत्वात् । ततश्च प्रश्नद्वयमेवेह पर्यवसन्नम् । अत एव गुणातीतस्य
लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्ट इति वक्ष्यति भाष्यकारो भगवान् ॥२१॥

प्रकाशमिति, **प्रश्नद्वयार्थमिति** । प्रश्नद्वयस्येत्यर्थः । तावदादौ कैर्लिङ्गैर्युक्तो गुणातीतो
भवतीति यत्पृष्टं तच्छृणु- तस्योत्तरं शृण्वित्यर्थः । सम्प्रवृत्तानि प्रकाशं च प्रवृत्तिं च मोहमेव चेत्येतानि
न द्वेष्टि जीवन्मुक्त इति शेषः । गुणातीत इति वा । निवृत्तानि च तानि न कांक्षति । प्रकाशो
ज्ञानं प्रवृत्तिः कर्मसु प्रवर्तनं मोहोऽविवेकः । न द्वेष्टि तेष्वप्रीतिं न करोतीत्यर्थः । 'द्विष अप्रीतौ'-
इति धातुपाठात् । सम्यक्प्रवृत्तानि सम्प्रवृत्तानि । सम्यक्छब्दार्थमाह—**विषयभावेनेति** । विषयत्वेन
गोचरत्वेनेति यावत् ।

प्रवृत्तशब्दार्थमाह—**उद्भूतानीति** । विषयभूतानीति यावत् । घटनिरूपणाद्धि घटाभावो
ज्ञातुं शक्यते । एवं द्वेषाभावप्रदर्शनाय गुणकार्येषु द्वेषप्रकारं तावद्दर्शयति—**ममेत्यादिना** । मम
तामसस्तमोगुणजन्यः प्रत्ययोऽविवेको जातो हिंसादिबुद्धिर्जातेति वा । तेन प्रत्ययेन प्रत्ययजन्मनेति वा ।
अहं मूढ आसं भवामीति वा । राजसी दुःखात्मिका कर्मसु प्रवृत्तिर्ममोत्पन्ना, तेन रजसा प्रवर्तितोऽहं-
स्वरूपात्प्रच्यावितः । हा ! कष्टं मम वर्तते । किं तत्कष्टमत आह—**योऽयमिति** । योऽयं स्वरूपा-
वस्थानाद्भ्रंशः स्वरूपस्थितेः प्रच्युतिः तदिदं महत्कष्टमित्यर्थः ।

नन्वेवं तमोरजसोर्द्वेष उचित एव कष्टहेतुत्वात्कुतः पुनस्सत्त्वे द्वेषोऽत आह—**तथेति** । प्रकाशात्मा
सात्त्विको गुणः मां विवेकित्वमापादयन् मम शब्दस्पर्शादिविषयज्ञानं जनयन्सन्मां सुखेन चासञ्जयन्सन्मां
बध्नाति । एवं बन्धहेतुत्वात्सत्त्वेऽपि द्वेष उचित एवेति भावः । इत्येवं गुणांस्तत्कार्याणि च न द्वेष्टि ।

गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखे च संजयन् बध्नाति' इति तानि द्वेष्टि सम्यग्दर्शित्वेन। तदेवं गुणातीतो न द्वेष्टि सम्प्रवृत्तानि। यथा च सात्त्विकादिः पुरुषः सत्त्वादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि कांक्षति, न तथा गुणातीतो निवृत्तानि कांक्षतीत्यर्थः। एतन्न परप्रत्यक्षं लिङ्गं, किं तर्हि स्वात्मप्रत्यक्षत्वादात्मार्थमेवैतल्लक्षणम्। न हि स्वात्मविषयं द्वेषमाकांक्षां वा परः पश्यति ॥२२॥

अथेदानीं 'गुणातीतः किमाचारः ?' इति प्रश्नस्य प्रतिवचनमाह—

उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥२३॥

उदासीनवदिति। उदासीनवद्यथोदासीनः न कस्यचित्पक्षं भजते, तथाऽयं गुणा...

---

कुतो न द्वेष्टीत्यत आह—सम्यग्दर्शित्वेनेति। अहं ब्रह्मास्मि, सर्वं ब्रह्मेत्येवंरूपेण ज्ञानेन सत्त्वादिभ्रमनाशादिति भावः। तत्तस्मात्सम्यग्दर्शित्वादित्यर्थः। एवमुक्तरीत्या गुणातीतस्सम्प्रवृत्तानि प्रारब्धवशात्प्राप्तानि पूर्वोक्तानि प्रकाशादीनि न द्वेष्टि, निवृत्तानि च तानि न कांक्षति। क इव न कांक्षतीत्यतो व्यतिरेकदृष्टान्तमाह—यथा चेति। सात्त्विकादिरित्यादिपदाद्राजसतामसग्रहणम्। आत्मानं प्रति सात्त्विकादिपुरुषंप्रतीत्यर्थः। प्रकाश्य स्वस्वरूपं प्रकटयित्वा निवृत्तानि सत्त्वादिकार्याणि सात्त्विकादिः पुरुषो यथा च कांक्षतीत्यन्वयः। एतदिति। प्रवृत्तेषु सत्त्वादिकार्येष्वद्वेषणं निवृत्तानां तेषामकांक्षणं चेत्यर्थः। परस्य जीवन्मुक्तादन्यस्य लोकस्य प्रत्यक्षं लिङ्गं चिह्नं जीवन्मुक्तस्येति शेषः। न भवति। परहृदयस्याप्रत्यक्षत्वाज्जीवन्मुक्तगतमिदं लिङ्गं परो न जानीयादिति नेदं जीवन्मुक्तलिङ्गं परप्रत्यक्षमित्यर्थः। स्वात्मनस्स्वस्य स्वहृदयस्येति वा प्रत्यक्षं स्वात्मप्रत्यक्षं तत्त्वात्। स्वैकवेद्यत्वादित्यर्थः। आत्मार्थमेवेति। स्वार्थमेव। अहं जीवन्मुक्तो वा न वेति स्वात्मानं जीवन्मुक्तत्वेन निश्चेतुमिदं लिङ्गमुक्तमित्यर्थः। अहं जीवन्मुक्तः प्रवृत्ताद्वेषित्वान्निवृत्तानाकांक्षित्वादिति वेत्तुमित्यर्थ इति यावत्। कुतो नेदं परार्थमत आह—नहीति। स्वात्मविषयं स्वहृदयगोचरं द्वेषं कांक्षां वा परो न हि पश्यति। अस्य हृदयेऽमीषु प्राप्तेषु विषयेषु द्वेषोऽस्ति, अमीषु निवृत्तेषु विषयेषु कांक्षास्तीति परहृदयं प्रविश्य को जानीयान्न कोऽपीत्यर्थः। परहृदयस्याप्रत्यक्षत्वादिति भावः।

यत्तु रामानुजः—सम्प्रवृत्तान्यनिष्टानि न द्वेष्टि, निवृत्तानीष्टानि न कांक्षतीति, तदयुक्तम्, इष्टानिष्टपदाभावान्मूले। यानि प्रकाशादिकार्याणीष्टत्वेनाभिमतान्यज्ञानां तेषु प्राज्ञस्येष्टप्रत्ययाभावाद् बन्धहेतुत्वात्तान्यप्यनिष्टान्येव हि प्राज्ञस्य। नहि कस्यापि मोह इष्टस्स्यात्। येन निवृत्तमिष्टं मोहं मज्ञोऽपि कांक्षेत्। नह्यप्रसक्तस्य निषेध उचित इति ॥२२॥

उदासीनेति। जीवन्मुक्तलक्षणप्रश्नान्तर्गतमेवाचारप्रश्नमुत्तरयतीत्याह—अथेति, उदासीनवदिति। ननु जीवन्मुक्तस्यौदासीन्यं विधेयं चेच्छ्रीकृष्णव्यासशुकशङ्करादीनां जीवन्मुक्तानामुदासीनत्वे सति

**तीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यस्सन्न्यासी न विचाल्यते विवेकदर्शना-**
वेदान्तशास्त्रस्यैव समूलोच्छेदप्रसङ्गः । अत एव हि- 'स्वयं तीर्णः परांस्तारये'दिति शास्त्रं जीवन्मुक्तस्य स्वयंतीर्णस्य परेषां तारणं विधत्ते । नच शिष्योपदेशादिव्यतिरिक्तविषयमौदासीन्यमिति वाच्यं, बौद्धादिभिस्सह शङ्कराचार्यादीनां विवादायोगात् । नच शिष्योपदेशादीत्यादिपदादद्वैतमतस्थापनं ग्राह्यं, ततश्च तत्स्थापनार्थं बौद्धादिविवादो युक्त एवेति वाच्यं, तथा दुष्टशिक्षणार्थं कृष्णस्य युद्धव्यापारोऽपि युक्त एव । एवं क्रमक्रमेण सर्वे व्यापारा अपि जीवन्मुक्तस्य प्राप्नुवन्त्येवेति कथमौदासीन्यमिति चेत्सत्यमत एव उदासीनवदित्युक्तम् । तेन च उदासीनवदासीनं नाम न कर्मस्वप्रवृत्तिः, किंतु कुर्वन्नपि न लिप्यत इत्युक्तलक्षणं गुणकर्मसु कर्तृत्वाभिमानादिराहित्यरूपमेव । तथाहि चित्रदीपिकायां विद्यारण्यगुरुभिरुक्तम्—

'यदा सर्वे प्रभिद्यन्ते हृदयग्रन्थयस्त्विति । कामा ग्रन्थिस्वरूपेण व्याख्याता वाक्यशेषतः ॥
अहङ्कारचिदात्मानावेकीकृत्याविवेकतः । इदं मे स्यादिदं मे स्यादितीच्छाः कामशब्दिताः ॥
अप्रवेश्य चिदात्मानं पृथक्पश्यन्नहंकृतिम् । इच्छंस्तु कोटिवस्तूनि न चाथो ग्रन्थिभेदतः ॥
ग्रन्थिभेदेऽपि सम्भाव्या इच्छाः प्रारब्धदोषतः । बुद्ध्वापि पापबाहुल्यादसन्तोषो यथा तव ॥
अहङ्कारगतेच्छाद्यैर्देहव्याध्यादिभिस्तथा । वृक्षादिजन्मनाशैर्वा चिद्रूपात्मनि किं भवेत् ॥
ग्रन्थिभेदात्पुराप्येवमिति चेत्तन्न विस्मर । अयमेव ग्रन्थिभेदस्तव तेन कृती भवान् ॥
नैवं जानन्ति मूढाश्चेत्सोयं ग्रन्थिर्न चापरः । ग्रन्थितद्भेदमात्रेण वैषम्यं मूढबुद्धयोः ॥
प्रवृत्तौ वा निवृत्तौ वा देहेन्द्रियमनोधियाम् । न किञ्चिदपि वैषम्यमस्त्यज्ञानिविबुद्धयोः ॥
व्रात्यश्रोत्रिययोर्वेदपाठापाठकृता भिदा । नाहारादावस्ति भेदस्सोऽयं न्यायोऽत्र योज्यताम् ॥
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि कांक्षति । उदासीनवदासीन इति ग्रन्थिभिदोच्यते ॥
औदासीन्यं विधेयं चेद्वच्छब्दो व्यर्थतामियात् । न शक्ता अस्य देहाद्या इति चेद्रोग एव सः ॥
तत्त्वबोधं क्षयव्याधिं मन्यन्ते ये महाधियः । तेषां प्रज्ञाऽतिविशदा किं तेषां दुश्शकं वद ॥
भरतादेरप्रवृत्तिः पुराणोक्तेति चेत्तदा । जक्षन् क्रीडन् रतिं विन्दन्नित्यश्रौषीर्न किं श्रुतिम् ॥
न ह्याहारादि सन्त्यज्य भरताद्याः स्थिताः क्वचित् । काष्ठपाषाणवत्किं तु सङ्गभीता उदासत' इति ।

उदासीन इवोदासीनवत् । 'तेन तुल्यं क्रिया चे'दिति वतिरौपम्ये पर्यवस्यति । उदासीनतत्त्वविदोस्साम्यमेव दर्शयति—**यथेति, कस्यचिदिति** । विवदमानयोर्मध्ये कस्यापीत्यर्थः । तथा गुणातीतत्वोपायमार्गे स्थितोऽयमात्मविदपि न कस्य चित्पक्षं भजत इत्यर्थः । आसीन इत्यस्यैव व्याख्यानं स्थित इति । क्व स्थित इति शङ्कायां गुणातीतत्वोपायमार्ग इत्युक्तम् । कोऽसावासीनोऽत आह—आत्मविदिति । यथोदासीनः पक्षद्वयस्थेषु मिथःकलहायमानेषु स्वयमविकृतो वर्तते, तथा कार्यकरणेषु स्वस्वव्यापारान् कुर्वत्सु सत्सु जीवन्मुक्तस्स्वयमविकृतो वर्तत इति भावः । न विचाल्यते

वस्थायाः । तदेतत् स्फुटीकरोति गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन्
इति योऽवतिष्ठति । छन्दोभङ्गभयात्परस्मैपदप्रयोगः । यो नितिष्ठतीति पाठान्तरम् ।
न चलति स्वरूपावस्थ एव भवतीत्यर्थः ॥२३॥

किंच —

समदुःखसुखस्स्वस्थस्समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥

समेति । समदुःखसुखः- समे दुःखसुखे यस्य स समदुःखसुखः, स्वस्थः- स्वे आ
स्थितः प्रसन्नः, समलोष्टाश्मकाञ्चनः- लोष्टं च अश्मा च काञ्चनं च समानि यस्य स
लोष्टाश्मकाञ्चनः, तुल्यप्रियाप्रियः- प्रियं चाप्रियं च प्रियाप्रिये तुल्ये समे यस्य स तु
प्रियाप्रियः, धीरो धीमान्, तुल्यनिन्दात्मसंस्तुतिः- निन्दा च आत्मसंस्तुतिश्च
निन्दात्मसंस्तुती यस्य यतेस्स तुल्यनिन्दात्मसंस्तुतिः ॥२४॥

---

न भ्रश्यते । कस्मादपादानादत आह—विवेकदर्शनावस्थाया इति । विवेक आत्मनात्मविवे
'गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते' इति पूर्वोक्तमनुसृत्याह—अन्योऽन्यस्मिन्निति, अर्थ
तीति । विवेकदर्शनावस्थायामेव तिष्ठतीत्यर्थः । न तु कर्मस्वहं वर्त इति मन्यत इत्यर्थः ।

ननु 'समवप्रविभ्यस्स्थ' इति शास्त्रादवतिष्ठत इत्यात्मनेपदेन भाव्यमत आह—छन्दो
भयादिति । योऽवतिष्ठते नेङ्गत इति पाठे छन्दोभङ्गदोषः स्यादिति भावः । नितिष्ठतीति । नि
तिष्ठति । निष्ठितो भवतीत्यर्थः । आत्मदर्शन एव निष्ठां प्राप्नोतीति यावत् । स्वरूप एव
इति स्वरूपावस्थः । स्वस्वरूपदर्शन एव स्थित इति यावत् । य उदासीनवदासीनोऽत एव
विचाल्यते । यो गुणा वर्तन्त इत्येवावतिष्ठति नेङ्गते । अत्र यच्छब्दस्य गुणातीतस्स उच्य
तच्छब्देनान्वयः । अयं यच्छब्दः पूर्वश्लोकेऽप्यनुवर्त्य यः प्रकाशादीनि सम्प्रवृत्तानि न
निवृत्तानि च न कांक्षति स गुणातीत उच्यत इत्युत्तरेणान्वय इति व्याख्यानं साधीय इव भाति॥

समेति । य इति शेषः । समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः तुल्यप्रियाप्रियः
तुल्यनिन्दात्मसंस्तुतिः मानावमानयोस्तुल्यो मित्रारिपक्षयोस्तुल्यः सर्वारम्भपरित्यागी च
गुणातीत इत्युच्यत इति श्लोकद्वयान्वयः । दुःखसुखयोस्साम्यं नाम यथा सुखमन्तःकरणधर्मस्तथा दु
मपीत्यनुसन्धानेन स्वस्य निर्विकारत्वम् । स्वस्थ आत्मानुसन्धानतत्परः । अर्थान्तरमाह—प्रसन्न इ
क्षोभरहित इत्यर्थः । समानि लोष्टमश्मा काञ्चनं चेत्येतानि यस्य स तथोक्तः । लोष्टादौ न त्या
बुद्धिः काञ्चने नोपादेयताबुद्धिश्चास्येति भावः । प्रियमिष्टं स्रक्चन्दनादिकमप्रियमनिष्टं दुर्गन्ध
तदुभयमपि पूर्वोक्तरीत्या तुल्यमस्य प्रियमिति स्रक्चन्दनादिकं न गृह्णाति, अप्रियमिति दुर्गन्ध
न परित्यजतीति भावः । धीमान् पण्डितः निन्दा आत्मदूषणमात्मसंस्तुतिस्स्वभूषणं तयोस्तुल्य
निन्दास्तुती देहादिगोचर एव न त्वात्मगोचर इत्यनुसन्धानान्निन्दायां द्वेषबुद्धेः स्तुतौ प्रीतेश्चाकर

२५

किंच—

मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥

मानावमानयोरिति । मानावमानयोः तुल्यस्समो निर्विकारः; तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना भवन्ति केचित्स्वाभिप्रायेण, तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्लो मित्रारिपक्षयोरित्याह । सर्वारम्भपरित्यागी—दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः, सर्वानारम्भान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी, देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतस्स उच्यते । 'उदासीनव'दित्यादि 'गुणातीतस्स उच्यत' इत्येतदन्तमुक्तं, यावद्यत्नसाध्यं तावत्सन्न्यासिनाऽनुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः; स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति ॥२५॥

---

मानेति । मानः पूजा, अवमानस्तिरस्कारस्तयोस्तुल्यस्समः । साम्यमेवाह—निर्विकार इति । मानप्रयुक्तश्चित्तस्य हर्षः, अवमानप्रयुक्तः खेदश्च नास्त्यस्येत्यर्थः । ननूदासीनस्य कथं मित्रारिपक्षसद्भावः ? पक्षद्वयप्रवेशराहित्यं ह्यौदासीन्यमत आह—यद्यपीति । परेष्वन्येषु जनेषु विषये मित्रारिभावो ममायं मित्रमयमरिरिति प्रत्ययोऽस्य तत्त्वविदो यद्यपि नास्ति, तथापि परेषां प्रतिभासः प्रतीतिस्सम्भवतीत्यन्वयः । प्रतिभासमेव दर्शयति—वयमिति । अस्य तत्त्वविदो वयं मित्राणि, अस्य वयमरातयश्शत्रव इति । तदभिप्रायेणेति । अन्यजनदृष्ट्येत्यर्थः । आरभ्यन्ते क्रियन्त इत्यारम्भा दृष्टादृष्टार्थानि कर्माणि । ननु भोजनादिकर्मपरित्यागे शरीरमेव पतेदत आह—देहेति । देहधारणमात्रं निमित्तं प्रयोजनं येषां तेषां कर्मणां तेभ्यः कर्मभ्य इति वा, व्यतिरेकेण तान्यविहायेत्यर्थः । देहधारणमात्रनिमित्तकर्मेतरसर्वकर्मपरित्यागीति यावत् ।

ननु यदुक्तमुदासीनत्वादिधर्मजातं तत्किं गुणातीतत्वसाधनम् ? यद्वा गुणातीतस्य लक्षणमिति शङ्कायामाह—उदासीनवदित्यादि । उदासीनवदिति श्लोकमारभ्येत्यर्थः । गुणातीतस्स उच्यत इत्येतदन्तमुक्तं धर्मजातं यावत्पर्यन्तं यत्नसाध्यं भवति तावत्पर्यन्तं सन्न्यासिनाऽनुष्ठेयं सन्मुमुक्षोर्गुणातीतत्वसाधनं भवति । तदेव धर्मजातं स्थिरीभूतं स्वसंवेद्यं स्वानुभवैकसिद्धं सद्गुणातीतस्य यतेर्लक्षणं भवतीत्यन्वयः । भगवतोक्तमौदासीन्यादिधर्मजातं साध्यावस्थापन्नं सन्मुमुक्षोस्सन्न्यासिनो गुणातीतत्वसाधनं भवति । सिद्धावस्थासम्पन्नं सत्तु गुणातीतस्य लक्षणं भवतीतिकृत्वा एकस्मिन्नेव धर्मजातेऽवस्थाभेदेन साधनत्वलक्षणत्वसम्भव इत्यर्थः । दर्शितधर्मजातस्स्वस्मिन् स्थिरीभूतो वा न वेति वेदनं कथमिति शङ्कायामाह—स्वसंवेद्यमिति । स्वानुभवेनैव तद्वेदनमित्यर्थः । यस्यौदासीन्यादिकं दर्शितं धर्मजातं स्थिरीभूतं स गुणातीत इत्युच्यत इति परमार्थः ॥२५॥

अधुना 'कथं च त्रिगुणानतिवर्तत' इत्यस्य प्रश्नस्य प्रतिवचनमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६॥

मामिति । मां चेश्वरं नारायणं सर्वभूतहृदयाश्रयं यो यतिः कर्मी वा, अव्यभि-
चारेण न कदाचिद्यो व्यभिचरति, भक्तियोगेन- भजनं भक्तिस्सैव योगस्तेन विवेकवि-

---

मामिति । विशिष्टतर उत्कृष्टतरः । पूर्वस्मात्पूर्वोक्तादुदासीनत्वादिधर्मजातादित्यर्थः । यो-
व्यभिचारेण भक्तियोगेन मां च सेवते स एतान् गुणानतीत्य ब्रह्मभूयाय कल्पत इत्यन्वयः । चकारो-
धारणार्थः । मां च मामेवेति । कस्त्वमत आह—ईश्वरं नारायणमिति । कुतो नारायण-
आह—सर्वभूतहृदयाश्रयमिति । नराणां भूतानां समूहो नारं, तदयनं स्थानं यस्य स ना-
इति व्युत्पत्तेः ।

यद्वा क्वासीत्यत आह—सर्वभूतेति । सर्वात्मभूतत्वादिति भावः । एतेनेश्वरस्य-
सौलभ्यं सूचितम् । यतिः कर्मी वेति । औदासीन्यसमलोष्टाश्मकाञ्चनत्वाद्यात्मकं पूर्वोक्तं गुणा-
तत्वसाधनं सन्न्यासिविषयमेव । सर्वारम्भपरित्यागस्य सन्न्यासरूपत्वात् । न ह्यसन्न्यस्तस्य यथा-
विहितकर्मपरित्यागो युक्तः प्रत्यवायावहत्वात् । न च सर्वारम्भपरित्यागित्वं नाम सांसारिकसर्वकर्म-
त्यागित्वमेव, न तु चित्तशुद्धिज्ञानप्राप्तिहेतुकर्मपरित्यागित्वमिति वाच्यं, सांसारिकत्वविशेषणस्य-
स्याप्रमाणत्वात्सर्वपदस्वारस्यभङ्गात् । गृहस्थेन सांसारिककृष्यादिजीवनहेतुकर्मपरित्यागस्यापि दु-
रत्वात् । नहि गृहस्थस्य भिक्षाटनेऽधिकारः, येन कृष्यादिसांसारिकं कर्म विहाय जीवेत्सन्न्यासि-
किंच यान्येव विहितानि कर्माणि तान्येव सांसारिकाणि चित्तशुद्ध्यादिसम्पादकानि च भ-
फलाभिसन्धितदभावाभ्यामिति कथं तत्कर्मपरित्यागस्स्याद्गृहस्थस्य कर्मस्वधिकृतस्याज्ञस्य ?

अपि च यदपि मैथुनाख्यं सांसारिकं कर्म तस्य वा कथं परित्यागो गृहस्थस्य ? '
भार्यामुपेया'दिति हि श्रूयते । स्वस्थस्य ऋतौ भार्यामुपेक्षितवतः प्रत्यवायश्च स्मर्यते । तस्मात्सं-
रिणो गृहस्थस्य न सांसारिककर्मपरित्यागित्वमपि सम्भवतीति सन्न्यासिविषयमेव तत् । सन्न्यासि-
मेव धर्माधर्माख्यद्विविधकर्मपरित्यागात्मकं भिक्षाटनादिजीवनहेतुकर्मसु गुणकृतत्वानुसन्धानेन त-
त्यागात्मकं च सन्न्यसनमुपपद्यत इति । तस्मादुदासीनवदित्यादिश्लोकत्रयं सन्न्यासिविषयमेव ।
चेतिश्लोकस्यापि सन्न्यासिविषयत्वशङ्कायां प्राप्तायामाह भाष्यकारः—यतिः कर्मी वेति ।
च्छ्लोकोक्तं भगवद्भजनं सन्न्यास्यसन्न्यास्युभयपरमुभयोरपि तत्राधिकारादिति भावः ।

नतु नैतद्युक्तं, कर्मात्मके भक्तियोगे सन्न्यासिनां, ज्ञानात्मके भक्तियोगे गृहिणां चा-
कारात् । नच कर्मात्मकभक्तियोगो नास्तीति वाच्यं, 'ये वर्णाश्रमधर्मस्थास्ते भक्ताः केशवं प्र-
हारीतस्मृतेः । अत्रोक्तो भक्तियोगस्तु ज्ञानात्मक एव । 'मां यो भजत' इति मूलात् । 'वि-
विज्ञानात्मके'नेति भाष्याच्च । कथमत्र ज्ञानयोगे भक्त्यात्मके कर्मिणामधिकारः ? 'लोकेऽस्मिन्द्वि-
निष्ठा पुरा प्रोक्ता मयाऽनघ ! ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति ह्युक्तं भगव-

अविदुषां कर्मिणां तु कर्मयोगाधिकार इति तत्रतत्र विदुषां सन्न्यासिनां ज्ञानयोग एवाधिकारः; अविदुषां कर्मिणां तु कर्मयोगाधिकार इति तत्रतत्र भाष्यकारैरेव व्यवस्थापितं हि । तस्मात्कथं तैरेव भाष्यकारैरिह स्वोक्तविरुद्धार्थः प्रोच्यते । यतिः कर्मी वेति ?, इतिचेदुच्यते—यो विद्वानपि प्रारब्धादिवशात्सन्न्यासमनुपेत्य कर्मण्येव फलाभिसन्ध्यादिराहित्येन प्रवर्तते जनकादिवत्स इह कर्मीत्युच्यते, न त्वज्ञः- तस्य विवेकविज्ञानासम्भवात् । न ह्यज्ञत्वविवेकज्ञानयोर्विरुद्धयोरेकत्र स्थितिः स्यात् । अयं च जनकादिः कर्मयोग्यपि वस्तुतस्साङ्ख्य एवेति साङ्ख्यस्यास्य कर्मिणो ज्ञानयोगेन निष्ठा स्यादेवेति । न हि कर्तृत्वाद्यभिमानरहितं कर्म कर्म भवति । न चैवं योगिनां ज्ञानयोगे साङ्ख्यानां कर्मयोगे चाधिकारः प्राप्तो भगवन्नियमविरुद्ध इति वाच्यं, अतत्त्वविदां योगिनां ज्ञानयोगे साङ्ख्यानां कर्मयोगे चाधिकारस्य भगवदनभिमतत्वात् । तत्त्वविदां साङ्ख्यानां कर्मयोगाधिकारस्येति ।

अयं भावः—असन्न्यासिनो योगिनः, सन्न्यासिनस्तु साङ्ख्याः । सन्न्यासिनां साङ्ख्यानामिति तत्रतत्र भाष्यकारैरेवोक्तत्वात् । तत्र योगिनो यदि योगवशात्तत्त्वविदो भवेयुस्तर्हि ते प्रारब्धवशात्सन्न्यासं वा स्वीकुर्युः, राज्यं वा पालयेयुः, अवस्थाद्वयेऽप्यहं ब्रह्मास्मीति ज्ञानात्मकं भगवद्भजनं न जहति । तत्त्ववित्त्वात्तेषाम् । इदमेव हि तत्त्ववित्त्वं यदहं ब्रह्मास्मीति निश्चयज्ञानम् । साङ्ख्यास्तु श्रवणादिवशात्तत्त्वज्ञानं प्राप्यापि स्वसन्न्यासं त्यक्त्वा पुनर्गार्हस्थ्यं स्वीकृत्य कर्म कर्तुं नार्हन्ति- वान्ताशनवत्सन्न्यासिनां गार्हस्थ्यस्वीकारस्य दुष्टत्वात् । एवं सति तत्त्वविदामतत्त्वविदां वा साङ्ख्यानां ज्ञानयोग एवाधिकारः, न कर्मयोगे । अतत्त्वविदां योगिनां तु कर्मयोग एवाधिकारः । तत्त्वविदां योगिनां तु यथाप्रारब्धमुभयत्रापि ।

नन्वेवं तत्त्ववित्साङ्ख्यापेक्षया तत्त्वविदो योगिन एव विशृङ्खलत्वं सिद्धमिति चेत्सिध्यतुनाम—तत्त्ववित्त्व एवास्माकमभिनिवेशो नतु साङ्ख्यतत्त्ववित्त्वे । ननु यदि योगिनोऽपि तत्त्वविदस्तर्ह्यसन्न्यासिनामपि वेदान्तशास्त्राधिकारः प्राप्तस्तच्चायुक्तं- 'शान्तो दान्त उपरत' इति श्रुत्या उपरतस्य सन्न्यासिन एव तत्राधिकारस्य विहितत्वात् । 'अथातो ब्रह्मजिज्ञासा' इति सूत्रभाष्येऽप्येतदर्थस्यैव प्रपञ्चितत्वादिति चेत्सत्यम्—सन्न्यासिनामेव वेदान्तशास्त्रेऽधिकारः, ये त्वसन्न्यासिनोऽपि प्रारब्धवशाद्वामदेवादिवच्छ्रवणादिकं विनैव तत्त्वविदो जातास्तेषां वेदान्तशास्त्रेऽधिकारनिषेधेन तत्प्रतिपादनेन वा किं फलं स्यान्न किमपि । नहि भुक्तवन्तंप्रति माभुंक्ष्वेति वचनं सार्थकं स्यात् । तस्मादतत्त्वविदामसन्न्यासिनामेव वेदान्तशास्त्रेऽधिकारः श्रुत्या प्रतिषिध्यते । नतु तत्त्वविदामसन्न्यासिनां, नाप्यतत्त्वविदां सन्न्यासिनामिति सिद्धम् । कचित्तु अतत्त्वविदामप्यसन्न्यासिनां द्विजानां वेदाधिकारसत्त्वाद्वेदान्तश्रवणाधिकारोऽप्यस्तीति दृश्यतेऽलमतिप्रसङ्गेन । यो यतिः तत्त्ववित्कर्मी वाऽव्यभिचारेण ध्रुवेणान्यदेवताविषयत्वमनापन्नेनेति वा । विवेकविज्ञानमात्मानात्मविवेकरूपं ज्ञानं तदेवात्मा स्वरूपं यस्य तेन भगवदनुग्रहाख्यः प्रसादश्चित्तशुद्धिस्तस्माज्जायत इति तथोक्तः । चित्तशुद्धिपूर्वकत्वाद्ज्ञानस्येति भावः । भवनं स्थितिः, सत्त्वमिति यावत् । ब्रह्मणो भवनं ब्रह्मभवनं तस्मै ब्रह्मभवनाय ब्रह्मस्वरूपेणावस्थानाये-

नात्मकेन भक्तियोगेन सेवते, स गुणान्समतीत्यैतान्यथोक्तान्ब्रह्मभूयाय भवनं भूयो ब्रह्म-
भूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥२६॥

कुत एतदिति, उच्यते—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगव-
द्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगोनाम चतुर्दशोऽध्यायः ।

ब्रह्मण इति । ब्रह्मणः परमात्मनो हि यस्मात्प्रतिष्ठाऽहं प्रतितिष्ठत्यस्मिन्निति
प्रतिष्ठाऽहं प्रत्यगात्मा कीदृग्भूतस्य ब्रह्मणः ? अमृतस्याविनाशिनोऽव्ययस्याविकारिणः

स्यर्थः । फलितमाह—मोक्षायेति । कल्पते 'क्लृपू सामर्थ्ये' इति धातुपाठादाह—समर्थो भवतीति ।
समर्थी भवतीति पाठे, असमर्थस्समर्थो भवति समर्थीभवति । ज्ञानात्प्राग्ब्रह्मस्वरूपेणावस्थातुमसमर्थः
इदानीं तु समर्थो भवतीत्यर्थः । वस्तुतो ब्रह्मभूतस्याप्यस्याज्ञानाद्ब्रह्मस्वरूपेणावस्थातुमसामर्थ्यमासीदि-
ज्ञानेन तु तदज्ञाने नाशिते सति सामर्थ्यं पुनरासीदिवेत्यर्थः । नहि वस्तुतो बन्धमोक्षौ स्तश्चिन्मात्रे
केवले सदाशिवे आत्मनि ॥२६॥

ब्रह्मण इति । ननु 'गुणातीतस्स उच्यत' इति, 'ब्रह्मभूयाय कल्पत' इति च साध्यमेकमेव
निर्दिष्टं गुणातीतं ब्रह्मेति गुणातीतत्वस्य ब्रह्मभावत्वात् । अतस्तत्साधनतारतम्यमयुक्तं फलभेदस्यैव
साधनतारतम्यप्रयोजकत्वात् । त्वया त्वौदासीन्यगुणकर्तृत्वानुसन्धानाद्यपेक्षया भगवद्भजनमेव विशिष्ट-
मित्युच्यते, तदेतत्कुतो हेतोरिति पृच्छति—कुत एतदिति । उत्तरं वच्मीति प्रतिजानाति—
उच्यत इति । एतत्कुत इति शङ्कायामिदं पद्यमुच्यत इत्यर्थः ।

यद्वा यो मां भजते स ब्रह्मभूयाय कल्पत इति यदुक्तं तदेतत्कुत इत्यत्रोच्यत इत्यर्थः । अ-
ममृतस्याव्ययस्य च शाश्वतस्य धर्मस्य सुखस्य ऐकान्तिकस्य च ब्रह्मणः प्रतिष्ठा, यस्मादहमीदृशस्य
ब्रह्मणः प्रतिष्ठा तस्मान्मद्भक्तो ब्रह्मभूयाय कल्पत इत्येतदुक्तमित्यर्थः । यस्मादहं ब्रह्मणः प्रतिष्ठा तस्मा-
न्मद्भजनं गुणातीतत्वप्राप्तौ विशिष्टं साधनमिति वाऽर्थः । प्रतिष्ठाऽऽधारः । स्वरूपमिति यावत्
स्वरूपे हि स्वयं तिष्ठति यथा स्वरूपभूतमृदि घटस्तस्मात्स्वस्य स्वरूपमेवाधारः । 'स्वे महिम्नि प्रति-
ष्ठित'मिति श्रुतेश्च । महिम्नि स्वरूप इत्यर्थः । अनेन च स्वस्य स्वरूपमेवाधार इति प्रतिपादनेन
स्वरूपातिरिक्तः कोऽपि नास्याधार इति स्वरूपस्य स्वस्मादनतिरिक्तत्वेन स्वस्य स्वयमेवाधार इति च
ज्ञायते । ततश्च स्वरूपत्वमाधारस्य सिद्धं भवति । अत एवोक्तमाधारस्स्वरूपमिति यावदिति । वक्ष्यति च
सम्यग्ज्ञानेन परमात्मतया निश्चीयते प्रत्यगात्मेति भाष्यकार इहैव ।

ननु कोऽसौ यो ब्रह्मणः प्रतिष्ठेत्युच्यतेऽत आह—अहमिति । तदर्थमाह—प्रत्यगात्मेति ।
अहंशब्दलक्ष्यार्थत्वात्प्रतीच इति भावः ।

श्शाश्वतस्य च नित्यस्य धर्मस्य धर्मज्ञानस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्यानन्दरूपस्य

---

ननु वक्तुरीश्वरत्वेन कृष्णस्य तल्लक्ष्यार्थः परमात्मैव भवेन्न तु प्रत्यगात्मेतिचेत्, मैवम्—देहत्रयान्तरचैतन्यस्य प्रत्यगात्मत्वं, तद्बाह्यचैतन्यस्य परमात्मत्वमिति व्यवहारात्। अयं च व्यवहारोऽविद्याकल्पित इति नातिशङ्कनीयम्। एवं प्रत्यगात्मनः परमात्माधारत्वं चाविद्याकृतमेव। नहि विद्यादशायां प्रत्यगात्मेति परमात्मेति च भेदव्यवहारस्सम्भवति। भेदव्यवहारहेतुभूतदेहाद्युपाध्यभावात्। देहादौ सति हि देहादेरिदमान्तरमिदं बाह्यमिति वक्तुं शक्यते। तस्माद्देहत्रयान्तरं प्रत्यक्चैतन्यं तदेव परमात्मनस्स्वरूपत्वात्प्रतिष्ठाभूतमिति कृत्वा ब्रह्मणोऽहं प्रतिष्ठेत्युच्यते।

ननु घटाकाशस्य महाकाश एव प्रतिष्ठा, नतु महाकाशस्य घटाकाशः- विरुद्धत्वात्तथा परमात्मैव प्रत्यगात्मनः प्रतिष्ठा- अपरिच्छिन्ने परमात्मन्यन्तःकरणपरिच्छिन्नस्य प्रत्यगात्मनः कल्पितत्वादथवा सत्त्वादिति चेत्, मैवम्—परमात्मवत्प्रत्यगात्मनोऽप्यपरिच्छिन्नत्वादन्यथा परिच्छिन्नत्वे सत्यनित्यत्वप्रसङ्गात्। यदि देहादिभिरान्तरस्य प्रतीचः परिच्छेदस्स्यात्तर्हि तैरेव बाह्यस्य परमात्मनोपि परिच्छेदस्स्यादेव। देहाद्बहिर्वर्तमानत्वोपाधिपरिच्छिन्नत्वात्परमात्मनः। नहि स परमात्मा देहादन्तर्वर्तते येन पूर्णः स्यात्। अन्तर्बहिर्मध्ये च व्याप्तो हि परिपूर्ण इत्युच्यते। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुतेश्च। अत एव हि प्रत्यक्परभेदो निषिध्यते। तस्मादपरिच्छिन्न एव प्रत्यगात्मा। तस्यान्तरत्वकथनं तु हृद्देशोपलब्धिप्रयुक्तम्। हृदि ह्युपलभ्यते प्रत्यगात्मा मनीषिभिरहङ्कारसाक्षित्वेन। साक्षिणा ह्यन्तःकरणादिकं भास्यते। स च साक्षी स्वयमेव स्फुरति स्वप्रकाशत्वात्। एतत्साक्षिभास्यत्वादेव सर्वं जगत्साक्ष्याश्रयमित्युच्यते। भासको हि भास्यस्याधारः। भासकाधीनसत्ताभानवत्त्वाद्भास्यस्य। नहि भासकाभावे भास्यं स्फुरेत्। नहि दीपाद्यभावे घटस्स्फुरति न वाऽस्तित्वं प्रतिपद्यते। यथा जगदिदं साक्षिभास्यं तथा जगदाश्रयब्रह्मचैतन्यमपि साक्षिभास्यमेव। न ह्यन्तस्साक्षी यथाऽहमिति स्फुरति तथा बहिर्ब्रह्मचैतन्यमहमिति स्फुरति। अहङ्काराश्रयत्वप्रयुक्तं हि साक्षित्वं सुषुप्तावपि हि सूक्ष्मरूपेणाहङ्कारोऽस्ति। मृतिमूर्छादिषु तदहङ्काराभावादेव हि साक्षित्वस्याप्यभावः। साक्ष्यस्य सत्त्वे हि साक्षित्वं स्यादात्मनः। अहङ्काराभावसाक्षित्वं तु चैतन्यरूपमेव। निर्धर्मकं हि चैतन्यम्। तस्मादहङ्काराश्रयेणैव साक्षिणा जगदधिष्ठानं ब्रह्म ज्ञायत इति परमात्मनः प्रत्यगात्मैव प्रतिष्ठेत्युक्तम्। न चैतावता ब्रह्मणो ज्ञेयत्वापत्तिः, स्वभास्यत्वप्रयुक्तं ज्ञेयत्वं यथा नास्ति साक्षिणस्तथैव स्वाभिन्नसाक्षिभास्यत्वप्रयुक्तमपि ज्ञेयत्वं न ब्रह्मण इति।

यद्यपि परमात्मा स्वरूपचैतन्येन मायावृत्तिभिर्वा सर्वमवभासयति सर्वज्ञत्वादिति सर्वसाक्ष्येव। तथापि परमात्मनिष्ठं तद्भासनं नास्माकं प्रत्यक्षं, प्रत्यगात्मनिष्ठं तु प्रत्यक्षमिति तथोक्तम्। यद्वा सर्वावभासकोऽपि परमात्मा साक्षिभास्य एव। यथा साक्ष्यपि प्रत्यगात्मा प्रमातृभास्यः। तस्मात्परमात्मावभासकत्वात्परमात्मनः प्रतिष्ठा भवति प्रत्यगात्मा। प्रत्यगात्मना हि वेद्यते परमात्मा।

अविनाशिन इति। विनाशाभावादेव जन्मादिविकाराभाव इत्याह—अविकारिण इति। अत एव नित्यत्वमस्येत्याह—नित्यस्येति, धर्मस्येति। धर्मप्राप्ये ब्रह्मणि धर्मत्वमुपचारात्।

ऐकान्तिकस्याव्यभिचारिणः, अमृतादिस्वभावस्य परमानन्दस्वरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यग्ज्ञानेन परमात्मतया निश्चीयते, तदेतत्- 'ब्रह्मभूयाय कल्पते' इत्युक्तम्। यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते सा शक्तिर्ब्रह्मैवाहं, शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः। अथ वा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म तस्य ब्रह्मणो

---

सच धर्मो ब्रह्मप्रापको ज्ञानयोगरूप एवेत्यभिप्रेत्याह—ज्ञानयोगधर्मप्राप्यस्येति, अव्यभिचारिण इति। सत्यस्येत्यर्थः। अमृतादिस्वभावस्येति। अमृतत्वाव्ययत्वशाश्वतत्वज्ञानप्राप्यत्वसत्यत्वस्वभावस्येत्यर्थः। सुखं तु न स्वभावः, किंतु स्वरूपमेवेत्याह—परमानन्देति। निरतिशयं सर्वोत्तमं निरुपाधिकं च यत्सुखं शाश्वतं तद्धि परमानन्दः। 'आनन्दो ब्रह्मेति व्यजाना'दिति श्रुतेरुक्तं ब्रह्मस्वरूपं च। प्रत्यगात्मा परमात्मनः प्रतिष्ठेत्युक्तत्वाद्विद्वान् प्रत्यगात्माऽहं परमात्मस्वरूप एवेति निश्चिनुयात्। ततश्च निश्चयात्स ब्रह्मभूयाय कल्पत इत्यर्थः।

यद्वा अहमित्यस्य वक्ता कृष्ण ईश्वर एवार्थः। ततश्चाहमीश्वरो ब्रह्मणः प्रतिष्ठा। प्रतितिष्ठतेऽस्मादिति प्रतिष्ठा। प्रवृत्तिसाधनभूत इत्यर्थः। इदमेवाह—ययेति। ब्रह्म यया ईश्वराख्यया शक्त्या भक्तानुग्रहादिप्रयोजनाय प्रतितिष्ठते सा शक्तिरहं ब्रह्मैव। कथं शक्तेर्ब्रह्मत्वमत आह—शक्तीति। अयमर्थः—निर्विशेषं ब्रह्मैव मायोपाधिकं सदीश्वर इत्युच्यते- मायावच्छिन्नचैतन्यस्येश्वरत्वात्। तत्र चैतन्यांशस्य ब्रह्मत्वेन मायाया एवेश्वरांशत्वं सिद्धम्। अतो नास्ति मायातिरिक्तः कश्चनेश्वरः। एवमन्तःकरणातिरिक्तो जीवोऽपि नास्त्येव। अन्तःकरणावच्छिन्नं चैतन्यं जीव इति लक्षणे चैतन्यांशस्य ब्रह्मत्वात्। अत एव 'न जीवो नामान्योऽस्त्यनुभवमयान्तःकरणतो न मायातश्चेशो नहि चिदपरूपा प्रतिफले' दिति हयग्रीवस्तुतिर्मदीयैव सङ्गच्छते। अनुभवमयेति हयग्रीवस्य ब्रह्मसम्बोधनम्। सा चेश्वरशब्दवाच्या मायाख्या शक्तिरेवेति ब्रह्मणोऽनन्यैव यथाऽग्निशक्तिरग्नेरनन्या। तस्मादीश्वरोऽहं ब्रह्मैवेतीश्वरं मां ब्रह्मत्वेन जानीयादिति। एवं ज्ञानात्फलं तु प्रत्यगात्मनः परमात्माभेदनिश्चयात्परमात्मशक्तेरीश्वरस्य प्रत्यगात्मशक्तेर्जीवस्य चाभेदसिद्धिः। यद्वा स्वशक्तिभूतादीश्वरात्तत्त्वप्रतीचः भीत्यभावः फलम्। अभयं हि मोक्षः।

पक्षान्तरमाह—अथ वेति। ब्रह्मणस्सविकल्पकस्य निर्विकल्पकोऽहं प्रतिष्ठा। कथं सविकल्पकत्वं ब्रह्मणोऽत आह—ब्रह्मशब्दवाच्यत्वादिति। ब्रह्मशब्दवाच्यत्वरूपधर्मस्य ब्रह्मणि सद्भावादन्यथा ब्रह्मशब्दावाच्यत्वापत्तेरिति भावः। अहंशब्दस्तु लक्षणया निर्विकल्पकं वस्तु बोधयतीति कृत्वा अहंशब्दलक्ष्यार्थभूतो निर्विकल्पकत्वादवाच्य एव। इदं निर्विकल्पकं वस्तु भवतीति वक्तुमशक्य इत्यर्थः। नचैवं निर्विकल्पकशब्दवाच्यत्वं तत्राप्यस्तीति वाच्यं, निर्विकल्पकशब्दवाच्यत्वस्य निर्विकल्पकत्वप्रयोजकत्वेन सविकल्पकत्वानावहत्वात्। नचाहंशब्दलक्ष्यत्वरूपविकल्पोऽस्तीति वाच्यं, अहंशब्दलक्ष्यत्वमित्यस्यावाच्यत्वमित्येवार्थात्। नचावाच्यत्वरूपो विकल्पोऽस्तीति वाच्यं, अवाच्यत्वविकल्पस्य वक्तुमशक्यत्वेन तस्य विकल्पत्वानभ्युपगमात्। यो हि विकल्पत्वेन वक्तुं शक्यस्स एव हि विकल्पः

निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाऽऽश्रयः । किंविशिष्टस्य ? अमृतस्यामरणधर्मकस्य । अव्ययस्य च व्ययरहितस्य । किंच शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्य ऐकान्तिकस्य च 'प्रतिष्ठाऽह'मिति वर्तते ॥२७॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये गुणत्रय-विभागयोगोनाम चतुर्दशोऽध्यायः ।

---

इत्युच्येत । तस्मात्सविशेषस्य ब्रह्मणो निर्विशेषं प्रतिष्ठा । प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठेति व्युत्पत्ति-मभिप्रेत्याह—आश्रय इति । निर्विशेषे वस्तुनि मायया विशेषस्य कल्पितत्वात्सविशेषं ब्रह्मापि कल्पितमेव । विशेष्यांशस्य चैतन्यस्याकल्पितत्वेपि विशेषणांशस्य कल्पितत्वेन विशिष्टस्यापि कल्पि-तत्वव्यवहारात् । यथा घटाकाशस्य महाकाशे कल्पितत्वम् ।

ननु सविशेषे ब्रह्मणि के विशेषास्सन्ति कल्पिता अविद्ययेति पृच्छति—किं विशिष्टस्येति । कैर्विशेषैर्विशिष्टस्येत्यर्थः । अमृतत्वमव्ययत्वं चेति द्वाभ्यां विशेषाभ्यां विशिष्टस्येत्यर्थः । किं तत्सवि-शेषं ब्रह्मेत्यत आह—मोक्षाख्यस्येति । हि यस्मान्मदाश्रयं निर्विकल्पकवस्त्वाश्रयं बहुव्रीहिः । अनन्तमव्ययममृतं ब्रह्म मुमुक्षुभिः प्राप्यते, तस्मादस्यापि मोक्षाख्यस्य सविशेषस्य ब्रह्मणोऽहं निर्विशेष-चैतन्यं प्रतिष्ठा ।

अयमर्थः—यन्निर्धर्मकं चैतन्यं तन्न केनापि प्राप्तुमर्हति- निर्धर्मके तस्मिन् प्राप्यत्वरूप-धर्मायोगात् । यत्तु मुमुक्षुभिः प्राप्यते तन्मोक्षाख्यं ब्रह्म सधर्मकमेव । अमृतत्वाव्ययत्वरूपधर्मवत्त्वा-त्तस्य । मोक्षो हि शाश्वतो निर्विकारश्च । शुद्धचैतन्ये बन्धवन्मोक्षस्याप्यभावात् । निर्विकारश्शाश्वतो मोक्षः कल्पित एवाविद्यया चैतन्ये । निर्विकारत्वादिधर्माणां चैतन्ये कल्पितत्वाच्चद्वतो मोक्षस्यापि कल्पितत्वमिति भावः । ज्ञाननिष्ठालक्षणधर्मस्य नित्यत्वं च नित्यफलवत्त्वरूपं यावद्विदेहकैवल्यमव-स्थितत्वरूपं वा ।

सुखस्येति । जीवन्मुक्तिसुखस्येत्यर्थः । मोक्षसुखस्य ब्रह्मण इत्यनेनोक्तत्वात् । एकान्तनियत-स्याव्यभिचारिणः । सर्वदापि स्थायिन इत्यर्थः । यावद्विदेहकैवल्यं जीवन्मुक्तिसुखस्य विदुषां स्थायित्वा-दिति भावः । अहं निर्विकल्पकं चैतन्यं प्रतिष्ठाऽऽश्रय इति प्रवर्तत इति । विद्वानिति शेषः । विद्वदात्मन एव निर्विकल्पकचैतन्यत्वाद्दिति भावः । य एवं प्रवर्तते स ब्रह्मभूयाय कल्पते ।

अनेन च श्लोकेन निर्विकल्पकं चैतन्यमेवात्मा, तत्रैव बन्धप्रपञ्चवन्मोक्षाख्यं ब्रह्म जीवन्मुक्ति-सुखं तत्साधनज्ञानयोगश्चेत्येतत्सर्वं कल्पितं, तथा प्रत्यगात्मपरमात्मभेदः, प्रत्यगात्मनि जीवः, पर-मात्मनीश्वरश्च कल्पितः । ततश्च भक्तानुग्रहादि सर्वं द्वैतं तत्रैव कल्पितम् । तथा प्रत्यगात्मपरमात्मनो-र्ज्ञातृत्वज्ञेयत्वप्रयुक्त आधाराधेयभावश्च तत्रैव कल्पितः । तदेतत्सर्वकल्पनक्षमा चाघटितघटनापटीयस्तमा

माया। सा चाहं ब्रह्मास्मीति ज्ञानादेव निवर्तते। य एवं विद्वानात्मानं नारायणं भक्तियोगेन भजे
स तदैव ब्रह्मभूयाय कल्पते। औदासीन्यादिसाधनसम्पन्नस्तु क्रमेण ब्रह्मभूयाय कल्पते। अत
दात्मभजनमेव जीवन्मुक्तिविदेहमुक्तिद्वयसाधनमिति सिद्धम्।

यदुत्तमं ज्ञानं प्रवक्ष्यामीति भगवता प्रोक्तमादौ तदुक्तं प्रकाशं चेत्यारभ्य यावदध्याय
समाप्तिग्रन्थेन। अथ वा, उत्तमज्ञानसाधनमुक्तं प्रकाशं चेत्यादिना। ज्ञानं तु साक्षाद्ब्रह्मणोऽहमिति
श्लोकेनोक्तमिति बोध्यम्। इदमेवात्मज्ञानमुत्तराध्याये विस्तरेण वक्ष्यति च।

यत्तु रामानुजः—अहमव्यभिचारिभक्तियोगेन सेवितोऽमृतस्याव्ययस्य च ब्रह्मणः प्रतिष्ठे
जीवस्य फलदशाभावित्वेन निर्दिष्टं रूपमिह ब्रह्मशब्देनोपचर्यत इति देशिकश्च, तन्मन्दम्—जीवस्य
यदि फलदशायां विद्यमानरूपादन्यद्रूपं भवति तर्हि जीवस्सविकार एव स्यात्। पूर्वरूपपरित्याग उत्तर
रूपस्वीकारश्च विकारो हि। ततश्चानित्यत्वं स्यात्। अणोर्जीवस्य बृहत्त्वप्राप्तावणुत्वनाशेन नाश
प्रसङ्गात्, बृहत्त्वजन्मना जन्मप्रसङ्गाच्च। ज्ञानधर्मबृहत्त्वं तु निरस्तं बहुशः पूर्वम्। तच्च फलदशा
भाविजीवस्य बृहत्त्वं जीवाश्रयमेवेति न तस्य ब्रह्माश्रयत्वं च सम्भवति। येन बृहत्त्वमधिगतं स हि
बृहत्त्वस्याश्रयः। नचेश्वरगतं बृहत्त्वं जीवस्यागतमिति वाच्यं, ईश्वरस्याब्रह्मत्वप्रसङ्गात्। नापीश्वर
गतबृहत्त्वतुल्यं बृहत्त्वं जीवस्य प्रादुर्भूतमिति वाच्यं, तथासति जातस्य तस्य बृहत्त्वस्य- 'जातस्य हि
ध्रुवो मृत्यु'रिति शास्त्रान्नाशस्यावश्यम्भावित्वेन मोक्षस्यानित्यत्वप्रसङ्गात्। तस्माद्बन्धदशायां विद्यमान
मेवाज्ञानतिरोहितत्वेनाविद्यमानतुल्यं बृहत्त्वं मोक्षदशायामज्ञानावरणनाशात्पुनः स्फुरतीति ब्रह्मैव जीवः,
तस्य च ब्रह्मभूतजीवस्य ब्रह्मणः, प्रतिष्ठात्वं तु पूर्वोक्तविधया कल्पितमेवाविद्ययेति बोध्यम्।

नच विद्यामविद्या कथं कल्पयेदिति वाच्यं, विद्याया बुद्धिवृत्तिविशेषात्मिकाया अविद्याकल्पित
बुद्धिपरिणामात्मकत्वेनाविद्याकल्पितत्वसम्भवात्। न हि परमार्थदशायां विद्या विद्यते, येन क
विद्याया अविद्याकल्पितत्वमिति शङ्क्येत। किं सुप्तिमूर्छादौ परमार्थदशायां केनापि विद्याऽनुभूयते?
तस्मात्परमार्थत एकमेवाद्वितीयं ब्रह्म बन्धमोक्षविद्यादयस्सर्वेऽप्यविद्याभूमावेवेति स्थितमद्वैतम् ॥२७॥

इति श्रीवेलङ्कोण्डोपनामक रामकविकृतौ श्रीभगवद्गीताशाङ्करभाष्यार्कप्रकाशे
गुणत्रयविभागयोगोनाम चतुर्दशोऽध्यायः।

श्रीहयग्रीवार्पणमस्तु।



श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## पञ्चदशोऽध्यायः ।

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते ते मम प्रसादाद्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति, किमु वक्तव्यमात्मनः तत्त्वमेव सम्यग्विजानन्त इत्यतो भगवानर्जुनेनापृष्टोऽप्यात्मनस्तत्त्वं विवक्षुरुवाच 'ऊर्ध्व-मूल'मित्यादिना । तत्र तावद्वृक्षरूपकल्पनया वैराग्यहेतोस्संसाररूपं वर्णयति—विरक्तस्य हि संसाराद्भगवतस्तत्त्वज्ञानेऽधिकारः, नान्यस्येति—

श्रीभगवानुवाच—

ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

ऊर्ध्वमूलमिति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्त्वाच्चोर्ध्वं,

---

यस्मात्प्राणिनां कर्मिणां कर्मफलं, ज्ञानिनां ज्ञानफलं च मदधीनमीश्वरायत्तमतस्तस्माद्भक्तियोगेन ये मां सेवन्ते ते मम प्रसादाद्ज्ञानप्राप्तिक्रमेण गुणातीता जीवन्मुक्तास्सन्तो मोक्षं गच्छन्ति । यस्मादेवं मां केवलं भजन्त एव मोक्षं गच्छन्ति तस्मादात्मनो ममैवं वक्ष्यमाणविधं तत्त्वं सम्यग्विजानन्तो मोक्षं गच्छन्तीति किमु वक्तव्यम् । इत्यतः भगवत्तत्त्वज्ञानस्य मोक्षहेतुत्वादित्यर्थः । अर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुस्सन् भगवानुवाच- ऊर्ध्वमूलमित्यादिपञ्चदशाध्यायम् । तत्रेति । अध्याये । तावदिति । आदौ वैराग्यहेतोर्वैराग्यार्थं वृक्षरूपकल्पनया संसाररूपं वर्णयति । संसारवृक्षं कथयतीत्यर्थः । किं फलं वैराग्यादत आह—विरक्तस्येति । संसाराद्विरक्तस्यैव भगवत्तत्त्वज्ञानेऽधिकारः, अन्यस्य संसारासक्तस्य नाधिकारः । अत एव हि संसारं परित्यज्य व्रजन्ति परिव्राजकास्तत्त्वज्ञानलाभार्थम् । गृहिणां हि कुटुम्बपोषणासक्तचेतसां पुत्रादिजन्ममरणादिप्रयुक्तसुखदुःखविक्षिप्तचेतसां च कामातुराणां कथं वेदान्तश्रवणादिकं सम्भवेन्न कथमपीति भावः ।

ऊर्ध्वमूलमिति । यं संसारवृक्षमिति शेषः । ऊर्ध्वमूलमधश्शाखमव्ययमश्वत्थं प्राहुः श्रुतयः वेदविदो वा । यं संसारमिति वा । यं संसारमश्वत्थमूर्ध्वमूलमधश्शाखमव्ययं प्राहुरिति वा ।

उच्यते ब्रह्माव्यक्तं मायाशक्तिमत्तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः। श्रुतेश्च 'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थस्सनातन' इति। पुराणे च-- 'अव्यक्तमूलप्रभवस्तस्ये

---

यस्य छन्दांसि पर्णान्याहुः। भवन्तीति वा। तं संसारवृक्षं यो वेद स वेदविद्भवति। यथा वृ स्समूलस्सशाखस्सपर्णो बीजांकुरभावेन प्रवाहानादिः प्रवाहानन्तश्चेत्यनन्वयः। तथा संसारोऽयं समू स्सशाखस्सपर्णः प्रवाहतोऽनादिरनन्तश्चेत्यव्ययश्चेति साधर्म्यसत्त्वात्संसारे वृक्षत्वारोपणमिति बोध्य अव्यक्तमायाशक्तिमद्ब्रह्मोर्ध्वमित्युच्यते। कुत उच्यतेऽत आह—सूक्ष्मत्वादिति। किमपेक्षया आह—कालत इति। कालो हि सूक्ष्मः तस्मादपि ब्रह्म सूक्ष्मम्। संवत्सरादिलक्षणकालस्य विज्ञे त्वेन स्थूलत्वेपि कलाकाष्ठादिलक्षणकालस्य दुर्विज्ञेयत्वेन सूक्ष्मत्वं, ब्रह्मणश्चातीन्द्रियस्य दुर्विज्ञे स्फुटमेव। ऊर्ध्वस्थस्य च नक्षत्रादेस्सूक्ष्मत्वदर्शनात्सूक्ष्मत्वादिदं ब्रह्माप्यूर्ध्वमित्युच्यते। त कारणत्वादिति। 'यतो वा इमा'नीत्यादिश्रुतेर्ब्रह्म जगत्कारणम्। कारणं च वस्तु कार्यादूर्ध्वमि प्रतीतिः। एवं कारणत्वाद्ब्रह्मोर्ध्वमित्युच्यते। नित्यत्वादिति। अनित्यं संसारमण्डलमतीत्य व नित्यत्वाद्ब्रह्मेत्यूर्ध्वमित्युच्यते। तथा महत्त्वादिति। उत्कृष्टत्वादूर्ध्वत्वं ब्रह्मण इति भावः।

यद्वा ऊर्ध्वं ब्रह्म सूक्ष्मत्वादिहेतुचतुष्टयेन मूलमित्युच्यते, वृक्षस्यापि हि बीजं मूलमल्पप माणत्वात्सूक्ष्मं वृक्षोदयं प्रति हेतुत्वात्कारणम्। अंकुरात्मना पुनर्बीजात्मना पुनरंकुरात्मनेत्येवं परिण मानत्वात्प्रवाहनित्यं कार्यमहत्त्वान्महच्च। एवं ब्रह्मापि- 'अणोरणीयान्महतो महीया'निति श्रुत्या ब्रह्म स्सूक्ष्मत्वमहत्त्वे 'यतो' वेत्यादिश्रुत्या कारणत्व'मजो नित्य' इत्यादिश्रुत्या नित्यत्वं चेति बोध्यम् निर्विशेषस्य ब्रह्मणस्संसारमूलत्वायोगादाह—अव्यक्तेति। अव्यक्तं, माया, शक्तिश्चेति पर्या अव्यक्तमायाशब्दद्वयवाच्या या शक्तिस्तद्युक्तमित्यर्थः। मायाशबलितमीश्वराख्यं ब्रह्म जगद्धेतु स्संसारवृक्षस्य मूलमित्युच्यत इति परमार्थः।

ननु क्वोक्तं संसारवृक्षस्योर्ध्वमूलत्वमत आह—ऊर्ध्वमूलो हीति श्रुतिम्। एष इति संसाररूप इत्यर्थः। सनातनोऽनादिः। अव्यक्तेति। अव्यक्तं माया, तदेव मूलं तस्मात्प्रभव त्यव्यक्तमूलप्रभवः। तस्यैवाव्यक्तमूलस्यानुमहादुच्छ्रितः प्रवृद्धः। बुद्धिरेव स्कन्धः प्रकाण्डो बुद्धि स्कन्धस्तन्मयो बुद्धिस्कन्धमयः। वृक्षस्य स्कन्धाच्छाखा इव संसारस्य बुद्धेस्सकाशान्नानाविधपरिणा भवन्तीतीयमुक्तिः। इन्द्रियान्तराण्येव कोटरा यस्य स इन्द्रियान्तरकोटरः। इन्द्रियाणां रन्ध्राभावे तदधिष्ठानचक्षुश्श्रोत्रादीनां सरन्ध्रत्वादियमुक्तिः। महाभूतान्येव विशाखा विविधाश्शाखा यस्य महाभूतविशाखः। विषयैश्शब्दादिभिः पत्रवान् पत्राण्यस्य सन्तीति तथोक्तः, विषया एव पत्रा त्यर्थः। धर्माधर्माविव सुपुष्पाणि यस्य स धर्माधर्मसुपुष्पः। सुखदुःखयोरेव फलानामुदयो यस्मा उदयोऽभिवृद्धिर्यस्य स इति वा सुखदुःखफलोदयः। सर्वभूतानां सर्वेषां प्राणिनां मनुष्यादीनामन्य काकादीनां चाऽऽजीव्य उपजीव्य आश्रय इति यावत्। एवंविधस्सनातनो बीजांकुरन्यायादनादिर्ब्र

वानुग्रहोच्छ्रितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्र-
शाखवान् । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यस्सर्वभूतानां ब्रह्मवृक्षस्सनातनः ।
एतद्ब्रह्मवनं चैव ब्रह्माचरति नित्यशः ॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ।
ततश्चात्मरतिं प्राप्य तस्मान्नावर्तते पुन'रित्यादि । तमूर्ध्वमूलं संसारं मायामयं वृक्षमध-
श्शाखं महदहङ्कारतन्मात्रादयश्शाखा इवास्याधो भवन्तीति सोऽयमधश्शाखस्तमधश्शाखम् ।
न श्वोऽपि स्थाता इत्यश्वत्थः, तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति । अव्ययं- संसार-

---

वृक्षः । ब्रह्म प्रकृतिस्तत्कार्यत्वात्संसारोऽपि ब्रह्म, तदेव वृक्षोऽश्वत्थः । ब्रह्मणा परमात्मनाऽधिष्ठितो
वृक्षो ब्रह्मवृक्ष इति वा ।

एतद्ब्रह्मवनमित्येकं पदमेतस्यास्य ब्रह्मणो जीवरूपस्य वनं भजनीयं भोग्यमिति यावत् । ब्रह्म
परमात्माऽत्र साक्षिवदाचरति ब्रह्मैव साक्षिभूतमित्यर्थः । निर्विशेषे ब्रह्मणि वस्तुतस्साक्षित्वस्याप्ययोगा-
त्साक्षिवदाचरतीयुक्तम् । अहं ब्रह्मास्मीत्याकारेण ज्ञानेनैव परमेणासिना खड्गेन । एतद्देहरूपं वृक्षम् ।
सामान्ये क्लीबत्वम् । एतद्ब्रह्मवनमिति वा । छित्त्वा भित्त्वा च । देहस्य छेदनं भेदनं च तत्राहं-
कारममकारयोरकरणमेव । अकृते च तदभिमानद्वये छिन्नभिन्नवृक्ष इव देहो हि नश्यति । ज्ञाने-
नाज्ञानं नाशयित्वेति वा । नाशिते त्वज्ञाने देहभ्रंशः स्यादिति भावः । अज्ञानमूलत्वाद्देहवृक्षस्य ।
न हि वृक्षस्य मूले छिन्ने सति वृक्षो जीवेत्, ततश्चाज्ञाननाशानन्तरमात्मगतिमात्मरूपां गतिं प्राप्य
तस्मादात्मरूपान्मोक्षात्पुनर्नावर्तते तद्ब्रह्मरूपेणैव तिष्ठतीत्यर्थः ।

कोऽसावूर्ध्वमूलोऽत आह—संसारमिति । संसरति देही एतत्तादात्म्याद्यध्यासेनेति संसारो
देहादिप्रपञ्चः । नायं सत्य इत्याह—मायामयमिति । मायाकार्यत्वान्मायावन्मिथ्याभूतमित्यर्थः ।
अधोभूताश्शाखा यस्य सोऽधश्शाखः । कास्ताश्शाखा अत आह—महदिति । कारणत्वाद्ब्रह्मण
ऊर्ध्वत्वं कार्यत्वान्महदादीनामधस्स्थत्वमिति बोध्यम् । अस्य संसारवृक्षस्योर्ध्वभूतं ब्रह्म मूलमधोभूता
महदादयस्तु शाखा इति परमार्थः । एतेन वृक्षस्य कथं मूलमूर्ध्वं स्याच्छाखाः कथमधो भवेयुरिति
शङ्कापि प्रत्युक्ता । अत्रोर्ध्वाधश्शब्दाभ्यां ब्रह्मणो महदादीनां चोच्यमानत्वात् । न हि ब्रह्ममूलो
महदादिशाखश्च संसार इति वृक्षरूपणे कोऽपि विरोधः । अथ चोर्ध्वशब्दस्यैवात्र ब्रह्मपरत्वमध-
श्शब्दस्तु शाखाविशेषणभूत एव । शाखाशब्दात्तु निगीर्णातिशयोक्त्या तत्तुल्यमहदादिग्रहणमिति
स्वीकारेऽपि न दोषश्शाखानां वृक्षस्य पत्रपुष्पाद्यपेक्षयाऽधस्स्थत्वात् ।

अश्वत्थशब्दं निर्वक्ति—न श्वोऽपीति । फलितमाह—क्षणप्रध्वंसिनमिति । यद्यपि
देहादय एतत्क्षणे दृष्टाः क्षणान्तरे पुनर्दृश्यन्त एव न क्षणप्रध्वंसस्तेषां, तथापि क्षणान्तरेऽवश्यं दृश्यन्त
इति वक्तुं न शक्यते मरणसम्भवात्तस्मात् क्षणप्रध्वंसशीला एव देहादय इत्यभिप्रेत्य क्षणप्रध्वंसिन-
मित्युक्तमत एव ताच्छील्ये णिनिः प्रयुक्तः प्रध्वंसिनमिति । वृक्षोऽप्यश्वत्थसंज्ञः प्रसिद्ध एव ।

मायाया अनादिकालप्रवृत्तत्वात्, सोऽयं संसारवृक्षोऽव्ययः, अनाद्यन्तदेहादिसन्तानाश्रयो हि सुप्रसिद्धः, तमव्ययं; तस्यैव संसारवृक्षस्येदमन्यद्विशेषणम् —छन्दांसि यस्य पर्णानि छन्दांसि छादनादृग्यजुस्सामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा वेदास्संसारवृक्षपरिरक्षणार्थाः, धर्माधर्मतद्धेतुफलप्रदर्शकत्वात्। यथाव्याख्यातं संसारवृक्षं समूलं- 'यस्तं वेद स वेदवित्' वेदार्थविदित्यर्थः। न हि समूलात्संसारवृक्षादस्माद्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्तीत्यतः सर्वज्ञस्सर्ववेदार्थविदिति समूलसंसारवृक्षविज्ञानं स्तौति ॥१॥

---

अव्ययमिति। ननु क्षणप्रध्वंसिनस्संसारस्य कथमव्ययत्वमत आह—मायाया इति। नन्वनादिकालमारभ्य प्रवृत्तत्वे मायैवाव्यया स्यात्कथं पुनस्तत्कार्यसंसारोऽव्ययोऽत आह—अनादीति। न विद्येते आद्यन्तौ यस्य सोऽनाद्यन्तस्स चासौ देहादिसन्तानस्स आश्रयो यस्य स तथोक्तः। बीजांकुरन्यायेन प्रवाहाकारेण पूर्वपूर्वदेहादेरुत्तरोत्तरदेहादिर्भवन् सन्न कदाप्युपरमत इत्यनन्तत्वं देहादिसन्तानस्य। प्रलयेऽपि सूक्ष्मरूपेण सत्त्वादयमिदानीमारब्ध इति वक्तुमशक्यत्वादनादित्वं च।

एवमस्यानादित्वे हेतुर्मायाया एतन्मूलभूताया अनादित्वमेवेति मायाया अनादिकालप्रवृत्तत्वादित्युक्तम्। तथा मायाया अनन्तत्वमेव देहादिसन्तानस्यानन्तत्वे कारणमेवंविधसन्तानाश्रयत्वात् संसारस्याप्यनाद्यनन्तत्वमिति युक्तमव्ययत्वं संसारस्येति भावः। एवं सुखदुःखसम्भोगरूपसंसारस्य स्वत एवाव्ययत्वं स्थूलदेहस्य नश्वरत्वेऽपि सूक्ष्मदेहस्याविनाशित्वात्प्रपञ्चरूपसंसारस्य त्वव्ययत्वं स्फुटं प्रलयेऽपि जगतस्सूक्ष्मरूपेण सत्त्वात्। तस्मात्सर्वथाऽप्यव्यय एव संसारो यावद्विद्यम्। अन्यदिति विलक्षणमित्यर्थः। अन्यद्विशेषणं विशेषणान्तरम्।

छन्दश्शब्दस्य व्युत्पत्तिमाह—छादनादिति। रक्षणादिति यावत्। छादनपूर्वकत्वाद्रक्षणस्य कवचो हि देहमाच्छाद्य रक्षति शस्त्रादेस्सकाशात्। अथर्वणवेदस्य ऋगादिवेदत्रयान्तःपातित्वादाह—ऋग्यजुस्सामात्मकानीति। पर्णशब्दोऽत्र लक्षणया तत्सदृशपरः। छन्दसां प्रसिद्धपर्णत्वासम्भवात्याह—पर्णानीवेति, रक्षणार्थानीति। पर्णानि हि वृक्षमाच्छाद्य वातातपादिभ्यो रक्षन्ति। तथा संसारवृक्षं वेदाः परिरक्षन्ति। तत्र हेतुमाह—धर्मेति। धर्माधर्मयोस्तद्धेतूनां विहितप्रतिषिद्धकर्मणां तत्फलस्य स्वर्गनरकादेश्च प्रकाशनं प्रतिपादनमर्थः प्रयोजनं येषां तत्त्वात्। धर्मो यागादिजन्यं सुकृतात्मकमात्मनिष्ठम्। अधर्मो हिंसादिजन्यं दुष्कृतमिति विवेकः। विद्वांसोऽपि वेदप्रामाण्याद्यज्ञादिकमनुष्ठाय स्वर्गादिकं प्राप्य तत्पुण्यक्षयात्पुनर्भुवि मनुष्यात्मना प्रजाय पुनः कर्माणि कुर्वन्तीति विदुषामपि जन्ममरणादिलक्षणोऽयं संसारो वेदमूलक एव। नास्तिका अपि हिंसादिलक्षणं कर्म विधाय तत्फलानुभवाय नरकं पश्वादिजन्म च प्राप्य पुनर्म्रियन्ते पुनरुत्पद्यन्त इत्ययमर्थोऽपि वेदादेव ज्ञायत इति तेषां संसारोऽपि वेदमूल एव। तस्माद्वेदैस्संसारः परिरक्ष्यत इति भावः। अत एव 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।' इत्युक्तं भगवता।

समूलमिति । मूलेन ब्रह्मणा मायिना सहेत्यर्थः । केवलसंसारवेदनेन फलाभावादिति भावः । ब्रह्मज्ञानाद्धि मोक्षः । ननु सर्वेऽपि वेदविद एव वेदपाठका इत्यत आह—वेदार्थविदिति । वेदान् प्रायशः पठन्त्येव ब्राह्मणाः, परं तु तदर्थं ते न जानन्ति । अर्थज्ञानशून्याश्च वैदिका वेदेनैव निन्दिताः- 'स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थ'मिति । तस्माद्वेदपाठकानां वेदार्थज्ञानमावश्यकं, तद्ज्ञानादेव दर्शितसमूलसंसारज्ञानसम्भवात् ।

ननु यस्समूलं संसारं वेद स कथं सर्ववेदार्थविद्भवेत् ? अन्यस्याविज्ञेयस्य बहुधा सत्त्वादत आह—न हीति । दृग्दृश्याभ्यां पदार्थाभ्यामन्यत्किमपि नास्ति । तत्र ब्रह्म दृक्; माया, तत्कार्यं सर्वं जगद्दृश्यम् । एवं स्थिते मूलस्य मायावतो ब्रह्मणो वृक्षस्य जगद्रूपसंसारस्य च ज्ञाने सति किं पुनरवशिष्येत ज्ञेयतया ? न किमपि- ताभ्यामन्यस्याभावात् । वेदार्थानां यज्ञादिकर्मणां ब्रह्माद्युपासनानां च सर्वेषां संसारान्तःपातित्वाद्वेदान्तार्थस्य च ब्रह्मत्वेन मूलान्तःपातित्वाच्चेति भावः । अत इति । समूलात्संसारवृक्षादन्यस्य ज्ञेयस्याभावादित्यर्थः । सर्ववेदार्थविद्यस्स सर्वज्ञ एवेति समूलस्य वृक्षस्य संसारस्य विज्ञानं स्तौति- समूलवृक्षविज्ञानिनां सर्वज्ञत्वे सति तद्विज्ञानस्य सर्वोत्कर्षः प्राप्नोति । यथा धनवतः पुरुषस्य कीर्तनीयत्वे सति धनस्याप्युत्कर्षस्तद्वत् । धर्मोत्कर्षपूर्वकत्वाद्धर्म्युत्कर्षस्येति भावः ।

यत्तु रामानुजः—सप्तलोकोपरि निविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वं, पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततयाऽधश्शाखत्वम् । संसारस्यावेदत्वेऽपि संसारविद्वेदविदेव । वेदो हि संसारवृक्षच्छेदोपायं वदति । छेद्यवृक्षस्वरूपज्ञानं छेदनोपायज्ञानोपयोगीति वेदविदित्युच्यत इति, तत्तुच्छम्—चतुर्मुखः किं जगद्रूपसंसारस्यादिरुत देहरूपस्याऽथवा सुखदुःखसम्भोगरूपस्य ? नाद्यः- 'जन्माद्यस्य यत' इति सूत्रेणेश्वरस्यैव जगत्कारणत्वेन जगदादित्वस्य स्थापितत्वात् । आदिर्हि कारणम् । न द्वितीयः- देवमनुष्यादिदेहान्प्रति चतुर्मुखस्यादित्वेऽपि चतुर्मुखदेहंप्रति चतुर्मुखस्यादित्वाभावात् । नहि पुत्रदेहस्यादिः पिता पितृदेहस्याप्यादिर्भवति । न तृतीयः- चतुर्मुखस्यापि सुखदुःखसम्भोगसत्त्वेन तदादित्वाभावात्तस्य । नहि स्वानर्थकरं संसारं चतुर्मुखस्स्वयं सृजति ।

ननु आदिर्न कारणं, किं त्वाद्यवयवः, यथा वृक्षस्यादिमध्यान्तावयवास्सन्ति भूसन्निहितभाग आदिर्वृक्षस्य चरमभागोऽन्तः, स्कन्धादिभागस्तु मध्यः, तथा जगद्रूपसंसारस्य चतुर्मुख आदिभागः, पृथिवीनिवासिनो मनुष्यादयो मध्यभागः, पातालवासिनोऽन्तभाग इति चेत्, नैतदप्युचितम्—तथा सति चतुर्मुखस्यैकस्यैव कथमादित्वम् ? तल्लोकवासिनस्सर्वेऽप्यादिभूता एव । किंच वृक्षाश्रयपक्षिकीटादिप्राया जगदाश्रयचतुर्मुखादिप्राणिनः, नतु स्कन्धशाखादिस्थानीयाः । सत्यादिलोका एव तत्स्थानीयाः- लोकात्मकत्वाज्जगतः । तथा च जगतस्सत्यलोक आदिः, भूलोको मध्यः, पाताललोकोऽन्तः । यद्वा स्वर्गलोक आदिर्मर्त्यलोको मध्यः पाताललोकोऽन्त इति सत्यलोकादित्वं स्वर्गलोकादित्वं वा जगद्वृक्षस्य वक्तव्यमिति कथं चतुर्मुखादित्वं तस्य ? अपि च यद्यत्रोर्ध्वशब्देनाद्यवयवो

तस्यैव संसारवृक्षस्याऽपराऽवयवकल्पना उच्यते—

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥

अधश्चेति । अधो मनुष्यादिभ्यो यावत्स्थावरमथ ऊर्ध्वं च यावद्ब्रह्मणो विश्वसृ
धाम इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृ

---

विवक्षितस्स्यात्तर्ह्यधश्शब्देन किं मध्यावयवो विवक्षितः ? यद्वाऽन्तावयवः ? अथ वोभयम् ? नाद्यः
स्थावरान्ततयेति स्ववचोविरोधात् । न द्वितीयः- नहि पृथिवी तन्निवासिनस्स्थावराः पर्वतादयो
जगद्वृक्षस्यान्तभागः स्यात् । न तृतीयः- तद्विवक्षानुसारेण त्वया पृथिवीनिवासिमनुष्यादिमध्य
पातालनिवासिसर्पाद्यन्ततया चाधश्शाख इत्युच्यत इत्यनुक्तत्वात् । किं च 'अव्यक्तमूलप्रभव'
पुराणं च । प्रकृतगीतामूलभूतश्रुतिगतोर्ध्वमूलपदस्य मायाकारणकत्वरूपार्थमेव प्रतिपादयतीति
द्विरोधश्च तव । तस्मादूर्ध्वं ब्रह्म मूलं कारणमस्येत्यूर्ध्वमूलमित्येव व्याख्येयम् । न च ब्रह्मणः का
णत्वप्रतिपादकस्य तवापि मायाकारणत्वप्रतिपादकपुराणविरोध इति वाच्यं, शक्तिशक्तिमतोरभेदात्
केवलाव्यक्तस्य केवलब्रह्मणो वा कारणत्वाभावात् । अव्यक्तशक्तिमद्ब्रह्म ब्रह्माश्रयमव्यक्तं वा जग
कारणमिति न कश्चिद्विरोधः ।

यच्चानेनोक्तं संसारो न वेद इति, तदप्ययुक्तम्—वेदस्यापि संसारपदवाच्यजगदन्तःपाति
त्वेन संसारस्यापि वेदत्वात् । यज्ञादिसंसारस्य वेदार्थत्वेन च वेदस्य संसारप्रतिपादकत्वात्संसार
वेदत्वमिति वा । प्रतिपाद्यप्रतिपादकयोरभेदात् । यच्च वेदस्संसारवृक्षच्छेदोपायं वदतीति, त
प्ययुक्तम्—यज्ञादिप्रतिपादकवेदभागस्य संसारप्रवृद्ध्युपायप्रतिपादकत्वात् । वेदार्थो हि यज्ञादि
स्संसारं वर्धयतीति ॥१॥

अध इति । अपरेति छेदः । पूर्वोक्तादन्येत्यर्थः । गुणप्रवृद्धा विषयप्रवालाश्च तस्य शा
अधश्चोर्ध्वं च प्रसृता भवन्ति । कर्मानुबन्धीनि तस्य मूलान्यधश्च मनुष्यलोकेऽनुसन्ततानि भवन्ति
अधश्शब्दार्थमाह—मनुष्यादीति । मनुष्यो मानवदेह आदिर्यस्य तन्मनुष्यादि । यावत्स्थ
स्थावरान्तमित्यर्थः । मनुष्यपशुपक्षिसरीसृपक्रिमिकीटमत्स्यकच्छपतरुगुल्मलतादिकमिह दृश्यमानं
सर्वं चराचरजन्तुजातमधश्शब्दार्थः । मनुष्यादिभ्य इति पाठे मनुष्यादिभ्य आरभ्येति शेषः । आदि
पदात्पश्वादिग्रहणम् । ऊर्ध्वशब्दार्थमाह—अत इति । मनुष्यलोकादित्यर्थः । ऊर्ध्वं वर्तमाना ग
गन्धर्वयक्षरक्षःपितृमातृगणसिद्धसाध्यचारणदेवदानवादयश्चतुर्मुखेन सह सर्वेऽपि प्राणिन ऊर्ध्वशब्दार्थः
इदमेवाह—यावदिति । ब्रह्मणो हिरण्यगर्भस्य । धाम लोकः । तत्र वर्तमानसनकादिसर्वप्रा
संग्रहाय धामशब्दग्रहणम् । एतदन्तमिति । चतुर्मुखान्तमित्यर्थः । चतुर्मुखजन्मनोऽपि ज्ञान
फलत्वादिति भावः ।

प्रगता गुणप्रवृद्धा गुणैस्सत्त्वरजस्तमोभिः प्रवृद्धास्स्थूलीकृता उपादानभूतैः; विषयप्रवालाः— विषयाश्शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यश्शाखाभ्योंकुरीभवन्तीव, तेन विषय-

---

यद्वैतस्मिन्प्रपञ्चे प्रकृतचतुर्मुखादन्यस्य चतुर्मुखस्यासम्भवाच्चतुर्मुखलोकप्राप्तिरेव फलमिति विवक्षणे एतदन्तमित्यस्य चतुर्मुखधामान्तमित्येवार्थः । एवमधऊर्ध्वशब्दाभ्यां ब्रह्मादिस्थावरान्तचराचरसर्वप्राणिसंग्रहः कृतः । अमूनि हि चराचरजन्तुजालानि कर्मानुसारेण शास्त्रानुसारेण च ज्ञानकर्मफलानीत्याह—यथाकर्मेति । ज्ञानमुपासनादिकं, नतु तत्त्वज्ञानं मोक्षस्यैव तत्प्राप्यत्वात् । कर्म यज्ञादिकं फलाभिसन्धिपूर्वकं तद्रहितं च । फलाभिसन्धिरहितकर्मकृदपि तत्त्वविदां कुलेषु जायत इत्युक्तत्वात् । तयोः फलानि तत्प्राप्याणीत्यर्थः । 'देवान् देवयजो या'न्तीत्यादिना देवयजनादीनां देवत्वादिप्राप्तिहेतुत्वस्योक्तत्वादिति भावः । इमानि भूतानि संसारवृक्षस्य शाखास्थानीयानीत्याह—तस्येति । प्रगता व्याप्ता इति यावत् । स्थूलीकृतास्स्थौल्यं प्रापिताः । यथा प्रवालाः पल्लवाश्शाखाशालाशिफाजटाभ्योंकुरीभवन्ति तथा कर्मफलेभ्यश्चराचरेभ्यो देहेभ्यश्शब्दादयो जायन्त इति विषयेषु प्रवालत्वारोपणमित्याह—विषया इत्यादिना । देहादीत्यादिपदादिन्द्रियादिग्रहणम् । गुणप्रवृद्धा विषयप्रवालाश्च मनुष्यादिस्थावरान्ता ब्रह्मादिमनुष्यान्ताश्च सर्वे भूतसङ्घाश्शाखा इव संसारवृक्षस्याधश्चोर्ध्वं च प्रसृता भवन्तीत्यर्थः । एतेन तन्त्रादिनाऽधश्शब्दस्योर्ध्वशब्दस्य च भूतपरत्वे भूताश्रयदेशपरत्वेन च द्वेधा व्याख्यानं कृतमिति सिद्धम् ।

यद्वा शाखारूपविषयनिर्देशेन ब्रह्मादिस्थावरान्तसर्वप्राणिनिकायरूपविषयो लक्ष्यते । ततश्च वृक्षतुल्यस्यास्य संसारस्य प्रवालतुल्यविषयोपलक्षिताः, जलादितुल्यगुणप्रवृद्धाश्च शाखातुल्यास्सर्वभूतसङ्घा अधश्चोर्ध्वं च प्रसृता भवन्तीत्यर्थः । मनुष्यादिस्थावरान्तजन्तुसन्ततिर्यत्रास्ति सोऽधश्शब्दार्थः । ब्रह्मादिमनुष्यान्तजन्तुसन्ततिर्यत्रास्ति स ऊर्ध्वशब्दार्थः । मनुष्यादीति तद्गुणसंविज्ञानबहुव्रीहिः । मनुष्यान्तेति त्वतद्गुणसंविज्ञानबहुव्रीहिः । स्वविवरभूतपाताललोकसहिता पृथिवी अधश्शब्दार्थः । सत्यादिलोकसहितस्स्वर्गलोक ऊर्ध्वशब्दार्थ इति यावत् । एवं चाधो मर्त्यलोकपाताललोकयोरूर्ध्वं स्वर्गलोके च ये प्राणिनो ब्रह्मादिस्तम्बान्तास्ते संसारवृक्षस्याधोभागोर्ध्वभागद्वयव्यापिन्यश्शाखा इत्युच्यन्त इति परमार्थः ।

ननु कोऽयं संसारः ? यस्य प्राणिनश्शाखाः । न तावत्प्रपञ्चः- तस्य लोकानामेव शाखात्वेन भवितव्यत्वात् । लोकमयो हि प्रपञ्चः, प्राणिनस्तु पक्षिप्राया एव । नापि देहः- तस्य सर्वभूतशाखावत्त्वासम्भवत्त्वात् । नापि सुखदुःखादिसम्भोगः- तस्य प्राण्याश्रयकत्वेन प्राणिमत्त्वासम्भवादिति चेत्, उच्यते—जन्ममरणादिलक्षणस्सुखदुःखादिसम्भोग एव संसारः, सर्वेऽपि संसारिणः प्राणिनोऽमुमेव संसारमाश्रयन्त इति प्राणिनामाश्रय एव संसारः शाखानां वृक्ष इव । प्राणिनां संसारस्य चेतरेतराश्रयाश्रयिभावात्प्राणिन आश्रित्य वर्तमानोऽपि संसारः प्राणिनामाश्रयो भवति, यथा भर्तृभार्ये परस्परम् । यद्वा अविद्यामयोऽयं संसरोऽविद्यायाश्च सर्वप्राण्याश्रयत्वात्संसारस्य च तथात्वमिति ।

प्रवालाश्शाखाः। संसारवृक्षस्य परं मूलमुपादानं कारणं पूर्वमुक्तम्। अथेदानीं कर्मफल-जनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तानि, अधश्च देवाद्यपेक्षया मूलान्यनुसन्ततान्यनुप्रविष्टानि; कर्मानुबन्धीनि- कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुद्भवति तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतः। अत्र हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥२॥

---

अथवा प्रपञ्च एवेह संसारः। सहि यथा लोकमयस्तथा भूतमयश्च। तथा च लोका इव लोकस्थप्राणिनोऽपि तस्य शाखा इव भवन्तीति। यद्वा सर्वे प्राणिनस्स्वाश्रयलोकद्वारेण संसारवृक्षस्य शाखा इव भवन्तीति। यद्वा प्रपञ्चो वृक्षो लोकाश्शाखा याः स्कन्धादुपरि प्रादुर्भूताः स्थूलाः, ये तु शाखासुद्भूताश्शालशिफाजटाशब्दैरुच्यमानास्सूक्ष्मसूक्ष्मतरसूक्ष्मतमवृक्षावयवास्तत्स्थानीयास्तु प्राणिन इति। परं प्रधानमित्यर्थः। पूर्वमिति। ऊर्ध्वमूलमित्यनेनेत्यर्थः। धर्माधर्मयोर्यज्ञादिहिंसादिविहित-निषिद्धकर्मणोः प्रवृत्तौ प्रवर्तने कारणानि पुंसामिति भावः। अवान्तरभावीनीति। अप्रधानानीत्यर्थः। अवान्तरे मध्ये भवन्तीत्यवान्तरभावीनि। अधश्चेति। मनुष्यलोक इत्यस्य विशेषणम्। कथमस्याधस्त्वमत आह—देवाद्यपेक्षयेति। स्वर्गाद्यपेक्षयेत्यर्थः। कर्मेत्यनुबन्धः कर्मानुबन्धस्स एषामस्तीति कर्मानुबन्धीनि। रागद्वेषादिवासनाप्रयुक्तत्वात्कर्मणः क्रियमाणस्य वासनापेक्षया पश्चाद्भावित्वमिति भावः। येषां रागद्वेषादिसंस्काराणामुद्भूतिमुत्पत्तिमनुसृत्योद्भवति कर्मेति शेषः। तानि कर्मानुबन्धीनी-त्युच्यन्ते। मनुष्यलोके भूलोके।

ननु पशुलोक इत्युक्तेऽपि भूलोक एव सिध्यति किमिति मनुष्यशब्दोपादानमत आह—विशेषत इति। अत्र हि भूलोके मनुष्याणां विशेषतः कर्माधिकारः प्रसिद्धः। विशेषत इत्यनेन पश्वादीनामपि सामान्यतो मैथुनादिकर्माधिकारोऽस्तीति सूच्यते। अथवा मनुष्यलोको मनुष्यसमूहः। किमिति मूलानि मनुष्यसमूहेऽनुसन्ततानीत्यत्र आह—विशेषत इति। अत्र प्रपञ्च इत्यर्थः। विशेषत इत्यनेन देवादीनां काचित्कः कर्माधिकार इति सूच्यते। मनुष्येषु वर्तमानास्तत्तत्कर्मानुमेया जन्मान्तरकृतकर्मप्रयुक्ता रागद्वेषादिवासनास्संसारवृक्षस्यावान्तरमूलानि मनुष्याणामधस्स्थत्वादिमानि मूलानि चाधश्चेत्युक्तानि वृक्षस्यापि ह्यवान्तरमूलान्यधोव्यापीनि सन्ति। अज्ञानमूलकः पूर्वपूर्वकर्मवासनाभिरभिवर्धितश्च जन्ममरणादिप्रयुक्तसुखदुःखसम्भोगात्मकः प्राणिनां संसार इति श्लोकद्वयस्य फलितार्थः।

रामानुजस्तु—अधश्शाखमिति पूर्वश्लोकपदस्य यमर्थमाह मनुष्यपश्वादयश्शाखा इति तमेवार्थमत्राप्याहेति पुनरुक्तिस्तन्मते। नच शङ्करमते पूर्वापरविरोधः, संसारवृक्षस्य महदादयश्शाखा इति पूर्वमुक्त्वा मनुष्यादयश्शाखा इत्यधुनोक्तत्वादिति वाच्यं, महदादयस्तत्सङ्घातात्मकमनुष्यादयश्च शाखा इत्यदोषात् ॥२॥

यस्त्वयं वर्णितस्संसारवृक्षः—

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ॥३॥

नेति। न रूपमस्येह यथोपवर्णितं तथा नैवोपलभ्यते, स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वात्। दृष्टनष्टस्वरूपो हि स इति, अत एव नान्तो न पर्यन्तो निष्ठा परिसमाप्तिर्वा

---

नेति। अस्य रूपमिह यथावर्णितमिति शेषः। तथा नोपलभ्यते। अस्यान्तो नास्त्यादिर्नास्ति, सम्प्रतिष्ठा च नास्ति। सुविरूढमूलमेनमश्वत्थं दृढेनासङ्गशस्त्रेण छित्वा। ततो यस्मिन्गता भूयो न निवर्तन्ति तत्पदं परिमार्गितव्यम्। नोपलभ्यत इति। संसारस्य रूपं न दृश्यत इत्यर्थः। अविद्यावस्थायामस्य सर्वैर्दृश्यमानत्वेनादृश्यमानत्वोक्तेर्विरुद्धत्वात्। यद्वा विद्यावस्थायामिति भावः। अविद्यावस्थायामस्य रूपं यथा सत्यमिवोपवर्णितं तथा सत्यतया नोपलभ्यते, किंतु मिथ्यात्वेनैव दृश्यते। किमिवोपलभ्यतेऽत आह—स्वप्नेति। यद्वा विद्यावस्थायां कुतो नोपलभ्यतेऽत आह—स्वप्नेति। स्वप्नस्थादयस्स्वप्नपदार्थाः। माया ऐन्द्रजालिकेन दर्शितो विग्रहादिः। कुतस्संसारस्य स्वप्नादिसाम्यमत आह—दृष्टेति। हि यस्मात्स संसारो दृष्टनष्टस्वरूपो यदा दृष्टं तदैव नष्टं पूर्वं दृष्टं पश्चान्नष्टं वा दृष्टनष्टं स्वरूपं यस्य स तथोक्तः। प्रतिभानसमयनियतसत्ताक इत्यर्थः। स्वप्नादयश्च तादृशा एवेति स्वप्नादिसाम्यं संसारस्येति भावः। अत एव मिथ्यात्वादेवेत्यर्थः। व्यावहारिकसत्यस्य वस्तुनः स्वरूपं हि परिनिष्ठितं घटस्सर्वथा सर्वदा च घट एव, नतु पट इति। प्रातिभासिकस्तु सर्पाभासादिः कदाचित्सर्पत्वेन दृश्यते, कदाचिद्दण्डत्वेन कदाचिद्रज्जुत्वेनेति न तस्य परिनिष्ठितं स्वरूपमस्ति। तथा घटस्य मुद्गरप्रहारादिना समाप्तिरस्ति, सर्पाभासस्य तु न समाप्तिः। तदानीं रज्जुज्ञानेन समाप्तावपि पुनर्मन्दान्धकारे सा रज्जुः क्षिप्तोरगी भवेदेव। तथा व्यावहारिकस्य घटस्यादिरस्ति। अयं घट इदानीं कुलालेन कृत इति दर्शनात्। स्वाप्निकस्य तु नादिरुपलभ्यते। तथा व्यावहारिकस्य मध्य उपलभ्यते, प्रातिभासिकस्य तु न, आद्यन्तज्ञानप्रयुक्तत्वान्मध्यज्ञानस्य।

एवं प्रातिभासिकस्य आद्यन्तमध्यानामनुपलम्भेनाभावे सिद्धे संसारस्यापि स सिध्यति प्रातिभासिकत्वात्। अयं संसारोऽनुपलभ्यमानादिमध्यान्तः प्रातिभासिकत्वात्स्वप्नपदार्थवदिति प्रयोगः। संसारः प्रातिभासिकः दृष्टनष्टस्वरूपत्वात्स्वप्नादिवदिति च। नच व्यावहारिकसंसारस्य कथं प्रातिभासिकत्वमिति वाच्यं, व्यवहारप्रतीत्योरविशेषात्। प्रातिभासिकत्वादेव हि संसारस्य सुषुप्तौ प्रातिभासाभावादभावः। नचैवं सर्पाभासवत्सर्वस्यापि प्रातिभासिकत्वे भ्रमप्रमाविवेकानुपपत्तिरिति वाच्यं, सिद्धान्ते सर्वस्यापि भ्रमत्वात्। अज्ञदृष्ट्या तु कल्पितः प्रातिभासिकव्यावहारिकभेदः, तत्त्वविदृष्ट्या तु ब्रह्मणोऽन्यस्य सर्वस्यापि कल्पितत्वेन प्रातिभासिकत्वमेवेति न कश्चिद्दोषः।

नन्वयं देह इदानीं जात इदानीं वर्धत इदानीं मृत इति देहस्याद्यन्तमध्योपलम्भात्कथं प्रातिभासिकत्वमिति चेत्, उच्यते—संसारस्य वयमादिमध्यान्तानुपलम्भं ब्रूमः, नतु देहस्य। पूर्व-

विद्यते। तथा न चादिः 'इत आरभ्यायं प्रवृत्त' इति न केनचिदवगम्यते। न च सम्प्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यते। अश्वत्थमेनं यथोक्तं, सुविरूढमूलं- सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलानि यस्य तमेनं सुविरूढमूलं, असङ्गशस्त्रेण- असङ्गः पुत्रमित्रवित्तलोकैषणेभ्यो व्युत्थानं तेनासङ्गशस्त्रेण, दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन, छित्वा संसारवृक्षं सबीजमुद्धृत्य ॥३॥

---

पूर्वकर्मवशादुत्तरोत्तरदेहजन्ममरणलक्षणस्संसारो ह्यनादिरनन्तश्च। अत एवामध्यश्च। न चैवं व्यावहारिकदेहस्य कथं प्रातिभासिकत्वमिति वाच्यं, दृष्टनष्टस्वरूपत्वाद्देहस्य प्रातिभासिकत्वं, न त्वादिमध्यान्तानुपलम्भात्। नचानन्तस्य संसारस्य कथं देहवद्दृष्टनष्टस्वरूपत्वमिति वाच्यं, संसारस्य सुषुप्त्यादौ नाशदर्शनेन तथात्वात्। नच प्रबोधे पुनर्दृश्यत एवेति वाच्यं, प्रबोधे दृश्यमानस्य संसारान्तरत्वात्। पूर्वानुभूतसंसारो हि सुषुप्तौ नष्टः। सोऽयं संसार इति प्रत्यभिज्ञा तु सेयं दीपज्वालेतिवत्साजात्यादिति। नन्वज्ञानमूलोऽयं संसारः कथमनादिस्स्यादत आह—इत आरभ्येति। नास्य संसारस्य जन्माभावप्रयुक्तमनादित्वं वयं ब्रूमः, किं तर्ह्यज्ञायमानजन्मकालवत्त्वरूपमनादित्वमेवेति।

ननु न केनचिदवगम्यत इत्ययुक्तमीश्वरेण तस्यावगम्यमानत्वादन्यथा तस्यासर्वज्ञत्वापत्तेरिति चेत्, मैवम्—किमयमीश्वरश्चिन्मात्र उत मायामयः? यं त्वं सर्वज्ञं ब्रूषे। आद्ये- निर्धर्मकस्य तस्य ज्ञातृत्वधर्मप्रसङ्गः। द्वितीये- सोऽपि कल्पित एव, मायया संसारवदिति कथं तस्य मायामयसंसारादिपरिज्ञातृत्वम्? (संसारस्यादिर्जन्मेत्यर्थः) नचैवमीश्वरस्य सर्वज्ञत्वभङ्गप्रसङ्गः, यद्ज्ञातुं शक्यं तदपरिज्ञानस्यैव सर्वज्ञत्वभङ्गहेतुत्वात्। नच संसारस्रष्टुरीश्वरस्य कथं तदाद्यपरिज्ञातृत्वमिति वाच्यं, पूर्वं संसारं दृष्ट्वा उत्तरोत्तरं संसारं सृष्टवानीश्वर इत्यदोषात्। अन्यथा हि विषमसृष्टिप्रयुक्तवैषम्यादिदोषप्रसक्तिस्स्यादीश्वरस्य।

किंच अज्ञानादपि वासनारूपेणाज्ञानेऽवस्थित एव संसारो जायते, नापूर्व इति कृत्वा कथमज्ञानमूलकत्वमात्रेणेश्वरेण संसारस्यादिर्ज्ञातुं शक्येत? अभावादेवादेः। न ह्यविद्यमानशशशृङ्गादिज्ञानमात्रेणेश्वरस्य सर्वज्ञत्वहानिः। एतत्संसारस्य हेतुस्तु न केवलमविद्या, किंतु चिदविद्यासंयोगः। उक्तं हि क्षेत्रक्षेत्रज्ञसंयोगस्संसारस्य कारणमिति। स च संयोगोऽनादिरिति तत्प्रयुक्तस्संसारोऽप्यनादिरेव। यदैव संयोगस्तदैव हि संसारः प्रवृत्तः। तस्मात्कार्यत्वेऽप्यनादिरेव संसारः। ज्ञाननाश्यत्वादस्यानन्तत्वं तु व्यवहारसापेक्षमथवाऽविद्यासापेक्षमिति बोध्यम्।

मूलानि रागद्वेषादिवासनाः। रागादिप्रयुक्तो हि संसारः। अथ वाऽज्ञानप्रयुक्तो रागादिभिर्विवर्धितश्च संसारः। मित्रशब्देन भार्या गृह्यते। भार्या हि भर्तुर्मित्रमिवेष्टप्रापिका, अनिष्टनिवारिका च। लोकैषणं नाम स्वर्गादिलोकप्राप्त्याशा। तेभ्यो व्युत्थानं नाम तत्परित्यागः सन्न्यास इति यावत्। 'व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति श्रुतेः। गृहस्थस्य हि पुत्रादिसङ्गो दुर्

हर इति भावः । परमात्माभिमुख्यं परमात्मानुसन्धानप्रावण्यं तस्मिन् यो निश्चयोऽध्यवसायः तेन दृढीकृतेन । पुनःपुनर्विवेकाभ्यास आत्मानात्मविवेकस्यासकृदावर्तनमहमात्मा इदमनात्मेत्येवंरूपं तदेवाश्मा शाणोपलस्तेन निशितेन तीक्ष्णीकृतेन । सबीजं साज्ञानमूलमुद्धिद्योच्चैर्भित्त्वा सन्न्यासाश्रमं स्वीकृत्य वैराग्यशमदमादिभी रागद्वेषादीनि संसारवृक्षमूलानि छित्त्वा, आत्मानात्मविवेकज्ञानेन संसारवृक्षप्रधानमूलमज्ञानं च छित्त्वेत्यर्थः ।

यत्तु रामानुजः—अस्य वृक्षस्य चतुर्मुखादित्वेनोर्ध्वमूलत्वं, तत्सन्तानपरम्परया मनुष्याग्रत्वेनाग्रशाखत्वं, मनुष्यत्वे कृतैः कर्मभिर्मूलभूतैः पुनरप्यधश्चोर्ध्वं च प्रसृतशाखत्वमिति, यथेदं रूपं निर्दिष्टं न तथा संसारिभिरुपलभ्यते । मनुष्योऽहं देवदत्तस्य पुत्रो यज्ञदत्तस्य पिता तदनुरूपपरिग्रहश्चेत्येतावन्मात्रमुपलभ्यते । तथाऽस्य वृक्षस्यान्तो विनाशोऽपि गुणमयभोगेष्वसङ्गकृत इति नोपलभ्यते । तथाऽस्य गुणसङ्ग एवादिरिति नोपलभ्यते । तस्य प्रतिष्ठा चानात्मन्यात्माभिमानरूपमज्ञानमिति नोपलभ्यते । प्रतितिष्ठत्यस्मिन्नेवेति ह्यज्ञानमेवास्य प्रतिष्ठेति, तन्मन्दम्—यदि संसारवृक्षस्य चतुर्मुख आदिस्स्यात्तर्हि स्थावरमेवाग्रं स्यान्न तु मनुष्यः । तस्य ब्रह्मादिस्थावरान्तप्राणिवर्गमध्यस्थत्वात् । नच स्थावराणां ब्रह्मसन्तानपरम्परान्तःपातित्वं नास्तीति वाच्यं, ब्रह्मणस्स्रष्टृत्वसङ्कोचस्यान्याय्यत्वात् । सर्वं जगत्सृष्टं हि चतुर्मुखेन प्रजापत्यादिद्वारा । नच मनुष्यत्वकृतकर्मवशादेव पश्चादधश्शाखप्रसार इति वाच्यं, मनुष्यसृष्टेः प्रागपि पश्वादिसृष्टिसम्भवात् । तथा संसारिभिरस्य रूपं नोपलभ्यते यथोक्तमित्यप्ययुक्तम्—किमिमे संसारिणो वेदवेदाङ्गाध्ययनसम्पन्ना उत मूर्खाः ? आद्ये तैरेतदज्ञायत एव । द्वितीये किं नास्तिकजनमतस्येह वर्णनेन फलम् ? नच वेदवेदाङ्गादिविदो न संसारिण इति वाच्यं, यज्ञादिकर्मप्रवृत्त्यादिरूपसंसारस्य तेषु दर्शनात् । न चास्तिकेष्वप्यवेदविदो नैतज्जानन्तीति वाच्यं, किं तदपरिज्ञानप्रतिपादनादिह फलम् ? तेभ्योऽप्यत्यन्तमूढो बालो ह्यात्मानं मनुष्य इति देवदत्त इत्यपि च न जानातीति कथमुक्तं मनुष्य इत्यादिकमुपलभ्यत इति ? तथा नान्त इत्यस्यान्तो गुणमयभोगासङ्गकृत इति नोपलभ्यत इत्यर्थस्य कथमागमः ? नच तथेत्यस्यात्राप्यन्वयात्तदर्थागम इति वाच्यं, यथोक्तं तथेति हि तथाशब्दार्थः । रूपं तु पूर्वमुक्तमिति तत्र तथाशब्दान्वयो न्याय्यः । न हीह गुणमयभोगासङ्गादिकं वर्णितं, प्राग्येनास्य तथाशब्देन ग्रहणं स्यात् । नच त्रयोदशाध्यायोक्तार्थस्येह ग्रहणं न्याय्यं व्यवहितत्वात् । तत्रापि गुणसङ्गस्संसारकारणमित्येवोक्तं, न त्वसङ्गस्तन्नाशकारणमिति । तत्त्विहैवोच्यते- 'असङ्गशस्त्रेण दृढेन छि'त्त्वेति । न चादिरित्यत्र तथाशब्दानुवर्तनेऽपि गुणसङ्ग आदिरित्यर्थस्यासिद्धिरेव । गुणसङ्गपदार्थवाचकत्वाभावात्तथाशब्दस्य । तथाशब्दो हि प्रकारवाची गुणसङ्गं न बोधयेत् । गुणसङ्ग इतिपदस्याध्याहारस्त्वप्रमाणः । तं विनाऽप्यन्वयसम्भवे तदध्याहारस्यायुक्तत्वाच्च । सम्प्रतिष्ठेत्यत्राप्यज्ञानमेवेति पदकल्पनस्यापि मूलाद्बहिष्कृतत्वादप्रमाणत्वाच्च ।

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥४॥

तत इति। ततः पश्चाद्यत्पदं वैष्णवं तत्परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्य-मित्यर्थः। यस्मिन्पदे गताः प्रविष्टा न निवर्तन्ति नाऽऽवर्तन्ते भूयः पुनस्संसाराय। कथं परिमार्गितव्यमित्याह— तमेव च यः पदशब्देनोक्त आद्यमादौ भवमाद्यं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः। कोऽसौ पुरुष इत्युच्यते- यतो यस्मात्पुरुषात्संसारमाया-वृक्षप्रवृत्तिः प्रसृता निस्सृता ऐन्द्रजालिकादिव माया पुराणी चिरन्तनी ॥४॥

---

एवमन्त इति, आदिरिति, सम्प्रतिष्ठेतीतीतिशब्दत्रयकल्पनमपि गौरवावहत्वादयुक्तमेव। न चान्तो नोपलभ्यत इति लघुवाक्यान्वयं विहाय गुणमयभोगासङ्ग एवान्त इति नोपलभ्यत इति गु-वाक्यान्वयकल्पनं युक्तमिति कोऽपि विद्वान् प्रत्येति। युक्त एवायं रामानुजस्य यथाश्रुतार्थ-त्यागोऽपार्थकल्पनं च विशिष्टाद्वैताख्याश्रौतमताभिमानपिशाचग्रस्तस्येति ॥३॥

तत इति, पश्चादिति। संसारनाशाच्चित्ते शुद्धे सतीत्यर्थः। संसारो हि चित्तविक्षेपक-वैष्णवं पदं विष्णोरात्मनः स्वरूपं सच्चिदानन्दाख्यं परिमार्गितव्यमन्वेष्टव्यम्। 'सोऽन्वेष्टव्यस्स विजि-ज्ञासितव्य' इति श्रुतेरिति भावः। परिमार्गशब्दार्थमाह— अन्वेषणमिति। ज्ञानमिति याव-परिमार्गितव्यस्य फलितार्थमाह— ज्ञातव्यमिति, प्रविष्टा इति। यत्सायुज्यं प्राप्ता इत्यर्थः। निवर्तन्तीति परस्मैपदमार्षम्। किमर्थं नावर्तन्तेऽत आह— संसारायेति। संसरणायेत्यर्थः। पु-स्संसारं न प्राप्नुवन्तीत्यर्थः। यथा स्वर्गादिपदे प्रविष्टाः पुनरावर्तन्ते न तथेति भावः। आदौ ह्ये-प्रागपि भवत्यस्तीति, आदौ भव आद्यः- अनादिरित्यर्थः। पुरुषं पूर्णमात्मानं प्रपद्ये स एवाहमस्मि-भज इत्यनुसन्धानवान् सन् विद्वान् पदं परिमार्गयेदित्याह— इत्येवमिति। एवमहं ब्रह्मास्मि-तत्त्वज्ञानात्परमपदप्राप्तिर्भवेद्विदुष इति भावः। यतः पुराणी प्रवृत्तिः प्रसृता तमेव चाद्यं पुरुषं प्र-इत्यन्वयः। कस्य प्रवृत्तिरत आह— संसारेति। संसाराख्यमायावृक्षस्य प्रवृत्तिं प्रवर्तनं प्र-जातेति यावत्। अनादिरयं संसारवृक्षो यस्मान्मायिनः परमेश्वरात्प्रवृत्तस्सोऽयं परमात्मेह पुरुष इ-इत्यर्थः।

प्रपद्येदिति रामानुजीयपाठस्तु पद्यतेः परस्मैपदित्वस्यापाणिनीयत्वादुपेक्ष्यः। यच्चानेन— प्र-यत इति पाठेऽपि प्रपद्य इ यत इति छित्वा तमेव चाद्यं पुरुषं प्रपद्य शरणमुपगम्य इ यतोऽ-निवृत्त्यादेः कृत्स्नस्यैतस्य साधनभूता प्रवृत्तिः पुराणी पुरातनी प्रसृता, पुरातनानां मुमुक्षूणां प्र-पुराणी पुरातना हि मुमुक्षवो मामेव शरणमुपगम्य निर्मुक्तबन्धास्सञ्जाता इत्यर्थ इत्युक्तं, तच्चासत्-या प्रसृता सा न शरणं प्रपन्ना, किंतु पुरातना मुमुक्षव एवेति समानकर्तृकत्वाभावेन प्र-त्ययोऽनुपपत्तेः। पुराणानामियं प्रवृत्तिः पौराणीति तस्येदमित्यणि टिड्ढाणेति ङीपा भाव्यत्वेन पुराणी

कथंभूतास्तत्पदं गच्छन्तीति, उच्यते—

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

निर्मानमोहा इति । निर्मानमोहाः- मानश्च मोहश्च मानमोहौ, तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिताः; जितसङ्गदोषाः- सङ्ग एव दोषस्सङ्गदोषः, जितः सङ्गदोषो यैस्ते जितसङ्गदोषाः; अध्यात्मनित्याः- परमात्मस्वरूपालोचननित्यास्तत्पराः; विनिवृत्तकामाः- विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामा यतयस्सन्न्यासिनः, द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्तास्सुखदुःखसंज्ञैः परित्यक्ता गच्छन्ति, अमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥५॥

तदेवं पदं पुनर्विशिष्यते —

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥६॥

नेति । तद्धामेति व्यवहितेन धाम्ना सम्बध्यते । तद्धाम तेजोरूपं पदं न भासयते

---

रूपासिद्धेः । इ यतः प्रवृत्तिरित्यस्य इ यतस्साधनभूता प्रवृत्तिरिति कल्पनं चान्याय्यं, इ यत इत्यस्याज्ञाननिवृत्त्याद्यर्थश्च स्वकपोलकल्पितत्वादुपेक्ष्यः । नहि यच्छब्दादभिधया तादृगर्थलाभस्सम्भवति । नच शङ्करमतेऽपि प्रपद्ये इत्युत्तमपुरुषस्य वाक्यानन्वय इति वाच्यं, तं प्रपद्य इति तत्पदं परिमार्गितव्यमिति वाक्यान्वयलाभात् । यतः पुराणी प्रवृत्तिः प्रसृता तमेव चाद्यं पुरुषं प्रपद्य इति यस्मिन्गता भूयो न निवर्तन्ति तत्पदं ततः परिमार्गितव्यमिति श्लोकस्यान्वयः पर्यवसन्नः ॥४॥

निर्मानेति । निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामा अमूढा यतय इति शेषः । सुखदुःखसंज्ञैर्द्वन्द्वैर्विमुक्तास्सन्तः तदव्ययं पदं गच्छन्ति । मानोऽहंममाभिमानः । मोहोऽज्ञानम् । मूढोऽविवेकी तद्भिन्ना अमूढा विवेकिन इत्यर्थः । निर्लेपेन निश्शेषेणेत्यर्थः । गृहिणां दारापत्यादिसङ्गस्यावर्जनीयत्वादुक्तम्—यतय इति । अध्यात्ममात्मनि नित्या आसक्ता आत्मन्यासक्तिर्नामात्मस्वरूपालोचनासक्तिरित्यभिप्रेत्याह—परमात्मेति । इदं मे स्यादिदं मे स्यादितीच्छाः कामाः । प्रियमिष्टं सुखसंज्ञं सुखे तद्धेतौ च सर्वेषामिच्छास्ति हि । अप्रियमनिष्टं दुःखसंज्ञं दुःखे तद्धेतौ च सर्वेषामकामोऽस्ति हि । आदिपदात् स्तुतिनिन्दादिद्वन्द्वग्रहणम् । यद्यपि शीतोष्णमानावमानादयस्सर्वे द्वन्द्वपदार्थाः प्रियाप्रियद्वन्द्वेऽन्तर्भूतास्तथापि तद्विशेषसंग्रहायादिपदनिर्देशः कृत इति बोध्यम् । 'सह वै स शरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा सन्तं न प्रियाप्रिये स्पृशत' इति श्रुतेरशरीरत्वं प्राप्नुवन्तीत्यर्थः । पद्यते गम्यत इति पदं स्वरूपं ब्रह्मेति यावत् ॥५॥

नेति । तत्सूर्यो न भासयते, शशाङ्को न भासयते, पावको न भासयते यद्गत्वा न निवर्तन्ते

सूर्य आदित्यस्सर्वावभासनशक्तिमत्वेऽपि सति; तथा न शशाङ्कश्चन्द्रः; न पावको नाग्निरपि; यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते, यच्च सूर्यादिर्न भासयते, तद्धाम पदं परमं विष्णोर्यद्गत्वा न निवर्तन्त इत्युक्तम् ॥६॥

तद्धाम मम परमं पदमिति शेषः। यद्वा यद्गत्वा न निवर्तन्ते तद्धाम मम परमं पदम्। तत् सूर्यो न भासयते, शशाङ्को न भासयते, पावको न भासयते। तेजो ज्ञानं, न त्वालोकः। दृश्यत्वेनानात्मत्वादात्मा हि द्रष्टा। ननु घटः पटं न भासयत इतिवत्सूर्यस्तन्न भासयत इति धाम्नः क उत्कर्षो लब्धोऽत आह—सर्वेति। अहि यस्सर्वं जगदवभासयितुमीष्टे स सूर्योऽपि तन्न भासयत इत्यर्थः। तथा निशि यस्सर्वावभासकश्चन्द्रस्सोऽपि तन्नावभासयते। यश्च सन्ध्ययोस्सर्वाव भासकोऽग्निर्यश्चान्तर्गृहे सर्वावभासको दीपादिः स चाग्निर्न तद्भासयितुमीष्टे। आत्मभास्या हि कथमात्मानं भासयेरन्? अयं सूर्योऽयमिन्दुरयमग्निरयं दीप इति क्षेत्रज्ञ एव सूर्यादीन् जानाति; सूर्यादीनामवभासकः। सूर्यादयस्तु जडा एव, ते हि स्वात्मानमेव न विदुरहं रविरहं दीप इति; किं पुनरन्यानवभासयेरन्। नच सूर्यादयश्चेतना एवेति वाच्यं, यस्सूर्यादिमण्डलान्तर्वर्ती पुरुषो देहान्त वर्ती पुरुष इव स एक एव चेतनो द्रष्टा क्षेत्रज्ञश्च। तदतिरिक्तं मण्डलं तु देहवज्जडमेवेति।

नन्वेवं जडस्य सूर्यादेः कथं सर्वावभासनशक्तत्वमिति चेदुच्यते—देहान्तर्वर्ती प्रत्यगात्मा यथा बाह्यघटाद्यवभासने चक्षुर्वृत्त्यादिकमपेक्षते तथा सूर्यादिज्योतिरप्यपेक्षत एव। अज्ञानेनेवान्धकारे णापि घटादेरावृतत्वात्। अज्ञाननिरसनाय चक्षुर्वृत्तिः, अन्धकारनिरसनाय सूर्यादितेजश्च क्षेत्रज्ञस्य।

यद्वा अज्ञानेनावृतो घटः पुनरन्धकारेणाप्यावृतः। पटेन वेष्टितं वस्तु पेटिकयेव। तस्मा च्चान्धकारस्यापगमनाभावे चक्षुर्वृत्तेर्घटाज्ञानसम्बन्धो न स्यात्। न हि बाध्यबाधकयोस्सम्बन्धं विना बाधकेन बाध्यं नाश्येत। तस्माच्चक्षुर्वृत्तिरेव सूर्यादिज्योतिरपेक्षते; क्षेत्रज्ञस्तु वृत्तिमपेक्षत इति। तस्मा च्चान्धकारनाशकत्वलक्षणं सर्वावभासकत्वं सूर्यस्य, अज्ञाननाशकत्वलक्षणं भासकत्वं चक्षुर्वृत्तेश्च। सूर्यादिरप्यवभासक एव वृत्तिवत्।

न चैवमन्धकारे सूर्यादितेजसा नाशिते अज्ञाने वृत्त्या नाशिते च घटस्स्वयमेव स्फुरेदिति क्षेत्रज्ञेनेति वाच्यं, जडत्वाद्घटस्य। न हि स्फुरणं स्वयं सम्भवति तस्य। न हि घटोऽहमिति आत्मानं वेत्ति; नापि पटोऽयमिति पटं वा वेत्ति। तस्मादयं घट इति घटे ज्ञातत्वरूपं भासकत्वं प्रयुक्तमेवेति जीव एव भासकः। न हि वृत्तिरप्ययं घट इति जानाति जडत्वात्तस्याश्च। तथा घटादिभासने करणभूतं चक्षुरपि सूर्योऽपीदं चक्षुरयं सूर्य इति जीवेन ज्ञायेत एवेति सर्वावभासकत्वं जीवस्य सिद्धं सर्वज्ञातृत्वलक्षणं, न त्वन्धकारनिरसनरूपं, नाप्यज्ञाननिरसनरूपमिति बोध्यम्।

न चैवं जीवस्य सर्वावभासकत्वे विवदितव्यं- 'साक्षी चे'तेति श्रुत्यैव साक्षित्वलक्षण भासकत्वस्योक्तत्वात्। नच जीवो घटादिमिवात्मानमपि वृत्त्यादिसापेक्षस्सन्नेव भासयतीति

ननु सर्वा हि गतिरागत्यन्ता 'संयोगा विप्रयोगान्ता' इति प्रसिद्धं; कथमुच्यते--'तद्धाम गतानां नास्ति निवृत्ति'रिति ? शृणु तत्र कारणम्—

**ममैवांशो जीवलोके जीवभूतस्सनातनः ।**
**मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

**ममेति । ममैव परमात्मनो नारायणस्यांशो भागोऽवयव एकदेश इत्यनर्थान्तरं**

---

प्रकाश एवेति भास्य एवेति वाच्यं, अन्धकारे स्वप्ने सुषुप्त्यादौ च सूर्यादिज्योतिरभावेऽपि वृत्त्यभावेऽपि जीवस्य स्वत एव भासमानत्वादत एव हि स्वयंज्योतिरित्युच्यत आत्मा । तस्मात्सूर्याद्यस्सर्वेऽपि भासकत्वेन प्रसिद्धा आत्मभास्या एवेति न तं भासयितुं सूर्यादिः कोऽपि शक्नोति । पदस्य पूर्वश्लोके प्रकृतत्वादुक्तं पदमिति । यत्सर्वावभासकमनन्यावभास्यं च तेजस्तदेव मम पदं, तदेव गत्वा न पुनरावर्तन्ते मुक्ता इति परमार्थः ।

यत्तु रामानुजः—तद्धामात्मज्योतिर्मम मदीयं ममैवांश इत्यर्थ इति, तन्मन्दम्—अंशांशिभावस्यात्राविवक्षितत्वात् । उत्तरश्लोकेन तस्य वक्ष्यमाणत्वाच्च ॥६॥

ममेति । ननु 'सर्वे क्षयान्ता निचयाः पतनान्तास्समुच्छ्रयाः, संयोगा विप्रयोगान्ता मरणान्तं हि जीवित'मिति संयोगस्य वियोगान्तत्वप्रसिद्धेः सर्वापि गतिरागत्यन्तैवेति कृत्वा, 'यद्गत्वा न निवर्तन्त' इत्युक्तमयुक्तमित्याक्षिपति—**नन्विति** । गतिः प्राप्तिस्संयोग आगतिरागमनं वियोगः येन यद्गम्यते तेन तत आगम्यते । यथा कर्मिणा स्वर्गो गम्यते तत आगम्यते च । तथा मुमुक्षुणा यद्धाम गम्यते तद्धाम्नः पुनस्स आगच्छत्येव ।

ननु ग्रामान्तरं गतः कश्चित्पुनस्स्वग्रामं प्रत्यागच्छति कश्चित्तत्रैव तिष्ठतीति कथमुच्यते आगच्छत्येवेति चेत्, **मैवम्**—यावज्जीवं तत्र स्थित्वापि मरणानन्तरं तत्परित्यज्यान्यत्र गच्छत्येवेति । नहि वयं यस्माद्गतः तत्पुनः प्राप्नोतीति ब्रूमः, किं तर्हि यं गतः तं परित्यज्यागच्छतीत्येव ब्रूमः । येन यद्गम्यते तेन तत्त्यज्यत इत्येव व्याप्तिनियम इति भावः । निवृत्तिः पुनरावृत्तिः । तद्धामपरित्याग इति यावत् । जीवलोके प्रसिद्ध इति शेषः । सनातनो जीवभूतो ममैवांशः प्रकृतिस्थानि मनष्षष्ठानीन्द्रियाणि कर्षति । यद्वा सनातनो ममैवांशो जीवलोके जीवभूतः । स इति शेषः । प्रकृतिस्थानि मनष्षष्ठानीन्द्रियाणि कर्षति । **अनर्थान्तरमिति** । अंशभागावयवैकदेशाख्यं पदचतुष्टयमर्थान्तररहितमेकस्मिन्नेवार्थे वर्तते । अभिन्नार्थकमिति यावत् । पर्यायपदानि चत्वारीति भावः ।

यद्वा अर्थान्तरं तत्त्वान्तरं न भवति । अहं परमात्मैव जीवः, नतु मदर्थान्तरं जीवः- मदंशत्वाज्जीवस्य । कोसावंशोऽत आह—**भाग इति** । तदर्थमाह—**अवयव इति** । तस्यापि फलितमाह—**एकदेश इति** । यथा जलस्य तटाकगतस्यांश एकदेशो जलादर्थान्तरं तद्वज्जीवोऽपीति भावः । यद्वा ममैवांश इत्यत्रैवकारार्थमाह—**अर्थान्तरमिति** । ममैवांशो न त्वर्थान्तरं मत्त इत्यर्थः । जीवेन

**जीवलोके जीवानां लोके संसारे जीवभूतः कर्ता भोक्तेति प्रसिद्धः, सनातनश्चिरन्तनः; यथा जलसूर्यकस्सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते तथाऽयमप्यंशस्तेनैवात्मना सङ्गच्छत्येवमेव। यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः, आकाशांशस्सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं- 'यद्गत्वा न निवर्तन्ते' इति। ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति ? सावयवत्वे च विनाशप्रसङ्गो**

---

लोक्यते दृश्यत इति जीवलोक इति व्युत्पत्त्याऽऽह—**संसार इति**। जगतीति यावत्। वैदिकास्तार्किकादयश्च कर्तारं भोक्तारं जीवं मन्यन्त इत्यत आह—**कर्ता भोक्तेति**। कर्ता भोक्ते वैदिकादयो यं व्यवहरन्ति स जीवो ममैवांश इत्यर्थः। एतेन यथाऽहमकर्ताऽभोक्तेति प्रसिद्धस्त मदंशोऽप्यकर्ताऽभोक्ता चैव, तस्मिन्कर्ता भोक्तेति प्रत्ययस्तु भ्रम एव, न प्रमेति सिद्धम्। जीव भूतो जातो जीवभूतः। अनेन च भूतशब्दनिर्देशेन न वस्तुतः कर्तृत्वभोक्तृत्वप्रयुक्तजीवत्वं मदंस्येति सूच्यते।

ननु भवतु तवांशो जीवः, किं तावता तव पदं गतानामपुनरावृत्तौ कारणं सिद्धमत आह—**यथेति**। जलसूर्यको जले सूर्यप्रतिबिम्बः। सूर्य इव सूर्यकः 'इवे प्रकृतिता'विति कन्। प्रतिबिम्बो हि बिम्बस्यांश इति सूर्यांश इत्युक्तम्। जलमेव निमित्तं प्रतिबिम्बभावं प्रति कारणं तस्या नाशे सति। ततस्सूर्यात्। तथा चिदाभासो जीवोऽपि चिद्रूपपरमात्मनः प्रतिबिम्बत्वेन तदंशः प्रतिबिम्बनिमित्तस्याविद्याया अन्तःकरणस्य वा ज्ञानान्नाशे सति परमात्मचैतन्यं तत्पदं गत्वा ततो निवर्तत इति प्रतिबिम्बपक्षानुसारेणोत्तरमुक्तमाचार्यैः।

अथावच्छेदपक्षानुसारेणाह—**यथा वेति**। घटादीत्यादिपदात्करकमठादिग्रहणम्। एव मन्तःकरणावच्छिन्नोऽविद्यावच्छिन्नो वा चैतन्यरूपो जीवः स्वोपाधिभूताविद्यान्तःकरणनाशे सत्यच्छिन्नं परिपूर्णं परमात्मचैतन्यं प्राप्य न ततो निवर्तते। एकमेव चैतन्यं पूर्णं महाकाश इवोपाधिवशात्परिच्छिन्नमिव प्रतिभाति, तदुपाधिनाशे तु परिपूर्णं सदेवावतिष्ठत इति कथं पूर्णचैतन्यस्य आकाशस्येव गमनादिकमिति भावः। अयं चोपाधिपरिच्छेदः परिपूर्णस्याज्ञानकृत एवेति तदज्ञाने कथं पुनरुपाधिपरिच्छेददर्शनं स्यान्न कथमपीत्यभिसन्धिः।

**अत इति**। जलसूर्यकघटाकाशदृष्टान्तद्वयेन परमात्मांशस्य जीवस्य परमात्मप्राप्तौ सत्यां पुनरावृत्त्यभावस्य स्थापितत्वादित्यर्थः। उपपन्नं युक्तं सदृष्टान्तत्वाद्युक्तिमदित्यर्थः। उक्तमेव स्मारयति **यद्गत्वा न निवर्तन्त इति**। परिपूर्णचैतन्यस्य स्वरहितस्वप्रतिफलनयोग्यदेशाभावात्। मुखं स्वरहितेऽत एव स्वप्रतिफलनयोग्ये दर्पणप्रदेशे प्रतिफलति। अपरिच्छिन्नस्य निरवयवस्य निरवकाशस्य चैतन्यस्य चोपाधिपरिच्छेदाद्ययोगात्सावयवस्य सावकाशस्य हि महाकाशस्य घटादिपरिच्छेदः। चैतन्यप्रतिफलनं चैतन्यपरिच्छेदश्चेत्युभयमपि भ्रान्तिसिद्धमेव, न वास्तवमिति तत्त्वम्। इदमेव प्रश्नपूर्वं पूर्वपक्षयति—**नन्विति, निरवयवस्येति**। सावयवस्यैव सांशत्वान्निरवयवत्वोऽयं नेंऽश एवेति

सत्यावयवोंशो वा सिध्येन्न कथमपि । एवमंशाभावादेवैकदेशस्याप्यभावः । अंशो ह्येकदेशः । यथा मृदंशो मृदवयवस्त्र्यणुकादिर्मृद एकदेशः ।

यद्येवं निरवयवस्यांशासिद्धिस्तर्हि ममैवांश इति प्रकृतगीताप्रामाण्यादस्तु परमात्मनस्सावयवत्वमत आह—सावयवत्वे चेति । विनाशाख्यदोषप्रसङ्गात् । सावयवो हि घटादिर्नश्यन्दृष्टः । कुतस्सावयवस्य विनाशोऽत आह—अवयवविभागादिति । घटो ह्यवयवी कपालाद्यवयवविश्लेषाद्विनश्यति । एवमनन्तानां जीवरूपाणामवयवानां परमात्मनस्सकाशाद्वियोगे सति नश्येत्परमात्मेत्यर्थः । नच परमात्मनो विनाशित्वं युक्तमिति वाच्यं, अविनाशित्वस्य पूर्वं प्रतिपादितत्वात् । 'अविनाशी वाऽरेऽयमात्मा' इति श्रुतेश्च । नच जीव एवाविनाशी परमात्मा तु विनाश्येवेति वाच्यं, अवयविन एवानित्यत्वे तदवयवानां नित्यत्वस्यायुक्तत्वात् । अवयविनो देहस्य घटस्य तटाकजलस्य वाऽनित्यस्यावयवाः करचरणादयः कपालादयो बिन्द्वादयश्च नित्यत्वेन किं दृश्यन्ते ? नित्यत्वे चावयवानां कथमवयविनस्स्यादनित्यत्वम् ?

नन्ववयविनां द्व्यणुकादीनामनित्यत्वस्यावयवस्य परमाणोर्नित्यत्वस्य च शास्त्रान्तरसिद्धत्वात्कथमित्थमुच्यत इति चेत्, मैवम्—अणवत्रयवस्य निरवयवस्य परमाणोरस्माभिरनभ्युपगतत्वात् । नहि वयं परमात्मनोऽन्यत्किमपि निरवयवं नित्यं वा ब्रूमः । 'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्य'मिति श्रुतेः, 'तत्सत्यं, स आत्मा, अतोऽन्यदार्त'मिति श्रुतेश्चैकमेव ब्रह्म सत्यं नित्यं च; ततोऽन्यदनित्यं मिथ्यैवेति ह्यस्माकमभ्युपगमः । शास्त्रान्तरं तु नास्माकं प्रमाणमसच्छास्त्रत्वात्तस्य । वेदान्तशास्त्रमेकमेव हि प्रमाणं- यथावस्थितवस्तुतत्त्वप्रतिपादकत्वात् । अन्यानि सर्वाणि तु मिथ्याभूतवस्तुप्रतिपादकान्येवेत्यप्रमाणान्येव । श्रुतयो हि सर्वेषामास्तिकानां प्रमाणं, तत्सम्मतं च वेदान्तशास्त्रम् ।

किंच वेदान्ता एवास्माकं शास्त्रं ते चापौरुषेयत्वात्स्वतः प्रमाणं, तस्मात्तार्किकाद्यभिमतनिरवयवपरमाणुकल्पनाऽयुक्ता । न चाणोस्सावयवत्वात्तदवयवस्य निरवयवत्वेन भवितव्यमनवस्थादोषादन्यथेति वाच्यं, निरवयवस्य परमाणुद्वयस्य परमाणुसहस्रस्य वा संयोगान्न भवेदणूत्पत्तिः प्रथिमानुपपत्तेः । सावयवस्य हि वस्तुनोऽवयवानन्तरसंयोगात्प्रथिमा जायते । निरवयवस्य च संयोग एव तावन्न सम्भवति । अवयवसंश्लेषरूपत्वात्संयोगस्य । तस्मादीश्वरसङ्कल्पात्सावयवा एवाणवस्तावज्जाताः । तदणुद्वयादिसंयोगाद्द्व्यणुकाद्युत्पत्तिरिति । ते चानित्या अणवस्सावयवत्वात् । अवयविनोऽणोस्तु पृथङ्नावयवोपलम्भः । सति तदुपलम्भेऽणोरेवासिद्धेः । सावयवस्यैवोपलभ्यमानत्वं, न तु निरवयवस्येति कृत्वाऽप्यवयवोपलम्भासम्भवाच्च ।

ननु यद्यणुस्सावयवस्स्यात्तर्हि स्वघटकीभूतैः कैरवयवैरणोस्सावयवत्वमुच्यते ? नहि परमाणवोऽनभ्युपगता भवद्भिरितिचेत्, उच्यते—निरवयवे ब्रह्मणि मायया सावयवा अणवः कल्पिताः । अणुत्वात्मकं सावयवत्वं कल्पितमित्यर्थः । तस्मिंश्चाणुत्वावच्छिन्ने ब्रह्मणि तथा द्व्यणुकादयः कल्पिताः । एवंसत्यणूनामवयवा मायामया एवेति सिद्धम् ।

यवविभागात् । नैष दोषः- अविद्याकृतोपाधिपरिच्छिन्न एकदेशोंश इव कल्पितो यतः
दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशकत्वेन कल्पितः कथं संस
त्युत्क्रामतीति चेति, उच्यते—मनष्षष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने
कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥७॥

---

ननु सर्वमपि जगन्मायामयमेवेतिकृत्वा किं विशेषेणाणूनामवयवा मायामया इति कथनेने
चेत्, मैवम्—अवयवद्वयसंयुक्तो हि तव मतेऽणुः । स च संयोगात्प्राक् नैव सिध्यति । संयो
पूर्वकत्वात्संयुक्तस्य । अवयवद्वयं हि संयुक्तं सदणुमुत्पादयति । स चाणुद्वयं प्रति कारणभूतः, पर
माणुरवयव इति सम्मतं तव । अत एव हि निरवयवः परमाणुरित्यभ्युपगमः । स च परमा
कस्यावयवः ? न तावदणोरवयवः परमाणुद्वयसंयोगात्प्रागणोरभावात् । नापि परमाणोः- स्वस्य
स्वयमेवावयव इति वचनस्यायुक्तत्वात् । नापि ब्रह्मणः- तस्य सावयवत्वप्रसङ्गादनित्यत्वप्रसङ्गाच्च ।
तस्मान्मायाया एवावयवः परमाणुरिति सिद्धम् । एवं मायाया अवयवः परमाणुरित्यपि न निर्व
क्षमं· मायाया निरवयवत्वेन सावयवत्वेन वा निरूपयितुमशक्यत्वात् । अव्यक्ता हि मिथ्याभू
माया । तस्मात्परमाणुत्वेनाभिमता इमे अवयवा मायाकार्यत्वान्मायामयाः । अतीन्द्रियत्वान्मिथ्या
भूतत्वाच्च मायावन्निरवयवत्वेन सावयवत्वेन वा निरूपयितुमशक्याः । तस्मान्निरवयवपरमाणुकल्प
तार्किकादीनामयुक्तैव । परमाणवो हि न निरवयवाः, नापि सावयवाः, किं त्वनिर्वाच्या एवेति
यद्यप्येवं जगदपि सत्त्वासत्त्वाभ्यामनिर्वाच्यं, तथापि सावयवत्वेन निर्वाच्यमेवेति जगतः परमाणूनां च
भेदोऽवगन्तव्यः । तस्मात्सावयवस्याणोर्येऽवयवास्ते सावयवत्वेन निरवयवत्वेन वा निरूपयितुं न
शक्या इति निरवयवपरमाणुसिद्धिः, नापि नित्यपरमाणुसिद्धिः, किंतु निरवयव एक एव नित्य
आत्मेति कथं निरवयवस्य परमात्मनो ममैवांश इत्यंशः प्रोक्त इति पूर्वपक्षः ।

परिहरति तं—नैष दोष इति । निरवयवस्यांशवत्त्वकथनं न दोष इत्यर्थः । तत्र हेतु
माह—अविद्येति । यतो यस्मादविद्याकृतोपाधिपरिच्छिन्नः परमात्मन एकदेशोंश इव कल्पित
स्तस्मान्नैष दोष इत्यर्थः । अपरिच्छिन्नेऽप्यात्मनि माययाऽन्तःकरणाद्युपाधिपरिच्छेदः कल्पितः
तस्माच्च परिच्छेदादंशसिद्धिः । यथाऽपरिच्छिन्नस्याप्याकाशस्य घटाद्युपाधिपरिच्छेदः । तस्मा
घटाकाशाद्यंशसिद्धिस्तद्वदिति भावः । निरंशस्यापि परमात्मनो मायया जीवरूपोंशः कल्पितो न
वस्तुतोंशोऽस्तीति न कोऽपि दोषः । यदि मरीच्युदकेन मरुभूमेः पङ्किलत्वं स्यात्तर्हि मायाकल्पि
तांशेन परमात्मनस्सांशत्वं स्यादिति भावः । कल्पित इति । माययेति शेषः । या माया निरंशे
प्यंशं कल्पितवती सैवासंसारिण्यपि तस्मिन्नंशे जन्ममरणादिलक्षणं संसारं च कल्पितवतीत्याह—
इति मूलम् । संसरतीति । सुखदुःखादिकमनुभवतीत्यर्थः । उत्क्रामति म्रियते मरणलक्षणं संसार
मनुभवतीत्यर्थः । मनष्षष्ठानीत्यर्धश्लोकेन सह शरीरं यदवाप्नोतीत्युत्तरश्लोको जीवस्य जन्मसं

लक्षणसंसारप्रकारं दर्शयति । श्रोत्रमितिश्लोकस्तु सुखदुःखसम्भोगात्मकसंसारप्रकारं दर्शयतीति विवेकः ।

प्रकृतिस्स्वस्थानं; तच्च षोढा भिन्नं; तत्र मनसो हृत्पुण्डरीकं, श्रोत्रस्य कर्णशष्कुली, चक्षुषो नेत्रगोलकं, स्पर्शनस्य त्वक्, रसनस्य जिह्वाग्रं, घ्राणस्य नासिकाग्रमिति विवेकः ।

यत्तु रामानुजः—मद्विभूतिभूतो मदंश इति, यच्च वेदान्तदेशिकः—'पादोऽस्य विश्वा-भूतानि', 'तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्', 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनस्सर्वं एवात्मानो व्युच्चर'न्तीत्यादिश्रुतिप्रतीतांशत्वं विशिष्टे विशेषणांशत्वयेति, 'अंशो नानाव्यपदेशा'दित्यधिकरणे 'प्रकाशादिवत्तु नैवं पर' इति सूत्रे स्थापितम् । अतोऽनेकेष्वेव केनचिदुपाधिना एकतयाऽभिमतेषु कश्चिन्निरूप्यमाणोंश इति व्यपदिश्यते । एवमेव हि पटादिराश्यादिष्वपि । तच्च विशेषणविशेष्यभावेनावस्थितेष्वपि विशिष्टैक्ये विशेषणांश इत्यादिव्यपदेशेषु तुल्यम् । तस्मादत्रात्यन्तभिन्नयोर्जीवपरयोर्विभूतितद्वद्भावेन विशिष्टैक्याद्विशेषणभूतो जीवो निष्कृष्य व्यपदिश्यमानः प्रधानापेक्षतयांश इति व्यपदिश्यत इति भाव इति, तत्सर्वं तुच्छम्—तथाहि- यदि विशिष्टस्य विशेषणमंशस्स्यात्तर्हि धनिकस्य धनमंशः, दण्डिनः पुरुषस्य च दण्डोंशस्स्यात् । नैवं लोके प्रतीतिरस्ति । नहि यः कोऽपि रूपिकां दण्डं वा दृष्ट्वा पुरुषांशोऽयमिति प्रत्येति । एवं प्रकृतिपुरुषविशिष्टेश्वरस्य पुरुषवत्प्रकृतिरप्यंश एव स्याद्विशेषणत्वांशेऽभेदात् । न चेष्टापत्तिः- ममैवांशो जीवभूत इतिवन्ममैवांशः प्रकृतिभूत इति क्वाप्यप्रतिपादनात् । ईश्वरांशात्प्रधानादीश्वरांशस्य जीवस्य निष्कर्षणासम्भवाच्च । यद्धि विशेषणं धर्मभूतं तत्तु विशिष्टस्यांश इति वक्तुं शक्यते । यथा ज्ञानवान्पुरुषः । ज्ञानं हि पुरुषधर्मत्वात्पुरुषांशः । न चापृथक्सिद्धविशेषणमंश इत्युच्यत इति कृत्वा ईश्वरस्यापृथक्सिद्धविशेषणत्वादंशभूतो जीव इति वाच्यं, ईश्वरात्पृथक्सिद्धत्वाज्जीवस्य । कथमन्यथा जीवेश्वरयोरत्यन्तं भेदः स्यात् ? नहि घटादत्यन्तं भिन्नः पटो घटस्यापृथक्सिद्धविशेषणांशस्स्यात् । गुणिनो घटस्य तु गुणो रूपमपृथक्सिद्धविशेषणं स्यात् । द्रव्यात्पृथग्रूपस्यानुपलम्भात् । ईश्वरात्पृथग्जीवोऽहं संसारीत्युपलभमानो जीवः कथं तदपृथक्सिद्धविशेषणं स्यात् ? कथं वाऽनन्यशेषतयाऽहमिति स्फुरन् जीवो विशेष्यभूतः परमात्मनो विशेषणं स्यात् ?

नच भार्या भर्तुरिव जीव ईश्वरस्य शेषतया विशेषणमिति वाच्यं, यथा भार्या भर्तुश्शेषः तथा भर्ता भार्याया अपि शेषभूत एव । विनिगमनाभावाच्च नैकतरस्यापि शेषत्वं, किंत्वात्मशेषत्वमेवोभयोरपि । नहि भर्तृसुखार्थं भार्या भर्तारं सेवते, नापि भार्यासुखार्थं भर्ता भार्यां पोषयति, किंत्वात्मसुखार्थमेवेत्यात्मा शेष्येव, न कस्यापि शेषः । तस्मान्न परमात्मन आत्मा विशेषणभूतः । किंच दण्डी पुरुषो नीलमुत्पलमित्यादौ विशेषणविशेष्योभयांशप्रतीतिरस्ति । एवं प्रकृतिपुरुषवानीश्वर इत्यत्रापि तदुभयांशप्रतीतिरावश्यकी । तत्र प्रकृतिपुरुषौ विशेषणांशः । कः पुनर्विशेष्यांशः ? न त्वीश्वरः- तस्य

प्रकृतिपुरुषविशिष्टस्वरूपत्वात् । यदि तु प्रकृतिपुरुषविलक्षणः कश्चन विशेष्यांश ईश्वराख्योऽस्ति तर्हि तत्पृथक्सिद्धावेव प्रकृतिपुरुषौ । स चेश्वरांशो वक्तव्यः; किं सच्चिदानन्दरूप उतान्यः ? आद्ये- जीवोऽपि तादृश एव । 'निरञ्जनः परमं साम्यमुपै'तीति हि त्वयापि जीवेश्वरयोः परमं सादृश्यमभ्युपेतं ज्ञानैकाकारत्वादिरूपम् । तथा च परस्परसदृशयोर्जीवेश्वरयोः कथं विशेषणविशेष्यभावः ? द्वितीये- सच्चिदानन्दरूपादन्यो जडस्वरूप एव स्यादिति कथं तथापि प्रकृतीश्वरयोर्विशेषणविशेष्यभावः ? विशेषणविशेष्ययोर्हि वैलक्षण्येन भाव्यं, तच्च न दृश्यते- प्रकृतिवैलक्षण्ये सति पुरुषसालक्षण्यापत्तेः । उभयवैलक्षण्यस्य च दुर्वचत्वात् ।

तस्मादीश्वरशक्तित्वेनेश्वरवत्सच्चिदानन्दस्वरूपाभावेन च प्रकृतेरीश्वरापृथक्सिद्धविशेषणत्वमस्तु अग्नेः पृथगग्निशक्तेरिवेश्वरात्पृथगीश्वरशक्तेर्मायाया असिद्धत्वादीश्वरस्वभावत्वेनेश्वरविशेषणत्वाच्च; पुरुषस्तु नेश्वरशक्तिर्नाप्यसच्चिदानन्दस्वरूप इति कथं तस्येश्वराऽपृथक्सिद्धविशेषणत्वं भवेत् ? यदि जीव ईश्वराद्भिन्नस्तर्हि तत्पृथक्सिद्ध एव । यदि त्वभिन्नस्तर्हीश्वरस्याविशेषणभूत एव । यद्धि पृथक्त्वेनापृथक्त्वेन वा दुर्निरूपं तद्धि तदपृथक्सिद्धविशेषणम् । यथा अग्निशक्तिरग्नेः पृथक्त्वेनापृथक्त्वेन वा दुर्निरूपेत्यग्नेरग्निशक्तिरपृथक्सिद्धविशेषणम् । यथा वा नीलो गुण उत्पलात्पृथक्त्वेनापृथक्त्वेन वा दुर्निरूप इति नील उत्पलस्यापृथक्सिद्धविशेषणम् । एवमीश्वरशक्तिर्माया ईश्वरात्पृथक्त्वेनापृथक्त्वेन वा दुर्निरूपेति भवतु सा ईश्वरस्यापृथक्सिद्धविशेषणम् । पुरुषस्तु नैवं- ईश्वरात्पृथगज्ञस्संसारीति जीवस्योपलम्भात् । तस्मात्त्वदुक्तविधया प्रकृतेरेवेश्वरांशत्वं प्राप्तं, नतु पुरुषस्येत्यहो! मूलच्छेदी तव पाण्डित्यप्रकर्षः !

नचेश्वरस्याचिदिव चिदपि प्रकृतिरेवेति प्रकृतिवत्पुरुषोऽपीश्वरशक्तिरेवेति वाच्यं, ईश्वरस्य चिद्रूपत्वाभावादचित्प्रकृतिरीश्वरशक्तिस्स्यात् । चिद्रूपत्वसत्त्वात्तु कथं चित्प्रकृतेः पुरुषस्येश्वरशक्तित्वम् नहि चितश्चिदेव शक्तिरिति वक्तुमुचितं- नहि स्वस्य स्वयमेव शक्तिस्स्यात् । नचैवं चिदचिद्विलक्षण ईश्वरश्चिद्रूपो नेति वाच्यं, 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिभिरीश्वरस्य चिद्रूपत्वप्रतिपादनात् । नहि दृग्दृश्यांभ्यामन्यद्यत्किञ्चिदपि वस्त्वस्ति लोके । यदीश्वर इति त्वयोच्येत । नच ज्ञातृज्ञानज्ञेयाख्यानि त्रीणि वस्तूनि सन्ति, तत्र ज्ञाता ईश्वरः, ज्ञानं जीवः, ज्ञेयमव्यक्तमिति वाच्यं, जीवो ज्ञातेति तवाभ्युपगमात् । ज्ञानस्वरूप ईश्वर इति च । नचेदानीं सोऽभ्युपगमः परित्यज्यत इति वाच्यं, श्रुत्यादिविरोधात् । नहि ज्ञानस्वरूपत्वाभावं ज्ञातृत्वाभावं वा श्रुत्यादयो ब्रुवन्ति जीवस्येश्वरस्य वा । तस्माद्ज्ञातुर्जीवस्येश्वरस्य वा ज्ञानमेव स्वरूपमिति दृग्दृश्याख्यं पदार्थद्वयमेवेति दृश एव दृग्विशेषणमिति वादोऽयुक्तः । नच दृग्रूपत्वेऽपि जीवेश्वरयोर्धर्मभूतज्ञानसुखादिषु तारतम्यसत्त्वाद्वैलक्षण्यमस्त्येवेति वाच्यं, निर्विशेषज्ञाने विशेषाणादकधर्मयोगाद्यत्किञ्चिद्धर्मजातमासञ्जयसि त्वं तत्र । तत्सर्वं मायाकल्पितमेवेत्यभ्युपगमाच्च । तस्मान्निर्विशेषचिन्मात्र एव जीव ईश्वरश्चेति कथं तयोरन्योन्यविशेषण-

विशेष्यभावसिद्धिः ? अथवा भवत्वल्पज्ञो जीवस्सर्वज्ञ ईश्वरश्च । तथापि न तवेष्टसिद्धिः- ज्ञातृत्वस्य (ज्ञानस्य) एवोभयोराकारत्वाद्ज्ञानैकाकारौ हि जीवेश्वरौ श्रुत्यनुभवादिभ्यः । ततश्च धर्मतो वैलक्षण्ये सत्यपि स्वरूपतो वैलक्षण्याभावादेकस्वरूपयोर्जीवेश्वरयोः कथं विशेषणविशेष्यभावः ? न ह्यल्पो घटाकाशो महाकाशस्य विशेषणं भवति । नाप्यल्पं करतलगृहीतं जलं महतो गङ्गाजलस्य विशेषणं भवति । तुष्यतु दुर्जन इति न्यायेनैकस्वरूपयोरेव घटाकाशमहाकाशयोरल्पत्वमहत्त्वाभ्यां विशेषणविशेष्यभावाङ्गीकारेऽपि कथमस्मदुक्तांशासिद्धिः ? स्वरूपैक्ये सति महतो हि वस्तुनोऽल्पं वस्त्वंश इत्यस्माभिरुच्यते । तदेव विशेषणमिति त्वयोच्यते । एवं च विशेषणांशशब्दयोरेव भेदः, न त्वर्थभेद इति कृत्वा कथमुच्यते विशेषणांश एव न स्वरूपांश इति ।

नच निरंशस्येश्वरस्य स्वरूपांशासम्भवाद्विशेषणांश इत्युक्तमिति वाच्यं, निरंशस्य स्वरूपांशवन्निर्विशेषस्य विशेषणांशोऽपि न सम्भवत्येवेति विशेषणांश इतिवदस्यापि स्वरूपांश इत्येव फलितार्थसिद्धेश्च दर्शितत्वात् । नचांशी ईश्वरः, दण्डी पुरुष इत्यत्र पुरुष इव विशेष्यमंशो जीवस्तु दण्डवद्विशेषणमिति विशेषणांश एव जीव ईश्वरस्य न स्वरूपांश इति वाच्यं, दण्डव्यतिरिक्तपुरुषवदंशव्यतिरिक्तांशीश्वरानुपलम्भात् । यद्युपलभ्यते तर्हि स नांश्येव । यथाऽवयवी देहः करचरणाद्यवयवातिरेकेण न दृश्यते । यदि दृश्यते तर्हि देहोऽपि निरवयव एव स्यात् । ततश्च करचरणादयोऽवयवा देहस्य स्वरूपांशभूता एव, नतु विशेषणांशभूताः । तद्वदीश्वरांशा जीवा अप्यंशिन ईश्वरस्य स्वरूपांशा एव, नतु विशेषणांशा इति ।

तस्मादंशांशिभावो विशेषणविशेष्यभावादतिरिक्त एव । नचेश्वरात्पृथग्जीवस्योपलम्भाज्जीवो नेश्वरस्यांशः, किंतु दण्डः पुरुषस्येव विशेषणभूत एव । अत एव निरंशस्येश्वरस्य कथमंशित्वमिति चोद्यमपि नात्र प्रवर्तत इति वाच्यम् । महाकाशात्पृथग्घटाकाशस्येवेश्वरात्पृथग्जीवस्योपलम्भोऽविद्योपाधिकृत एव, नतु तात्त्विक इत्यसकृदुक्तत्वात् । तथा निरंशस्यांशित्वं चाविद्योपाधिकृतमेव, न तात्त्विकम् । तस्मान्निरंशस्यापीश्वरस्य चैतन्यरूपस्य चैतन्यरूपो जीवो भवति स्वरूपांश एवाविद्योपाधिवशाद्घटाद्युपाधिवशाद्घटाद्याकाशो यथा महाकाशस्य स्वरूपांश इत्यनवद्यम् । पादोऽस्येति श्रुतेस्तु निर्विशेषे आत्मन्येकदेशे सर्वं चराचरं जगद्वर्तते माययेति ब्रूते । ननु जीवा ईश्वरस्य अपृथक्सिद्धविशेषणानीति । तन्न तदर्थाप्रतीतेः । नहि श्रुतौ क्वापि जीव ईश्वरस्यापृथक्सिद्धविशेषणमिति दृश्यते । तस्मादियमश्रौतकल्पनैव । तस्यावयवभूतैरित्यत्र तु अवयवैरिति स्फुटमुक्तमेव जीवस्येश्वरांशत्वम् । अंशो ह्यवयवः । यथा देहस्यैवांशः करादिरवयवः । न ह्यवयवशब्दोऽपृथक्सिद्धविशेषणार्थवाची, येन तवेष्टसिद्धिः । अग्नेरिति वाक्यमपि महतोऽग्नेरल्पाः स्फुलिङ्गा यथा अंशभूतास्तथैव परमात्मनोंशा जीवा इति प्रतिपादयति । उपाधिभेदात्त्वात्मान इति बहुवचननिर्देशः । नहि निरुपाधिक आत्मा अंशो भवितुमर्हति । उपाधिपरिच्छिन्नस्यैव चैतन्यस्यांशत्वात् । एव'मंशो नानाव्यपदेशा'दित्यधिकरणेऽपि शङ्कराचार्यैरंशांशिभाव एव जीवेश्वरयोर्मायामयस्साधित इति न सूत्रसामञ्जस्यं तवास्ति ।

कस्मिन्काले ?—

> शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
> गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥

शरीरमिति । यच्चापि यदा चापि उत्क्रामतीश्वरो देहादिसङ्घातस्वामी जीवः, ...
'कर्ष'तीति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन सम्बध्यते । यदा च पूर्वस्मा...
च्छरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनष्षष्ठानीन्द्रियाणि संयाति सम्यग्याति गच्छति...
किमिवेत्याह—वायुः पवनो गन्धानिवाशयात्पुष्पादेः ॥८॥

---

यदप्युक्तं नीलपीतरक्ताद्यनेकपटेषु पटत्वरूप एक उपाधिरंश इत्युच्यत इति, तच्च न ह...
भावमर्हति- पटानेकत्ववदात्मानेकत्वस्यासम्प्रतिपन्नत्वात् । पटा हि नीलपीतादिगुणवशादनेके भव...
कथं निर्गुणात्मानेकत्वम् ? 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिश्रुतयो हि निर्गुणमात्मानं ब्रुव...
नच नीलपीतादिगुणवत्त्वेन जीवो येन केनाप्यनुभूयते । नच सुखदुःखाद्यनुभववैचित्र्यादात्मानेकत्व...
वाच्यं, सुखदुःखादिवैचित्र्यस्यान्तःकरणानेकत्वप्रयोजकत्वात् । अन्तःकरणधर्माः खलु सुखदुःखाद...
सुखादीनामात्मधर्मत्वे तु मूर्छादिष्वपि तदुपलम्भः स्यात् । प्रकृतगीताशास्त्रविरोधश्च । इच्छा...
सुखादेः क्षेत्रत्वस्य प्रतिपादनादस्मिन् । तस्मादुपाधित एवात्मानेकत्वमाकाशानेकत्ववत्र तु...
एकत्वमात्मन इति बोध्यम् ॥७॥

शरीरमिति । ईश्वरो यच्चाप्युत्क्रामति तदा प्रकृतिस्थानि मनष्षष्ठानीन्द्रियाणि कर्ष...
ईश्वरो यच्छरीरमवाप्नोति तदा वायुराशयाद्गन्धानिवैतानि गृहीत्वा संयाति । ननु लिङ्गशरीरोपाधि...
च्छिन्नस्य स्थूलशरीरादुत्क्रममाणजीवस्य कथमीश्वरत्वमपरिच्छिन्नो हीश्वरोऽत आह—देहादी...
वस्तुतो निरुपाधिकत्वेनापरिच्छिन्नेश्वरोऽपि जीवोऽविद्यया सोपाधिकत्वेन परिच्छिन्नस्सन् देहादिस...
स्वामित्वरूपमीश्वरत्वं भजत इत्यर्थः ।

यद्वा कस्यायमीश्वरः क्षेत्रज्ञोऽत आह—देहादीति । क्षेत्रस्येश्वर इत्यर्थः । नहि क्षेत्र...
ज्ञातिरिक्तं किञ्चिदपि वस्त्वस्ति, यस्यायं क्षेत्रज्ञो भवेदनीश्वरः । तस्मात्सर्वस्यापीश्वर एव जीव इ...
जीवेश्वरभेदावकाशः, नापि जीवगतेश्वरत्वसङ्कोचः । कर्षतीति पूर्वेणान्वय इति शेषः । ...
पादो गृहीत्वैतानि संयातीत्ययमित्यर्थः । प्राथम्येन शरीरं यदवाप्नोतीत्यनेनेत्यर्थः । प्रथम...
प्राथम्यमिति चतुर्वेदादित्वात्स्वार्थे ष्यञ् । सम्बध्यतेऽन्वितो भवति । तमेवान्वयं दर्शयति—...
चेति । यदित्यस्य यदेत्यर्थः । लिङ्गशरीरावयवभूतानि मनष्षष्ठानीन्द्रियाणीति बोध्यम् । वस्तुतोऽ...
च्छिन्नेश्वरस्यापि जीवस्य सूक्ष्मशरीरोपाधिवशात्प्रकृतशरीरादुत्क्रमणं शरीरान्तरप्राप्तिश्च भवतीति परमा...

यच्छरीरमवाप्नोति यस्माच्छरीरादुत्क्रामतीति रामानुजः, तन्मन्दम्—यच्छरीरमवाप्...
तच्छरीरं संयातीतिवचनस्य पुनरुक्तिदोषग्रस्तत्वात् । यच्चेत्यस्य यस्माच्चेत्यर्थकल्पनस्याप्ययुक्तत्वाच्च । ...
प्रथमान्ताद्द्वितीयान्ताद्वा पञ्चम्यन्तार्थलाभः । श्रीशङ्करमते तु यदित्यव्ययमिति न दोषः ॥८॥

कानि पुनस्तानीत्याह—

श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥

श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं जिह्वा घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठाय देहस्थो विषयान् शब्दादीनुपसेवते ॥९॥

एवं देहगतं देहात्—

उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥

उत्क्रामन्तमिति । उत्क्रामन्तं देहं पूर्वोपात्तं परित्यजन्तं स्थितं देहे वापि तिष्ठन्तं भुंजानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवम्भूतमप्येनमत्यन्तदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तया अनेकधा मूढा नानुपश्यन्ति । अहो ! कष्टं वर्तते इत्यनुक्रोशति च भगवान् । ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्ते एनं पश्यन्ति, ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥१०॥

---

श्रोत्रमिति । अयं श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च मनश्चाधिष्ठाय विषयानुपसेवते । इन्द्रियाणि प्रत्येकमधिष्ठाय । तत्तत्प्रत्येकेन्द्रियेण सह मनश्चाधिष्ठाय देहस्थस्सन्नपि जीवश्शब्दादिबाह्यविषयाननुभवतीत्याह—प्रत्येकमिति । युगपत्सर्वैरिन्द्रियैश्शब्दादिसर्वविषयानुभवासम्भवात्प्रत्येकमित्युक्तम् । मनस्यन्यत्र गते सति शब्दादिविषयग्रहणासम्भवादिन्द्रियेण सह मनश्चाधिष्ठायेत्युक्तम् । विनापीन्द्रियसाहित्यं मनसा सुखादेरनुभवान्मनश्चाधिष्ठायेत्युक्तम् । जीवस्य मनष्षष्ठेन्द्रियाधिष्ठानं नाम मनइन्द्रियतद्धर्माणामात्मन्यध्यास एव । तथा च मनोधर्माध्यासात्सुख्यहं दुःख्यहमिति चक्षुरादीन्द्रियधर्माध्यासात्पश्यामि शृणोमि स्पृशामि जिघ्रामि स्वादयामि चेति प्रत्येत्यविद्यावान् जीवः । एवमज्ञानकृतानात्मतद्धर्माध्यासवशाज्जीवस्य सुखदुःखादिसम्भोगलक्षणस्संसारस्सम्भवतीत्यभिप्रायः ।

अधिष्ठाय स्वस्वविषयवृत्त्यनुगुणानि कृत्वेति रामानुजः, तन्मन्दम्—चक्षुषो रूपग्रहणे पक्ष्मोन्मीलनरूपपुरुषप्रयत्नसापेक्षत्वेऽपि त्वगादीनां स्पर्शादिग्रहणे तन्नैरपेक्ष्यात् ॥९॥

उत्क्रामन्तमिति । गुणैस्सत्त्वादिगुणकार्यैरित्यर्थः । संयुक्तमिति । अन्तःकरणतादात्म्याध्यासादिति भावः । एनं जीवमत्यन्तं दर्शनगोचरं ज्ञानविषयं प्राप्तं ज्ञानविषयभूतमित्यर्थः । सुज्ञेयमिति यावत् । दृष्टविषयभोगश्शब्दादिविषयाणामनुभवः, अदृष्टविषयभोगस्स्वर्गादिविषयकाम इति विवेकः । न ह्यदृष्टानां विषयाणामनुभवस्सम्भवतीहैव । अथ वाऽस्मिन् जन्मनि दृष्टविषयभोगः परेत्य देवादिलोके उद्भूय तत्रादृष्टविषयभोग इति बोध्यम् । दृष्टाश्चादृष्टाश्च विषया दृष्टादृष्टविषयास्तेषां भोगानुभवस्तद्बलेनाकृष्टं चेतो येषां तेषां भावस्तत्ता, तया हेतुना । अनेकधा विमूढा विमोहं प्राप्ताः । आत्मानात्मविवेकशून्या इत्यर्थः । नानुपश्यन्ति न जानन्ति ।

केचित्तु—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥

यतन्त इति । यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमा

---

अयं भावः—यो देहादुत्क्रामति स न देहो यथा गृहान्निष्क्रामन् पुरुषो न गृहं यश्च देहे तिष्ठति सोऽपि न देहः । यथा गृहे तिष्ठन् पुरुषो न गृहम् । एवमनात्मनः स्थूलदे जीवस्य च विवेके सुकरे सति मूढा इमं विवेकमकृत्वा स्थूलोऽहं कृशोऽहं मनुष्योऽहमिति व्य हरन्ति । तथा यश्चक्षुरादिभी रूपादीन्विषयाननुभवति मनसा च सुखादीन्स हि चक्षुरादिभ्यो भि एव । करणाद्भिन्नत्वात्कर्तुः । लवित्रादिवच्छेदक इति सूक्ष्मशरीरात्पृथग्विविच्य ग्रहीतुं शक्यमपि मूढा न जानन्ति । किंतु सूक्ष्मशरीरस्य जीवस्य च विवेकमकृत्वा काणोऽहं बधिरोऽहं सुख्यहं दुःखि मिति व्यवहरन्ति । तथाऽहमज्ञ इति योऽज्ञानमनुभवति, नाहं किंचिदवेदिषमिति योऽनुसन्ध ह्यज्ञानाद्भिन्नः । नहि घटमनुभवन् पुरुषो घटो दृष्टः । अनुभूताद्ध्यनुभविता भिन्न इति कारणशरी त्पृथग्विविच्य ग्रहीतुं शक्यमपि जीवं मूढा न जानन्ति । किंतु कारणशरीरस्य जीवस्यास्य चावि कृत्वा, अहमज्ञ इति व्यवहरन्ति । तथा यस्य येन सहाध्यासिकस्सम्बन्धस्स वस्तुतस्तेन रहित एव यथा गगनस्य नीलेन सहाध्यासिकस्सम्बन्ध इति गगनं वस्तुतो नीलगुणरहितमेव । एवं सुखादि गुणैर्जीवस्याध्यासिकस्सम्बन्ध इति जीवो वस्तुतस्सुखादिरहित एव । एवं निर्गुणत्वेन सुग्रहमपि मूढा न जानन्ति, किंतु सगुणमेव प्रतिपद्य सुख्यहं दुःख्यहं मूढोऽहमिति व्यवहरन्ति । यद्वा यो ये संयुक्तस्स तस्य न स्वाभाविको धर्मः । संयोगस्य वियोगपूर्वकत्वाद्वियोगावसानत्वाच्च । स्वाभावि वियोगानर्हत्वाच्च । यथा पटेन संयुक्तस्य घटस्य न पटस्स्वाभाविको धर्मः । घटपटयोर्वियोगसम्भवा अग्नेरौष्ण्यं तु स्वाभाविको धर्मः । न ह्यग्न्यौष्ण्ययोर्वियोगः । न ह्यग्निरौष्ण्येन संयुक्त इति व्यवह एवं सुखादिगुणसंयुक्तस्य जीवस्य सुखादिगुणा न स्वाभाविकाः । निर्गुणत्वमेव तस्य स्वाभाविकं, जीवेऽध्यस्ता गुणा अन्यदीया एवेति मूढा न जानन्ति ।

एवमविदुषां मूढानां संसारदुःखमवर्जनीयमिति भगवत एतेष्वनुक्रोशस्सूच्यत इत्याह— इति । कष्टं दुःखं वर्तते । मूढानामिति शेषः । अनुक्रोशो दया । प्रमाणं वेदान्तशास्त्रं तज्ज यदूज्ञानमात्मानात्मविवेकरूपं तदेव चक्षुर्येषां ते तथोक्ता ज्ञानचक्षुषः । फलितार्थमाह—विविक्त इति । विविक्तं यथा तथा पश्यन्तीति विविक्तदृशः । विविक्तमात्मानं पश्यन्तीति विविक्त इति वा । आत्मानात्मविवेकसम्पन्ना इत्यर्थः । ते एनमात्मानं पश्यन्ति । अनात्मभ्यो देहेन्द्रिय करणेभ्यो विवेकेन जानन्तीत्यर्थः ॥१०॥

यतन्त इति । यतन्तो योगिनश्चात्मन्यवस्थितमेनं पश्यन्ति । अकृतात्मानोऽचेतसस्तु यत

पश्यन्ति- 'अयमहमस्मी'त्युपलभन्ते आत्मनि स्वस्यां बुद्धाववस्थितम् । यतन्तोपि शास्त्रादि-प्रमाणैरकृतात्मानोऽसंस्कृतात्मानः तपसा इन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पाः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥११॥

यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते, यत्प्राप्य मुमुक्षवः पुनस्संसाराभिमुखा न निवर्तन्ते, यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुः चतुर्भिश्श्लोकैर्विभूतिसंक्षेपमाह भगवान्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥

यदिति । यदादित्यगतं आदित्याश्रयम् । किं तत् ? तेजो दीप्तिः प्रकाशो जग-

---

प्येनं न पश्यन्ति । केचिदित्रति । ज्ञानचक्षुषः पश्यन्तीति पूर्वमुक्तत्वात्तेभ्योऽन्ये योगिन इमेऽपि पश्यन्तीत्युच्यत इत्यर्थः । उत्तमानां श्रवणादिवशादेवात्मसाक्षात्कारः, मन्दबुद्धीनां तु योगवशादात्मसाक्षात्कार इत्याह—यतन्तो योगिन इति । चशब्दो ज्ञानिसमुच्चयार्थः । योगोऽत्र न कर्मयोगः--तस्यात्मसाक्षात्कारं प्रति व्यवहितसाधनत्वात्किन्तु ध्यानयोग एवेत्याह—समाहितचित्ता इति । ध्यानादिना येषां चित्तमात्मप्रवणं जातं त इत्यर्थः । चित्तसमाधानं चाभ्याससाध्यमित्यभिप्रेत्याह—यतन्त इति । प्रयत्नोऽभ्यासः । कथं पश्यन्तीत्यत आह—अयमिति । उपलभन्ते साक्षात्कुर्वन्ति । जानन्तीति यावत् । आत्मानमिति भावः । स्वस्यामिति । स्वकीयायामित्यर्थः । यदवच्छिन्नोऽयमात्मा तद्बुद्धावित्यर्थः । कैरकृतात्मत्वमत आह—शास्त्रादिप्रमाणैरिति । शास्त्राचार्योपदेशशमदमादिभिर्येषां मनस्संस्कृतं न भवति तेऽकृतात्मानः । अत एवाचेतसः- आत्मानात्मविवेकविधुराः, ते यतन्तोऽपि । केन साधनेन यतनमत आह—तपसेति । कीदृशं तपोऽत आह—इन्द्रियजयेनेति । इन्द्रियाणां जयो विषयेष्वप्रवृत्तिर्यस्माद्भवति तदिन्द्रियजयं तेन तपसा । तपसा इन्द्रियजयेनेति साधनद्वयं वा । तपः कृच्छ्रचान्द्रायणादिकं, इन्द्रियाणि विषयेभ्यस्समाकृष्य बलादात्मवश्यानि कुर्वन्नप्ययमविवेकी शास्त्रादिसंस्काररा हित्येन चित्तशुद्ध्यभावाद्दुश्चरितान्नोपरमते । नाप्यस्य मनसि कामक्रोधादिदर्पश्शाम्यतीत्यभिप्रेत्याह—दुश्चरितादिति । दुष्टं च तच्चरितं प्रवृत्तिश्च दुश्चरितं तस्मात् । अनुपरता मनसा स्वभावानुगुणं दुष्टमेव ध्यायन्तीत्यर्थः । तत्र हेतुमाह—अशान्तदर्पा इति । अशान्तो दर्पः कामक्रोधाद्युद्भवो वेगो येषां ते तथोक्ताः । एवंविधाः प्रयत्नं कुर्वन्तोऽप्येनं न पश्यन्ति । किं पुनः प्रयत्नमकुर्वन्त इत्यपिशब्दार्थः । तस्मान्मुमुक्षुर्यथाधिकारं श्रवणादौ योगे वा प्रवर्ततात्मसाक्षात्कारार्थमिति सिद्धम् । अत्र मत्प्रपत्तिपूर्वकं यतन्त इति रामानुजः, तत्तु तदभिप्रायेण दुष्टमेव—अहमीश्वरादन्यः, मामीश्वरो रक्षत्वित्यभिसन्धेः प्रपत्तित्वमिति तदभ्युपगमात् । एतदभिप्रायेण मत्प्रपत्तिपूर्वकमिति मूलाद्बहिःकल्पनस्यान्याय्यत्वाच्च ॥११॥

यदिति । आकाशस्य घटाकाशादय इव यस्य पदस्य जीवा अंशा इत्यन्वयः । के ते जीवा

द्भासयते प्रकाशयत्यखिलं समस्तं; यच्चन्द्रमसि शशभृति तेजोऽवभासकं वर्तते, यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिः, यच्चन्द्रमसि यच्चाग्नौ वर्तते तत्तेजो विद्धि मामकं मदीयं विष्णोस्तज्ज्योतिः ।

ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं- 'यदादित्यगत'मित्यादि ? नैष दोषः, सत्त्वाधिक्यादाविस्तरत्वोपपत्तेः । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरं; अतस्तत्रैवाविस्तरं ज्योतिरिति तद्विशिष्यते, ननु तत्रैव

---

अत आह—उपाधिभेदमनुविधीयमाना इति । अन्तःकरणाद्युपाधिभेदमनुसृत्य भिन्ना इव प्रतीयमाना इत्यर्थः । मायया भिन्ना इव क्रियमाणा इति वा । सर्वस्यात्मा सर्वात्मा तत्त्वं सर्वात्मत्वम्, सर्वव्यवहारास्पदत्वं सूर्यचन्द्रादिसर्वजगदधिष्ठानत्वमित्यर्थः । भासनधारणपचनादिसर्वव्यवहाराधिष्ठानत्वमिति वा । तत्पदमेव सर्वस्यात्मेति तस्मिन्नेव पदे सर्वं जगत्सर्वो व्यवहारश्च कल्पित इति विष्णुरित्यर्थः । आदित्यगतं यत्तेजोऽखिलं जगद्भासयते, चन्द्रमसि वर्तमानं यत्तेजोऽखिलं जगद्भासयते, अग्नौ वर्तमानं यत्तेजोऽखिलं जगद्भासयते तत्तेजो मामकं विद्धि । यद्वाऽऽदित्यगतं यत्तेजोऽखिलं जगद्भासयते, चन्द्रमसि यत्तेजो वर्तते, अग्नौ च यत्तेजो वर्तते तत्तेजो मामकं विद्धि । सूर्यचन्द्राग्निषु यस्तेजोरूपः प्रधानांशस्स मदीय एवेत्यर्थः । मन्मायामयत्वात्तस्येति भावः । ममैव मायाशक्तिविशेषः सूर्यादिषु तेजोरूपेण स्थित्वा सर्वं जगदवभासयतीति परमार्थः ।

यद्वाऽहमेव मायया सूर्यादिषु तेजोरूपेण वर्तमानस्सन् सर्वं जगदवभासयामीति । सर्वथापि सूर्यादिगता या जगदवभासनशक्तिस्सा मदीयैव, नतु सूर्यादिसम्बन्धिनी । सर्वत्रापि शक्तेर्मत्स्वभावत्वान्ममैव शक्तिमदीश्वरत्वाच्च । ईश्वरात्सकाशात्सूर्यादीनां पृथक्करणे सति तेषां निस्तत्त्वत्वापत्तेश्च । नहि सूर्योऽस्ति सूर्यो भातीत्यत्र सूर्यात्सकाशादस्तिभात्योः पृथक्करणे सूर्यशब्दवाच्यं किमप्यवशिष्यते । तस्मात्सूर्यावच्छिन्नचैतन्यनिष्ठैव जगदवभासनशक्तिश्शक्तेरीश्वरोपाधित्वात् । एतेन यत्र क्वापि वस्तुनि यत्कियती शक्तिरुपलभ्यते सा सर्वापि तत्तद्वस्त्ववच्छिन्नचैतन्यनिष्ठैवेति सिद्धम् ।

ननु नीरूपस्येश्वरस्य कथं तेजोवत्त्वम् ? तेजो हि सरूपमतः, कथमुक्तं मदीयं तेज इति शङ्कायां सत्यपि समाधाने मायया तेजोवत्त्वमित्येवमादिरूपे निश्शङ्कमर्थं दिदर्शयिषुराह—अथ वेति विष्णोस्तज्ज्योतिरिति । परमात्मनोंशभूतं चैतन्यमित्यर्थ. । आविस्तरेति । अतिशयेनाविर्भवतीत्याविस्तरं प्रकटतरमित्यर्थः । सत्त्वं गुणः । अत्यन्तं प्रकाशत इत्यत्यन्तप्रकाशम् । तस्यैवार्थमाह—अत्यन्तभास्वरमिति । अत्यन्तप्रकाशनशीलमित्यर्थः । सत्त्वस्य प्रकाशात्मकत्वात् । अत इति आदित्यादिषु सत्त्वाधिक्यादित्यर्थः । आदित्यादिषु सत्त्वस्यात्यन्तभास्वरत्वादिति वा । सर्वत्र भासकस्यापि सत्त्वस्यादित्यादिष्वत्यन्तभास्वरत्वं रजस्तमसोरत्यल्पत्वप्रयुक्तमित्यवगन्तव्यम् । श्रीकृष्णाद्यवतारेषु

तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति; तद्वत् ॥ ४२॥

---

सूर्यादिभ्योऽपि सत्त्वाधिक्यमिति बोध्यम् । तत्रैवेति । सूर्यादिष्वेवेत्यर्थः । तज्ज्योतिरित्यर्थः । विशिष्यते उत्कृष्टतया प्रतिपाद्यत इत्यर्थः । आदित्यादिषु चैतन्यस्य सत्त्वाधिक्यप्रयुक्तं प्रकटतरत्वमेव, नतु स्वरूपत आधिक्यमित्याह—न त्विति । तत्रैव सूर्यादिष्वेवेत्यर्थः । न तु स्थावरादिष्वित्येवकारार्थः । चेतनाचेतनेषु सर्वेष्वपि चैतन्यमेकरूपमेव, निर्विशेषचैतन्ये न्यूनाधिकभावायोगात् । किंतु यत्र चेतनेषु त्रिगुणात्मिका बुद्धिरस्ति, तत्र चैतन्यं स्फुटं भाति । तन्मध्येपि यत्रादित्यादिषु सत्त्वगुणप्रचुरा बुद्धिस्तत्र चैतन्यं स्फुटतरमवभासते । यत्र च श्रीकृष्णादिषु शुद्धसत्त्वप्रधाना बुद्धिरस्ति, तत्र चैतन्यं स्फुटतममवभासते । तथा च मनुष्याद्यपेक्षया सूर्यादिगतचैतन्यस्य स्फुटतरत्वाद्यदादित्यगतं तेज इत्याद्युक्तमित्यर्थः ।

उक्तार्थे दृष्टान्तमाह—**यथा हीत्यादिना** । मुखसंस्थाने मुखाकारे । स्वच्छे आदर्शे स्वच्छतरे मणौ च मुखं तारतम्येनाविर्भवति, प्रतिफलतीति यावत् । काष्ठादर्शदर्पणेषु यथा मुखं क्रमेण न प्रतिफलति, प्रतिफलत्यतिशयेन प्रतिफलति तथा मृत्पाषाणादिषु, स्थावरजङ्गमादिषु आदित्यादिषु च चैतन्यं न प्रतिफलति, प्रतिफलत्यतिशयेन प्रतिफलति चेत्यर्थः । नचैवमचेतनेषु, चैतन्यप्रतिफलनाभावात्काष्ठेषु मुखमिव तत्र चैतन्यं नास्तीति वाच्यं, चैतन्यप्रतिलनस्यैवाभावः, नतु चैतन्यस्येति । नहि मुखमिव चैतन्यं परिच्छिन्नं, येन काष्ठादौ मुखमिव चैतन्यं मृदादौ न स्यात् । अपरिच्छिन्नं परिपूर्णं हि चैतन्यम् । नच प्रतिफलनात्प्रागपि चेतनेषु चैतन्यसत्त्वे कथं पुनःप्रतिफलनमिति वाच्यं, मायया प्रतिफलनसम्भवात् । यथा नीरूपस्यापि चैतन्यस्य प्रतिफलनसम्भवः । तस्मात्सूर्यादिदेवेषु सत्त्वाधिक्याच्चैतन्यस्य स्फुटतरमवभासः । चैतन्यस्यावभासनं नाम प्रतिफलनमेव । एवं स्फुटतरचैतन्यावभासवत्त्वादेव सूर्यादिदेवानां सर्वजगदवभासकत्वरूपं सर्वज्ञत्वं च शास्त्रोक्तं सङ्गच्छते । परमेश्वरापेक्षया सूर्यादीनामल्पज्ञत्वेऽप्यस्मदाद्यपेक्षया सर्वज्ञा हि ते । कथमन्यथा सूर्याद्युपास्तिश्श्रुतिभिरुच्येत ? इति ।

यद्वा आदित्यादिदेवानामन्तःकरणेषु प्रतिफलितं यत्तेजश्चैतन्यं वर्तते तन्मामकमेव । आनन्दं ब्रह्मण इतिवद्राहोश्शिर इतिवच्चाभेदेऽपि भेदेन निर्देशो मम चैतन्यमिति । बिम्बभूतमीश्वरचैतन्यमादित्याद्यन्तःकरणेषु प्रतिबिम्बरूपेण वर्तत इत्यर्थः । अयं च चेतनप्रतिबिम्बो न मृदादिष्वस्ति । अन्तःकरणोपाध्यभावात्तत्र । एवं चैतन्यप्रतिबिम्बसत्त्वासत्त्वप्रयुक्तैव चेतनाचेतनभिदा । ननु कूटस्थचैतन्यकृता- तस्य सर्वव्यापित्वात् । ननु मास्तुनाम मृदादौ चैतन्यप्रतिबिम्बः, स्थावरपश्वादिष्वस्त्येवेति कथमादित्यगतमित्याद्युक्तमित्याक्षिपति—**ननु स्थावरेष्वित्यादिना** । अन्यत्सर्वं समानम् ।

नन्वेवं प्रतिबिम्बजीवपक्षे उपाधिप्रयुक्तप्रतिफलनतारतम्यादादित्यादीनामस्तूत्कर्षः, कथं पुनरवच्छेदपक्षे उपपत्तिरिति चेत्, उच्यते—उपाधिधर्मास्सुखादयो यथोपहितेऽध्यस्यन्ते मायया, यथा च

किंच—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीस्सर्वास्सोमो भूत्वा रसात्मकः ॥१३॥

गामिति । गां पृथिवीमाविश्य प्रविश्य च धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं रूपं जगद्विधारणाय पृथिव्यां प्रविष्टं येन पृथिवी गुर्वी न

---

ब्रह्मेन्द्रदेवाद्यन्तःकरणगतसत्त्वशुद्धितारतम्यप्रयुक्तमानन्दतारतम्यमप्युपहिते मायया‌ऽध्यस्यते 'स एको मानुष आनन्द' इत्यादिश्रुत्या, तथा आदित्यादिदेवान्तःकरणगतसत्त्वशुद्धिविशेषप्रयुक्तज्ञानाधिक्यमप्युपहिते चैतन्ये मायया‌ऽध्यस्यत इति । आदित्यादीनां सत्त्वादिगुणोत्कर्षप्रयुक्तं वृत्तिज्ञानाधिक्यमेव यत्सर्वज्ञत्वप्रयोजकं, नतु चैतन्याधिक्यं निर्विशेषत्वाच्चैतन्यस्येति भाव इति ।

रामानुजस्तु मामकं तेजो मया तेभ्यो दत्तमित्याह, तन्मन्दम्—ममेदं मामकमिति व्युत्पत्तिविस्तारस्यभङ्गात् । न ह्यन्यस्मै दत्तां गां कोऽपि मामिकेयं गौरिति ब्रूते । स्वत्वनिवृत्तिपूर्वकपरस्वत्वानुकूलव्यापारो हि दानम् । ततश्च दत्ते वस्तुनि कथमीश्वरस्य स्वत्वम् ? येन ममेदं तेज इति ब्रूयात् । नच भूतपूर्वगत्या मामकमित्युक्तमिति वाच्यं, पूर्वं मामकमिति साक्षादेव तत्कथनस्य न्याय्यत्वात् । तत्पूर्वं विद्धि मामकमिति हि श्लोकः कर्तुं शक्यते । किंच सूर्यादिभ्यस्तेजोदानात्प्राक्किमयमीश्वरस्तेजस्वी उत न ? आद्ये- 'अशब्दमस्पर्शमरूपमव्यय'मिति श्रुतिविरोधः । द्वितीये- स्वस्यैव तेजोऽभावे कथमन्यस्मै प्रदानं तस्य सम्भवति ? किंच भगवतस्सकाशात्तेजसः प्राप्तेः प्राक् सूर्यादयस्तेजोमया उत जलमयाः ? अथ वा पृथिवीमया यद्वा वायुमया उत स्विदाकाशमयाः ? नाद्यः- तेजसः प्राप्तेः प्राक्तेजोमयत्वायोगात् । न द्वितीयतृतीयौ- प्रमाणाभावात् । न चतुर्थपञ्चमौ- नीरूपत्वप्रसङ्गात् । यद्यपि चन्द्रस्य जलमयत्वं वक्तुं शक्येत । सूर्याग्न्योस्तु न तद्वक्तुं शक्यमिति बोध्यम् । अपि च यदि सूर्यादीनां प्रकाशस्स्वाभाविकधर्मो न स्यात्तर्हि कदाचिदप्रकाशस्स्यादेव तेषाम् । संयोगस्य वियोगान्तत्वेन संयुक्तधर्मस्य विनाशसम्भवात् । नहि प्रकाशात्मकानां सूर्यादीनां स्वरूपनाशं विना प्रकाशनाशस्सम्भवति । मेघाद्यावरणात्त्वस्माकमेव सूर्यादिप्रकाशादर्शनं, नतु तेषां प्रकाशनाशः । तस्मात्प्रकाशात्मका एव सूर्यादयो भगवता सृष्टा मायया । नतु सूर्यादीन् सृष्ट्वा पश्चात्तेभ्योऽदिशत्तेजः । यथा रसगन्धाद्यात्मकजलपृथिव्यादय इति स्थितम् ॥१२॥

गामिति । अहं गामाविश्य च ओजसा भूतानि धारयामि । अहं रसात्मकस्सोमो भूत्वा सर्वाश्चौषधीः पुष्णामि । अहमोजसा गामाविश्य च भूतानि धारयामीति वा । चैतन्यरूपेण सर्वत्र सममवस्थितोऽपीश्वरः तत्तद्विशिष्टशक्तिमत्त्वेन रूपेण पुनः प्रविष्ट इव । तत आह—गामाविश्येति । ओजसा रूपेण गामाविश्येत्यन्वये तु न काप्यनुपपत्तिः । किं तदोजोऽत आह—यद्बलमिति । 'बलं बलवतामस्मि कामरागविवर्जित'मिति पूर्वमुक्तत्वादिति भावः । ऐश्वरं रूपमिति । ईश्वरीय-

अधःपतति न विदीर्यते च । तथा च मन्त्रवर्णः- 'येन द्यौ रुग्रा पृथिवी च दृढे' इति, 'स दाधार पृथिवी'मित्यादिश्च । अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किंच पृथिव्यां जाता ओषधीस्सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादुमतीश्च करोमि, सोमो भूत्वा रसात्मकस्सोमः सर्वरसात्मको रसस्वभावः सर्वरसानामाकरस्सोमः । सहि सर्वा ओषधीः स्वात्मरसाननुप्रवेशयन् पुष्णाति ॥१३॥॥

किंच—

> अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
> प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥

अहमिति । अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा- 'अयमग्निर्वैश्वानरो योऽयमन्तः

---

मायाशक्तिविशेष इत्यर्थः । नहि सच्चिदानन्दस्येश्वरस्य बलं रूपं भवितुमर्हतीति भावः । येनेति । बलेनेत्यर्थः । अध इति । समुद्रजल इति भावः । विदीर्यते भिद्यते येनैश्वरबलरूपेण द्यौरुग्रा पृथिवी च द्वे दृढे भवत इति शेषः । दार्ढ्यं च जगद्धारणसामर्थ्यमविदीर्यमाणत्वं च । स पृथिवीमिमां द्यामुत द्यां च दाधार दधार दीर्घश्छान्दसः । स ईश्वर इत्यर्थः । अत इति । ईश्वरानुप्रवेशेनैव पृथिव्या जगद्धारणादिशक्तिमत्त्वादिति भावः । धारयामि धरामीत्यर्थः । पृथिव्या धारयामीति वा । एतेन पृथिवीनिष्ठत्वेन दृश्यमाना सर्वजगद्धारणशक्तिरीश्वरशक्तिरेवेति सिद्धम् । अहमेव बलस्वरूपेण पृथिव्यां वर्तमानस्सन् जगदिदं सर्वं धारयामीति परमार्थः । अनेन च पृथिव्यां बलमहमस्मीति प्रतिपादनेन सर्वेषु वस्तुषु दृश्यमानं यत्किञ्चिद्बलमप्यहमेवेति सिद्धं भवति ।

रस इति । यो जलस्य गुणस्स रसः । चन्द्रस्य च जलमयत्वाद्रसस्वभावत्वम् । सर्वरसानामिति । सर्वेषां व्रीह्यादिगतानां रसानामाकरो निलयः । रसस्यैकत्वेऽप्युपाधिनानात्वात्सर्वरसेत्युक्तिः । स्वात्मरसानिति । स्वगतं रसमित्यर्थः । यद्यपि जलगतरसेनैव वर्धन्ते व्रीह्यादयः फलन्ति च । तथापि चन्द्र एव तत्पोषकः, ओषधीशत्वात्तस्य । चन्द्रकरसम्पर्कद्वारा तद्गतं रसं पीत्वा हि सर्वा ओषधयः परिपुष्टा रसवत्यश्च भवन्ति । नहि चन्द्रकरसम्पर्करहितो व्रीह्यादिर्गृहे जलेन सिक्तोऽपि वर्धते फलति वा । तस्मात्सोमगता सर्वौषधिपोषणशक्तिरीश्वरशक्तिरेव । ईश्वर एव सोमे रसस्वरूपेण वर्तमानस्सन् पुष्णात्योषधीरिति च सिद्धम् ।

एतेन जलादिगतो रसोऽपीश्वरात्मक एवेति सूच्यते । एवं श्लोकद्वयेन तेजोबलरसानां त्रयाणामीश्वरविभूतित्वमिति फलितम् । सोमो भूत्वेत्यनेन तु न केवलं रस एवेश्वरः, किंतु तदाश्रयस्सोमोऽपीश्वर एवेति प्रतिपाद्यते । अनेनैव न्यायेन सूर्याग्निभूमीनामपीश्वरविभूतित्वं गम्यते । तच्च सूर्यादयः तद्गततेज आदयः । तद्गतभासकत्वादयश्चेत्येतत्सर्वमपीश्वरविभूतिरेव कल्पितत्वान्माया सर्वस्यास्येश्वरे इति फलति ॥१३॥

अहमिति । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितस्सन् प्राणापानसमायुक्तश्च सन् चतु-

पुरुषे येनेदमन्नं पच्यते' इत्यादिश्रुतेः । वैश्वानरस्सन्प्राणिनां प्राणवतां देहमाश्रितः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तस्संयुक्तः पचामि पक्तिं करोम्यन्नमशनं चतुष्प्रकारं भोज्यं भक्ष्यं चोष्यं लेह्यं च, भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमः, तदे- मग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥१४॥

---

विधमन्नं पचामि । न केवलं बाह्याग्निरेवाहं, किंतु जाठराग्निरप्यहमेवेत्याह—अहमिति। बाह्याग्निगतसर्वावभासकत्वशक्तिरेव नास्मदीया, किंतु जाठराग्निगतान्नपचनशक्तिरप्यस्मदीयै- अहमिति । जाठराग्नेर्वैश्वानरत्वे प्रमाणमाह—अयमिति । अन्तःपुरुषे शरीरमध्ये योऽग्निः सोऽयं वैश्वानर इत्युच्यते । येनान्तस्स्थाग्निनेदं भुक्तमन्नं पच्यते, बाह्याग्निस्तण्डुलानां- प्रभवति, नतु भुक्तस्यान्नस्य बाह्याग्निसंयोगाभावात्तस्य । अपक्वस्य त्वन्नस्य रक्तादिरूपेण परि- सम्भवति । तस्माद्भुक्तान्नपरिणामहेतुरस्ति जठरे कश्चिदग्निर्वैश्वानर इति । मृतशरीरे जाठरा- दाह—प्राणिनामिति । अन्तःकरणादेर्जठराग्न्याश्रयत्वाभावादाह—देहमिति । स्थूलशरीरं- प्रविष्ट इति । देहान्तस्स्थस्वरूपमाश्रयत्वमिहोक्तं, नतु देहाद्बहिः पटादिवद्वर्तमानत्वरूपमिति- बाह्योऽप्यग्निर्वातसंयुक्त एव ज्वलतीत्यत आह—प्राणापानसमायुक्त इति ।

यद्यपि प्राण एव जठराग्निवर्धकः, तथाऽप्यपानेन मलानिस्सारणे सति नहि प्राणोऽग्निं- यितुमीष्ट इत्यत उक्तम्—प्राणापानसमायुक्त इति । पक्तिं पाकं परिणामं रक्ताद्यात्मनेति- भोज्यं प्रधानमन्नं शाल्यादि । भक्ष्यं माषवटकादि । चोष्यमिक्षुखण्डादि । लेह्यं पायसादि। -विधा रीतयो यस्य तच्चतुर्विधम् । एतेन जठराग्नेरुद्भूतपचनशक्तेश्चेश्वरविभूतित्वं सिद्धं- तेजोऽबन्नात्मिकाया अवान्तरप्रकृतेरीश्वरविभूतित्वमिति फलितम् । सूर्यादेस्सोमस्य पृथिव्या- विभूतित्वस्योक्तत्वात् । (अन्नं पृथिवी) ततश्च त्रिवृत्कृततेज आदिभूतत्रयकार्यस्य सर्वस्यापि भगवद्विभूतित्वं फलति ।

प्रसङ्गादत्र विशेषमाह—भोक्तेति । उभयमग्न्यन्नद्वयमग्नीषोमावित्युच्यते । '- स्सोमवरुणयो'रितीत्वम् । इदमुभयं सर्वमिति पश्यतः पुरुषस्यान्नदोषलेपोऽन्नदोषसम्बन्धो न- अन्नस्य हि पाकादिसामयिकक्रिमिकीटादिनाशप्रयुक्ताः कुट्टनीपेषण्यादयो दोषास्सन्ति, यन्नि- वैश्वदेवो विहितः । तद्दोषसम्बन्धस्तु वैश्वदेवविहीनस्यापि दर्शितज्ञानवतो न भवति ।

ननु कुतो न भवति ? इदमन्नं सोमः, अयमग्निर्भोक्ता वैश्वानर इति ज्ञानमात्रेण- उच्यते—यो ह्यन्नमत्ति, तस्यान्नदोषो भवति, न त्वनश्नतः । अन्यथाऽतिप्रसङ्गात् । - भुक्तान्नगतगुणदोषप्रसक्तिर्मैत्रस्य । अन्यथा चैत्रे भुक्तवति सति अभुक्तवतोपि मैत्रस्य - स्यात् । एवं सति योऽन्नमत्ति स वैश्वानरोऽग्निरेव, नत्वहं ममाभोक्तृत्वादिति यो वेत्ति - दोषलेपो भवतुमर्हति ? न कथमपि । किंच योऽस्मद्देहेऽन्नमत्ति सोऽग्निस्सक्षाद्भगवद्रूपो वैश्वा-

किंच—

सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥

सर्वस्येति । सर्वस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ सन्निविष्टः । अतो मत्त

---

विदमन्नं तच्च साक्षाद्भगवद्रूपस्सोम एव । सोमो भूत्वेति, वैश्वानरो भूत्वेति च सोमवैश्वानरयोर्भगवत्वप्रतिपादनादिति यो जानाति कथं तस्यान्नदोषगन्धसम्बन्धः ? न कथमपि । अन्नस्य भगवदात्मत्वानुसन्धानेन सर्वदोषप्रहाणात् ।

नन्वन्नस्य कथं सोमत्वं, व्रीह्यादिपोषको हि सोम इति चेत्, उच्यते—सोमपुष्टव्रीह्यादिजत्वादन्नस्य सोमत्वं, सोमरसमयत्वाद्वा सोमदेवताकत्वादिति वा । एवमग्नीषोमदर्शनस्यान्नदोषनाशकत्वादेव तत्प्रतिपादकोऽयं श्लोक परिषेचनकाले स्मार्तैः पठ्यते ॥१४॥

सर्वस्येति । अहं सर्वस्य हृदि सन्निविष्टश्च । मत्तस्सर्वज्ञस्य स्मृतिर्ज्ञानमपोहनं च भवति । अहमेव सर्वैर्वेदैश्च वेद्यः । अहमेव वेदान्तकृत् । अहमेव वेदविच्च भवामीति शेषः । सन्निविष्टस्सम्यग्निविष्टः प्रविष्टः प्रविश्य स्थित इति यावत् । ननु सर्वव्यापिनश्चैतन्यरूपेश्वरस्य कः पुनरपरः प्रवेशइत्यत आह—आत्मा सन्निति । आत्मरूपेणेत्यर्थः । 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति श्रुतेरिति भावः । शुद्धचैतन्यात्मना सर्वत्रावस्थितोऽपीश्वर अन्तःकरणावच्छिन्नचैतन्यरूपेण प्रतिबिम्बरूपेण वा प्राणिनां बुद्धौ प्रविष्ट इति तत्त्वम् । एतेनेश्वरादर्थान्तरं जीव इति परास्तम् । नचान्तर्यामिरूपेश्वरो जीवस्य बुद्धौ प्रविष्ट इति, जीवादर्थान्तरमेवेश्वर इति वाच्यं, हृदि प्रविष्टस्य जीवान्येश्वरस्यानुपलम्भात् । नच नियमनादिभिर्लिङ्गैरनुमेय इति वाच्यं, प्रतीच एव नियमनादिसम्भवात् । नच स्वयमेव स्वस्य कथं नियामक इति वाच्यं, प्रत्यगात्मनः प्रमातृनियमनसम्भव इत्यदोषात् । नच प्रत्यगात्मैव प्रमातेति वाच्यं, अन्तःकरणोपहितस्य प्रत्यगात्मत्वं, तदवच्छिन्नस्य (तद्विशिष्टस्य) चैतन्यस्य प्रमातृत्वमिति कल्पितभेदसत्त्वात् । नच विशेष्यचैतन्यांशेऽभेद एवेति वाच्यं, तत्र नियमनादेरप्यभावात् । नच प्रत्यगात्मैवान्तर्यामीश्वरो जीवाद्भिन्न इति वाच्यं, जीवस्यैव स्वस्वरूपत्वात्प्रत्यगात्मनः । 'नच गुहां प्रविष्टौ परमे परार्ध्ये' इति, 'द्वा सुपर्णा'विति, ज्ञाज्ञौ द्वावजाविति च श्रुतयो जीवेश्वरयोर्द्वयोर्गुहाहितत्वं ब्रुवन्तीति वाच्यं, एकस्यैव चैतन्यस्यान्तःकरणे उपहितत्वरूपेण विशिष्टत्वरूपेण द्वेधा प्रवेशः ।

अथवा बिम्बत्वरूपेण प्रतिबिम्बत्वरूपेण द्वेधा प्रवेश इति विवक्षितत्वात् । नच केनचित्स्वस्मादन्येनेश्वरेण प्रयुक्त इव जीवोऽनुभवति संसारमिति वाच्यं, अविद्यावस्थायां जीवो नात्मानं प्रत्यञ्चं मन्यते । असंसारी हि प्रत्यगात्मा क्षेत्रज्ञः, किंतु संसारिणं प्रमातारमेव मन्यते । ततश्च साक्षिणा स्वेनैव प्रत्यगात्मना नियमितोऽपि परेण नियमितोऽहमिति प्रत्येति । स्वयमपि प्रत्यगात्मा हि जीवस्याज्ञानतः परोक्षकल्पतयाऽवतिष्ठते । अत एव स्वात्मभूतमपि प्रत्यञ्चं परोक्षेश्वरं मन्यन्ते मूढा द्वैतिनश्च तार्किकादयः । तस्मात्प्रत्यगात्मनः क्षेत्रज्ञादर्थान्तरं न भवत्यन्तर्यामीश्वरः । यमन्तर्यामि-

ब्राह्मणादयः प्रतिपादयन्ति । इयं जीवरूपा प्रकृतिरीश्वरस्य परा विभूतिः । क्षेत्रलक्षणा अपरा विभू-
तिस्तु पूर्वश्लोकत्रयेण प्रतिपादिता । नच कथमीश्वरस्यैव सतो जीवस्य कथमीश्वरविभूतित्वमिति
वाच्यं, अन्तःकरणाद्युपाधिप्रयुक्तत्वाज्जीवस्येश्वरविभूतित्वव्यवहारस्य । निरुपाधिकचैतन्यस्य हि सोपा-
धिकचैतन्यं विभूतिः । विशेष्यांशस्याविभूतित्वेऽपि विशेषणांशस्योपाधेर्विभूतित्वेन विशिष्टस्यापि
विभूतित्वव्यवहारात् ।

नच यदादित्यगतमितिश्लोकेनैव जीवविभूतिरुक्तेति वाच्यं, तत्रादित्यादित्रयगतस्यैव जीव-
चैतन्यस्य विभूतित्वेन प्रतिपादनमिह तु सर्वगतस्येति भेदात् । यथा 'आदित्यानामहं विष्णु'रित्यादिना
प्रतिपाद्य विशेषतः, अन्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति सामान्यतः प्रतिपादितं
तद्वदिति । अथ वाऽऽदित्यादिगतप्रमातृचैतन्यस्य भगवद्विभूतित्वं पूर्वमुक्तं, इदानीं तु साक्षिचैतन्य-
स्येति भेदः । नच साक्षिचैतन्यं शुद्धमेवेति कथं विभूतित्वं तस्येति वाच्यं, शुद्धचैतन्ये साक्षित्व-
धर्मायोगात् । साक्षिचैतन्यं सोपाधिकमेव । अन्तःकरणोपहितं हि चैतन्यं साक्षीत्युच्यते । तस्मा-
दीश्वरादनर्थान्तरमपि साक्षी प्रत्यगात्मा क्षेत्रज्ञो जीव ईश्वरस्य निरुपाधिकचैतन्यस्य विभूतिभूत एव ।
अत इति । बुद्धौ मम सन्निविष्टत्वादेवेत्यर्थः । मत्त इति । अस्मच्छब्दलक्ष्यार्थभूतादात्मन इत्यर्थः ।
अथ वा प्रत्यग्रूपेणावस्थितात्परमेश्वरान्मत्त इत्यर्थः । स्मृतिरनुभूतार्थस्मरणं, ज्ञानमनुभवः, अपोहनं
तदुभयस्य नाशः एतत्त्रयं भवति ।

तथाहि- यः पूर्वेद्युर्घटमनुभूतवान् प्रमाता स तन्निशि ब्रह्मणि सम्पन्नत्वान्नष्ट एव । 'प्राज्ञेनात्मना
सम्परिष्व'क्तेति, 'सति सम्पद्यत' इति च श्रुतेः । प्रमाता हि सुप्तावन्तःकरणतादात्म्याध्यासं विहाय
कूटस्थात्मनाऽवतिष्ठते । अतस्तदा चैतन्यस्य प्रमातृत्वनाशात्प्रमाता नष्ट एव । सुप्त्यनन्तरं ब्रह्म-
सकाशादज्ञानकर्मवशात्पुनरुत्थितः परेद्युः, प्रमाता तु पूर्वस्मात्प्रमातुरन्य एवेति कथं तस्य पूर्वे-
दिनानुभूतघटस्मरणं सम्भवेत्साक्ष्यनुग्रहं विना ? न कथमपि । न चैवं प्रतिसुषुप्तिप्रमातृनाशे प्रतिजागरं
प्रमात्रन्तरोदये च कृतहानाकृताभ्यागमदोषप्रसङ्ग इति वाच्यं, प्रमातृनाशेऽप्युपाध्यनाशादुपाध्याश्र-
यत्वाच्च कर्मणः ।

नचान्तःकरणं नश्यत्येवेति वाच्यं, अविद्यायाः कारणशरीरस्य तूलाज्ञानस्योपाधेरनाशात्,
तन्नाशस्यैव मोक्षत्वात्तत्सत्त्वादेव पुनरावृत्तिप्रसङ्गात् । नन्वोपाध्यनाशे कथमुपहितनाश इति वाच्यं,
प्रमातृपाधेरन्तःकरणस्य नाशेन प्रमातृनाशात् । अविद्या हि प्राज्ञस्योपाधिः । नच प्रमातुर्नष्टस्य दीप-
स्येव निर्वाणस्य कथं पुनरावृत्तिरिति वाच्यं, यदन्तःकरणावच्छिन्नः पूर्वः प्रमाता तदन्तःकरणा-
वच्छिन्न एवायमुत्तरः प्रमातेति प्रमातृभेदेन पुनरावृत्तिसम्भवात् ।

अथ वा अज्ञाने निलीय वर्तमानस्यान्तःकरणस्य ततः पुनरागमनात्तादात्म्याध्यासमापन्नः प्रमा-
तापि पुनरागत इत्युच्यते । नचैवं प्रमातापि निलीय वर्तत एव, सुषुप्तौ न नष्ट इति वाच्यं, तल्ली-
निलयनस्य नाशत्वेनास्माभिर्विवक्षितत्वात् । यद्वाऽन्तःकरणमज्ञाने संस्काररूपेण वर्तते, इत्ये-

निलीय वर्तनमन्तःकरणस्य । सच संस्कारोऽन्तःकरणमिव न प्रमातृत्वमावहति कूटस्थस्येति न सुषुप्तौ प्रमातृसद्भावः । यदि सुषुप्तौ संसारस्स्यात्तर्हि संसारी प्रमाताऽपि स्यात् । नतु तथा दृश्यते । तस्मात् सुषुप्तौ प्रमाता नष्ट एव । कूटस्थात्मना तु तस्य नित्यत्वप्रतिपादनम् । एवं सति योऽहं पूर्वेद्युर्घटमद्राक्षं सोऽहमिदानीं स्मरामीति स्मरणं प्रमातुः स्मर्तुरनुभवितुरन्यस्य कथं सम्भवेत् ? नहि चैत्रानुभूतोऽर्थो मैत्रेण स्मर्यते, अनुभवजन्यसंस्कारकार्यत्वात्स्मरणस्य । तच्च स्मरणमनुभवसिद्धं दुरपलापमिति कूटस्थानुग्रहकृतमेव स्मरणम् । कूटस्थ एव पूर्वदिनावस्थितप्रमातृरूपेण घटमनुभूतमुत्तरदिनावस्थितप्रमातृरूपेण स्मरति यथा प्रमाता चक्षुषा दृष्टं करेण स्पृशति तद्वदिति भावः ।

अपि च साक्षिणानुभूतस्य सुषुप्तिगतस्यानन्दस्याज्ञानस्य च प्रबोधे प्रमात्रा स्मरणं दृश्यते सुखमहमस्वाप्सं, न किञ्चिदवेदिषमिति । तद्धि स्मरणं साक्ष्यनुग्रहादेवेति स्फुटम् । तथाऽनुभवश्च साक्षिसकाशादेव भवति । साक्षिचैतन्यप्रतिफलनप्रयुक्तत्वाद्वृत्तिज्ञानस्य । प्रमातृभावमापन्नं हि साक्षिचैतन्यं विषयावच्छिन्नब्रह्मचैतन्याभिन्नं सदनुभव इत्युच्यते । अत एव हि- 'तस्य भासा सर्वमिदं विभाति' इति श्रुतिरुपपद्यते । तस्य साक्षिणो भासा स्वरूपचैतन्येन सर्वमिदं जगद्विभातीति श्रुत्यर्थः । साक्षिणोऽन्यस्य सर्वस्य जडत्वात्साक्ष्यनुग्रहादेवान्तःकरणस्य ज्ञानलाभ इति तत्त्वम् । तथाऽपोहनं च साक्षिणस्सकाशादेव भवति । सूर्ये तिमिरेण तिरोहिते सति यथा घटादिप्रकाशाभावः, एवं साक्षिण्यज्ञानेनाच्छादिते सति ज्ञानस्मरणाभावः । अन्तःकरणस्य तमोगुणोद्रेके सति प्रमाता न किञ्चिदनुभवते, न किञ्चित्स्मर्यते, किंतु निद्रादिकं प्रपद्यते । तत्र च कारणं तमोमयेऽन्तःकरणे साक्षिचैतन्यस्य स्फुटमस्फुरणमेव । अत्यन्तास्फुरणे तु मान्द्याद्यनुभवोपि न स्यात् ।

अथवाऽत्यन्तं तमसा दूषितेऽन्तःकरणे नैव प्रतिफलति साक्षिचैतन्यं काष्ठादाविव मुखं कर्दमच्छन्नदर्पणे मुखमिव च । तदैव निद्राति प्रमाता, सच निद्रानुभवस्साक्षिण एव न प्रमातुः । एवमन्तःकरणे तमसा दूषिते सति साक्षी अज्ञानेनावृत इव भवति । नतु वस्तुतस्तस्यावरणं जगदान्ध्यप्रसङ्गात् । अत उक्तं ज्ञानस्मरणाभावोऽपि साक्षिण एवेति सूर्यादेव घटादिप्रकाशाभाव इतिवत् । सूर्यानुदयप्रयुक्तो घटाद्यप्रकाशो यथा सूर्याद्भवतीत्युच्यते, तथासाक्ष्यप्रतिफलनप्रयुक्तो ज्ञानाद्यभावस्साक्षिणस्सकाशाद्भवतीत्युच्यते । राजानुग्रहाभावकृतमर्थिनां दारिद्र्यं राजकृतमिति यथोच्यते तद्वदेवेति भावः ।

अथवा वृत्तय इव वृत्त्यन्तराला वृत्त्यभावाश्च साक्षिणा भास्यन्त इति सिद्धान्तादज्ञानाद्यभावोऽपि साक्षिभास्यत्वेन साक्षिणो भवतीत्युच्यते । नह्यभास्यमसाक्षिकं वस्तु किञ्चिदप्यस्तीति प्रतिपत्तुमर्हम् । अन्यथा शशशृङ्गादेरप्यस्तित्वप्रतीतिप्रसङ्गात् । तस्मात्साक्ष्यभास्यत्वे ज्ञानाभावस्य स्वरूपासिद्धिरेवेत्युपपन्नमुक्तं साक्षिणोऽपोहनमिति । ननु यद्येवं सर्वात्मन ईश्वरस्य वैषम्यादिप्रसङ्गः । केचित्किञ्चिज्जानन्ति, केचिदधिकं जानन्ति, केचिद्‌ज्ञातं विस्मरन्ति, केचित्स्मरन्ति चेत्येवमादे-

आत्मनस्सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं चापगमनं च; येषां पुण्यकर्मणां च पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनं चापायनमपगमनं च। वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यः। वेदान्तकृद्वेदान्तार्थसम्प्रदायकृदित्यर्थः। वेदविद्वेदार्थविदेव चाहम् ॥१५॥

वैषम्यस्य साक्षिप्रयुक्तत्वादत आह—येषामिति। पुण्यपापकर्मप्रयुक्तसत्त्वादिगुणन्यूनाधिकभावकृतान्तःकरणशुद्ध्यशुद्धितारतम्यकृतमेव साक्षिप्रतिफलनवैचित्र्यं, नतु साक्षिस्वरूपकृतं- यथा दर्पणगतस्वच्छास्वच्छत्वादितारतम्यकृतं मुखप्रतिफलनवैचित्र्यं, नतु मुखस्वरूपकृतं तद्वदिति न साक्षिणो वैषम्यापत्तिरित्यर्थः।

यद्वा स्मृतिश्शास्त्राचार्योपदेशाद्याहितसंस्कारजनितं स्मरणं, ज्ञानं कार्याकार्यविषयविवेकः, अपोहनं तदुभयभ्रंशः। ननु एकस्यैव प्राणिनः कथं स्मृतिज्ञानवत्त्वं तद्भ्रंशवत्त्वं चेत्यत आह—येषामिति। पुण्यकर्मणां सर्वप्राणिनां पुण्यकर्मानुसारेण स्मृतिज्ञाने जायमानेऽपि मत्त एव भवतः; तथा पापकर्मणां सर्वप्राणिनां पापानुरोधेन जायमानमपि स्मृतिज्ञानापोहनं मत्त एव भवति। ईश्वरस्य कर्मादिसाक्षित्वान्मत्त एवेत्युक्तम्। पूर्वोक्तविधया साक्षिप्रतिफलनतदभावयोर्ज्ञानतदभावहेतुत्वादिति भावः। पुण्यकर्मणां पुण्यानुरोधेन, पापकर्मणां पापानुरोधेन च तत्तत्फलभूतं स्मरणं ज्ञानमपोहनं चाहमेव सर्वेश्वरः परमेश्वरः प्रत्यगात्मा क्षेत्रज्ञः प्रदिशामि; मन्मायाकृतत्वात्सर्वव्यवहारस्येति परमार्थः। अपगमनं नाशः। 'सम्मोहात्स्मृतिविभ्रमः, स्मृतिभ्रंशाद्बुद्धिनाश' इति पूर्वमुक्तम्। स च सम्मोहोऽज्ञानकार्यमेव, तच्चाज्ञानमीश्वरस्योपाधिरेवेति भगवन्माययैव प्राणिनामपोहनसम्भव इति भावः।

वेदैरिति। 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेरिति भावः। यद्यपि यज्ञादिप्रतिपादका अपि सन्ति वेदास्तथापि यज्ञादेस्सर्वस्य जगतो भगवति परमात्मनि कल्पितत्वेन भगवदात्मकत्वात्तत्प्रतिपादका अपि वेदाः परमात्मप्रतिपादका एव। 'वासुदेवस्सर्व'मिति ह्युक्तमत्रैव। 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिश्च। वेदैश्चेति चकारात्स्मृत्यादिग्रहणम्। किं बहुना अकारादिपञ्चाशन्मातृकाक्षरात्मकघटितास्सर्वेऽपि घटपटविष्णुशङ्करादिशब्दास्तत्तद्घटाद्यर्थबोधकतया लौकिकैर्गृह्यमाणा अपि वस्तुतो घटाद्यवच्छिन्नचैतन्येश्वरवाचिन एवेति बोध्यम्। नचैवं 'यतो वाचो निवर्तन्त' इति श्रुतिविरोधः, निर्विशेषचैतन्यपरत्वात्तच्छ्रुतेः। सविशेषं हि चैतन्यं सर्वे शब्दाः प्रतिपादयन्तीति वयं ब्रूमः।

परमात्मेति। सर्वजगदाश्रयचैतन्यमित्यर्थः। परमात्मचैतन्ये हि सर्वं जगत्कल्पितं मायया। प्रत्यगात्मा तु सर्वान्तर इति न सर्वशब्दप्रतिपाद्यः- तत्र सर्वस्याकल्पितत्वात्। अत उक्तं परमात्मेति। परमात्माभेदेन तु प्रत्यगात्मनस्सर्वात्मत्वकथनं सर्वाधिष्ठानकल्पनं चेति बोध्यम्। नहि प्रत्यगात्मपरमात्मनोर्वास्तवो भेदोऽस्ति, किं त्वौपाधिक एव। देहाद्युपाधिप्रयुक्तो हि पूर्णचैतन्यस्यान्तर्बाह्यत्वरूपो भेदः। तस्मात्प्रत्यगभिन्नः परमात्मैव सर्ववेदवेद्यः। वेदान्तकृदिति 'तेने ब्रह्म हृदा य आदिकवये' इति भागवतान्नारायणः परमेश्वरो ब्रह्मणे चतुर्मुखाय तावद्वेदान्तार्थमुपदिदेश,

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतः 'यदादित्यगतं तेज' इत्यादिना । अथ अधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य तत्त्वनिर्दिधारयिषया उत्तरे श्लोका आरभ्यन्ते । तत्र सर्वमेवातीतानागताध्यार्थजातं त्रिधा राशीकृत्याह—

> द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
> क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

द्वाविति । द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते; लोके संसारे, क्षरश्च- क्षरतीति

---

सनकादिभ्यस्ते नारदाय, स व्यासाय, स शुकायेत्येवं वेदान्तार्थसम्प्रदायप्रवर्तक इत्यर्थः । केवलवेदवित्वस्याधुनिकब्राह्मणेष्वपि सत्त्वाद्वेदार्थविदित्युक्तं वेदार्थश्च ब्रह्म सर्वस्यापि ब्रह्मत्वात् । ब्रह्मविदित्यर्थः । सर्वज्ञ इति यावत् । ननु मदन्यःकश्चित्सर्वज्ञोऽस्ति । मदन्यस्य सर्वस्य जडत्वात् । क्षेत्रज्ञस्य च मदात्मकत्वादित्यभिप्रायः ।

यत्तु रामानुजः—सर्वस्य चेति चशब्दात्सोमवैश्वानरयोर्ग्रहणमिति, देवमनुष्यादिशब्दैर्जीवात्मैव सूर्यादिशब्दैस्तदन्तर्यामीश्वरः प्रतिपाद्यत इति, वेदानामन्तःफलं तत्कृत्तत्प्रदातेति च, तन्मन्दम्—सर्वशब्देनैव सोमादेरपि ग्रहणे सति तत्समुच्चायकत्वेन चशब्दस्य व्यर्थत्वात् । वैश्वानरस्य जठराग्नेर्जडत्वेन तदन्तरीश्वरप्रवेशासम्भवाच्च । जीवरूपेणेश्वरप्रवेशो ह्यत्र विवक्षितः । अन्तर्यामिरूपेणापि नहि जडे ईश्वरस्य प्रवेशः फलाभावात् । नहि जडमीश्वरेण नियम्यते । एतेन सूर्यादिशब्दैस्तदन्तर्यामीश्वरप्रतिपादने सम्भवत्यपि यूपादिशब्दैस्तदसम्भवादनया विधया सर्ववेदवेद्यत्वं नास्तीश्वरस्येति सिद्धम् । किंच देवमनुष्यादिशब्दा देवादिदेहतादात्म्याध्यासमापन्नं जीवं प्रतिपादयन्तु नाम । कथं पुनरीश्वरमध्यासशून्यं प्रतिपादयेयुः ? यदीश्वरोऽप्यध्यासवान् तर्ह्यज्ञ एव स्यात्सोऽपि जीववत् । न चेश्वरस्याध्यासाभावेऽपि वेदानां तत्सत्त्वात्प्रतिपादनं सम्भवतीति वाच्यं, तथासति वेदानामज्ञत्वेनाप्रमाणत्वापत्तेः । नहि देवोऽहं मनुष्योऽहमिति जीवस्याज्ञस्य वचनं प्रमाणं, येन तादृशं सूर्य ईश्वरश्चन्द्र ईश्वर इति वेदवचनं प्रमाणं स्यात् । किंच जडस्य वेदस्य कथमध्याससम्भवः ? नहि घटस्याध्यासो दृष्टः । वेदपुरुषस्तु सर्वज्ञ एवेति कथं तस्याध्याससम्भवति ?

वेदान्तकृदित्यस्यापि वेदफलप्रदातेत्यर्थोऽप्ययुक्त एव - वेदोक्तकर्मफलप्रदातेत्यर्थस्य लाक्षणिकत्वात् । केवलवेदस्य फलाभावाच्च । 'वेदाक्षराणि यावन्ति पठितानि द्विजोत्तमैः । तावन्ति हरिनामानि कीर्तितानि न संशय' इतिस्मृतेश्चोच्चार्यमाणवेदस्यैव फलवत्त्वप्रतिपादनपरत्वं, न केवलवेदस्य । किंच करोतीति कृदित्यस्य दातेत्यर्थवर्णनमपि व्याकरणविरुद्धम् । यच्च वेदान्तशब्दस्योपनिषत्परत्वे प्रकृतासङ्गतमिति वेदान्तदेशिकः, तदसत्—विभूतिकथनप्रस्तावे वेदान्तसम्प्रदायकृत्त्वविभूतिवर्णनस्यापि सङ्गतत्वात् ॥१५॥

द्वाविति । विशिष्टोपाधयस्तेजोबलादयस्तत्तदुपाधयः परस्परं भिन्नाः । तत्कृतो भगवतो

क्षरो विनाशीत्येको राशिः, अपरः पुरुषोऽक्षरस्तद्विपरीतो भगवन्मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंसाराश्रयः, अक्षरः पुरुष उच्यते। कौ तौ पुरुषावित्याह स्वयमेव भगवान्—क्षरस्सर्वाणि भूतानि, समस्तं विकारजातमित्यर्थः। कूटस्थः कूटो राशी राशिरिव स्थितः। अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्याया अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः, संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥१६॥

---

विभूतिसंक्षेपो यदादित्यगतं तेज इत्यादिना ग्रन्थेनोक्तः । प्रकर्षेण विभक्तः प्रविभक्तः प्रविविक्तः तद्भावेन प्रविभक्ततया क्षराक्षरोपाधिद्वयाद्विविच्येत्यर्थः । निरुपाधिकस्योपाधिरहितस्य निर्विशेषस्येति यावत् । अत एव केवलस्यैकस्यात्मनश्चिन्मात्रस्येति वा । तत्त्वं याथार्थ्यं स्वरूपमिति यावत् । तस्य निर्धारयितुमिच्छया निर्धारयिषया । त्रिधा राशीकृत्येति । राशित्रयीकृत्येत्यर्थः । लोके क्षरश्चाक्षर एव चेतीमौ द्वौ पुरुषावित्युच्येते । सर्वाणि भूतानि क्षर इत्युच्यन्ते । कूटस्थोऽक्षर इत्युच्यते। संसारस्सुखदुःखसम्भोगः । तस्मिन् तदाश्रयभूतावित्यर्थः ।

अथवा संसारो व्यवहारः, तस्मिन्विषये व्यवहारगोचरावित्यर्थः । पुरुषोत्तमो ह्यव्यवहार्यः- 'यत्तदद्रेश्यमग्राह्य'मित्यादिश्रुतेः । लोके जगतीति तु नोक्तमाचार्यैः क्षराक्षरयोरेव जगत्पदार्थत्वेन क्षराक्षरातिरिक्तजगत्पदार्थाभावात् । क्षरति नश्यतीति क्षरः । एको राशिरेका कोटिरित्यर्थः । तद्विपरीतः क्षराद्विलक्षणोऽविनाशित्वादिति भावः । भगवन्मायाशक्तिरेवाक्षरः पुरुष इत्युच्यते । अनेकेषां संसारिणां जन्तूनां प्राणिनां ये कामकर्मादिसंस्कारास्तेषामाश्रयः । प्रलयदशायां सुषुप्तौ च संस्काररूपेण हि तत्तज्जीवोपाध्यन्तःकरणानि प्रकृतौ निलीय वर्तन्ते । तानि च प्रलयावसाने पुनः प्रादुर्भवन्ति प्रकृतेस्सकाशादिति प्रकृतिर्भूतोत्पत्तिबीजम् । वृक्षोत्पत्तिं प्रति बीजस्येव भूतोत्पत्तिं प्रति प्रकृतेः कारणत्वेन बीजत्वात् । विकारजातं कार्यवर्गं ब्रह्मादिस्तम्बपर्यन्तश्चेतनवर्गः । मृत्पाषाणाद्यचेतनवर्गश्चेत्यर्थः । भवन्तीति भूतानीति व्युत्पत्त्या भूतशब्दस्य कार्यमात्रपरत्वादिति भावः ।

अन्यथा रामानुजोक्तविधया चेतनवर्गमात्रग्रहणेऽचेतनवर्गस्य राशित्रयाद्बहिर्भूतत्वं स्यात् । न चेष्टापत्तिः- भगवता राशिचतुष्टयस्याप्रतिपादितत्वात् । क्षराक्षरपुरुषोत्तमाख्यं राशित्रयं हीह प्रतिपादितम् । क्षराक्षराभ्यामन्यस्य पुरुषोत्तमस्याचेतनत्वं च स्यात् । चेतनवर्गात्कूटस्थाच्चाचेतनवर्गो ह्यन्य इति । राशिरिवेति । अप्रकम्प्यस्वभाव इत्यर्थः । कूट इव तिष्ठतीति कूटस्थः । कूटरूपेण तिष्ठतीति च कूटस्थ इति व्युत्पत्त्यन्तरमाश्रित्याह—अथ वेति । एकमेवाज्ञानं मायावञ्चनाजिह्मताकुटिलताशब्दैरुच्यत इति मायादिप्रकारेण स्थितमित्यर्थः । माया इन्द्रजालादिः । वञ्चना प्रतार्य पश्यतो हरणादिकम् । जिह्मता कपटस्वभावः । कुटिलता कौटिल्यमित्येतेषामवान्तरस्वरूपभेदसत्त्वान्मायावञ्चनादिप्रकारेणेत्युक्तम् । चतुर्णामप्यज्ञानपदार्थत्वात्पर्याया इत्युक्तम् । ननु ज्ञाननाश्यायाः प्रकृतेः कथमक्षरकूटस्थत्वमत आह—संसारेति । संसारबीजानां कामकर्मविद्यानामानन्त्याद्बीजाङ्कुर

न्यायेनानन्तत्वात्तदाश्रया प्रकृतिरप्यनन्तैव । न ह्याश्रयस्य सान्तत्वे तदाधेयस्यानन्तत्वं स्यात् । एवमनन्तत्वात्प्रकृतिर्न क्षरति न नश्यतीत्यक्षर इत्युच्यते । यावद्ब्रह्मज्ञानोदयमक्षरत्वस्य विवक्षितत्वात्सापेक्षं नित्यत्वमस्ति मायाया इति भावः । एवं सर्वं कार्यजातमेकः पुरुषो विनाशिस्वभावात्, कारणं माया त्वन्यः पुरुषोऽविनाशिस्वभावात् । अतः कार्यं जगत्क्षरपदार्थः । कारणमज्ञानं माया त्वक्षरपदार्थः । इति राशिद्वयमनेन श्लोकेन प्रतिपादितम् । तृतीयराशिं तु पुरुषोत्तमाख्यमुत्तरश्लोकेन प्रतिपादयिष्यति ।

यत्तु रामानुजः—तत्र क्षरशब्दनिर्दिष्टः पुरुषो जीवशब्दाभिलपनीयब्रह्मादिस्तम्बपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि, अचित्संसर्गवियुक्तस्स्वेन रूपेणावस्थितो मुक्तात्माऽक्षरः पुरुषः; एकत्वनिर्देशस्त्वचिद्वियोगरूपैकोपाधिनाऽभिहित इति, तत्तुच्छम्—किमिह जीव ईश्वरश्च विविच्य प्रदर्श्यते उताविविच्य ? आद्ये- अचित्संसृष्टो जीवः क्षर इत्ययुक्तम् । द्वितीये- ईश्वरोऽप्यचिद्विशिष्ट एवेति क्षर एव स्यादिति कथं तस्य क्षरादन्यत्वम् ? तथा चिद्विशिष्ट एवेति कथमक्षरादन्यत्वं च तस्य ? अचिद्विविक्तचित्प्रदर्शनं च कूटस्थोऽक्षर इति कथम् ? नच जीव. प्रकृतेर्विविच्याविविच्य च द्वेधा प्रदर्श्यते । ईश्वरस्तु विविच्यैव प्रदर्श्यत इति न दोष इति वाच्यं, किं बद्धजीवो विविच्याविविच्य च प्रदर्श्यते उत मुक्तजीवः ? नाद्यः- तस्य विविच्य प्रदर्शनायोगात् । विवेचिते सति बद्धत्वस्यैवापायात् । नान्त्यः- तस्याविविच्य प्रदर्शनायोगात् । विविक्त एव हि मुक्तः । तथा किं विशिष्टेश्वरो विविच्य प्रदर्श्यते ? उत शुद्धचिन्मात्रः ? नाद्यः- विशिष्टस्य विवेचनायोगात् । नान्त्यः- तव मते निर्विशेषचिन्मात्रेश्वरानभ्युपगमात् । नच जीवो बन्धदशायां क्षरणस्वभावाचिद्वैशिष्ट्यात्क्षरः । मुक्तिदशायां तद्वियोगादक्षर इति । प्रकृतिपुरुषविशिष्टोऽपीश्वरः प्रकृतिपुरुषाभ्यामन्य एव दण्डविशिष्टः पुरुषो दण्डादिवेति चोच्यत इति वाच्यं, किं जीवस्य स्वभावतः क्षरणं धर्मः ? उताक्षरणम् ? आद्ये-- कथमक्षरत्वं तस्य ? द्वितीये- कथं क्षरत्वम् ? नच स्वभावतोऽक्षरोऽपि जीवोऽचिद्वैशिष्ट्यात्क्षर इति वाच्यं, स्वभावसिद्धस्य धर्मस्य स्वरूपनाशं विना विनिमयायोगात् । न ह्यग्निरुष्णस्वभावश्शीतस्वभावो भवति विना स्वरूपनाशम् । न चाचिद्विशिष्टे जीवेऽचिद्गतं क्षरणमारोप्यत इति वाच्यं, स्वसिद्धान्तभङ्गप्रसङ्गात् । नच विशेष्यस्य बाधे सति विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायेनाचिद्विष्टो जीवः क्षर इत्युक्तेऽचित एव विशेषणांशस्य क्षरत्वमापततीति वाच्यं, तथासत्यचित्पदार्थः क्षरः, चित्पदार्थोऽक्षर इत्येव वक्तव्यं, किमनयाऽचिद्विशिष्टो जीवः क्षर इति कुकल्पनया ? नच मूलकर्तुरेवायं दोषः, न ममेति वाच्यं, अहो ! तव पाण्डित्यप्रकर्षः ! येन भगवत्यपि पराशरसूनौ दोषमासञ्जयसि ।

सर्वाणि भूतानीत्यस्य सर्वमचिद्द्रव्यमित्यर्थवर्णने सति किं तव रसना विदीर्यते ? अपि च तव मते प्रकृतेरपि नित्यत्वेन कथं क्षरणस्वभावमचिद्द्रव्यं भवेत् ? नच कारणप्रकृतिरेव नित्या,

आभ्यां क्षराक्षराभ्यामन्यो विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः —

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥

उत्तम इति । उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षणः, आभ्यां परमात्मेति

---

तत्परिणामास्तु देहादयोऽनित्या एवेति वाच्यं, तथासति सर्वं कार्यजातं क्षर इति श्रीशङ्करभगवत्पादाचार्यप्रोक्तार्थ एव घट्टकुटीप्रभातन्यायेन तत्रापि पर्यवसानात् । एवं क्षरशब्देन विनाश्यचिद्द्रव्यप्रतिपादने सत्यविनाश्यचिद्द्रव्यप्रतिपादनस्याप्यावश्यकत्वादिह केन वाक्येन पुनस्तदविनाश्यचिद्द्रव्यं प्रतिपादितम् । नच 'कूटस्थोऽक्षर उच्यत' इति वाक्येनेति वाच्यं, अन्यथा व्याख्यातत्वात्तद्वचनस्य तथा । नच तत्प्रतिपादनमनावश्यकमिति वाच्यं, विनाशी अविनाशी चेति द्वावेव हि पदार्थौ । तदतिरिक्तपदार्थाभावात् । नहि विनाशाविनाशावेकस्मिन् स्तः, येन तदुभयात्मकं पदार्थान्तरं स्यात् । तत्र कार्यजातं सर्वं विनाशिपदार्थः । स क्षरस्सर्वाणि भूतानीत्यनेनोक्तः । अविनाशी तु द्विविधः- चिदचिद्भेदात् । नहि चेतनादचेतनाच्चान्यद्वस्त्वस्ति, तदुभयात्मकं तदुभयविलक्षणं वा । नच तदुभयविलक्षण ईश्वरोऽस्तीति वाच्यं, चेतनत्वेनेश्वरस्य तद्विलक्षणत्वासम्भवात् । द्रष्टा हीश्वरस्त्वयाप्यभ्युपगतः । कथमचेतनस्य द्रष्टृत्वम् ? तस्मादविनाशी द्विविध एव- चिदचिद्भेदात् । तत्र चोत्तम इति श्लोकेन चित्प्रतिपाद्यते । अचित्तु न केनापीति कृत्वा प्रतिपाद्यस्याप्रतिपादनं दोष एव ।

तथा एक एव चित्पदार्थः कूटस्थ इति वाक्येनापि प्रतिपाद्येत चेत्पुनरुक्तिदोषश्च । नच न पुनरुक्तिदोषः, यथाऽविनाशी पदार्थो द्विविधः तथा चित्पदार्थोऽपि द्विविध एव जीवेश्वरभेदात् । तत्र जीवः कूटस्थवाक्येनेश्वरः परमात्मवाक्येन च प्रतिपाद्यत इति वाच्यं, 'परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः पर' इति परमात्मवाक्यस्यापि जीवप्रतिपादकत्वात् । कूटस्थवाक्यस्यापि निर्विकारेश्वरप्रतिपादकत्वाच्च । 'एतस्य वाऽक्षर'स्येति श्रुतिर्ह्यक्षरशब्दमीश्वरं परं ब्रूते । नच तत्तत्प्रकरणादिवशात्तत्तच्छब्दानां तत्तदर्थविशेषवाचकत्वमिति प्रकृतेऽक्षरशब्दः कूटस्थशब्दश्च जीवपर एव । परमात्मशब्दस्तु ईश्वरपर एवेति वाच्यं, चित्पदार्थस्येश्वरस्याचित्पदार्थाद्वैलक्षण्यसत्त्वेऽपि चित्पदार्थाज्जीवाद्वैलक्षण्यस्य दुर्वचत्वेन 'उत्तमः पुरुषस्त्वन्य' इति कथनस्यासङ्गतत्वापत्तेः । नच ज्ञानैकाकारयोरपि जीवेश्वरयोर्धर्मतो भेदोऽस्तीति वाच्यं, निर्धर्मकत्वाच्चैतन्यस्य जीवेश्वरस्वरूपभूतस्य । प्रकृतिवियुक्तं हि मुक्तप्राप्यमात्मस्वरूपं सच्चिदानन्दं सुखादिसंसाररहितं सर्वज्ञं चेति त्वयाप्यभ्युपगमः । तस्मान्न सर्वज्ञत्वकिञ्चिद्ज्ञत्वप्रयुक्तोऽपि जीवेश्वरभेदोऽस्ति । नच सर्वज्ञं यदि चैतन्यं तर्हि सधर्मकमेवेति वाच्यं, सर्वज्ञत्वं सर्वावभासत्वं तच्चानुभवमात्रं चैतन्यमेवेत्यभ्युपगमात् । तस्मादिह कूटस्थवाक्यमविनाश्यचिद्द्रव्यमेव प्रतिपादयति, न त्वात्मानं तस्योत्तरवाक्येन प्रतिपादयिष्यमाणत्वादिति नात्र जीवेश्वरभेदकल्पनं न्याय्यमिति स्थितमद्वैतम् ॥१६॥

उत्तम इति । सोऽन्य उत्तमः पुरुषस्तु परमात्मेत्युदाहृतः । अव्यय ईश्वरो यः लोकत्रय-

परमश्चासौ देहाद्यविद्याकृतात्मभ्यः, आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु । स एव विशिष्यते । यो लोकत्रयं भूर्भुवस्सुवराख्यं स्वकीयया चैतन्यबलशक्त्याऽऽविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण बिभर्ति धारयति । अव्ययः-

---

माविश्य बिभर्ति । अन्यत्वपूर्वोक्तक्षराक्षरापेक्षयेत्याह—आभ्यामिति । उपाधिसंसृष्टस्योपाध्यन्यत्वायोगादाह—अस्पृष्ट इति । निरुपाधिक इत्यर्थः । कार्योपाधिकारणोपाधिद्वयरहित इति यावत् । अत एव नित्यशुद्धबुद्धमुक्तस्वभावः; अत एव पूर्वोक्तपुरुषद्वयादयमुत्तमः पुरुष इत्याह—उत्तम इति । पूर्णत्वात्पुरि देहे शयनाद्वा पुरुषः । क्षराक्षरयोरुपाध्योस्तु पुरुषभोग्यत्वात्पुरुषत्वम् । न च पुरुषशब्दस्य जीववाचित्वाद्बद्धमुक्तजीवौ द्वावेव क्षराक्षरपुरुषाविति वाच्यं, 'स वा एष पुरुषोऽन्नरसमय' इति श्रुत्या देहस्यापि पुरुषत्वस्योक्तत्वात् । अस्यां पुर्युपाधौ शेते परमात्मेति, पुरुष इति व्युत्पत्त्या च पुरुषशब्दः क्षराक्षरोपाधिपरः । अत्यन्तेति । प्रकृतेस्तत्कार्यस्य च जडत्वादनृतत्वाद्दुःखत्वाच्च परमात्मनश्चेतनत्वात्सत्यत्वादानन्दत्वाच्च वैलक्षण्यमत्यन्तमित्यर्थः । सच्चिदानन्दं ब्रह्मेत्यादिश्रुतेरिति भावः ।

देहादीति । देहादिरूपेभ्योऽविद्याकृतेभ्य आत्मभ्य आत्माभासेभ्य इत्यर्थः । देहात्मेन्द्रियात्म मनआत्म बुद्ध्यात्माव्यक्तात्मभ्य इति यावत् । परम उत्कृष्ट अकल्पितत्वादिति भावः । आत्मा सर्वभूतानामन्तरात्मा । केन रूपेणेत्यत आह—प्रत्यक्त्वेनेति । कथमात्मत्वमत आह—चेतन इति । आत्मा हि सर्वं चेतयति, स्वभासा चेतयितृत्वस्यैवात्मधर्मत्वात् । 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेः । ननु परमात्मशब्दादभिधया अक्लेशेन परिपूर्णचैतन्येश्वरवाचिनः क्लेशेन प्रत्यगात्मार्थाकर्षणमयुक्तमिति चेत्, मैवम्—'परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः पर' इति पूर्वानुरोधात् । परिपूर्णचैतन्यस्यैव प्रत्यगात्मत्वाच्चोपाधिवशात् । किंच 'यो लोकत्रयमाविश्य'येति सर्वभूतान्तःप्रवेशेन लिङ्गेन सर्वान्तरचैतन्यमेवेह गृहीतुमुचितम् । क्वोदाहृतोऽत आह—वेदान्तेष्विति, विशिष्यत इति । विशेषणविशिष्टतया प्रतिपाद्यत इत्यर्थः । तस्यैव कश्चिद्विशेषणविशेषः(धर्मविशेषः) कथ्यत इति यावत् । स्वकीयया स्वाभाविक्येत्यर्थः । मायामय्येति यावत् । बलशक्त्या सहेति शेषः ।

अयम्भावः—परमात्मा निर्विशेषचिन्मात्रोऽपि मायया ज्ञानबलक्रियाशक्तियुक्तप्रत्यग्रूपेण सर्वान्तरात्मा सन् ज्ञानशक्त्या सर्वं चेतयति, बलशक्त्या सर्वं बिभर्ति, यथा अपतितं स्यात्तथा बिभर्तीत्यर्थः । क्रियाशक्त्या तु सर्वं कर्म कारयतीति । तत्र बलशक्तिकार्यमिहोच्यते- 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इति । कथं बिभर्तीत्यत आह—स्वरूपेति । बिम्बप्रतिबिम्बभावविशिष्टमन्तःकरणावच्छिन्नं वा चैतन्यमिह स्वरूपशब्दार्थः, नतु शुद्धं तस्य मृतशरीरेऽपि सत्त्वात्तेन मृतशरीरस्याधृतत्वाच्च । एतेनौपाधिकमेवेदं लोकत्रयभरणमात्मन इति सिद्धम् । मात्रपदाद्राष्ट्रभरणे राज्ञ इव लोकत्रयभरणेनात्मनः कोऽपि प्रयत्नादिरिति सूच्यते । तत्रश्च निर्विकारत्वं सिध्यति ।

नास्य व्ययो विद्यत इत्यव्ययः। कः ? ईश्वरस्सर्वज्ञो नारायणाख्य ईशनशीलः ॥१७॥

यथा व्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धं तस्य नामनिर्वचनप्रसिद्ध्या अन्वर्थत्वं नाम्नो दर्शयन् 'निरतिशयोऽहमीश्वर' इत्यात्मानं दर्शयति भगवान्—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥

यस्मादिति। यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तः; अहमक्षरादपि संसारमायावृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वा। अतस्ताभ्यां क्षराक्ष...

---

नच लोकत्रयवर्तिचराचरभूतसङ्घात एव प्रत्यगात्मना ध्रियते ननु लोकत्रयमिति वाच्यं, लोकत्रयशब्दस्यात्र तद्वर्तिभूतसङ्घाते लाक्षणिकत्वात्। नच चतुर्दशलोकसत्त्वात्कथं लोकत्रयमिति वाच्यं सर्वेषां त्रिष्वेवान्तर्भावात्। अव्ययोऽविक्रिय इत्यर्थः। ईश्वरशब्दार्थमाह—ईशनशील इति। ईशनं नियमनं तस्य च ज्ञानपूर्वकत्वादाह—सर्वज्ञ इति। सर्वावभासक इत्यर्थः। मायया सर्वं वेत्तीति वा। तस्य च प्रसिद्धं नाम निर्दिशति—नारायणाख्य इति। नारस्य भूतसङ्घस्यायनं प्रवृत्तिर्यस्मात्स नारायणः। प्रत्यगात्मना विधृत एव सन् भूतसङ्घः प्रवर्तते हि। इदमेवोक्तं- 'यो लोकत्रयमाविश्य बिभर्ती'ति। तस्मात्प्रत्यगात्मैव नारायणः। नारस्यायनं स्थितिर्यस्मिन्स नारायण इति व्युत्पत्त्या परमात्मापि नारायण एव। अत एव 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुतेः। एवं नारायणाख्यं परिपूर्णमेकमेव चैतन्यं सर्वं भूतसङ्घं प्रत्यग्रूपेण प्रविश्य बलशक्त्या धारयत्सत् क्षराक्षरविलक्षणपुरुषोत्तमशब्दवाच्यं भवतीति फलितोऽर्थः। कार्यप्रकृतिः क्षरपुरुषः, कारणप्रकृतिरक्षरपुरुषः, प्रत्यगभिन्नः परमात्मा तूत्तमपुरुष इति विवेकः। श्लोकस्यान्यः परमात्मा तूत्तमः पुरुष इत्युदाहृत इत्यप्यन्वयस्सम्भवति।

यत्तु रामानुजः—क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्यः पुरुषोत्तम ईश्वरः परमात्मा, अचेतनं बद्धमुक्तजीवौ चेति लोकत्रयं य आत्मतयाऽऽविश्य बिभर्ति, अव्ययत्वादीश्वरत्वाच्च व्यापकत्वाद्भर्तृत्वाच्च लोकत्रयादर्थान्तरभूत ईश्वर इति, तत्तुच्छम्—असङ्गपुरुषस्याचित्संयोगवियोगाभावेन बद्धत्वमुक्तत्वावस्थयोरसम्भवात्। निरुपाधिकस्य च मुक्तात्मनस्सव्ययत्वानीश्वरत्वायोगात्। अपि च काकारयोर्जीवेश्वरयोरेकपदार्थत्वेन पदार्थद्वित्वायोगाज्जीवादीश्वरो नार्थान्तरभूतः। अत एवोक्तं हि 'ममैवांशो जीव' इति भगवता। यश्च तस्यापि रामानुजेन दर्शितोऽपार्थस्स तत्रैव परिहृतः ॥१७॥

यस्मादिति। अहं यस्मात्क्षरमतीतो यस्माच्चाक्षरादप्युत्तमः, अतोऽहं लोके वेदे च पुरुषोत्तम इति प्रथितोऽस्मि। ऊर्ध्वमूलमित्युपक्रमादुपसंहारेऽपि तं स्मारयति—संसारेति। सर्वेभूतमयस्संसारवृक्षः क्षरपदार्थः, तमतीतोऽतिक्रान्तः क्षरादुत्तम इत्यर्थः। बीजेति। यद्यप्यूर्ध्वमूलमिति सामान्येन ब्रह्मैव मूलमित्युक्तं, तथापि तत्र मायांशस्यैव बीजत्वमिति बोध्यम्। निर्विशेषचिन्मात्रस्य जगद्बीजत्वा...

राभ्यामुत्तमत्वादस्मि भवामि। लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः। कवयः काव्यादिषु चेदं नाम निबध्नन्ति पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥१८॥

अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते—

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत! ॥१९॥

य इति। यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासम्मूढः सम्मोहवर्जितस्सन् जानाति 'अयमहम'स्मीति पुरुषोत्तमं स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचित्ततया हे भारत! ॥१९॥

---

भावादक्षरादव्यक्तादित्यर्थः। उत्कृष्टतम इति। सच्चिदानन्दरूपत्वादिति भावः। ऊर्ध्वतम इति। 'तमसः परस्ता'दिति श्रुतेरिति भावः। सबीजात्संसारमण्डलादुपरि वर्तते, नतु तदन्तर्देहादिपदार्थवदिति परमार्थः। अत इत्यस्यार्थं स्वयमेवाह—ताभ्यामिति। पुरुषाभ्यां द्वाभ्यां क्षराक्षराभ्यामुत्तमः पुरुषोत्तम इति निरुक्तिः। पुरुषेषु क्षराक्षरपरमात्मसु त्रिषु मध्ये उत्तमः पुरुषोत्तम इति निरुक्तिरप्यस्ति, तस्या अप्यत्रैव पर्यवसानं बोध्यम्। लोके प्रसिद्धिं दर्शयितुं कवय इत्यादिकमुक्तम्। सच 'तेन विना निद्रां लभते पुरुषोत्तम' इत्यादिकाव्ये प्रयोगः ॥१८॥

य इति। य एवमसम्मूढस्सन् मां पुरुषोत्तमं जानाति, हे भारत! स सर्वविद्भवति, मां सर्वभावेन भजति। सम्मोह आत्मानात्माऽविवेकः। ज्ञानप्रकारं दर्शयति—अयमहमस्मीति। पुरुषोत्तमं प्रत्यगभिन्नं परमात्मानं परमात्माभिन्नं प्रत्यगात्मानमिति वा, क्षराक्षरविलक्षणं चैतन्यमिति परमार्थः। सर्वभावेनेति। आत्मैवेदं सर्वमिति बुध्येत्यर्थः। सर्वात्मकतयेति। सर्वात्मभावेनेत्यर्थः। मां परमात्मानं भजति प्राप्नोति, परमात्मसायुज्यं लभते। निर्मुक्तोपाधिस्सन् परिपूर्णचैतन्यात्मनाऽवतिष्ठत इति यावत्। यः परमात्माभिन्नं प्रत्यगात्मानमयमहमस्मीति साक्षात्कुरुते तस्य ज्ञातव्यांशशेषाभावात्सर्ववित्त्वं देहावसाने परमात्मसायुज्यं च भवतीति फलितार्थः। यद्वा भजति सेवते, तथा च य एवमात्मानमपरोक्षतया वेद स विद्वान् यावद्देहापायं सर्वं विषयजातं सेवमानोऽपि स्वसेव्यमानं सर्वं तद्ब्रह्मेत्येव वेदेति ब्रह्मैव सेवते। ब्रह्म हि सर्वात्मकं 'सर्वं ब्र'ह्मेति श्रुतेरिति फलितार्थः।

यत्तु रामानुजः—ईश्वरं पुरुषोत्तमं ज्ञात्वा सर्वप्रकारैर्भजते जीव इति, तन्मन्दम्—अशेषाधारस्य सेव्यमानत्वात् ॥१९॥

अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वा, अथेदानीं तत्स्तौति—

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ !
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत! ॥२०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे पुरुषोत्तमप्राप्तियोगो
नाम पञ्चदशोऽध्यायः ।

इतीति । इत्येतद्गुह्यतमं गोप्यतममत्यन्तरहस्यमित्येतत् । किं तत् ? शास्त्रम् । यद्यपि गीताख्यं समस्तं 'शास्त्र'मुच्यते; तथाप्ययमेवाध्याय इह 'शास्त्र'मित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तः, न केवलं गीताशास्त्रार्थ एव । किंतु सर्वश्च वेदार्थ इह परिसमाप्तः 'यस्तं वेद स वेदवित्', 'वेदैश्च सर्वैरहमेव वेद्यः' इति चोक्तम् । इदमुक्तं कथितं मया हे अनघ! अपाप! एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्याद्भवेन्नान्यथा । कृतकृत्यश्च भारत! कृतं कृत्यं कर्तव्यं येन स कृतकृत्यः; विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न

---

इतीति । हे अनघ! इतीदं गुह्यतमं शास्त्रं मयोक्तम् । हे भारत! मुमुक्षुरेतद्बुद्ध्वा बुद्धिमान् कृतकृत्यश्च स्यात् । मोक्षः फलं यस्य तन्मोक्षफलम् । ननु गीताशास्त्रे असमाप्ते सत्येव कथमुक्तमिदं शास्त्रमितीत्यत आह—यद्यपीति । ननु कथमस्याध्यायस्यैकस्य शास्त्रत्वमत आह—सर्वो हीति । क्षराक्षरपरमात्मव्यतिरिक्तगीताशास्त्रार्थाभावादिति भावः । इहास्मिन्नध्याये । कुतः परिसमाप्तोऽत आह—यस्तमिति । समूलसंसारविद एव वेदार्थवित्त्वाद्वेदार्थस्य समूलसंसारस्येहोक्तत्वाच्चेति भावः । कारणान्तरमाह—वेदैश्चेति । सर्ववेदवेद्यस्य सर्ववेदार्थभूतस्य परमात्मन इह प्रतिपादितत्वादिति भावः । तव निष्पापत्वादेतच्छ्रवणं जातमित्याह—हे अनघेति । यथादर्शितार्थं यथोक्तार्थकमित्यर्थः । दर्शितमर्थमनतिक्रम्येति वा । बुद्धिमान् सदसद्विवेकशालीत्यर्थः । पण्डित इति यावत् । अनात्मविवेकेनात्मविदिति परमार्थः । अन्यथेति । एतच्छास्त्रमविदित्वेत्यर्थः । एतच्छास्त्रार्थमन्यथा विदित्वेति वा । विशिष्टजन्म सद्वंशः । ब्राह्मणेनेति । सन्न्यासिनेत्यर्थः । 'ब्राह्मणस्य विजानत' इत्यत्र तथा व्याख्यातत्वादाचार्यैः । सन्न्यासिनामेव गीताशास्त्रेऽधिकाराच्च । यत्कर्तव्यमिति । स्वाश्रमविहितं कर्मेत्यर्थः । यद्वा सन्न्यासाश्रमस्वीकारात्प्राग्यत्कर्तव्यं यज्ञादिकमस्ति तत्सर्वं सन्न्यासाश्रमं स्वीकृत्य प्रकृतशास्त्रार्थवेदने सति तेन कृतमेव भवतीत्यर्थः ।

अथवा कलियुगे क्षत्रवैश्ययोश्शूद्रप्रायत्वाद्ब्राह्मणेनेत्युक्तं, ततश्च ब्राह्मणेन द्विजेन यत्कर्तव्यं यज्ञादिकं तत्सर्वं सन्न्यासाश्रमस्वीकारद्वारा वेदान्तश्रवणं कृत्वा भगवत्तत्त्वे विदिते सति कृतं भवे-

चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः· 'सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते' इति चोक्तम् । 'एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति च मानवं वचनम् । यत एतत्परमार्थतत्त्वं मत्तश्श्रुतवानसि; ततः कृतार्थस्त्वं भारत ! इति ॥२०॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये पुरुषोत्तमप्राप्तियोगो नाम पञ्चदशोऽध्यायः ।

---

दित्यर्थः । एतेन ब्राह्मणस्यैव गीतास्वधिकारो नान्येषां, नापि स्त्रीणामिति सिद्धम् । असन्यासिनामपि ब्राह्मणानां क्वचिद्वेदान्तशास्त्रेऽधिकारदर्शनाद्गृहस्थादीनामपि ब्राह्मणानां वेदान्तपाठ इव गीतापाठेऽप्यस्त्यधिकारः, तदर्थविचारे च । भाष्यकाराणां तु वेदान्तानां गीतानां वा पाठमात्र एवासन्यासिनामधिकारः, अर्थविचारे तु सन्न्यासिनामेवेति मतम् । स्त्रीशूद्रादीनां पाठमात्रेऽपि गीतानां वेदानामिव नाधिकार इति सर्वेषां सम्मतं- 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति स्मरणात्त्रयीतुल्यत्वाच्च गीतायाः, भगवद्गीतासूपनिषत्स्विति ह्युच्यते ।

अन्यथेति । भगवत्तत्त्ववेदनं विनेत्यर्थः । ज्योतिष्टोमादौ कृतेऽपि चयनादेः कर्तव्यस्यावशिष्यमाणत्वादिति भावः । उक्तार्थे गीतामेव प्रमाणयति—सर्वमिति । मनुस्मृतिं च प्रमाणयति—एतदिति । यद्विष्णोर्लिङ्गधारणमिति पाठान्तरम् । विष्णोर्लिङ्गं सन्न्यासस्तद्धारणमिति यत्तदेतदेव जन्मसामग्र्यं जन्मनस्सामग्र्यं साफल्यं यस्मात्तत्तथोक्तं सन्न्यासिनां तत्त्वविदामेव जन्मफलमन्येषां तु पश्वादिजन्मवद्व्यर्थमेवेत्यर्थः । अकृतकृत्यत्वादज्ञानामिति भावः । एतत्तत्त्वश्रवणादर्जुनोपि कृतकृत्य एवेत्याह—यत इति । एतेन येषामेतदध्यायार्थश्रवणं भवति, ते सर्वेपि कृतार्था एवार्जुनवदिति सूच्यते ।

इदं च भारतेति सम्बोधनसूचितमिति न निर्मूलं भाष्यम् । क्षत्रियाणामसन्न्यासिनामपि गीतार्थश्रवणाधिकारोऽस्तीति भगवताऽर्जुनाय गीतार्थस्योपदेश एव सूचयतीति कृत्वा कथमर्जुनाय कृष्णेनोक्तमिति न शङ्कनीयमिति । अयं चाध्यायस्सर्वगीतार्थवेदार्थपरिसमाप्तिमत्त्वेनोत्कृष्ट इति कृत्वा सर्वगीताशास्त्रपारायणासमर्थाश्शिष्टा इममध्यायमन्वहं पठन्ति । एतत्पाठवशाच्च सर्वपापविनिर्मुक्ता इहजन्मनि जन्मान्तरे वा शमदमादिपूर्वकं सन्न्यासमुपलभ्य वेदान्तश्रवणादिना तत्त्वं ज्ञात्वा मुक्तिं यास्यन्तीति कृत्वा एतत्पाठोऽपि क्रमेण कृतकृत्यताहेतुरेव । तस्मात्सर्वैरपि मुमुक्षुभिः पठनीयोऽयमध्यायसर्वथा श्रोतव्यश्चास्यार्थश्चिन्तनीयश्च । धन्योऽस्म्यहं यदेतदध्यायभाष्यार्थविवरणं लब्धं मम । ये चैतत्पश्यन्ति, वदन्ति, शृण्वन्ति तेच धन्या एव । एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्चेत्युक्तत्वेन ज्ञानमात्रमेव कृतकृत्यत्वकारणं, नतु कर्मज्ञानसमुच्चय इति सूचितम् । ततश्च- 'तरति शोकमात्मवि'दिति

श्रुत्यनुसारो गीतायास्सिध्यति । अत एवोपनिषत्त्वौरयं गीताया उपनिषद्भेदश्च । उपनिषदर्थप्रतिपादकत्वाद्गीताया इति ॥२०॥

पुरुषोत्तमप्राप्तिः- परमात्मस्वरूपप्रतिपादनमिति यावत् । पुरुषोत्तमस्य प्राप्तिर्यस्मात्तत्पुरुषोत्तमप्राप्तिज्ञानं तस्य योगस्सम्बन्धो यत्र स पुरुषोत्तमप्राप्तियोगः । पुरुषोत्तमप्राप्तिर्मोक्षः, तत्प्रदायकः प्रकृताध्यायार्थश्च पुरुषोत्तमप्राप्तिरुच्यत इति वा; ये गत्यर्थास्ते ज्ञानार्थका इति प्राप्तिर्ज्ञानमित्यर्थ इति वा। क्षराक्षरपुरुषाभ्यामुत्तमस्य पुरुषस्य परमात्मन इह प्रतिपादितत्वादस्याध्यायस्य पुरुषोत्तमप्राप्तियोग इति नामकृतमिति भावः ।

इति श्रीवेलङ्कोण्डोपनामक रामकविकृतौ श्रीभगवद्गीताभाष्यार्कप्रकाशे पुरुषोत्तमप्राप्तियोगो नाम पञ्चदशोऽध्यायः ।

श्रीहयग्रीवार्पणमस्तु ।

सौम्यचैत्रबहुलचतुर्दशी ।



श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## षोडशोऽध्यायः ।

दैवी आसुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः । तासां विस्तरेण प्रदर्शनाय 'अभयं सत्त्वसंशुद्धि'रित्यादिरध्याय आरभ्यते । तत्र संसारमोक्षाय दैवी प्रकृतिः, निबन्धायासुरी, राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियते; इतरयोः परिवर्जनाय च—

श्रीभगवानुवाच—

> अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
> दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥

अभयमिति । अभयमभीरुता, सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संशुद्धिः संव्यवहारेषु परवञ्चनामायानृतादिपरिवर्जनं शुद्धसत्त्वभावेन व्यवहार इत्यर्थः । ज्ञानयोगव्यवस्थितिर्ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमः; अवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्म-

---

प्रकृतयस्स्वभावाः । नवम इति । 'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ! दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्यय'मिति तत्रोक्तत्वादिति भावः । संक्षेपेणोक्तार्थस्य विस्तरेण कथनमिह प्रकृतिरिति बोध्यम् । किमर्थं तत्प्रदर्शनमत आह—तत्रेति । प्रकृतित्रयमध्य इत्यर्थः । संसारेति । 'दैवी सम्पद्विमोक्षाय निबन्धायासुरी म'तेति वक्ष्यमाणत्वादिहैवेति भावः । आदानायेति । धर्मवत्स्वीकारायेत्यर्थः । इतरयो राक्षस्या आसुर्याश्चेत्यर्थः । परिवर्जनायेति । अधर्मवदिति भावः । दैवी विज्ञाता ग्रहणायोग्या, आसुरी राक्षसी च विज्ञाता परित्यागयोग्येति तद्विज्ञानमावश्यकमिति तद्विज्ञानार्थमाह भगवानिममध्यायं षोडशमिति भावः । अभयमिति । 'द्वितीयाद्वै भयं भव'तीति श्रुतेरद्वितीयब्रह्मज्ञानसाध्यमिदमभयं भयाभावः । देहादिकं सर्वमनित्यमिति निश्चयाद्व्याध्यादिभ्यो भयाभावोऽभयमिति वा । न तु नास्तिकवन्नरकादेर्भयाभाव इहाभयमित्युक्तमिति भ्रमितव्यं- तस्यासुरसम्पद्विषयत्वात् । शुद्धसत्त्वभावेनेति । निष्कापट्येनेत्यर्थः । अन्तरेकमर्थं निधाय बहिरन्यार्थस्य कथनं कपटस्वभावः, तद्विपरीतोऽयं शुद्धसत्त्वस्वभावः । यदन्तर्बहिश्चैकरूप्येण वर्तनम् । स्वात्मसंवेद्य-

संवेद्यतापादनं योगः। तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठता। एषा प्रधाना दैवी सात्त्विकी सम्पत्। यत्र येषामधिकृतानां या प्रकृतिस्सम्भवति सात्त्विकी सा उच्यते। दानं यथाशक्तिसंविभागोऽन्नादीनाम्। दमश्च बाह्यकरणानामुपशमः, अन्तःकरणस्योपशमं शान्तिं वक्ष्यति। यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः; स्वाध्याय ऋग्वेदाध्ययनमदृष्टार्थं; तपो वक्ष्यमाणं शारीरादि; आर्जवमृजुत्वं सर्वदा ॥१॥

किंच—

अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥

अहिंसेति। अहिंसाऽहिंसनं प्राणिनां पीडावर्जनम्। सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम्। अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनम्। त्यागः

---

तापादनं स्वानुभवापादनम्। एषेति। अभयादित्रिकमित्यर्थः। का दैवीत्यत आह—सात्त्विकीति। सात्त्विकीं लक्षयति—यत्रेति। यत्र च ब्रह्मचर्याग्निहोत्रादौ येषां ब्रह्मचारिगृहस्थादीनां, यत्र वा इज्याध्ययनयुद्धादौ येषां ब्राह्मणक्षत्रियादीनामिति वा। या प्रकृतिस्स्वभावः प्रवृत्तिरिति यावत्, सम्भवति सा सात्त्विकीत्युच्यते। स्वस्ववर्णाश्रमविहितानुष्ठानं सात्त्विकी प्रकृतिरित्यर्थः। शक्तिमनतिक्रम्य यथाशक्ति, स्वशक्त्यनुगुणमित्यर्थः। अन्नादीनामन्नधान्यधनादीनां संविभागोऽर्थ्यादिभ्यो यथार्हं विभजनम्। उपरमो निर्व्यापारता। वक्ष्यतीति। शान्तिरित्यनेनेति भावः। अदृष्टार्थमिति। आमुष्मिकफलकमित्यर्थः। इदं विशेषणं स्वाध्याये तपसि चान्वेति। शारीरादिति। 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥ मनःप्रसादस्सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते' इत्यनन्तराध्याये वक्ष्यति। ऋजुत्वमवक्रत्वं, सरलस्वभाव इति यावत् ॥१॥

अहिंसेति। न हिंसाऽहिंसा हिंसाभावः। अप्रियानृतवर्जितमिति। अप्रियानृताभ्यामन्यदित्यर्थः। यदप्रियं न भवति, यच्चानृतं न भवति तदिति यावत्। प्रियं नामात्र हितं, न त्विष्टं यथाभूतार्थवचनस्यापि केषाञ्चित्पिशुनादीनामनिष्टत्वात्। अनिष्टमपि हितमेव चोरस्यापि सत्यवचनं राजदण्डनेन पापक्षयादिति। यद्वा अप्रियानृतवर्जितमप्रियत्वानृतत्वरहितम्। तथा च स्मर्यते 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मस्सनातन' इति। यथाभूतार्थवचनमिति। यथाभूतप्रियार्थवचनमित्यर्थः। योऽर्थो यथाभूतस्तस्यार्थस्य प्रियस्य तथैव कथनमिति यावत्। यथाभूतस्याप्यप्रियस्य वर्जनाय प्रियस्येत्युक्तम्। प्रियस्याप्यनृतस्य वर्जनाय यथाभूतार्थस्येत्युक्तम्। यथाभूतप्रियार्थवचनं यथाभूतहितार्थवचनं वा सत्यमिति फलितार्थः। अप्रियानृतवर्जितं वचनं सत्यमित्य-

सन्न्यासः; पूर्वं दानस्योक्तत्वात् । शान्तिरन्तःकरणस्योपशमः । अपैशुनमपिशुनता- परस्मै पररन्ध्रप्रकटीकरणं पैशुनं, तदभावोऽपैशुनम् । दया कृपा भूतेषु दुःखितेषु । अलोलुप्त्वमिन्द्रियाणां विषयसन्निधावविक्रिया । मार्दवं मृदुताऽक्रौर्यम् । ह्रीर्लज्जा । अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥२॥

किंच—

तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत! ॥३॥

तेज इति । तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः । क्षमाऽऽक्रुष्टस्य ताडितस्य वाऽन्तर्विक्रियानुत्पत्तिः, उत्पन्नायां विक्रियायामुपशमनमक्रोध इत्यवोचाम । इत्थं क्षमाया अक्रोधस्य च विशेषः । धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषः, येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति । शौचं द्विविधं- मृज्जलकृतं बाह्यमाभ्यन्तरं

---

च्यते। अप्रियानृतवर्जितमित्यस्यैव व्याख्यानं यथाभूतार्थवचनमिति विवेकः। अन्यथाऽनृतवर्जितमित्यनेनैव यथाभूतार्थसिद्धौ यथाभूतेत्यस्य पुनरुक्तिस्स्यात् । यथाभूतेत्यनेनैवानृतवर्जितत्वसिद्धावनृतवर्जितमित्यस्य वा पुनरुक्तेः । अप्रियवर्जितं यथाभूतार्थकथनमिति भाष्यपाठस्तु निरवद्यः । यथाभूतप्रियार्थकथनं सात्त्विकस्वभावः । तेन यस्सात्त्विकीं दैवीं सम्पदमिच्छति प्राप्तुं स पुरुषो यथाभूतप्रियार्थमेव ब्रूयात् ।

रामानुजेनाप्युक्तं सत्यं- यथादृष्टार्थगोचरभूतहितवाक्यमिति । यद्यपि यथाभूतार्थवचनेनैव सत्यपदी भवति, तथापि सत्यं भूतहितं प्रोक्तमिति नियमाद्यथाभूतोक्तिरिति वेदान्तदेशिकेनाप्युक्तम् । यं तु वाक्यमिति कथनमयुक्तं रामानुजस्य । वाक्यप्रयोगस्यैव सात्त्विकपुरुषधर्मत्वं ननु वाक्यमिति । आक्रुष्टस्याधिक्षिप्तस्याभिहतस्य ताडितस्य वा सतः स्वस्य यः प्राप्तः क्रोधस्तस्योपशमनमक्रोधः । सन्न्यासः कर्मणां तत्फलस्य वा परित्यागः । ननु द्रव्यत्याग इत्याह—पूर्वमिति । पिशुनस्सूचकः । रन्ध्राणि दोषाः । लज्जेति । आत्मगुणश्रवणादिष्विति भावः । अकार्यकरण इति रामानुजः, तदसत्—अकार्यकरणेच्छाप्रसक्तेरप्यभावात्सात्त्विकपुरुषस्य । अव्यापारयितृत्वं वचनादिव्यापाराजनकत्वम् ॥२॥

तेज इति । प्रागल्भ्यं पराभिभवनसामर्थ्यं प्रौढत्वमिति यावत् । ननु देहकान्तिरित्याह—नेति । अन्तर्विक्रिया मनोविकारो दुःखामर्षादिः । उत्पन्नविकारोपशमनमक्रोधः; विकारानुत्पत्तिः क्षमेति विवेकमाह—उत्पन्नायामिति । सत्यामिति शेषः । उपशमनमिति । विक्रियाया इति शेषः । उत्पन्नाया विक्रियाया उपशमनमिति भाष्यपाठस्समीचीनः । अवसादं शैथिल्यं तस्यावसादस्य । उत्तम्भितान्युच्छ्वसितानि करणानीन्द्रियाणि समनस्कानि नावसीदन्ति; देहश्च नावसीदति । द्विविधमिति । बाह्यमाभ्यन्तरं चेति भावः । माया वञ्चनादिः; रागः कामः; आदिशब्दात्क्रोधादे-

मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः, एवं द्विविधं शौचम्। अद्रोहः परजिघांसाभावोऽहिंसनम्। नातिमानिताऽत्यर्थं मानोऽतिमानः, स यस्य विद्यते सोऽतिमानी, तद्भावोऽतिमानिता, तदभावो नातिमानिता; आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः। भवन्त्यभयादीन्येतदन्तानि सम्पदमभिजातस्य। किं विशिष्टां सम्पदम्? दैवीं देवानां या सम्पत्तामभिलक्ष्य जातस्य देवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थः। हे भारत! ॥३॥

अथेदानीमासुरी सम्पदुच्यते—

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ! सम्पदमासुरीम् ॥४॥

दम्भ इति। दम्भो धर्मध्वजित्वम्। दर्पो विद्याधनस्वभिजनादिनिमित्त उत्सेकः। अतिमानः पूर्वोक्तः। क्रोधश्च। पारुष्यमेव च परुषवचनं यथाकाणं चक्षुष्मान् विरूपं रूपवान् हीनाभिजनमुत्तमाभिजन इत्यादि। अज्ञानं चाविवेकज्ञानं मिथ्याप्रत्ययः। कर्तव्याकर्तव्यादिविषयमभिजातस्य पार्थ! किमभिजातस्येत्याह—सम्पदमासुरीमसुराणां सम्पदम् तामभिजातस्येत्यर्थः ॥४॥

---

ग्रहणम्। अहिंसेत्यनेन परद्रोहः प्रतिषिद्धः। अद्रोह इत्यनेन परद्रोहेच्छैव प्रतिषिध्यत इति भेदः। अतिमानिताया अभावो नातिमानिता, पूज्यतातिशयस्य भावनं प्रकटनं तदभाव आत्मश्लाघाराहित्यमित्यर्थः। अभिलक्ष्योद्दिश्य, भावि भविष्यत्कल्याणं देवस्वरूपं यस्य तस्य भाविकल्याणस्य। अभयादय एते देवधर्मा यस्य सात्त्विकपुरुषस्य सन्ति स एतद्देहावसाने देवो भविष्यतीत्यर्थः।

यद्वा कल्याणं स्वर्गापवर्गान्यतरात्मकम्। तथा च यस्याभयादयस्सन्ति स देवविभूतिप्राप्त्यर्हस्सम्यग्दर्शनानुदये देवत्वं प्राप्स्यति। तदुभये च मुक्तिं प्राप्स्यतीत्यर्थः। अथ वा कल्याणं मोक्षः 'दैवी सम्पद्विमोक्षा'येति वक्ष्यमाणत्वात्। देवविभूत्यर्होऽप्ययमभयादिगुणवान् सात्त्विकः पुरुषस्सम्यग्ज्ञानान्मोक्ष्यत इत्यर्थः। एतेन यथा दिवि देवा राक्षसाश्चेति द्वेधा पुरुषास्सन्ति; शान्ताः क्रूराश्च तद्वद्भुव्यपि मनुष्येषु देवा राक्षसाश्चेति द्विविधास्सन्ति। तत्राभयाद्युक्तगुणवन्तः पुरुषा मनुष्या देवाः। दम्भादिवक्ष्यमाणगुणशालिनस्तु मनुष्या राक्षसा असुराश्चेति सिद्धम्। दैवीमभिजातस्येत्यस्य भगवदाज्ञां निर्वर्तयितुं जातस्येति रामानुजोऽर्थमाह- नेदं सम्यक्—हिरण्याक्षादिराक्षसानामपि भगवदाज्ञानिर्वर्तनायैव जातत्वात्। यथाश्रुतार्थं विहायैतल्लाक्षणिकार्थकल्पनस्यान्याय्यत्वाच्च ॥३॥

दम्भ इति। धर्मध्वजित्वं- धर्म एव ध्वजो धर्मध्वजः सोऽस्यास्तीति धर्मध्वजी तत्त्वम्। यथा पार्थादीनां कप्यादयो ध्वजास्तथास्य धर्म एव ध्वज इत्यर्थः। यथा राजानो ध्वजैस्स्वप्रतिष्ठां प्रख्यापयन्ति तथाऽयं धर्मेण स्वप्रतिष्ठां प्रख्यापयतीति भावः। धार्मिकत्वप्रख्यापनाय धर्मानुष्ठानं दम्भ इति यावत्। स्वभिजनस्सत्कुलोत्पत्तिः। आदिपदाद्रूपादिग्रहणम्। उत्सेको गर्वः। पूर्वोक्त इति

अनयोस्सम्पदोः कार्यमुच्यते—

दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचस्सम्पदं दैवीमभिजातोऽसि पाण्डव ! ॥५॥

दैवीति । दैवी सम्पद्या सा विमोक्षाय संसारबन्धनात् । निबन्धाय नियतो बन्धो निबन्धः तदर्थमासुरी सम्पन्मताऽभिप्रेता । तथा राक्षसी च । तत्रैवमुक्ते अर्जुनस्यान्तर्गतं भावं 'किमहमासुरसम्पद्युक्तः ? किं वा दैवसम्पद्युक्तः ? इत्येवमालोचनारूपमालक्ष्याह भगवान्—मा शुचः शोकं माकार्षीः । सम्पदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि; भाविकल्याणस्त्वमसीत्यर्थः । हे पाण्डव ! ॥५॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ॥६॥

द्वाविति । द्वौ द्विसङ्ख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येतेति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसम्पद्द्वययुक्तानीति द्वौ भूतसर्गावित्युच्येते । 'द्वया ह प्राजापत्या देवाश्चासुरा'श्चेति श्रुतेः । लोकेऽस्मिन् संसार इत्यर्थः । सर्वेषां द्वैवि-

---

आत्मनः पूज्यतातिशयभावनेत्यर्थः । क्रोध इष्टवस्तुविघातादिजन्यो मनोविकारः प्रसिद्धः । येन कर्तव्याकर्तव्यविमूढस्सन् मातरं पितरं भ्रातरं सुतं वा हन्ति । परुषवचनं कटुवाक्प्रयोगः । तदेव दर्शयति—यथेति । चक्षुष्मान् काण इति, रूपवान्निरूप इति, उत्तमाभिजनो हीनाभिजन इति च यदुच्यते तद्वचनं परुषमित्यर्थः । गुणवत्यपि पुरुषे दोषमारोप्य दूषणं पारुष्यमिति यावत् । मिथ्याप्रत्ययो भ्रमः; कर्तव्ये विषये अकर्तव्यबुद्धिः, अकर्तव्ये च कर्तव्यबुद्धिरित्यर्थः । आसुरीमित्युपलक्षणं राक्षस्याश्च । असुराणामियमासुरी ॥४॥

दैवीति । ननु दैवी मोक्षहेतुरासुरी संसारहेतुश्चेत्युक्तं, न तु राक्षसी कस्यापि हेतुरिति, अत आह—राक्षसी चेति । राक्षसी च संसारहेतुरेवेत्यर्थः ॥५॥

द्वाविति । अस्मिन्लोके दैव आसुर एव चेति द्वौ भूतसर्गौ स्तः । तत्र मया दैवो भूतसर्गो विस्तरशः प्रोक्तः । हे पार्थ ! आसुरं भूतसर्गं मे वचनाद्विस्तरशः शृणु । आसुरराक्षसयोरभेदाद्द्वावित्युक्तिः । भूतानां सृष्टिर्द्विविधा- दैवी आसुरी चेति । अयं च सृष्टिभेदस्सृज्यमानभूतभेदप्रयुक्त एवेति बोध्यम् । सर्गशब्दस्य भावव्युत्पत्त्या सृष्ट्यर्थमभिधाय कर्मव्युत्पत्त्या अर्थान्तरमाह—सृज्येत इति । भूतान्येव सर्गौ भूतसर्गौ । सृज्यमानदेवासुरसम्पद्द्वययुक्तभूतानीत्यर्थः । सृज्यमानभूतानि द्विविधानि- देवसम्पद्युक्तान्यसुरसम्पद्युक्तानि चेति भावः । तत्र श्रुतिं प्रमाणयति—द्वयाहीति । देवाश्चासुराश्चेति प्राजापत्या द्वया हि । प्रजापतिर्ब्रह्मा, तेन सृष्टाः प्राणिनः प्राजापत्याः । द्वया द्विविधाः, हिः प्रसिद्धौ । ननु जगति देवासुरसम्पद्द्वयरहितपृथिव्यादिभूतसर्गस्याप्यचेतनस्य सत्त्वात्कथं 'द्वौ भूतसर्गौ लोकेऽस्मि'न्नित्युक्तमत आह— संसार इति । संसार चेतनभूतौ भूतसर्गौ

ध्योपपत्तेः। कौ तौ भूतसर्गावित्युच्यते—प्रकृतावेव दैव आसुर एव च। उक्तयोरेव पुन-रनुवादे प्रयोजनमाह—दैवो भूतसर्गः 'अभयं सत्त्वसंशुद्धि'रित्यादिना विस्तरशो विस्तर-प्रकारैः प्रोक्तः कथितः; न त्वासुरो विस्तरशः, अतस्तत्परिवर्जनार्थमासुरं हे पार्थ! मे मम वचनादुच्यमानं विस्तरशश्शृणु अवधारय! ॥६॥

आऽध्यायपरिसमाप्तेरासुरी सम्पत्प्राणिविशेषणत्वेन प्रदर्श्यते, प्रत्यक्षीकरणेन च शक्यते तस्याः परिवर्जनं कर्तुमिति—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥

प्रवृत्तिमिति। प्रवृत्तिं च प्रवर्तनं यस्मिन् पुरुषार्थसाधने कर्तव्ये या प्रवृत्तिस्तां निवृत्तिं चैतद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति। न केवलं प्रवृत्तिनिवृत्ती एव ते न विदुः, न शौचं, नापि चाचारः, न सत्यं तेषु विद्यते; अशौचा अनाचारा मायाविनोऽनृतवादिनो ह्यासुराः ॥७॥

---

द्वावेव। अचेतनानां संसाराविषयत्वादिति भावः। सर्वेषामिति। संसाराश्रयाणां सचेतनाना-मित्यर्थः। देवासुरसम्पदन्यतररहितः कोऽपि प्राणी नास्तीति द्वैविध्यमेव भूतानामिति भावः। कौ तौ भूतसर्गाविति शङ्कायामाह भगवान्—दैव आसुर एव चेति। तौ च नाप्रकृताविस्याह भगवान् भाष्यकारः—प्रकृतावेवेति। दैवासुरसम्पत्प्रदर्शनप्रकरणत्वादस्याध्यायस्येति भावः। तत्परिवर्ज-नार्थमिति, आसुरसम्पत्परित्यागार्थमिति। आसुरसर्गस्य विस्तरेण कथनार्थं दैवासुरयोरिह पुन-रनुवादः कृतः। तच्च कथनमसुरसम्पत्परिवर्जनार्थमिति भावः ॥६॥

आ अध्यायपरिसमाप्तेरिति छेदः। अध्यायपरिसमाप्तिपर्यन्तमसुरसम्पदिह वर्ण्यत इत्यर्थः। प्रवृत्तिमिति। प्राणिविशेषा आसुरसम्पच्छालिन इत्यर्थः। तथा प्रदर्शने फलमाह—प्रत्यक्षेति। तस्या आसुरसम्पदः प्रत्यक्षेण ज्ञाताऽसुरसम्पत्त्यक्तुं शक्यते पुरुषेणेत्यर्थः। आसुरा जनाः प्रवृत्तिं च निवृत्तिं च न विदुः। शौचं च न विदुः। तेष्वाचारोऽपि न विद्यते। सत्यं च न विद्यते। यज्ञादि-विहितकर्मणि प्रवृत्तिं हिंसादिनिषिद्धकर्मणो निवृत्तिं च न विदुरित्याह—यस्मिन्निति। पुरुषार्थस्य स्वर्गादेस्साधने कर्तव्ये यज्ञादिकर्मणि विहिते या प्रवृत्तिः प्रवर्तनं तां तत्कर्मविषयतत्प्रवृत्तिमित्यर्थः। तद्विपरीतामिति। प्रवृत्तिविपरीतामित्यर्थः। अनर्थहेतोर्नरकादिदुःखहेतोरधर्मान्निवर्तितव्यं पुरुषेणेति शेषः। स्वेनेति वा। सा तस्मान्निवर्तनमित्यर्थः। विधेयप्राधान्यात्स्त्रीत्वम्। निवृत्तिरित्युच्यत इति शेषः। तां च निवृत्तिमनर्थहेतोर्निषिद्धकर्मणो निवर्तनमित्यर्थः। आसुरा असुरसम्पच्छालिनोऽसु-रांशजा वेति यावत्। न विदुरिति। अज्ञानादेव विहिते कर्मणि न प्रवर्तन्ते, निषिद्धान्नैव निव-र्तन्त इत्यर्थः। न केवलमिति वाक्यस्यानन्तरं किं त्विति शेषः। एवंविधजनानामासुरत्वे को हेतु-रत आह—अनाचारा इति। मायाविनः परवञ्चकाः। जनाश्चासुराः स्वर्गो नास्ति नरकं नास्ति

किंच—

> असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
> अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥८॥

असत्यमिति । असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठाऽतोऽप्रतिष्ठं चेति ते आसुरा जना जगदाहुरनीश्वरं, नच धर्माधर्मसव्यपेक्षमस्य शासिता ईश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किंचापरस्परसम्भूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं सम्भूतम् । न यदि किमन्यत्कामहैतुकं कामहेतुकमेव

---

त्येवं वदन्तः परेषामपि बुद्धिं भेदयन्ति । हिः प्रसिद्धौ । हि यस्मादिति वा । यस्मादसुरा एवंविधास्तस्मादासुरा जनास्तादृशा इत्यर्थः ॥७॥

असत्यमिति । ते जगदसत्यमप्रतिष्ठमनीश्वरं चाहुः । अपरस्परसम्भूतं किंचिन्न । कामहेतुकम् । असत्यप्राया अनृतप्रचुराः । असत्यं सत्यरहितम् । आत्मवन्मन्यते जगदिति न्यायादिति भावः । जगतोऽसत्यत्वं तद्गतप्राणिद्वारेति बोध्यम् । जगति कोपि प्राणी सत्यवान्न भवतीत्यर्थः । अप्रतिष्ठं धर्माधर्माख्यप्रतिष्ठारहितं धर्माधर्मपरतन्त्रं न भवतीत्यर्थः । जन्मान्तरकृतधर्माधर्मवशात्प्राणिनां सुखदुःखसम्भव इति वचनमयुक्तं, किंतु स्वाभाविक एव सुखदुःखानुभवं प्राणिनामिति भावः । धर्माधर्मसव्यपेक्षं धर्माधर्मसापेक्षं यथातथा अस्य प्राणिवर्गस्य शासिता शिक्षकः कश्चिदीश्वरो न विद्यत इत्यन्वयः । ईश्वरेऽभ्युपगते सति धर्माधर्माभ्युपगमस्स्यात् । ततश्चाधर्मानुष्ठानान्नरकादिभयमाशङ्क्येतेति कृत्वा तावदीश्वरमेव नाभ्युपगच्छन्त्यासुरा जना इति भावः ।

नन्वेवमीश्वराभावे कथं जगदुत्पत्तिरत आह—अपरस्परसम्भूतमिति । अत्रायं भाष्यपाठः—अपरस्परसम्भूतं न किंचिद्दृष्टं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं सम्भूतं न यदि कर्मादिकारणान्तरं विद्यते जगतः । किमस्य कारणं कामहेतुकं कामहेतुरेव, कामहेतुकं न किञ्चित्कारणान्तरं न किञ्चन कामान्यकारणं स्याद्दृष्टं काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् । अस्येदं व्याख्यानम्—परस्परो मिथुनम् । अन्योन्यवाचिनः परस्परशब्दस्यात्र परस्परसंयुक्तमिथुनपरत्वमुपचारतस्तस्मादसम्भूतमपरस्परसम्भूतं किंचिदपि सत्त्वमिति शेषः । न दृष्टं नोपलभ्यते । पशुपक्षिमनुष्यादयस्सर्वेपि प्राणिनः परस्परसङ्गात् स्त्रीपुरुषमिथुनादेव जाताः, नत्वीश्वरादिति भावः । नेदं बौद्धमतं समीचिनमिति भ्रमितव्यं, क्षित्यादीनामप्राणिनां स्वेदजादीनां प्राणिनां चापरस्परसम्भूतानां सत्त्वेन तदर्थमीश्वरस्यावश्यमभ्युपगन्तव्यत्वात् । तात्पर्यार्थमाह—कामप्रयुक्तयोरिति । कामस्सुरतेच्छा तेन प्रयुक्तयोः प्रेरितयोस्सङ्गतयोर्वा स्त्रीपुरुषयोरन्योन्यसंयोगान्मिथुनीभावान्निमित्तात्सर्वं जगत्सम्भूतम् । कर्मादिकारणान्तराज्जगन्नोद्भूतमिति फलितार्थः । ननु यदि जगतः कर्मादिकारणान्तरं न विद्यते तर्हि किमस्य जगतः कारणमिति पृच्छति—न यदीति । समाधत्ते—कामहैतुकमिति ।

**कामहैतुकं किमन्यज्जगतः कारणम् ? न किञ्चिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः 'काम एव प्राणिनां कारण'मिति लोकायतिकदृष्टिरियम् ॥८॥**

---

स्वार्थे कः इत्याह—**कामहैतुकमेवेति** । काम एव हेतुः कामहेतुः, स एव कामहैतुकम् । वक्ष्यमाणे सामान्यात् । न चापरस्परसम्भूतमित्यस्मादेव पदादयमर्थस्सिद्ध इति वाच्यं, अपरस्परसम्भूतं न किञ्चि-दस्तीत्यनेन स्त्रीपुरुषसंयोगो जगतो निमित्तमित्युक्तं, तस्य च संयोगस्य को हेतुरित्यत उक्तम्—**काम-हेतुकमिति** । एतस्य कामहेतुकमित्यस्याप्यर्थस्य संग्रहादुक्तं भाष्यकारैः कामप्रयुक्तयोरिति बोध्यम् । नच स्त्रीपुरुषसंयोगं प्रत्येव कामः कारणं न जगत इति वाच्यं, संयोगद्वारा कामस्य जगतोपि का-रणत्वात् । संयोगस्य कारणत्वं कामस्य परमकारणत्वमिति वा ।

एवं न किंचित्कामहेतुकमिति पाठमाश्रित्य भाष्यं विधायाऽथ न किंचित्कारणान्तरमिति पाठ-माश्रित्य भाष्यं रचयति भाष्कारः—**न किंचिदिति** । न किंचिदित्यस्यावृत्तिः । अपरस्परसम्भूतं किंचिन्नास्ति । कारणान्तरं किंचिन्नास्तीति । अपरस्परसम्भूतमित्यनेन त्वर्थात्सिद्धं कामकारणत्वं जगतः । अत उक्तम्—**कामान्यकारणमिति** । किंच नापि कामान्यकारणं दृष्टं न स्यादित्यन्वयः । कामादन्यत्किमपि कारणं नोपलभ्यत इत्यर्थः । फलितमाह—**काम एवेति, कारणमिति** । जगतीं प्रति हेतुरित्यर्थः । स्त्रीपुरुषसंयोजनद्वारेति भावः । केषां मतमिदमत आह—**लोकायतिकदृष्टि-रिति** । बौद्धमतमित्यर्थः ।

अत्र 'अपरस्परसम्भूतं किमन्यत्कामहैतुक'मिति नागरपुस्तकेषु पाठः । भाष्यपाठस्तु अपरस्पर-सम्भूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं सम्भूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं किमन्यज्जगतः कारणं न किंचिददृष्टं धर्माधर्मादिकारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति । अस्येदं व्याख्यानम्—अपरश्च परश्चेत्यपरस्परमन्योन्यं स्त्रीपुरुषमिथुनमित्यर्थः । तस्मात्सम्भूतमपरस्परसम्भूतमित्यभिप्रेत्याह—**कामप्रयुक्तयोरित्यादि** । काम एव हेतुर्यस्य तत्काम-हेतुकं तदेव कामहैतुकं कामातिरिक्तकारणशून्यमित्यर्थः । अपरस्परसम्भूतं जगत्कामहैतुकं भवती-त्यन्वयः । जगदपरस्परसम्भूतमत एव कामहैतुकं भवतीति वा ।

अथ किमन्यदित्येतद्व्याख्याति—**किमन्यज्जगत इति** । जगतः कामादन्यत्कारणं किमस्तीति-त्याक्षेपः । फलितमाह—**न किञ्चिदिति** । कामरूपे दृष्टकारणे सम्भवति धर्माधर्मादिलक्षणादृष्ट-कारणकल्पनानवकाशादिति भावः । धर्माधर्मादीत्यादिपदादीश्वरस्यापि ग्रहणम् । सिद्धमर्थमाह—**काम एवेति** । अस्मिन्पक्षे तु अपरस्परसम्भूतं कामहैतुकमिति वाक्यान्तरे किमन्यदिति वाक्यान्तर-कल्पनमयुक्तं न ह्यपरस्परसम्भूतं कामहैतुकं किमन्यदिति मूलमस्ति येनादोषस्स्यात् । अत एव श्रीधरः—जगदपरस्परसम्भूतं भवति किमन्यत्कारणमस्य नास्त्यन्यत्किञ्चित्, किंतु कामहैतुकमेव जग-दिति शेषः । स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरस्येत्यर्थ इति व्याचख्यौ । अस्मिंश्च व्याख्याने

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥**

एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना

---

अनेकवाक्यकल्पनं बहुपदाध्याहारश्च । नच न किञ्चिदिति पाठपक्षेपि नास्त्येकवाक्यतेति वाच्यं, कामहेतुकमपरस्परसम्भूतं किञ्चिन्नेत्येकवाक्यतायास्सत्त्वात् । नच कामहेतुकमित्यस्य पूर्ववाक्यान्वये समाप्तपुनराख्यातदोष इति वाच्यं, साकांक्षत्वात्तस्य हेतुगर्भविशेषणं हि तत् । कामहेतुकत्वादपरस्परसम्भूतं किमपि नास्तीति । नच भाष्यकारैरेवमेकवाक्यतया न व्याख्यातमिति वाच्यं, प्रौढ्या तथा तैर्व्याख्यातत्वात् । अस्मन्मते कामो हेतुर्यस्य तत्कामहेतुकमिति बहुव्रीहिरेव । 'शेषाद्विभा'षेति कः । अस्मादपरस्परसम्भूतं न किञ्चित्कामहेतुकमित्येव साधीयान् पाठः । अत्र परश्च परश्च परस्परः 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति परशब्दस्य द्विर्भावः । समासवच्च बहुलमिति बहुलग्रहणादन्यपरयोर्न समासवद्भावः । असमासवद्भावात्सोरलुक् । परसु परसु इत्यलौकिकविग्रहः । सोरुः रोर्विसर्गः विसर्गस्य कस्कादित्वात्सः परस्परः क्लीबे स्त्रियां च परस्परमिति रूपम् । लक्षणया द्वयोरेकस्मिन्देहिनि क्लीबविवक्षया च प्रकृते मिथुनमिति तस्यार्थः । अपरश्च परश्चेति विग्रहे तु अपरस्परमिति रूपस्यासिद्धिरेव । अपरपरशब्दयोस्समासे सोर्लुकि विसर्गाभावेन सत्त्वाभावात् । नचायं कर्मव्यतिहारे सर्वनामद्विर्भावः । अपरपरशब्दयोर्भेदेन द्विर्भावाभावात् । नचापरश्चापरश्चेति विग्रहं ब्रूम इति वाच्यं, तथाप्यसमासवद्भावाभावात् । अन्यपरयोर्ह्यसमासवद्भावः । किंच द्वितीयस्यापरशब्दस्य कथमकारलोपः ? नाप्यपरश्च परश्च तयोस्समाहारोऽपरस्परमिति ब्रूम इति वाच्यं, सुड्विधानाभावेनापरस्परमित्येव भवितव्यत्वात् । नचापरस्परा इति निपातनात्सुट्सिद्धिरिति वाच्यं, क्रियासातत्य एव तन्निपातनात् । बहुत्वे चेति संक्षेपः ।

रामानुजस्तु -अपरस्परसम्भूतमन्यत्किमुपलभ्यते ? अतस्सर्वमिदं जगत्कामहेतुकमिति व्याचख्यौ, तन्मन्दम्—कुतो मन्दत्वमितिचेदुच्यते- अपरस्परसम्भूतं किमित्येतावतैवाभीष्टार्थसिद्धौ अन्यदिति व्यर्थमसङ्गतं च । अन्यदित्यनेन कस्मादन्यत्वं कस्यान्यत्वं वा विवक्षितम् । यदि परस्परसम्भूतादन्यत्वं विवक्षितं तर्हि अपरस्परसम्भूतमित्यनेनैव परस्परसम्भूतान्यार्थसिद्धेरन्यत्पदस्य पौनरुक्त्यम् । तदन्यत्वं हि कोऽर्थः । कस्यान्यत्वं तु नैव विवक्षितुं शक्यं, यस्यान्यत्वं विवक्षितं तस्य सत्त्वेऽपरस्परसम्भूतं नास्तीति वचनस्यायुक्तत्वात् । तस्यासत्त्वे अप्रसक्तनिषेधायोगेन तन्निषेधायोगाच्च । तथा कामहेतुकमित्यस्यान्वयाय सर्वमिदं जगदिति पदाध्याहारोऽप्ययुक्त एव मूलादृष्टैः कल्पनस्याप्रमाणत्वात् । श्लोकपूर्वार्धस्थजगत्पदस्येहाकर्षणमप्ययुक्तं व्यवहितत्वादिति ॥८॥

एतामिति । जना इति शेषः । आसुरा जना इति प्रकरणात् । एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय उग्रकर्माणो जगतोऽहिताश्च सन्तो जगतः क्षयाय प्रभवन्ति । एतां पूर्वोक्तां दृष्टिं लोकायतिकदर्शनमवष्टभ्य । नष्टोऽदर्शनं गतश्शून्य इति यावत् । स्वभावो ज्ञानात्मको येषां ते नष्ट-

अल्पबुद्धयो विषयविषया अल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युद्भवन्त्युग्रकर्माण उग्र-
कर्माणो हिंसात्मकाः । क्षयाय जगतः प्रभवन्तीति सम्बन्धः । जगतोऽहिताश्शत्रव इत्यर्थः ॥९॥

ते च—

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥

काममिति । काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं, दम्भमानमदान्विता
दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता दम्भमानमदान्विता मोहादविवेकतो गृही-
त्वोपादायासद्ग्राहानशुभनिश्चयान् प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषां
तेऽशुचिव्रताः ॥१०॥

किंच—

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥

चिन्तामिति । चिन्तामपरिमेयां च न परिमातुं शक्यते यस्याश्चिन्ताया इयत्ता

---

स्वभावा नष्टज्ञाना इत्यर्थः । चेतनानां हि ज्ञानं स्वभावः । ज्ञानशून्याः पाषाणकल्पा इति यावत्।
अर्थान्तरमाह—विभ्रष्टेति । आत्मशब्दस्य यत्नार्थवाचित्वाद्भ्रष्टपारलौकिकप्रयत्ना इत्यर्थः । बुद्धेरल्पत्वं
नाम विषयविषयत्वमेवेत्यभिप्रेत्याह—विषयविषयैवेति । विषयाश्शब्दादयो विषया गोचरा यस्याः
विषयविषया विषयासक्तेत्यर्थः । बुद्धिरन्तःकरणावस्थाविशेषः, नतु ज्ञानम् । उद्भवन्ति जायन्ते।
जन्मना सहैव जायते एतेषामियमासुरी प्रवृत्तिरिति भावः । हिंसात्मका इति । हिंसायामेवात्मा
मनो येषां ते हिंसात्मका घातुका इत्यर्थः । क्षयायेति । लोकायतिकदृष्टचवलम्बानामत एव
नष्टात्मनामल्पबुद्धीनामुग्रकर्मणां जगदहितानां जनानां जन्म जगतः क्षयायैव भवति । अत एव
लोकशत्रवः ।

ननु कुतः क्षयायेति चेदुच्यते—असुरप्रवृत्तयो हीमे जनाः प्राणिनो हिंसन्ति । वैदिक-
मार्गात्स्वयं भ्रष्टा अन्यानपि बलात्कारोपदेशादिना भ्रंशयित्वा यज्ञाद्यभावेन वर्षाद्यभावपूर्वकं क्षुद-
द्युपद्रवेण लोकं हिंसन्ति चेति ॥९॥

काममिति । विशेष्यपदमाह—ते चेति । आसुरा जना इत्यर्थः । ते दुष्पूरं काममाश्रित्य
दम्भमानमदान्विता अशुचिव्रताश्च सन्तो मोहादसद्ग्राहान् गृहीत्वा प्रवर्तन्ते । दुष्पूरमिति । 'न जातु
कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इतिवचनादिति भावः।
गृह्यन्ते जायन्ते एभिर्ज्ञेया इति ग्रहा ज्ञानानि त एव ग्राहाः स्वार्थेऽण् । असन्तश्च ते ग्राहाश्चास-
द्ग्राहास्तानसद्ग्राहान् । क्व प्रवर्तन्तेऽत आह—लोक इति ॥१०॥

चिन्तामिति । आसुरा जना अपरिमेयां प्रलयान्तां चिन्तां चोपाश्रिताः, कामोपभोगपरमा

ताऽपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमाः कास्यन्त इति कामा विषयाश्शब्दादयस्तदुपभोगपरमाः 'अयमेव परमः पुरुषार्थो यः कामोपभोग' इत्येवं निश्चितात्मान एतावदिति निश्चिताः ॥११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥

आशापाशेति । आशापाशशतैराशा एव पाशास्तच्छतैर्बद्धा नियन्त्रितास्सन्तस्सर्वत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनमाश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थं, अन्यायेन परस्वापहरणादिनेत्यर्थः । किम् ? अर्थसञ्चयानर्थप्रचयान् ॥१२॥

ईदृशश्च तेषामभिप्रायः—

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥

इदमिति । इदं द्रव्यमद्येदानीं मया लब्धम् । इदं चान्यत्प्राप्स्ये मनोरथं मनस्तुष्टि-

---

एतावदिति निश्चिता आशापाशशतैर्बद्धाः कामक्रोधपरायणास्सन्तः कामभोगार्थमन्यायेनार्थसञ्चया-नीहन्ते । इयत्ता परिमितिः । मरणान्तामिति । आमरणमित्यर्थः । फलितमाह—सदेति । चिन्ता विषयानुध्यानम् । प्रलयः प्राकृतप्रलय इति रामानुजः, तदयुक्तम्—देहत्यागरूपप्रलयातिक्रमणे कारणाभावात् । चिन्तादीनां मरणावधिकत्वस्य लोकव्यवहारसिद्धत्वाच्च । कामोपभोगो विषयानुभवः परमः प्रधानो येषां ते कामोपभोगपरमाः । एतावच्छब्दार्थमाह—अयमेवेति । निश्चिता निश्चयवन्तः । फलितमाह—निश्चितात्मान इति । निश्चितबुद्धय इत्यर्थः ॥११॥

आशेति, सर्वत इति । सर्वेषु विषयेष्वित्यर्थः । आकृष्यमाणा इति । आशापाशशतैरिति शेषः । तत्तद्विषयविषयास्तास्ता आशाः पुरुषं तत्तद्विषयान् प्रत्याकर्षन्तीत्ययमाशापाशबन्धो जीवस्येत्यर्थः । पुरुषस्य चेदमाकर्षणमन्तःकरणतादात्म्याध्यासप्रयुक्तमिति मन्तव्यम् । कामभोगो विषयानुभवः तस्मै कामभोगार्थम् । किमीहन्त इति पृच्छति—किमिति । प्रचया राशयः । अर्था धनानि । अर्थसञ्चयान् प्रतीहन्त इत्यन्वयः । अर्थसञ्चयसंग्रहार्थं व्याप्रियन्त इत्यर्थः । यद्वा सञ्चयाः प्रचयाः सञ्चयनानीत्यर्थः । अर्थान् सञ्चेतुं व्याप्रियन्त इत्यर्थः । ईहन्ते इच्छन्तीत्यर्थे त्विच्छामात्रमेव; न तु तत्र प्रवृत्तिरिति सिध्येत्तच्चानिष्टमिति बोध्यम् । कामोपभोगार्थमपि नामी न्यायेन कृष्यादिना धनं सञ्चिन्वन्तीत्याह—अन्यायेनेति । कश्चिदन्यायविशेषं दर्शयति—परस्वेति । परस्वं परधनं तदपहरणं चौर्यादिना परस्वापहरणमादिपदात्परक्षेत्रापहरणादिसंग्रहः ॥१२॥

इदमिति । आसुरा जनाः । अद्य मयेदं लब्धं, इमं मनोरथं प्राप्स्ये । इदं धनमस्ति ।

करम् । इदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं, तेनाहं धनी विख्यातो भविष्यामीति ॥१३॥

असौ मया हतश्शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१४॥

असाविति । असौ देवदत्तनामा मया हतो दुर्जयश्शत्रुः । हनिष्ये चापरानन्या[न्] वराकानपि । किमेते करिष्यन्ति तपस्विनः ? सर्वथापि नास्ति मत्तुल्यः । कथं ? ईश्वरोऽहं, अहं भोगी, सर्वप्रकारेण च सिद्धोऽहं सम्पन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषैर्बलवान् सुखी चाहमेव; अन्ये तु भूमिभारायावतीर्णाः ॥१४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥

आढ्य इति । आढ्यो धनेनाभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसम्पन्नः । तेनापि न मत्तुल्योऽस्ति कश्चित् । कोऽन्योऽस्ति सदृशस्तुल्यो मया ? किंच यक्ष्ये यागेनाप्यन्या[न्]

---

पुनरिदं धनं मे भविष्यति, असौ शत्रुर्मया हतः, अपरानपि शत्रून्हनिष्ये च, अहमीश्वरः, अहं भोगी, अहं सिद्धः, बलवान् सुखी च भवामीति शेषः । अहमाढ्योऽभिजनवांश्चास्मि । म[या] सदृशोऽन्यः कोऽस्ति । अहं यक्ष्ये, दास्यामि, मोदिष्य इत्यज्ञानविमोहिता अनेकचित्तविभ्रान्ता मोह-जालसमावृताः कामभोगेषु प्रसक्ताश्च सन्तः, अशुचौ नरके पतन्तीति श्लोकचतुष्टयान्वयः । प्राप्स्यामि । भविष्यतीति भविष्यदर्थनिर्देशादाह—आगामिनि संवत्सर इति । तदन्तर्गतं म[...]माह—तेनेति ।विख्यातः प्रसिद्धो लोक इति शेषः ॥१३॥

असाविति । तपस्विनो दीना एते शत्रवः, सिद्धस्सम्पन्नः । कैरित्यत आह—पुत्रैरिति । पुत्रैः पौत्रैर्नप्तृभिश्चाहं सिद्धः; मानुषैर्मनुष्यैस्सिद्धः । पुत्रादिभिः केवलं न, किंतु बलसुखाभ्यां सिद्ध एवेत्याह—बलवान् सुखी चेति ॥१४॥

आढ्य इति । 'इभ्य आढ्यो धनी स्वामी'ति कोशादाह—धनेनेति । यद्वा आढ्य[...] श्श्लाघ्यः । केनास्य श्लाघ्यत्वमत आह—धनेनेति । अभिजनस्सत्कुलप्रसूतिः । सद्वंश इत्येव [...] कथं वंशस्य सत्त्वमत आह—सप्तेति । यस्य प्राचीनाः पितृपितामहादयस्सप्त पुरुषाः श्रोत्रियाः 'श्रोत्रियश्छन्दोऽधीते' इति निपातनाद्वेदाध्यायिनः । उपलक्षणमिदं- वेदार्थानुष्ठानस्य चेति वेदार्था-नुष्ठातारश्च । स सप्तपुरुषश्रोत्रियः, तस्य भावस्तत्त्वमादिपदाद्याजनाध्यापनादिग्रहणम् । अथवा [...] वंशशुद्धयादिग्रहणम् । तेन सम्पन्नः । एतेन सप्तपुरुषश्रोत्रियत्वादिकमभिजनशब्दार्थ इति सिद्धम् । यक्ष्ये यागं करिष्यामि । ननु दैवविभूतिरेव यागानुष्ठानमत आह—यागेनेति । न चित्तशुद्ध[...] धर्ममभीभिर्यागो विधीयते येनैतद्यागस्य दैवविभूतित्वं स्यात् । किंतु पराभिभवार्थमेवेति यागो[...]

नभिभविष्यामि, दास्यामि नटादिभ्यः; मोदिष्ये हर्षं चातिशयं प्राप्स्यामीत्येवमज्ञानविमोहिता अज्ञानेन विमोहिता विविधमविवेकभावमापन्नाः ॥१५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

अनेकचित्तेति । अनेकचित्तविभ्रान्ताः, उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ताः, मोहजालसमावृताः- मोहोऽविवेकोऽज्ञानं तदेव जालमिवावरणात्मकत्वात्तेन समावृताः, प्रसक्ताः कामभोगेषु तत्रैव निषण्णास्सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥१६॥

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥

आत्मेति । आत्मसम्भाविताः सर्वगुणविशिष्टतयाऽऽत्मनैव सम्भाविता आत्मसम्भाविताः, न साधुभिः; स्तब्धा अप्रणतात्मानः, धनमानमदान्विताः- धननिमित्तो मानो मदश्च

---

आसुरविभूतिरेव । एवं यागस्यासुरविभूतित्वं प्रदर्शयितुमेव यागेनाप्यन्यानभिभविष्यामीत्यर्थो लक्षणया दर्शितो यक्ष्य इति पदस्यार्थः । अपिशब्दादभिजनेनाहमन्यानभिभूतवानेवेति गम्यते ।

दास्यामीति । ननु दानं दैवविभूतौ कथितमत आह—नटादिभ्य इति । पात्रदानमेव दैवविभूतिरिदमपात्रदानं त्वासुरविभूतिरेवेति भावः । आदिपदाद्विटगायकादिग्रहणम् । इदं च नटादिभ्यो दानं न परलोकापेक्षया अमीभिः क्रियते, किंतु नटादय एते मां धनिकं दातारं प्रभुं च कीर्तयेयुरिति बुद्ध्यैवेति बोध्यम् । मोदिष्य इति । मोदं हर्षातिशयं प्राप्स्यामि । कीर्तिस्तुत्यादिश्रवणादिति भावः । कामभोगादिनेति वा । इति पूर्वोक्तविधयेत्यर्थः । विविधो मोह एषां संजात इति विमोहिताः । मोहोऽविवेकः । अविवेकभावमिति । विवेकाभावमित्यर्थः । न विद्यते विवेको एषां तेऽविवेकाः, तेषां भावमविवेकभावमविवेकत्वमापन्नाः प्राप्ताः ॥१५॥

अनेकेति । चित्तैर्ज्ञानैरित्यर्थः । यद्वा मनोभिरित्येवार्थः । विषयभेदादेकस्यापि मनसो नानात्वम् । भ्रान्ता भ्रमं प्राप्ताः । जालं मत्स्यादिबन्धनयन्त्रविशेषः । तद्धि मत्स्यादीनावृत्य बध्वा धनिकस्य हस्ते निधत्ते । एवमज्ञानमपि जनानावृत्य बध्वा नरके क्षिपति, अत उक्तम्—मोहजालमिति, तेनेति । कामभोगप्रसङ्गेनेत्यर्थः । उपचितं वर्धितं सञ्चितं वा कल्मषं नरककारणं पापं यैस्तेउपचितकल्मषाः । पतन्ति देहत्यागानन्तरं पतिष्यन्तीत्यर्थः । वैतरणीति नरकविशेषः । आदिपदात्रौरवादिग्रहणम् ॥१६॥

आत्मेति । आत्मसम्भाविताः स्तब्धाः धनमानमदान्वितास्ते दम्भेनाविधिपूर्वकं नामयज्ञैर्यजन्ते । आत्मसम्भाविता इति । सर्वगुणविशिष्टोऽहमिति स्वयमेव स्वात्मानं श्लाघयन्त इत्यर्थः । आत्मनैव स्वेनैव । सम्भाविताः श्लाघिताः । अप्रणतात्मानः अप्रणताः प्रकर्षेणानता आत्मा मनो

ताभ्यां धनमानमदाभ्यामन्विताः, यजन्ते नामयज्ञैः- नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विधिविहिताङ्गेतिकर्तव्यतारहितम् ॥१७॥

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥

अहङ्कारमिति । अहङ्कारमहङ्करणमहङ्कारः, विद्यमानैरविद्यमानैश्च गुणैरात्मन्याध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहङ्कारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च । तं तथा बलं पराभिभवनिमित्तं कामरागान्वितम् । दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेषः । कामं स्त्र्यादिविषयम् क्रोधमनिष्टविषयम् । एतानन्यांश्च महतो दोषान् संश्रिताः । किंच ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो मच्छासनातिवर्तित्वं प्रद्वेषः तं कुर्वन्तोऽभ्यसूयकास्सन्मार्गस्थानां गुणेष्वसहमानाः ॥१८॥

---

देहो वा स्वभावो वा येषां ते तथोक्ताः । स्वप्नेऽपि नामीषां नम्रतेत्यर्थः । नाममात्रैरिति । धर्मे नास्ति तेषामासुरजनक्रियमाणयज्ञानां यज्ञत्वं, किंतु नामत एवेत्यर्थः । नाममात्रस्वरूपैरिति यावत् । विधिश्शास्त्रं तेन विहिता अङ्गानां यज्ञाङ्गानां यूपादीनां या इतिकर्तव्यता, इदमित्थं कर्तव्यमिति विधिस्तया रहितं यथातथेति क्रियाविशेषणम् । विधिमतिक्रम्येति यावत् । स्वेच्छया अश्रद्धया यथाकथञ्चिद्यजन्त इति भावः ॥१७॥

अहङ्कारमिति । ते अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिता अत एव आत्मपरदेहेषु सन्तं मां द्विषन्तोऽभ्यसूयकाश्च भवन्ति । आत्मनि स्वस्मिन् । मन्यत इति । येन मन्यते सोऽहङ्कार इत्यन्वयः । मन्यत इति यस्सोऽहङ्कार इति वा । अहं सर्वोत्कृष्ट इत्यभिमानोऽहङ्कार इत्यर्थः । अविद्याप्रयुक्तत्वादस्याहङ्कारस्याप्यविद्येति व्यवहार इत्याह—अविद्याख्य इति । अतिदुःखहेतुत्वादयं कष्टतमः । सर्वेषां कामक्रोधादिदोषाणां सर्वासामप्यनर्थहेतूनां हिंसादिप्रवृत्तीनां च मूलं कारणभूतः । पराभिभवनस्य निमित्तं कारणं नहि दुर्बलः परानभिभवेत् ।

कामरागविवर्जितबलस्येश्वरविभूतित्वादाह—कामरागान्वितमिति । काम इच्छा । स्त्र्यादीत्यादिपदात् स्रक्चन्दनादिविषयग्रहणम् । उक्तानुक्तसमुच्चयार्थकस्य क्रोधं चेति चकारस्यार्थमाह—अन्यांश्चेति । महतः प्रबलान् । सर्वात्मभूतस्य तव प्रद्वेषणं कथमत आह—मच्छासनातिवर्तित्वमिति । ईश्वराज्ञारूपवेदशास्त्रोक्तविधिमतिक्रम्य प्रागुक्तरीत्या वर्तनमेवेश्वरप्रद्वेषः । ईश्वर एव सर्वात्मभावेन सर्वत्र सममवस्थित इतीममर्थमविदित्वा शत्रुरयं मम देवदत्तो हन्तव्यः, धिक् शत्रुभिः पराजितं मां जीवन्तमित्येवं मत्वा स्वपरदेहहिंसादिकं यः करोति सोऽपीश्वरप्रद्वेषकार्येव । एवंविधप्रवर्तनस्यापीश्वरशासनातिक्रमरूपत्वादिति बोध्यम् ॥१८॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥

तानिति । तानहं सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषतश्च मां क्रूरान् संसारेष्वे-नेकनरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं सन्ततमशुभानशुभ-कर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन सम्बन्धः ॥१९॥

आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥२०॥

आसुरीमिति । आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा अविवेकिनो जन्मनिजन्म-न्यविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढा मामीश्वर-मप्राप्यानासाद्यैव हे कौन्तेय! ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम्। 'मामप्राप्यै'वेति न मत्प्राप्तौ काचिदप्याशङ्काऽस्ति । ततो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥२०॥

---

तानिति । अहं द्विषतः क्रूरानशुभान् तान्नराधमानजस्रं संसारेष्वासुरीषु योनिष्वेव क्षिपामि । द्विषत इत्यस्य साधूनिति मामिति वा कर्मेत्याह—साधुद्वेषिण इति, मां च द्विषत इति । संसार-शब्दस्तद्धेतुवाची उपचारात्संसारकारणभूतास्वित्यर्थः । ननु दैवयोनयोपि संसारहेतव एवेत्यत आह—नरकेति । अनेकनरकदुःखात्मकसंसारकारणभूतास्वित्यर्थः । मार्गशब्दः कारणवाची । यद्वा द्वार-वाची । अनेकनरकदुःखानुभवद्वारभूतास्वित्यर्थः । योनिष्वित्यस्य विशेषणमिदम् । नरेष्वधमा नीचा नराधमाः । कुत एषामधमत्वमत आह—अधर्मदोषवत्त्वादिति । अशुभत्वमेषां स्वरूपतोऽभावा-दाह—अशुभकर्मकारिण इति । अविद्यमानशुभानित्यर्थकथने तु शुभाभाव एवेति सिध्यति, न तु अशुभत्वमिति बोध्यम् । कास्ता आसुरयोनयोऽत आह—व्याघ्रेति । किमासामासुरत्वमत आह—क्रूरप्रायास्विति । क्रूरस्वभावास्वित्यर्थः । असुराः खलु क्रूराः । क्षिपामीति । उत्पादयामीत्यर्थः ॥

आसुरीमिति । किं तत्र क्षेपणेन फलमत आह—आसुरीमिति । हे कौन्तेय! मूढा जन्मनि जन्मन्यासुरीं योनिमापन्नास्सन्तो मामप्राप्यैव ततोऽधमां गतिं यान्ति । मनुष्या असुरसम्पदा व्याघ्रादियोनावुद्भूय ततः क्रमेण स्थावरत्वलक्षणामधोगतिं प्रपद्यन्त इत्यर्थः । तमोबहुलासु तमःप्रायासु सर्पादियोनिषु जायमानास्सन्त एवाधो गच्छन्तः पूर्वपूर्वस्मादुत्तरोत्तरं निकृष्टं जन्म प्रपद्यमानास्सन्त इत्यर्थः । तस्मादपीति । सर्पादिजन्मनोऽपीत्यर्थः । निकृष्टतमामतिनिकृष्टां स्थावरत्वलक्षणामित्यर्थः । गतिं जन्मेत्यर्थः । ननु निकृष्टं जन्म गच्छतः कथमीश्वरप्राप्तिशङ्का ? येन मामप्राप्येत्युच्येत अत आह—मच्छिष्टेति । मच्छिष्टं मया शासितं साधूनां मार्गं साधुमार्गमप्यप्राप्य मच्छिष्टानां साधूनां मार्गमिति वा । एतेन मामप्राप्येत्यस्य मच्छिष्टसाधुमार्गमप्यप्राप्येत्यर्थो लाक्षणिक इति सिद्धम् ॥२०॥

सर्वस्या आसुर्यास्सम्पदस्संक्षेपोऽयमुच्यते, यस्मिन्त्रिविधे सर्वं आसुरीसम्पद्भेदो- नन्तोऽप्यन्तर्भवति, यत्परिहारेण परिहृतश्च भवति यन्मूलं सर्वस्यानर्थस्य, तदेतदुच्यते—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥

त्रिविधमिति । त्रिविधं त्रिप्रकारं नरकद्वारं नरकस्य प्राप्ताविदं द्वारं नाशनमात्मनः, यद्द्वारं प्रविशन्नेवात्मा नश्यति; कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतत् । उच्यते— 'द्वारं नाशनमात्मन' इति । किं तत् ? कामः क्रोधस्तथा लोभः । तस्मादेतत्त्रयं त्यजेत्। यत एतद्द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत् ॥२१॥

त्यागस्तुतिरियम्— एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनश्श्रेयस्ततो याति परां गतिम् ॥२२॥

एतैरिति । एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैः, एतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति । किम् ? आत्मनश्श्रेयः। यत्प्रतिबद्धः पूर्वं नाचचार तदपगमादाचरति । ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति।

सर्वस्यैतस्यासुरीसम्पत्परिवर्जनस्य श्रेय आचरणस्य च शास्त्रं कारणं, शास्त्रप्रमाणादुभयं शक्यं कर्तुं; नान्यथा । अतः—

यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥

य इति । यश्शास्त्रविधिं शास्त्रं वेदस्तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रति-

---

त्रिविधमिति । अनन्तोऽपि सर्व आसुरीसम्पद्भेदः त्रिविधे यस्मिन्नन्तर्भवति । आसुरा असुरप्रकृतयस्तासां सम्पत्समृद्धिः । तद्भेदस्तद्विशेषः । आसुरसम्पदिति भाष्ये तु आसुरी च सा सम्पत् आसुरसम्पदासुरस्वभाव इत्यर्थः । यत्परिहारेणेति । यस्य त्रिविधस्यासुरस्वभावस्य परिहारेण। परिहृत इति । सर्वोप्यासुरसम्पद्भेद इति शेषः । सर्वस्यानर्थस्य नरकादिसंसारस्य यत्त्रिविध आसुरसम्पद्भेदो मूलं कारणं भवति । कामः क्रोधस्तथा लोभ इति त्रिविधमिदमात्मनो नाशनं नरकस्य द्वारं भवति । तस्मान्मुमुक्षुरेतत्त्रयं त्यजेत् । आत्मा नश्यतीति । देहेन्द्रियादितादात्म्याध्यासवान् पुरुषो नश्यतीत्यर्थः । आत्मनः पुरुषार्थप्राप्त्यनर्हत्वमेव नाश इत्याह—आत्मा नेति । तस्माच्छब्दार्थमाह—यत इति । आत्मनाशननरकद्वारत्वादित्यर्थः ॥२१॥

एतैरिति । नरस्तमोद्वारैरेतैस्त्रिभिर्विमुक्तस्सन्नात्मनः श्रेय आचरति; ततः परां गतिं याति। यत्प्रतिबद्धः यैः कामादिभिः प्रतिबद्धः तत् श्रेयः । तदपगमात्कामादिप्रतिबन्धापगमात् । आचरति श्रेय इति शेषः । तत इत्यस्यार्थमाह— तदाचरणादिति । श्रेयोऽनुष्ठानादित्यर्थः । परामुत्तमां गतिं देवत्वादिकं याति, मोक्षं च यातीत्याह—मोक्षमपीति । श्रेयोऽनुष्ठानस्य ज्ञानप्राप्तिद्वारा मोक्षस्यापि हेतुत्वादिति भावः ॥२२॥

य इति, उभयमिति । आसुरसम्पत्परिवर्जनं श्रेय आचरणं चेत्यर्थः । यश्शास्त्रविधिमुत्सृज्य

शास्त्रमुत्सृज्य त्यक्त्वा वर्तते कामकारतः कामप्रयुक्तस्सन् न स सिद्धिं पुरुषार्थयोग्यतामवाप्नोति, नाप्यस्मिन्लोके सुखं, नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥२३॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभाग-
योगो नाम षोडशोऽध्यायः ।

तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायाम् । अतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रेण विधानं शास्त्रविधानं 'कुर्यान्न कुर्या'दित्येवं लक्षणं, तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि; इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥२४॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमद्गोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीता-
भाष्ये षोडशोऽध्यायः ।

---

कामकारतो वर्तते स सिद्धिं नावाप्नोति, सुखं नावाप्नोति, परां गतिं नावाप्नोति । कामकारतः कामकारेण स्वेच्छाचारेणेत्यर्थः । फलितमाह—कामप्रयुक्त इति । पुरुषार्थयोग्यतां पुरुषार्थप्राप्त्यर्हताम् ॥

तस्मादिति । तस्माच्च कार्याकार्यव्यवस्थितौ शास्त्रं प्रमाणं भवति । इह शास्त्रविधानोक्तं कर्म ज्ञात्वा कर्तुमर्हसि । कार्याकार्यव्यवस्थितिरिदं कार्यमिदमकार्यमिति निर्णयः । तस्यां विषये । शास्त्रविधानोक्तमिति । शास्त्रेण कृतं विधानं शासनं शास्त्रविधानं तेनोक्तं विधिप्रतिषेधात्मकशास्त्रेण विहितमित्यर्थः । किं तत्कर्मेति आह—स्वकर्मेति । स्वस्ववर्णाश्रमविहितं कर्मेत्यर्थः । तच्चार्जुनस्य क्षत्रियस्य युद्धमेव । 'क्षत्रियस्य विजितव्य'मित्यादिशास्त्रादिति भावः । इहास्यां कर्मभूमावित्यर्थः । कुरुक्षेत्रादिभूमिविशेषे एव कर्माधिकारः, नतु सिंहलद्वीपादाविति भावः । इहेतिशब्दः कर्माधिकारभूमिप्रदर्शनार्थ इत्यन्वयः । इहशब्दप्रयोगस्य कर्माधिकारभूमिप्रदर्शनार्थमेव फलमित्यर्थः । इतिशब्दः प्रकृताध्यायभाष्यसमाप्तिवाचकः ॥२४॥

इति श्रीबेल्लङ्कोण्डोपनामक रामकविकृतौ श्रीभगवद्गीताभाष्यार्कप्रकाशे
दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।

श्रीहयग्रीवार्पणमस्तु ।

सौम्यवैशाखशुद्धचतुर्थी ।



श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## सप्तदशोऽध्यायः ।

'तस्माच्छास्त्रं प्रमाणं ते' इति भगवद्वाक्याल्लब्धप्रश्नबीजोऽर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण ! सत्त्वमाहो रजस्तमः ॥१॥

य इति । ये केचिदविशेषिताश्शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयाऽन्विताः श्रद्धयाऽऽस्तिक्यबुद्ध्याऽन्विताः संयुक्तास्सन्तः-- श्रुतिलक्षणं स्मृतिलक्षणं वा कञ्चिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया ये देवादीन् पूजयन्ति त इह 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विता' इति गृह्यन्ते । ये पुनः कञ्चिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्य यथाविधि देवादीन् पूजयन्ति; त इह 'ये शास्त्रविधिमुत्सृज्य यजन्त' इति न परिगृह्यन्ते। कस्मात् ? श्रद्धयाऽन्विततत्वविशेषणात् । देवादिपूजाविधिपरं किञ्चिच्छास्त्रं पश्यन्त एव

---

लब्धप्रश्नबीज इति । तव शास्त्रं प्रमाणमित्युक्तत्वेन केषांचिच्छास्त्रं प्रमाणं न भवत्येवेति सिद्धत्वात्तदीयगतिं प्रष्टुमर्जुनस्यावकाश आसीदिति भावः । ये शास्त्रविधिमुत्सृज्य श्रद्धयाऽन्वितास्सन्तो यजन्ते हे कृष्ण ! तेषां तु निष्ठा का ? किं सत्त्वं निष्ठा ? आहो रजः ? यद्वा तमः ? अवशेषिताः पूर्वमनुक्ता इत्यर्थः । यज देवपूजेति धातुपाठादाह—देवादीनिति, वृद्धेति । यथा वृद्धाः प्रचीना येषु येषु कर्मसु प्रवृत्तास्तान् दृष्ट्वा श्रुत्वा वा स्वयमपि तथा तेषु तेषु प्रवृत्ताश्श्रद्धायुक्तास्सन्त इत्यर्थः।

ननु शास्त्रविधिमुत्सृज्य देवादीन् यजमाना इमे किं शास्त्रविदोऽप्यासुरसम्पत्प्रयुक्ततया शास्त्रविधिं त्यक्तवन्तः ? किं वाऽशास्त्रविदोऽज्ञा विध्यपरिज्ञानाच्छास्त्रविधिं त्यक्तवन्तः ? इति शङ्कायां द्वितीयविकल्पं परिगृह्य समाधत्ते—श्रुतीति । इति गृह्यन्त इतीतिवाक्येन प्रतिपाद्यन्त इत्यर्थः। प्रथमं विकल्पं निराचष्टे—ये पुनरिति। तत्र हेतुं पृच्छति—कस्मादिति । उत्तरयति—श्रद्धयेति। तदेव संग्रहभूतं हेतुवाक्यं विवृणोति—देवादीति । शास्त्रविधिं विद्वांसोऽपि ये परित्यजन्ति तेषां तत्परित्यागे कारणं शास्त्रविधौ श्रद्धाऽभाव एव । शास्त्रविधिमविदुषां तत्परित्यागे तु शास्त्रविधि-

तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवपूजायां श्रद्धयाऽन्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विता' इत्यत्र गृह्यन्ते। तेषामेवम्भूतानां निष्ठा तु का कृष्ण! सत्त्वमाहो रजस्तमः, किं सत्त्वं निष्ठाऽवस्थानं, आहोस्विद्रजः, अथ वा तम इति। एतदुक्तं भवति—या तेषां देवादिविषया पूजा, सा किं सात्त्विकी, आहोस्विद्राजसी, उत तामसीति ॥१॥

सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति श्रीभगवानुवाच—

श्रीभगवानुवाच—

> त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
> सात्त्विकी राजसी चैव तामसी चेति तां शृणु! ॥२॥

त्रिविधेति। त्रिविधा त्रिप्रकारा भवति श्रद्धा, यस्यां निष्ठायां त्वं पृच्छसि, देहिनां शरीरिणां सा स्वभावजा; जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तस्स्वभाव उच्यते। ततो जाता स्वभावजा। सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया; राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया; तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया। एवं त्रिविधां तामुच्यमानां श्रद्धां शृण्ववधारय! सैव त्रिविधा भवति ॥२॥

---

ज्ञानाभाव एव कारणं, नतु श्रद्धाऽभावः। नच शास्त्रविधिमविदुषां कुतस्तस्मिन् श्रद्धावकाश इति वाच्यं, वृद्धव्यवहारदर्शनानुमिते यत्किञ्चिद्विधौ तेषां श्रद्धायास्सत्त्वादिति। अश्रद्दधानतया तदुत्सृज्येत्यन्वयः। तदित्यस्य शास्त्रमित्यर्थः। तद्विहीनायां शास्त्रविधिरहितायां देवादिपूजायां श्रद्धयाऽन्विताः प्रवर्तन्त इति कल्पयितुं यस्मान्न शक्यमित्यन्वयः। तस्मादेवं कल्पयितुं न शक्यत्वादित्यर्थः। पूर्वोक्ता एवेति। अशास्त्रविद एवेत्यर्थः। शास्त्रविधिमविद्वांसोऽप्यज्ञाः श्रद्धया देवादिपूजायां प्रवर्तमाना दृश्यन्ते। तेषां सा प्रवृत्तिः किं सत्त्वकृता? उत रजःकृता? अथ वा तमःकृता? इति प्रश्ननिष्कर्षः।

सत्त्वं निष्ठेति। नितिष्ठति प्रतिष्ठत्यस्यामिति निष्ठा प्रतिष्ठा। आश्रय इति यावत्। अवतिष्ठत्यस्मिन्नित्यवस्थानं, यद्वा भावार्थवाची निष्ठाशब्दः। निष्ठाऽवस्थानं स्थितिरिति यावत्। औपचारिकोऽयं प्रयोगः। निष्ठेति निष्ठाश्रये वस्तुनि। किं ते सत्त्वे तिष्ठन्ति? उत रजसि? यद्वा तमसि? इति फलितार्थः। एवं श्लोकार्थस्य दुर्बोधत्वादाह—एतदुक्तं भवतीति। तेषामित्यविदुषामित्यर्थः। अविद्वत्त्वयोत्सृष्टशास्त्रविधीनामिति वा ॥१॥

त्रिविधेति। सामान्यविषयोपि प्रश्नः प्रविभज्य विशिष्य प्रतिवचनमर्हतीति न्यायाच्छ्रद्धयान्विता इति सामान्येनोक्तेऽप्यर्जुनेन भगवान् तां प्रविभज्य उत्तरयति—त्रिविधेत्यादिना, यस्यामिति। श्रद्धायामित्यर्थः। यद्यपि सत्त्वादिनिष्ठैवार्जुनेन पृष्टा, तथापि तत्प्रश्नस्य श्रद्धानिष्ठायामेव पर्यवसानमिति बोध्यम्। स्वभावशब्दार्थमाह—जन्मान्तरेति। अतीतानेकजन्मकृतानां बहूनां धर्माधर्माणां संस्कारा अविद्यायामन्तःकरणे वा वर्तमानास्सन्तः कर्मशब्देनोच्यन्ते। तत्र यत्कर्म मरण-

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत !
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धस्स एव सः ॥३॥

सत्त्वानुरूपेति। सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति हे भारत! यद्येवं ततः किं स्यादित्युच्यते—श्रद्धामयोऽयं श्रद्धाप्रायः पुरुषस्संसारी जीवः। कथम्? यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धस्स एव तच्छ्रद्धानुरूप एव स जीवः ॥३॥

ततश्च कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठाऽनुमेयेत्याह—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥४॥

यजन्त इति। यजन्ते पूजयन्ति सात्त्विकास्सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥४॥

---

कालेऽभिव्यज्यते तदेवोत्तरजन्मारम्भकत्वात्प्रारब्धमित्युच्यते, तदेवेह स्वभावशब्देनोच्यत इति। देहिनां श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा भवति, सा स्वभावजा भवति। तां शृणु इत्यन्वयः। देहिनां स्वभावजा सा श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा भवति, तां शृणु इति वा। प्रारब्धवशात्केषांचिद्देहिनां सात्त्विकी श्रद्धा भवति, केषांचिद्राजसी, केषांचित्पुनस्तामसी। इयं श्रद्धा सात्त्विकी, पुनरियं राजसी, पुनरियं तामसीति ज्ञानोपायं सूचयति देवपूजादिविषयेत्यादिविशेषणदानेन। प्रारब्धवशात्केचित्सात्त्विकश्रद्धया देवादीन् यजन्ते, केचिद्राजसश्रद्धया यक्षरक्षःप्रमुखान्, केचित्तामसश्रद्धया प्रेतपिशाचादीनिति परमार्थः। सैवमिति। सा श्रद्धा एवमुक्तरीत्या।

अत्र शास्त्रीयश्रद्धात्रैविध्यं तावदाहेति रामानुजः, तदयुक्तम्—देहिनामित्यविशेषेण निर्देशात्। अशास्त्रीयश्रद्धाया अपि सात्त्विकादित्रैविध्यसम्भवाच्च ॥२॥

सत्त्वेति। हे भारत! सर्वस्य सत्त्वानुरूपा श्रद्धा भवति। अयं पुरुषः श्रद्धामयो भवति। यो यच्छ्रद्धस्स स एव भवति। सत्त्वमन्तःकरणम्। कीदृशमिदमत आह—विशिष्टेति। तत्तत्पुरुषनियतधर्माधर्मादिसंस्कारोपेतमित्यर्थः। तस्यानुरूपा सत्त्वानुरूपा। श्रद्धाप्रायः प्रचुरश्रद्धः। प्राचुर्ये मयड्विधानात्। श्रद्धा प्रकृतमुच्यते यस्मिन् स श्रद्धामय इति समासः। अन्नमयो यज्ञ इतिवत्। असंसार्यसङ्गात्मनः कथं श्रद्धासङ्गोऽत आह—संसारीति, स एवेति। तच्छ्रद्ध एवेत्यर्थः। यो जीवो यच्छ्रद्धस्स तच्छ्रद्ध एव। किमनेनाभिप्रेतमत आह—तच्छ्रद्धानुरूप एवेति। तच्छ्रद्धानुगुणप्रवृत्तिरित्यर्थः। सर्वे पुरुषाः स्वस्वसात्त्विक्यादिश्रद्धानुसारेण देवपूजादिषु प्रवर्तन्त इत्यर्थः। श्रद्धामय इत्यत्र विकारार्थे मयटमभिप्रेत्य श्रद्धापरिणाम इत्याह रामानुजः, तन्मन्दम्—पुरुषस्य श्रद्धाविकारत्वासम्भवात् ॥३॥

यजन्त इति। ततश्चेति। श्रद्धानुरूपत्वात्पुरुषप्रवृत्तेरित्यर्थः। कार्येणेति। सत्त्वादिनिष्ठा

एवं कार्यतो निर्णीतास्सत्त्वादिनिष्ठाश्शास्त्रविध्युत्सर्गे । तत्र कश्चिदेव सहस्रेषु देवपूजादितत्परस्तत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति । कथम् ?—

> अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
> दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥५॥

अशास्त्रेति । अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनाः; ते च दम्भाहङ्कारसंयुक्ताः- दम्भश्चाहङ्कारश्च दम्भाहङ्कारौ ताभ्यां संयुक्ता दम्भाहङ्कारसंयुक्ताः, कामरागबलान्विताः- कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलैर्वाऽन्विताः ॥५॥

> कर्शयन्तश्शरीरस्थं भूतग्राममचेतसः ।
> मां चैवान्तश्शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥६॥

कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तश्शरीरस्थं भूतग्रामं करणसमुदायमचेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तश्शरीरस्थं नारायणं कर्शयन्तः, मदनुशासनाकरणमेव मत्कर्शनं, तान् विद्धि, आसुरनिश्चयान्- आसुरो निश्चयो येषां ते आसुरनिश्चयास्तान् परिहरणार्थं विद्धीत्युपदेशः ॥६॥

---

कार्यभूतया देवादिपूजयैव लिङ्गेन कारणभूता सत्त्वादिनिष्ठाऽनुमातुं शक्याऽनुमेया । अस्य सत्त्वनिष्ठाऽस्ति देवपूजकत्वाद्यस्सत्त्वनिष्ठस्स देवान् पूजयति, यो नैवं स नैवं, यथा रजोनिष्ठस्तमोनिष्ठश्च देवान्न पूजयति, एवमादिप्रयोगा ऊह्याः । सत्त्वनिष्ठा इति । सात्त्विकश्रद्धायुक्ता इत्यर्थः । स्वधर्मात्प्रच्युता विप्रादयो देहपातादूर्ध्वं वायवीयं देहमापन्नाः प्रेता इत्युच्यन्ते ॥४॥

अशास्त्रेति । ये जना अचेतसो दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताश्च सन्तश्शरीरस्थं भूतग्राममन्तश्शरीरस्थं मां चैव कर्शयन्तस्सन्तश्चाशास्त्रविहितं घोरं तपस्तप्यन्ते तानसुरनिश्चयान्विद्धि । शास्त्रविध्युत्सर्गे इति । शास्त्रविधिसामान्ये । तत्रेति । एवं निर्णीते सति । देवपूजादितत्परो देवब्राह्मणगुरुपित्रादिपूजासक्तः । सत्त्वे निष्ठा यस्य स सत्त्वनिष्ठः ॥५॥

कर्शयन्त इति । कृशीकुर्वन्तः पीडयन्तस्स्वस्वव्यापारनिर्वर्तनाक्षमं कुर्वन्त इत्यर्थः । न हीन्द्रियाणां शरीरस्येव स्वरूपतः कार्श्यं सम्भवति । शरीरस्थत्वविशेषणादाह—भूतग्रामं करणसमुदायमिति । करणानि समनस्कानीन्द्रियाणि । अचेतस इति । चेतनानां चेतो राहित्यासम्भवादाह—अविवेकिन इति, साक्षिभूतमिति । साक्षितया प्रत्यग्रूपेण स्थितमित्यर्थः । नारायणमिति । परमात्मानम् । आसुरनिश्चयानिति । दम्भाहङ्कारपरपीडनादीनामसुरधर्मत्वादिति भावः । असुरनिश्चयानिति रामानुजीयपाठस्तु अणो वैयर्थ्यादुपेक्ष्यः ॥६॥

आहारादीनां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामस-पुरुषप्रियत्वप्रदर्शनमिह क्रियते । यतो रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां चोपादानार्थम् । तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह 'राजसतामसान्बुध्वा कथं नु नाम परित्यजेत्, सात्त्विकानेवानुतिष्ठे'दित्येवमर्थं चाह—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ! ॥७॥

आहार इति । आहारस्त्वपि सर्वस्य भोक्तुः प्राणिनस्त्रिविधो भवति प्रिय इष्टः, तथा यज्ञः, तथा तपः, तथा दानम् । तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ! ॥७॥

आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्यास्स्निग्धास्स्थिरा हृद्या आहारास्सात्त्विकप्रियाः ॥८॥

आयुरिति । आयुश्च सत्त्वं च बलं चारोग्यं च सुखं च प्रीतिश्चायुस्सत्त्वबलारोग्य-सुखप्रीतयस्तासामायुस्सत्त्वादीनां विवर्धना आयुस्सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः, ते च रस्या रसोपेताः, स्निग्धास्स्नेहवन्तः, स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रियाः, आहारास्सात्त्विकप्रियास्सात्त्विकस्येष्टाः ॥८॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥९॥

कट्विति । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन इत्यत्रातिशब्दः कट्वादिषु सर्वत्र योज्यः, अतिकटुरतितीक्ष्ण इत्येवम् । कटुश्चाम्लश्च लवणश्चात्युष्णश्चातितीक्ष्णश्च रूक्षश्च

---

आहार इति । कथं नु नामेति । अतिप्रयासेनेत्यर्थः । सर्वस्यापि त्रिविध आहारस्तु प्रियो भवति । त्रिविधो यज्ञः प्रियो भवति । तथा त्रिविधं दानं प्रियं भवति । इमं तेषां भेदं शृणु ! ॥७॥

आयुरिति । आयुश्शरीरे प्राणवायुसञ्चारः । सत्त्वं गुणविशेषः । बलं शरीरेन्द्रियपाटव-मारोग्यमरोगता । विशेषेण वर्धयन्तीति विवर्धनाः । रसोपेता इति । ननु नीरसा इत्यर्थः । मधुररसोपेता इति रामानुजः, तदयुक्तम्—केवलमधुरसाहारस्यापि रोगादिहेतुत्वात् । स्नेहो द्रवः । चिरकालं स्थातुं शीलं येषां ते चिरकालस्थायिनः । क्वेत्यत आह—देहे इति । रस-मांसादिरूपेणेति भावः । स्थिरपरिणामा इति रामानुजार्थस्तु लाक्षणिकत्वादुपेक्ष्यः ॥८॥

कट्विति । कट्वादिरसानां सर्वात्मनाऽभावस्यारुच्यादिहेतुत्वात्सात्त्विकस्यापि कट्वादिरससेवा आवश्यक्येवेत्यत आह—अतिशब्द इति । कटुस्तिक्तः कटुरसस्य तीक्ष्णशब्देनोक्तत्वात् । अतिकटु-र्निम्बादिः । अत्याम्लातिलवणौ प्रसिद्धौ । अत्युष्णः पाकोत्तरक्षणकालिकान्नादिः अतितीक्ष्णः श्लेष्म-

विदाही च कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः, एवंविधा आहारा राजसस्येष्टाः, दुःखशोकामयप्रदाः- दुःखं च शोकं चामयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥९॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥

यातयाममिति । यातयामं मन्दपक्वं निर्वीर्यस्य गतरसशब्देनोक्तत्वात् । गतरसं रसवियुक्तं, पूति दुर्गन्धि, पर्युषितं च पक्वं सद्रात्र्यन्तरितं च यत्, उच्छिष्टमपि भुक्तशिष्टमुच्छिष्टं, अमेध्यमयज्ञार्हं, भोजनमीदृशं तामसप्रियम् ॥१०॥

---

प्रकोपकः मरिचादिः । अतिरूक्षश्शोषकरो वातप्रकोपः कोद्रवादिः । अतिविदाही तापकरः; पित्तप्रकोपकस्सर्षपादिः । आमयं रोगम् । 'प्राघ्रा'ध्मेति दाणो यच्छादेशादाह—प्रयच्छन्तीति ॥९॥

यातयाममिति । यातो यामः पाकस्य नियमो यस्य तद्यातयामं यावत्कालं यस्य पाकः कर्तव्यस्तावत्कालं तस्य पाकेऽकृते सति तदन्नं यातयाममित्युच्यते । इदमेवाह—मन्दपक्वमिति । मन्दमल्पं यथातथा पक्वं मन्दपक्वम् । 'पचो वः' इति निष्ठायां वः । नचानुपसृष्टस्य यमधातोर्नियमार्थो नास्तीति वाच्यं, द्योतकत्वनियमादुपसर्गाणां धातूनामेवानेकार्थत्वात् । ननु यातो यामश्श्रेष्ठांशो यस्य तद्यातयामं निर्वीर्यमित्यक्लिष्टार्थस्य कुतः परित्यागोऽत्र आह—निर्वीर्यस्येति । आहारस्य रसो हि वीर्यम् ।

ननु यातयामं यातप्रहरं चिरकालावस्थितमिति रामानुजार्थस्समीचीन इति चेत्, मैवम्—पर्युषितमित्यनेन चिरकालावस्थितस्योक्तत्वात् । रात्र्यन्तरितं हि पर्युषितं यातयामं चिरकालावस्थितं भवति । नच कालातिपत्त्या रसान्तरापन्नं पर्युषितं कालातिक्रममात्रदुष्टं यातयाममिति भेदोऽस्तीति वाच्यं, रसान्तरापत्त्यादिकं विना कालातिक्रममात्रेण यस्य कस्याप्याहारस्य दुष्टत्वाभावात् । नहि रात्र्यन्तरितं गङ्गाजलं कूपजलवद्दुष्टं भवति । नापि रात्र्यन्तरितं माषवटकादिभक्ष्यमन्नादिवद्दुष्टं भवतीति । दुर्गन्धि दुष्टो गन्धो दुर्गन्धः, सोऽस्यास्तीति दुर्गन्धि । पर्युषितमिति । यत्पक्वं सद्रात्र्यन्तरितं तत्पर्युषितं यातयामाद्भेदप्रदर्शनार्थं पक्वं सदिति । पक्वस्यापि दुष्टत्वप्रदर्शनार्थं रात्र्यन्तरितमिति । भुक्तशिष्टमिति । भुक्तावशेष इत्यर्थः ।

रामानुजस्तु—गुर्वादिभ्योऽन्येषां भुक्तशिष्टमित्याह, तदयुक्तम्—शिष्याय श्रोत्रियाय स्वभुक्तावशेषप्रदानेन गुरोर्दोषप्रसङ्गात् । तथोपनीताय पुत्रायोच्छिष्टप्रदानेन पितुर्दोषप्रसङ्गाच्च । तथा शिष्टाचारादर्शनाच्च । यदि वैष्णवादीनामयं गुर्वाद्युच्छिष्टान्नभोजनं शिष्टाचारस्तर्हि चक्राङ्कनादिशिष्टाचारसम्पन्नानां तेषां तदपि शिष्टाचार एव भवतु, स्मार्तानां तु न तथा । नह्यत्र गुर्वादिभिन्नोच्छिष्टमिति मूलं दृश्यते, किंतूच्छिष्टमित्येव । तस्य चैवं सङ्कोचनमन्याय्यमिति स्फुटम् ।

अमेध्यमशुद्धमपवित्रमिति यावत् । पवित्रं हि पुरोडाशादिकं यज्ञायार्हतीत्यत आह—अयज्ञार्हमिति । अयज्ञशिष्टमिति तु रामानुजः, तदयुक्तम् —सात्त्विकराजसयोरप्ययज्ञशिष्टान्नस्

अथेदानीं यज्ञस्त्रिविध उच्यते—

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनस्समाधाय स सात्त्विकः ॥११॥

अफलेति । अफलाकांक्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टश्शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्यते, यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनस्समाधाय नानेन पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥११॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥१२॥

अभिसन्धायेति । अभिसन्धाय तुद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसं रजोगुणनिर्वर्त्यं राजसं जानीहि ॥१२॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥

विधीति । विधिहीनं यथाचोदितविधिविपरीतं, असृष्टान्नं- ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नं, मन्त्रहीनं- मन्त्रतस्स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनं, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति॥

---

भक्षणदर्शनात् । नहि ये अयज्ञशिष्टान्नं भुञ्जते ते तामसा एवेति नियन्तुं शक्यते; सात्त्विकश्रेष्ठैरपि पक्वचूतफलादीनामयज्ञशिष्टानामद्यमानत्वात् । भोजनमाहारोऽन्नादिकं भुज्यते आह्रियत इति, भोजनमाहार इति च व्युत्पत्तेः । तामसप्रियं तामसस्येष्टम् ॥१०॥

अफलेति । अफलाकांक्षिभिः यष्टव्यमेवेति मनस्समाधाय विधिदृष्टो यो यज्ञ इज्यते स सात्त्विकः । यजेतेत्यादिविधिदर्शनात्केवलं मया यष्टव्यं, नतु फलमाकांक्षितव्यमिति मनोनिश्चयपूर्वकं यथाविधि क्रियमाणो यज्ञस्सात्त्विक इत्युच्यत इत्यर्थः ॥११॥

अभिसन्धायेति । हे भरतश्रेष्ठ ! फलमभिसन्धाय दम्भार्थमपि चैव इज्यत इतियत् तं यज्ञं राजसं विद्धि । यदिज्यते तमिति वा । यदिति सामान्ये नपुंसकं य इत्यर्थः । यथाविधि फलाभिसन्धिमता क्रियमाणः यथाविधि दाम्भिकेन क्रियमाणश्च यज्ञो राजस इत्युच्यत इत्यर्थः ॥१२॥

विधिहीनमिति । चोदितमनतिक्रम्य वर्तमानं यथाचोदितं तस्माद्विपरीतं यथाचोदितविपरीतं विधिविरुद्धमित्यर्थः । मन्त्रहीनमिति । मन्त्रान् यद्यपि पठन्ति तथापि स्वरवर्णविपर्ययेण पठन्ति, अत उक्तम्—मन्त्रहीनमिति । स्वरवर्णविपर्ययरहितमन्त्ररहितमित्यर्थः । इदमेवाह—स्वरतो वर्णतश्च वियुक्तमिति । मन्त्रशब्दोऽत्र तद्गतस्वरवर्णपरः । यद्वा स्वरवर्णातिरिक्तमन्त्रपदार्थाभावात्स्वरयुक्तवर्णसमुदायो मन्त्रः । तेन हीनोऽयं यज्ञः स्वरतो वर्णतश्च वियुक्त इति । श्रद्धाविरहितमिति । तामसश्रद्धावत्त्वेऽप्येषां तामसश्रद्धाया देवपूजायामनुपयुक्तत्वात्सात्त्विकश्रद्धायाश्चाभावादिति भावः । यद्वा भूतप्रेतादिपूजायामेवैषां तामसी श्रद्धा, नतु यज्ञे इति भावः ॥१३॥

अथेदानीं तपस्त्रिविधमुच्यते—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

देवेति । देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं, शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शारीरं शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकरणैः कर्त्रादिभिस्साध्यं शारीरं तप उच्यते । 'पञ्चैते तस्य हेतवः' इति हि वक्ष्यति ॥१४॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥

अन्विति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियं हितं च यत्प्रियहिते दृष्टादृष्टार्थे, अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशिष्यते । अविशेषेण धर्मसमुच्चयार्थश्चकारः ।

---

देवेति । तपस्तावत्त्रिविधं- शारीरवाचिकमानसिकभेदात् । पुनस्त्रिविधं- सात्त्विकराजसतामसभेदात् । तत्र प्राथमिकभेदत्रयं दर्शयति श्लोकत्रयेण । देवा आदित्यचन्द्रादयः । द्विजा अतिथ्यादयः । गुरवः पितृविद्यामन्त्रोपदेष्टारः । 'जनिता चोपनेता च यश्च विद्यां प्रयच्छति । श्वशुराश्चाग्रजो भ्राता पञ्चैते गुरवस्स्मृता' इत्युक्ता वा । प्राज्ञाः पण्डिताः ब्रह्मचर्यं स्त्रीसम्भाषणाद्यभावः । निर्वर्त्यं साध्यम् । ननु शरीरेण जडेन कथं निर्वर्त्यतेऽत आह—शरीरप्रधानैरिति । शरीरं प्रधानं येषां तैश्शरीरप्रधानैः कर्त्रादिभिरिति । कर्ताऽहङ्कार आदिपदात्करणानां ग्रहणम् । कर्ता शरीरतादात्म्याध्यासमापन्नस्सन् शरीरतादात्म्याध्यासवद्भिरेवेन्द्रियैर्देवादिपूजां कुर्वन् सन्, 'ब्राह्मणोऽहमादित्यं हस्ताभ्यां नमस्करोमि, रुद्रं हस्तेन वारिणा अभिषिञ्चा'मीत्येवं मन्यत इत्यस्य तपसश्शारीरत्वमुक्तमिति भावः । सूत्रवोक्तं शरीरस्य कर्मसाधनत्वमत आह—पञ्चेति । अधिष्ठानं तथा कर्तेति श्लोकेनेति भावः । यद्वा कर्त्रादिभिरित्यादिपदादधिष्ठानमिति श्लोकोक्तकरणादिग्रहणं, तथा च पञ्चभिः कर्तृकरणशरीरचेष्टादैवैः क्रियमाणमपि देवद्विजादिपूजनादिकं शरीरेणैव कृतमिति शारीरमित्युच्यते । कुतः ? प्रकृततपसि शरीरस्यैव प्रधानत्वात् । इन्द्रियाद्यधिष्ठितदेहव्यापारो हि पूजादिः ॥१४॥

अनुद्वेगेति । अनुद्वेगकरं सत्यं प्रियहितं च यद्वाक्यं तत् स्वाध्यायाभ्यसनं चैव वाङ्मयं तप इत्युच्यते । प्रियं च तद्धितं च प्रियहितम् । दृष्टार्थं प्रियमदृष्टार्थं हितं यद्धीहैव सुखं जनयति तत्प्रियमिष्टं, यत्तु नरकादिदुःखं निवारयति तद्धितममुत्रोपकारकम् । प्रियहितं चेति चकारस्यार्थमाह—अविशेषेणेति । अनुद्वेगकरत्वसत्यत्वप्रियत्वहितत्वाख्यधर्मचतुष्टयस्याविशेषेण समुच्चयार्थश्चकारः । अमीषामन्यतमस्य न्यूनाधिकभावः । किंतु चत्वारोऽप्यमी धर्मास्साम्येन वर्तितव्या वाक्य इति बोधनार्थश्चकार इत्यर्थः । तेन च यत्र वाक्ये चत्वारस्ते धर्मास्सन्ति तदेव वाचिकं तपः । यत्र तु तेषां मध्ये

परप्रत्ययाय प्रयुक्तस्य वाक्यस्यानुद्वेगकरस्य सत्यप्रियहितानुद्वेगकरत्वादीनामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि न तद्वाङ्मयं तपस्तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम्। तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम्। तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनस्य न वाङ्मयतपस्त्वम्। किंपुनस्तत्तपः? यत्सत्यं वाक्यमनुद्वेगकरं प्रियं हितं च, यत्तत्परमं तत्तपो वाङ्मयम्। यथा 'शान्तो भव वत्स! स्वाध्यायं योगं चानुतिष्ठ; तथा ते श्रेयो भविष्य'तीति। स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥१५॥

मनःप्रसादस्सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

मन इति। मनःप्रसादः- मनसः प्रशान्तिस्स्वच्छतापादनं प्रसादः, सौम्यत्वं यत्सौम-

---

त्रयो द्वौ एको वा धर्मोऽस्ति तद्वाक्यं नैव तप इति सिद्ध्यति। इदमेवाह—परेति। परप्रत्ययार्थं परविश्वासार्थं परेषां ज्ञानार्थमिति वा। अनुद्वेगकरस्य वाक्यस्य विहीनस्य सतो वाङ्मयतपस्त्वं नेत्यन्वयः। इतरेषामिति, अनुद्वेगकरप्रियहितानामिति। अन्यत्र, अनुद्वेगकरसत्यहितानामिति। अपरत्र अनुद्वेगकरसत्यप्रियाणामिति चार्थः।

वाङ्मयमित्यस्याकांक्षामाह—किं पुनस्तत्तप इति। वाङ्मयं वाग्विकारः वाक्साध्यमिति यावत्। अस्मिंस्तपसि वागेव प्रधाना, अन्तःकरणादयस्त्वप्रधानाः। अत उक्तम्—वाङ्मयमिति। नात्र देवपूजादाविव शरीरव्यापारः कश्चिदस्ति, किंतु वाग्व्यापार एव। जिह्वादयस्तु वाचोऽधिष्ठानभूता एवेति बोध्यम्। अनुद्वेगकरत्वादिधर्मचतुष्टययुक्तं वाक्यमेव किंचिदुदाहरति—यथा शान्त इति। हे वत्स! शान्तो भव, कामादिविकारशून्यचित्तो भव। सति चित्तविक्षेपे स्वाध्याययोगाभ्यसनादिति भावः। स्वाध्यायं योगं कर्मयोगं चानुतिष्ठ। यथैतदुभयं करोषि तथा तव श्रेयो भविष्यति। इति स्वाध्यायाभ्यसनस्यापि श्रेयोहेतुत्वप्रतिपादनात् स्वाध्यायाभ्यसनमपि वाङ्मयं तप इत्युच्यते। कीदृशमत आह—यथाविधीति। विधिमनतिक्रम्येत्यर्थः। स्नानसन्ध्यागुरुध्यानादयः स्वाध्यायस्य विधयः। स्वाध्यायो वेदः सच यस्य शाखिनो यो विहितस्स एव। तेन स्वशाखां परित्यज्यान्यशाखां योऽध्येष्यति स शाखारण्डस्सर्वकर्मबहिष्कृत एवेति न परशाखाध्ययनं वाङ्मयं तप इत्युच्यते। इदमेव सूचयितुं स्वाध्याय इत्युक्तम्। अधीयत इत्यध्यायो वेदः। स्वः स्वीयश्चासावध्यायः स्वस्याध्याय इति वा स्वाध्याय इति व्युत्पत्तेः। एवं स्वाध्यायस्य वाङ्मयतपस्त्वादेव। 'स्वाध्यायोऽध्येतव्य' इति विधिर्दृश्यते। नहि निष्फलः कोऽपि विधिस्सर्वज्ञेनेश्वरेण विधीयते। तथा सत्यनर्थकत्वेनेश्वरस्याप्रामाणत्वप्रसङ्गात् ॥१५॥

मन इति। स्वच्छता कामादिकालुष्याभावः। सौम्यत्वं सौमनस्यं, तस्य च लिङ्गं मुखादि-

न्तरमाहुः—मुखादिप्रसादादिकार्योन्नेयाऽन्तःकरणस्य वृत्तिः । मौनं वाङ्नियमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनस्संयमो मौनमिति । आत्मविनिग्रहः- मनोनिरोधस्सर्वतस्सामान्यरूप आत्मविनिग्रहः, वाग्विषयस्यैव मनसस्संयमो मौनमिति विशेषः । भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥

यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैस्सात्त्विकत्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते—

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैस्सात्त्विकं परिचक्षते ॥१७॥

श्रद्धयेति । श्रद्धयाऽऽस्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिप्रकारं त्र्यधिष्ठानं नरैरनुष्ठातृभिरफलाकांक्षिभिः फलाकांक्षारहितैर्युक्तैस्समाहितैः— यदीदृशं तपः, तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥१७॥

---

प्रसादः । भ्रूविक्षेपनेत्रारुणत्वादिभिर्लिङ्गैः क्रुद्धं पितरं ज्ञात्वा पुत्रस्स्वापराधक्षमापणं स्तुतिनमस्कारादिभिः कुर्वन् मुखप्रसादादिना तं पुनस्सौम्यत्वमापन्नं निश्चित्य कृतार्थोऽहमिति मन्यते । सेयं मुखप्रसादादिकार्योन्नेया अन्तःकरणवृत्तिस्सौम्यत्वमित्युच्यते । स्वानुभवैकवेद्यो मनःप्रसादः, परप्रत्यक्षं तु सौम्यत्वमिति विवेकः ।

मनसः परेषामभ्युदयप्रावण्यं सौम्यत्वमिति रामानुजः—सौम्यत्वमापन्नो हि राजा अर्थिभ्यः किमपि धनादिकं ददाति । मनसः क्रोधाद्यभावः प्रसादः; अनुग्रहरूपान्तःकरणवृत्तिस्सौम्यत्वमिति विवेक इति भावः । अन्तःकरणवृत्तिरिति । अन्तःकरणस्य सात्त्विकः परिणामविशेष इत्यर्थः । अन्तःकरणं यदा सत्त्वमयं वर्तते तदा मुखप्रसादादिर्भवति । मौनं वाक्यनियमः । वाक्योपरम इति यावत् । वाचामप्रयोग इति भावः । सहि वाङ्मयस्तप एवेत्यत आह—मनस्संयमेति । मनसो विवक्षाव्यापारोपरमे सत्येव वाचो निर्व्यापारत्वं मनोव्यापारपूर्वकत्वादिन्द्रियव्यापारस्य । कार्येण मौनेन कारणं मनस्संयम उच्यते । उपचारादिति भावः । उक्तप्रकारमेव दर्शयति—मनस्सयमो मौनमिति । मौनशब्दस्यात्र मौनहेतुभूतो मनस्संयमोऽर्थः । तस्य च मानसिकतपस्त्वमुचितमिति भावः । मनोनिरोध इति । ननु मनस्संयमशब्देनोक्त एवायमर्थ इत्यत आह—सर्वत इति । सर्वविषयेभ्यस्सामान्येन मनसो निरोध आत्मविनिग्रहः । वाग्विषयादेव मनसो निरोधो मनस्संयम इति मौनात्मविनिग्रहयोर्भेद इत्यर्थः । सामान्यविशेषभावेन द्वेधा निर्देशान्न पौनरुक्त्यमिति भावः । अमायावित्वं निष्कापट्यम् ॥१६॥

श्रद्धयेति । नरैः परया श्रद्धया तप्तं तत्तपस्त्रिविधं भवति । अफलाकांक्षिभिर्युक्तैस्तप्तं तपस्सात्त्विकं परिचक्षते । यथोक्तं पूर्वोक्तं । कथमिति । पुनः कथं त्रिविधं भवतीति शङ्कायामुच्यते — त्र्यधिष्ठानमिति । वाङ्मनोदेहनिर्वर्त्यमित्यर्थः । तपोऽनुष्ठातारोऽत्र नराः, नतु केवलमनुष्या इत्याह— अनुष्ठातृभिरिति । समाहितैस्समाहितचित्तैः । फलाभिसन्धिरहितं योगयुक्तं तपस्सात्त्विकमित्यर्थः ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

सत्कारेति । सत्कारस्साधुकारः 'साधुरयं तपस्वी ब्राह्मण' इत्येवमर्थं, मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं, पूजापादप्रक्षालनार्चनातिशयितृत्वादिस्तदर्थं च तपस्सत्कारमानपूजार्थं, दम्भेन चैव यत्क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेनाध्रुवम् ॥१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

मूढग्राहेणेति । मूढग्राहेणाविवेकनिश्चयेनात्मनः पीडया यत्क्रियते तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥१९॥

इदानीं दानत्रैविध्यमुच्यते—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥

दातव्यमिति । दातव्यमित्येवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय, समर्थायापि निरपेक्षं दीयते, देशे पुण्यदेशे कुरुक्षेत्रादौ, काले संक्रान्त्यादौ, पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥२०॥

---

सत्कारेति । यत्तपस्सत्कारमानपूजार्थं दम्भेन चैव क्रियते नरैरिति शेषः । चलमध्रुवं तत् इह राजसमिति शिष्टैः प्रोक्तम् । मया तपसि कृते सति मां जनास्तपस्विनं मत्वा मम सत्कारमानपूजाः कुर्युरिति बुद्ध्या धार्मिकोऽहमिति प्रख्यापनार्थं च यत्तपः क्रियते तद्राजसमित्यर्थः । साधुकारस्साधुवादः । तमेव दर्शयति—साधुरिति, तदर्थमिति । तस्मा इदं तदर्थं तत्फलायेत्यर्थः । अभिवादनं नमस्कारः । आदिपदात्स्तुत्यादिग्रहणम् । पादप्रक्षालनार्चनादीत्यादिपदात्पीठोपवेशनादिग्रहः । इह शास्त्रे ॥१८॥

मूढग्राहेणेति । मूढग्राहेणात्मनः पीडया परस्योत्सादनार्थं वा यत्तपः क्रियते नरैस्तत्तामसमुदाहृतं शिष्टैः । मूढैरविवेकनिश्चयेन कृतं स्वशरीरेन्द्रियादिपीडकं परनाशफलकं च तपस्तामसमित्यर्थः । अविवेकनिश्चयो मनुष्योऽहं ब्राह्मणोऽहमित्यादिरूप आत्मन आत्मत्वेन गृहीतस्य शरीरेन्द्रियादेः । वाशब्दो विकल्पार्थः । आत्मपीडाकरत्वेन परनाशकरत्वेन च तामसतपसो द्वैविध्यात् ॥१९॥

दातव्यमिति । दातव्यमिति मत्वा देशे काले पात्रे चानुपकारिणे यद्दानं दीयते तद्दानं सात्त्विकं स्मृतम् । अनुपकारिण इति । इतः प्राक्स्वस्योपकारमकृतवते । पश्चादप्यात्मन उपकर्तुमक्षमाय । समर्थत्वेऽपि त्वमिदं द्रव्यं गृहीत्वा काले मम प्रत्युपकारं कुर्वित्येवं वाचा स्वेनानुकार्य मनसाप्ययमुद्देशो न कार्य इत्याह—निरपेक्षमिति, पात्र इति । पात्रभूतायानुपकारिण इत्यर्थः ॥

> यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
> दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥

यदिति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं, फलं वाऽस्य दानस्य मे भविष्यत्यदृष्टमिति, तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्दानं राजसं स्मृतम् ॥२१॥

> अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
> असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

अदेशकाल इति । अदेशकालेऽदेशेऽपुण्यदेशे म्लेच्छाऽशुच्यादिसङ्कीर्णे, अकाले पुण्यहेतुत्वेनानाख्यातेऽप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यः, देशादिसम्पत्तौ वाऽसत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं च यत्तद्दानं तामसमुदाहृतम् ॥२२॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—

> ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।
> ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥

ओं तत्सदिति । ओं तत्सदित्येवं निर्देशो निर्दिश्यतेऽनेनेति निर्देशः, त्रिविधो नामनिर्देशो ब्रह्मणस्स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमुच्यते ॥२३॥

---

यत्त्विति । यत्तु प्रत्युपकारार्थं दीयते, यत्पुनः फलमुद्दिश्य वा दीयते, यच्च परिक्लिष्टं यथातथा दीयते तद्दानं राजसमुदाहृतम् । अदृष्टं स्वर्गादिरूपम् ॥२१॥

अदेशेति । यद्दानमदेशकालेऽपात्रेभ्यश्च दीयते, यच्चासत्कृतमवज्ञातं तद्दानं तामसमुदाहृतम् । अदेशो दानानुचितदेशः । स च कीदृशोऽत्र आह—म्लेच्छेति । अनाख्यातशब्दं स्वयमेव व्याख्याति—अप्रख्यात इति । अप्रसिद्ध इत्यर्थः । देशकालपात्ररूपसम्पद्यपि सत्यां यदसत्कृतं दीयते, तद्दानं च तामसमित्याह—देशादीति, असत्कृतमिति । न विद्यते सत्कृतं सत्कारः पादप्रक्षालनपूजादिरूपो यस्मिन्कर्मणि तद्यथातथा । यदवज्ञातं दीयते तच्च दानं तामसम् । पात्रपरिभवयुक्तं यथातथेति क्रियाविशेषणम् । दीयत इति दानं द्रव्यं, नतु वितरणक्रियामात्रं- दीयत इत्यनेनान्वयात् । वितीर्यमाणद्रव्यत्रैविध्यकथनाद्वितरणत्रैविध्यसिद्धिः । यद्वा दानं दीयत इति यद्द्रव्यं वितीर्यत इति यत्तद्दानं तद्वितरणमिति व्याख्येयम् । अथ वा यद्दानं वितरणं दीयते क्रियते धातूनामनेकार्थत्वात्तद्दानं वितरणमिति ॥२२॥

ओमिति । साद्गुण्यं सद्गुणत्वं गुणवत्तातिशय इति यावत् । ब्रह्मण ओं तत्सदिति त्रिविधो निर्देशस्स्मृतः । पुरा तेन ब्राह्मणा वेदाश्च यज्ञाश्च विहिताः । निर्देशो नाम, यद्वा निर्दिशनम् । कस्य निर्देशोऽत्र आह—नामनिर्देश इति । त्रिविधो नामनिर्देशः—ब्रह्मणस्स्मृत इति । ब्रह्मणस्त्रिविधं

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्तास्सततं ब्रह्मवादिनाम् ॥२४॥

तस्मादिति । तस्मात् 'ओ'मित्युदाहृत्योच्चार्य यज्ञदानतपःक्रिया यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताश्शास्त्रचोदितास्सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ॥२५॥

तदिति । तदित्यनभिसन्धाय 'त'दिति ब्रह्माभिधानमुच्चार्यानभिसन्धाय च यज्ञादि-

---

नाम निर्दिष्टमित्यर्थः । क्वेत्यत आह—वेदान्तेष्विति । कैरित्यत्र आह—ब्रह्मविद्भिरिति। ब्रह्मणः परमात्मनः, ओमिति, तदिति, सदिति च नामत्रयनिर्देशश्शास्त्रप्रसिद्ध इत्यर्थः । ओमित्येकाक्षरं ब्रह्म तत्त्वमसि; सच्चिदानन्दं ब्रह्मेत्यादिशास्त्रादिति भावः ।

यद्यपि चिदानन्दात्मादिनिर्देशान्तराण्यपि ब्रह्मणस्सन्ति । तथापि प्रकृतोपयोगात्प्रधानत्वाच्च नामत्रयनिर्देश एवेह गृहीत इति बोध्यम् । प्रकृतोपयोगित्वं चानुपदमेव दर्शयिष्यति । नामत्रय-निर्देशस्य नामरूपादिविहीनस्यापि ब्रह्मणः कल्पितमिदं नामनिर्देशत्रयमिति बोध्यम् । ब्राह्मणा इति। ननु ब्रह्मणैव सृष्टा ब्राह्मणादयः, नतु निर्देशेनेति चेत्सत्यम्—ब्रह्मणा हि मायाविनेश्वरेण ओं तत्स-दिति निर्देशपूर्वकं ब्राह्मणादीनां सृष्टत्वात्तथोक्तिरिति ।

यत्तु रामानुजः—ब्रह्मणो वेदस्येति वैदिककर्मण इत्यर्थ इति तेन निर्देशेन युक्ता ब्राह्मणा-दयो मया पुरा विहिता इति च, तदयुक्तम्—परब्रह्मवाचिनो ब्रह्मशब्दस्य वेदपरत्वासम्भवात्तस्य च वैदिककर्मपरत्वस्य लाक्षणिकत्वेनायुक्तत्वाच्च । ओं तत्सदिति त्रिविधशब्दाभिलप्यत्वाभावाच्च वेदवैदिक-कर्मणोः । नच ओं तत्सदिति त्रिविधश्शब्दो वैदिककर्मान्वयी भवतीति वाच्यं, अन्वयीति मूला-रूढिः पदकल्पनस्याप्रमाणत्वात् । किंच ब्राह्मणानां वेदानां यज्ञानां च वैदिकर्मणां त्रयाणामपि तन्निर्देश-युक्तत्वस्य ब्राह्मणास्तेनेति वाक्येन प्रोक्तत्वे सति वैदिकं कर्म तन्निर्देशयुक्तमिति पूर्ववाक्येन कथ्यं व्यर्थं पौनरुक्त्यावहं च । तेन विहिता इति साक्षाच्छ्रूयमाणं तच्छब्दनिष्ठं कर्तृत्वं परीत्यज्य तच्छब्दा-र्थस्याप्राधान्यं कल्पयित्वा मयैवेति कर्त्रन्तराध्याहारोऽप्ययुक्त एव । श्रुतहानाश्रुतकल्पनयोर्दुष्टत्वात् ॥

तस्मादिति । तस्माद्ब्रह्मवादिनां विधानोक्ता यज्ञदानतपःक्रियास्सततमोमित्युदाहृत्य प्रवर्तन्ते। तस्मादिति । ब्रह्मनिर्देशत्वादोंकारादित्रयस्येत्यर्थः । यज्ञश्च दानं च तपश्च यज्ञदानतपांसि, तान्येव क्रियाः यज्ञदानतपःक्रियाः । ब्रह्म वेदः तद्वदितुं शीलं येषां ते ब्रह्मवादिनः वैदिका इत्यर्थः । नात्र परब्रह्मवाची ब्रह्मशब्दः- परब्रह्मविदां कर्मप्रवृत्त्ययोगात् । प्रपञ्चितं चैतदधस्तात् । अत्र- 'ओमि-त्याश्रावयत्योमिति शंसत्योमित्युद्गाय'तीति छान्दोग्यमनुसन्धेयम् ।

यत्तु रामानुजः—वेदाश्चोमित्युदाहृत्यारभ्यन्ते । ओमितिशब्दान्वितवेदधारणात्तदन्वित-यज्ञादिकर्मकरणाच्च ब्राह्मणानामप्योमिति शब्दान्वय इति तदेतन्मूलाद्दृष्टेः करित्रमित्युपेक्ष्यम् ॥२४॥

तदिति । ओमित्यस्य विनियोगं दर्शयित्वा तदित्यस्य दर्शयति । मोक्षकांक्षिभिः तदित्युच्चार्य

कर्मणः फलं, यज्ञतपःक्रियाः- यज्ञक्रियाश्च तपःक्रियाश्च यज्ञतपःक्रियाः, दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकांक्षिभिर्मोक्षार्थिभिर्मुमुक्षुभिः ॥२५॥

ओं तच्छब्दयोर्विनियोग उक्तः । अथेदानीं सच्छब्दस्य विनियोग उच्यते—

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ ! युज्यते ॥२६॥

सदिति । सद्भावे- असतस्सद्भावे यथाऽविद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावे चासद्वृत्तस्यासाधोस्सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यतेऽभिधीयते; प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ ! युज्यते प्रयुज्यत इत्येतत् ॥२६॥

---

फलमनभिसन्धाय यज्ञतपःक्रिया विविधा दानक्रियाश्च क्रियन्ते । क्रियन्त इति क्रियाः कर्माणि, नतु करणं क्रिया क्रियत इत्यनेनानन्वयात् । मुमुक्षुभिरिति । चित्तशुद्धिज्ञानप्राप्तिद्वारा मोक्षाभिलाषिभिरित्यर्थः । नहि मुमुक्षूणां विदुषां सन्न्यासिनां क्रियाधिकारोऽस्ति । श्लोकद्वयफलितार्थमाह—ओं तदिति ॥२५॥

सद्भाव इति । सद्भावस्सत्त्वम् । कस्येत्यत आह—असत इति । असतः कथं सत्त्वेत्यत आह—यथेति । जन्मनः प्रागसतः पुत्रस्य जन्मनि सदिति प्रयुज्यते । असतोऽपि जन्मना लब्धसत्ताकत्वात्पुत्रस्य सत्त्वं युक्तमत एव जन्मानन्तरं सन्पुत्र इति सच्छब्दप्रयोगः । साधुभावस्साधोर्भावः सद्वृत्तत्वं तस्मिन् । कस्य साधुभावोऽत आह—असद्वृत्तस्येति । असद्दुष्टं वृत्तं चरितं व्यापार इति यावत् । यस्य तस्यासद्वृत्तस्य । तदर्थमाह—असाधोरिति । असद्वृत्तत्वं ह्यसाधुत्वम् । सत् श्रेष्ठं वृत्तं यस्य स सद्वृत्तस्सद्भावस्सद्वृत्तत्वं साधुत्वम् । यः पूर्वमसद्वृत्तस्सन्निदानीं दैववशात्सद्वृत्तो जातस्तस्य तत्साधुत्वं सदित्युच्यत इत्यर्थः । असतःस्सद्भावे वक्तव्ये असाधोस्साधुभावे वक्तव्ये च सदित्येतत्पदं प्रयुज्यत इति श्लोकान्वयः ।

एतच्छब्दार्थमाह—ब्रह्मणोऽभिधानमिति । अभिधानं नामाभिधीयते उच्यते घटादिपदार्थोऽनेनेति घटादिशब्दस्याभिधानत्वम् । नाम्ना ह्यभिधेयं वस्तु निर्दिश्यते । घटमानयेत्युक्तो वृद्धेन लक्ष्मो घटमानयतीति प्रत्यक्षं, तद्धि नाम्नो वस्तुनिर्देशं विना न सम्भवतीति । नच सन्पुत्र इति सद्भावे प्रयोगवत्साधुभावे प्रयोगो नास्तीति वाच्यं, साधुस्सन्निति प्रयोगसत्त्वात् । असाधुना राज्ञा स्वस्मै धनादिके दत्ते सति ब्राह्मणः प्रत्येति हि असाधुरयं दैवात्साधुस्सन् राजा मह्यमिदं धनादिकमदिक्षदिति । प्रशस्ते कर्मणीति । विवाहादिशुभकर्म हि सत्कर्मेत्युच्यते । आदिपदाद्वापीकूपतटाकादिपूर्तकर्मणामग्निष्टोमादीष्टकर्मणां च ग्रहणं, तानि हि सत्कर्माणीत्युच्यन्ते । एवं च यज्ञदानतपःक्रियाणां प्रशस्तानां सच्छब्दविषयत्वं सिद्धम् । सन् यज्ञस्सत्तपस्सद्दानमिति प्रयोगात् ॥२६॥

यज्ञे तपसि दाने च स्थितिस्सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥

यज्ञ इति । यज्ञे यज्ञकर्मणि या स्थितिः, तपसि च या स्थितिः, दाने च या स्थितिः, सा सदिति चोच्यते विद्वद्भिः । कर्म चैव तदर्थीयं यज्ञदानतपोर्थीयम् । अथ वा यस्याभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोर्थीयमीश्वरार्थीयमित्येतत्; सदित्येवाभिधीयते ।

---

यज्ञ इति । यज्ञे तपसि दाने च पुरुषस्येति शेषः । स्थितिस्सदित्युच्यते च । तदर्थीयं कर्म चैव सदित्यभिधीयत एव । स्थितिर्निष्ठाप्रवृत्तिरिति यावत् । यज्ञादिषु प्रवृत्तं पुरुषं दृष्ट्वा सत्स्थितिरयमिति प्रतियन्ति शिष्टाः । अतो यज्ञादिस्थितेस्सच्छब्दाभिधेयत्वमिति भावः । यज्ञादिविषयैव स्थितिस्सत्स्थितिरित्युच्यते, नान्यविषयेति कृत्वा यज्ञादिस्थितेस्सत्स्थितित्वमुचितमित्यभिसन्धिः । नात्र सच्छब्दस्य सद्भावस्साधुभावः प्राशस्त्यं वार्थः, किंतु यज्ञादिकर्मस्थितिरेवेति न पूर्वोक्तार्थसाङ्कर्यम् । नच यज्ञादिकर्मस्थितेरेव सच्छब्दार्थत्वे सत्स्थितिपदयोः पौनरुक्त्यमिति वाच्यं, मृत्युञ्जयशिव इतिवत्सती स्थितिरित्यस्योपपत्तेर्विशेष्यमपि विशेष्यान्तरे सति विशेषणभावे पर्यवस्यति हि । एवं यज्ञादिविषयस्थितिवाच्यपि सच्छब्दस्स्थितिशब्दप्रयोगे सति यज्ञादिविषयत्वमात्रे पर्यवस्यतीति ।

तदर्थीयमिति । तानि यज्ञदानतपांस्येवार्थाः प्रयोजनानि तदर्थाः, तेषामिदं तदर्थीयं तदर्थमित्यर्थः । यज्ञदानतपोनिर्वर्तकं धनार्जनादिकर्मेति भावः । एवं तच्छब्दस्य पूर्वोक्तयज्ञादिपरामर्शित्वमभ्युपेत्य व्याख्याय, अथ प्रकृतपरामर्शित्वमभ्युपेत्य व्याख्यानान्तरमाह—अथ वेति । प्रकृताभिधानत्रयवानीश्वर इह तच्छब्दार्थः । तस्यार्थः प्रयोजनं स्वाज्ञानिर्वर्तनं तस्येदं तदर्थीयम् । ईश्वराज्ञानिर्वर्तनमात्रफलकमित्यर्थः । फलाभिसन्ध्यादिरहितमिति यावत् । कर्तव्यमित्येव हि कुशलेन कर्म कार्यमिति प्राग्दर्शितम् । एतस्य चेश्वरार्थस्य कर्मणस्सत्त्वं बन्धाहेतुत्वाच्चित्तशुद्धिद्वारा ज्ञानप्राप्तिहेतुत्वादिप्रयुक्तमन्यद्धि बन्धहेतुत्वादिना दुष्टं कर्मासदेव यत्फलाभिसन्ध्यादिमत् । तस्मादीश्वरार्थं कर्म सदित्युच्यते । नेदं प्रशस्तकर्मत्वरूपं सत्कर्मत्वं पौनरुक्त्यात्किंतु ईश्वरार्थकर्मत्वरूपमेव । तस्मादीश्वरार्थे कर्मणि सत्कर्मेति प्रयोगः । श्रद्धापूर्वकं यथा तथेति प्रयोगक्रियाविशेषणम् । अभिधानत्रयमोंतत्सदिति नामत्रयं तस्य प्रयोगेणोच्चारणेन ।

ननु ओमित्युदाहृत्य तदित्युदाहृत्य चेतिवत्सदित्युदाहृत्येति नोक्तम् । प्रत्युत सच्छब्दस्य ब्रह्मणोऽन्ये सद्भावादय एवार्थाः प्रोक्ता इति कथमभिधानत्रयप्रयोगसम्भवः ? ओं तदिति ब्रह्माभिधानद्वयप्रयोग एव हि दर्शित इति चेत्सत्यम्—ब्रह्मवाचिन एव सच्छब्दस्य सद्भावादिष्वौपचारिकः प्रयोगो दर्शितः प्रशंसार्थः । ततश्च सदित्युदाहृत्यैव यज्ञदानतपःक्रियाः क्रियन्ते मुमुक्षुभिरिति बोध्यम् । यद्वा ओंतदित्युदाहृत्य फलमनभिसन्धाय ब्रह्मवादिनो मुमुक्षवः ईश्वरार्थीयमिदं कर्म सदिति मत्वा कुर्वन्ति । अन्येत्वेवमविद्वांसोऽपि ओंतत्सदिति ब्रह्माभिधानत्रयमुदाहृत्य कर्म कुर्युश्चेद्विगुणमपि तत्कर्म सगुणं भवतीति कर्मसाद्गुण्यापादनं ब्रह्माभिधानत्रयोच्चारणमिति भावः ।

ननु सच्छब्दस्य यज्ञादिक्रियावाचित्वं कण्ठोक्तम् । तदनुसारेण तच्छब्दस्यापि तदेव युक्तं, तथैव व्याख्यातं च रामानुजेन । फलमनभिसन्धाय यज्ञादिक्रियाः मुमुक्षुभिः क्रियन्ते, ताश्च क्रिया-

तदेतद्यज्ञदानतप आदिकर्मासात्त्विकं त्रिगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं सम्पादितं भवति ॥२७॥

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं सम्पाद्यते यस्मात्तस्मात्—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ ! न च तत्प्रेत्य नो इह ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो
नाम सप्तदशोऽध्यायः ।

अश्रद्धयेति । अश्रद्धया हुतं हवनं कृतं, अश्रद्धया दत्तं ब्राह्मणेभ्यः, तथाऽश्रद्धया

---

तदित्युच्यन्त इति । नच कथं ब्रह्मवाचितच्छब्दवाच्यत्वं क्रियाणामिति वाच्यं, ब्रह्मप्राप्त्युपायतया ब्रह्मवाचिना तदितिशब्देन निर्देश्याः क्रिया इति । तस्मात्तदित्युदाहृत्येति व्याख्यानमयुक्तमिति चेत्, नैवम्—तस्मादोमित्युदाहृत्येति पूर्वश्लोकानुसारेणेहापि तथैव तदित्युदाहृत्येति व्याख्यातव्यत्वात् । क्रियाणां तच्छब्दनिर्देश्यत्वमिवोङ्कारनिर्देश्यत्वस्यापि सम्पादयितुं शक्यत्वेनोमित्युदाहृत्य यज्ञादिक्रियाः वैदिकानां प्रवर्तन्ते, ताश्चोमित्युच्यन्त इति कुतो रामानुजेन न व्याख्यातम् ? यद्यधुना व्याख्यायत इति ब्रूषे तर्हि तथैव तदित्युदाहृत्य मुमुक्षुभिः क्रियाः क्रियन्त इति व्याख्याहि । तुल्यार्थत्वाच्छ्लोकद्वयस्य । एवं व्याख्याने च ताश्च क्रिया ओमित्युच्यन्ते तदित्युच्यन्त इति वाक्यद्वयमपि मूलाद्बहिः स्वकपोलकल्पितमेव रामानुजस्येत्यप्रमाणं रामानुजव्याख्यानम् । यदि तु ओमित्युदाहृत्येतिश्लोके ओमित्यनेन क्रिया उच्यन्त इति न व्याख्यायते; तर्हीहापि न व्याख्याहि । नचोदाहृत्येति पदाभावादिहैवं व्याख्यायते, तत्र तु तत्सत्त्वान्नैवं व्याख्यायत इति वाच्यं, पूर्वश्लोकोक्तस्योदाहृत्येति पदस्येहाप्यन्वयसम्भवादध्याहारादिना । ताश्च क्रियास्तदुच्यन्त इति पदानामध्याहारस्त्वयुक्त एव । पूर्वश्लोकेऽपि तथाऽनुक्तत्वात् ।

तस्मात्तस्मादोमित्युदाहृत्येति पूर्वश्लोकवदिहापि तदित्युदाहृत्येत्येव व्याख्येयं, नतु ताश्च तदित्युच्यन्ते उपचारादिति व्याख्येयमयुक्तत्वात् । सच्छब्दानुसारस्तु न न्याय्यः ! सच्छब्दस्य सद्भावसाधुभावाद्यर्थविशेषा यथा दर्शितास्तथा तच्छब्दस्यार्थविशेषाणामदर्शितत्वात् । तस्मादोङ्कारानुसार एव युक्तः- तच्छब्दवदोङ्कारस्याप्यर्थविशेषाणामदर्शितत्वात् । प्रत्युत ओमित्युदाहृत्य तदित्युच्चार्येतिवत्सदित्युदाहृत्येत्येव कल्पनमुचितं प्रकरणादिति संक्षेपः । सात्त्विकमिति । ओं तत्सदितिनिर्देशेन कर्मण ईश्वरार्थीयत्वस्य जातत्वादिति भावः । अत एव सन्ध्यावन्दनादिकमपि कर्म कृत्वा वृद्धाः 'ओं तत्सद्ब्रह्मार्पणम'स्त्विति ब्रुवन्ति । ओं तत्सदिति निर्देशेन ब्रह्मार्पणेन च तत्कर्मणस्साद्गुण्यसमार्थमिति बोध्यम् । तत्र चैवं सति सर्वत्र यज्ञादिकर्मसु सर्वं साद्गुण्यं सात्त्विकत्वं च श्रद्धया ओं तत्सदितिनिर्देशे कृते सति हि कर्मणस्साद्गुण्यादिसम्प्राप्तिः ॥२७॥

अश्रद्धयेति । तस्मादिति । श्रद्धापूर्वकत्वात्कर्मसाद्गुण्यस्येत्यर्थः । यदश्रद्धया हुतं यदश्रद्धया

तपस्तप्तमनुष्ठितं, तथाऽश्रद्धयैव कृतं च यत्स्तुतिनमस्कारादि, तत्सर्वमसदित्युच्यते, मत्प्राप्ति-साधनमार्गबाह्यत्वाद्धे पार्थ! नच तद्बहुलायासमपि प्रेत्यफलाय नोऽपीहार्थं, साधुभि-र्निन्दितत्वादिति ॥२८॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये श्रद्धात्रय-
विभागयोगो नाम सप्तदशोऽध्यायः।

---

दत्तं यत्तपोऽश्रद्धया तप्तं यच्चाश्रद्धया कृतं तत्सर्वमसदित्युच्यते। हे पार्थ! तत्प्रेत्यफलाय नो भवति; इह फलाय च नो भवति। कुतोऽस्यासत्त्वमत आह—मत्प्राप्तीति। मत्प्राप्तिसाधनभूतान्मार्गा-त्सन्मार्गात्कर्मयोगादिलक्षणाद्बाह्यं बहिर्भवं सुदूरमित्यर्थः। तत्त्वान्मत्प्राप्त्यहेतुत्वादित्यर्थः। प्रेत्यफला-यामुष्मिकस्वर्गादिफलाय नो न भवति। आमुष्मिकफलदं न भवतीत्यर्थः। इहार्थमिति। ऐहिक-फलायेत्यर्थः। कुतो नैहिकफलार्थत्वमत आह—साधुभिरिति। साधुनिन्दाया अकीर्तेरैहिकफल-त्वाभावादिति भावः।

यद्वा कुतस्तत्प्रेत्यफलायेहफलाय च न भवतीत्यत आह—साधुभिरिति। यदि तदसत्कर्म फलदं स्यात्तर्हि तन्नैव निन्द्येत सद्भिः। अनर्थकं हि साधवो निन्दन्ति। तस्मात्साधुभिर्निन्दितमिदं कर्म नरकदुःखाकीर्त्यादिप्रदमेव, नतु फलप्रदमिति भावः। तस्मात्सर्वोऽपि कुशलस्सर्वं विहितं कर्म ब्रह्माभिधानत्रयप्रयोगपूर्वकं श्रद्धया युक्तस्सन् फलमनभिसन्धाय कर्तव्यमितिबुद्ध्या कुर्यात्तेन च कर्म-योगेन तत्कर्माकर्मैवाबन्धकं सच्चित्तशुद्धिज्ञानप्राप्तिद्वारा मोक्षहेतुर्भवति यत एवं तस्मात्, हे पार्थ! त्वमपि युद्धं स्वकर्म श्रद्धया यथोक्तविधं कुरु। ततश्च संसारबन्धान्मोक्ष्यसे- इतीमं भावं सूचयितुमेव पार्थेति सम्बुद्धिः ॥२८॥

इति श्रीबेलङ्कोण्डोपनामक रामकविकृतौ श्रीभगवद्गीताभाष्यार्कप्रकाशे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः।

श्रीहयग्रीवार्पणमस्तु।

सौम्यवैशाखशुद्धषष्ठी।



श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## अष्टादशोऽध्यायः ।

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते । सर्वेषु ह्यतीतेष्वध्यायेषूक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यते । अर्जुनस्तु सन्न्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच—

अर्जुन उवाच—

> सन्न्यासस्य महाबाहो ! तत्त्वमिच्छामि वेदितुम् ।
> त्यागस्य च हृषीकेश ! पृथक्केशिनिषूदन ! ॥१॥

सन्न्यासस्येति । सन्न्यासस्य सन्न्यासशब्दार्थस्येत्येतत्, हे महाबाहो ! तत्त्वं तस्य

---

'प्रजहाति यदा कामान् सर्वान् पार्थ ! मनोगतान्', 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा', 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः', 'निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः', 'योगसन्न्यस्तकर्माणं', 'ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न कांक्षति', 'सन्न्यासस्तु महाबाहो ! दुःखमाप्तुमयोगतः', 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः', 'युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्', 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी', 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः, स सन्न्यासी च योगी च न निरग्निर्नचाक्रियः', 'यं सन्न्यास इति प्राहुर्योगं तं विद्धि पाण्डव ! न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन', 'सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते', 'सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः', सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि', ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः', 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्', 'सर्वारम्भपरित्यागी यो मे भक्तस्स मे प्रियः', 'शुभाशुभपरित्यागी भक्तिमान् यस्स मे प्रियः', 'सर्वारम्भपरित्यागी गुणातीतस्स उच्यत' इति पूर्वाध्यायेषु तत्रतत्र सन्न्यासस्त्यागश्च निर्दिष्टः । तत्र सन्न्यासत्यागयोरेकार्थत्वमेवावगम्यते । सम्पूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थ इति । सन्न्यस्येत्यस्य परित्यज्येत्यर्थश्च । पारिव्राज्यस्य परित्यागस्य सन्न्यासत्वाच्च । परित्यज्य सर्वं व्रजतीति परिव्राडिति व्युत्पत्तेः । एवं सन्न्यासत्यागयोरेकात्मत्वे सिद्धे सति त्यागसन्न्यासयोर्मोक्षं प्रति मार्गद्वयत्वं शिष्टैरुच्यमानं;

'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः', 'वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः' इत्यादिशास्त्रप्रमाणकं च; जनकादयस्त्यागान्मुक्तिं गताः। याज्ञवल्क्यादयस्तु सन्न्यासादिति व्यवहारसिद्धं च कथं सङ्गच्छते? 'कुरु कर्मैव तस्मात्त्वं सङ्गं त्यक्त्वा धनञ्जय!' इति च कथं भगवान्मह्यं युगपदेव कर्मानुष्ठानं त्यागं चोपदिष्टवान्? कर्मानुष्ठानकर्मसन्न्यासौ हि विरुद्धौ। सन्न्यास एव हि त्यागः। अथ यदि सन्न्यासत्यागौ भिन्नाविति वेद्मि, तर्हि तद्भेदो नैवावगम्यते- अर्थभेदाभावात्। नहि शब्दभेदमात्रं प्रयोजकं, तथा सति पटवस्त्रयोरपि भेदप्रसङ्गात्। तस्मादर्थभेदाभावात्कथं त्यागसन्न्यासयोर्मार्गद्वयत्वम्? मम वा कथं कर्मत्यागयोरेवाधिकारो नतु सन्न्यासे? इत्याशङ्क्य सन्न्यासत्यागयोर्याथार्थ्यं बुभुत्सया पृच्छत्यर्जुनः—सन्न्यासस्येति। परिज्ञाते तु त्यागसन्न्यासमार्गद्वयभेदयाथार्थ्ये यथास्वाधिकारमन्यतरमार्गे प्रवृत्तस्सन् संसारादहं मोक्ष्य इत्यर्जुनस्य हृदयम्।

यद्यपि 'कर्मण्येवाधिकारस्ते मा फलेषु कदाच'नेति त्यागमार्ग एवोपदिष्टोऽर्जुनाय भगवता। तथापि तदुपदिष्टं तं मार्गं त्यागमार्गं इति विशिष्य न जानात्यर्जुनः। विशिष्यानुक्तत्वाद्भगवता पूर्वम्। नहि फलमनभिसन्धाय कर्मकरणं त्यागः, कर्मणां सर्वात्मना परित्यागस्सन्न्यास इति च पूर्वाध्यायेषु क्वाप्युक्तम्। किंतु फलमनभिसन्धाय कर्मकरणं योग इत्युक्तं, तं तु योगमनुष्ठानात्मकं त्यागत्वेन कथं प्रतीयादुपदेशं विनाऽर्जुनोऽन्यो वा? त्यागो हि परिवर्जनात्मकः। युज्यते क्रियते इति योगः कर्मानुष्ठानं, त्यजत इति तु त्यागः कर्मपरित्यागः। ततः कथं योगत्यागयोरेकार्थत्वप्रतिपत्तिस्स्यात्? नहि फलत्याग एव त्यागो नतु कर्मत्याग इति गुरूपदेशं विना कोऽपि स्वबुद्ध्या निश्चिनुयात्। तस्माद्यः पूर्वमुक्तस्साङ्ख्यमार्गो योगमार्गश्च तत्र योगमार्ग एव त्यागमार्गः, साङ्ख्यमार्ग एव सन्न्यासमार्गः, नतु त्यागसन्न्यासयोः परस्परविरुद्धयोरेकत्वं कर्मानुष्ठानकर्मसन्न्यासयोर्हि विरोधः स्फुटः। कर्मानुष्ठानफलत्यागयोस्तु न विरोधः। फलत्यागपूर्वकं कर्मणोऽनुष्ठातुं शक्यत्वात्। नतु कर्मत्यागपूर्वकं कर्मानुष्ठातुं शक्यते, येन योगसन्न्यासयोरविरोधस्स्यात्। तस्मात्साङ्ख्ययोगावेव सन्न्यासत्यागावित्यविदित्वा सन्न्यासत्यागयोरेकार्थकत्वेनाविशेषं मत्वा तद्विशेषबुभुत्सया पृच्छत्यर्जुनस्सन्न्यासस्येत्युपपन्नतरम्। अत एवातीताध्यायोक्त एवार्थोऽस्मिन्नध्यायेऽनुगम्यत इत्याचार्यैरुक्तं, पूर्वाध्यायेषूक्तयोरेव साङ्ख्ययोगयोरिह सन्न्यासत्यागरूपत्वेन वक्ष्यमाणत्वात्। अर्जुनस्त्विति तुशब्दाच्छ्रीकृष्णोऽर्जुनेनापृष्टानप्यंशानिह वक्ष्यतीति ज्ञायते। नहि त्यागसन्न्यासविशेष एक एवेह प्रतिपाद्यते, किंतु ब्राह्मणादिवर्णधर्मादिकमन्यदपि। नच वर्णधर्माः पूर्वमनुक्ता इति वाच्यं, शमदमादयो धर्माः पूर्वमुक्ता एव। किं त्विमे ब्राह्मणधर्माः, इमे क्षत्रियधर्मा इत्येवं विशिष्य नोक्ताः। तदिह विशिष्योच्यन्त इति। अन्यथा ह्युक्तस्य तथैव पुनः कथने पुनरुक्तिस्स्यात्। सन्न्यासेति। सन्न्यासशब्दार्थस्य त्यागशब्दार्थस्य च यो विशेषो वैलक्षण्यं भेद इति यावत्। तस्य बोद्धुं ज्ञातुमिच्छुर्बुभुत्सुरसन्नर्जुन उवाचेति सम्बन्धः। हे महाबाहो! हे हृषीकेश! हे केशिनिषूदन! सन्न्यासस्य त्यागस्य च तत्त्वं पृथग्वेदितुमिच्छामि। त्वं साक्षाद्भगवानेव भगवतो महापुरुषस्य यदिदं महा-

भावस्तत्त्वं याथात्म्यमित्येतत् । इच्छामि वेदितुं ज्ञातुं, त्यागस्य च त्यागशब्दार्थस्येत्येतत् । हृषीकेश ! पृथगितरेतरविभागतः केशिनिषूदन ! केशिनामा हयच्छद्मा कश्चिदसुरस्तं निषूदितवान् भगवान् वासुदेवस्तेन तन्नाम्ना सम्बोध्यतेऽर्जुनेन ॥१॥

सन्न्यासत्यागशब्दौ तत्र तत्र निर्दिष्टौ; न निर्लुठितार्थौ पूर्वेष्वध्यायेषु । अतोऽर्जुनाय पृच्छते तन्निर्णयाय श्रीभगवानुवाच—

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥

काम्यानामिति । काम्यानामश्वमेधादीनां कर्मणां न्यासं परित्यागं सन्न्यासं सन्न्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्यानुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति । नित्य-

---

बहुत्वं यो धर्मो दानवान्तकत्वं तदुभयस्य त्वयि दर्शनादिति सम्बुद्धिद्वयाभिप्रायः । त्वं साक्षादन्तर्यामी प्रत्यगभिन्नः परमात्मैवेति हृषीकेशसम्बुद्ध्यभिप्रायः । हृषीकाणामिन्द्रियाणामीशः प्रेरको हृषीकेशः सर्वभूतेश्वर इति व्युत्पत्तेः । ततश्च सर्वं तत्त्वं यथावत्स्वयं वेत्तुमन्यस्मै बोधयितुमन्येन ग्राहयितुं च त्वमेव क्षमसे, अतस्त्वामेव पृच्छामीत्यर्जुनाशयः । वेदितुमिच्छामीत्येवोक्तं, ननु कथयेति । ततश्च सर्वेश्वरं भगवन्तं त्वां कथयेति नियन्तुं कोऽहम् ? परंतु ममेच्छा वर्तत एवमितीच्छामात्रं प्रदर्शयति—सा चेच्छा सुहृदा त्वया परमकारुणिकेनावश्यं पूरयितव्यैवेत्यर्जुनाशयोऽवगम्यते । तस्येति । प्रकृतस्य सन्न्यासस्य त्यागस्य च भावो याथार्थ्यं तत्त्वम् । फलितार्थमाह—याथात्म्यमिति, इतरेतरविभागत इति । इतरस्येतरस्माद्विभागतो विवेकतो विविक्तं यथातथेत्यर्थः । हयच्छद्मा अश्वमिषः अश्वरूपी-त्यर्थः । निषूदितवान्नाशितवान्, तन्नाम्ना केशिनिषूदनाभिधानेन ॥१॥

काम्यानामिति । कवयः काम्यानां कर्मणां न्यासं सन्न्यासं विदुः । विचक्षणाः सर्वकर्म-फलत्यागं त्यागं प्राहुः । काम्यानां स्वर्गादिकामहेतूनां, काम्यन्त इति कामाः स्वर्गादिफलानि, तद्धेतूनि काम्यानि, नित्यनैमित्तिकान्यपि काम्यान्येव- तेषामपि फलवत्त्वात् । परन्तु येषामकरणे प्रत्यवायस्तानि नित्यानि नैमित्तिकानि च; येषामकरणे प्रत्यवायो नास्ति तानि काम्यानीति व्यवहार-कृतो विवेकः । तत्र यान्यहरहः क्रियन्ते तानि नित्यानि, यानि निमित्ते सति कदाचित्क्रियन्ते तानि नैमित्तिकानि । यथा सन्ध्यावन्दनदेवर्षिपितृतर्पणादीनि नित्यानि, पित्राब्दिकादीनि नैमित्तिकानीति विवेकः । एतेषां नित्यनैमित्तिककाम्यभेदभिन्नानां त्रिविधानामपि कर्मणां फलवत्त्वेन हेतुना काम्यानां परित्यागस्सन्न्यासशब्दार्थः ।

फलितमाह—अनुष्ठेयत्वेन प्राप्तस्यानुष्ठानमिति । सन्न्यास इति शेषः । नह्यनुष्ठेयत्वेन काम्यकर्मैव प्राप्तं कर्मिणः, किंतु नित्यं नैमित्तिकमपि च । तस्मादनुष्ठेयत्वेन प्राप्तस्य त्रिविधस्यापि

नैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसम्बन्धितया प्राप्तस्य फलस्य परित्यागस्सर्वकर्मफलत्यागस्तं प्राहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः। यदि काम्यकर्मपरित्यागः फलत्यागो वाऽर्थो वक्तव्यः। सर्वथा परित्यागमात्रं सन्न्यासत्यागशब्दयोरेकोऽर्थस्स्यात्; न घटपटशब्दाविव जात्यन्तरभूतार्थौ।

ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः; कथमुच्यते ? तेषां फलत्याग इति। यथा वन्ध्यायाः पुत्रत्यागः। नैष दोषः—नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात्, वक्ष्यति हि भगवान्- 'अनिष्टमिष्टं मिश्रं' चेति, 'न तु सन्न्यासिनाम्' इति च। सन्न्यासिनामेव हि केवलं कर्मफलासम्बन्धं दर्शयन्नसन्न्यासिनां नित्यकर्मफलप्राप्तिं भवत्यत्यागिनां प्रे'त्येति दर्शयति ॥२॥

---

कर्मणोऽननुष्ठानं सन्न्यास इत्युच्यते। अननुष्ठानमेव हि कर्मणः परित्यागः, नतु धनादेरिव कर्मणः स्वरूपतः परित्यागः कर्तुं शक्यते। नित्यनैमित्तिकानामिति। उपलक्षणमिदं काम्यानामपि। काम्यान्यपि ह्यश्वमेधादीनि कर्माणि चित्तशुद्ध्याद्यर्थं फलमनभिसन्धाय क्रियन्ते जनकादिभिः। यद्वा फलत्यागिनां काम्यकर्मकरणप्रसक्त्यभावात्तैः क्रियमाणानां कर्मणां च फलाभिसन्ध्यभावेनाकाम्यत्वादुक्तं नित्यनैमित्तिकानामिति। सन्न्यासिभिस्सर्वमपि कर्म परित्याज्यमेव। त्यागिभिस्तु काम्यकर्माणि स्वरूपतः परित्याज्यानि (अननुष्ठेयानीत्यर्थः)। नित्यनैमित्तिकानि तु कर्तव्यान्येव- तदकरणे प्रत्यवायात्। परं तु नित्यनैमित्तिकानां फलपरित्याग एव कर्तव्य इति भावः।

यदीति। यस्मादित्यर्थः। सन्न्यासत्यागशब्दयोः काम्यकर्मपरित्यागस्सर्वकर्मफलत्यागो वार्थो वक्तव्यस्तस्मादिति शेषः। परित्यागमात्रं तद्रूप इत्यर्थः। एकार्थस्स्यात्। घटपटशब्दाविव जात्यन्तरभूतार्थौ न सन्न्यासत्यागशब्दौ न भवत इत्यर्थः। यथा घटपटशब्दौ भिन्नजातिपदार्थाभिधायिनौ तथा सन्न्यासत्यागशब्दौ न भवतः- परित्यागमात्रवाचित्वादुभयोरपि। तस्मादेकार्थवाचिनोरपि सन्न्यासत्यागशब्दयोः कर्मतत्फलविषयत्वेन भेद इति भावः। अनुष्ठेयत्वेन प्राप्तस्य सर्वस्य कर्मणोऽननुष्ठानं सन्न्यासः, अनुष्ठीयमानस्य कर्मणः फलाननुसन्धानं त्याग इति निष्कर्षः। फलवत्त्वस्येति। दुरितक्षयादिरूपफलयुक्तत्वस्येत्यर्थः। 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य नतु सन्न्यासिनां क्वचि'दिति वक्ष्यति। कर्मणस्त्रिविधस्येत्यर्थः। अत्यागिनां नित्यनैमित्तिकादिकर्मफलप्रतिपादनेन नित्यनैमित्तिकानां फलमस्तीति गम्यत इति भावः। अत्यागिनामित्यस्यासन्न्यासिनामित्यर्थः। नतु सन्न्यासिनामित्युत्तरवाक्यानुसारात्। ततश्च सन्न्यासिनामेव केवलं कर्मफलासम्बन्धः, असन्न्यासिनां तु कर्मानुष्ठानसत्त्वेन तत्फलसम्बन्धोऽस्त्येव। अत एवासन्न्यासिभिस्तत्फलपरित्यागः कर्तव्यः, सन्न्यासिनां तु कर्मानुष्ठानाभावान्न फलपरित्यागावकाश इति बोध्यम्। अत एव सन्न्यासिनामेव केवलमित्युक्तम्।

यत्तु रामानुजः—सन्न्यासत्यागौ पर्यायशब्दावेव, नतु तयोरर्थतोऽस्ति भेदः। परं तु केचि

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥३॥

त्याज्यमिति । त्याज्यं त्यक्तव्यं दोषवद्दोषोऽस्यास्तीति दोषवत् । किं तत् ? कर्म

---

क्वयः काम्यमेव कर्मानुष्ठेयं फलद्वारा मुमुक्षोर्बन्धकत्वात् । नित्यनैमित्तिके त्वनुष्ठेय एव- फलाभावा-
त्तयोस्तदकरणे प्रत्यवायाच्चेत्याहुः । अन्ये विचक्षणास्तु काम्यमपि कर्म न परित्याज्यं, किं तु
नित्यनैमित्तिकवत्कर्तव्यमेव । नच बन्धप्रसङ्गः- फलपरित्यागादिति कृत्वा त्रिविधमपि कर्तव्यं कर्म,
तत्फलं तु परित्यक्तव्यमिति प्राहुः । नच नित्यनैमित्तिकयोः फलाभावश्चोदनीयः, 'प्राजापत्यं
गृहस्थाना'मित्यादिना तयोरपि फलावगमादिति व्याचख्यौ, तदसत्—अर्जुनप्रश्नकृष्णप्रतिवचनयोरननु-
रूपत्वात् । सन्न्यासत्यागयोस्तत्त्वं पृथग्वेदितुमिच्छामीति ह्यर्जुनेन पृष्टं, नतु त्यागस्य विकल्पानहं
वेदितुमिच्छामीति । प्रकृतश्लोकश्च कर्मन्यासं सन्न्यासं विदुरिति, कर्मफलत्यागं त्यागं विदुरिति च
वक्ति; नतु कर्मसन्न्यासं केचिद्युक्तमिति विदुः । कर्मफलत्यागं तु केचिद्युक्तमिति विदुरिति वक्ति ।
तस्मात्कृष्णार्जुनप्रश्नप्रतिवचनश्लोकयोरनयोर्यथाश्रुतमर्थं विहायापार्थकल्पनमप्रमाणमेव । न ह्यत्र केचि-
द्विदुरिति, अन्ये प्राहुरिति च विकल्पबोधकं पदद्वयमप्यस्ति । नच 'त्याज्यं दोषवदित्येके' इत्युत्तर-
श्लोकानुसारादिहापि तत्पदद्वयमध्याह्रियत इति वाच्यं, तत्र कर्म त्याज्यमिति, न त्याज्यमिति च
विकल्पार्थ एव वर्णित इति तदनुसारायोगादस्य । न ह्यत्र काम्यं कर्म त्याज्यमिति, न त्याज्यमिति
विकल्पार्थो वर्णितः, येनोत्तरश्लोकानुसारस्स्यादस्य । किंच संन्यासत्यागावेकार्थाविति किमर्जुनो
वेद, उत न वेद ? आद्ये- सन्न्यासस्य त्यागस्य च पृथक्त्वं वेदितुमिच्छमीति प्रश्नो न युज्यते ।
द्वितीये- कृष्णस्येदं प्रतिवचनं न युज्यते । त्वं हि सन्न्यासत्यागौ पृथगर्थाविति भ्राम्यसि,
न तु तथा पृथगर्थौ । किं त्वपृथगर्थावेवेति वक्तव्यत्वात्कृष्णेनोत्तरस्य । नच 'निश्चयं शृणु मे तत्र
त्यागे भरतसत्त'मेति त्यागशब्देनैव निर्णयवचनादयमर्थोऽवगम्यत इति वाच्यं, साक्षात्कण्ठोक्तमर्थं
विहायाऽऽनुमानिकार्थकल्पनस्यायुक्तत्वात् । त्याज्यं दोषवदिति वक्ष्यमाणश्लोकोक्तविकल्पविषये
त्यागे मम निश्चयं शृण्विति तदर्थाच्च । तस्माच्छ्रीशङ्कराचार्योक्त एव श्लोकस्य यथाश्रुतार्थः । अर्जुन-
प्रश्नानुरूपश्च । तत्प्रश्नमनुसृत्यैव सन्न्यासत्यागयोरिह तत्त्वस्य पृथङ्निर्दिष्टत्वात् ।

सर्वकर्मपरित्यागस्सन्न्यासः; सर्वफलत्यागस्तु त्याग इति- पृथगुभयोस्तत्त्वस्य निर्दिष्टत्वात्
नच काम्यानामित्येवोक्तं नतु सर्वेषामिति वाच्यं, कामे साधूनि काम्यानीति व्युत्पत्त्या नित्यनैमि-
त्तिककाम्यात्मकत्रिविधकर्मपरत्वात्काम्यशब्दस्य । तच्चोक्तं प्रागेव । न चैवं बादरायणेन सर्वेषां कर्मणां
न्यासमिति कुतो नोक्तमिति वाच्यं, सर्वाण्यपि कर्माणि काम्यत्वेन परित्याज्यान्येवेति सूचयितुं
काम्यानामित्युक्तत्वात् । अन्यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिश्रुतिसिद्धस्य सर्वकर्मपरि-
त्यागरूपस्य सन्न्यासस्य कुतो नेह प्रतिपादनं स्यादिति बोध्यम् ॥२॥

त्याज्यमिति । यदर्जुनेन पृष्टं तत्प्रत्युक्तं पूर्वश्लोकेन । अथ प्रसङ्गात्किमविदुषां सन्न्यास-

बन्धहेतुत्वात्सर्वमेव । अथ वा दोषो यथा रागादिस्त्यज्यते, तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डितास्साङ्ख्या आत्मदृष्टिमाश्रिताः; अधिकृतानां कर्मिणामपीति । तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे ।

कर्मिण एवाधिकृतास्तानपेक्ष्यैते विकल्पाः, न तु ज्ञाननिष्ठान्व्युत्थायिनस्सन्न्या-

---

श्श्रेयस्करः, उत त्यागः ? इति शङ्कायां तावद्विकल्पं दर्शयति—त्याज्यमिति । न चाविदुषामिति कोऽयं नियमः ? विदुषामपि किं सन्न्यासश्श्रेयस्करः, उत त्यागः ? इति शङ्का भवत्येवेति वाच्यं, विदुषां कर्माधिकाराभावस्य पूर्वमेव बहुशः प्रतिपादितत्वात् । यद्यपि 'तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यत' इति पूर्वमेवायमर्थ उक्तस्तथापि तस्यैवेह पुनर्विमर्शनं क्रियते स्पष्टावगमार्थमिति बोध्यम् । उक्तं हि भाष्यकृद्भिस्सर्वो ह्यतीतेष्वध्यायेषूक्तोऽर्थोऽस्मिन्नवगम्यत इति ।

यद्वा ये सन्न्यासाश्रमं स्वीकृतवन्तस्तैस्सर्वकर्मणां परित्यक्तत्वान्न तेषां पुनः कर्माधिकारः । अतो न तद्विषयः कर्मविकल्पः प्रकृतः । किं तु येऽसन्न्यस्यापि यज्ञादिषु न प्रवर्तन्ते तद्विषयः कर्मविकल्प इह प्रकृत इति बोध्यम् । एके मनीषिणो दोषवत्कर्म त्याज्यमिति प्राहुः । अपरे मनीषिणो यज्ञदानतपःकर्म न त्याज्यमिति प्राहुः । कर्मणि दोषं दर्शयति—बन्धहेतुत्वादिति । सर्वमेवेति । नित्यं नैमित्तिकं काम्यं चेति त्रिविधमपि कर्मेत्यर्थः । कर्म त्याज्यं दोषवत्त्वात्- यद्दोषवत्तत्त्यज्यते यथा कीटादिदुष्टं फलादि । तदस्यास्त्यस्मिन्निति मतुपि दोषवच्छब्दार्थं दर्शयित्वा तेन तुल्यं क्रियाचेद्वतिरिति वतौ तं दर्शयति—अथ वेति । घनराग आदिपदात्क्रोधादिग्रहणम् । यद्वा स्त्रीरागादिग्रहणम् । अथ वा धनं रागश्चेति दोषद्वयं, धनं ह्यार्जनादिक्लेशहेतुत्वाद्दुष्टं, रागस्त्र्यादिविषयः कामः तस्य संसारानर्थहेतुत्वाद्दोषवत्त्वं स्फुटमेव । त्यज्यत इति । विदुषेति शेषः । त्याज्यमिति । मुमुक्षुभिरिति शेषः । क एवं वदन्तीत्यत आह—साङ्ख्या इति । कुतो वदन्तीत्यत आह—आत्मदृष्टिमाश्रिता इति । आत्मज्ञत्वादित्यर्थः । अकर्तारमभोक्तारमविक्रियमात्मानं विदन्तो हि ते साङ्ख्या आत्मनि क्रियाकारकफलाभावदर्शनान्नैव कार्यं कर्मेति ब्रुवन्तीत्यर्थः । केषां त्याज्यमत आह—अधिकृतानां कर्मिणामपीति । अज्ञा हि कर्मण्यधिकृतास्तैरपि कर्म न कर्तव्यम् । बन्धकत्वात्कर्मणः । किंतु तूष्णीं स्थातव्यं कर्माकरणस्य बन्धाहेतुत्वादिति भावः ।

तत्रैवेति । अधिकृतकर्मिविषय एवेत्यर्थः । यज्ञदानतपोरूपं कर्म यज्ञदानतपः कर्म । यज्ञो दानं तपश्चेत्येतत्त्रयमित्यर्थः । न त्याज्यं त्यक्तुं योग्यं न भवति । सकामानां बन्धहेतुत्वेऽपि निष्कामानां चित्तशुद्ध्यादिद्वारा मोक्षहेतुत्वादिति भावः । एते विकल्पा इति । एतौ विकल्पावित्यर्थः । एवमादयो विकल्पा इति वा । कर्मिण एवेत्येवकारार्थमाह —नतु ज्ञाननिष्ठानिति । व्युत्थायिनस्सर्वं परित्यज्य प्रयातानित्यर्थः । 'व्युत्थायाथ भिक्षाचर्यं चर'न्तीति श्रुतेः । संसारिणो हि गृहिणस्संसारकूपे मग्नाः । एते तु संसारकूपादुद्गता इति व्युत्थायिन इत्युक्तम् । व्युत्थातुं शीलं येषां ते

सिनोऽपेक्ष्य- 'ज्ञानयोगेन साङ्ख्यानां' निष्ठा मया पुरा प्रो'क्तेति कर्माधिकारादातपोद्धृता ये न तान्प्रति चिन्ता ।

ननु 'कर्मयोगेन योगिना'मित्यधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रार्थोपसंहार-प्रकरणे यथा विचार्यन्ते, तथा साङ्ख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति । न, तेषां मोह-(क्लेश)दुःखनिमित्तत्यागानुपपत्तेः; न कायक्लेशनिमित्तं दुःखं साङ्ख्या आत्मनि पश्यन्ति-- इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात् । अतस्ते न कायक्लेशदुःखभयात्कर्म परित्यजन्ति; नापि ते कर्माण्यात्मनि पश्यन्ति; येन नियतं कर्म मोहात्परित्यजेयुः । गुणानां कर्म 'नैव किञ्चित्करो'मीति हि ते सन्न्यस्यन्ति । 'सर्वकर्माणि मनसा सन्न्यस्ये'त्यादिभिर्हि तत्त्व-विदसन्न्यासप्रकार उक्तः । तस्माद्येऽन्येऽधिकृताः कर्मण्यनात्मविदो येषां च मोहनिमित्त-स्त्यागस्सम्भवति कायक्लेशभयाच्च, त एव तामसाः, त्यागिनो राजसाश्चेति निन्द्यन्ते

---

त्यायिनः । के तेऽत आह—सन्न्यासिन इति । सन्न्यासिनां विदुषां ज्ञाननिष्ठा क्वोक्तेत्यत आह—ज्ञानयोगेनेति । तस्माद्ये कर्माधिकाररूपादातपादुद्धृतास्तान्प्रति किं कर्म कार्यमुत त्याज्यम् ? इति चिन्ता न भवति । आतपवत्तापहेतुत्वात्कर्माधिकारे आतपत्वरूपणम् । तत उद्धृताश्च विद्वांसस्सन्न्यासिन एव । अज्ञानामसन्न्यासिनां कर्मण्येवाधिकारादिति ।

ननु कर्मिणः प्रत्यपीयं चिन्ताऽनुचितैव । पूर्वमेव 'कर्मयोगेन योगिना'मिति कर्मयोगस्य कर्मिविषयस्य विचारितत्वादिति चेत्सत्यम्—तथापि सर्वशास्त्रार्थोपसंहारप्रकरणत्वादस्याध्यायस्य पूर्वोक्त एवार्थ इहापि स्पष्टीक्रियत इति । नन्वेवं ज्ञानिनः प्रत्यपि चिन्तोचितैवेति शङ्कते—नन्विति । यदि ज्ञानिनः प्रत्यपि चिन्तोचिता स्यादिह तर्हि यज्ञदानतपः कर्म साङ्ख्यानामपि कार्यमेव भवेदिति सन्न्यासस्य समूलोच्छेदः पूर्वपक्ष्यभिमतस्सिध्येदिति बोध्यम् ।

परिहरति—नेति । हेतुमाह—तेषामिति । ज्ञाननिष्ठानां सन्न्यासिनां साङ्ख्यानां तेषां मोहदुःखनिमित्तकर्मत्यागस्यानुपपत्तेः । अनुपपत्तिमेव विवृणोति—न कायेति । साङ्ख्याः कायक्लेश-निमित्तं दुःखमात्मनि न पश्यन्ति । अतो दुःखनिमित्तत्यागो नोपपद्यते तेषाम् । कुतो न पश्यन्ती-त्यत आह—इच्छादीनामिति । आदिपदात्सुखदुःखादिग्रहणम् । येनेति । कर्मणामात्मनि दर्शने-नेत्यर्थः । नियतमिति । नित्यमित्यर्थः । मोहादज्ञानात् ।

ननु यदि साङ्ख्यानां मोहदुःखनिमित्तो न कर्मत्यागस्तर्हि किंनिमित्तोऽत आह—गुणाना-मिति । देहेन्द्रियाद्याकारपरिणतसत्त्वादिगुणानामेव कर्म, अहं तु किंचिदपि नैव करोमीति हि ते साङ्ख्यास्सन्न्यस्यन्ति कर्माणि । 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववि'दित्युक्तत्वादिति भावः । तस्मादिति । साङ्ख्यानां सन्न्यासिनां कर्माधिकाराभावादित्यर्थः । अन्ये साङ्ख्येभ्य इतरे । के ते ? अत आह—अधिकृताः कर्मणीति । के ते ? अधिकृता अत आह—अनात्मविद इति । कायक्लेशभयाच्च त्यागस्सम्भवतीत्यन्वयः । त एवेति । कर्मण्यधिकृता अज्ञा एवेत्यर्थः । त्यागिन-

कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थम् । 'सर्वारम्भपरित्यागी, मौनी सन्तुष्टो येन केनचित्, अनिकेतस्स्थिरमति'रिति गुणातीतलक्षणे च परमार्थसन्न्यासिनो विशेषितत्वात् । वक्ष्यति च 'निष्ठा ज्ञानस्य या प'रेति । तस्माद्ज्ञाननिष्ठास्सन्न्यासिनो नेह विवक्षिताः । कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया सन्न्यास उच्यते, न मुख्यस्सर्वकर्मसन्न्यासः ।

सर्वकर्मसन्न्यासासम्भवे च 'नहि देहभृता' इति हेतुवचनान्मुख्य एवेतिचेन्न; हेतु-

इति । कर्म त्यक्तवन्त इत्यर्थात्तामसा राजसाश्चेति तमोरजःप्रायस्वभावाः, नतु सत्त्विकाः । ते हि मोहाद्दुःखभयाद्वा कर्म न परित्यजन्ति, किंतु कर्म कृत्वा तत्फलमेव परित्यजन्ति । वक्ष्यते चायमर्थ उत्तरत्र । निन्द्यन्त इति । कुतो निन्दनमत आह— कर्मिणामिति । अनात्मज्ञानां कर्मिणां कर्मत्यागात्फलत्याग एवोचित इति फलत्यागस्तुत्यर्थं कर्मत्यागो निन्द्यत इत्यर्थः ।

नन्वात्मज्ञानां साङ्ख्यानां कर्मत्यागादनात्मज्ञानां कर्मिणां फलत्याग उत्कृष्ट इति कुतो नोच्यते? अत आह—सर्वारम्भेति । गुणातीतस्य सर्वोत्कृष्टत्वं सर्वसम्मतं, गुणातीतश्च परमार्थसन्न्यासी विद्वान् साङ्ख्यः । सर्वारम्भपरित्यागो हि सर्वकर्मसन्न्यासो गुणातीतस्य प्रधानं लक्षणम् । एवं सति आत्मज्ञसाङ्ख्यकर्मसन्न्यासापेक्षया कथं फलत्यागस्योत्कृष्टत्वसिद्धिर्न कथमपीत्यर्थः । प्रत्युतात्मज्ञसाङ्ख्यकर्तृकसर्वकर्मसन्न्यास एव सर्वोत्कृष्ट इति भावः ।

सन्यास उच्यत इति, सन्न्यास इति । स्तूयत इत्यर्थः । 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयत' इति वाक्येनेति भावः । ननु कर्मफलत्याग एव मुख्यस्सन्न्यासः, कर्मत्यागरूपसन्न्यासस्तु अमुख्य एवेत्यत आह—नेति । सर्वकर्मफलत्यागो मुख्यस्सर्वकर्मसन्न्यासो न भवति । सर्वकर्मसन्न्यास एव मुख्यः, फलत्यागस्त्वमुख्य एव; फलत्यागस्य सन्न्यासत्वं स्तुतिरेवेत्यर्थः ।

ननु 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' इति श्लोके यस्माद्देहधारिणा सर्वाणि कर्माणि त्यक्तुं न शक्यते तस्मात्फलत्यागयेव सन्न्यासीत्युक्तत्वान्मुख्यसन्न्यासित्वेन त्वदभिमतस्य सर्वकर्मसन्न्यासस्य सम्भवात्फलत्याग एव मुख्यस्सन्न्यास इत्याक्षिपति— सर्वेति । परिहरति—नेति । हेतुमाह—हेत्विति । यो हि देहात्माभिमानी अज्ञः कर्ताऽहमिति निश्चितप्रत्ययस्तस्यैव सर्वकर्मसन्न्यासासम्भवः- देहभृतेत्युक्तत्वात् । तस्य च फलत्याग एव सन्न्यास इति स्तूयते । यदि पुनरात्मविदोऽपि सर्वकर्मसन्न्यासासम्भवस्तर्हि सर्वारम्भपरित्यागीत्यादिना पूर्वमुक्तस्सर्वकर्मसन्न्यासो निरालम्बनस्स्यात् । तस्मादनात्मज्ञस्य फलत्याग एवोचित इति स्तुत्यर्थमेव । नहि देहभृतेति हेतूपन्यासः, नत्वात्मज्ञस्य कर्मसन्न्यासात्फलत्याग उचित इति कथनार्थः । अकर्तर्यविक्रिये आत्मनि विदुषां कर्मादर्शनात्कथमात्मज्ञस्य कर्माधिकारः? येन विहितं

वचनस्य स्तुत्यर्थत्वात् । यथा 'त्यागाच्छान्तिरनन्तर'मिति कर्मफलत्यागस्तुतिरेव यथोक्ता-नेकपक्षानुष्ठानाशक्तिमन्तमर्जुनमज्ञं प्रति विधानात् । तथेदमपि 'न हि देहभृता शक्य'मिति कर्मफलत्यागस्तुत्यर्थं वचनम् । न 'सर्वकर्माणि मनसा सन्न्यस्य नैव कुर्वन्न कारयन्नास्त' इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यः । तस्मात्कर्मण्यधिकृतान्प्रत्येवैष सन्न्यास-त्यागविकल्पः । ये तु परमार्थदर्शिनस्साङ्ख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसन्न्यासलक्षणाया-मधिकारः; नान्यत्रेति न ते विकल्पार्हाः । तच्चोपपादितमस्माभिः 'वेदाविनाशिन'मित्यस्मिन् प्रदेशे तृतीयादौ च ॥३॥

---

कर्म कृत्वा फलं परित्यजेदात्मज्ञः । नहि देहभृतेत्यस्य स्तुत्यर्थत्वे दृष्टान्तमाह—यथेति । नहि कर्म-फलत्यागादनन्तरमेव शान्तिस्संसारोपरमस्स्यात्, ज्ञानपूर्वकत्वाच्छान्तेः । ज्ञानादेव हि संसारनिवृत्तिः। तस्मात्'त्यागाच्छान्तिरनन्तर'मिति वचनं स्तुतिवचनमेवेति तद्भाष्य एव स्फुटम् । ननु स्तुत्यर्थं कुतः फलत्यागस्य वचनमत आह—यथोक्तेति । असमर्थमज्ञमर्जुनमुद्दिश्य 'अथैतदप्यशक्तोऽ'सीति सर्वकर्म-फलत्यागं कुर्विति विधानं, तथा विदुषस्तव त्यागादनन्तरमेव शान्तिर्भवतीति प्रतिपादनं स्तुत्यर्थमेव, न तु तत्त्वार्थमिति भावः । ननु त्यागाच्छान्तिरनन्तर'मिति वचनमपि न स्तुत्यर्थं, भगवतोक्तत्वात्ततश्च कर्मफलत्याग एव सर्वाधिक इति शङ्कायामाह—नेति । अस्य पक्षस्यापवादः केनचिदपि दर्शयितुं न शक्य इत्यन्वयः । अस्य पक्षस्येति । सर्वकर्मसन्न्यासस्येत्यर्थः । अपवादो बाधः । भगवतैव सर्वकर्मसन्न्यासस्य मुख्यस्य प्रतिपादितत्वात्कथं तेनैव फलत्यागरूपसन्न्यास एव मुख्य इति पुनः प्रति-पाद्येत ? एवं व्याहतवादिनो भगवतो वाक्यं किं वा कथं वा प्रमाणं स्यात् ? नचैवं सर्वकर्मसन्न्यास एव तत्र तत्र स्तुत इत्युच्यतामिति वाच्यं, आत्मनि कर्माद्यभावेनात्मविदामकर्त्रात्मदर्शिनां कर्माधि-कारस्य दुस्सम्पादत्वादात्मज्ञानादपि फलत्याग एवोचित इति प्राप्तत्वाच्च । तस्मादिति । विदुषां सर्वकर्मसन्न्यासस्य मुख्यत्वादित्यर्थः । अविदुषां फलत्यागस्य स्तुत्यर्थं सन्न्यासत्वेनोक्तत्वादिति वा । विदुषां मुख्यस्य सर्वकर्मसन्न्यासस्य केनचिदपि प्रत्याख्यातुमशक्यत्वादिति वा । सन्न्यासत्याग-विकल्प इति । त्याज्यं दोषवदिति पूर्वार्थोक्तस्सन्न्यासः, यज्ञदानेत्युत्तरार्थोक्तस्तु त्याग इति विवेकः । तयोर्विकल्प एके इति, अपरे इति च शब्दाभ्यां दर्शित इति बोध्यम् । किमनात्मज्ञैः कर्मण्यधिकृतैः कर्मसन्न्यासः कार्य उत फलत्यागः ? इति विकल्प इति यावत् । न ते साङ्ख्या विकल्पार्हाः, किमात्मज्ञै-स्साङ्ख्यैः कर्मसन्न्यासः कार्य उत फलत्याग इति विकल्पो न सम्भवतीत्यर्थः । तेषां कर्माधिकाराभावा-दिति भावः । तच्चेति । साङ्ख्यानां कर्माधिकारराहित्यमित्यर्थः । तृतीयादाविति । 'यस्त्वात्मरति-रेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते', 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्न कारयन्', 'सर्वारम्भपरित्यागी गुणातीतस्स उच्यते' इत्यादिस्थलेष्वित्यर्थः ॥३॥

तत्रैतेषु विकल्पभेदेषु—

निश्चयं शृणु ! मे तत्र त्यागे भरतसत्तम !
त्यागो हि पुरुषव्याघ्र ! त्रिविधस्सम्प्रकीर्तितः ॥४॥

निश्चयमिति । निश्चयं शृण्ववधारय ! मे मम वचनात्तत्र त्यागे त्यागसन्न्यासविकल्पे यथादर्शिते भरतसत्तम ! भरतानां साधुतम ! त्यागो हि त्यागसन्न्यासशब्दवाच्यो हि योऽर्थस्स एक एवेत्यभिप्रेत्याह—त्यागो हीति । पुरुषव्याघ्र ! त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैस्सम्प्रकीर्तितश्शास्त्रेषु सम्यक्कथितः, यस्मात्तामसादिभेदेन त्यागसन्न्यासशब्दवाच्यार्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य त्रिविधस्सम्भवति, न परमार्थदर्शिन इत्ययमर्थो दुर्विज्ञानः, तस्मादत्र तत्त्वं नान्यो वक्तुं समर्थः । तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं मे मत्तश्शृणु ॥४॥

---

निश्चयमिति । यदि केचिदज्ञानां कर्मत्याग उचित इति ब्रुवन्ति, परे फलत्याग उचित इति, तर्हि तत्र कः पक्षस्तवेश्वरस्याभिमत इत्यत आह—निश्चयमिति, एतेष्विति । उक्तानुक्तसर्वविकल्पापेक्षया बहुत्वम् । किमज्ञानां नित्यकर्मत्यागश्श्रेयानुत नैमित्तिकत्यागः ? यद्वा काम्यत्यागः ! आहोस्वित्सर्वकर्मत्यागः ? यद्वा सर्वकर्मफलत्यागः ? इत्यादयो विकल्पा ऊह्याः । सर्वेऽप्यमी विकल्पा दर्शितकर्मत्यागफलत्यागरूपविकल्पद्वय एवान्तर्भवन्तीति बोध्यम् । यद्वा तत्रेति त्यागविशेषणं, तस्मिन् त्याग इति त्यागशब्दस्य च त्यागसन्न्यासविकल्पोऽर्थः । तस्यैव प्रकृतत्वात् । परित्यागमात्रांशसाम्यादुभयोरपि त्यागशब्देन निर्देशः । तत्रशब्दार्थमाह—यथादर्शित इति । पूर्वश्लोकेनोक्त इत्यर्थः । विकल्पेन कर्मविषयः फलविषयश्च यस्त्यागः पूर्वश्लोकेन दर्शितस्तस्मिंस्त्यागे विषय इति यावत् । हि यस्मात्त्यागस्त्रिविधस्सम्प्रकीर्तितस्तस्मात्तत्र त्यागे निश्चयं मे मम वाक्याच्छृणु जानीहि । तामसादिप्रकारैरिति । वक्ष्यमाणतामसराजससात्त्विकप्रकारैरित्यर्थः ।

परित्यागमात्रार्थकस्त्यागस्त्रिविधः । तामसो राजसस्सात्त्विकश्चेत्यर्थः । तिस्रो विधाः प्रकारा यस्य स त्रिविधः । क्व प्रकीर्तितोऽत्र आह—शास्त्रेष्विति । यस्मादयमर्थो दुर्विज्ञानस्तस्मादत्र तत्त्वं नान्यो (मत्तो) वक्तुं समर्थ इत्यन्वयः । त्यागसन्न्यासशब्दवाच्योऽर्थ इति । परित्यागरूप इत्यर्थः । नेति । परमार्थदर्शिनः कर्मसन्न्यास एव मुख्येऽधिकारान्न तस्य तामसादिभेदभिन्नत्रिविधत्यागविषयत्वमिति भावः । अत्रेति । अज्ञकर्मिविषयत्याग इत्यर्थः । तत्त्वं याथार्थ्यम् । अन्य इति । मत्तस्सर्वेश्वरादपर इत्यर्थः । न समर्थ इति । असर्वज्ञत्वादिति भावः । तस्मादिति । ममैव त्यागतत्त्वकथनसमर्थत्वादित्यर्थः । परमार्थशास्त्रं मोक्षशास्त्रं, तदर्थस्त्यागसन्न्यासादिः । तद्विषयं तदाश्रयमैश्वरमीश्वरस्य ममेदमैश्वरं मदीयं निश्चयं मत्त एव सकाशाच्छृणु ।

निश्चयशब्दार्थमाह—अध्यवसायमिति । अयं भावः—केचित्कर्मत्यागं श्रेयांसमज्ञस्य वदन्ति, केचित्फलत्यागमेव, तदुभयं श्रुत्वा मुमुक्षो रज्ञस्य शङ्का जायते— किमत्र प्रमाणमिति ? अत्र

शास्त्रार्थनिर्णेतुं स शक्नोति· द्विविधशास्त्रदर्शनात्तदुभयबलाबलनिर्णयाय तस्याशक्यत्वात्। ततश्च स मन्यते शास्त्रकर्तुरीश्वरस्य यः पक्षोऽभिप्रेतस्स समीचीन इति। तं चेश्वराभिमतं पक्षं वेत्तुं न कश्चिच्छक्नोति· परहृदयस्याप्रत्यक्षत्वात्। एवं सतीदमीश्वराभिमतं मतमितीश्वर एव साक्षाद्ब्रूयान्न कोऽपि तदोऽन्य इति स निश्चिनोति। स चाज्ञो मन्दभाग्यत्वात्तस्य नेश्वरप्रत्यक्षं सम्भवति। ततस्स पक्षद्वये श्रेयानित्यधुनापि सन्देग्ध्येव। त्वं तु महाभाग्य इति तवाहमीश्वरः प्रत्यक्षतयाऽवस्थितस्सन्ब्रवीमि। मयायं निश्चितः पक्ष इति। ततस्त्वं मत्त इमं निश्चयं श्रुत्वाऽज्ञस्य कर्मत्यागफलत्यागयोश्श्रेयांसमन्यतरं पक्षं निश्चयेन जानीहीति।

यत्तु रामानुजः—त्यागस्त्रिविधः- कर्मविषयः, फलविषयः, कर्तृत्वविषयश्चेति। ममेदं कर्मेति कर्मणि ममतायास्त्यागः कर्मत्यागः; मम फलं न स्यादिति फलत्यागः, ईश्वर एव कर्ता, न त्वहमिति कर्तृत्वत्यागः। स च पूर्वमेवोक्तः- 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा। निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर' इति, तन्मन्दम्—उदाहृतश्लोके त्यागस्त्रिविध इत्यर्थस्यानुक्तत्वात्। नच श्लोकत्वाभावेऽप्यर्थात्तत्सिद्धिरिति वाच्यं, 'यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः। समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यत' इति श्लोकेन असन्तोषत्यागद्वन्द्वत्यागमात्सर्यत्यागसिद्ध्यसिद्धिप्रयुक्तहर्षविषादत्यागानामप्यर्थादुक्तत्वेन त्रिविधस्त्यागस्सम्प्रकीर्तित इति नियन्तुमशक्यत्वात्। एवं- 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः, नित्यतृप्तो निराश्रय' इत्यनेन च कामत्यागसङ्कल्पत्यागाश्रयत्यागानामप्यर्थात्सिद्धत्वात्। तथा- 'छित्त्वैनं संशयं योगमातिष्ठे'त्यनेन संशयत्यागस्याप्यर्थतस्सिद्धत्वात्। तदेवं बहूनां त्यागानां पूर्वं सम्प्रकीर्तितत्वात्कुतस्त्यागस्त्रिविधस्सम्प्रकीर्तित इत्युच्यते? तस्मान्मयि सन्न्यस्येत्यादयश्श्लोकाः कर्मयोगमेव तैस्तैर्विशिंषन्ति विशेषणैर्नतु त्यागभेदान् प्रदर्शयन्ति। मयि कर्माणि सन्न्यस्य निराशीर्निर्ममश्च भूत्वा युध्यस्वेति कर्मयोगधर्मसमुच्चयदर्शनात्।

किंच त्यागस्य कामसङ्कल्पममत्वादिविषयभेदाद्बहुविधत्वं पूर्वमुक्तमित्यवगम्यते, नतु स्वरूपतो भेदः। तथासत्येकेन त्यागभेदेन युक्ते कर्मणि द्वितीयस्य त्यागभेदस्यानवकाशप्रसङ्गात्। रूपं द्विविधं- उद्भूतरूपमनुद्भूतरूपं चेत्युक्ते नहि उद्भूतरूपवति वस्तुन्यनुद्भूतरूपप्रसङ्गः। स्पर्शो द्विविधः- शीतोष्णभेदादित्युक्ते नापि शीतस्पर्शवति वस्तुन्युष्णस्पर्शप्रसङ्गः। अत्र तु त्यागस्त्रिविध इति, स्वरूपतो भेद इव कण्ठोक्तः- रूपं द्विविधमित्यादिवत्। ते च भेदा वक्ष्यन्ते तामसो राजसस्सात्त्विकश्चेति। नहि तामसत्यागवति पुरुषे राजससात्त्विकत्यागयोः प्रसङ्गः। एवं राजसत्यागवति तामससात्त्विकत्यागयोर्नैव प्रसङ्गः। तथा सात्त्विकत्यागवति न राजसतामसयोः प्रसङ्गः। अत एव त्यागस्य त्रैविध्यकथनम्। यदि त्वेकस्मिन्नेव पुरुषे युगपदेव त्यागत्रयं स्यात्तर्हि त्याग एकविध एव स्याद्भेदप्रमाणानुपपत्तेः- त्यागभेदानां परस्परसामानाधिकरण्याभावो हि त्यागभेदे प्रमाणम् (प्रयोजकम्)। अशीस्त्यागममतात्यागादीनां तु सामानाधिकरण्यमस्ति, अतो विषयभेदाद्भिन्न इव प्रतीयमानोपि स त्याग एकविध एव।

कः पुनरसौ निश्चय इत्याह—

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

यज्ञेति । यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं, कार्यं करणीयमेव तत् । कस्मात् ? यज्ञो दानं तपश्चैव पावनानि विशुद्धिकराणि मनीषिणां फलानभिसन्धीनामित्येतत् ॥५॥

---

अत्रोक्त एव त्यागस्त्रिविधः- स्वरूपभेदसद्भावात् । नहि सात्त्विकादित्यागभेदानां परस्परसाङ्कर्यं परस्परसामानाधिकरण्यं वा विद्यते । कण्ठोक्तश्चायमेवेति तुच्छमेव रामानुजव्याख्यानम् ।

किंच ईश्वर एव कर्ता, नाहं कर्तेत्यनुसन्धानं चायुक्तं- 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यत' इति गुणेष्वेव कर्तृत्वारोपो न त्वीश्वरे, नाप्यात्मनि अविक्रियत्वादीश्वरस्यात्माभिन्नत्वाच्चेति । यदीश्वरे कर्तृत्वमारोपितं स्यात्तदात्मन्येव फलति, बिम्बे मुखे आरोपितस्तिलकः प्रतिबिम्बमुखवत् । तस्मान्नैवेश्वरे कर्तृत्वमारोपितव्यं, किंतु गुणेष्वेव । नच 'मयि सर्वाणि कर्माणि सन्न्य'स्येति वचनस्य का गतिरिति वाच्यं, ईश्वरार्थमहं कर्म करोमि, स्वाम्यर्थं भृत्य इवेत्यनुसन्धानस्यैवेश्वरे कर्मसमर्पणरूपत्वादिति । नच गुणेष्वेव कर्तृत्वमारोपितव्यमिति स्थिते कथमहं करोमीत्यनुसन्धानमिति वाच्यं, कर्माधिकृताऽनात्मविद्विषयत्वादेतद्वचनस्य । तत्त्वविद्धि गुणा एव कर्तारो न त्वहमिति मन्यते । तस्मादीश्वर एव कर्तेत्यनुसन्धानमतिमूढविषयमेवेति संक्षेपः ॥४॥

यज्ञेति । मनीषिणां यज्ञदानतपःकर्म न त्याज्यं, प्रत्युत तत्कार्यमेव । मनीषिणां यज्ञो दानं तपश्चेत्येतानि पावनान्येव । नन्वज्ञविषयमिदं प्रकरणमिति प्रागुक्तं कथं सङ्गच्छेत ? मनीषिणामिति पदस्य सत्त्वान्मनीषिणो हि विद्वांसोऽत आह— **फलानभिसन्धीनामिति** । कर्मण्यधिकृतेष्वज्ञेषु मध्ये फलानभिसन्धयो विद्वांसः, फलाभिसन्धयस्तु तदपेक्षया मूढाः । यथा वैदिकेषु वेदार्थविदः प्राज्ञाः, केवलवेदपाठरता मूढाः । यथा वा द्विजेषु वेदपाठरताः प्राज्ञाः, सन्ध्यावन्दनमात्रविदो मूढाः । यथा वा विद्यार्थिषु शास्त्राध्यायिनः प्राज्ञाः, काव्याध्यायिनो मूढाः । यथा वा बालेषु पदवाक्यपाठकाः प्राज्ञाः, अकाराद्यक्षराभ्यासिनो मूढास्तद्वदिति भावः । तस्मादनात्मविदः कर्मण्यधिकृतास्तत्फलाभिसन्धिराहित्येन मनीषिण इतीहोच्यन्ते स्तुत्यर्थमिति बोध्यम् । विशुद्धिश्चित्तशुद्धिः । अनेन च पावनानीतिवचनेन चित्तशुद्धिपर्यन्तमेव कर्मण्यधिकृतैरपि कर्म कार्यं, पश्चात्तु सन्न्यासस्स्वीकर्तव्य एवाश्रमविशेषस्तत्त्वज्ञानार्थकश्रवणाद्यर्थः 'अथातो ब्रह्मजिज्ञासे'ति सूत्रात् । न हि ज्ञानं विना मुक्तिः । कर्माणि चित्तशुद्धिफलकान्येव ह्यनभिसंहितफलानि । कर्मभिश्चित्ते शुद्धे सति विविदिषा जायते । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेति श्रुतेः । जातायां च विविदिषायां तद्वेदनार्थं गृहादिकं परित्यज्य तत्त्ववित्सकाशं यात्येवेति सिद्धस्सन्न्यासो मुमुक्षोर्विविदिषाजनकानां तु कर्मणां विविदिषाजननानन्तरं नोपयोगः- जलदर्शनानन्तरं खनित्रस्येव ।

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥६॥**

एतानीति । एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि, सङ्गमासक्तिं तेषु त्यक्त्वा फलानि च तेषां त्यक्त्वा परित्यज्य कर्तव्यानीत्यनुष्ठेयानीति मे मम निश्चितं मतमुत्तमम् । 'निश्चयं शृणु मे तत्र' इति प्रतिज्ञाय पावनत्वं च हेतुमुक्त्वा 'एतान्यपि कर्माणि कर्तव्यानी'त्येतत्, 'निश्चितं मतमुत्तम'मिति प्रतिज्ञातार्थोपसंहार एव । नापूर्वार्थं वचनं-- 'एतान्य'पीति प्रकृतसन्निकृष्टार्थत्वोपपत्तेः । ससङ्गस्य फलार्थिनो बन्धहेतवः 'एतान्यपि कर्माणि मुमुक्षोः कर्तव्या'नीत्यपिशब्दस्यार्थः । न त्वन्यानि कर्माण्यपेक्ष्य 'एतान्यपी'-त्युच्यते ।

अन्ये तु वर्णयन्ति—नित्यानां कर्मणां फलाभावात् 'सङ्गं त्यक्त्वा फलानि' चेति नोपपद्यते । अतः- 'एतान्य'पीति यानि काम्यानि कर्माणि नित्येभ्योऽन्यानि, एतान्यपि कर्तव्यानि । किमुत यज्ञदानतपांसि नित्यानीति, तदसत्—नित्यानामपि कर्मणामिह

---

एवं सति आप्रायणादहरहः कर्म कार्यं मुमुक्षुभिरिति वर्णयतो रामानुजस्याहो ! पाण्डित्यम् ! आप्रायणादिति मूलाद्बहिःपदकल्पनात् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्', 'व्युत्थायाथ भिक्षाचर्यं चरन्ति', 'ब्राह्मणो निर्वेदमायात्, शान्तो दान्त उपरत' इत्यादिश्रुतिसिद्धस्य, सर्वारम्भपरित्यागी-त्यादिप्रकृतगीतासिद्धस्य च सर्वकर्मसन्न्यासस्य विद्वद्विषयस्य प्रत्याख्यानाच्च ॥५॥

एतानीति । हे पार्थ ! एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च त्यक्त्वा कर्तव्यानीति मे निश्चितमुत्तमं मतम् । क्व सङ्गमत आह—तेष्विति । यज्ञादिष्वित्यर्थः । हेतुमिति । यज्ञादीनां कर्तव्यत्वे हेतुमित्यर्थः । अपूर्वार्थवचनमिति । यज्ञादिभ्योऽन्यान्यपि कर्माणि कर्तव्यानीत्येवंरूपाऽपूर्वार्थवचनं न भवतीत्यर्थः । कुतो नापूर्वार्थवचनमत आह—एतान्यपीति । एतच्छब्दो हि प्रकृतसन्निहितार्थवाची । ननु एतान्यपीत्यपिशब्दात्पूर्वोक्तकर्मभ्योऽन्यान्यप्येतानि कर्तव्यानीत्येवार्थोऽत आह—ससङ्गस्येति । ससङ्गस्य फलार्थिनो बन्धहेतून्यप्येतानि पूर्वोक्तकर्माणि मुमुक्षोरज्ञस्य कर्मण्यधिकृतस्य कर्तव्यानीत्यपिशब्दार्थः । ननु समुच्चयार्थोऽपिशब्दोऽत्रेत्याह—नत्विति । एतानि पूर्वोक्तकर्माणि कर्तव्यान्यपिशब्दादन्यान्यपि कर्तव्यानीति नार्थ इति भावः ।

एतेन सङ्गं त्यक्त्वा फलं त्यक्त्वा च कृतान्येव यज्ञदानतपांसि पावनानि, नतु सकामानीति सिद्धम् । अत एव मनीषिणां फलानभिसन्धीनामिति भाष्यकारैरुक्तम् । यदुक्तं नापूर्वार्थवचनमिति तत्र कैः कथमिहापूर्वार्थो वर्णित इति शङ्कायां तन्मतमुपन्यस्य दूषयति—अन्येत्विति, अत इति । नित्यकर्मणां यज्ञादीनां फलत्यागकथनस्यायुक्तत्वादित्यर्थः । एतान्यपीति । तान्येतान्यपीत्यर्थः । काम्यान्यपि कर्माणि फलं त्यक्त्वा कर्तव्यानीत्येतानि कर्माणि कर्तव्यानीत्यस्यार्थः । अपिशब्दार्थमाह—

फलवत्त्वस्योपपादितत्वात्- 'यज्ञो दानं तपश्चैव पावना'नीत्यादिना वचनेन। नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः? 'दूरेण ह्यवरं क'र्मेति च निन्दितत्वात्; 'यज्ञार्थात्कर्मणोऽन्य'त्रेति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात्; 'त्रैगुण्यविषया वेदाः', 'त्रैविद्या मां सोमपाः', 'क्षीणे पुण्ये मर्त्यलोकं विश'न्तीति च, दूरव्यवहितत्वाच्च न काम्येषु 'एतान्य'पीति व्यपदेशः ॥६॥

तस्माद्यज्ञस्याधिकृतस्य मुमुक्षोः—

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥७॥

नियतस्येति। नियतस्य तु नित्यस्य सन्न्यासः परित्यागः कर्मणो नोपपद्यते- अज्ञस्य पावनत्वस्येष्टत्वात्। मोहादज्ञानात्तस्य नियतस्य परित्यागः- नियतं चावश्यं

---

किमुतेति। यज्ञदानतपांसि कर्तव्यानीति किं पुनर्वक्तव्यमित्यर्थः। उपपादितत्वादिति। केन वचनेनेत्यत आह—यज्ञ इति। पावनत्वफलस्योक्तत्वादिति भावः। 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फल'मित्यनेन वक्ष्यते चेति बोध्यम्। जिहासोर्हातुं त्यक्तुमिच्छोर्जिहासोः। कुतो न प्रसङ्गोऽत आह—दूरेणेति। 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्ज'येति श्लोकेनेति भावः। ननु नित्यकर्मस्वेवास्य बन्धहेतुत्वशङ्का, नतु काम्यकर्मस्वित्यत आह—यज्ञार्थादिति। 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन' इति श्लोके ईश्वरार्थं कर्मैवाबन्धकं, काम्यं कर्म तु बन्धकमेवेति निश्चयेनोक्तत्वादिति भावः।

एवं काम्यकर्मणां बन्धकत्वादेव 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जु'नेत्युक्तमित्याह—त्रैगुण्येति। कम्यकर्मणां यज्ञादीनां स्वर्गादिफलप्रदानद्वारा जन्ममरणादिसंसारहेतुत्वं च स्फुटमुक्तमित्याह—त्रैविद्या इति। 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विश'न्तीति। ननु काम्यानां कर्मणामिति प्रकृतत्वात्तत्परामर्श एतच्छब्दस्योचित इत्यत आह—दूरेति। अत्यन्तं व्यवहितत्वादित्यर्थः। अव्यवहितयज्ञादित्यागे कारणाभावाद्दूरव्यवहितकाम्यपरामर्शे प्रमाणाभावाच्चेति भावः। तस्मात्काम्येष्वेतान्यपीति न व्यपदेशः। एतान्यपीत्यनेन काम्यानि नोच्यन्त इत्यर्थः। तस्मादेतान्यपि यज्ञादिकर्माणि कर्तव्यानीत्येवार्थः। तुशब्दस्तु विशेषार्थः। फलाभिसन्धिरहितान्येव यज्ञादीनि कर्तव्यानि, नतु तत्संहितानीत्ययं विशेषस्तुशब्देनोच्यते; बन्धकान्यपि कर्तव्यान्येवेत्यपिशब्दार्थ इत्याचार्यैरेव दर्शितम्। एतेन 'यज्ञदानतपःकर्म न त्याज्यमिति चापर' इत्युक्तकर्मफलत्यागपक्ष एव श्रीकृष्णाभिमत इति सिद्धम् ॥६॥

नियतस्येति। अथ त्रिविधस्सम्प्रकीर्तित इत्युक्तत्यागत्रैविध्यं दर्शयन् त्याज्यं दोषवदिति कर्मसन्न्यासपक्षं दूषयति—नियतस्येति। नियतस्य कर्मणस्सन्न्यासस्तु नोपपद्यते। कस्य नियतं कर्मेत्यत आह—अज्ञस्येति। अज्ञोऽपि यः कर्मण्यधिकृतश्शूद्रादिर्यश्च द्विजोऽपि यमाद्यर्थं सन्न्यस्तवान्

कर्तव्यं त्यज्यते चेति विप्रतिषिद्धम् । अतो मोहनिमित्तः परित्यागस्तामसः परिकीर्तितो मोहस्य तम इति ॥७॥

किंच—

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥

दुःखमिति । दुःखमित्येव यत्कर्म कायक्लेशभयाच्छरीरदुःखभयात्त्यजेत्परित्यजेत्,

---

तस्य नियतमित्याह—अधिकृतस्येति । कथमधिकृतोऽज्ञः कर्म नियतं त्यक्तुमिच्छतीत्यत आह—मुमुक्षोरिति । कर्मणो बन्धकत्वधिया बन्धान्मुमुक्षुर्नियतं कर्म परित्यजेदज्ञानादिति भावः । यस्मात्फलाभिसन्धिरहितं यज्ञादिकर्म पावनत्वात्कार्यमज्ञस्य तस्मादिति तस्माच्छब्दार्थः । नित्यस्येति । नैमित्तिकस्याप्युपलक्षणम् । यज्ञादीनि नित्यकर्माणि ब्राह्मणस्य देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञाख्यपञ्चयज्ञानामहरहः कर्तव्यत्वात् । 'वसन्ते वसन्ते ज्योतिषा यजे'तेति ज्योतिष्टोमस्तु नैमित्तिकः । इज्याध्ययनदानानि त्रीणि ब्राह्मणस्य स्वधर्मतया विहितानीति । दानं च नित्यकर्मैव । अध्ययनं ब्रह्मयज्ञो यज्ञेष्वन्तर्भूतम् । इज्या देवपूजा वैश्वदेवादिर्यज्ञत्वेन प्रसिद्धैव । तप एकादश्युपवासादिः । तच्च नित्यमेव, तदकरणे प्रत्यवायदर्शनात् । 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यादिधर्मशास्त्रात् ।

एवं नित्यस्य यज्ञादिरूपस्य कर्मणः परित्यागो मुमुक्षोर्नोपपद्यते, परित्यागे प्रत्यवायसम्भवात् । करणे च पावनत्वरूपफलसम्भवात् । ननु फलानभिसन्धीनां किं पावनत्वफलेनेत्यत आह—तस्येति । मुमुक्षोर्हि मोक्षफले तावदिच्छास्तीति मोक्षफलमिष्टं, तदर्थं ज्ञानं चेष्टं, ज्ञानं विना मोक्षासम्भवात् । ज्ञानार्थं च चित्तशुद्धिलक्षणं पावनत्वमिष्टं पावनत्वार्थं च, पावनं नित्यकर्मेष्टमिति, पावनस्य नित्यकर्मणो मुमुक्षोरिष्टत्वादित्यर्थः । नचैवं कथं फलाभिसन्धिराहित्यमिति वाच्यं, स्वर्गादितत्तन्नियतफलाभिसन्धिराहित्यस्यैव विवक्षितत्वात् । स्वर्गादिफलं हि बन्धकत्वादनपेक्षितव्यं, पावनत्वादिकं तु मोचकत्वादपेक्ष्यमेव । नहि फलस्य फलत्वेन रूपेण दोषवत्त्वं, किंतु बन्धकत्वेन रूपेणैव । अन्यथा मोक्षोऽपि फलत्वाद्दोष एव स्यात् ।

अज्ञानादिति । नित्यं कर्म फलाभिसन्धिरहितं चेन्न बन्धकं, त्यक्तं चेन्नरकावहमित्येवंरूपविवेकाभावादित्यर्थः । एतेनात्मविदामात्मज्ञानान्नियतकर्मत्याग उचित एवेति ज्ञायते । विप्रतिषिद्धं विरुद्धं कर्तव्यत्वत्याज्यत्वयोस्सामानाधिकरण्यासम्भवादिति भावः । अत इति । कर्तव्यकर्मत्यागस्य विरुद्धत्वादित्यर्थः । विदुषां सन्न्यासिनां तु नैव कर्तव्यं कर्मेति तत्त्यागो न विरुद्धः, प्रत्युत तत्करणमेव विरुद्धमिति भावः । मोहनिमित्त इति । मोहो निमित्तं कारणं यस्य स तथोक्तः । ननु विदुषां सन्न्यासिनामिवात्मज्ञाननिमित्त इति भावः । तामस इति । तमोगुणप्रवृत्तः । तमःकार्यत्वान्मोहस्येति भावः ॥७॥

दुःखमिति । यः कर्म दुःखमिति मत्त्वैव कायक्लेशभयात्त्यजेत्, स राजसं त्यागं कृत्वा

स कृत्वा राजसं रजोनिर्वृत्तं त्यागं नैव तत्त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेन्नैव लभेत ॥८॥

कः पुनस्सात्त्विकस्त्यागः ? इत्याह—

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन !
सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मतः ॥९॥

कार्यमिति । कार्यं कर्तव्यमित्येव यत्कर्म नियतं नित्यं क्रियते निर्वर्त्यतेऽर्जुन ! सङ्गं त्यक्त्वा फलं चैव । एतन्नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमवोचाम । अथ वा यद्यपि फलं न श्रूयते नित्यस्य कर्मणः; तथापि नित्यं कर्म कृतमात्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोत्यात्मन इति कल्पयत्येवाज्ञः । तत्र तामपि कल्पनां निवारयति- 'फलं त्यक्त्वा' इत्यनेन । अतस्साधु उक्तं- 'सङ्गं त्यक्त्वा फलं च' इति । स त्यागो नित्यकर्मसु सङ्गफलपरित्यागस्सात्त्विकस्सत्त्वगुणनिर्वृत्तो मत अभिप्रेतः ।

---

त्यागफलं नैव लभेत् । अज्ञानपूर्वकः कर्मत्यागस्तामसत्यागः, कायक्लेशभयदुःखपूर्वकः कर्मत्यागस्तु राजसत्यागः । अस्मिन्नेव त्यागद्वये 'त्याज्यं दोषवदिति पक्षोऽन्तर्भूतः । अतस्स पक्षो दुष्ट एव । अज्ञस्य कर्मण्यधिकृतस्य नियतकर्मपरित्यागेन प्रत्यवायसम्भवान्मोक्षासम्भवाच्च । तस्मादज्ञः कर्मण्यधिकृतो नियतं कर्मावश्यं कुर्यात् । अज्ञस्यापि सन्न्यस्तस्य न कर्माधिकारः । अधिकृतस्येति विशेषणात् । अतोऽज्ञस्य सन्न्यासिनोपि नियतकर्मत्यागो न प्रत्यवायावहः । परं तु अज्ञस्य तस्य सन्न्यासापेक्षया कर्मयोग एव समीचीनः- पावनत्वात्कर्मयोगस्य । 'कर्मयोगो विशिष्यत' इत्युक्तत्वाच्च । तस्मादयुक्त एवाज्ञस्य मोहात्कायक्लेशभयाच्च कर्मत्यागः । सर्वकर्मत्यागस्येति । परमार्थसन्न्यासस्येत्यर्थः । विद्वत्सन्न्यासस्येति यावत् ॥८॥

कार्यमिति । हेऽर्जुन ! नियतं यत्कर्म सङ्गं त्यक्त्वा फलं च त्यक्त्वा कार्यमित्येव क्रियते स त्यागस्सात्त्विको मतः । आत्मसंस्कारं चित्तशुद्धिं । प्रत्यवायो नरकादिः । आत्मनस्स्वस्य । अज्ञ इति । आत्मतत्त्वानभिज्ञ इत्यर्थः । आत्मविद्धि स्वस्य चित्तस्य चासम्बन्धं पश्यन् कथं चित्तशुद्धिं कामयेत् ! कथं वा अपहतपाप्मन्यात्मनि प्रत्यवायपरिहारं कामयेत् ? नित्यकर्मस्विति । यत्कर्म क्रियत इति प्रागुक्तं तेष्वित्यर्थः । एवं च स इत्यस्य तन्नित्यकर्मविषय इत्यर्थ इति सिद्धम् । तन्नित्यकर्मगतसङ्गफलविषय इति वा । एतेन सर्वकर्मफलत्यागरूपो यस्सात्त्विकत्यागस्स एव- 'यज्ञदानतपःकर्म न त्याज्यमिति चापर' इति श्लोकपरार्धोक्तः पक्षस्स एव च भगवदभिमत इति सिद्धम् । ततश्च कर्मण्यधिकृतस्सर्वोऽप्यज्ञो नित्यं कर्म कृत्वा फलमेव परित्यजेत्, नतु कर्म सन्न्यसेदिति फलितम् ।

ननु त्यागस्त्रिविधस्सम्प्रकीर्तित इति त्यागशब्देन सन्न्यास एव ग्रहीतव्यः- 'नियतस्य तु सन्न्यास' इत्युत्तरानुरोधात् । सन्न्यासस्य प्रकृतत्वाच्च । तथा सति सन्न्यासः कर्मत्यागरूप एवेति

ननु कर्मपरित्यागस्त्रिविधः सन्न्यास इति च प्रकृतः । तत्र तामसो राजसश्च त्याग उक्तः । कथमिह सङ्गफलत्यागः तृतीयत्वेनोच्यते ? यथा त्रयो ब्राह्मणास्समागताः, तत्र षडङ्गविदौ द्वौ, क्षत्रियस्तृतीय इति तद्वत् । नैष दोषः—त्यागसामान्येन स्तुत्यर्थत्वात् । अस्ति हि कर्मसन्न्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वसामान्यम् । तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसन्धित्यागस्सात्त्विकत्वेन स्तूयते- 'स त्यागस्सात्त्विको मतः' इति ॥९॥

यस्त्वधिकृतस्सङ्गं त्यक्त्वा फलाभिसन्धिं च कर्म नित्यं करोति, तस्य फलरागादिना अकलुषीक्रियमाणमन्तःकरणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुद्ध्यति, तद्विशुद्धं प्रसन्नमात्मालोचनक्षमं भवति । तस्यैव नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठा स्यात्तद्वक्तव्यमित्याह—

> न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
> त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥

नेति । न द्वेष्ट्यकुशलमशोभनं काम्यं कर्म शरीरारम्भद्वारेण संसारकारणं 'किमनेन ?' इत्येवम् । कुशले शोभने नित्ये कर्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन 'मोक्षकारणमिदं' मित्येवं नानुषज्जते, तत्रापि प्रयोजनमपश्यन्ननुषङ्गं प्रीतिं न करोतीत्येतत् । कः पुनरसौ ? त्यागी पूर्वोक्तेन सङ्गफलपरित्यागेन तद्वान् त्यागी यः कर्मणि सङ्गं त्यक्त्वा तत्फलं

---

तथा कर्मत्यागविषया एषया एव त्रयः प्रकारा दर्शनीयाः, ननु कर्मत्यागविषयौ द्वौ फलत्यागविषय एकश्चेति । फलत्यागस्यासन्न्यासत्वात् । प्रकृते तु राजसतामसत्यागौ कर्मत्यागावेव दर्शितौ । सात्त्विकस्त्यागस्तु फलत्यागो दर्शित इति कथं सन्न्यासस्य कर्मत्यागरूपस्य त्रैविध्यमिति चोदयति—नन्विति । परिहरति—नैष दोष इति । हेतुमाह—त्यागेति, त्यागसामान्येनेति । परित्यागांशसादृश्येनेत्यर्थः । सन्न्यासत्यागयोरिति भावः । तदेव सामान्यं दर्शयति—अस्ति हीति । स्तुतिं दर्शयति—तत्रेति । सन्न्यासत्यागयोर्मध्य इत्यर्थः । राजसात्तामसाच्च कर्मत्यागात्सात्त्विकः फलत्याग उत्कृष्ट इति स्तुत्यर्थं फलत्यागस्यापि सन्न्यासभेदान्तःप्रवेशनमिति भावः ॥९॥

नेति । राजसतामसत्यागिनौ निन्दितौ । यस्तु सात्त्विकत्यागी तस्य परमार्थसन्न्यासज्ञाननिष्ठाप्रकारोऽनेन श्लोकेनोच्यत इत्याह—तस्येति । तन्निष्ठा आत्मज्ञाननिष्ठा । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयश्च सन्नकुशलं कर्म न द्वेष्टि, कुशले कर्मणि नानुषज्जते । किं तदकुशलं कर्मेत्यत आह—काम्यमिति । कुतस्तस्याशोभनत्वमत आह—शरीरेति । शरीरारम्भकत्वात्संसारकारणमित्यर्थः । कथं द्वेष्टीत्यत आह—किमनेनेत्येवमिति, अनुषङ्गं न करोतीति । अनुषङ्गप्रकारं दर्शयति—सत्त्वशुद्धीति । संसारकारणमिदमिति काम्ये न द्वेषः, मोक्षकारणमिदमिति नित्ये नापि प्रीतिस्त्यागिन इत्यर्थः । द्विष अप्रीताविति धातोर्द्वेषोऽप्रीतिः । कस्त्यागीत्याकाङ्क्षायामाह—कः पुन-

च नित्यकर्मानुष्ठायी स त्यागी । कदा पुनरसावकुशलं कर्म न द्वेष्टि, कुशले च नानुषज्जत इति । उच्यते— सत्त्वसमाविष्टो यदा सत्त्वेनात्मानात्मविवेकविज्ञानहेतुना समाविष्टसंव्याप्तः सत्त्वसंयुक्त इत्येतत् । अत एव च मेधावी मेधयाऽऽत्मज्ञानलक्षणया प्रज्ञया संयुक्तस्तद्वान् मेधावी । मेधावित्वादेव छिन्नसंशयः- छिन्नोऽविद्याकृतस्संशयो यस्य 'आत्मस्वरूपावस्थानमेव परं निश्श्रेयससाधनं, नान्यत्किंचि'दित्येवं निश्चयेन छिन्नसंशयः ।

योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन सम्बुद्धस्स सर्वकर्माणि मनसा सन्न्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठामश्नुत इत्येतत् । पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेनैव श्लोकेनोक्तम् ॥१०॥

---

रसाविति, त्यागेनेति । उपलक्षित इति शेषः । तद्वानिति । त्यागवानित्यर्थः । कोसौ त्यागी अत आह—य इति, नित्यकर्मानुष्ठायीति । नित्यकर्मानुष्ठानशील इत्यर्थः । सत्त्वेन गुणविशेषेण । कीदृशेनेत्यत आह—आत्मेति । आत्मानात्मविवेकज्ञानस्य हेतुना कारणभूतेन। 'सत्त्वात्संजायते ज्ञान'मित्युक्तत्वादिति भावः । नित्यकर्मानुष्ठानेन चित्ते परिशुद्धे सति सत्त्वगुणोद्रेको भवतीत्यर्थः । यद्वा चित्तशुद्धिरेव सत्त्वोत्कर्षः । अत एवेति । सत्त्वनिष्ठत्वादित्यर्थः । मेधा अस्यास्तीति मेधावी, 'अस्माया मे'थेति विनिः । मेधायास्स्वरूपमाह—आत्मज्ञानेति । आत्मज्ञानमिह मेधाशब्दार्थः । छिन्नसंशयो यस्य स छिन्नसंशयः- नित्यकर्म बन्धकं वा नवेत्येवमादिरूपसंशयः। यद्वा आत्मा कर्ता वा उताकर्तेत्येवमादिरूपः । केन कृतोऽयमत आह—अविद्याकृत इति । अज्ञानजन्य इत्यर्थः । केन छिन्नोऽत आह—निश्चयेनेति । निश्चयज्ञानेनेत्यर्थः । निश्चयस्याकारमाह—आत्मेति । आत्मस्वरूपेणावस्थानमात्मज्ञाननिष्ठेति यावत् । एवकारार्थमाह—नान्यत्किञ्चिदिति। अन्यन्नित्यकर्मानुष्ठानादिकमित्यर्थः । फलितार्थमाह—य इति । यः कर्मण्यधिकृतोऽज्ञः पुरुषः पूर्वोक्तप्रकारेण कर्मयोगमनुष्ठाय तेन क्रमात्संस्कृतात्मा शुद्धचित्तस्सन् जन्मजरामरणादिविक्रियारहितत्वेन हेतुना निष्क्रियमात्मानं प्रत्यंचमेवात्मत्वेन सम्बुद्धो जानन् सन् सर्वकर्माणि मनसा सन्न्यस्य, किंचिदपि कर्म स्वयं नैव कुर्वन्नन्यैरपि न कारयन् तूष्णीमासीनस्सन्, नैष्कर्म्यलक्षणां परमार्थसन्न्यासस्वरूपां ज्ञाननिष्ठामश्नुते प्राप्नोति । इत्येतत्पूर्वश्लोकोक्तकर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तम् । पूर्वश्लोकोक्तो यस्सात्त्विकत्यागस्स एव कर्मयोगः । यः पूर्वं 'सन्न्यासः कर्मयोगश्च निश्श्रेयसकरावुभा'वित्यादिनोक्तः, तस्य च कर्मयोगस्य चित्तशुद्धिज्ञानप्राप्तिद्वारा मोक्षः फलमिति तत्रैवोक्तम् । तदेव फलमिह साक्षादनेन श्लोकेनोक्तम् । किमिति ? त्यागात्सत्त्वसमावेशः, सत्त्वसमावेशादात्मज्ञानं, तस्माच्च संशयनिरासः, ततो नित्यकाम्यकर्मप्रीतिद्वेषाभावपूर्वकात्मज्ञाननिष्ठेति । एवं कर्मयोगिनः क्रमेण ज्ञाननिष्ठाप्राप्तौ सत्यां ज्ञाननिष्ठस्य यत्फलं पूर्वमुक्तं गुणातीतत्वं विदेहकैवल्यं च तदुभयमस्य भवतीति कर्मयोगिनः फलं ज्ञाननिष्ठाप्राप्तिद्वारा मोक्ष एवेति कृत्वा ज्ञाननिष्ठैव कर्मयोगस्य फलं, तदेवं प्रतिपादितमिति भावः ॥१०॥

यः पुनरधिकृतस्सन् देहात्माभिमानित्वेन देहभृदज्ञोऽबाधितात्मकर्तृत्वविज्ञानतया 'अहं कर्ता' इति निश्चितबुद्धिस्तस्याशेषकर्मपरित्यागस्याशक्यत्वात्कर्मफलत्यागेन चोदितकर्मानुष्ठान एवाधिकारः, न तत्त्याग इत्येतमर्थं दर्शयितुमाह—

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥

नहीति । नहि यस्माद्देहभृता- देहं बिभर्तीति देहभृत्, देहात्माभिमानवान्देहभृदित्युच्यते, न विवेकी । सहि- 'वेदाविनाशिन'मित्यादिना कर्तृत्वाधिकारान्निवर्तितः । अतस्तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं सन्न्यसितुं कर्माण्यशेषतो निश्शेषेण । तस्माद्य-

---

न हीति । हि देहभृताऽशेषतः कर्माणि त्यक्तुं न शक्यं, यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते शिष्टैः । अबाधितमात्मकर्तृत्वविज्ञानमहं कर्तेत्येवंरूपं ज्ञानं यस्य तत्तया हेतुना । तस्येति । कर्मण्यधिकृतस्य कर्त्रात्मदर्शिनोऽज्ञस्येत्यर्थः । कर्मफलत्यागेनेति । कर्मफलत्यागपूर्वकमित्यर्थः । चोदितकर्मानुष्ठान एवेति । विहितकर्मानुष्ठान इत्यर्थः । तत्त्याग इति । कर्मत्याग इत्यर्थः । देहभृदिति । न हि दण्डमिवात्मा देहं बिभर्ति येन देहभृदित्युच्येत, नापि पय इव घट आत्मा देहं बिभर्ति । किंतु ममायं देह इति मनुष्योऽहमिति चाहं ममाभिमानपूर्वकं देहं बिभर्त्यात्मा । यदा पुनरात्मनश्शरीरेऽहं ममाभिमानाभावः, तदा सुषुप्तौ शरीरं हि निश्चेष्टतया वर्ततेऽत आह—देहात्माभिमानवान् देहभृदित्युच्यत इति ।

कः पुनर्नोच्यते देहभृदित्यत आह—न विवेकीति । नन्विह देहभृच्छब्देन विवेक्युच्यतामत आह—स हीति, अत इति । विवेकिनः कर्माधिकाराभावादित्यर्थः । तेनेति । अविवेकिनेत्यर्थः । शक्यमिति नेत्यस्यात्रान्वयान्न शक्यमित्यर्थः । विवेकिना तु त्यक्तुं शक्यमेव । देहयात्रामात्रफलकभिक्षाटनादिकर्मणामपि गुणकृतत्वानुसन्धानेन त्यागोपपत्तेः । न ह्यज्ञ इव प्राज्ञोऽप्यहं करोमीति मन्यते- अकर्त्रभोक्त्रविक्रियब्रह्माभिन्नात्मदर्शित्वं हि प्राज्ञत्वं । कथमकर्तारमात्मानं पश्यन्विद्वान् कर्ताहमिति मन्येत ? यस्तु तथा मन्यते स नैव तत्त्ववित् । किंतु भ्रान्त एव रज्जुसर्पवत् । तस्माद्विवेकिना कर्म कर्तुमेव न शक्यते, नतु त्यक्तुम् । कर्मकरणस्य देहादिष्वनात्मस्वात्माध्यास एव हि हेतुः । सुषुप्तावध्यासाभावेन कर्माभावदर्शनात् । स चाध्यासो विवेकिनः कथं जीवनादिप्रवृत्तिरिति शङ्कायामुक्तं व्यासेनैव भागवते—'देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षित एव सासु'रिति । इहाप्युक्तं- 'स्वभावस्तु प्रवर्तत' इति । तस्माद्देहाद्याकारपरिणतगुणा एव कर्मसु प्रवर्तन्ते तत्तादात्म्याध्यासेन चाविवेकिनः, नतु विवेकिनः । तस्यात्मत्वादात्मनश्चाकर्तृत्वादिति विवेकिनः कर्मकरणमेवासम्भवि, नतु निश्शेषतः कर्मत्यागः । देहादिभ्यो विलक्षणश्चिन्मात्रोऽहं सदाशिव इति ज्ञानेन सर्वकर्मत्यागस्य सुकरत्वाद्देहादिगतकर्मणा सम्बन्धाभावाच्चात्मनो मेघगतजलेनेव गगनस्य ।

स्त्वज्ञोऽधिकृतो नित्यानि कर्माणि कुर्वन् कर्मफलत्यागी कर्मफलाभिसन्धिमात्रसन्न्यासी स त्यागीत्यभिधीयते, कर्म्यपि सन्निति स्तुत्यभिप्रायेण । तस्मात्परमार्थदर्शित्वेनैवाऽदेहभृता देहात्मभावरहितेनैवाशेषकर्मसन्न्यासश्शक्यते कर्तुम् ॥११॥

किं पुनस्तत्प्रयोजनं यत्सर्वकर्मसन्न्यासात्स्यादित्युच्यते—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥१२॥

अनिष्टमिति । अनिष्टं नरकतिर्यगादिलक्षणं, इष्टं देवादिलक्षणं, मिश्रमिष्टानिष्टसंयुक्तं मनुष्यलक्षणं च, तत्त्रिविधं त्रिप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं बाह्यानेककारकव्यापार-

---

अतस्सर्वं कर्म समूलं त्यक्तुं शक्यमेव विवेकिन इत्यविवेक्येवात्र देहभृच्छब्देन ग्राह्यः तस्यैव देहादितादात्म्याध्यासवतः कर्मत्यागासम्भवात् । नहि पक्ष्मादिषून्मेषनिमेषादिक्रियासु प्रवृत्तेषु सत्सु तत्तादात्म्याध्यासवानज्ञः कर्मत्यागं कर्तुं क्षमते । किं त्वहमेवोन्मिषामि निमिषामि चेति कर्मैव कुर्वन्निव वर्तते । उक्तं हि पञ्चमाध्याये 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्, पश्यन्शृण्वन् स्पृशन् जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् । प्रलपन् विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारय'न्निति । तथा 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यत' इति च । तस्मादविवेकिन एव कर्मत्यागासम्भवः । नतु विवेकिन इति स्थितम् ।

कर्मफलाभिसन्धिमात्रसन्न्यासीति । कर्मफलाभिसन्धिमात्रमेव सन्न्यसितुं त्यक्तुं शीलमस्यास्तीति तथोक्तः । नतु कर्मसन्न्यासीति मात्रपदार्थः । ननु यः कर्म न त्यक्तवान्, फलमेव त्यक्तवान् कथं स त्यागीत्युच्यतेऽत आह—स्तुत्यभिप्रायेणेति । फलाभिसन्धिमात्रत्यागिनस्सन्न्यासित्वं स्तुतिसिद्धम् । ज्ञानपूर्वकसर्वकर्मसन्न्यासिनस्सन्न्यासित्वं तु पारमार्थिकं (मुख्यं) मोहपूर्वककर्मसन्न्यासिनो दुःखादिपूर्वककर्मसन्न्यासिनश्च सन्न्यासित्वं निन्द्यमिति भावः । कर्म्यपीत्यपिशब्दात्कर्मपरित्यागरूपसन्न्यासविरुद्धांशसत्त्वेऽपीति गम्यते । अत एव तस्य सन्न्यासित्वममुख्यम् ।

तस्मादिति । अविवेकिना देहभृता सर्वकर्मत्यागस्य कर्तुमशक्यत्वादित्यर्थः । अदेहभृतैव कर्मसन्न्यासः कर्तुं शक्यते । तत्र हेतुमाह—परमार्थदर्शित्वेनेति । अकर्त्रात्मज्ञानेनेत्यर्थः । अदेहभृतेतिपदं स्वयमेव व्याख्याति—देहात्मभावरहितेनेति । देहात्माभिमानवान्हि देहभृदित्युच्यते ॥११॥

अनिष्टमिति । अत्यागिनां प्रेत्य अनिष्टमिष्टं मिश्रं चेति त्रिविधं कर्मणः फलं भवति । सन्न्यासिनां तु क्वचिदपि तन्न भवति । यज्ञादिलक्षणं नित्यनैमित्तिककाम्यभेदभिन्नं धर्माख्यं कर्म यच्छास्त्रेण विहितं तस्य फलमिष्टं, यत्पुनर्हिंसादिलक्षणं शास्त्रेण प्रतिषिद्धं कर्माधर्माख्यं तस्य फलमनिष्टं, यत्कर्म धर्माधर्मोभयात्मकं तस्य फलं मिश्रम् । क्रियत इति कर्म । फलशब्दव्युत्पत्तिं दर्शयते—फल-

निष्पन्नं सदविद्याकृतमिन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पीव फल्गुतया लयमदर्शनं गच्छतीति फलमिति फलनिर्वचनम् । तदेतदेवंलक्षणं फलं भवति- अत्यागिना मज्ञानां कर्मिणामपरमार्थसन्न्यासिनां प्रेत्य शरीरपातादूर्ध्वं, न तु सन्न्यासिनां परमार्थसन्न्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचित् । न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं नोन्मूलयति कदाचिदित्यर्थः । अत एव परमार्थदर्शिन एवाशेष-

---

मित्यादिना । फल्गुतया लीयत इति फलम् । पृषोदरादित्वात्साधुः । फल्गुता तुच्छत्वं- मिथ्यात्वमिति यावत् । कुतः फल्गुत्वमत आह—अविद्याकृतमिति । अविद्या हि मिथ्याभूतमज्ञानं तत्कार्यत्वात्फलमपि मिथ्याभूतमेवेत्यर्थः । किमिव तुच्छमत आह—इन्द्रजालमायोपममिति । इन्द्रजालस्यमायाकृतगन्धर्वनगरादितुल्यमित्यर्थः । कुतोऽस्मिन् तुच्छे फले विदुषामप्यासक्तिरत आह—महामोहकरमिति ।

नन्वसङ्गस्यात्मनः फलेन सह सङ्गाभावात्कथमस्मिन् मोहोऽत आह—प्रत्यगात्मोपसर्पीवेति । प्रत्यगात्मानमुपसर्पति सम्बध्नातीति प्रत्यगात्मोपसर्पि । तदिव भासमानमिति शेषः । आत्मसङ्गीव भातीत्यर्थः । कथमस्य फलस्य निष्पत्तिरत आह—बाह्येति । बाह्यानामनेकानां कारकाणां व्यापारैः क्रियाभिर्निष्पन्नं निर्वृत्तमत एव नेदं प्रत्यगात्मोपसर्पि । वस्तुत इति भावः । एवं तुच्छत्वादेवास्य लयं सर्पाभासादिवदित्याह—फल्गुतयेति । हेतौ तृतीया । लयशब्दार्थमाह—अदर्शनमिति । नाशमिति यावत् । गच्छति प्राप्नोति । लीयत इत्यस्यार्थकथनमिदं लयं गच्छतीति । फलनिर्वचनं फलशब्दनिरुक्तिः । नचैवं मोक्षः फलं नैव भवतीति वाच्यं, इष्टत्वात् । नहि वयं मोक्षं ब्रह्मभावलक्षणं फलं ब्रूमः, किंतु नित्यसिद्ध एव स इति ब्रूमः । फलवत्प्रास इव भातीति फलत्वं मोक्षस्य । न तु वस्तुतः फलत्वम् । अत एव मोक्षस्य नित्यत्वव्यवहारस्सङ्गच्छते । नचैवं सगुणमुक्तिक्षेत्रस्य हिरण्यगर्भलोकस्य कथं फलत्वमिति वाच्यं, तस्यापि मायामयत्वेन तुच्छत्वात्फलत्वमिति । तद्धि नित्यकर्मणः फलं- 'प्राजापत्यं गृहस्थाना'मिति शास्त्रात् । यद्वा सगुणोपासनस्य फलम् । उपासनं हि क्रियेति । कर्मणः फलमिष्टमेव सगुणमुक्तिक्षेत्रम् । अत्यागिनामिति । कर्मफलत्यागिनामिति भ्रमनिरासायाह—अपरमार्थसन्न्यासिनामिति । स्वर्गादिलक्षणकर्मफलमात्रत्यागिनामिहजन्मनि ज्ञाननिष्ठाया अभावे जन्मान्तरस्यावश्यंभावितया स्यादेवेष्टं मिश्रं वा कर्मफलमिति भावः । नहि फलत्यागमात्रान्मुक्तिः । नच 'त्यागाच्छान्तिरनन्तर'मित्युक्तमिति वाच्यं, स्तुतिपरत्वात्तस्य ।

कदा भवति कर्मिणां कर्मफलमत आह—प्रेत्येति । शरीरं विहायेत्यर्थः । फलितमाह—शरीरपातादूर्ध्वमिति । प्रकृतदेहत्यागानन्तरमित्यर्थः । कुतो न सन्न्यासिनां कर्मफलमित्यत आह—नहीति । आदिपदाद्रागादिग्रहणम् । कदाचिदपि न नोन्मूलयन्ति हि, किंतु सर्वदाप्यवश्यमुन्मूलयन्त्येवेत्यर्थः । सम्भाव्य निषेधनिवर्तने द्वौ नञौ । हिः प्रसिद्धौ । हिं यस्मान्न नोन्मूलयन्ति तस्मान्न कर्मफलमिति वा । उन्मूलयन्ति समूलं नाशयन्ति । अत एवेति । विद्यया साङ्ख्यैरविद्यादिसंसार-

कर्मसन्न्यासित्वं सम्भवति, अविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां, न त्वज्ञ-स्याधिष्ठानादीति क्रियाकर्तृकारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसन्न्यासस्सम्भवति ॥१२॥

तदेतदुत्तरैश्श्लोकैर्दर्शयति—

पञ्चैतानि महाबाहो ! कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥

पञ्चेति । पञ्चैतानि वक्ष्यमाणानि हे महाबाहो ! कारणानि निर्वर्तकानि निबोध, मे ममेत्युत्तरत्र चेतस्समाधानार्थं, वस्तुवैषम्यप्रदर्शनार्थं च । तानि च कारणानि ज्ञातव्य-तया स्तौति—साङ्ख्ये ज्ञातव्याः पदार्थास्सङ्ख्यायन्ते यस्मिन् शास्त्रे तत्साङ्ख्यं वेदान्तः कृतान्त इति तस्यैव विशेषणम् । कृतमिति कर्मोच्यते तस्यान्तःपरिसमाप्तिर्यत्र स कृतान्तः कर्मान्त इत्येतत् । 'यावानर्थ उदपाने, सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यत' इत्यात्म-ज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति । अतस्तस्मिन्नात्मज्ञानार्थे साङ्ख्ये कृतान्ते वेदान्ते

---

बीजस्योन्मूलितत्वादेवेत्यर्थः । परमार्थदर्शिन एवेत्येवकारार्थमाह—न त्वज्ञस्येति । कस्मादज्ञस्य कर्मसन्न्यासो न सम्भवतीत्यत आह—अधिष्ठानादीति । अधिष्ठानमादिर्येषां तान्यधिष्ठानादीनि तानि च तानि क्रियाकर्तृकारकाणि च अधिष्ठानादिक्रियाकर्तृकारकाणि, अधिष्ठानं तथा कर्तेति श्लोको-क्तानि क्रियाकर्तृकारकाणीत्यर्थः । यद्यपि कर्तृकारकाणामहङ्कार मन इन्द्रियशरीराणामात्मत्वेन दर्शनं सम्भवति । अहं करोमि, स्पृशामि, जिघ्रामि, गच्छामि, स्थूलोऽहं कृशोऽहमित्यादिव्यवहारात् । क्रियाया आत्मत्वेन दर्शनं तु न सम्भवति । अहं गमनमित्यादिव्यवहाराभावात् । तथाप्यात्मीयत्वेन क्रियाया दर्शनसम्भवादुक्तं क्रियाकर्तृकारकाणीति । क्रियामात्मीयत्वेन कर्तृकारकाण्यात्मत्वेन च पश्यत इत्यर्थः। अशेषकर्मसन्न्यासो न सम्भवतीत्यन्वयः । तदेतदिति । अज्ञस्य कर्मसन्न्यासासम्भवं, प्राज्ञस्य तत्सम्भवं चेत्यर्थः ॥१२॥

पञ्चेति । हे महाबाहो ! सर्वकर्मणां सिद्धये कारणानि कृतान्ते साङ्ख्ये प्रोक्तान्येतानि पञ्च कारणानि मे वाक्यान्निबोध । साङ्ख्यशब्दार्थमाह—ज्ञातव्या इति । ज्ञातव्याः पदार्थाः प्रकृतिमह-दहङ्कारादयो यस्मिन्सङ्ख्यायन्ते गण्यन्ते तच्छास्त्रं साङ्ख्यमित्युच्यते । कापिलसाङ्ख्यनिरासायाह—वेदान्त इति । वेदान्तशास्त्रमित्यर्थः । उत्तरमीमांसेति यावत् । कथं कृतस्य साङ्ख्ये परिसमाप्तिरत आह—यावानिति । साङ्ख्यशास्त्रोक्तात्मज्ञाने सर्वकर्मसमाप्तिसद्भावाच्छास्त्रमपि कृतान्तमित्युच्यत इत्यर्थः । कर्मसमाप्तिमद्ज्ञानप्रतिपादकत्वात्साङ्ख्यशास्त्रस्य कृतान्तत्वमौपचारिकमिति भावः ।

कृतस्यान्तस्समाप्तिर्ज्ञाने भवतीत्ययमर्थो यत्र प्रतिपाद्यते तत्कृतान्तमित्युच्यते । ज्ञाने कर्मणः परिसमाप्तिं प्रतिपादयतीति साङ्ख्यशास्त्रं कृतान्तमित्युच्यत इति भावः । अत इति । ज्ञाने कर्म-समाप्तिप्रतिपादकत्वादित्यर्थः । तस्मिन् कृतान्ते साङ्ख्ये वेदान्ते । साङ्ख्यस्य फलितार्थमाह—

प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥१३॥

कानि तानीत्युच्यते—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥

अधिष्ठानमिति । अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरम् । तथा कर्ता उपाधिलक्षणो भोक्ता, करणं च श्रोत्रादिशब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं तद्द्वादशसङ्ख्यं, विविधा च पृथक्चेष्टा वायवीया प्राणापानाद्या, दैवं चैवात्र दैवमेव चात्रैतेषु चतुर्षु पञ्चमं पञ्चानां पूरणमादित्यादिचक्षुराद्यनुग्राहकम् ॥१४॥

---

आत्मज्ञानार्थ इति । साङ्ख्यमात्मज्ञानं तत्प्रतिपादकत्वाच्छास्त्रमपि साङ्ख्यमित्युच्यत इत्यर्थः । आत्मज्ञानमेवार्थः फलमभिधेयो वा यस्य तदात्मज्ञानार्थं तस्मिन् । सिद्धय इति तादर्थ्ये चतुर्थीत्याह—निष्पत्त्यर्थमिति । सर्वकर्मणां निष्पत्तौ हेतुभूतानि साङ्ख्यशास्त्रप्रसिद्धानि पञ्च कारणानि सन्ति; तान्यहं वक्ष्यामि त्वं सावधानो भवेत्यर्थः ।

यत्तु रामानुजः—सङ्ख्या बुद्धिस्तयानुसंहितस्साङ्ख्यः कृतान्तो निर्णय इति, तदसत्—साङ्ख्यशब्देनैव वैदिकबुद्ध्यनुसंहितवेदान्तशास्त्रसिद्धान्तरूपार्थस्य सिद्धत्वेन कृतान्तशब्दवैयर्थ्यप्रसङ्गात् । 'ज्ञानयोगेन साङ्ख्याना'मिति वेदान्तशास्त्रस्य साङ्ख्यत्वप्रसिद्धेश्च । सेश्वरसाङ्ख्यं हि वेदान्तशास्त्रम् । तन्निष्ठत्वाच्च ज्ञानिनस्साङ्ख्या इत्युच्यन्ते । नच वेदान्तेष्वपि कर्मान्वयस्य स्थापितत्वान्नास्ति कृतान्तत्वं वेदान्तशास्त्रस्येति वाच्यं, वेदान्तेषु कर्मान्वयस्याङ्गपरत्वेनैव स्थापितत्वात् । नहि परमार्थसन्न्यासिनां साङ्ख्यानां कोऽपि कर्मान्वयः । 'सर्वारम्भपरित्यागी'त्यादेरुक्तत्वादिहैव । 'तत्र केन कं पश्ये'दित्यादिश्रुतेश्च । न चान्तशब्दस्य निर्णये रूढिरिति वाच्यं, 'मृताववसिते रम्ये समाप्तावन्त इष्यत' इति समाप्तावप्यन्तशब्दस्य रूढत्वात् । तस्मान्नात्र कृतान्तशब्दस्य निर्णयार्थवर्णनद्वारा वैयर्थ्यापादनं न्याय्यम् ॥१३॥

अधिष्ठानमिति । अधिष्ठानमाश्रयः । कस्याश्रयोऽत आह—इच्छेति । प्राणिनामिच्छादयो हि शरीरेऽभिव्यज्यन्ते भोगायतनत्वाच्छरीरस्य । सुषुप्तिमृतिमूर्छासु शरीररहितस्य जीवस्य सुखदुःखादिसम्भोगादर्शनात् । तस्मादिच्छाद्यभिव्यक्तिरूपसंसाराश्रयत्वादधिष्ठानं शरीरम् । उपाधिलक्षण इति । अन्तःकरणस्वरूपः । अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा- तत्राहंवृत्तिर्विज्ञानमयो भोक्ता । इदंवृत्तिस्तु मनःकरणमिति विवेकः । तस्मादहङ्कारः कर्ता । तेन हि चिदाभाससंयुक्तेन देहादितादात्म्याध्यासात्कर्माणि क्रियन्ते तत्फलानि भुज्यन्ते चेति कर्ता भोक्ता च सः । तत्तादात्म्याध्यासात्तु प्रत्यगात्मनः कर्तृत्वभोक्तृत्वापत्तिः । शब्दाद्युपलब्धिश्शब्दस्पर्शरूपाद्यनुभवः । द्वादशसङ्ख्यमिति । दशेन्द्रियाणि मनोबुद्धिश्चेति । विविधा बहुविधा, पृथगसङ्कीर्णा, चेष्टा व्यापारः । कस्य चेष्टेत्यत आह—वायवीयेति । वायोः प्राणवायोरियं वायवीया । का सा चेष्टेत्यत

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥

शरीरेति । शरीरवाङ्मनोभिर्यत्कर्म त्रिभिरेतैः प्रारभते निर्वर्तयति नरः, न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वाऽधर्म्यमशास्त्रीयं यच्चापि निमेषादिकं चेष्टितादिजीवनहेतुः तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतम् । पञ्चैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि ।

नन्वेतान्यधिष्ठानादीनि सर्वकर्मणां निर्वर्तकानि । कथमुच्यते- 'शरीरवाङ्मनोभि-

---

आह—प्रणापानाद्येति । प्राणः प्राणनमपानो विसर्जनमादिपदादुदानादिवायुचेष्टा गिलनाद्यो ग्राह्याः । अनेन च चेष्टापदेन तदाश्रयः प्राणवायुर्ग्राह्यः । यद्वा चेष्टयतेऽनयेति चेष्टा वायोर्भूतस्येमा वायवीया वायुविकाराः प्राणापानाद्याः प्राणापानादिवायवो विविधा च पृथक्चेष्टेत्यनेनोच्यन्त इत्यर्थः । अन्नमयोऽधिष्ठानं प्राणमयश्चेष्टा मनोमयः करणं विज्ञानमयः कर्तेति बोध्यम् । दैवमादित्यादि । आदिपदाद्दिवातप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रादिग्रहणम् । चक्षुरादीत्यादिपदाच्च श्रोत्रादिग्रहणम् । आदित्यादिदेवतानुग्रहादेव चक्षुरादयस्स्वस्वकार्यं निर्वर्तयन्तीत्यनुग्राहकत्वं चक्षुरादीनां दैवस्य ।

दैवमन्तर्यामीश्वर इति रामानुजः, तदसत्—अविक्रियप्रत्यगात्मस्वरूपत्वादन्तर्यामिणः । 'निष्कलं निष्क्रियं शान्त'मिति हि श्रूयते । नच प्रेरणरूपा क्रियास्तीश्वरस्येति वाच्यं, त्वमिदं कुर्वितीश्वरेणान्तरेण प्रेर्यमाणस्य यस्य कस्याप्यदर्शनात् । अयस्कान्तलोहदृष्टान्तेनाविक्रियादेवेश्वरान्मनआदिप्रेरणसम्भवात् । अविक्रियस्यैव निधेः पुरुषप्रेरणसम्भवाच्च । नहि निधिः पुरुषं त्वं मदर्थं भूखननादिकं कुर्विति प्रेरयन् दृष्टः । तथापि निधिप्रेरित एव भूखननादौ प्रवर्तते पुरुषः । निध्यर्थं तस्य तत्र प्रवृत्तत्वात् । तस्मादविक्रियस्येश्वरस्य नात्र कर्महेतुत्वेन ग्रहणमुचितम् ॥१४॥

शरीरेति । नरश्शरीरवाङ्मनोभिर्न्याय्यं वा विपरीतं वा यत्कर्म प्रारभते तस्यैते पञ्च हेतवो भवन्ति । यत्कर्मेति । शारीरं वाचिकं मानसिकं वेत्यर्थः । ननु न्याय्यविपरीताभ्यां धर्माधर्माभ्यामन्यस्य निमेषादिकर्मणः का गतिरत आह—यच्चापीति । यच्च निमेषादिकं यच्च जीवनहेतुश्चेष्टितादिकं कृष्यादिव्यापारात्मकं तदपि न्याय्यविपरीतशब्दाभ्यामेव गृह्यते । धर्माधर्मकार्यत्वात्तस्येत्यर्थः ।

जन्मान्तरकृतपापवशेन निमेषादिचेष्टाप्रतिबन्धसम्भवादन्धादीनां तच्चेष्टा जन्मान्तरकृतधर्मकार्यभूता एवेति निश्चेतुं शक्यते । तथा पापवशात्कष्टजीवित्वस्य पुण्यवशात्सुखजीवित्वस्य च कृषीवलादिषु राजादिषु च दर्शनाज्जीवनहेतुकर्मविशेषोऽपि पुण्यपापप्रयुक्त एवेति भावः ।

ननु शरीरवाङ्मनोभिर्यत्कर्म क्रियते शारीरं वाचिकं मानसिकं वा तस्य कर्मणश्शरीरवाङ्मनांसि त्रीण्येव हेतवो ननु पञ्चाधिष्ठानादीनि पूर्वोक्तानि हेतव इति कृत्वा कथमुक्तं 'पञ्चैते तस्य हेतव' इति चेन्मैवम्— नरस्य कर्तुश्चतुर्थयोक्तत्वाद्दैवस्य पञ्चमस्य गम्यमानत्वाच्चेति । नन्विति । पूर्व-

र्यत्कर्म प्रारभत' इति ? नैष दोषः—विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरधिष्ठानादिभिरारभ्यत इति । फलकालेऽपि तत्प्रधानैस्साधनैर्भुज्यत इति पञ्चानामेव हेतुत्वं न विरुध्यत इति ॥१५॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

तत्रेति । तत्रेति प्रकृतेन सम्बध्यते । एवंसति- एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ये सति कर्मणि । तत्रैवंसतीति दुर्मतित्वस्य हेतुत्वेन सम्बध्यते । तत्र तेष्वात्मनोऽनन्यतमत्वे-

---

ऽधिष्ठानादीनि सर्वकर्मणां निर्वर्तकानीति पूर्वमुक्त्वा कथमिह शरीरवाङ्मनोभिर्यत्कर्म प्रारभत इत्युच्यत इति पूर्वपक्षः । परिहरति—नैष दोष इति । अधिष्ठानादिपञ्चकहेतुकमपि विधिप्रतिषेधलक्षणं तदङ्गभूतदर्शनश्रवणादिरूपं जीवनलक्षणं च सर्वमपि कर्म शरीरादित्रयप्रधानं, ततश्च त्रिधैव राशीकृतं सच्छरीरादिभिरारभ्यत इत्युच्यते । यच्छारीरं कर्म गमनादिकं तदधिष्ठानादिपञ्चकनिर्वर्त्यमपि शरीरप्रधानतया शरीरेणारभ्यत इत्युच्यते । तथा वाचिकं भाषणादिकं यत्तदप्यधिष्ठानादिपञ्चकनिर्वर्त्यमेव । तथापि वाक्प्रधानतया वाचाऽऽरभ्यत इत्युच्यते, तथा मानसिकं मननादिकर्म यत्तदधिष्ठानादिपञ्चकनिर्वर्त्यमपि मनःप्रधानतया मनसाऽऽरभ्यत इत्युच्यते । एवं शारीरवाचिकमानसिकभेदात्त्रिविधमपि कर्म अधिष्ठानादिपञ्चकनिर्वृत्तं भवतीति न कोऽपि दोष इत्यर्थः । न केवलं त्रिविधस्य कर्मणः करणकाल एव शरीरादित्रिकप्राधान्यं, किंतु फलकालेऽपीत्याह—फलकालेऽपीति, तत्प्रधानैरिति । प्रधानैस्तैस्त्रिभिरित्यर्थः । वागुपलक्षितैरिन्द्रियैश्शरीरेण मनसा च शब्दादिसुखादिविषयानुभवादिति भावः । तस्माच्छरीरादित्रयनिर्वर्त्यस्यापि कर्मणः पञ्चापि पूर्वोक्ता हेतवो भवन्त्येवेत्याह—पञ्चानामिति । न विरुध्यते विरुद्धं न भवति । अधिष्ठानादिपञ्चकहेतुकमपि कर्म शरीरादिप्रधानतया शारीरादिभेदेन त्रिविधं भवतीति न कोऽपि विरोध इति भावः ॥१५॥

तत्रेति । एवं सति तत्र केवलमात्मानमकृतबुद्धित्वाद्यः कर्तारं पश्यति दुर्मतिस्स न पश्यति । कर्मणि निर्वर्त्ये सतीत्यन्वयः । दुर्मतित्वस्य हेतुत्वेनेति । आत्मनि कर्तृत्वदर्शनं दुर्मतित्वं- दुष्टबुद्धिर्हि अकर्तर्यात्मनि कर्तृत्वदर्शनम् । एवंविधदर्शनस्य दुष्टत्वं प्रति हेतुस्तु अधिष्ठानादिपञ्चकस्य कर्तृत्वमेव । अधिष्ठानादिपञ्चकं कर्त्रित्यविद्वान्हि कर्ताहमिति पश्यति । तस्मादधिष्ठानादिपञ्चके कर्तरि सति तत्तथाऽगृहीत्वा य आत्मानं कर्तारं पश्यति स दुर्मतिरेवेति दुर्मतित्वस्य हेतुभूतमेवं सतीति वाक्यम् ।

तत्रेति प्रकृतेन सम्बध्यत इत्युक्तं, तदेवाह—तेष्विति । प्रकृतेष्वधिष्ठानादिष्वित्यर्थः । आत्मनोऽनन्यतमत्वेनेति पदद्वयमध्याहर्तव्यं मूले इत्यभिप्रेत्य तथैवाध्याहृत्याह—आत्मन इति ।

नाविद्यया परिकल्पितैः क्रियमाणस्य कर्मणः 'अहमेव क'र्तेति कर्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान्। कस्मात् ? वेदान्ताचार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वात्, योऽपि देहादिव्यतिरिक्तात्मवादी आत्मानमेव केवलं कर्तारं पश्यति, असावप्यकृतबुद्धिरेव। अतोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्मणो वेत्यर्थः। अतो दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः। स पश्यन्नपि न पश्यति; यथा तैमिरिकोऽनेकं चन्द्रं, यथा वाभ्रेषु धावत्सु चन्द्रं धावन्तं, यथा वा वाहने उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तम् ॥१६॥

---

कथमात्मानं कर्तारं पश्यतीत्यत आह—**अहमेव कर्तेति**। कस्य कर्तेत्यत आह—**कर्मण इति**। कीदृशस्य कर्मणोऽत आह अविद्ययाऽऽत्मत्वेन परिकल्पितैस्तैरधिष्ठानादिभिः पञ्चभिः—**क्रियमाणस्येति**। शुद्धमविक्रियमित्यर्थः। ततश्च कर्तृत्वविकारस्तत्प्रयुक्तभोक्तृत्वविकारश्च नात्मनस्सम्भवतीति भावः। कस्मादयमज्ञः केवलमात्मानं कर्तारं पश्यतीति पृच्छति—**कस्मादिति**। उत्तरयति—**अकृतबुद्धित्वादिति**। अकृताऽसंस्कृता बुद्धिर्यस्य तत्त्वात्। कैरसंस्कृतेत्यत आह—**वेदान्तेति**। वेदान्तशास्त्रमाचार्योपदेशो न्यायश्चेत्येतैस्त्रिभिः, नतु तर्कव्याकरणादिभिरिति भावः।

ननु ये देहाद्यात्मवादिनो बौद्धादयस्ते आत्मानं कर्तारं पश्यन्तु नाम, कथं पुनरास्तिका वैदिकादयोऽत आह—**योऽपीति**। देहादिव्यतिरिक्तात्मवादी योऽप्यास्तिको वैदिकादिस्सोपि केवलमात्मानं कर्तारं पश्यत्येव। तस्मादसावपि देहादिव्यतिरिक्तः कर्ताऽहमिति ज्ञानवानपीत्यर्थः। अकृतबुद्धिरेवेति। देहादिविलक्षणा कर्त्रभोक्त्रात्मज्ञानाभावादिति भावः। किं न पश्यतीत्यत आह—**आत्मनस्तत्त्वमिति**। अर्थान्तरमाह—**कर्मणो वेति**। कर्मणस्तत्त्वं वेत्यर्थः।

यद्वा वाशब्दस्समुच्चयार्थः। आत्मनः कर्मणश्च तत्त्वं न वेत्तीत्यर्थः। आत्मनस्तत्त्वमविक्रियत्वं, कर्मणस्तत्त्वं त्वधिष्ठानादिपञ्चकनिर्वर्त्यत्वमिति विवेकः। **अत इति**। अतत्त्ववित्त्वादित्यर्थः। दुष्टा मतिर्यस्य स दुर्मतिः। दुष्टशब्दार्थमाह—**कुत्सितेति**। फलितमाह—**विपरीतेति**। कुतोऽस्य मतेरहं कर्तेत्येवंरूपाया दुष्टत्वमत आह—**अजस्रमिति**। जननमरणप्रतिपत्तिस्संसारः। ननु पश्यन्नपि न पश्यतीति कथं विरुद्धमुच्यतेऽत आह—**यथेति**। तैमिरिकः तिमिरदोषदूषितनेत्र एकमेव चन्द्रमनेकचन्द्रत्वेन यथा पश्यन्नपि न पश्यतीत्युच्यते तद्वत्। यद्वा अकर्तारमात्मानं कुतः कर्तारं पश्यतीत्यत आह—**तैमिरिक इति**। अविद्याहतबुद्धिरयमकर्तारमप्यात्मानं कर्तारं पश्यति, यथा तैमिरिक एकमपि चन्द्रमनेकं पश्यति तद्वदित्यर्थः।

ननु एकस्यैवात्मन अनेकत्वेन ग्रहणे भवतु स दृष्टान्तः; नत्विहेतिचेत्, मैवम्—यथाविवक्षितार्थस्यान्यथा ग्रहणांशे दृष्टान्तत्वात्तस्य। योग्यमेव दृष्टान्तान्तरमाह—**यथा वेति**। अभ्रेषु धावत्सु सत्स्वधावन्तमपि चन्द्रं धावन्तं यथा पश्यति, तथाऽधिष्ठानादिषु कर्माणि कुर्वत्सु सत्स्वकुर्वाणमप्यात्मानं कर्तारं पश्यतीति।

ननु नायमपि दृष्टान्तस्समीचीनः, परस्मिन् परकार्यदर्शनं दृष्टान्तार्थः, आत्मन्येव परकार्यदर्शनं दार्ष्टान्तिकार्थ इति भेदादिति चेन्नैवम्—अक्रिये सक्रियत्वदर्शनस्यैवेह साम्यत्वेन विवक्षितत्वात् । अयमेव दृष्टान्तान्तरमाह—यथेति । वाहने शिबिकादावुपविष्टः पुरुषोऽन्येषु शिबिकावाहिषु धावत्सु सत्स्वात्मानमेव धावन्तं पश्यति । एवमन्येषु कुर्वत्सु सत्स्वात्मानमकर्तारमपि कर्तारं पश्यति । य एवं पश्यति स विपरीतबुद्धिरेव । यथावस्थितार्थादर्शनान्मिथ्यार्थदर्शनाच्चेति नास्य दुर्मतेस्सर्वकर्मत्यागस्सम्भवति । ननु तत्रेति निर्धारणे सप्तमी । ततश्च तत्र तेषां मध्ये आत्मानं केवलमात्मानमेव यः कर्तारं पश्यति स दुर्मतिः । अधिष्ठानादिपञ्चकस्य कर्मनिर्वर्तकत्वेनात्मन एकस्यैव कर्तृत्वानुपपत्तेः । न चाधिष्ठानादिष्वात्माऽनुक्त इति वाच्यं, कर्तेत्यनेनोक्तत्वात् । 'कर्ता शास्त्रार्थवत्त्वा'दिति ह्यात्मनः कर्तृत्वं स्थापितं सूत्रकारैरिति द्वैतिनः पूर्वपक्षयन्ति ।

अत्रोच्यते—यदि कर्तेत्यनेन जीवात्मोच्यते तर्हि जीवात्मानं कर्तारं यः पश्यति स सुमतिरेवेति कथं दुर्मतित्वं तस्य ? न चात्मानमेकमेव यः कर्तारं पश्यति स दुर्मतिः; अधिष्ठानादिपञ्चकस्यापि कर्तृत्वेन दर्शनीयत्वादिति वाच्यं, पूर्वं जीवस्यैव कर्तृत्वमुक्तं, न त्वधिष्ठानादेरिति । यद्यधिष्ठानादयः पञ्चापि कर्तारस्स्युस्तर्हि 'अधिष्ठानं तथा कर्ता करणं' चेति कर्तृशब्देन कथं जीवस्यैव ग्रहणं स्यात् ? कथं वा सर्वसामान्येन कर्तृत्वेन तस्य निर्देशस्स्यात् ? अधिष्ठानं तथा जीवः करणं चेति हि नोक्तं व्यासेन । अधिष्ठानादयो हि कर्तुर्जीवस्य साहाय्यकारिण एव । यथा वास्यादयस्तक्ष्णस्य । तस्मादात्मैक एव कर्तेति कर्ताहमिति यः पश्यति स सुमतिरेव ।

नचाधिष्ठानादिसहित एवात्मा कर्ता, नतु केवल इति कृत्वा केवलमात्मानं कर्तारं यः पश्यति स दुर्मतिरेवेति वाच्यं, तथासत्यकर्तृत्वस्यैव प्राप्तत्वादात्मनः । नच शरीराधिष्ठातृत्वरूपं कर्तृत्वं केवलस्योऽप्यस्तीति नाकर्ताऽऽत्मेति वाच्यं, तथासति केवलमात्मानं यः कर्तारं पश्यति स सुमतिरेव । अधिष्ठानादिसाहाय्यकं विनापि कर्तृत्वस्य सत्त्वादात्मनः । नच शरीराधिष्ठानकर्तृत्वादात्मा कर्तेति निर्दिष्टः । गमनादिकं कर्म तु नात्मा केवलो निर्वर्तयितुमीष्टे- अत उक्तं शारीरादिकर्मत्रये यः केवलमात्मानं कर्तारं पश्यति स दुर्मतिरिति वाच्यम् ।

किमयं दुर्मतिः क्रियमाणं कर्म शारीरं वाचिकं मानसिकं वेति वेद उत न ? आद्ये- शारीरमिदं कर्म शरीरप्रधानमिति जानन् कथमात्मानं शरीरसहायरहितं केवलं कर्तारं पश्येत् ? एवं वाचिकं मानसिकं चेन्द्रियप्रधानं मनःप्रधानमिति जानन् कथमात्मानमिन्द्रियमनस्सहायरहितं कर्तारं पश्येत् ? न कथमपि । द्वितीये- शरीरवाङ्मनांस्येवात्मत्वेन स वेदेति कथं शरीरादिविलक्षणे आत्मनि कर्तृत्वानुसन्धानं तस्य ? तस्मादहं कर्तेति यः प्रत्येति स यदि बौद्धादिर्नास्तिकस्तर्हि देहादिसङ्घातात्माभिमानितेन सङ्घातमेव कर्तारं पश्यति- न केवलमात्मानम् । स यद्यास्तिकस्तर्हि देहादिविलक्षणमात्मानं कर्तारं जानन्नपि न केवलमात्मानं कर्तारं जानाति, किंतु मनइन्द्रियादेस्सहैवमे।। स अयं कर्ता मन-

इन्द्रियादीनि करणानि शरीरेण मनसा वाचा चेदं करोमीति मन्यते । तस्मान्न सिध्येदेव तव मते दुर्मतिः । य आत्मानं केवलं कर्तारं पश्यत्यतो ऽयर्थ एव स्यात्सर्वोऽप्ययं श्लोकस्तव मते इत्यहो ! मूलच्छेदी तव पाण्डित्यप्रकर्षः !

यत्तु रामानुजः—एवं वस्तुतः परमात्मानुमतिपूर्वके जीवात्मनः कर्तृत्वे सति तत्र तत्र कर्मणि केवलमात्मानमेव यः कर्तारं पश्यति स दुर्मतिरिति, तत्तुच्छम्—पूर्वोक्तार्थपरामर्शिना एवंशब्देन वस्तुत इत्याद्यर्थप्रतिपादनासम्भवात् । नहि सोऽर्थः पूर्वमुक्तः । नच 'दैवं चैवात्र पञ्चम'मित्यनेनोक्त इति वाच्यं, 'पञ्चैते तस्य हेतव' इत्युक्तत्वाद्दैवस्येश्वरस्य, कर्तुर्जीवस्य च पञ्चकान्तःपातित्वेन कर्महेतुत्वांशेऽविशेषात् । परमात्मानुमत्यापि जीवात्मन एकस्यैव कर्तृत्वेन तद्ज्ञानस्यादुष्टत्वाच्च । कथमन्यथा 'अधिष्ठानं तथा कर्ते'ति कर्तृशब्देन जीवग्रहणं स्यात् ? नच केवलमात्मानं कर्तारं पश्यतीत्यस्य परमात्मानुमतिं विनापि जीवं कर्तारं पश्यतीत्यर्थ इति वाच्यं, केवलशब्दादेतादृशार्थालाभात् । नच केवलं प्रेरकेश्वररहितमर्थादीश्वरप्रेरणरहितमिति वाच्यं, ईश्वरप्रेरितोऽहमिदं करोमीति जानन्नपि तत्फलमवश्यमनुभवेदेवेति किं फलं तद्ज्ञानस्य ? येन तद्ज्ञानरहितो दुर्मतिस्स्यात् । ईश्वरमभ्युपगच्छन्तस्सर्वेऽप्यास्तिकाः स्वस्येश्वरप्रेरणं जानीयुरेवेति किं फलं तत्प्रतिपादनस्येह वेदान्तशास्त्रे ? मोक्षाय हि वेदान्तशास्त्रं प्रवर्तितमिदमीश्वरेण । नहि स्वस्येश्वरप्रेरणज्ञानात्कस्यापि मोक्षः, नापि वैदिकैरविदितोऽयमर्थः । येनाज्ञातार्थज्ञापनं फलं स्यात् ।

नच नास्तिकस्य दुर्मतित्वमिहोच्यत इति वाच्यं, नास्तिको हि देहाद्यतिरिक्तं कर्तारमात्मानं न वेत्ति । येनेह स निन्द्येत । किंच यः परमात्मानुमत्या कर्म करोतीत्युच्यते स जीवः किं वस्तुतः कर्ता उतोदासीनोऽकर्ता ? आद्ये- किं परानुमत्या तस्य ? द्वितीये- कथमकर्तुर्वस्तुतः कर्तृत्वम् ! नह्यचल आकाश ईश्वरानुमत्यापि चलति । नच वस्तुतः कर्ता सन्नपि जीवस्तत्तत्कर्मविशेषे ईश्वरप्रेरितस्सन्नेव प्रवर्तते- राजचोदितभृत्यवदिति वाच्यं, तथासति परमात्मानुमतिपूर्वकं जीवात्मनः कर्तृत्वमिति वचनस्यायुक्तत्वात् । स्वाभाविकमेव हि जीवात्मनः तत्तत्कर्मकर्तृत्वमिति तद्वचनस्यार्थ इति वाच्यं, धर्माधर्मसंस्कारप्रयुक्तत्वात्तत्तत्कर्मकर्तृत्वस्य जीवात्मनः । नहि साक्षिभूतस्येश्वरस्यानुमतिरननुमतिर्वा कल्पयितुं शक्या । तथासति विकारित्वापत्तेः । साक्षित्वस्य निर्विकारस्वरूपत्वात् । हिंसादिकर्मसु प्रवर्तनोन्मुखस्य जीवस्यानुमतिप्रदानेनेश्वरस्य नैर्घृण्यादिदोषप्रसङ्गाच्च । नच प्राचीनेषु कर्मसु जीवं तत्र तत्र प्रेरयत्सु सत्सु ईश्वरोऽनुमन्यत इतीश्वरानुमत्यैव कर्मणां प्रेरकत्वमिति वाच्यं, ईश्वरानुमत्यभावे कर्मणामप्रेरकत्वप्रसङ्गेन तत्तद्दुष्टकर्मप्रेरकत्वप्रसङ्गेन तत्तद्दुष्टकर्मप्रेरकत्वरूपनैर्घृण्यस्य पुनरपीश्वरे प्रसङ्गात् । नच जडानां कर्मणां प्रेरकत्वासम्भवात्तत्तत्कर्मानुगुण्येनेश्वर एव प्रेरयतीति वाच्यं, जडाया अप्ययस्कान्तशिलाया लोहप्रेरणदर्शनात् । ईश्वरस्यापि करणरहितस्य राजभृत्यादिवत्प्रेरणासम्भवाच्च ।

तस्मादीश्वरे साक्षिभूते सति तत्तत्कर्माण्येव तं तं तत्र तत्र प्रेरयन्ति । तच्च प्रेरणं साक्षिण्यारोपितमज्ञानाद्देवारोपणमन्त्र्यादिभिर्ब्राह्मणेनाप्यनुवदितम् । कथमन्यथा निर्विकारस्येश्वरस्य साक्षिणः प्रेर-

कः पुनस्सुमतिर्यस्सम्यक्पश्यतीत्युच्यते—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान्न हन्ति न निबध्यते ॥१७॥

यस्येति । यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवति, अहंकृतः 'अहं कर्ते'त्येवंलक्षणो भावो भावनाप्रत्ययः, एत एव पञ्चाधिष्ठानादयोऽविद्ययाऽऽत्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूतः- 'अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरा-

---

त्परतः परः' इति श्रुतेः केवलरूपो विकारस्स्यात्? एवं सति योऽहं कर्तेति मन्यते स दुर्मतिः । यः पुनरीश्वरप्रेरितोऽहं कर्तेति मन्यते सोऽतीव दुर्मतिरिति सिद्धम् । ईश्वरेपि प्रेरकत्वविकारस्यानेनारोपितत्वात् । अतः कथमुच्यते? य ईश्वरानुमत्याऽऽत्मानं कर्तारं पश्यति स पश्यतीति । तस्माच्छङ्करभगवत्पादोक्तार्थ एवानवद्यः ।

ननु आत्मनोऽनन्यतमत्वेनेति मूलाद्बहिःपदकल्पनं तन्मतेप्ययुक्तमेवेति वाच्यं, शास्त्राद्यविरोधेन तत्कल्पनस्य युक्तत्वात् । यद्वा तत्रैवंसतीति मूलान्वयः । तत्र प्रकृते अधिष्ठानादिपञ्चके एवं सति पूर्वोक्तविधया सर्वकर्मकारणे सतीति । अथवा तत्र प्रकृते शारीरादिभेदभिन्ने सर्वस्मिन्कर्मण्येवंसति पञ्चभिर्हेतुभिर्निर्वर्त्ये सतीत्यर्थः । आत्मकर्तृत्वदर्शनस्य दुष्टत्वे हेतुकथनं तेष्वात्मनोऽनन्यतमत्वेनेति । यद्यधिष्ठानादिष्वन्यतमस्स्यादात्मा तर्हि तस्य कर्तृत्वदर्शनं युक्तमेव स्यान्नतु तथास्ति । अधिष्ठानादिष्वन्यतमत्वेनात्मा हि न निर्दिष्टः । अत एवात्मा केवलश्शुद्धः । नच कर्तेत्यनेनात्मा तेषु निर्दिष्ट इति वाच्यं, विज्ञानमयकोशस्योपाधिलक्षणस्य तत्र कर्तृत्वेन निर्देशात् । नच 'कर्ता शास्त्रार्थवत्त्वा'दित्यधिकरणविरोधः । अहङ्कारतादात्म्याध्यासेन कर्तेति निर्दिष्टत्वात्तत्र । कथमन्यथा 'साक्षी चेता केवलो निर्गुणश्च', निष्कलं निष्क्रियं शान्तम्', 'अविकार्योऽयमुच्यत' इत्यादिश्रुतिस्मृतिविरुद्धस्यैतात्मनः कर्तृत्वं परानुमतिपूर्वकं कर्मचोदनपूर्वकं वेति संक्षेपः ॥१६॥

यस्येति । यस्याहंकृतो भावो नास्ति, यस्य बुद्धिर्न लिप्यते स इमान्हत्वापि न हन्ति न निबध्यते । अहंकृतभावाभावे हेतुप्रदर्शनाय यस्येत्येतद्विशिनष्टि—शास्त्रेति । अकृतबुद्धिर्दुर्मतिरिति विशेषकत्वात्कृतबुद्धिस्सुमतिर्यच्छब्दार्थ इति भावः । प्रत्ययो ज्ञानं न भवति । अहं कर्तेति यो न मन्यतेीत्यर्थः । तर्हि कः प्रत्ययस्तस्य भवतीत्यत आह—एत एवेति । यद्वाऽहं कर्तेति प्रत्ययः कुतोऽस्य न भवतीत्यत आह—एत एवेति ।

अथ वाऽहं कर्तेति प्रत्ययाभावमेवोपपादयति—एत एवेति । अविद्ययाऽऽत्मनि कल्पिता एते पूर्वोक्ता अधिष्ठानादयः पञ्चैव सर्वकर्मणां कर्तारो भवन्ति । हेतुत्वादिति भावः । अहं कर्ता न भवामि यस्मादहं तद्व्यापाराणामधिष्ठानादिकर्मणां साक्षिभूतः । नहि कर्तृव्यापारस्साक्षिणस्सम्भवतीति भावः । उपाध्यभावाच्च नाहं कर्तेत्याह—अप्राण इति । प्राणरहितो मनश्शून्यश्च, उपलक्षणमिद-

त्परतः परः, केवलोऽविक्रिय' इत्येवं पश्यतीत्येतत्। बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यते नानुशयनीभवती 'इदमहमकार्षं तेनाऽहं नरकं गमिष्या'मीत्येवं यस्य बुद्धिर्न लिप्यते स सुमतिः, स पश्यति। हत्वापि स इमांल्लोकान् सर्वानिमान्प्राणिन इत्यर्थः। न हन्ति हननक्रियां न करोति, न निबध्यते नापि तत्कार्येणाधर्मफलेन सम्बध्यते।

---

मिन्द्रियादिराहित्यस्य। अत एव शुभ्रः। परतः कारणभूतादक्षरात्प्रकृतेः परो विलक्षणः। अत एव केवलः। अत एवाविक्रियश्च भवामीत्येवं पश्यतीत्येतज्जानातीति यावत्। यस्य बुद्धिरित्यात्मबुद्ध्योः कस्सम्बन्धोऽत आह—उपाधिभूतेति। नानुशयनीभवति न तप्यत इत्यर्थः। तापप्रकारमेव दर्शयति—इदमिति। बुद्धिर्देहादिव्यतिरिक्तात्मदर्शित्वान्नैवं तप्यत इत्यर्थः।

नन्वनात्मनो मास्तु लेपः कथं बुद्धेरपि लेपाभावस्सम्भवति? कर्तृत्वाद्भोक्तृत्वाच्च बुद्धेरिति चेन्मैवम्—संस्कृता हि बुद्धिरात्मानमविक्रियं पश्यन्ती स्वयमपि तत्तादात्म्याध्यासेनाविक्रियैव वर्तते, नतु देहादितादात्म्याध्यासेनाहं करोमि भुञ्जामीति मन्यमाना सती विक्रियते। तस्माद्युक्त एव बुद्धेर्लेपाभावः। योऽहं करोमीति मन्यते तस्यैव बुद्धेर्लेपः। यो नाहं करोमीति मन्यते तस्य बुद्धिर्निर्लेपा स्वच्छैव परिशुद्धत्वादिति बोध्यम्।

वस्तुतस्तु—यो नाहं करोमीति मन्यते स एव नाहं साध्वकरवमसाध्वेवाहमकरवं, ततो नरकं गमिष्यामीत्येवं न मन्यते। स चैवं मन्यमानः पदार्थो नात्मा- तस्य वृत्तिज्ञानायोगात्। किंतु बुद्धिरेव। इयं च बुद्धिः कदाचिदात्मतादात्म्याध्यासान्निर्लेपोऽहमिति मन्यते। कदाचित्पुनर्मम बुद्धिर्निर्लेपेति मन्यते। उक्तं हि- 'अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्वि'धेति। तस्मात्कर्तृभावापन्नस्य विज्ञानमयशब्दवाच्यस्यान्तःकरणस्य बुद्धिपर्यायस्य शास्त्रादिवशान्नाहं करोमीति प्रत्ययोत्पत्तिः। तस्यैव करणभावापन्नस्य मनोमयशब्दवाच्यस्यान्तःकरणस्य तापाभावश्चेत्युपपन्नम्।

ततश्चाहं नरकं गमिष्यामीति तापाभावो बुद्धेरितिवचनात्। स तापोऽपि बुद्धेरेव न त्वात्मन इति सूचितं। तेन चाविक्रियत्वमात्मनः फलितम्। निरहङ्कारबुद्धितादात्म्याध्यासाद्यस्य नाहंकृतो भाव इत्युक्तम्। बुद्धावात्मीयत्वाध्यासात्तु यस्य बुद्धिर्न लिप्यत इत्युक्तमिति विवेकः। स इति। यस्यान्तःकरणं निरहङ्कारं निर्लेपं च स इत्यर्थः। नाहं करोमीति, नाहं लिप्त इति च मन्यमानेनान्तःकरणेन तादात्म्याध्यासं प्रपन्नो यस्स विद्वानिति यावत्। परिशुद्धान्तःकरणतादात्म्याध्यासं प्रपद्य नाहं कर्तेति, मम बुद्धिर्न लिप्तेति च यः प्रत्येति स विद्वानिति भावः।

यद्वा यस्योपाधिभूता बुद्धिरहं करोमीति, अहं नरकं गमिष्यामीति च न मन्यते न तप्यते च स आत्मेत्यर्थः। अथ वा यस्यान्तःकरणावच्छिन्नस्य प्रमातुरहं कर्तेति न प्रत्ययः, नाप्यन्तःकरणस्यानुशयस्स प्रमातेत्यर्थः। न स पश्यति दुर्मतिरिति पूर्वमुक्तत्वादाह—स सुमतिस्स पश्यति चेति। स एव सम्यग्दर्शीत्यर्थः। लोक्यन्ते दृश्यन्त इति लोकाः प्राणिनः। तत्कार्येण प्राणिहनन-

ननु हत्वापि न हन्तीति विप्रतिषिद्धमुच्यते- यद्यपि स्तुतिः। नैष दोषः—लौकिक-पारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहाद्यात्मबुद्ध्या 'हन्ताह'मिति लौकिकीं दृष्टिमाश्रित्य 'हत्वा'पीत्याह। यथादर्शितां पारमार्थिकदृष्टिमाश्रित्य 'न हन्ति न निबध्यत' इत्येतदुभय-मुपपद्यत एव।

---

कार्येणाधर्मफलेन नरकदुःखेन न सम्बध्यते सम्बद्धो युक्तो न भवति। नास्य हननक्रियासम्बन्धः, नापि तत्फलसम्बन्ध इत्यर्थः। 'एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन! पापमेवाश्रयेदस्मान्हत्वैता-नाततायिनः॥ स्वजनं हि कथं हत्वा सुखिनस्स्याम माधव!' इत्यर्जुनेन प्रथममुक्तत्वात्तत्प्रतिक्षेपायोक्तं भगवता—'हत्वापि स इमांल्लोकान्न हन्ति न निबध्यत' इति।

ननु हत्वापि न हन्तीत्येतत्स्तुतिवचनमपि विरुद्धमेवेत्याक्षिपति—नन्विति। परिहरति—नैति। एष हन्तुरपि हननाभावप्रतिपादनं न दोषः। कुतः? लौकिकी च पारमार्थिकी च लौकिक-पारमार्थिक्यौ, ते च ते दृष्टी दर्शने तयोर्लौकिकपारमार्थिकदृष्ट्योरपेक्षया तदुपपत्तेः। हत्वापि न हन्तीति-वचनस्योपपन्नत्वात्। तदेव विवृणोति—देहादीति। देहाद्यात्मा बुद्धिप्रयुक्तां हन्ताहमित्याकारिकां लौकिकदृष्टिं व्यवहारमिति यावत्। आश्रित्य हत्वापीत्याह भगवानिति शेषः। यथादर्शितां पूर्वं दर्शितां पारमार्थिकदृष्टिं सम्यग्दर्शनमाश्रित्य न हन्ति न निबध्यत इत्याह।

तस्मादेतदुभयमप्युपपद्यत एव। देहेन्द्रियादिषु शत्रुहननक्रियां निर्वर्तयत्सु सत्सु गुणा एव हननक्रियाकर्तारो न त्वहमित्यनुसन्धानाद्विदुषो हननक्रियातत्फलाभ्यां न कोऽपि सम्बन्धगन्धः। परं तु प्राकृतजनास्शत्रून् घ्नन्तं देहेन्द्रियादिसङ्घातं विदुषो दृष्ट्वा विद्वानयं शत्रून् हन्तीति मन्यन्तेऽविवेकात्। तेषां दृष्टिमाश्रित्य हत्वापि स इमान् लोकानित्युक्तम्। विदुषो दृष्टिं पारमार्थिकीमाश्रित्य तु न हन्ति न निबध्यत इत्युक्तं श्रीकृष्णेनेति भावः। हत्वापीत्यनेनापिशब्देन किंपुनर्भुक्त्वा गत्वा यष्ट्वा दृष्ट्वा वा न भुंक्ते न गच्छति न यजते न पश्यतीत्यादिकं वक्तव्यमिति सूच्यते। ततश्च विदुषस्सर्व-कर्मसन्न्यासस्तत्फलासम्बन्धश्च सिद्धः। अत एव 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत' इत्यत्र देहभृताऽज्ञेनेति व्याख्यातमाचार्यैः। प्रकृतश्लोकेन विदुषस्सर्वकर्मसन्न्याससम्भवो वक्ष्यत इत्यभिप्रायेण।

ननु विदुषः कर्माधिकार एव नास्तीति पूर्वं प्रतिपादितं तत्र तत्र। कथमिदानीं 'हत्वापि स इमांल्लोका'नित्युच्यत इतिचेन्नैषदोषः—विदुषः कर्मसन्न्यास एवाधिकारो नतु कर्मणीति यदुक्तं तत्सत्यमेव। परं तु 'लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्ह'सीति पूर्वोक्तविधया क्षत्रियस्यार्जुनस्य विदुषोपि जनकादेरिव लोकसंग्रहार्थं कर्मणि प्रवृत्तेरुचितत्वेन हत्वापीत्यादिकमुक्तम्।

अयं भावः—यो देहादिविलक्षणब्रह्मात्मदर्शी विद्वान् स यदि ब्राह्मणस्तर्हि सर्वकर्मसन्न्यास एवाधिकारस्तस्य। 'ब्राह्मणो निर्वेदमाया'दित्यादिश्रुतेः। लोकसंग्रहार्थमपि तेन कर्मसन्न्यासस्यैव कर्तव्यत्वात्। स यदि क्षत्रियादिस्तर्हि लोकसंग्रहार्थं स्वधर्मयुद्धाद्यनुष्ठान एव तस्याधिकारः। अर्जु-नस्य तु क्षत्रियत्वेन विदुषोऽपि युद्ध एवाधिकारः, नतु सन्न्यास इत्यभिप्रेत्य तमुद्दिश्योक्तं—हत्वाऽ-

पीति । त्वं देहेन्द्रियादिषु कर्तृत्वमारोप्य नाहं कर्तेति मन्यमानस्सन् नरकमहं गमिष्यामीति खेदं स्वर्गमहं गमिष्यामीति मोदं च चित्तेऽकुर्वाणस्सन् स्वधर्मत्वेन प्राप्तमिमं सर्वशत्रुसंहारं कुरु। नानेन तव कोऽपि बन्धस्स्यादीश्वरेण मयोक्तश्चायमर्थो नान्यथा भवितुमर्हतीत्यर्जुनंप्रत्युपदेष्टुः कृष्णस्याशयः।

इमान्सर्वान् लोकानित्यस्य च धार्तराष्ट्राद्यानिमान् दृश्यमानान् सर्वान् शत्रूनित्यर्थः। अत्र च सर्वानित्यनेन न केवलं शत्रुहननादेव विदुषस्तव बन्धाभावः। किंतु मित्रादिसर्वप्राणिहननादपि बन्धाभाव एव- अहं कर्तेति प्रत्ययाभावात्। अहं करोमीति प्रत्ययो हि बन्धहेतुः। अन्यथा वासुदेवस्य जनार्दनस्य भूभारापहरणार्थमवतीर्णस्य मम च सर्वजगत्संहारात्सर्वशत्रुसंहारात्पुत्रमित्रादिस्वजनसंहाराच्च करिष्यमाणात्स्याद्धि महाननर्थः। तस्मान्नाहं कर्ता, गुणा एव कर्तार इतीमं विवेकमाश्रित्य यथाहं प्रलयादौ सर्वजगत्संहारादिकं कुर्वन्नपि न तत्फलेन सम्बध्ये। तथा त्वमपीमान् सर्वान् शत्रून् संहर दर्शितविवेकशाली सन्। ततो न त्वं तत्फलेन सम्बध्यसे। यो हि कर्ताहमिति मन्यते स बध्यते तत्फलेन। यो हि नाहं कर्तेति, गुणा एव कर्तार इति च मन्यते स न लिप्यते। कुर्वन्नपि न लिप्यत इति हि पूर्वमेवोक्तम्। तस्माद्विदुषोऽपि तव वासुदेववज्जनकादिवच्च नेदं हननादिकं बन्धकं, नापि हननाद्यभावो मोचकः। हननादिवत्तदभावोऽपि देहाद्याश्रयः कर्मैवेति कर्मण्यकर्मेतिश्लोके स्थापितत्वात्।

कर्मणो बन्धकत्वं हि तवाभिमतम्। तस्मान्न त्वं तूष्णींभावेन कर्मणा मुक्तिं यास्यसि 'नास्त्यकृतः कृतेनेति श्रुतेः। 'न कर्मणा न प्रज'येति श्रुतेश्च। किं तर्हि 'त्यागेनैकेऽमृतत्वमानशु'रिति श्रुतेस्त्यागेनैव तव मोक्षलाभः, पूर्वेषां जनकादीनां त्वदीयानां त्यागेनैव मुक्तत्वात्। सच त्यागो नाहं कर्तेत्यात्मकर्तृत्वपरित्यागरूपो गुणा एव कर्तार इति गुणेषु कर्तृत्वारोपरूपश्च। अयमेव त्यागस्सन्न्यासिनापि क्रियते। मोक्षहेतुश्च साक्षादयमेव; परमार्थसन्न्यासश्चायमेव। कर्मफलत्यागस्तु परंपरया मोक्षसाधनः; तच्च दर्शितं नद्वेष्टीतिश्लोकेन। यश्च मुण्डः काषायाम्बरभाग्दण्डी च स न परमार्थसन्न्यासी- सन्न्यास्यहं भिक्षामटामीत्यहङ्कारसत्त्वादस्य। यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते स सुमतिर्हि परमार्थसन्न्यासी। नच परमहंसपरिव्राजका एव परमार्थसन्न्यासिन इति वाच्यं, लक्ष्मीशगौरीशवागीशादीनामपरमार्थसन्न्यासित्वापत्तेः। तेषामपि परमार्थसन्न्यासस्य स्वीकर्तव्यत्वावशेषत्वेनाकृतकृत्यत्वापत्तेश्च।

तस्माद्ये परमहंसपरिव्राजका निवृत्तिमार्गस्थाः, कर्मण्यनधिकृतास्सनकादयस्ते, ये च सृष्ट्यादिकर्मस्वधिकृता यज्ञादिकर्मसु च, ब्रह्मादयो जनकादयस्ते च विद्वांसः परमार्थसन्न्यासिन एव- अहङ्काराभावस्य परमार्थसन्न्यासलक्षणत्वात्। यज्ञादिकर्मपरित्यागस्तु बाह्यसन्न्यासलक्षणम्। नच सर्वारम्भपरित्यागित्वं गुणातीतलक्षणमिति पूर्वमुक्तमिति वाच्यं, सर्वारम्भेषु देहाद्याश्रयेषु स्वस्य कर्तृत्वानुसन्धानस्यापि सर्वारम्भपरित्यागरूपत्वात्। कथमन्यथा निमेषोन्मेषाद्यारम्भपरित्यागित्वं स्यात्परमहंसपरिव्राजकस्यापि ?

नन्वधिष्ठानादिभिस्सम्भूय करोत्येवात्मा 'कर्तारमात्मानं केवलं' त्विति केवलशब्द-प्रयोगात् । नैष दोषः— आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिस्संहतत्वानुपपत्तेः । विक्रियावतो ह्यन्यैस्संहननं सम्भवति, संहत्य वा कर्तृकं स्यात् । न त्वविक्रियस्यात्मनः केनचित्संहननमस्तीति सम्भूय कर्तृत्वं नोपपद्यते । अतः केवलत्वमात्मनस्स्वाभाविकमिति

---

तस्माद्विदुषो ज्ञाननिष्ठस्य परमहंसपरिव्राजकस्य परमार्थसन्न्यासिनो न कर्माधिकारः । विदुषो ज्ञाननिष्ठस्य गृहस्थस्यापि परमार्थसन्न्यासिनः कर्तृत्वाभिमानपूर्वको न कर्माधिकारः । अत एव हि जनकादिभिः कृतं कर्म न कर्म, वासुदेवकृतसृष्ट्यादिकर्मवदिति पूर्वमुक्तम् । तस्मात्परमार्थसन्न्यास्यपि विद्वान् भवान् यतो न परमहंसपरिव्राजकस्तस्मात् हत्वापीमान् लोकान् न हन्ति न निबध्यते । भो र्व। तस्मात्त्वं निरहङ्कारो निस्तापश्च सन् युध्यस्व । उक्तं हीदं प्रागेव- 'युध्यस्व विगतज्वर' इति ।

एतेन विदुषः कर्माधिकारो नास्तीति कृत्वा कथमुच्यते हत्वापीतीयमाशङ्का समाधापिता । कथम्? विदुषः परमार्थसन्न्यासिनोऽप्यपरमहंसपरिव्राजकस्य स्वकर्माधिकारोऽस्तीति । विदुषः कर्तृत्वाभिमानपूर्वक एव कर्माधिकारो नास्ति, निरहङ्कारपूर्वकस्तु कर्माधिकारोऽस्तीति च विदुषा क्रियमाणं कर्माकर्मैवेति न तस्य कर्माधिकार इति च प्रोक्तत्वादिति संक्षेपः ।

ननु कर्तारमात्मानं केवलं तु य इत्यस्य केवलमधिष्ठानादिभिरसंहतमात्मानं यः कर्तारं पश्यतीत्यर्थः । तथा च केवलात्मनोऽकर्तृत्वेऽपि अधिष्ठानादिसंहतात्मनः कर्तृत्वमस्त्येव । ततश्च संहतोऽयमात्मा हन्त्येवेति कथमुक्तं ? न हन्तीति भगवानित्याक्षिपति—नन्विति । परिहरति—नेति । एष संहतस्यात्मनः कर्तुर्हननक्रियाकर्तृत्वाभावप्रतिपादनरूपो दोषो नास्ति । कुतः? आत्मन इति । आत्मनोऽधिष्ठानादिभिस्सह संहतत्वानुपपत्तेर्मिलितत्वायोगात् । तत्र हेतुमाह—अविक्रियस्वभावत्वेनेति । निर्विकारत्वेनेत्यर्थः ।

हेतुमेव व्यतिरेकमुखेनोपपादयति—विक्रियेति । हि यस्मादित्यर्थः । प्रसिद्धौ वा हिशब्दः । विक्रियावतस्सविकारस्य वस्तुन अन्यैस्सह संहननं सम्भवति । संहत्य वा कर्तृत्वं सम्भवति विक्रियावत इति । सावयवस्य सविक्रियत्वं, सविक्रियस्य संहतत्वं, संहतस्य च कर्तृत्वं प्रसिद्धं सम्भवि च । बहूनां संहतानां देहानां स्थूलोपलोत्क्षेपणादिकार्यकर्तृत्वस्य बहूनां संहतानां सूक्ष्ममृदवयवानां घटीभूतानामुदकाहरणकर्तृत्वस्य च दर्शनात् । बहूनां तन्तूनां पटात्मना संहतानां देहावरणशीतवारणादिकार्यकर्तृत्वदर्शनाच्च । तेषां च देहानां रेणूनां तन्तूनां च सविक्रियत्वं सावयवत्वं च प्रसिद्धमिति भावः ।

तर्हि संहननादिकमसम्भवीत्यत आह—न त्वात्मन इति । तत्र हेतुमाह—अविक्रियस्येति । संहननं हि विक्रिया, कथमविक्रियात्मनि तत्सम्भवो न कथमपीति भावः । तन्तवो हि संहतास्सन्तः पटात्मना विक्रियमाणा दृष्टाः । यद्येवमात्मापि संहतस्स्यात्तर्हि तस्यापि केनचिद्रूपेण परिणामस्स्यादिति भावः । इतिहेतोस्संहननासम्भवादित्यर्थः । सम्भूय संहत्य । अत इति । सम्भूय कर्तृत्वानुपपत्ते -

केवलशब्दोऽनुवादमात्रम्। अविक्रियत्वं चात्मनश्श्रुतिस्मृतिन्यायप्रसिद्धं 'अविकार्योऽयमुच्यते', 'गुणैरेव कर्माणि क्रियन्ते', 'शरीरस्थोऽपि कौन्तेय! न करो'तीत्याद्यसकृदुपपादितं गीतास्वेव तावत्। श्रुतिषु च 'ध्यायतीव लेलायती'वेत्येवमाद्यासु। न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः। विक्रियावत्त्वाभ्युपगमेऽप्यात्मनस्स्वकीयैव विक्रिया स्वस्य भवितुमर्हति, नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युः। न हि पारक्य

---

रित्यर्थः। केवलत्वं शुद्धत्वं स्वाभाविकमेवेति, नत्वागन्तुकमित्यर्थः। अधिष्ठानादिभिस्सह सम्भूयमानप्रयुक्तं नेति भावः। यद्यधिष्ठानादिभिस्सहात्मनस्सम्भूय कर्तृत्वं स्यात्तर्हि तन्निरासाय केवलमिति प्रयुज्येत, नतु तदस्तीत्यभिसन्धिः।

नन्वेवं केवलशब्दो व्यर्थोऽत आह—अनुवादमात्रमिति। स्वतस्सिद्धस्वरूपानुवादक इत्यर्थः। केवलो निर्गुणश्चेतिवदिति भावः। नन्वविक्रियत्वमात्मनोऽप्रमाणं येनात्मनस्सम्भूयापि कर्तृत्वं न स्यादत आह—अविक्रियत्वं चेति। स्मृतिप्रसिद्धं दर्शयति—अविकार्य इति। श्रुतिप्रसिद्धिं दर्शयति—ध्यायतीवेति। इवशब्दाद्ध्यानचलनादिविकारा नात्मनस्सन्तीति सूच्यते। न्यायप्रसिद्धिं दर्शयति—निरवयवमिति। आत्मतत्त्वमात्मस्वरूपं चैतन्यमात्मेति यावत्। राजमार्गो घण्टापथः। तद्वन्निरवद्यो महाजनैः क्षुण्णश्चायमर्थ इत्यर्थः। आत्मतत्त्वमविक्रियं निरवयवत्त्वाद्यत्सावयवं तत्सविक्रियं यथा घटः। आत्मतत्त्वमपरतन्त्रमविक्रियत्वाद्यत्सविक्रियं तत्परतन्त्रं यथा घटः। आत्मतत्त्वमपरतन्त्रं निरवयवत्त्वाद्यत्सावयवं तत्परतन्त्रं यथा घट इति च प्रयोगा ऊह्याः।

तुष्यतु दुर्जन इतिन्यायेनाह—विक्रियेति। आत्मनो विक्रियावत्त्वं यद्यभ्युपगम्यते तर्हि तस्य तत्किमात्मनिष्ठैः कर्मभिर्भवत्युताधिष्ठानादिनिष्ठैः? नाद्यः- आत्मनि कर्माभावात्। अधिष्ठानादिपञ्चकं हि कर्म कारणमित्युक्तं, तत्रैवंसतीत्यनेनाकर्तृत्वं ह्यात्मनः प्रतिपादितम्। तस्मादकर्तर्यात्मनि न कर्मसम्भवः। द्वितीयं दूषयति—स्वकीयैवेति। कर्मभिरिति शेषः। न त्वधिष्ठानादिकर्मभिरित्याह—नाधिष्ठानादीनामिति। यद्यधिष्ठानादिकर्माण्यात्मकर्माणि स्युस्तर्ह्यधिष्ठानादिकर्मभिरात्मा विक्रियावान् कर्ता स्यात्, नतु तथा भवतीत्यर्थः।

ननु परकर्म परस्य भवतु, को दोषस्तत्राह—न हीति। परेण कृतं कर्म परस्यागन्तुं नार्हति हि, अन्यथा चैत्रेण कृतस्य कर्मणः फलस्य मैत्रेणानुभवितव्यत्वप्रसङ्गात्। तस्मात्परकीयं धनं यथा चौर्यादिना परं प्रत्यागच्छति तथा न परकीयं कर्मागच्छति। 'सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छ'तीति वचनात्। तत्त्वविदः कर्म तु परं प्रत्यागच्छत्येव- 'सुहृतस्साधुकृत्यां द्विषन्तः पापकृत्या'मिति श्रुतेः। न तदिहोदाहरणमर्हति। 'तद्विद्वान् पुण्यपापे विधूय' इति श्रुत्या विदुषा विधूतस्यैव कर्मणः परं प्रत्यागन्तुकत्वं, नतु परेण कृतस्येति। विद्वद्विधूतस्यैव परेण कृतस्य कर्मणः परं प्रत्यनागन्तुकत्वमिति विवक्षितत्वात्।

कर्म परेणाकृतमागन्तुमर्हति; यत्त्वविद्यया गमितं न तत्तस्य भवति। यथा रजतत्वं न शुक्तिकायाः; यथा वा तलमलिनत्वं बालैर्गमितमविद्यया नाकाशस्य, तथाऽधिष्ठानादिविक्रियापि तेषामेव, नात्मनः। तस्माद्युक्तमुक्तं 'अहंकृतत्वबुद्धिलेपाभावे विद्वान्न हन्ति न निबध्यत' इति। 'नायं हन्ति न हन्यत' इति प्रतिज्ञाय 'न जायत' इत्यादिहेतुवचनेनाविक्रियत्वमात्मन उक्त्वा 'वेदाविनाशिन'मिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा मध्ये प्रसारितां च तत्र तत्र प्रसङ्गं कृत्वेहोपसंहरति शास्त्रार्थपिण्डीकरणाय 'विद्वान्न हन्ति न निबध्यत' इति। एवं च सति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसन्न्यासोपपत्तेस्सन्न्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नम्। तद्विपर्ययाच्चेतरेषां भवतीत्येतच्चापरिहार्यमित्येष गीताशास्त्रार्थ उपसंहृतः। स एष सर्ववेद-

---

ननु परकृतमपि कर्म परस्य भवत्येवाज्ञानात्। अज्ञो हि देहादिकर्तृके कर्मणि स्वस्य कर्तृत्वं पश्यति गन्ताहं श्रोताहमिति। अत आह—यत्त्विति। अविद्यया गमितं प्रापितं तु यत्कर्म परकीयं तत्तस्य स्वकीयं न भवति। अविद्यया आत्मन्यारोपितं देहाद्याश्रयं कर्म नात्माश्रयं भवितुमर्हतीत्यर्थः। तत्र दृष्टान्तमाह—यथेति। शुक्तिकायामविद्ययाध्यस्तं रजतत्वं यथा न शुक्तिकाया धर्मो भवति, तथा आत्मन्यविद्ययाध्यस्तं कर्तृत्वं नात्मन इत्यर्थः। ननु सरूपत्वाच्छुक्तिकायां रजतत्वाध्यासोऽस्तुनाम, कथं नीरूपे आत्मनीत्यत आह—यथा वेति। बालैरविद्यया गमितं तलमलिनत्वं यथा नाकाशस्य भवति तद्वदिति। दार्ष्टान्तिकमाह—तथेति। अधिष्ठानादिगता विक्रिया अधिष्ठानादीनामेव धर्मः, न त्वात्मधर्म इत्यर्थः।

तस्मादिति। स्वगतविकाराभावात्परगतविकारैस्स्वस्य विक्रियावत्त्वाभावाच्चेत्यर्थः। अहंकृतत्व-मिति अहंकर्तेत्यहङ्कारो बुद्धिलेपश्च। तयोरभावे सति विद्वानविक्रियात्मदर्शी। न हन्ति, न निबध्यत इति युक्तमुक्तम्। आत्मनि कर्तृत्वादिविक्रियायोगादिति भावः। पिण्डीकरणं क्रोडीकारः। नायं हन्ति न हन्यत इति यदादौ प्रतिज्ञातं तदिहोपसंहृतं न हन्ति न निबध्यत इति। उपक्रमोपसंहारयोरैकरूप्यस्यावश्यकत्वादिति भावः। 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यत' इत्यत्रायमित्यनेनात्मन उक्तत्वादिह स इत्यनेन विदुष उक्तत्वाच्च विद्वान्प्रमातैव, वस्तुतः प्रत्यगात्मेति सिद्धम्। ततश्च विदुषोऽविक्रियस्यात्मनः कर्माधिकाराभावश्च सिद्धः। एवं च सतीति। विदुषोऽविक्रियात्मत्वेन कर्माधिकाराभावे सतीत्यर्थः। सन्न्यासिनां ज्ञाननिष्ठानां विदुषां देहभृत्त्वाभिमानानुपपत्तौ सत्यामविद्याकृतानामशेषकर्मणां सन्न्यासस्योपपत्तेस्तेषां त्रिविधं कर्मफलं न भवतीत्युपपन्नम्। अत एव- 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचि'दित्युक्तमिति भावः। इतरेषामविदुषां तद्विपर्ययः कर्मसन्न्यासाभावः कर्मफलसम्बन्धश्चेत्यर्थः। भवतीति, एतदिति। उक्तं मतमित्यर्थः। उक्तार्थ इति यावत्। अपरिहार्यं न केनापि परिहर्तुं शक्यम्। स एष इति। विदुषस्सर्वकर्मसन्न्यासोऽविदुषस्तदसम्भवश्चेत्यर्थः। प्रतिपत्तव्यो

वेदान्तार्थसारो निपुणतरमतिभिः पण्डितैर्विचार्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणे विभागेन दर्शितोऽस्माभिश्शास्त्रन्यायानुसारेण ॥१७॥

अथेदानीं कर्मणां प्रवर्तकमुच्यते—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥१८॥

ज्ञानमिति । ज्ञानं ज्ञायतेऽनेनेति सर्वविषयं ज्ञानमविशेषेणोच्यते । तथा ज्ञेयं ज्ञातव्यं, तदपि सामान्येनैव सर्वमुच्यते । तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्त्येतत्त्रयमेषामविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीनां हि त्रयाणां सन्निपाते हानोपादानोपेक्षाप्रयोजनस्सर्वकर्मारम्भस्स्यात् । ततः पञ्चभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यत इत्येत-

---

ज्ञातव्यः । इतिशब्दस्समाप्तौ । ननु न वयं विचारणे क्षमास्त्वमेव ब्रूहीत्यत आह—तत्रतत्रेति । वेदा विनाशिनमित्यादिस्थलेष्वित्यर्थः । विभागेनेति । अङ्गाङ्गविभागपूर्वकमित्यर्थः । न स्वबुद्ध्यनुसारेण दर्शित इत्याह—शास्त्रेति ।

ईश्वर एव करोति, नाहं करोमीति यो मन्यते स सुमतिरिति रामानुजः, तदयुक्तम्—'निष्कलं निष्क्रियं शान्त'मिति श्रुत्युक्ते निर्विकारे ब्रह्मणि कर्तृत्वदर्शनस्य रज्जौ सर्पत्वदर्शनस्येव मिथ्याज्ञानत्वात्तस्य च संसारानिवर्तकत्वात्तत्त्वज्ञानादेव मोक्षसम्भवात्, अविक्रियब्रह्मात्मदर्शनस्यैव तत्त्वज्ञानत्वाच्चेति ॥१७॥

ज्ञानमिति । कर्मचोदना ज्ञानं ज्ञेयं परिज्ञातेति त्रिविधा भवति । कर्मसंग्रहः करणं कर्म कर्तेति त्रिविधो भवति । ज्ञानमिह न चिन्मात्रमित्याह—सर्वविषयमिति । वृत्तिज्ञानमित्यर्थः । तत्तद्विषयाकारपरिणतबुद्धिवृत्त्या हि ते ते विषया घटादयस्सर्वेऽवभास्यन्ते । अविशेषेणेति । ननु पुनरमानित्वमदम्भित्वमित्यादिवद्विशेषेणेत्यर्थः । सामान्येनेति । अविशेषेणेत्यर्थः । सर्वमिति । सर्वविषयजातमित्यर्थः । उपाधिलक्षणोऽन्तःकरणविशिष्टः, अविद्याकल्पितश्चिदाभासश्चोद्यतेऽनयेति चोदना कर्मणां चोदना कर्मचोदना, कर्मप्रवर्तिका ज्ञानादित्रयं कर्मणां प्रवर्तकमित्यर्थः । कथं त्रयस्य प्रवर्तकत्वमत आह—ज्ञानादीनामिति । सन्निपातस्सम्बन्धो मेलनमिति यावत् । हानं त्याग उपादानं स्वीकार उपेक्षा तदुभयाभावेन तूष्णींभावः । दुष्कृतादिहानार्थं सुकृताद्युपादानार्थमीश्वरार्पणबुद्ध्या च केवलं त्रेधा कर्मारभ्यते पुरुषैरिति कर्मारम्भस्य हानादित्रयं प्रयोजनम् ।

यद्वा प्रवृत्तिवन्निवृत्तिरपि कर्मैवेति प्रवृत्तेर्हानोपादाने प्रयोजने निवृत्तेस्तूपेक्षेति । अयं च कर्मारम्भकः पुरुषो जीवः । ज्ञेयं यज्ञादिस्वर्गादिकं शास्त्रादिजन्यज्ञानेन ज्ञात्वा कर्मारभत इति ज्ञानादित्रयसन्निपातः कर्मारम्भहेतुरित्यर्थः । तत इति । तथेत्यर्थः । राशीभूतमिति । कर्तेति शेषः ।

उच्यते—करणं क्रियतेऽनेनेति बाह्यं श्रोत्रादि । अन्तस्स्थं बुद्ध्यादि, कर्मेप्सिततमं कर्तुः क्रियया प्राप्यमाणं, कर्ता करणानां व्यापारयुतोपाधिलक्षण इति त्रिविधस्त्रिप्रकारः कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः, कर्मणस्संग्रहः कर्मसंग्रहः; कर्म एषु हि त्रिषु समवैति, तेनायं त्रिविधः कर्मसंग्रहः ॥१८॥

करणादिषु करणकर्मकर्तृषु । उच्यत इति श्लोकस्योत्तरार्थेनेति शेषः । बाह्यं बहिर्विषयग्रहणसमर्थमित्यर्थः । कर्णशष्कुलीरसनात्वगादिबहिःप्रदेशस्थितमिति वा । अन्तस्स्थं हृत्पुण्डरीकस्थितं सुखाद्यन्तर्विषयग्रहणसमर्थत्वादिति भावः । बुद्ध्यादीत्यादिपदान्मनसो ग्रहणम् । कर्तुरीप्सिततमं कर्मेति पाणिनिना सूत्रितं कर्मेह कर्मशब्देन ग्राह्यमित्याह—कर्मेति । ईप्सिततमशब्दार्थमाह—क्रियया प्राप्यमाणमिति । स्वर्गादिरूपं फलमिति भावः । तद्धि द्वितीयान्तपदवाच्यं, ज्योतिष्टोमेन स्वर्गं गच्छतीति प्रसिद्धेः । कर्ता भोक्ता जीवः । व्यापाराश्रयत्वं कर्तृत्वं, तच्चात्मनि निरवयवे निष्क्रिये न सम्भवतीत्यत आह—करणानां व्यापारयुत इति । करणानां चक्षुरादीनां ये व्यापाराः क्रिया दर्शनादयस्तैर्युतः । जीवस्य स्वतो निर्व्यापारत्वेऽपि स्वाध्यस्तकरणव्यापारैस्सव्यापारत्वमिति भावः । एतेनाविद्यालक्षणमेव कर्तृत्वं जीवस्य, नतु स्वाभाविकमिति स्थितम् ।

इदमेव स्फुटयितुमाह—उपाधिलक्षण इति । उपाधिनाऽन्तःकरणेनाविद्यया वा लक्ष्यते युज्यत इत्युपाधिलक्षणः । उपाधितादात्म्याध्यासमापन्न इत्यर्थः । कथं करणादिषु कर्मणस्संग्रहोऽत्र आह—कर्मेति । समवैति सङ्गच्छते । कर्ता हि किञ्चित्फलमुद्दिश्य करणैः कर्मणि प्रवर्तत इति कर्तृकरणप्राप्यत्रयाधीनसत्ताकं यज्ञादिकर्मेति भावः । तेनेति । कर्मणस्त्रिषु समवायेनेत्यर्थः ।

अत्र ज्ञानं शास्त्रमिति शङ्कराचार्यैरुक्तमिति वेदान्तदेशिको बभ्राम । न ह्याचार्यैर्ज्ञानं शास्त्रमित्युक्तम् । अविवेकिनां ज्ञानमीदृशं दृश्यत इति वक्ष्यमाणानुरोधाद्बुद्धिवृत्तिरेव ज्ञानम् । शास्त्रमपि बुद्धिवृत्तिविषयीकृतमेव सत्करणं भवति, नतु केवलमन्यथा अविद्वानपि पुस्तकेन ज्ञेयं जानीयात् । एवं चक्षुरादयोऽपि स्वद्वारा निर्गतबुद्धिवृत्त्यैव घटादिकमवभासयन्ति, नतु स्वत इति; चक्षुरादेरपि केवलस्य न करणत्वम् । तस्माद्ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानशब्दो बुद्धिवृत्तिमेवाभिधत्ते स्वरसत इति बोध्यम् । नच शास्त्रेण कर्मणश्चोदितत्वाच्चोदनालक्षणोऽर्थो धर्म इति सूत्रात्कर्मचोदनारूपं शास्त्रमेवेह ज्ञानशब्देन ग्राह्यमिति वाच्यं, शास्त्रविषयबुद्धिवृत्त्यैव कर्म चोद्यते, नतु केवलशास्त्रेण ज्ञायमानशास्त्रस्यैव चोदकत्वाभ्युपगमात् । अन्यथा पेटिकास्थमपि शास्त्रं पुरुषं चोदयेत् ।

नन्वेवमिह ज्ञानशब्देन ज्ञायमानशास्त्रमेव गृह्यताम् । तद्धि निषिद्धकर्मणां हाने विहितानामुपादाने निवृत्तौ च पुरुषस्योपकारकं भवति । शास्त्रेण हि विद्वान् वेद्यं विदित्वा विहितं करोति, निषिद्धं त्यजति तूष्णीमास्ते च । तत्र विधिनिषेधबोधकं प्रवृत्तिलक्षणं, शास्त्रमुपेक्षाबोधकं तु निवृत्तिलक्षणं, शास्त्रं प्रवृत्तिवन्निवृत्तिरपि कर्मैवेत्युक्तत्वादिह हानोपादानोपेक्षाप्रयोजनः कर्मारम्भ इत्युक्तं च भाष्यकृता ।

हानोपादानप्रयोजनः प्रवृत्तिकर्मारम्भः, उपेक्षाप्रयोजनो निवृत्तिकर्मारम्भ इति विवेकः। तथाच धर्माधर्मौ ब्रह्म च शास्त्रेण ज्ञायत इति प्रवृत्तिलक्षणं निवृत्तिलक्षणं च शास्त्रं पूर्वोत्तरमीमांसारूपेण द्विविधमिह ज्ञानशब्देनोच्यत इतिचेन्मैवम्—शास्त्रीयकर्मारम्भे भवतु शास्त्रस्य करणत्वं, कथं पुनर्लौकिककर्मारम्भे! नहि प्रकृतकर्मारम्भस्य शास्त्रीयकर्मारम्भपरत्वेन सङ्कोचनं न्याय्यं- सर्वविषयं ज्ञानमिति भाष्यगतसर्वशब्दस्वारस्यभङ्गापत्तेः; तामसादिज्ञानस्याशास्त्रीयत्वाच्च। तस्मादिह ज्ञानशब्देन शास्त्रीयकर्मारम्भहेतुभूतं शास्त्रं न ग्राह्यं; किंतु सर्वकर्मारम्भहेतुभूता बुद्धिवृत्तिरेव ग्राह्या।

ननु ज्ञानं बुद्धिवृत्तिरेवेति कोऽयं नियमः? करणमात्रं ज्ञानशब्देन गृह्यताम्। तथा चान्तःकरणमेकं, बहिःकरणानि पञ्च च श्रोत्रादीनि सुखादिशब्दादिविषयग्रहणसाधनत्वाद्ज्ञानशब्दवाच्यान्येव। एतदभिप्रायेणैव सर्वविषयं ज्ञानमित्युक्तमाचार्यैरितिचेन्मैवम्—सर्वत्रापि विषयग्रहणे बुद्धिवृत्तेरेव करणत्वं, श्रोत्रादीनां तु द्वारत्वमेवेति पूर्वमेवोक्तत्वात्। बुद्धिर्हि चक्षुर्द्वारा निर्गत्य घटादिविषयदेशं गत्वा घटाद्याकारेण परिणमते स एष परिणामो वृत्तिरित्युच्यते। तया च वृत्त्या घटाद्यावरकमज्ञानं नाश्यते; ततः प्रत्यक्षं जायत इति सिद्धान्तात्।

तस्मात्सुखाद्याकारेण शब्दाद्याकारेण वा परिणता बुद्धिवृत्तिरेव करणमिति गृह्यतां लाघवाद्ज्ञानशब्देनेहेति बोध्यम्। अत एव सर्वविषयं ज्ञानमित्युक्तं, नतु सर्वविधं ज्ञानमित्याचार्यैः। न ह्येकस्य चक्षुरादिकरणान्यतमस्य ज्ञानस्य सर्वविषयत्वं सम्भवति- चक्षुषा शब्दादेरग्रहणात्। बुद्धिवृत्त्या तु सर्वं ग्रहीतुं शक्यमिति सर्वविषयं ज्ञानं बुद्धिवृत्तिरेवेत्याचार्याभिमतमिति स्थितम्।

नच करणं कर्म कर्तेतिवचनाद्ज्ञानं करणमेवेति वाच्यं, तथासति श्लोकस्य पूर्वार्धेनोक्तस्यार्थस्यैवोत्तरार्धेन पुनर्वचने पुनरुक्तिदोषप्रसङ्गात्। नच ज्ञेयकर्मणोः परिज्ञातृकर्त्रोश्चैकत्वाद्ज्ञानकरणयोरप्येकत्वेन भाव्यमिति वाच्यं, ज्ञेयकर्मणोरप्येकत्वाभावात्। धर्मब्रह्माद्यात्मकं ज्ञातव्यं, सर्वं हि ज्ञेयशब्दार्थः। तथोक्तमाचार्यैस्तदपि सामान्येन सर्वमुच्यत इति। कर्म तु क्रियया प्राप्यमाणं फलमेव, नतु क्रियामात्रमिति। ज्ञातृकर्त्रोरेकत्वेऽपि भोक्तृत्वकर्तृत्वांशाभ्यां भेद इह विवक्षित इति न परिज्ञातृकर्त्रोरपि पुनरुक्तिः। भोक्ता हि जीवः स्वभोगार्थं कर्म चोदयति। नतु कर्तेति जीवगतं भोक्तृत्वमेव कर्मचोदकं, नतु कर्तृत्वम्। अत एवोक्तमाचार्यैः परिज्ञाता भोक्तेति।

रामानुजस्तु—ज्ञेयं कर्मेति, कर्म यागादिकमिति चोक्तवांस्तन्मते ज्ञेयकर्मणोः पुनरुक्तिर्दुर्वारैव। वक्तव्यस्य फलस्यावचनमपि दोष एव। ननु ज्ञानमिहावगतिरेव, भावप्रत्ययान्तत्वेनैव ज्ञानशब्दस्य प्रसिद्धप्रयोगत्वाल्लोके घटज्ञानं पटज्ञानमिति, नतु ज्ञानकरणं लाक्षणिकत्वापातादितिचेन्मैवम्—असङ्गचिदात्मरूपाया अवगतेर्ज्ञात्रादिसन्निपातायोगान्निर्धर्मकत्वेन कर्मचोदनायोगाच्च। घटज्ञानपटज्ञानादयस्तु सविशेषा ज्ञानाभासा एव, घटाद्याकारबुद्धिवृत्तिजन्यानि हि तानि घटज्ञानादीनि। अत एव तेषां वृत्तिज्ञानत्वेन व्यवहारः। न चेदमेव वृत्तिजन्यं ज्ञानमिह गृह्यतां किमिति वृत्तिरिति वाच्यं,

अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात्सत्त्वरजस्तमोगुणभेदतस्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥१९॥

ज्ञानमिति । ज्ञानं कर्म च, कर्म क्रिया, न कारकं पारिभाषिकमीप्सिततमं कर्म,

---

येनैकं भावमव्ययमीक्षत इति तृतीयान्तयच्छब्देन ज्ञानस्य परामर्शिष्यमाणत्वात्; ईक्षत इत्यवगतेः पृथग्वक्ष्यमाणत्वाच्च । न चानुभवैकवेद्यमितिवदनुभवस्याप्यवगतिं प्रति करणत्वमस्तीति वाच्यं, एकस्यैवानुभवस्य वेदनत्ववेदनकरणत्वयोरयोगात्, अनुभवानेकत्वे मानाभावात् । घटानुभवः पटानुभव इति प्रतीयमानानुभवभेदस्य घटादिविषयगतत्वेनानुभवगतत्वाभावात्, अनुभवैकवेद्यमित्यस्य च शास्त्राद्युपायैरवेद्यमित्यर्थे तात्पर्यात् ।

ननु साक्षिभास्यत्वं सर्वस्य श्रुत्यादिसिद्धं; साक्षिणश्च ज्ञानस्वरूपत्वं तथैव । तथा च साक्षिणा सर्वं भास्यत इत्यस्य ज्ञानेन सर्वं ज्ञायत इत्येवार्थ इति कानुपपत्तिर्ज्ञानस्य तृतीयान्तयच्छब्देन परामर्शेन इति चेदुच्यते—साक्षिणा भास्यत इत्यत्र कर्तरि तृतीया । येनेक्षत इति प्रकृते तु करणे तृतीया । स्वप्रकाशस्यान्यावभासकस्य चानुभवस्य भानकर्तृत्वं स्यादेव, नतु भानकरणत्वमपरतन्त्रत्वादनुभवस्य । करणं हि कर्तृपरतन्त्रम् । नच भानस्वरूपस्य साक्षिणः कथं भानकर्तृत्वमिति वाच्यं, [illegible]ज्ञानात्मकजन्यज्ञान(ज्ञानाभास)कर्तृत्वस्य साक्षिण्युपपत्तेः । साक्षी हि नित्यज्ञानरूपः । न चैवं जन्यज्ञानस्यापि कर्तृत्वं स्यादिति वाच्यं, तस्य जडत्वात् । नच जन्यज्ञानस्य करणत्वे का विप्रतिपत्तिरिति वाच्यं, घटज्ञानस्य पटज्ञानं प्रति करणत्वादर्शनात् । नच सोऽयं देवदत्त इति प्रत्यभिज्ञारूपं ज्ञानं देवदत्तानुभवकरणकमिति वाच्यं, प्रत्यभिज्ञाया ज्ञानत्वाभावात् । सत्यपि तस्मिन् देवदत्तानुभवकरणकत्वं नास्ति, किं त्वनुभवहेतुकत्वमेव । चक्षुरेव तत्रापि करणम् । नहि पूर्वानुभूतं देवदत्तं चक्षुषाऽनीक्ष्य सोऽयं देवदत्त इति प्रत्यभिजानीयात्कोऽपि । तस्मान्नात्र ज्ञानशब्देन जन्यज्ञानं ग्रहीतुमुचितम् ।

यत्तु रामानुजः—कर्तव्यकर्मविषयं ज्ञानं ज्ञानमिति, तत्तुच्छम्—इह ज्ञानशब्देन कर्तव्यकर्मविषयज्ञानस्यैव ग्रहणे येनैकं भावमीक्षत इत्यत्राप्यस्यैव ग्राह्यत्वेनात्मविषयज्ञानस्य वक्ष्यमाणस्य कथं त्रैविध्यान्तःप्रवेशस्स्यात् ? नहि येनैकमितिश्लोके कर्मविषयज्ञानमुच्यते, किं त्वात्मविषयमेव । तस्मात्सर्वविषयं ज्ञानमेवेह ज्ञानशब्देन ग्राह्यम् । तच्च ज्ञानं बुद्धिवृत्तिरूपमेव, नतु नित्यज्ञानरूपं, नापि जन्यज्ञानरूपमिति संक्षेपः ॥१८॥

ज्ञानमिति । गुणसङ्ख्याने ज्ञानं कर्म च कर्ता च त्रिधैव भवतीति प्रोच्यते । तान्यपि त्वं यथावच्छृणु । अथेति । कर्मचोदनाकर्मसंग्रहयोस्त्रैविध्यप्रदर्शनानन्तरमित्यर्थः । क्रिया कर्म, कारकं

कर्ता च निर्वर्तकः क्रियाणां त्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थम्। गुण
भेदतस्सत्त्वादिभेदेनेत्यर्थः। प्रोच्यते कथ्यते गुणसङ्ख्याने कापिले शास्त्रे तदपि गुण
सङ्ख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव। परमार्थब्रह्मात्मैकत्वविषये यद्यपि विरुध्यते
तथापि ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति, तच्छास्त्रमपि वक्ष्यमाणा
स्तुत्यर्थत्वेनोपादीयत इति न विरोधः। यथावद्यथान्यायं यथाशास्त्रं शृणु। तान्यपि ज्ञाना
दीनि तद्भेदजातानि च गुणभेदकृतानि शृणु। वक्ष्यमाणेऽर्थे मनस्समाधिं कुर्वित्यर्थः॥१९

ज्ञानं, फलं तद्भोक्ता, कर्ता तेषां क्रियाकारकफलानाम्। यद्वा फलशब्देन सुखग्रहणम्। सर्वत्र
इत्यनेन तु कर्तृबुद्धिधृतीनां ग्रहणम्। ज्ञानमिति। ज्ञानं ज्ञेयमितिश्लोकोक्तं बुद्धिवृत्तिरूपं ज्ञान
ज्ञानकरणमिह ज्ञानशब्देनोच्यते। करणं कर्मेत्यत्रोक्तं कर्म नेह कर्मशब्देन ग्राह्यं, किंतु कर्मेति
इति समागतकर्मैवेत्याह—कर्मक्रियेति, कारकमिति। द्वितीयाकारकमित्यर्थः। पारिभाषि
मिति। 'कर्तुरीप्सिततमं क'र्मेति व्याकरणपरिभाषासिद्धमित्यर्थः। यश्चोपाधिलक्षणो भोक्ता कर्ता
परिज्ञातेति, कर्तेति च निर्दिष्टः तस्यैव चिदाभासस्येह कर्तृशब्देन ग्रहणमित्याह—कर्ता च
निर्वर्तक इति। कारकव्यापारो हि कर्तृपरतन्त्रः। जीवश्च चक्षुरादिभिर्दर्शनादिक्रिया निर्वर्त
तीति निर्वर्तकः क्रियाणाम्। त्रिधैवेति। सात्त्विकत्वराजसत्वतामसत्वरूपेणेत्यर्थः। गुण
व्यतिरिक्तेति। सात्त्विकत्वादिव्यतिरिक्तेत्यर्थः। गुणानां सङ्ख्यानं यत्र तद्गुणसङ्ख्यानम्। न
कापिलशास्त्रस्य कथं प्रमाणत्वमत आह—तदपीति। एकदेशे विरुद्धमप्यन्यदेशेऽविरुद्धमेव कापिल
मपि शास्त्रं तर्कादिशास्त्रवत्। ततश्चाविरुद्धांशो ग्राह्य एवेति भावः। कापिलोत्तरमीमांसयोर्गुणभोक्तृ
विषयेऽविरोधः। सत्त्वादिगुणविशिष्टबुद्धिभोगस्यात्मन्यारोपादात्मनो भोक्तृत्वमिति सम्प्रतिपन्नत्वात्
क्व पुनर्विरोधोऽत आह—परमार्थेति। कापिलैर्ब्रह्मणोऽनभ्युपगतत्वाच्च ब्रह्मात्मैकत्वदर्शनं तत्रासीदिति
भावः। गुणभोक्तृविषय इत्यत्र गुणविषये भोक्तृजीवविषये चेति वार्थः।

नन्वु कुतः कापिलस्येहोपादानमत आह—ते हीति। अभियुक्ता विद्वांसः, कुशला इति यावत्
गुणानां गौणानां गुणमयबुद्ध्यादीनां च व्यापाराणां निरूपणं प्रतिपादनं तस्मिन्विषये। स्तुत्यर्थमिति
तन्त्रान्तरेऽपि प्रसिद्धमिदं न केवलमस्मिन्नेव तन्त्रे इति स्तुतिः। ज्ञानादीनीत्यादिपदात्
दिग्रहणम्। भेदजातानि भेदसमूहान्। ननु स्वोक्तं सर्वं शृण्वन्तमर्जुनं प्रति पुनः शृण्विति
व्यर्थमत आह—वक्ष्यमाण इति। चित्तसमाधानार्थमिति शृण्विदयुक्तमित्यर्थः। ननु ज्ञानज्ञेय
करणकर्मकर्तृणां षण्णां पूर्वमुक्तत्वेन तेषां सर्वेषामपि त्रैविध्यकथनं किमितीह न प्रतिज्ञातमिति
उच्यते— ज्ञेयकरणयोर्धर्माधर्मब्रह्मादिरूपत्वेन श्रोत्रादिरूपत्वेन च बहुविधयोर्गुणतस्त्रैविध्यस्य नियन्तु
मशक्यत्वान्न तद्ग्रहणमिह कृतम्। ज्ञातृकर्तारौ त्वेक एव। कारकं कर्म तु सुखत्रैविध्ये कथितं
यद्वा स्वर्गादिरूपं तच्च फलं बहुविधमेवेति नेह त्रिविधत्वेन नियन्तुं शक्यते। तस्माद्ज्ञानकर्म
त्रयाणामेवेह कथनं प्रतिज्ञातम्।

ज्ञानस्य तु तावत्त्रिविधत्वमुच्यते—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

सर्वभूतेष्विति । सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावमस्तु—भावशब्दो वस्तुवाची, एकमात्मवस्त्वित्यर्थः । अव्ययं न व्येति स्वात्मना स्वधर्मेण वा, व्ययनित्यमित्यर्थः । ईक्षते पश्यति येन ज्ञानेन, तं च भावमविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः । तज्ज्ञानं साक्षात्सम्यग्दर्शन-

---

रामानुजस्तु ज्ञेयमेव कर्मशब्देन परामृश्यत इत्याह, तत्तुच्छम्—कर्मैव ज्ञेयमिति नियन्तु-मशक्यत्वेन ज्ञेयं कर्मेति व्याख्यानस्यायुक्तत्वात् । कर्म कर्मचोदनेत्येकस्यैव कर्मणश्चोद्यत्वचोदनत्वयो-रयोगाच्च । यदप्यनेनोक्तं कर्मैव संग्रहः कर्मसंग्रहः । करणं द्रव्यादिकं, कर्म यागादिकं, कर्ता ज्ञातेति त्रिविधं बोद्धव्यरूपं कर्म संगृह्यत इति, तच्चायुक्तम्—क्रियाया एव कर्मत्वेन कर्तृ-करणयोः कर्मभेदायोगात् । करणनिर्वर्त्यं कर्त्राश्रयं हि कर्म । छेदनं छेत्तृलवित्रच्छेदनात्मना त्रिविधमिति वक्तुं शक्यते केनाप्यनुन्मत्तेन । नच करणं कर्म कर्ता चेत्येतत्त्रयमिह ज्ञेयमिति वाच्यं, ज्ञेयार्थालाभात् । ज्ञेयं कर्मेति त्वयैव पूर्वमुक्तत्वात् । नच करणकर्तृसहितं कर्म ज्ञेयमिति वाच्यं, ज्ञातेत्यनेन कर्तुरुक्तत्वात् । नच करणसहितं कर्म ज्ञेयमिति वाच्यं, द्रव्यादिकरणस्येहाप्रतिपाद्य-त्वेन करणसाहित्यप्रतिपादनं कर्मणो व्यर्थमेवेति । तथा गुणसङ्ख्यानशब्दस्य गुणकार्यगणनमर्थ-मुक्तमनेन, तच्चायुक्तम्—गुणशब्दस्य गुणकार्यपरत्वे लाक्षणिकत्वापत्तेः । त्रिधैव प्रोच्यत इत्यनेनै-वसिद्धौ गुणकार्यगणने प्रोच्यत इत्यस्यानर्थकत्वाच्च । कापिलशास्त्रग्रहणे तूक्तार्थस्य प्रामाण्यसिद्धिः प्रसिद्धिश्च फलमिति बोध्यम् ॥१९॥

सर्वेति । विभक्तेषु सर्वभूतेष्वविभक्तमव्ययमेकं भावं येनेक्षते विद्वानिति शेषः । तज्ज्ञानं सात्त्विकं विद्धि । अव्यक्तादीति । अव्यक्तमत्र हिरण्यगर्भशरीरं, नतु माया- तस्या एकत्वेन विभक्तत्वासम्भवात् । ब्रह्मादिस्तम्बपर्यन्तेष्विति सर्वशब्दार्थः । भूतशब्दार्थमाह—देहभेदेष्विति । देहेष्वित्यर्थः । विभक्तत्वविशेषणार्थमपि संगृह्योक्तम्—देहभेदेष्विति । कथं विभक्तेष्वत आह—प्रतिदेहमिति । परस्परं विलक्षणेष्वित्यर्थः । देहानां परस्परवैलक्षण्यस्य सर्वानुभवसिद्धत्वादिति भावः । तेषु गुणतः कार्यत आकारतः कालतो देशतश्च परस्परं भिन्नेषु ब्रह्मादिस्तम्बपर्यन्तेषु चराचरात्मकेषु देहेष्विति विभक्तेषु सर्वभूतेष्वित्यस्यार्थस्सिद्धः । अत्राव्यक्तशब्दस्य मायापरत्वाग्रहेतुरव्यक्तमादिः प्रथमं येषां तेष्वव्यक्तादिषु मायाकार्येष्वित्यर्थः । ब्रह्मादिष्विति तु शेषः । यद्वा अव्यक्तमादिर्येषा-मित्यतद्गुणसंविज्ञानबहुव्रीहिः । ततश्च नाव्यक्तस्य भूतानुप्रवेशः । किंतु तज्जन्यानां ब्रह्मादिदेहाना-मेवेति ।

मद्वैतात्मविषयं सात्त्विकं विद्धीति । यानि द्वैतदर्शनान्यसम्यग्भूतानि राजसानि तामसानि चेति न साक्षात्संसारोच्छित्तये भवन्ति ॥२०॥

---

ननु ब्रह्मादिस्थावरान्तेष्विति ऋजु वक्तव्ये कथमव्यक्तादिस्थावरान्तेष्विति वक्रमुक्तमाचार्यैरितिचेन्नैष दोषः—भूतानां मायामयत्वस्फोरणायैवमुक्तत्वात् । भवन्तीति भूतानीति व्युत्पत्त्या भूतशब्दः कार्यपरः । भवत्यस्ति सर्वत्र देशेषु कालेषु वस्तुषु चेति भावस्सन् परमात्मेत्यर्थः । वस्तु सत्यमित्यर्थः । ब्रह्मेति यावत् । यद्वा भावो वस्तु पदार्थ इति यावत् । एकत्वादिविशेषणवशात्तु भावपदार्थस्यात्मलाभ इति बोध्यम् । इदमेवाह—आत्मवस्त्विवत्यर्थ इति । आत्मेति पदार्थ इति भावः । व्येति विकारं प्राप्नोति । विकारो द्विविधः- स्वरूपगतस्स्वभाव(स्वधर्म)गतश्चेति । तदुभयमात्मनो नास्तीत्याह—स्वात्मना स्वधर्मेण वा न व्येतीति, कूटस्थमिति । अविक्रियमित्यर्थः । सदेकरूपमिति यावत् । ज्ञानेन भावं पश्यतीत्युक्तं चोदयति—कथमिति । कथम्भूतं भावं पश्यतीत्यर्थः । प्रत्याह—अविभक्तमिति । तदर्थमाह—निरन्तरमिति । निर्भेदमित्यर्थः । दृष्टान्तमाह—व्योमवदिति । अविभक्तं यथातथाऽवस्थितमिति क्रियाविशेषणत्वेनापि व्याख्यातुं शक्यमिदं पदम् । परं तु अवस्थितशब्दाध्याहारो गौरवावहः । तद्ज्ञानमित्यस्यार्थमाह—साक्षात्सम्यग्दर्शनमिति । सम्यग्दृश्यते येन तत्सम्यग्दर्शनं बुद्धिवृत्तिरिति यावत् । सर्वभूतेष्वित्यादिना लब्धमर्थं क्रोडीकृत्य किंविधं ज्ञानमिति शङ्कां निराकुर्वन्नाह—अद्वैतात्मविषयमिति । सर्वभूतात्मभूतमेकमेवाद्वितीयं ब्रह्माहमित्याकारकं ज्ञानं सात्त्विकज्ञानमिति परमार्थः ।

ननु कुतोऽस्य ज्ञानस्य सम्यग्ज्ञानत्वमत आह—यानीति । साक्षात्संसारोच्छित्तिहेतुत्वादिदमद्वैतज्ञानं, सम्यग्ज्ञानमन्यानि तु द्वैतज्ञानानि वक्ष्यामाणानि न साक्षात्संसारोच्छित्तिहेतूनीति न सम्यग्ज्ञानानीत्यर्थः । साक्षादित्यनेन च केषांचिद्राजसज्ञानानां परम्परया मोक्षहेतुत्वमस्तीति गम्यते । भिन्नेश्वरभजनस्य चित्तशुद्ध्यादिहेतुत्वात्कर्मयोगवदिति भावः । तानि साक्षात्संसारोच्छित्तये न भवन्तीत्यन्वयः । न भवन्ति न शक्नुवन्तीत्यर्थः ।

यत्तु रामानुजः—ब्राह्मणक्षत्रियगृहस्थब्रह्मचार्यादिरूपेण विभक्तेषु सर्वेषु भूतेषु कर्माधिकारिषु येन ज्ञानेनैकमात्माख्यं भावं तत्राप्यविभक्तं ब्राह्मणत्वाद्यनेकाकारेष्वपि भूतेषु सितदीर्घादिविभागवत्सु ज्ञानाकार आत्मनि विभागरहितमव्ययं ब्राह्मणादिशरीरेषु व्ययस्वभावेष्वप्यविकृतं फलादिसङ्गानर्हं च कर्माधिकारवेलायामीक्षते तद्ज्ञानं सात्त्विकं विद्धीति, तत्तुच्छम्—सर्वशब्दस्य कर्माधिकारिपरतया सङ्कोचस्यान्याय्यत्वात्; सर्वविधविभागराहित्यप्रतिपादकाविभक्तशब्दस्य सितदीर्घादिविभागराहित्यपरतया सङ्कोचनस्याप्ययुक्तत्वात् । न ह्यविभक्तस्य विभक्तत्वमुचितम् । अद्वितीयत्वप्रतिपादकस्यैकशब्दस्य च ज्ञानैकाकारमित्यर्थवर्णनमयुक्तं- लाक्षणिकत्वादिदोषात् । नच जात्येकत्वमुक्तमिति वाच्यं, आत्मनि जात्यभावात् । कर्माधिकारवेलायामिति मूलाद्बहिःकल्पनं चाप्रमाणमसङ्गतं च । नहि ब्राह्मणत्वादिजात्यभिमानाद्यज्ञादिकर्मणि प्रसक्तः पुरुष एकं भावमीक्षितुं क्षमते विरोधात् । नापि ज्ञानैकाका-

पृथक्त्वेन तु यद्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तद्ज्ञानं विद्धि राजसम् ॥२१॥

पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यद्ज्ञानं नानाभावान्भिन्नात्मनः पृथग्विधान् पृथक्प्रकारान् भिन्नलक्षणानित्यर्थः । वेत्ति विजानाति यद्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासम्भवाद्येन ज्ञानेन वेत्तीत्यर्थः । तद्ज्ञानं विद्धि राजसं रजोगुणनिर्वृत्तम् ॥२१॥

---

रान्यथासज्ञात्मदर्शी ब्राह्मणोऽहं कर्तेति कर्मणि प्रवर्तते । तस्माद्विभक्तेषु भूतेष्विति बहुवचनप्रयोगादविभक्तमेकमित्येकवचनप्रयोगाच्च देहभेद एव नात्मभेद इति स्थितम् । अयमेवार्थः- 'न त्वेवाहं जातु नास'मितिश्लोकेनाप्यभिप्रेतो भगवतेति तद्भाष्ये भाषितमाचार्यैः । 'देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्राये'णेति । यदि भगवतस्तत्र सोऽभिप्रायो न स्यात्तर्हीहाप्यात्मभेदमेव ब्रूयान्मध्ये च । तत्र तत्रात्माभेद एवोक्त इत्युपक्रमोपसंहारैक्याभ्यासादिभिरेक एवात्मेति गीताशास्त्रस्य निश्चितोऽर्थ इति स्थितम् ॥२०॥

पृथक्त्वेनेति । यद्ज्ञानं सर्वेषु भूतेषु पृथक्त्वेन पृथग्विधान्नानाभावान्वेत्ति तद्ज्ञानं राजसं विद्धि । प्रतिशरीरं भिन्ना आत्मानो भिन्नलक्षणा इति यद्द्वैतज्ञानं तद्राजसमित्यर्थः । नन्वौपाधिको भेदस्तवाप्यद्वैतिन इष्ट इत्यत आह—प्रतिशरीरमिति । शरीरे शरीरे प्रतिशरीरं ततश्चैकैकस्मिन् शरीरे एकैको जीवः परस्परं भिन्नो वर्तत इत्यर्थः । अद्वैतिनस्तु प्रतिशरीरमेक एव जीवो वर्तत इति वदन्तीति भावः । तच्चोक्तं पूर्वश्लोकेन । एतेनाद्वैतिन एव सात्त्विकज्ञानवन्त इति सम्यग्दर्शित्वमद्वैतिनां सिद्धम् ।

भावशब्दस्यात्मपरतया पूर्वं व्याख्यातत्वादाह—भिन्नानात्मन इति । भिन्नलक्षणं सुखदुःखादिकं येषां ते भिन्नलक्षणास्तान् । यदि सर्वशरीरेष्वेक एव जीवस्स्यात्तर्हि सर्वेषामेकदैव सुखं वा दुःखं वा स्याच्चैत्रानुभूतार्थस्य मैत्रेण स्मरणं स्याज्जीवे उत्क्रान्ते सति सर्वशरीराणामचेतनता स्याद्देवदत्तस्य चक्षुषेव मैत्रचक्षुषापि घटं पश्येदित्यादीन् दोषांस्तार्किकादयो मन्यन्त इति भावः । एकात्मवाद्यद्वैती तु सुखदुःखादीनामनात्मधर्मत्वान्न कोऽपि दोष इति वेत्ति । तथाहि सुखं दुःखं च मनोधर्मः- 'कामस्सङ्कल्प' इत्यादिश्रुतेः । स्मरणं चित्तधर्मः; उत्क्रान्तिर्बुद्धिधर्मः; यद्वा प्राणधर्मः; दर्शनस्पर्शनादिकमिन्द्रियधर्मः । इमानि च मनआदीनि प्रतिशरीरं भिन्नान्येवेति नानुभवसाङ्कर्यप्रसङ्गः । न चानुभवितुरेकत्वे कथमनुभवासाङ्कर्यमिति वाच्यं, अनुभवितुरपि प्रमातुरन्तःकरणावच्छिन्नस्य नानात्वात् । औपाधिकं हि प्रमातृत्वं चैतन्यस्य । वयं हि निरुपाधिकमेव चैतन्यमेकं ब्रूमः; नतु सोपाधिकम् । यद्वा विशेष्यचैतन्यमेवैकं ब्रूमः; नतु विशिष्टचैतन्यम् । चैतन्यमेव हि प्रमातुरात्मा । तस्मात्प्रमातृभेदेऽपि नात्मभेदः- प्रमात्रन्तःकरणभेदेऽपि प्रमातृचैतन्याभेदात् । तस्मादेक एवात्मा चैतन्यरूपः । ननु येन ज्ञानेनेक्षत इति पूर्वश्लोकवदिहापि येन वेत्तीत्येव वक्तव्ये कथमुक्तम् ? यद्वेत्तीति, तत्राह—ज्ञानस्येति । वृत्तिज्ञानस्येत्यर्थः । निर्द्वैतं सिद्धम् ।

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

यदिति । यत्तु ज्ञानं कृत्स्नवत्समस्तवत्सर्वविषयमिवैकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ सक्तं 'एतावानेवात्मा ईश्वरो वा नातःपरम'स्तीति । यथा नग्नक्षपणकादीनां शरीरानुवर्ती देहपरिमाणो जीवः, ईश्वरो वा पाषाणदार्वादिमात्रमित्येवमेकस्मिन्कार्ये सक्तमहैतुकं

---

यत्तु रामानुजः—सितदीर्घादिपृथक्त्वेनात्मनो वेत्तीति, तत्तुच्छम्—नहि कोऽप्यास्तिकः कर्मठो देहभिन्नकर्तृभोक्त्रात्मवादी सन्नात्मानं सितं दीर्घं कृष्णं ह्रस्वं वा मन्यते । यस्तु देहात्मवादी बौद्धस्स भोक्त्रभावात्कर्म नैव करोति, मन्यते चात्मानं सितं दीर्घं कृष्णं ह्रस्वं स्थूलं कृशं चेत्येवम् । तस्माद्भिन्नात्मज्ञानमेव राजसम् । तच्च निन्द्यं त्याज्यं चेति स्थितम् ॥२१॥

यत्त्विति । एकस्मिन्कार्ये सक्तमहैतुकमतत्त्वार्थवदल्पं च कृत्स्नवद्यत्तु ज्ञानं तत्तामसमुदाहृतं शिष्टैरिति शेषः । देहात्मज्ञानमर्चेश्वरज्ञानं च तामसमिति फलितार्थः । कृत्स्नमस्यास्त्यस्मिन्नस्तीति वा कृत्स्नवत् । विषयिणि ज्ञाने विषयत्वेन सर्वमस्तीत्यर्थः । इदमेवाह—सर्वविषयमिति । भूतभौतिकादिसर्वजगद्विषयमित्यर्थः । न त्वेकात्मविषयमिति भावः । यथाऽद्वैतिन एकमेवाद्वितीयं ब्रह्मेति मन्यन्ते तथेमे दृश्यं सर्वं जगत्सत्यमेवेति मन्यन्त इति परमार्थः । तथा- एकस्मिन्कार्ये सक्तमिति । एककार्यविषयमित्यर्थः । किं तत्कार्यमत आह—देह इति । पक्षान्तरमाह—प्रतिमादाविति । एकशब्दश्च केवलवाचीत्याह—एतावानेवेति । देह एवात्मेति प्रतिमैवेश्वर इत्येतदेककार्यविषयं ज्ञानमित्यर्थः । एवकारार्थमाह—नातः परमस्तीति । अतोऽस्माद्देहात्प्रतिमादेर्वा परमात्माख्यमीश्वराख्यं वा वस्तु नास्तीत्यर्थः । के पुनरेवं मन्यन्ते ? अत आह—यथेति । नग्नका दिगम्बराः क्षपणकाः कापालिका बौद्धविशेषा एते । देहपरिमाण इति । यावत्परिमाणो देहस्तावत्परिमाण इत्यर्थः । अत एव शरीरानुवर्ती हस्तिमशकादिशरीरानुसारी । एतेन सावयवत्वमात्मनस्सिद्धम् । जीवस्य केषांचिदवयवानां नाशान्मशकादिदेहपरिमाणत्वं केषांचिल्लाभान्मनुष्यादिदेहपरिमाणत्वं चेति । यद्यपीमे न देहात्मवादिनस्तथापि सावयवात्मवादित्वाद्देहात्मवादितुल्या एवेति निदर्शनतयेहोपात्ता इति बोध्यम् । अनेन च देहपरिमाणो जीव इति ज्ञानस्यैव तामसत्वे किं पुनर्देह एव जीव इति ज्ञानस्येत्यर्थापत्तिस्सिध्यति ।

यद्वा एतावानेवेत्यस्य देहमात्रपरिमाण एवेति प्रतिमादिमात्र एवेति चार्थः । तथा च देहातिरिक्तात्मवादिनोऽप्येते देहपरिमाणात्मवादित्वात्तामसज्ञानवन्त इति निन्द्यन्ते । देहपरिमाणो जीव इति ज्ञानं, प्रतिमादिरूप ईश्वर इति ज्ञानं च तामसमिति श्लोकसारार्थः । ननु सर्वात्मकस्येश्वरस्य कुतः प्रतिमादिरूपत्वाभावोऽत आह—पाषाणदार्वादिमात्र इति । ये श्रीरङ्गजगन्नाथादिक्षेत्रेषु कल्पिताः पाषाणदार्वादिमया अर्चाविग्रहाः त एवेश्वरः, नतु घटपटादयः, नापि चैतन्यमिति मन्यन्त एत इति भावः । ननु यथोक्तं ज्ञानं सहेतुकत्वान्न त्याज्यमत आह—अहैतुकमिति । नापि यथार्थ-

हेतुवर्जितं निर्युक्तिकं, अतत्त्वार्थवदयथाभूतार्थवत् । यथाभूतार्थस्तत्त्वार्थः । सोऽस्य ज्ञेयभूत अस्तीति तत्त्वार्थवत्, न तत्त्वार्थवदतत्त्वार्थवत् । अहैतुकत्वादेवाल्पं चाल्पविषयत्वात्, अल्पफलत्वाद्वा तत्तामसमुदाहृतम् । तामसानां हि प्राणिनामविवेकिनां ज्ञानमीदृशं दृश्यते ॥

मित्याह—अतत्त्वार्थवदिति । अतत्त्वार्थविषयमित्यर्थः । कुत्र इदं ज्ञानं तामसमत आह—तामसानामिति, ईदृशमिति । सर्वं जगत्सत्यं देह एव जीवो देहपरिमाणो जीव इति वा पाषाणदार्वादिमात्र ईश्वर इत्येवंरूपमित्यर्थः ।

ननु 'ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना' इति कर्मचोदनत्वं ज्ञानस्य पूर्वमुक्तं, कथमिह ततोऽन्यदेव ज्ञानमुक्तमितिचेत्, नैष दोषः—प्रवृत्तिलक्षणं निवृत्तिलक्षणं चेति द्विविधं हि कर्म। तत्रोपेक्षाप्रयोजकं निवृत्तिलक्षणं कर्म चोदयति, सात्त्विकं ज्ञानं ब्रह्मात्मविदां सनकादीनां निवृत्तिमार्गनिष्ठत्वात्साङ्ख्यानां कर्मयोगेऽनधिकाराच्च । राजसतामसज्ञाने तु प्रवृत्तिलक्षणं कर्म चोदयत एव। भिन्नात्मदर्शिनां राजसानां कर्तृभोक्त्रात्मदर्शित्वात्कर्मणि प्रवृत्तिः । तामसानां च देहात्मवादिनामनीश्वरवादिनां कर्मणि प्रवृत्तिरुपपन्नैवेति । तस्मादुक्तं त्रिविधं ज्ञानं कर्मचोदनमेव । नच निवृत्तिर्नकर्मेति वाच्यं, प्रवृत्तिवन्निवृत्तिरपि कर्मैवेत्युक्तत्वात् ।

यद्वा ज्ञानं कर्मचोदनेति सामान्यत उक्तम् । तत्र राजसतामसज्ञानयोरेव कर्मचोदनत्वं, नतु सात्त्विकज्ञानस्येति बोध्यम् । वस्तुतस्तु ज्ञानं कर्मेतिश्लोकोक्तं कर्मचोदनं ज्ञानमन्यत् यत्क्रियाकारकफलादिसर्वद्वैतविषयम् । 'ज्ञानं कर्म च कर्ता' चेतिश्लोकोक्तं ज्ञानं तु ततोऽन्यत्- यज्जीवेश्वरविषयम् । अत एव ज्ञानं कर्म चेति श्लोकावतारभाष्यादौ, अथेदानीमित्यथशब्दः प्रयुक्तः । वक्ष्यमाणग्रन्थस्य प्रकरणान्तरत्वद्योतनायेति ।

एतेन ज्ञानं ज्ञेयं परिज्ञातेत्युक्ता एव पदार्था ज्ञानं कर्म च कर्ता चेत्यनेनानूद्यन्त इति वेदान्तदेशिकोक्तिः परास्ता । जीवेश्वरविषयज्ञानस्यैवेहोक्तत्वेनाकर्मविषयत्वादस्य । नच कर्मार्थमपि जीवेश्वरज्ञानमावश्यकमिति जीवेश्वरविषयं ज्ञानमपि कर्मचोदनमिति वाच्यं, उपमृदितक्रियाकारकफलादिसर्वद्वैतत्वादद्वितीयजीवेश्वरज्ञानस्य । नच प्रतीयमाने सर्वद्वैते कथमद्वैतसिद्धिरिति वाच्यं, प्रतीयमानेऽपि नैल्ये गगनस्य नीरूपत्वसिद्धेरिष्टत्वात् । तस्माद्विद्यादशायामेव सर्वद्वैतोपलम्भः, नतु विद्यादशायाम् । नच विद्याविद्यादशाद्वयसत्त्वे प्रमाणाभाव इति वाच्यं, 'दूरमेते विपरीते विषूची, अविद्या या च वि'द्येतिश्रुतेरेव प्रमाणत्वात् । नच विद्यादशायां द्वैताभावोऽप्रमाण इति वाच्यं, 'यत्र सर्वमात्मैवाभूत्तत्र केन कं पश्ये'दितिश्रुतेः सुषुप्तिमृतिमूर्छासमाध्यनुभवस्य च प्रमाणत्वादिति स्थितमद्वैतम् । एवं ज्ञानत्रैविध्यप्रदर्शनं तु सात्त्विकज्ञानस्य सम्पादनार्थमितरयोः परिवर्जनार्थं च । एवं कर्मादित्रैविध्यप्रदर्शनमपीति बोध्यम् । तस्मान्मुमुक्षुणा यथोक्तं सात्त्विकमद्वैतज्ञानमेव सम्पाद्यमिति संक्षेपः । प्रेतभूताद्याराधनविषयं ज्ञानं तामसमिति रामानुजः, प्रकृतश्लोकादेतादृशार्थालाभादात्मविषयज्ञानगतसात्त्विकत्वादिभेदकथनप्रसङ्गे एतदर्थस्याकथनीयत्वाच्चोपेक्ष्यं रामानुजव्याख्यानम् ॥२२॥

अथेदानीं कर्मणस्त्रैविध्यमुच्यते—

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥

नियतमिति । नियतं नित्यं, सङ्गरहितमासक्तिवर्जितमरागद्वेषतः कृतं, रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतः कृतं; तद्विपरीतं कृतमरागद्वेषतः कृतम् । अफलप्रेप्सुना फलं प्राप्तुमिच्छतीति फलप्रेप्सुः फलतृष्णः, तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृतं कर्म यत् तत्सात्त्विकमुच्यते ॥२३॥

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

यदिति । यत्तु कामेप्सुना कर्मफलप्रेप्सुनेत्यर्थः । कर्म साहङ्कारेण वा साहङ्कारेण इति न तत्त्वज्ञानापेक्षया । किं तर्हि लौकिकश्रोत्रियनिरहङ्कारापेक्षया यो हि परमार्थनिरहङ्कार आत्मवित्, न तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति । सात्त्विकस्यापि कर्मणोऽ-

---

नियतमिति । अथेति । ज्ञानप्रकरणं समाप्तमिति सूचयितुमथशब्दः । अफलप्रेप्सुना अरागद्वेषतः कृतं नियतं सङ्गरहितं यत्कर्म तत्सात्त्विकमुच्यते । नित्यमिति । 'अहरहस्सन्ध्यामुपासी'तेत्यादिश्रुतिसिद्धसन्ध्यावन्दनाग्निहोत्रादिकं यस्य चाकरणे प्रत्यवायः; नैमित्तिकस्याप्यत्रैवान्तर्भावः । अकरणे प्रत्यवायजनकत्वस्य नैमित्तिकेष्वपि श्राद्धादिषु सत्त्वात् । आसक्तिः प्रीतिविशेषः । रागः प्रीतिसामान्यम् । द्वेषोऽप्रीतिः । रागाद्द्वेषतो वा हेतोः कृतं रागद्वेषतःकृतं पञ्चम्या अलुगार्षः । रागद्वेषकृतमित्यर्थः । तन्न भवतीत्यरागद्वेषतःकृतम् । यद्वा रागद्वेषयोरभावोऽरागद्वेषः, तस्मादरागद्वेषत इति पृथक्पदं रागद्वेषाभावाद्धेतोरित्यर्थः । अथवा न विद्यते रागद्वेषौ यस्य सोयमरागद्वेषः, तेनारागद्वेषत इति सार्वविभक्तिकस्तसिः । तृतीयायां विशेषणमिदमफलप्रेप्सुनेत्यस्य । रागप्रयुक्तेनेत्यादिभाष्यं तु फलितार्थकथनपरम् ॥२३॥

यदिति । कामेप्सुना साहङ्कारेण वा पुनर्बहुलायासं यत्तु कर्म क्रियते तद्राजसमुदाहृतम् । कामेप्सुना कृतं साहङ्कारेण कृतं च पुनर्बहुलायासं कर्म राजसमित्युच्यत इत्यर्थः । ननु अहं करोमीति कर्तृत्वाभिमानपुरस्सरं कर्मिणा कर्मणः क्रियमाणत्वात्कथं निरहङ्कारत्वं कर्मिणस्त्यायेनोच्येत साहङ्कारेण यत्क्रियत इति । अत आह—नेति । तत्त्वज्ञानापेक्षया साहङ्कारेण वेति नोक्तं, निरहङ्कारतत्त्वविदपेक्षया साहङ्कारेणेतिनोक्तमित्यर्थः । अहंकरोमीत्याकारकोऽहङ्कारो नेह ग्राह्यः, किं तु वैश्वदेव्यहं सोमयाज्यहमाढ्योहऽमभिजनवानहमित्यादिरात्मोत्कर्षप्रधानोऽहङ्कारो ग्राह्य इति भावः । लौकिकोऽतत्त्ववित्, श्रोत्रियश्छान्दसः, निरहङ्कारोऽहमेवोत्कृष्ट इत्यहङ्काररहित इत्यर्थः । तदपेक्षयाऽयं कर्मी साहङ्कारः । य आत्मानं कर्मिषूत्कृष्टं मन्यते । ननु साहङ्कारप्रतियोगितया निरहङ्कारश्रोत्रियग्रहणमिति, किं निरहङ्कारस्तत्त्वविदेव गृह्यतामत आह—यो हीति । परमार्थ-

नात्मवित्साहङ्कारः कर्ता, किमुत राजसतामसयोः । लोके अनात्मविदपि श्रोत्रियो निरहङ्कार उच्यते 'निरहङ्कारोऽयं ब्राह्मण' इति । तस्मात्तदपेक्षयैव 'साहङ्कारेण' वेत्युक्तम् । पुनश्शब्दः पादपूरणार्थः । क्रियते बहुलायासं कर्ता महताऽऽयासेन निर्वर्त्यते तत्कर्म राजसमुदाहृतम् ॥२४॥

> अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
> मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

अनुबन्धमिति । अनुबन्धं पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते, तं चानुबन्धम् । क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षय अर्थक्षयो वा स्यात्, तं क्षयम् । हिंसां प्राणिबाधां चानवेक्ष्य च निरवेक्ष्य च; पौरुषं पुरुषकारं 'शक्नोमीदं कर्म समापयितु'मित्येवमात्मसामर्थ्यमित्येतान्यनुबन्धादीन्यनवेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत् तत्तामसं तमोनिर्वृत्तमुच्यते ॥२५॥

---

निरहङ्कार इति । अनात्मस्वात्माभिमानरूपवास्तवाहङ्कारशून्य इत्यर्थः । कामेप्सुत्वबहुलायासकर्तृत्वयोः प्राप्तिस्तस्य नास्ति । ततश्चाप्राप्तस्य निषेधायोगान्नेह निरहङ्कारस्तत्त्वविद्ग्राह्य इत्यर्थः ।

अयमाशयः—कामेप्सुना साहङ्कारेण वा कृतं बहुलायासं कर्म राजसमित्युक्तौ, अकामेप्सुना निरहङ्कारेण वा कृतमबहुलायासं कर्म न राजसमित्यापतितम् । ततश्च निरहङ्कारशब्देन तत्त्वविद्ग्रहणे तत्त्वविदः कामेप्सुत्वं बहुलायासकर्मकर्तृत्वं च न युक्तमिति सिध्यति, तच्चायुक्तम्—तत्त्वविदः कामेप्सुत्वबहुलायासकर्मकर्तृत्वयोः प्राप्त्यसम्भवेन निषेधायोगादिति । ननु कुतस्तत्त्वविदस्तत्प्राप्तिर्नास्तीत्यत आह—सात्त्विकस्यापीति । अनात्मविदिति छेदः । ननु निरहङ्कार आत्मवित्कर्तेत्यर्थः । नन्वेवं कर्ममात्रकर्तृत्वस्याहङ्कारपूर्वकत्वे कर्तुरनात्मविदश्च साहाङ्कारत्वे कथं लौकिकश्रोत्रियनिरहङ्कारपुरुषसिद्धिः? तदपेक्षयेह साहङ्कारेण वेत्युक्तमत आह—लौकिकैरिति, निरहङ्कार इति । गर्वशून्य इति भावः ।

ननु वेत्यनेनैव पुनश्शब्दार्थलाभे कुतः पुनश्शब्दप्रयोगोऽत्र आह—पुनरिति । कामेप्सुकर्तृकं साहङ्कारकर्तृकं च बहुलायासं कर्म राजसमिति निष्कर्षः । कर्मणो राजसत्वे कामेप्सुकर्तृकत्वं साहङ्कारकर्तृकत्वं बहुलायासत्वं चेति हेतुत्रयं, तत्र कामेप्सुकर्तृकत्वबहुलायासत्वयोः साहङ्कारकर्तृकत्वबहुलायासत्वयोर्वा समुच्चयः । वाशब्दस्य चार्थाभ्युपगमे तु त्रयाणामपि समुच्चयः । पुनश्शब्दस्यापि विकल्पार्थाभ्युपगमे त्रयाणामपि प्रत्येकं हेतुत्वमिति बोध्यम् । एवं कर्मणस्सात्त्विकत्वे चाकामेप्सुकर्तृकत्वं रागद्वेषादिप्रयुक्तत्वं सङ्गरहितत्वं नित्यत्वं चेति हेतुचतुष्टयं समुच्चित्य वा प्रत्येकं वेति बोध्यम् ॥२४॥

अनुबन्धमिति । अनुबन्धं क्षयं हिंसां पौरुषं चानवेक्ष्य कर्त्रा यत्कर्म मोहादारभ्यते तत्तामसमुच्यते । यद्वस्तु दुःखमित्यर्थः । दुःखहेतुरनर्थ इति वा । अनवेक्ष्य निरवेक्ष्य; अनालोच्येत्यर्थः ।

इदानीं कर्तृभेद उच्यते—

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥२६॥

मुक्तसङ्ग इति । मुक्तसङ्गो मुक्तः परित्यक्तस्सङ्गो येन स मुक्तसङ्गः । अनहंवादी

---

कर्मणस्तामसत्वेऽनुबन्धानवेक्षिकर्तृकत्वं क्षयानवेक्षिकर्तृकत्वं हिंसानवेक्षिकर्तृकत्वं पौरुषानवेक्षिकर्तृकत्वं मोहप्रयुक्तत्वं चेति हेतुपञ्चकं समुच्चित्य वा प्रत्येकं वेति बोध्यम् । अनुबन्धादिचतुष्टयानवेक्षित्वमि- त्येको हेतुरिति वा । ततश्च हेतुद्वयं समुच्चित्य प्रत्येकं वा भवतीति ।

ननु समुच्चयासमुच्चयपक्षद्वयमविशेषेण दर्शितं, तत्र कतरः पुनः पक्ष आश्रयणीय इतिचेत्, उच्यते—पक्षद्वयमप्याश्रयणीयमेवेति । कथम् ? नियतं कर्म सात्त्विकमित्युक्तौ सङ्गिना कृतस्यापि नियतकर्मणस्सात्त्विकत्वं स्यात् । तद्वारणाय नियतं सङ्गरहितं कर्म सात्त्विकमित्युक्तावसङ्गेनापि राग- द्वेषवता कृतं नियतकर्म सात्त्विकं स्यात् । तद्वारणाय नियतं सङ्गरहितमरागद्वेषतः कृतं कर्म सात्त्विकं स्यादित्युक्तौ रागद्वेषसङ्गशून्येन फलकामिना कृतं नियतकर्म सात्त्विकं स्यात्तद्वारणाय नियतं सङ्गरहित- मरागद्वेषतः फलकामरहितेन कृतं कर्म सात्त्विकमिति वक्तव्यम् ।

तथा कामेप्सुना साहङ्कारेण च कृतं बहुलायासं कर्म राजसमित्युक्तौ कामेप्सुना निरहङ्कारेण कृतं बहुलायासं कर्म राजसं न स्यात् । कामेप्सुना साहङ्कारेण च कृतमबहुलायासं कर्म राजसं न स्याच्च । तथाऽनुबन्धादिचतुष्टयानवेक्षं मोहादारब्धं च कर्म तामसमित्युक्तौ अनुबन्धादिद्वयावेक्षं तत्त्रयावेक्षं तदेकावेक्षं वा मोहादारब्धं कर्म तामसं न स्यात् । तच्चतुष्टयावेक्षमपि मोहादनारब्धं कर्म तामसं न स्यात् । अतः पक्षद्वयाश्रयणमिति । नचैवं सात्त्विककर्मलक्षणे समुच्चयः, अन्यत्रासमुच्चय- श्चाश्रयणीय इति वाच्यं, कामेप्सुना कृते बहुलायासे कर्मणि राजसत्वप्रयोजकस्यैकस्य हेतोर्निश्चित्य वक्तुमशक्यत्वेन समुच्चयस्य वक्तव्यत्वात् । एवमनुबन्धादिचतुष्टयावेक्षे मोहादारब्धे कर्मणि तामसत्व- प्रयोजकस्यैकस्य हेतोर्निश्चित्य वक्तुमशक्यत्वेन समुच्चयस्य वक्तव्यत्वाच्च ।

ननु तर्हि राजसलक्षणे तामसकर्मलक्षणे च पक्षद्वयमाश्रणीयं, कुतः पुनस्सात्त्विके कर्मणीतिचे- दुच्यते—नियतत्वादिकं प्रत्येकमपि कर्मणस्सात्त्विकत्वे प्रयोजकमेवेति । नच नियतं कर्म सात्त्विक- मित्युक्तौ कामेप्सुना कृतं नियतकर्म सात्त्विकं स्यादिति वाच्यं, कर्मणः कामेप्सुकृतत्वस्य राजसत्व- सम्पादकत्वात् । राजसत्वस्य सात्त्विकत्वदूषकत्वादिति । वस्तुतस्तु नियतमितिश्लोके समुच्चयपक्षः, अन्यत्र पक्षद्वयं चेत्येतदेव साधीयः ।

अयं श्लोकत्रयनिष्कर्षः—मुमुक्षुः पुरुषः कर्माधिकारी रागद्वेषौ सङ्गं फलकामनां चाकृत्वा निरहङ्कारस्सन् निरायासं स्वशक्त्यनुगुणमदुःखोदर्कमहिंसात्मकमनाशकं नित्यं कर्म निर्मोहस्सन्कुर्यात् । एतद्विपरीतं तु परित्यजेदिति ॥२५॥

मुक्तेति । अनहंवदनशीलोऽहमाढ्य उत्कृष्टमिदं कर्माहं करोमीत्येवमहङ्कारगर्भवाक्यप्रयोग- स्वभावरहित इत्यर्थः । धारणं शरीरेन्द्रियाद्यनवसादनम् । उद्यमो व्यापारः । निर्विकारो हर्षखेदरहि-

अनहंवदनशीलः, धृत्युत्साहसमन्वितः- धृतिर्धारणं उत्साह उद्यमस्ताभ्यां समन्वितस्संयुक्तो धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकारः, केवलं शास्त्रप्रमाणेन प्रयुक्तो न फलरागादिना यस्स निर्विकार उच्यते । एवम्भूतः कर्ता यस्स सात्त्विक उच्यते ॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥

रागीति । रागी रागोऽस्यास्तीति रागी, कर्मफलप्रेप्सुः कर्मफलार्थीत्यर्थः । लुब्धः परद्रव्येषु संजाततृष्णः, तीर्थादौ स्वद्रव्यापरित्यागी वा; हिंसात्मकः परपीडाकरस्वभावः, अशुचिर्बाह्याभ्यन्तरशौचवर्जितः, हर्षशोकान्वित इष्टप्राप्तौ हर्षः, अनिष्टप्राप्ताविष्टवियोगे च शोकः ताभ्यां समन्वितस्संयुक्तः; तस्यैव च कर्मणस्सम्पत्तिविपत्तिभ्यां हर्षशोकौ स्यातां, ताभ्यां संयुक्तो यः कर्ता स राजसः परिकीर्तितः ॥२७॥

अयुक्तः प्राकृतस्तब्धश्शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥

अयुक्त इति । अयुक्तो न युक्तः, न समाहितः, प्राकृत अत्यन्तासंस्कृतबुद्धिर्बालसमः, स्तब्धो दण्डवन्न नमति कस्मैचित् , शठो मायावी शक्तिगूहनकारी, नैकृतिकः परविभेदनपरः, अलसोऽप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी विषादवान् सर्वदाऽवसन्नस्वभावः, दीर्घ-

---

अहङ्काररहितः । कथं निर्विकारत्वसिद्धिरत आह—केवलमिति । यो हि फलरागादिना कर्मणि प्रवर्तते तस्य कर्मफलसिद्धौ हर्षः, तदसिद्धौ खेदश्च भवति । यः पुनश्शास्त्रप्रमाणेन कर्तव्यमित्येव कर्मणि प्रवर्तते, नतु फलमभिसन्धत्ते कथं तस्य फलसिद्ध्यसिद्धिप्रयुक्तहर्षखेदप्राप्तिः ? न कथमपीति भावः ॥२६॥

रागीति । हिंसात्मक इति । शाकपार्थिवादित्वादुत्तरपदलोपी समास इत्याह—परपीडाकरस्वभाव इति । हिंसाकर आत्मा यस्य स इति समासः । हिंसा पीडनमेवात्मा स्वभावो यस्य स हिंसात्मक इत्यपि वक्तुं शक्यम् । तथा हिंसायामात्मा मनो यस्य स हिंसात्मक इत्यपि वक्तुं शक्यते । एवं हर्षशोकयोर्वस्त्वन्तरविषयत्ववर्णनं नातीव युक्तमत आह—तस्यैव वेति । तस्यैवारब्धस्य कर्मणः सम्पत्तिविपत्त्योस्सिद्ध्यसिद्ध्योः ॥२७॥

अयुक्त इति । बालसम इति । विद्याविहीन इत्यर्थः । स्तब्धस्स्तम्भवत्स्थितः । यथा स्तम्भो(स्तम्भो)ऽनम्रस्सन्नेवावतिष्ठते तद्वदयमपीत्यर्थः । कस्मैचिदिति । पूज्यायेत्यर्थः । माया वञ्चना शक्तिस्सामर्थ्यम् । तस्यागूहनकारी प्रच्छादकः । स्वयं मायावीसन्नप्यमायावीव नटितुं शीलमस्येत्यर्थः । 'गूढविप्रियकृच्छठ' इति शास्त्रान्तरादिति भावः । विभेदनं मर्मोद्घाटनं हिंसनमेव वा ।

सूत्री च कर्तव्यानां दीर्घप्रसारणः सर्वदा मन्दस्वभावः, यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति; यश्चैवम्भूतः कर्ता स तामस उच्यते ॥२८॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय! ॥२९॥

बुद्धेरिति । बुद्धेर्भेदं धृतेश्चैव भेदं, गुणतस्सत्त्वादिगुणतस्त्रिविधं शृण्विति सूत्रोपन्यासः । प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत्पृथक्त्वेन विवेकतः । धनंजय! दिग्विजये मानुषं दैवं च प्रभूतं धनं जितवान्, तेनाऽसौ धनंजयः; तस्य सम्बुद्धिर्हे धनंजय अर्जुन! ॥२९॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ! सात्त्विकी ॥३०॥

प्रवृत्तिमिति । प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः शास्त्रविहितविषयः निवृत्तिं च निवृत्तिर्मोक्षहेतुस्सन्न्यासमार्गः; बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसन्न्यासमार्गावित्यवगम्यते । कार्याकार्ये विहितप्रतिषिद्धे लौकिके वैदिके वा शास्त्रबुद्धे कर्तव्याकर्तव्ये करणाकरण इत्येतत् । कस्य ? देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणां

---

निकृतिर्निकारोऽपकारस्तया दीव्यतीति नैकृतिकः । विषादोऽस्यास्तीति विषादी । अत इनिः। अवसन्नः खिन्नः । दीर्घप्रसारणो दीर्घालोचन इत्येतत् । तदेव विवृणोति—सर्वदेति । मन्दो निरुद्यमस्स्वभावो यस्य स मन्दस्वभावः । अत एवाद्य वा श्वो वा कर्तव्यं यत्कर्म तन्मासेनापि न करोति । एतेन 'सहसा विदधीत न क्रियामविवेकः परमापदां पद'मिति भारविवचनादनालोच्य कर्मकरणमयुक्तमिति कृत्वा कथं दीर्घसूत्रिणमिह तामसत्वेन कथितमिति शङ्का परास्ता । आलोच्यैव सम्यग्यदा कर्तव्यं तत्तदैव कुर्यात्, नतु दीर्घमालोचयन्कर्तव्यकर्मकालमतिपातयेदिति सिद्धत्वात् ॥२८॥

बुद्धेरिति । हे धनञ्जय ! अशेषेण पृथक्त्वेन प्रोच्यमानं बुद्धेर्धृतेश्चैव गुणतस्त्रिविधं भेदं शृणु। सूत्रोपन्यास इति । बुद्धिर्धृतिश्च गुणतस्त्रिविधेतीदं सूत्रभूतं वाक्यमित्यर्थः । प्रवृत्तिं च निवृत्तिं चेत्यादिवक्ष्यमाणग्रन्थस्तु तद्वृत्तिस्थानीय इति भावः । धनञ्जयेति सम्बुद्धिर्यथा बाह्यान्शत्रून् जित्वा त्वया धनं सम्पादितं, तथा कामादीनन्तश्शत्रूनपि जित्वा मोक्षस्सम्पादनीय इत्यभिप्रायगर्भा ॥२९॥

प्रवृत्तिमिति । हे पार्थ ! या बुद्धिः प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये बन्धं मोक्षं च वेत्ति सा सात्त्विकी भवति । बन्धहेतुरिति । देवत्वादिजन्मादिहेतुत्वादिति भावः । ननु प्रवृत्तिः प्रवर्तनं निवृत्तिर्निवर्तनमिति कुतो न व्याख्यायतेऽत आह—बन्धेति । बन्धं मोक्षं च या वेत्तीति वाक्येन समानवाक्यत्वात्प्रवृत्तिं च निवृत्तिं च वेत्तीति वाक्यस्य बन्धमोक्षहेतुकर्मसन्न्यासमार्गपरत्वमिति भावः। करणं क्रिया । अकरणं तूष्णींभावः । कस्येमे करणाकरणे इति पृच्छति—कस्येति । स राघवे—

भयाभये बिभेत्यस्मादिति भयं चोरव्याघ्रादि, न भयमभयं, भयं चाभयं च भयाभये, भयाभययोर्दृष्टादृष्टयोरेव कारण इत्यर्थः । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिस्सा पार्थ सात्त्विकी । तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेष एव बुद्धेः ॥३०॥

---

कर्मणामिति । यस्मिन्देशे यस्मिन्काले येषां कर्मणां शास्त्रतः करणमकरणं च युक्तं तत्सर्वं यथावद्वेत्तीत्यर्थः । भयाभयशब्दावत्र न धर्मपरौ । किंतु तद्धेतुपरावित्याह—बिभेत्यस्मादिति भयमिति । यस्माद्बिभेति तद्भयं, यस्मान्न बिभेति तदभयम् । किं तद्भयमत आह—चोरेति । आदिपदान्नरकादिग्रहणम् । अभयं पत्नीपुत्रसुकृतादि । दृष्टादृष्टयोरेवेति । दृष्टयोरदृष्टयोश्चेत्यर्थः । चोरव्याघ्रादिजन्यं भयं दृष्टं, नरकादिजन्यं त्वदृष्टं; तथा पत्न्यादिजन्यमभयं (भयराहित्यं) दृष्टं, सुकृतादिजन्यमभयमदृष्टमिति विवेकः । तयोः कारणे । तेऽपि कारणे दृष्टादृष्टे एव । दृष्टभयहेतोश्चोरव्याघ्रादेर्दृष्टकारणत्वाददृष्टभयहेतोर्नरकादेरदृष्टभयकारणत्वाच्च । एवं दृष्टाभयहेतोः पुत्रमित्रादेर्दृष्टकारणत्वाददृष्टाभयहेतोस्सुकृतादेरदृष्टाभयकारणत्वाच्च । तदेवं भयाभये या वेत्तीत्यस्य दृष्टादृष्टभयाभयकारणे या वेत्तीत्यर्थः फलितः ।

यथाश्रुतार्थे तु इदं भयमिदमभयमिति भयाभयरूपधर्मज्ञानस्य सर्वसाधारणत्वेन न तस्य सात्त्विकबुद्धिधर्मत्वं स्यादिति बोध्यम् । ननु चोरव्याघ्रादीन् भयहेतव इति, पुत्रमित्रादीनभयहेतव इति च सर्वे विदन्त्येवेति चेन्मैवम्—सत्यपि सर्वेषां दृष्टभयाभयहेतुवेदनेऽदृष्टभयाभयहेतुवेदनाभावादिति । ननु संसारो बन्धस्तदभावो मोक्ष इति सर्वसामान्यमेव ज्ञानमत आह—सहेतुकमिति । अविद्यारागादयो बन्धहेतवः, भक्तिज्ञानादयो मोक्षहेतव इति विवेकः । बन्धहेतुर्भयहेतुश्च करणात्मकः प्रवृत्तिमार्गः । मोक्षहेतुरभयहेतुश्चाकरणात्मको निवृत्तिमार्ग इति या वेत्ति सा बुद्धिस्सात्त्विकीति परमार्थः । यद्वाऽयं प्रवृत्तिमार्गः, अयं पुनर्निवृत्तिमार्गः; अस्मिन्देशे कालेऽस्य कर्मणः करणं श्रेयः, 'अस्याकरणं श्रेयः, इदं भयकारणमिदमभयकारणमयं बन्धहेतुरयं मोक्षहेतुरयं बन्धोऽयमेव मोक्ष इति प्रवृत्त्यादीन्यथावद्वेत्ति या बुद्धिस्सात्त्विकीति ।

ननु बुद्धिर्वेत्तीत्यस्य बुद्धिर्ज्ञानाश्रय इति ह्यर्थः । कर्तुः क्रियाश्रयत्वाद्वेदनकर्तृत्वाच्च बुद्धेः । कथं ज्ञानात्मिकायाः बुद्धेर्ज्ञानाश्रयत्वमत आह—तत्रेति । बुद्धिज्ञानयोर्मध्य इत्यर्थः । वेत्तीति धात्वर्थभूतं यज्ज्ञानं सा बुद्धेर्वृत्तिः । बुद्धिर्हि वेद्यात्मना परिणमते, सच परिणामो वृत्तिरित्युच्यते । साच वृत्तिः क्रियैवेति विदिधात्वर्थज्ञानत्वं बुद्धिवृत्तेरेव क्रियावाचित्वाद्धातूनाम् । ननु यदि बुद्धिवृत्तिरेव ज्ञानं, ननु बुद्धिस्तर्हि बुद्धिः केत्यत आह—बुद्धिस्त्विति । वृत्तिमती बुद्धिः, नतु वृत्तिः । तथाच बुद्धेर्वृत्तिमत्या वृत्त्याश्रयत्वस्योचितत्वाद्बुद्धेर्ज्ञानाश्रयत्वं युक्तमेवेति बुद्धिर्वेत्तीति सम्यगुक्तमिति भावः । प्रवृत्त्यादिविषयाकारपरिणामवती बुद्धिस्सात्त्विकीति परमार्थश्श्लोकस्य ।

यया धर्ममधर्मं च कार्यं चाऽकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिस्सा पार्थ ! राजसी ॥३१॥

ययेति । यया धर्मं शास्त्रचोदितमधर्मं च तत्प्रतिषिद्धं कार्यं चाकार्यमेव च पूर्वोक्ते एव कार्याकार्ये, अयथावन्न यथावत्सर्वतोऽनिर्णयेन न प्रजानाति या बुद्धिस्सा पार्थ राजसी ॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ ! तामसी ॥३२॥

अधर्ममिति । अधर्मं प्रतिषिद्धं विहितं धर्ममिति या मन्यते जानाति तमसाऽऽवृता सती, सर्वार्थान् सर्वानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतानेव विजानाति बुद्धिस्सा पार्थ ! तामसी ॥३२॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिस्सा पार्थ ! सात्त्विकी ॥३३॥

धृत्येति । धृत्या ययाऽव्यभिचारिण्या इति व्यवहितेन सम्बन्धो धारयते । किम् ?

---

नच बुद्धेरन्तःकरणस्य कर्तृत्वमयुक्तमिति वाच्यं, परिणामक्रियां प्रति कर्तृत्वस्य युक्तत्वात् । करणमपि चक्षुःपरिणामक्रियायां भवति हि कर्तृ । चक्षुर्घटरूपेण परिणमत इति प्रयोगात् । एतेन बुद्धेः क्षेत्रस्य वेत्तृत्वं कथं तस्य क्षेत्रज्ञधर्मत्वादिति शङ्का प्रत्युक्ता । विषयाकारपरिणाममात्रमेव वेत्तृत्वं बुद्धेरिहोक्तं, नतु ज्ञातृत्वमिति । यथा चक्षुर्घटाकारपरिणतमपि घटं न वेद तथा बुद्धिः प्रवृत्त्यादिविषयाकारपरिणतापि प्रवृत्त्यादीन् न वेदैव, किं त्वात्मैव परिणतां तां वेद परिणतं चक्षुरिवेत्यात्मैव प्रवृत्त्यादीन् वेत्ति । बुद्धिस्तु करणमेव । बुद्धिवृत्त्यैवात्मना प्रवृत्त्यादीनां विदितत्वात् ।

नच बुद्धिवृत्तेरेव करणत्वं न बुद्धेरिति वाच्यं, वृत्तिवृत्तिमतोरैक्यात् । नहि शस्त्रधारया भिनत्तीत्युक्तौ शस्त्रधाराया एव करणत्वं, नतु शस्त्रस्येति वक्तुं शक्यते । तस्माद्यया प्रवृत्त्यादीन् यथावद्वेत्ति पुरुषस्सा बुद्धिस्सात्त्विकीति श्लोकसारार्थः । या वेत्तीति बुद्धेर्वेत्तृत्वकथनं त्वौपचारिकं करणे कर्तृत्वस्योपचरितत्वात् । ननु भगवता यया वेत्तीति साक्षादेव कुतो नोक्तमिति चेदुच्यते—बुद्ध्युपाधिकृतमेव वेत्तृत्वधर्मं आत्मनि निर्धर्मक इति ज्ञापनार्थमिति । ननु ज्ञानं बुद्धिवृत्तिरस्तु, धृतिः पुनः केत्यत आह—धृतिरपीति ॥३०॥

ययेति । प्रजानातीति, पुरुष इति कर्तुश्शेषः । अत्र बुद्धेर्वेदनक्रियायां करणत्वमेवोक्तम्—ययेति । धर्माधर्मादिनिर्णयरहिता बुद्धी राजसीत्यर्थः ॥३१॥

अधर्ममिति । या तमसा आवृता अत एवाधर्मं धर्ममिति मन्यते सर्वार्थान् विपरीतांश्च मन्यते हे पार्थ ! सा बुद्धिस्तामसी । विपरीतबुद्धिस्तामसीत्यर्थः ॥३२॥

धृत्येति । पुरुष इति शेषः । योगेनाऽव्यभिचारिण्या यया धृत्या मनःप्राणेन्द्रियक्रियाः धारयते

मनःप्राणेन्द्रियक्रियाः- मनश्च प्राणश्चेन्द्रियाणि च मनःप्राणेन्द्रियाणि तेषां क्रियाश्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयते धारयति, धृत्या हि धार्यमाणा उच्छास्त्रमार्गविषया न भवन्ति योगेन समाधिना, अव्यभिचारिण्या नित्यसमाध्यनुगतयेत्यर्थः। एतदुक्तं भवति— अव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रिया धार्यमाणा योगेन धारयतीति यैवंलक्षणा धृतिस्सा पार्थ! सात्त्विकी ॥३३॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन !
प्रसङ्गेन फलाकांक्षी धृतिस्सा पार्थ! राजसी ॥३४॥

ययेति। यया तु धर्मकामार्थान्- धर्मश्च कामश्चार्थश्च धर्मकामार्थास्तान्धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यमेव कर्तव्यरूपानवधारयति हे अर्जुन! प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गः तेन तेन प्रसङ्गेन फलाकांक्षी च भवति यः पुरुषः तस्य या धृतिस्सा पार्थ! राजसी भवति ॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च।
न विमुञ्चति दुर्मेधा धृतिस्सा पार्थ! तामसी ॥३५॥

ययेति। यया स्वप्नं निद्रां भयं त्रासं शोकं विषादं विषण्णतां मदं विषयसेवा-

---

हे पार्थ! सा सात्त्विकी भवति। धारयति नियमयतीत्यर्थः। कुत इत्यत आह—उच्छास्त्रमार्ग-प्रवृत्तेरिति। उत्सृष्टं शास्त्रं येन स उच्छास्त्रः, स चासौ मार्ग उच्छास्त्रमार्गः- शास्त्रविरोधिमार्ग इत्यर्थः। तत्र प्रवृत्तेस्सकाशादव्यभिचारिण्या व्यभिचारशून्यया। केनास्या आशङ्कितो व्यभिचारोऽत आह— योगेनेति। योगव्यभिचारशून्ययेत्यर्थः। फलितमाह—नित्येति। सदापि समाधानवत्येत्यर्थः। अव्यभिचारिण्या ध्रुवया, तत्र हेतुस्तु योगेनेति व्याख्यानान्तरम्। योगेन हेतुना अव्यभिचारिण्येत्यर्थः। अस्मिन्नेव व्याख्यानान्तरेऽभिप्रायमाह—एतदुक्तमित्यादिना। अव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रिया यथा धार्यमाणा भवेयुस्तथा योगेन धारयतीत्यन्वयः ॥३३॥

ययेति। हे अर्जुन! पुरुषो यया धृत्या तु धर्मकामार्थान् धारयते, प्रसङ्गेन फलाकांक्षी च भवति हे पार्थ! सा धृतिः राजसी भवति। अर्थो धनम्। प्रसङ्गेन धर्मादिधारणप्रसङ्गेनेत्यर्थः। फलाकांक्षी सन् धर्मकामार्थसिद्ध्यर्थं मनःप्राणेन्द्रियक्रिया यया धारयति पुरुषस्सा धृती राजसीत्यर्थः। न च धर्मकामार्थान्मनसि कर्तव्यरूपानवधारयतीत्येवाचार्यैर्भाषितमिति वाच्यं मनस्यवधारणस्यैव मानसिकचेष्टाधारणत्वात्तत्पूर्वकत्वाच्च प्राणेन्द्रियचेष्टाधारणस्य, तस्माद्भाष्यार्थसिद्ध एव मदुक्तार्थः ॥३४॥

ययेति। दुर्मेधा यया स्वप्नं भयं शोकं विषादं मदमेव च न विमुञ्चति हे पार्थ! सा धृतिस्तामसी भवति। विषयेति। आत्मनो विषयसेवामेव बहुमन्यमानस्सन् येन मत्त इव भवति स मद इत्यर्थः। स्वप्नभयादय एव मया नित्यं कर्तव्या इति मनस्यनुसन्धाय तदर्थं मनःप्राणेन्द्रियक्रिया

मात्मनो बहुमन्यमानो मत्त इव मदमेव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन् विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषो यो तस्य धृतिर्या सा तामसी मता ॥३५॥

गुणभेदेन क्रियाणां कारकाणां च त्रिविधो भेद उक्तः। अथेदानीं सुखस्य च फलस्य च त्रिविधो भेद उच्यते—

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ !
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥

सुखमिति।- सुखं त्विदानीं त्रिविधं शृणु! समाधानं कुर्वित्येतत्। मे मम भरतर्षभ! अभ्यासात्परिचयादावृत्तेः, रमते रतिं प्रतिपद्यते यत्र यस्मिन् सुखानुभवे दुःखान्तं च दुःखावसानं दुःखोपशमनं च निगच्छति निश्चयेन प्राप्नोति ॥३६॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥

यदिति। यत्तत्सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृ-

---

यया धारयति पुरुषस्सा धृतिस्तामसीत्यर्थः। एवंविधाया धृतेर्बुद्धिवृत्तेर्दुष्टत्वाद्दुर्बुद्धेः पुरुषस्यैवेदृशी धृतिरित्याह— दुर्मेधा इति। दुष्टा मेधा बुद्धिर्यस्य स दुर्मेधाः। 'नित्यमसिच् प्रजामेधयो'रित्यसिच्। फलमनभिसन्धाय स्वप्नभयादिकं विहाय मोक्षार्थं मन आदिक्रियाः पुरुषेण धृत्या धारयितव्या मुमुक्षुणेति श्लोकत्रयार्थः ॥३५॥

सुखमिति। सुखस्य च फलस्येति। फलभूतस्य सुखस्येत्यर्थः। हे भरतर्षभ! इदानीं त्रिविधं सुखं मे वाक्यादिति शेषः। शृण्ववधारय। ननु शृण्वित्युक्तिर्व्यर्थेत्यत आह— समाधानं कुर्विति। चित्तसमाधानार्थं वक्ष्यमाणार्थे शृणुशब्दप्रयोग इति भावः। तत्र सात्त्विकं सुखं लक्षयति सार्धश्लोकेन— अभ्यासादिति। पुरुष इति, चित्तमिति वा शेषः। यत्राभ्यासाद्रमते दुःखान्तं च निगच्छति, तच्चाग्रे विषमिव भाति परिणामेऽमृतोपमं भवति तच्चात्मबुद्धिप्रसादजं सुखं सात्त्विकं प्रोक्तम्। आवृत्तेरिति। पुनःपुनरित्यर्थः। एतेन सुखस्यास्याक्षणिकत्वं गम्यते। नहि विषयसुखे क्षणिके असकृद्रतिरुपपद्यते। तस्माच्चिरकालावस्थायी स्वात्मसुखानुभव एवेह विवक्षित इति ज्ञेयम्। तत एव दुःखान्तप्राप्तिसम्भवात्। विषयसुखमनुभवन् हि पुरुषः दुःखाद्दुःखमेव गच्छति, न तु दुःखान्तम्। प्रारब्धविषयसुखनाशात्सुखान्तरालाभाच्च दुःखमेव हि स प्रपद्यते ॥३६॥

यदिति। यत्तदित्यत्र तच्छब्दः प्रसिद्धार्थकः। अग्रे इति। उत्पत्तेः प्रागित्यर्थः। तदेवाह— ज्ञानेति। ज्ञानं श्रवणादिकं वैराग्यं विषयासक्त्यभावः। ध्यानमुपासनं, समाधिश्चित्तैकाग्र्यम्। तेषामारम्भदशायाम्। दुःखात्मकं दुःखस्वभावं दुःखस्वरूपं वा, कष्टसाध्यत्वादिति भावः। इदमेवाह— अत्यन्तेति। परिणामः फलदशा। तदैव सुखस्य जातत्वादाह— ज्ञानवैराग्यादिपरिपाकज-

तोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः। आत्मनो बुद्धिरात्मबुद्धिः, आत्मबुद्धेः प्रसादो नैर्मल्यं सलिलस्येव स्वच्छता; ततो जातमात्मबुद्धिप्रसादजमात्मविषया वाऽऽत्मावलम्बना वा बुद्धिरात्मबुद्धिः तत्प्रसादप्रकर्षाद्वा जातमित्येतत् । तस्मात्सात्त्विकं तत् ॥३७॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

विषयेति । विषयेन्द्रियसंयोगाज्जायते यत्सुखं तत्सुखमग्रे प्रथमक्षणेऽमृतोपममृतसम परिणामे विषमिव बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥

---

मिति । कस्मादिदं जायते अत आह—आत्मबुद्धीति । ज्ञानादिभिरात्मोपाधिभूतबुद्धेः प्रसादे जाते सति तत इदं जायत इत्यर्थः ।

आत्मबुद्धेरित्यस्यार्थान्तरमाह—आत्मेति । आत्मैव विषयो गोचर आत्मविषयः तदाकारा अखण्डज्ञानाकारेत्यर्थः । अर्थान्तरमाह—आत्मविषयालम्बनेति । आत्मैव विषय आत्मविषयस्स आलम्बनं यस्यास्सा तथोक्ता । आत्मनिष्ठेत्यर्थः । आत्मोपाधिभूता आत्माकारा आत्मालम्बना वा बुद्धिरात्मबुद्धिरित्यर्थत्रयं फलितम् । तस्मादिति । आत्मबुद्धिप्रसादजातत्वादित्यर्थः । बुद्धिप्रसादस्य सत्त्वगुणमयत्वादिति भावः । एतेन ज्ञानादिसाधननिर्मलीकृतात्मबुद्धिगोचरात्मसुखं सात्त्विकमिति सिद्धम् ॥३७॥

विषयेति । यद्विषयेन्द्रिसंयोगाज्जायत इति शेषः । तत्सुखमग्रेऽमृतोपमं परिणामे विषमिव भवति तत्सुखं राजसं स्मृतम् । अग्रेऽमृतोपमं परिणामे विषायितं च विषयेन्द्रियसंयोगजं सुखं राजसमित्यर्थः । विषयानुभवसुखं राजसमिति यावत् । विषयाणामिन्द्रियैस्सह संयोगः विषयैस्सहेन्द्रियाणां संयोगः विषयाणामिन्द्रियाणां च परस्परं संयोग इति वा विषयेन्द्रियसंयोगः । श्रोत्रादिभिरिन्द्रियैश्शब्दादिषु विषयेष्विष्टेषु गृह्यमाणेषु सत्सु यत्सुखं बुद्धौ जायते तदित्यर्थः । प्रथमक्षण इति । उत्पत्तिक्षण इत्यर्थः । अमृतोपमममृततुल्यम् । बलेति । विषयसुखविशेषस्य स्त्रीसम्भोगजसुखस्य बलादिनाशहेतुत्वं प्रसिद्धमेवेति भावः । बलं देहशक्तिः; वीर्यमिन्द्रियशक्तिः; रूपं सौन्दर्यं; प्रज्ञा सदसद्विवेचनचातुर्यं ग्रहणशक्तिर्वा; मेधा धारणशक्तिः; धनं प्रसिद्धमुत्साह उद्यमः; एतेषां हानिं प्रति हेतुत्वात् । दृश्यन्ते हि स्त्रीलम्पटा बलवीर्यादिरहिताः । एवं बलवीर्यादिनाशकत्वेन विषतौल्यमुक्त्वा प्रकारान्तरेण विषतौल्यमाह—अधर्मेति । दुःखहेतुत्वरूपमपि विषतौल्यमस्तीत्यर्थः । परस्त्रीसम्भोगादिजन्यसुखस्य, दिवाग्रहणामावास्यादिसामायिकस्वस्त्रीसम्भोगजन्यसुखस्य चाधर्मत्वेन नरकादिहेतुत्वमस्तीति भावः । नरकं यमलोकयातना । आदिपदात्स्थावरादिजन्मप्राप्तिः । तदुपभोगेति । विषयोपभोगेत्यर्थः । परिणामः परिपाकः, तद्रूपोऽन्तो नाशस्तस्मिन्परिणामान्ते । नचैवं स्त्रीसुखमेव राजसं,

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्राऽऽलस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

यदिति । यदग्रे चानुबन्धे चावसाने चोत्तरकाले सुखं मोहनं मोहकरमात्मनः, निद्रालस्यप्रमादोत्थं- निद्रा चालस्यं च प्रमादश्चेत्येतेभ्यस्समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

अथेदानीं प्रकरणोपसंहारार्थश्श्लोक आरभ्यते—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैः ॥४०॥

नेति । न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादिषु सत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं दिवि देवेषु वा पुनस्सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैस्सत्त्वादिभिर्मुक्तं परित्यक्तं यत्स्याद्भवेन्न तदस्तीति पूर्वेण सम्बन्धः ॥४०॥

---

ननु विषयसुखसामान्यमिति वाच्यं, सर्वस्मिन्नपि विषयसुखे अग्रेऽमृतोपमत्वस्य परिणामे विषोपमत्वस्य विषयेन्द्रियसंयोगजन्यत्वस्य च सत्त्वात् । कथमिति चेदुच्यते—चक्षुषा रम्यं वस्तु पश्यन् पुरुष मादौ सुखमनुभवन् क्षणान्तर एव तद्वस्त्वलाभात्तद्वस्तुपारोक्ष्याच्च खिद्यते । एवं श्रोत्रेण गानं शृण्वन्नपि, तथा जिह्वया चूतफलादिरसमनुभवन् पुरुषोऽनुभवकाले सुखमनुभवन्नपि पश्चात्प्रकृतरसनाशाद्रसान्तरालाभालाभे वा तदुपभोगशक्त्यभावात्, बलादत्यशनेऽजीर्णादिरोगसम्भवाच्च खिद्यते । एवं स्पर्शादिष्वप्यूह्यम् । तस्मात्सर्वमपि वैषयिकं सुखं राजसम् ॥३८॥

यदिति । निद्रालस्यप्रमादोत्थं यत्सुखमग्रे चानुबन्धे चात्मनो मोहनं तत्सुखं तामसमुदाहृतं शिष्टैरिति शेषः । मोहो वैचित्त्यम् । यत्सुखमनुभवन्नपि पुरुषोऽहमिदं सुखमनुभवामीति न प्रत्येति; पश्चाच्च नानुसन्धत्ते तत्सुखं तामसं, तच्च निद्रादिभिर्भवत्यात्मनः प्रमातुः, ननु चिन्मात्रस्य तत्र मोहासम्भवात् । प्रमाता हि निद्रादिजं सुखमनुभवन्नचेतन इव भवति । नच निद्रासुखं ब्रह्मानन्द एवेति कथं तस्य तामसत्वमिति वाच्यं, अज्ञानावृतत्वात्तस्य । नहि समाधाविव निद्रायामनुभूयमानस्याप्यात्मानन्दस्य प्रकाशोऽस्ति । तस्मात्समाधौ प्रकाशमान आत्मानन्दस्सात्त्विकं सुखं निद्रादावप्रकाशमान आनन्दस्तामसं सुखमिति बोध्यम् । आलस्यं मान्द्यं तूष्णींभाव इति यावत् । तूष्णींभावसमये ह्यन्तर्मुखमनोवृत्तावात्मानन्दः प्रतिफलति । तमानन्दमनुभवन्नपि सोऽलसोऽज्ञानादहमानन्दमनुभवमीति न प्रत्येति; किंतु मूढ इव वर्तते । प्रमादोऽनवधानता । चित्तेऽनवहिते सति कदाचिदात्मानन्दः प्रतिफलन्नपि न प्रकाशते । न चानुभवदशायां निद्रादिजन्यसुखस्य मोहनत्वमस्तु नाम कथं पुनः परिपाकदशायामिति वाच्यं, निद्रोत्थितस्य पुरुषस्यापि किञ्चित्कालं मोहस्य दर्शनात् ॥

नेति । पृथिव्यां वा दिवि देवेषु वा पुनर्यत्सत्त्वं प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं स्यात्तन्नास्ति । यत्सत्त्वं प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं स्यात्तत्पृथिव्यां वा दिवि देवेषु वा पुनर्नास्तीति वा । पृथिव्यां

सर्वस्संसारः क्रियाकारकफललक्षणस्सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितस्समूलोऽनर्थ उक्तः । वृक्षरूपकल्पनया च 'ऊर्ध्वमूल'मित्यादिना, तं च 'असङ्गशस्त्रेण दृढेन छित्त्वा ततः पदं तत्परिमार्गितव्य'मिति चोक्तम् । तत्र च सर्वस्य त्रिगुणात्मकत्वात्संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिस्स्यात्तथा वक्तव्यम् । सर्वश्च गीताशास्त्रार्थ उपसंहर्तव्यः । एतावानेव च सर्ववेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं च 'ब्राह्मणक्षत्रियविशा'मित्यादिरारभ्यते—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप !
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥

ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियविशां, शूद्राणां च शूद्राणामसमासकरणमेकजातित्वे सति वेदानधिकाराद्ध परन्तप ! कर्माणि

---

वर्तमानेषु मनुष्यादिषु प्राणिषु दिवि वर्तमानेषु देवेषु च सत्त्वादिगुणत्रयमुक्तः कोऽपि प्राणी नास्तीत्यर्थः । चराचरात्मकं देवमनुष्यपश्वाद्यात्मकं तृणवीरुद्गुल्माद्यात्मकं च सर्वमपि प्राणिजातं ब्रह्मादिस्तम्बपर्यन्तं सत्त्वादिगुणत्रययुक्तमेवेति भावः । वा पुनश्शब्दार्थमाह—अन्यद्वाऽप्राणिजातमिति । अचेतनेष्वपि मणिलोहपाषाणादिषु सात्त्विकत्वादिभेददर्शनादिति भावः । प्रकृतिर्मूलकारणं माया, त्रिगुणात्मिका वैष्णवी शक्तिः ॥४०॥

ब्राह्मणेति । अनर्थस्सर्वस्संसार उक्तः । वृक्षरूपकल्पनया चोर्ध्वमूलमित्यादिना संसार उक्तः । पञ्चदशाध्याय इति शेषः । तत्र चेति । एवंसतीत्यर्थः । सर्वस्येति । सर्वस्य जगतस्त्रिगुणात्मकत्वात्संसारस्यापि त्रिगुणात्मकत्वात्संसारकारणस्य गुणत्रयस्य तदात्मकाज्ञानस्य वा निवृत्तिः कथं स्यात् ? न कथमपीत्यर्थः । नच ज्ञानादिना स्यादिति वाच्यं, तस्यापि त्रिगुणात्मकत्वात् । नहि त्रिगुणात्मकं ज्ञानादिकं त्रिगुणात्मकं संसारं निवर्तयेति भावः । तन्निवृत्तिस्तदनुपपत्तिनिवृत्तिः । तत्कर्तव्यं तथा वक्तव्यमित्यर्थः । यथा येन कारणेन तन्निवृत्तिस्संसारनिवृत्तिस्स्यात्तत्कारणं वक्तव्यमिति वा । तद्वक्तव्यमित्येवमर्थं सर्वश्च गीताशास्त्रार्थ उपसंहर्तव्य इत्येवमर्थं पुरुषार्थमिच्छद्भिरनुष्ठेय एतावानेव सर्ववेदस्मृत्यर्थ इत्येवमर्थं च ब्राह्मणक्षत्रियविशामित्यादिर्ग्रन्थ आरभ्यते भगवतेति शेषः । हे परन्तप ! ब्राह्मणक्षत्रियविशां शूद्राणां च कर्माणि स्वभावप्रभवैर्गुणैः प्रविभक्तानि । विशो वैश्याः । ननु ब्राह्मणक्षत्रियविट्छूद्राणामिति समासः कुतो न कृतः ? चत्वारो हि मनुष्यजातीया अत आह—शूद्राणामिति । ब्राह्मणक्षत्रियविशो हि द्विजत्वाद्वेदाधिकारिणः । शूद्रास्तु न तथेत्यतश्शूद्राणां समासाकरणमित्यर्थः । एकजातित्वे सतीति । वेदाधिकाराभावे हेतुः- 'जन्मना जायते शूद्रः कर्मणा जायते द्विज' इति स्मरणाच्छूद्रस्यैकजातित्वम् । एकं जन्मैव जातिर्येषां ते एकजातयः । द्वे जन्मनी जाती येषां ते द्विजातयः । तथा चैकजातेश्शूद्रस्योपनयनादिसंस्कारकृतकर्मरूपजन्माभावान्

प्रविभक्तानीतरेतरविभागेन व्यवस्थापितानि। केन? स्वभावप्रभवैर्गुणैस्स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः शमदमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम्। अथ वा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तम उपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः- प्रशान्त्यैश्वर्येहामूढस्वभावदर्शनाच्चतुर्णाम्। अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तस्स्वभावः स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः, गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः।

---

वेदाधिकारः। उपनयनादिना संस्कृतो हि वेदेऽधिकरोति। अत एव स्त्रीणामपि न वेदाधिकारः- उपनयनादिसंस्काराभावात्। अत एव स्मर्यते—'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति। द्विजबन्धवस्तन्तुमात्रधरा रथकारादयः। इतरेतरविभागेनेति। परस्परासाङ्कर्येणेत्यर्थः। शमादीनीत्यादिपदाच्छौर्यकृषिसेवाग्रहणम्। यद्वा शमो दम इत्यादिश्लोकत्रयोक्तानां दमादीनां ग्रहणम्। ब्राह्मणादीनामित्यादिपदात्क्षत्रियविट्छूद्रग्रहणम्। सत्त्वादिगुणवशाद्ब्राह्मणादीनां शमादिकर्माणि पृथगवस्थितानीत्यर्थः। ननु गुणानां प्रकृतिप्रभवत्वकथनं व्यर्थं प्रसिद्धत्वादत आह—अथ वेति। स्वभावानां प्रभवाः कारणानि स्वभावप्रभवाः। ब्राह्मणादीनां चतुर्णां ये परस्परविलक्षणाश्चत्वारस्स्वभावाः। तद्धेतुभूता इत्यर्थः।

ननु त्रयाणां गुणानां कथं स्वभावचतुष्टयहेतुत्वमत आह—ब्राह्मणेत्यादि। सत्त्वगुणाद्ब्राह्मणस्वभावो जायते, सत्त्वोपसर्जनाद्रजोगुणात्क्षत्रियस्वभावः, तमोगुणोपसर्जनाद्रजोगुणाद्वैश्यस्वभावः, रजोगुणोपसर्जनात्तमोगुणाच्छूद्रस्वभाव इत्यर्थः। सत्त्वमुपसर्जनमप्रधानं यस्य तत्सत्त्वोपसर्जनम्। स्वो भावस्स्वभावः। स्वासाधारणो धर्मः। स्वभावानेव दर्शयति—प्रशान्तीति। प्रशान्तिस्वभावो ब्राह्मणस्य। ऐश्वर्यस्वभावः क्षत्रियस्य। ईहास्वभावो वैश्यस्य। मूढस्वभावश्शूद्रस्य इति विवेकः। ईहा धनार्जनप्रवृत्तिः। ननु ब्राह्मणादीनां गुणैः कर्माणि व्यवस्थापितानीत्यनेनैव तत्तत्स्वभावहेतुत्वस्य गुणानां सिद्धत्वाद्व्यर्थमेव स्वभावप्रभवत्वविशेषणमित्यतः पक्षान्तरमाह—अथ वेति। प्रारब्धं कर्मेह स्वभावशब्दार्थः। ब्राह्मणादीनां स्वस्वप्रारब्धकर्मवशात्सत्त्वादयो गुणाः प्रादुर्भवन्ति; तैश्च गुणैस्तत्तच्छमादिकर्माणि प्रविभक्तानीत्यर्थः। प्राणिनां जन्मान्तरकृतसंस्कारो वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तस्सन् स्वभाव इत्युच्यते। सञ्चितकर्मव्यावृत्त्यर्थं सन्नन्तम्। क्रियमाणस्य कर्मणस्समाप्त्यनन्तरमेव नाशात्संस्कार इत्युक्तम्। जन्मान्तरीययज्ञादिकर्मजन्यधर्मादिसंस्कार इत्यर्थः।

ननु गुणानां स्वभावप्रभवत्वं कुतो ज्ञायते? अत आह—गुणेति। प्रादुर्भाव उत्पत्तिः। नहि कारणं विना गुणप्रादुर्भावो भवतीत्यर्थः। ब्राह्मणानां सत्त्वगुणप्रादुर्भावे, क्षत्रियादीनां रजआदिप्रादुर्भावे च नियामकः स्वभावविशेष एव; कथमन्यथा शूद्राणामपि सत्त्वगुणो नोदीयादिति भावः।

'स्वभावः कारण'मिति च कारणविशेषोपादानम् । एवं स्वभावप्रभवैः प्रकृतिप्रभवैस्सत्त्वरजस्तमोभिर्गुणैस्स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि ।

ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति ? नैष दोषः-- शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि; न गुणानपेक्षयैवेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते ॥४१॥

कानि पुनस्तानि कर्माणीत्युच्यन्ते—

> शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च ।
> ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥४२॥

शम इति । शमो दमश्च यथाऽऽख्यातार्थौ, तपो यथोक्तं शारीरादि, शौचं व्याख्यातं, क्षान्तिः क्षमा, आर्जवमृजुतैव च, ज्ञानं, विज्ञानं, आस्तिक्यमास्तिकभावश्श्रद्दधानताऽऽगमार्थेषु, ब्राह्मं कर्म ब्राह्मणजातेः कर्म ब्राह्मं कर्म स्वभावजम् । यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥४२॥

---

ननु गुणैः कर्माणि प्रविभक्तनीत्येवालं किमिति स्वभावप्रभवत्वनिर्देशेनेत्यत आह—स्वभावः कारणमिति । ब्राह्मणादीनां गुणैश्शमादिकर्मप्रविभागे को हेतुरिति कारणशङ्कायास्समाधानार्थं स्वभावप्रभवैरित्युक्तमिति भावः । यद्वा तादृशा गुणाः कुतः प्रादुर्भूता इत्यत उक्तम्—स्वभावप्रभवैरिति, स्वकारणानुरूप्येणेति । स्वकारणभूतस्वव्यापारानुसारेणेत्यर्थः । ननु ब्राह्मणानां शमादीनि कर्माणीत्येवं शास्त्रमेव तत्तद्वर्णानां तानितानि कर्माणि व्यवस्थापयतीति कृत्वा शास्त्रेणैव प्रविभक्तानीति वक्तव्ये कथमुक्तं गुणैः प्रविभक्तानीति पृच्छति—नन्विति । परिहरति—नेति । सत्त्वादिगुणप्रविभक्तान्येव कर्माणि शास्त्रं व्यवस्थापयतीति न दोष इत्यर्थः । सत्त्वगुणवशाद्ब्राह्मणस्य शमादीनि कर्माणि भवन्तीत्येवं शास्त्रं बोधयति सत्त्वादिगुणानपेक्ष्यैव, नतुताननपेक्ष्येति भावः ।

गुणैस्सह कर्माणि शास्त्रैः प्रविभक्तानीति रामानुजः, तन्मन्दम्—शास्त्रैरिति मूलाद्बहिःकल्पनस्यायुक्तत्वात् । कर्मप्रविभाजकमुख्यकर्तृभूतगुणानामप्रधाने तृतीयाकल्पनस्य चायुक्तत्वात्॥४१॥

शम इति । शम इत्यादिकमास्तिक्यान्तं ब्राह्मं स्वभावजं कर्म भवति । ब्राह्मणस्य शमादीनि स्वाभाविकानि कर्माणीत्यर्थः । सत्त्वगुणप्रयुक्तत्वाच्छमादीनामिति भावः । शमोऽन्तरिन्द्रियनिग्रहः, दमो बहिरिन्द्रियनिग्रहः, तपः ब्रह्मचर्यस्वाध्यायाभ्यसनमनःप्रसादादिकं, शौचं मृज्जलाभ्यां प्रक्षालनं बाह्यशौचं, रागादिदोषापनयनमान्तरशौचं, ज्ञानमात्मादिपदार्थज्ञानं, विज्ञानं तस्यानुभवापादनम् । अस्ति दिष्टमिति मतिर्यस्य स आस्तिकः, तस्य भाव आस्तिक्यं; श्रद्दधानता श्रद्धालुता । आगमार्थे शास्त्रोक्तार्थे, शास्त्रं हि प्रमाणमास्तिकानाम् । 'ब्रह्मा विप्रः प्रजापति'रिति कोशाद्ब्रह्मा ब्राह्मणः तस्येदं ब्राह्मम् ॥४२॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

शौर्यमिति । शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यं, धृतिर्धारणं सर्वावस्थास्वनवसादो भवति यया धृत्योत्तम्भितस्य, दाक्ष्यं दक्षस्य भावस्सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः, युद्धे चाप्यपलायनमपराङ्मुखीभावश्शत्रुभ्यः, दानं देयद्रव्येषु मुक्तहस्तता, ईश्वरभावश्चेश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति, क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥४३॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

कृषीति । कृषिगौरक्ष्यवाणिज्यं- कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं, कृषिर्भूमेर्विलेखनं, गौरक्ष्यं गा रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः । वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम् । परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलधर्मायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त' इत्यादिस्मृतिभ्यः । पुराणे च वर्णिनामाश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्तरात्त्विदं वक्ष्यमाणं फलमुच्यते—

स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

स्वे स्वे इति । स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानु-

---

शौर्यमिति । शौर्यं पराभिभवनसामर्थ्यं, तेजः परैरप्रधर्ष्यत्वम् । का सा धृतिरत आह—सर्वेति । उत्तम्भितस्योत्तैस्तम्भितस्य । अपराङ्मुखीभावः पृष्ठाप्रदर्शनमित्यर्थः । दानं द्रव्यत्यागः । प्रभुशक्तिर्नियमनशक्तिः । नन्वीश्वरधर्मोऽयं, न जीवधर्मोऽत आह—ईशितव्यान्प्रतीति । स्वपरिपाल्यप्रजाः प्रतीत्यर्थः । यद्वा स्वपूज्ये देवब्राह्मणेशनं कथं क्षत्रियस्येत्यत आह—ईशितव्यान्प्रतीति ॥

कृषीति । कृषिगौरक्ष्यवाणिज्यमिति समाहारद्वन्द्वः । विलेखनं हलादिना भेदनम् । परिचर्येति । पूर्वोक्तब्राह्मणादिवर्णत्रयशुश्रूषैव शूद्रस्य स्वाभाविकं कर्म ॥४४॥

स्वे स्व इति । उक्तवक्ष्यमाणयोस्सङ्गतिप्रदर्शनायाह —एतेषामिति । अनुष्ठातुः कर्तुः पुरुषस्य वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचर्यादयः, प्रेत्य प्रकृतशरीरं विहाय, कर्मफलं स्वर्गं, शेषेण सुकृतशेषेण, विशिष्टा उत्कृष्टाः; देशः काश्यादिः, जातिर्ब्राह्मणादिः, वित्तं धनं, मेधा बुद्धिः, विशिष्ट

ज्ञानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरोऽधिकृतः पुरुषः । किं स्वकर्मानुष्ठानत एव साक्षात्संसिद्धिः ? न, कथं तर्हि ? स्वकर्मनिरतस्सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ! ॥४५॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥

यत इति । यतो यस्मात्प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वराद्भूतानां प्राणिनां स्यात्, येनेश्वरेण सर्वमिदं जगत्ततं व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तमीश्वरमभ्यर्च्य पूजयित्वाऽऽराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः ॥

---

देशादयो यस्य । तस्माद्विशिष्टदेशजातिकुलधर्मायुश्श्रुतवृत्तवित्तसुखमेधसः पुरुषात्सकाशाज्जन्म प्रतिपद्यन्ते जायन्ते लोकफलभेदविशेषस्मरणात् । लोकभेदस्स्वर्गादिः, फलभेदो देवत्वादिः, तद्विशेषाणां स्मरणात् । एवं यथोक्तकर्मानुष्ठानात्स्वाभाविकं फलमनुष्ठातुः प्रदर्श्य प्रकृतमाह—कारणान्तरात्त्विति । तेषामेव कर्मणामीश्वराराधनबुध्या करणं कारणान्तरमिति बोध्यम् । संसिद्धिशब्दो न मोक्षपरः । 'नास्त्यकृतः कृतेन' इत्यादिश्रुतिभिः कर्मणस्साक्षान्मोक्षहेतुत्वस्य दूषितत्वात् । अतोऽर्थान्तरमाह—ज्ञाननिष्ठायोग्यतालक्षणामिति । ज्ञाननिष्ठायोग्यत्वमेव संसिद्धिरित्यर्थः । ननु किं सर्वोपि पुरुषश्शमाद्यनुष्ठानात्संसिद्धिं लभते ? नेत्याह—अधिकृतपुरुष इति । यो यो यत्रयत्राधिकृतस्स स तत्कर्म कृत्वा संसिद्धिं लभत इत्यर्थः । यद्वा किं सन्न्यासिनामपि कर्मानुष्ठानात्संसिद्धिः ? नेत्याह—अधिकृतपुरुष इति । सन्न्यासिनां हि ज्ञाननिष्ठायामेवाधिकारान्न तेषां कर्मप्रसङ्ग इति भावः ॥४५॥

यत इति । श्लोकमवतारयति । किमिति । ननु ज्ञाननिष्ठायोग्यत्वलक्षणसंसिद्धिरपि स्वकर्मानुष्ठानमात्रादेव भवति किमिति पृच्छति—किं स्वकर्मेति । लभत इति, पुरुष इति च शेषः । परिहरति—नेति । न लभत इत्यर्थः । तर्हि कथं लभत इति पृच्छति—कथं तर्हीति । स्वस्वविहितकर्मानुष्ठानमात्रादेव न संसिद्धिलाभः पुरुषस्य, किन्त्वीश्वराराधनबुध्या स्वस्वविहितकर्मानुष्ठानात्संसिद्धिलाभ इत्याह—यत इति । 'यतो वा इमानि भूतानि जायन्त इति श्रुत्याऽऽह—प्रवृत्तिरुत्पत्तिरिति । भवन्तीति भूतानि कार्याणि पृथिव्यादीनि भौतिकानि च चेतनाचेतनानि सर्वाण्यपीत्यर्थः । प्रवृत्तिशब्दस्योत्पत्त्यर्थवर्णनं नातीव युक्तमित्यर्थान्तरमाह—चेष्टेति । अस्मिन्पक्षे भूतशब्दो ब्रह्मादिस्तम्बपर्यन्तप्राणिपर इत्याह—प्राणिनामिति । अन्तर्भूतानां हृदि स्थित्वा प्रत्यग्रूपेण यमयतीत्यन्तर्यामी । 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इत्युक्तत्वात् । 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' इति वक्ष्यमाणत्वाच्च, 'यो विज्ञाने तिष्ठन्'नित्याद्यन्तर्यामिब्राह्मणाच्च । ईश्वरप्रेरणवशादेव भूतानि तथातथा प्रवर्तन्त इत्यर्थः । व्याप्तमिति । अन्तःपुरुषरूपेण बहिः परमात्मरूपेण चेश्वरेण व्याप्तं समस्तं जगदित्यर्थः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुतेः । यद्वा चैतन्यरूपेण येन व्याप्तमित्यर्थः । सर्व-

यत एवमतः—

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥

श्रेयानिति । श्रेयान्प्रशस्यतरः, स्वो धर्मस्स्वधर्मः, विगुणोऽपीत्यपिशब्दो द्रष्टव्यः, परधर्मात्स्वनुष्ठितात्, स्वभावनियतं स्वभावेन नियतं यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति । यथा विषजातस्येव क्रिमेर्विषं न दोषकरं, तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापम् ॥४७॥

---

व्यापित्वाच्चैतन्यस्य सद्रूपस्य । एतद्व्याप्तिवशादेव हि सर्वस्यास्तिभातिव्यवहारः । प्रतिवर्णं वर्णो वर्णः ब्राह्मणादिचातुर्वर्ण्यमित्यर्थः । यद्वा वर्णेवर्णे प्रतिवर्णमिति पूर्वोक्तेनेत्यनेन सम्बन्धोऽस्य । प्रतिवर्णं विहितेनेत्यर्थः । शमदमादिलक्षणेन स्वस्ववर्णविहितकर्मणेति यावत् ।

ईश्वरमभ्यर्च्येति । ईश्वराज्ञां ब्राह्मणादिभिरिमानीमानि कर्माणि कर्तव्यानीत्येवंरूपां श्रुतिस्मृत्यात्मिकामनतिक्रम्य तदुक्तविधया फलाभिसन्धिं विहाय कर्तव्यानीत्येवं केवलं मत्वा स्वस्वकर्मानुष्ठानमेवेश्वरार्चनमिति बोध्यम् । लोकेपि राजाज्ञापरिपालनमेव राजार्चनमिति दृष्टत्वात् । अथवा स्वानुष्ठितकर्मफलस्य- ओं तत्सद्ब्रह्मार्पणमस्त्विति परमेश्वराय समर्पणमेव स्वकर्मणा परमेश्वराराधनमिति बोध्यम् । मानवो मनुष्यः कर्माधिकारित्वात्तस्येति भावः ॥४६॥

श्रेयानिति । विगुणोऽपि स्वधर्मस्स्वनुष्ठितात्परधर्माच्छ्रेयान् । स्वभावनियतं कर्म कुर्वन् पुरुषः किल्बिषं नाप्नोति । सगुणस्यापि परधर्मस्यानुष्ठानापेक्षया विगुणस्यापि स्वधर्मस्यानुष्ठानं श्रेयः । यतो स्वधर्मानुष्ठानात्पुरुषस्य न किल्बिषप्राप्तिः, परधर्मानुष्ठानात्तु किल्बिषप्राप्तिर्भवतीत्यर्थः । नच परधर्मानुष्ठानात्किल्बिषप्राप्तिरित्यर्थः कथं सिध्यतीति वाच्यं, स्वभावनियतं कर्म कुर्वन् किल्बिषं नाप्नोतीत्यनेन तत्सिद्धेः । परधर्मो भयावह इति पूर्वमुक्तत्वाच्च । नियतं व्यवस्थापितम् । ननु स्वभावजस्यापि कर्मणः कथं किल्बिषाहेतुत्वं दुष्टस्येत्यत आह—यथेति । विषजातस्य विषादुद्भूतस्य । दोषो मृतिमूर्छातापादिः । यथा मनुष्यादेर्विषं दोषकरं तथा विषजातक्रिमेर्न दोषकरमित्यर्थः ।

अनेन श्लोकेन 'नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे । पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः' इति प्राणिहिंसालक्षणे स्वधर्मेऽपि युद्धे या आसीदर्जुनस्य पापमित्यश्रेय इति च बुद्धिः, 'श्रेयो भोक्तुं भैक्षमपीह लोके' इति ब्राह्मणधर्मे भिक्षाटने याप्यासीच्छ्रेय इति बुद्धिस्तदुभयं निवारितम् । हिंसात्मकमपि क्षत्रियस्य तव स्वभावनियतं युद्धाख्यं कर्म न किल्बिषावहं, प्रत्युत श्रेयस्करमेव । यथा विषमपि विषजातक्रिमेर्न दोषावहं, प्रत्युतारोग्यकरत्वाच्छरीरादिवृद्धिकरं तद्वत् । अहिंसात्मकमपि ब्राह्मणस्वभावनियतं भिक्षाटनादिकं कर्म तव परधर्मत्वात्किल्बिषावहमश्रेयस्करं च; यथाऽमृतमपि विषक्रिमेर्दोषकरं तद्वदिति भावः ॥४७॥

स्वभावनियतं कर्म कुर्वाणो विषजात इव क्रिमिः किल्बिषं नाप्नोतीत्युक्तम् । परधर्मश्च भयावह इति; अनात्मज्ञश्च 'नहि कश्चित्क्षणमप्यकर्मकृत्तिष्ठ'तीत्यतः—

सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥

सहजमिति । सहजं सह जन्मनैवोत्पन्नम् । किं तत् ? कर्म कौन्तेय ! सदोषमपि त्रिगुणात्मकत्वान्न त्यजेत् । सर्वारम्भाः- आरभ्यन्त इत्यारम्भाः सर्वकर्माणीत्येतत्प्रकरणाद्ये केचिदारम्भास्स्वधर्माः परधर्माश्च ते सर्वे हि यस्मात्त्रिगुणात्मकत्वमत्र हेतुः त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः । सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषान्नैवमुच्यते, भयावहश्च परधर्मः । नच शक्यतेऽशेषतस्त्यक्तुमज्ञेन कर्म यतः

---

सहजमिति । ननु दुष्टस्स्वधर्मो दुष्टत्वादेव न कार्यः, शिष्टोपि परधर्मः परधर्मत्वादेव न कार्यः । तस्मादननुष्ठानमेव वरमित्यत आह—सहजमिति । दुष्टस्यापि स्वधर्मस्य किल्बिषानावहत्वात्परधर्मस्य च भयावहत्वादनात्मज्ञस्य चाननुष्ठानासम्भवात्स्वधर्मः कार्य एवाज्ञेनाधिकृतेनेति वक्तिभगवानित्याह—स्वभावेति, अनात्मज्ञश्चेति । 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृ'दिति श्लोकव्याख्यानसमये प्रतिपादितमिदं विस्तरेण मयेति भावः । अत इति । स्वधर्मानुष्ठानस्यादुष्टत्वात्परधर्मानुष्ठानस्य दुष्टत्वादज्ञस्य कर्माकरणायोगाच्चेत्यर्थः । हे कौन्तेय ! सदोषमपि सहजं कर्म पुरुषो न त्यजेत्, हि सर्वारम्भाः दोषेणाग्निर्धूमेनेवावृताः । सह जायत इति सहजं, किं तत्सहजमिति पृच्छति—किमिति । उत्तरयति—कर्मेति । कथं सदोषत्वं कर्मणोऽत आह—त्रिगुणात्मकत्वादिति । गुणत्रयस्य संसारहेतुत्वेन सदोषत्वाद्गुणत्रयात्मकं कर्मापि दोषमेवेत्यर्थः । को न त्यजेदत आह—कुर्वन्निति । कर्मण्यधिकृतोऽज्ञ इत्यर्थः ।

आरम्भशब्दस्योपक्रमार्थत्वात्कथं कर्मार्थत्वमत आह—प्रकरणादिति, अत्रेति । दोषावृतत्वमर्थः । दोषेणेति । बन्धकत्वरूपेणेत्यर्थः । सदोषत्वात्स्वधर्मं परित्यज्य निर्दोषः परधर्मः कार्य इति यदि त्वं मन्यसे तदपि न सिध्यति- स्वधर्मवत्परधर्मस्यापि सदोषत्वात् । यस्माद्धर्ममात्रं त्रिगुणात्मकं तस्मात्सदोषमेव । एवं च सति सदोषबुध्या स्वकर्म त्यक्तवतः पुरुषस्य परधर्मे प्रवृत्तस्य पुनस्तदेव सदोषकर्मानुष्ठाने प्राप्तं, नतु निर्दोषकर्मानुष्ठानं- निर्दोषस्य कर्मण एवाभावात् । तस्मात्सदोषपरधर्मानुष्ठानापेक्षया सदोषस्वधर्मानुष्ठानमेव श्रेयः । यथा कुरूपपरदारसङ्गापेक्षया कुरूपस्वदारसङ्ग एव श्रेयान् वंशाभिवृद्धिहेतुत्वात्तद्वदिति सदोषादपि स्वधर्मानुष्ठानाद्भवति हि स्वर्गफलं, नतु सदोषात्परधर्मानुष्ठानात् प्रत्युत नरकपातोपि । यथा परदारसङ्गाद्वंशप्रतिष्ठाऽलाभः, प्रत्युत ताडनाकीर्तिनरकाद्यनर्थप्राप्तिस्तद्वत् ।

तस्मात्सदोषमपि सहजं कर्म न परित्यजेदित्यभिप्रयन्नाह—सहजस्येति । नन्वेवं स्वधर्मः परधर्मश्चेत्युभयं न कार्यमत आह—न शक्यत इति । अज्ञेनाशेषतः कर्म त्यक्तुं न शक्यत इत्यन्वयः ।

तस्मान्न त्यजेदित्यर्थः ।

किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत् ? किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति ? किं चातः ? यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्यं सहजं कर्म। एवं तर्ह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति । सत्यमेवं; अशेषतस्त्याग एव नोपपद्यत इति चेत् , किं नित्यप्रचलितात्मकः पुरुषो यथा साङ्ख्यानां गुणाः ? किं वा क्रियैव कारकं, यथा बौद्धानां स्कन्धाः क्षणप्रध्वंसिनः ? उभयथापि कर्मणोऽशेषतस्त्यागो न

---

तस्मादिति । परधर्मस्यापि सदोषत्वात्कर्मत्यागस्य च दुष्करत्वादित्यर्थः । न त्यजेदिति । सहजं कर्मेति शेषः । सहजं कर्म न त्यजेदित्युक्तं, तत्र हेतुं पृच्छति—किमिति । नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत' इति हेतोस्सहजं कर्म न त्यजेदित्युक्तं किम् ? यद्वा 'नियतस्य तु सन्त्यागः कर्मणो नोपपद्यत' इति हेतोरित्यर्थः । सन्दिग्धस्य प्रयोजनस्य विचार्यत्वादुक्ते सन्देहे प्रयोजनं पृच्छति—किंचात इति । तत्राद्यपक्षमनूद्य फलं दर्शयति—यदीति । अशक्यकरणस्य गुणत्वात्समुद्रचुलुकीकरणकालकूटभक्षणगोवर्धनोद्धरणादिवदिति भावः । भवत्वशेषकर्मत्यागस्य गुणत्वमित्यत आह—सत्यमिति । यद्यशेषतस्त्याग उपपद्यते तर्हि स गुणस्स्यात्स एव नोपपद्यते । तस्मात्सहजस्य कर्मणः परित्यागे दोषो भवतीति हेतोरेव सहजं कर्म न त्यजेदित्युक्तं, नतु कर्माशेषतस्त्यक्तुमशक्यमिति-हेतोः । अशेषकर्मत्यागस्यैवासम्भवात् । यस्मादेवं तस्मात्सहजकर्मपरित्यागः परमहंसपरिव्राजकस्य नरकहेतुरेवेति पूर्वपक्षिहृदयम् । अशेषकर्मत्यागस्सम्भवत्येव, अज्ञस्य तु परं स कर्तुमशक्य इत्यभिप्रायन् पूर्वपक्षं निराकरोति—किमित्यादिना । अशेषतः कर्मणस्त्याग एव नोपपद्यत इत्युक्तं यत्त्वया तत्र को हेतुरिति पृच्छति—किमिति । पुरुषस्य नित्यप्रचलितात्मकत्वादशेषतः कर्मत्यागो न सम्भवतीत्येतदुक्तं किं त्वया ? क्रियाया एव कारकत्वादिति वेत्यर्थः । पुरुषो जीवो नित्यप्रचलितात्मकः किम् ? नित्यचलनस्वभावः किम् ?

तत्र दृष्टान्तमाह—यथेति । साङ्ख्यानां मते गुणा यथा नित्यप्रचलितात्मकास्तद्वदित्यर्थः । प्रकाशात्मकस्य सवितुर्यथा प्रकाशत्यागानुपपत्तिस्तथा नित्यप्रचलितात्मकस्य पुरुषस्य कर्मत्यागानुपपत्तिश्चलनस्यैव कर्मत्वादिति भावः । क्रियैव कारकं किं वेति । कारकं कर्तृ- आत्मा वस्त्वित्यर्थः । क्रियास्वरूप एव कर्ताऽऽत्मा किमित्यर्थः । तत्र दृष्टान्तमाह—यथेति । बौद्धानां मते क्रियाकारकभेदाभावात्कारका एव क्षणप्रध्वंसिनस्स्कन्धा यथा क्रियास्वरूपास्तद्वदित्यर्थः । रूप-वेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः । तत्र विषयप्रपञ्चो रूपस्कन्धः, तद्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलयविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चस्संज्ञास्कन्धः, वासनाप्रपञ्चस्संस्कारस्कन्धः । एवं पञ्चधा परिवर्तमानो विज्ञानसन्तान एवात्मेति बौद्धदर्शनम् । विज्ञानानां च क्षणिकत्वात्स्कन्धानां क्षणप्रध्वंसित्वं विज्ञानसन्तानात्मकत्वात् स्कन्धानामिमानि च विज्ञानानि बुद्धिवृत्तिरूपाण्येवेति क्रिया एवेति स्कन्धाः क्षणप्रध्वंसिनः क्रियास्वरूपाश्चेति भावः ।

सम्भवति । अथ तृतीयोऽपि पक्षः- यदा करोति तदा सक्रियं वस्तु; यदा न करोति तदा निष्क्रियं तदेव । तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुम् । अयं त्वस्मिन् तृतीये पक्षे विशेषः न नित्यप्रचलितं वस्तु; नापि क्रियैव कारकम् । किं तर्हि ? व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते, विद्यमाना च विनश्यति । शुद्धं तद्द्रव्यं शक्तिमदवतिष्ठत इत्येवमाहुः काणादाः, तदेव च कारकमिति । अस्मिन्पक्षे को दोष इति । अयमेव तु दोषः- यतस्त्वभागवतं मतमिदम् । कथं ज्ञायते ? यत आह भगवान्- 'नासतो विद्यते भाव' इत्यादि ।

---

उभयथापीति । पक्षद्वयेऽपीत्यर्थः । ननु दर्शितं पक्षद्वयमप्यस्माकमभिमतमेवेति शङ्कायां निरासार्थं तृतीयः पक्षोऽस्तीत्याह—अथेति । तृतीयोऽपि पक्षोऽस्तीति शेषः । तमेव दर्शयति—यदेति । सक्रियं निष्क्रियं चात्मवस्तु कालभेदादिति तृतीयः पक्षः । तत्रेत्यस्यार्थमाह—एवंसतीति । तृतीयपक्ष इत्यर्थः । अशेषतः कर्म त्यक्तुं शक्यमेव । तृतीयं पक्षमुपपादयितुं भूमिकामारचयति—अयं त्विति । आत्मादिवस्तु न नित्यप्रचलितं, नापि क्रियास्वरूपं- सर्वदापि क्रियाऽदर्शनात् ; क्रियाश्रयस्य कर्तुः क्रियारूपत्वायोगाच्च । तस्मादशेषतः कर्मत्यागासम्भववाद्यभिमतं पक्षद्वयं दुष्टमेव । व्यवस्थिते द्रव्ये आत्मादिवस्तुनीत्यर्थः । उत्पन्ना च सा क्रिया न चिरं तिष्ठतीत्याह—विद्यमाना चेति । उत्पन्ना चेत्यर्थः । अत एव सक्रियत्वं निष्क्रियत्वं चात्मन इति भावः ।

ननु क्रियाया आगमापायित्वे क्रियावतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याह—शुद्धमिति । ननु द्रव्यस्य क्रियाशक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियावद्धि कारकमत आह—तदेवेति । क्रियाशक्तिमदेव कारकं, नतु क्रियाश्रयभूतमन्योन्याश्रयादित्यर्थः । अशेषतः कर्मणस्त्याग इह नोपपद्यत इति यदुक्तं पूर्वपक्षिणा तत्परिहृतमेतावता काणादेन । कथमुच्यते—यद्यात्मा नित्यप्रचलितात्मकः स्याद्यदि वा क्रियास्वरूपस्स्यात्तर्हि कर्मणामशेषतस्त्यागो नोपपद्यतां, नतु तथाविध आत्मा । किंतु सक्रियो निष्क्रियश्च कर्तैवात्मा । अतः कर्तुरप्यात्मनो निष्क्रियत्वेनावस्थानं सम्भवत्येव । यथा तक्षकस्य तक्षणक्रियां परित्यज्य तूष्णीमासनं सम्भवति तद्वत् । तस्मादशेषतः कर्मत्याग उपपद्यत एवेति ।

नन्वेवं समीचीनमेवेदं काणाददर्शनमिति मत्वा कश्चित्पृच्छति—अस्मिन्पक्षे को दोष इति । उत्तरयति—अयमेवेति । अभागवतत्वमेव दोष इत्यर्थः । अभागवतं भगवतोऽनभिमतमित्यर्थः । ननु काणाददर्शनमिदं भगवतोऽनभिमतमिति कथं ज्ञायते त्वयेति पृच्छति कश्चित्—कथमिति । उत्तरयति—यत इति । असतो भावो न विद्यते सतश्चाभावो न विद्यत इति भगवतोक्तं, काणादैस्तद्विपरीतमुक्तं—असतो भावो विद्यते सतश्चाभावो विद्यत इति । तस्मादिदं काणादमतमभागवतम् । काणादानां ह्यसतो भावस्सतश्चाभाव इति मतमिति शेषः । निश्चय इति वा । न चासत्कार्यवादः काणादोक्तो भवतु नाम दुष्टः, सक्रियं निष्क्रियं चात्मवस्तु कारकमिति प्रकृतकाणादमतैकदेशस्य कथं दुष्टत्वमिति वाच्यं, शुद्धेऽप्यात्मवस्तुन्यविद्यमाना क्रियोत्पद्यत इत्यसत्कार्यवादस्य प्रकृतेऽपि प्रसारि-

काणादादीनां ह्यसतो भावस्सतश्चाभाव इतीदं मतमभागवतम् । अभागवतमपि न्यायवैशेषिके दोष इतिचेदुच्यते—दोषवच्चेदं सर्वप्रमाणविरोधात् । कथम् ? यदि तावद्द्व्यणुकादिद्रव्यं प्रागुत्पत्तेरत्यन्तमेवासत्, उत्पन्नं च स्थितं कञ्चित्कालं पुनरत्यन्तमेवासत्त्वमापद्यते, तथा च सत्यसदेव सज्जायते, सदेवासत्त्वमापद्यते । अभावो भावो भवति, भावश्चाभावो भवति। तत्राभावो जायमानः प्रागुत्पत्तेश्शशविषाणकल्पस्समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति । नचैवमभाव उत्पद्यते; कारणं चापेक्षत इति शक्यं वक्तुमसतां शशविषाणादीना-मदर्शनात् । भावात्मकाश्चेद्घटादय उत्पद्यमानाः किञ्चिदभिव्यक्तमात्रे कारणमपेक्ष्योत्पद्यन्त

---

त्त्वात् । शुद्धं निष्क्रियं ह्यात्मवस्त्वविद्यमानक्रियोत्पत्त्या सक्रियं भवतीत्यमीभिरुच्यते । तस्मादस-त्कार्यवादसत्त्वात्सक्रियं निष्क्रियं चात्मवस्त्वित्येतत्काणादमतमभागवतत्वाद्दुष्टमेव ।

ननु न्याय्यस्य काणाददर्शनस्य भगवदनभिमतत्वमात्रेण कथं दुष्टत्वं शक्यते वक्तुमिति पृच्छति-अभागवतत्वेऽपीति, इदमिति । असतो भावस्सतश्चाभाव इत्येतत्काणादमतमित्यर्थः । दोषवदिति। दुष्टमेवेत्यर्थः । तत्र हेतुमाह—सर्वेति । कथं सर्वप्रमाणविरोध इति पृच्छति—कथमिति। विरोधमेव दर्शयति—यदीत्यादिना । काणादाः प्रागभावं प्रध्वंसाभावं चाहुः कार्यस्य । घटस्यो-दयात्प्रागसत्त्वात्प्रागभावः, नाशादनन्तरमसत्त्वात्प्रध्वंसाभावः, मध्यकाले च सत्त्वाद्घटस्य सत्त्वं चाहुः। एवंसति प्रागसतो घटस्य भावः, मध्ये सतो घटस्य पश्चादभावश्चेत्यसतो भावस्सतश्चाभाव इत्युक्तं भवति । तत्र दोषान् दर्शयति—यदीत्यादिना ।

परमाणुद्रव्यस्य नित्यत्वादाह—द्व्यणुकादीति । कार्यमुत्पत्तेः प्रागनभिव्यक्तं सत्सूक्ष्मरूपेण कारणे वर्तमानं च सदसदित्युच्यत इति मतव्यावृत्तये आह—अत्यन्तमेवासदिति । उत्पन्नं च द्रव्यं कञ्चित्कालं स्थितं सदित्यन्वयः । आपद्यते यदीत्यन्वयः । तथाच सतीति । कार्यस्योत्पत्तेः प्रा-गत्यन्तासत्त्वे नाशानन्तरं चात्यन्तासत्त्वे सतीत्यर्थः । असदेवेति । कार्यकारणयोर्मृद्घटयोस्तन्तुपटयो-श्चानन्यत्वदर्शनात्कारणमेव कार्यं भवतीति कृत्वाऽसदेव सज्जायते । तथा घटस्य नाशानन्तरं मृद्रूप-दर्शनात्कार्यं कारणमेव भवतीति कृत्वा सच्चासज्जायते । असत्कारणं सत्कार्यमिति ह्येषामभ्युपगमः। असदेवेति वाक्यद्वयस्य स्वयमेवार्थमाह—अभाव इति । द्व्यणुकादिप्रागभावो द्व्यणुकादिरूपो भावो भवति, द्व्यणुकादिरूपो भावश्च द्व्यणुकादिप्रध्वंसाभावरूपाभावो भवतीत्यर्थः । द्व्यणुकादिप्रागभावाद्द्व्यणु-कादिभाव उत्पद्यते । द्व्यणुकादिभावश्च प्रध्वंसाभावं प्रपद्यत इत्यमीभिरुच्यमानत्वादिति भावः ।

तत्रेति । अभावो भावो भवतीत्यस्मिन्नंश इत्यर्थः । समवायिकारणं पटं प्रति तन्तुः, असम-वायिकारणं तन्तुरूपं, निमित्तकारणं तुरीवेमादि । तदेतत्त्रिविधं कारणमपेक्ष्याभावो भावो भवतीति चैतैरुच्यते । नन्वभावो भावो भवतु, जायमानश्चाभावस्समवाय्यादिकारणत्रयमपेक्ष्य जायतां को दोष-स्तत्राह—न चेति । अभाव उत्पद्यते भावरूपेण जायत इति । अभावस्योदयं प्रति कारणमपेक्ष्य इति च वक्तुं न शक्यमित्यर्थः । कुतो न शक्यमत्र आह—असतामिति, अदर्शनादिति । उत्पत्ति-कारणापेक्षत्वयोरदर्शनादित्यर्थः । उत्पत्तेः प्रागसतो घटस्य शशविषाणादितुल्यत्वादिति भावः ।

इति शक्यं प्रतिपत्तुम् । किं चासतश्च सद्भावे सतश्चासद्भावे न क्वचित्प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित्स्यात्- 'सत्सदेवासदसदेवे'ति निश्चयानुपपत्तेः ।

किं चोत्पद्यत इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासम्बन्धमाहुः । प्रागुत्पत्तेश्चासत्, पश्चात्स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिस्सत्तया च समवायलक्षणेन सम्बन्धेन सम्बध्यते । सम्बद्धं सत्कारणसमवेतं सद्भवतीति । तत्र वक्तव्यं कथमसतस्सत्कारणं भवेत्, सम्बन्धो वा केनचित्स्यात् ? नहि वन्ध्यापुत्रस्य सता सम्बन्धो वा कारणं वा केनचित्प्रमाणतः कल्पयितुं शक्यते ।

---

ननूत्पत्तेः प्राग्घटस्य सत्त्वेऽपि कारणापेक्षानुपपत्तिस्तदवस्थैव व्यर्थत्वादित्यत आह—भावात्मकत्वादिति । उत्पत्तेः प्रागनभिव्यक्ततया स्थितत्वेन कार्यस्याभिव्यक्तिं प्रति कारणापेक्षा युक्तैवेत्यर्थः । तस्माद्भावात्मका एव घटादयः कारणमपेक्ष्योत्पद्यमानत्वात् । भावस्य ह्युत्पद्यमानत्वं कारणापेक्षत्वं चेत्युभयं सङ्गच्छत इति भावः । तस्मात्कार्यस्याभावात्मकत्वमयुक्तं कार्यस्य कारणात्मकत्वादभावस्य च कारणत्वायोगात् । नहि शशविषाणादिकं कस्यचित्कारणं दृष्टम् ।

नन्वेवमभावो भावो माभून्नाम, भावः पुनरभावो भवत्येव; घटस्य नाशानन्तरं प्रध्वंसाभावदर्शनादितिचेत्, मैवमपि—नष्टस्यापि घटस्य कपालत्वचूर्णत्वादिलक्षणभावत्वमेव नाभावत्वमिति, उत्पत्तेः प्रागिव नाशादनन्तरमपि सूक्ष्मरूपेण स्वकारणमृद्येव घटस्य सत्त्वाभ्युपगमात् । तस्माद्भावात्मकस्य घटस्य नाभावात्मत्वप्राप्तिर्विरोधादिति भावश्चाभावो नैव भवति ।

दोषान्तरमाह—किं चेति । विश्वासो न स्यादित्यन्वयः । विश्वासाभावे हेतुमाह—सत्सदेवेति । यदि सदसत्स्यादसच्च सत्स्यात्तर्हि सत्सदेवासदसदेवेति निश्चयासम्भव एव । ततश्च सर्वोऽपि वैदिको लौकिकश्च प्रमाणप्रमेयव्यवहारोऽविश्वसनीय एव स्यात् । यन्मानेन सदसद्वा निर्णीतं तत्तथेति विश्वासाभावान्मानवैफल्यमित्यर्थः । दोषान्तरं दर्शयितुं तन्मतमनुवदति—किं चेति, उत्पद्यत इति । द्व्यणुकादिद्रव्यं कर्तृ । संग्रहवाक्यमेव विवृणोति—प्रागिति । उत्पत्तेः प्रागसद्द्व्यणुकादिरूपं द्रव्यं परमाणुभिस्सत्तया च समवायसम्बन्धेन सम्बध्यत इत्यन्वयः । तत्र हेतुमाह—कारकव्यापारमपेक्ष्येति । स्वकारकव्यापारवशादित्यर्थः । एवं सम्बद्धं सत्तद्द्व्यणुकादिद्रव्यं सम्भवतीत्याह—सम्बद्धमिति । कारणसम्बन्धे सति कार्यस्य सत्तासम्बन्धो भवतीत्यर्थः । तदेव स्फुटयति—कारणेति । द्व्यणुकादिद्रव्यमित्येव कर्तृ कारणसमवेतमतएव सद्भवतीत्यन्वयः । उत्पत्तेः प्रागत्यन्तमसतोऽपि द्व्यणुकादिद्रव्यस्य परमाणुभिस्सह समवायाद्द्रव्यलाभः, परमाणुनिष्ठसत्तया सह समवायात्सत्त्वलाभश्च भवतीति भावः ।

एवं तन्मतमनूद्य निराकरोति—तत्र चेत्यादिना । वक्तव्यं प्रष्टव्यमित्यर्थः । स्वमिति । स्वप्रतिनियतं मृदादिकमित्यर्थः । उत्पत्तेः प्रागसतो घटस्य मृदादिकं कथं कारणं स्यात् ? कथं वा ...स्य केनचित्सम्बन्धस्स्यादित्यर्थः । कुतो न स्यादत आह—नहीति, स्वमिति । पित्रादिरूपमित्यर्थः । ननु सतोरेव कार्यकरणयोः पटतन्त्वोर्घटमृत्तिकयोश्च समवायं ब्रूमो वयं, नत्वभावभावयोरिति

ननु नैवं वैशेषिकैरभावस्य सम्बन्धः कल्प्यते । द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणस्सम्बन्धस्सतामेवोच्यत इति न सम्बन्धात्प्राक्सत्त्वानभ्युपगमात् । न हि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात्प्राग्घटादीनामस्तित्वमिष्यते । नच मृद एव घटाद्याकारप्राप्तिमिच्छन्ति; ततश्चासत एव सम्बन्धः पारिशेष्यादिष्टो भवति ।

नन्वसतोऽपि समवायलक्षणस्सम्बन्धो न विरुद्धो न- वन्ध्यापुत्रादीनामदर्शनात् । घटादेरेव प्रागभावस्य स्वकारणसम्बन्धो भवतीति न वन्ध्यापुत्रादेरभावस्य तुल्यत्वेऽपीति विशेषोऽभावस्य वक्तव्यः । एकस्याभावः, द्वयोरभावः, सर्वस्याभावः, प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः । असति च

---

शङ्कते—नन्विति । सतां द्रव्याणामिति सम्बन्धः । परिहरति—नेति । हेतुमाह—सम्बन्धादिति । परमाणुसत्तासम्बन्धात्प्राग्द्व्यणुकादिद्रव्यस्य सत्तानभ्युपगमादित्यर्थः । तदेव स्फुटयति—नहीति । उत्पत्तेः प्राग्घटादिकार्यस्यासत्त्ववादिनो हि वैशेषिकाः कुलालादिव्यापारात्प्राग्घटादिकार्यमसदित्यभ्युपगच्छन्ति । कुलालादिकारकव्यापारमपेक्ष्य हि परमाणुसत्तासम्बन्धो घटस्य । तस्माद्द्व्यणुकादीनां सतामेव स्वकारणेन समवायसम्बन्ध इति वक्तुं न शक्यते ।

अयंभावः—किमुत्पन्नस्य सत एव द्रव्यस्य स्वकारणेन सत्तया च सह समवायसम्बन्ध इति ब्रूषे उतानुत्पन्नस्यासतः ? नाद्यः- कारणसत्तासमवेतं सदेव कार्यं जायत इति कार्यजन्मानन्तरं कार्यकारणसमवायकल्पनस्यायुक्तत्वात् । यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति हि त्वया लक्षितम् । नहि मृदसमवेतस्सन्नुत्पद्यमानो घटो दृष्टः; येनोत्पत्त्यनन्तरं घटस्य मृत्समवायस्स्यात् । द्वितीये- स्वभावस्य केनचित्सम्बन्धः कल्पित एवेति । ननूत्पत्तेः प्राग्घटो मृद्रूपेण वर्तत एवेति सत एव घटस्य मृदा सह समवायसम्बन्ध इत्यत आह—न चेति । वैशेषिका इति शेषः । नेच्छन्तीत्यन्वयः । तथाभ्युपगमे असत्कार्यवादभङ्गप्रसङ्गादिति भावः । सत्कार्यवादो हि सः । ततश्चेति । सम्बन्धात्प्राक्कार्यस्य सत्ताया अनभ्युपगमादित्यर्थः । पारिशेष्यादिति । पर्यवसानादित्यर्थः । सत्कार्यवादानभ्युपगमादिति वा ।

ननूत्पत्तेः प्रागसतोऽपि घटस्य स्वकारणेन सह समवायसम्बन्धो न विरुध्यत इत्याक्षिपति—नन्विति । परिहरति—नेति । हेतुमाह—वन्ध्येति । आदिपदाच्छशविषाणादिग्रहणम् । नन्वभावस्य तुल्यत्वेपि घटादिप्रागभावलक्षणाभावस्यैव परमाण्वादिकारणसम्बन्धः, नतु वन्ध्यापुत्रशशविषाणादिलक्षणाभावस्येत्याह वैशेषिकः—घटादेरेवेति । तत्र विशेषहेतुं पृच्छत्यद्वैती—विशेष इति । तर्ह्यभावस्य विशेषो वक्तव्यः । ननु घटादिप्रागभावस्य सप्रतियोगिकत्वं वन्ध्यापुत्रादेर्नैवमित्यस्ति विशेष इत्याशङ्क्य दूषयति—एकस्येति । एकद्विसर्वादिप्रतियोगिवशादेवाभावस्य भेदः, नतु स्वरूपत इति कृत्वा वन्ध्यापुत्राद्यभावोऽपि सप्रतियोगिक एवेति न विशेष इति भावः । ननु माभूल्लक्षणतो भेदः, किं ततोऽत्र आह—असति चेति । घटस्य प्रागभाव एव कुलालादिभिर्घटभावमापद्यते भावेन कपालादेव

विशेषे घटस्य प्रागभाव एव कुलालादिभिर्घटाभावमापद्यते सम्बध्यते च भावेन कपालाख्येन स्वकारणेन सम्बद्धश्च सर्वव्यवहारयोग्यश्च भवति। ननु घटस्यैव प्रध्वंसाभावोऽभावत्वे सत्यपीति प्रध्वंसाद्यभावानां न क्वचिद्व्यवहारयोग्यत्वं; प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्योत्पत्त्यादिव्यवहारार्हत्वमित्येतदसमंजसं- अभावत्वाविशेषादत्यन्तप्रध्वंसाभावयोरिव ।

ननु नैवास्माभिः प्रागभावस्य भावापत्तिरुच्यते; भावस्यैव हि तर्हि भावापत्तिः, यथा घटस्य घटापत्तिः, पटस्य वा पटापत्तिः। एतदप्यभावस्य भावापत्तिवदेव प्रमाणविरुद्धम् । साङ्ख्यस्यापि यः परिणामपक्षस्सोऽप्यपूर्वधर्मोत्पत्तिविनाशाङ्गीकरणाद्वैशेषिकपक्षान्न विशिष्यते ।

---

स्वकारणेन सम्बध्यते, तेन सम्बद्धश्च सर्वव्यवहारयोग्यो भवति । एवकारार्थमाह—नन्विति । घटस्यैव प्रध्वंसाभावः कुलालादिभिर्घटभावं नापद्यते, भावेन न सम्बध्यते व्यवहारयोग्यश्च न भवति । अभावत्वे सत्यपीति । प्रध्वंसाभावस्य उत्पत्त्यादिव्यवहारानर्हत्वं प्रागभावस्यैव तदर्हत्वमित्येतद्वचनमसमञ्जसमयुक्तं, कस्मादसमञ्जसमत आह—अभावत्वाविशेषादिति । दृष्टान्तमाह—अत्यन्तेति । अत्यन्ताभावप्रध्वंसाभावयोरभावत्वाविशेषाद्यथा न क्वचिद्व्यवहारयोग्यत्वं तथा प्रागभावस्यापीति । तस्मादत्यन्ताभावप्रध्वंसाभाववत्प्रागभावस्यापि परमाण्वादिकारणसम्बन्धकल्पनमुत्पत्त्यादिव्यवहारार्हत्वकल्पनं चायुक्तमेव । प्रागभावो नोत्पत्त्यादिव्यवहारार्हः- अभावत्वात् । प्रध्वंसाभाववदत्यन्ताभाववच्चेति प्रयोगादिति भावः । तस्माच्छुद्धे शक्तिमति द्रव्ये आत्मन्यविद्यमाना क्रियोत्पद्यत इति यदा करोति तदा निष्क्रियं च वस्त्विति तृतीयः पक्षोपि काणादाभिमतो दुष्ट एव । एवमसत्कार्यवादे दूषिते सति लब्धावकाशस्सन् सत्कार्यवादी प्रत्यागत्य भवतु वैषिकैस्तैरभिमतोऽसत्कार्यवादो दुष्टः, अस्माभिस्तु सत्कार्यवादोऽभ्युपगतः, सच नैव दुष्ट इति चोदयति—नन्विति । अस्माभिस्सत्कार्यवादिभिः प्रागभावस्य भावापत्तिर्नैवोच्यते, किं तर्हि भावस्यैव भावापत्तिरुच्यते । तत्रोदाहरणमाह—यथा घटस्येति । स्वकारणे मृदि वर्तमानस्य घटस्यैव घटभावापत्तिरित्यर्थः । कार्यमुत्पत्तेः प्रागप्यस्तीति हि सत्कार्यवाद इति भावः । दूषयति—एतदपीति । भावस्य भावापत्तिरिति मतमपीत्यर्थः । प्रमाणविरुद्धमिति । यदि घट उत्पत्तेः प्रागप्यस्ति तर्हि कुलालादिकारकव्यापारवैयर्थ्यम् । पिण्डावस्थायामपि घटदर्शनप्रसङ्गः । किंच घटभावापत्तेः प्रागेव घटस्य सतो द्रव्यस्य पुनर्घटाभावापत्तिरित्ययुक्तम् । घटभावापत्तेः प्रागपि घटो वर्तत इति चायुक्तं, घटाभावापत्तेः प्राग्द्रव्यस्य घटस्यैवाभावादिति ।

नच घट उत्पत्तेः प्राक् मृद्रूपेण वर्तत इति सत्कार्यवादसिद्धिरिति वाच्यं, उत्पत्तेः प्राग्घटस्यैवासिद्ध्या कुतः पुनस्तस्य मृद्रूपेणावस्थानम् ? यं मृद्रूपेण वर्तत इति त्वं ब्रूषे नहि स घट उत्पत्तेः प्रागस्तिसिद्धः । तस्माद्घटोत्पत्तेः प्राक् मृदेवास्ति, नतु मृद्रूपेण घट इति प्रमाणविरुद्ध एव सत्कार्यवादः ।

नन्वेवं सत्कार्यवाददूषणात्किं ते फलमिति चेदुच्यते—उत्पत्तेः प्रागप्यात्मवस्तुनि क्रियाऽस्तीति सक्रियस्यात्मनः कर्मणामशेषतस्त्यागासम्भव इत्येवंरूपसत्कार्यवादिहृदयस्य निर्भेदनमेव फलम् । एवं सत्कार्यवादे आरम्भवादं दूषयित्वा परिणामवादं दूषयति—साङ्ख्यस्येति । मृदेव कारकव्यापार-

अभिव्यक्तितिरोभावाङ्गीकरणेऽप्यभिव्यक्तितिरोभावयोर्विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधः। एतेन कारणस्यैव संस्थानमुत्पत्त्यादीत्येतदपि प्रत्युक्तम्। पारिशेष्या-

---

वशाद्घटात्मना परिणमत इति साङ्ख्याः। नास्मिन्मते आरम्भवादवत्कारकव्यापारनैरर्थक्यं, नाप्यसत्कार्यवादवदसतस्सद्भावापत्तिरूपो विरोध इति भावः। दूषयति—सोऽपीति। परिणामपक्षोऽपि वैशेषिकपक्षान्न विशिष्यते। कुतः? अपूर्वधर्मोत्पत्तितन्नाशाङ्गीकरणात्। अपूर्वधर्मो मृदो घटाद्याकारेण परिणामः पूर्वमविद्यमानः। तस्योदयनाशयोरङ्गीकारादसतस्सत्त्वा सतश्चासत्त्वेति दोषद्वयं प्राप्तमिति भावः। ननु कार्यं कारणात्मना प्रागपि सदेवाव्यक्तं कारकव्यापारेणाभिव्यज्यत इत्यत्राह—अभिव्यक्तीति।

अयं भावः—उत्पत्तेः प्रागपि घटः सूक्ष्मरूपेणानभिव्यक्तनामरूपतया मृदस्त्येव। अनभिव्यक्तत्वादेव तदा तस्यादर्शनं तदभिव्यक्त्यर्थं च कारकव्यापार इति यदि ब्रूषे तर्हि कारकव्यापारवशात्सूक्ष्मेऽनभिव्यक्ते घटे जायमानोऽभिव्यक्तिरूपस्स धर्मः किमुत्पत्तेः प्रागस्ति, उत नास्ति? आद्ये- उत्पत्तेः प्रागेव सतः पुनरुत्पत्त्ययोगः। द्वितीये- त्वसत्कार्यवादप्रसङ्गः। न च सोऽप्यभिव्यक्तिरूपधर्म उत्पत्तेः प्राक्सूक्ष्मरूपेणानभिव्यक्तस्सन्नस्तीति वाच्यं, अनवस्थादिदोषप्रसङ्गात्। एवं तिरोभावोऽप्यूह्यमिति।

ननु वैशेषिकपक्षादेव न विशिष्यत इति कुत उक्तं, सत्कार्यवादपक्षादपि न विशिष्यत इति वक्तव्यत्वादिति चेत्, मैवम्—सत्कार्यवादस्यापि वैशेषिकैकदेश्यभिमतत्वात्। अत एवोक्तं—नतु नैवास्माभिरिति। ननु न वयमपूर्वाभिव्यक्तिधर्मोत्पत्तिं ब्रूमः येनोक्तदोषस्स्यात्। किं तर्ह्यनभिव्यक्तितिरोभावं ब्रूम इतिचेत्, मैवम्—अभिव्यक्ते घटे जायमानस्सोऽप्यनभिव्यक्तितिरोभावः किमुत्पत्तेः प्रागस्ति, उत नास्ति? आद्ये- उत्पत्तिवैयर्थ्यम्। द्वितीये तु- असत्कार्यवादप्रसङ्गः। न चानभिव्यक्तितिरोभावस्योत्पत्तेः प्रागसत्त्वेऽपि नासतस्सद्भावापत्तिरूपदोषप्रसङ्गः, कार्यकारणावस्थाद्वयेऽप्यसत्त्वादिति वाच्यं, अवस्थाद्वयेऽप्यसतोऽनभिव्यक्तितिरोभावस्य शशविषाणकल्पस्य सत्ताङ्गीकारे सर्वप्रमाणविरोधात्। तदनङ्गीकारेऽनभिव्यक्तितिरोभावस्यैवासिद्धेः।

ननु उदासीनपुरुषवादिनस्साङ्ख्यस्य मतं निष्क्रियात्मवादिनस्त्वस्योपयुक्तमेवेति कुतस्तत्खण्डनमिति चेदुच्यते—साङ्ख्याभिमतपरिणामपक्षाभ्युपगमे स्वात्मन्यनभिव्यक्ततया सूक्ष्मरूपेण वर्तमाना क्रिया कालादिवशादभिव्यज्यत इति सक्रियत्वमापद्येतात्मनः; ततश्च सर्वकर्मत्यागानुपपत्तिरिति। ननूत्पत्तिविनाशादयस्सतो द्रव्यस्यावस्थाविशेषाः, तन्तुप्रभृतीनि हि सन्त्येव द्रव्याणि रचनाविशेषयुक्तानि पटादीन्युच्यन्ते, तत्र पूर्वावस्थस्य द्रव्यस्योत्तरावस्थाप्राप्तिर्विनाशस्यैव तदवस्थस्योत्पत्तिरिति द्वैतिनो विशिष्टाद्वैतिनश्च ब्रुवन्ति; तन्मतस्य का गतिरत आह—एतेनेति। संस्थानमवस्थाविशेष आकारविशेष इति यावत्। उत्पत्त्यादीत्यादिपदान्नाशग्रहणम्। प्रत्युक्तमिति। किं पिण्डावस्थस्य मृद्द्रव्यस्य जायमाना घटावस्था प्रागुत्पत्तेरस्ति, उत नास्ति? आद्ये- सत्कार्यवादप्रोक्तकारकव्यापारवैयर्थ्यादि-

त्सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैरनेकधा नटवद्विकल्प्यत इति । इदं भागवतं मत-
मुक्तं 'नासतो विद्यते भाव' इत्यस्मिंश्श्लोके- सत्प्रत्ययस्याव्यभिचारात् ; व्यभिचाराच्चेत-
रेषामिति ।

---

दोष प्रसङ्गः । द्वितीये तु- असत्कार्यवादप्रसङ्गः । तथा घटावस्थस्य मृद्द्रव्यस्य जायमानः कपा-
लावस्थाप्राप्तिपूर्वको घटावस्थानाशः किमुत्पत्तेः प्रागस्ति, उत नास्ति ? आद्ये- सत्कार्यवाददोष-
प्रसङ्गः । द्वितीये तु- असत्कार्यवादप्रसङ्ग इति भावः । अयमपि पक्षस्साङ्ख्यपक्षवद्वैशेषिकपक्षान्न विशि-
ष्यते- घटादिसंस्थानविशेषोत्पत्तितन्नाशयोर्विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधात् ।
तत्त्वं सत्कार्यवादोऽसत्कार्यवादश्चेति पक्षद्वयमेव व्यवस्थितं- सर्वेषां पक्षानां तत्रैवान्तर्भावात् । अस्मिंश्च
पक्षद्वये दूषिते सति परिशेषन्यायात्कार्यं मिथ्येतिपक्षस्तृतीयो निर्दुष्टस्सिद्ध इत्याह—पारिशेष्यादिति ।
नटवदिति । यथा नट एक एव धर्मार्जुनकृष्णरामादिवेषैरनेकधा विकल्प्यते तद्वदित्यर्थः ।

अयं भावः—सच्चिदानन्दे ब्रह्मणि प्रतीयमानमिदं जगदुत्पत्तेः प्रावसदित्यसदिति वा वक्तु-
मशक्यमेव । सदसदनिर्वाच्यत्वादेव जगन्मिथ्या । नचोत्पत्त्यनन्तरं जगदिदं सदिति निर्वाच्यमेवेति
वाच्यं, तदापि मृद्व्यतिरेकेण घटस्येव कारणब्रह्मव्यतिरेकेण जगतोऽभावान्मिथ्यात्वमेव । यथा रज्जु-
व्यतिरेकेणासतस्सर्पाभासस्य मिथ्यात्वं सम्प्रतिपन्नं तद्वत् । एवं जगन्नाशोपि सदसदनिर्वाच्यः । ततश्च
जगन्मिथ्या तदुदयनाशौ च मिथ्या, तदुभयपूर्वकवृद्ध्यादिविकारा अपि मिथ्या । जगतो वृद्धिः कि-
मुत्पत्तेः प्रागस्ति उत नास्ति ? आद्ये- सत्कार्यवादप्रसङ्गः । द्वितीये- त्वसत्कार्यवादप्रसङ्ग इति वृद्ध्या-
दीनामपि मिथ्यात्वात् । इमे च जगदुदयविनाशादयो मिथ्याकार्यभूता धर्मा आत्मन्यविद्यया
कल्पितास्सद्रूपे ब्रह्मणि नटे रामादिवेषा इव रज्जौ सर्पदण्डाद्याकारा इव च । तस्मादात्मनि प्रतीय-
मानं सर्वमपि कार्य(धर्म)जातं मिथ्यैव । आत्मैक एव सत्यः । 'सद्रूपत्वात्सदेव सत्य'मिति
श्रुतेश्चेति भावः । नच ब्रह्मापि किमुत्पत्तेः प्रागस्ति उत नास्ति ? उभयथा च दोषो दर्शित एवेति
मिथ्यैवेति वाच्यं, अकार्यत्वाद्ब्रह्मण उत्पत्त्याद्यभावात् । नित्यो हि निर्विकार आत्मा । नच सविकार
इति वाच्यं, सविकारत्वे सति त आत्मविकाराः केनचिद्गृहीतव्याः स्युः । नचेष्टापत्तिः- स्वेन स्व-
विकाराणामग्राह्यत्वान्नात्मग्राह्यत्वमात्मविकाराणाम् । नाप्यनात्मग्राह्यत्वमनात्मनां जडत्वात् । नह्यसाक्षिका
आत्मविकारा अभ्युपगन्तव्याः । तस्मान्निर्विकारस्सद्रूप एवात्मेति स एव सत्यः, अन्यत्सर्वं जगन्मिथ्यैव ।
श्रुतयोपि- 'तत्सत्यं स आत्मा तत्त्वमसि, यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्य'मित्याद्या अमुमेवार्थं
ब्रुवन्ति । स्मृतयश्च- 'ब्रह्म सत्यं जगन्मिथ्या' इत्यादयः कारणमेव सत्यं, कार्यं मिथ्यैवेति । 'वाचा-
रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्युपपत्तिमपि सदृष्टान्तं बोधयति श्रुतिः । ब्रह्मणः कार-
णत्वं जगतः कार्यत्वं च- यतो वा इमानि भूतानि जायन्ते', आत्मन आकाशस्सम्भूत' इत्यादिश्रुतयो
दर्शयन्ति । 'अहं सर्वस्य प्रभव' इत्यादिस्मृतयश्च । तस्मात्कारणं ब्रह्मैकमेव सत्सत्यं, कार्यं जगन्मिथ्यै-
वेतीदं भागवतं श्रीकृष्णाभिमतमद्वैतं मतम् ।

नन्वयमर्थः क्वोक्तः कृष्णेनेत्यत आह—नासत इति । किमुक्तमत आह—सत्प्रत्ययस्येति ।

कथं तर्ह्यात्मनोऽविक्रियत्वेऽविशेषतः कर्मणस्त्यागो नोपपद्यत इति ? यदि वस्तुभूता गुणाः, यदि वाऽविद्याकल्पिताः, तद्धर्मः कर्म, तदात्मन्यविद्ययाऽध्यारोपितमेवेत्यविद्वान्- 'नहि कश्चित्क्षणमप्यशेषतस्त्यक्तुं शक्नो'तीत्युक्तं । विद्वांस्तु पुनर्विद्ययाऽविद्यायां निवृत्तायां शक्नोत्येवाशेषतः कर्म परित्यक्तुं- अविद्याध्यारोपितस्य शेषानुपपत्तेः । न हि तैमिरिकदृष्ट्याऽध्यारोपितस्य द्विचन्द्रादेस्तिमिरापगमेऽपि शेषोऽवतिष्ठते । एवं च सतीदं वचनमुपपन्नं- 'सर्वकर्माणि मन'सेत्यादि, 'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः, स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति च ॥४८॥

---

घटस्सन् पटस्सन्नित्येवं सर्वत्रानुगततया सत्प्रत्ययो न व्यभिचरति । घटादिप्रत्ययस्तु पटाद्यननुगतत्वाद्व्यभिचरति । यद्विषयः प्रत्ययो व्यभिचरति तन्मिथ्या, यद्विषयः प्रत्ययो न व्यभिचरति तत्सत्यम् । यथा सर्पाभासविषयप्रत्ययो व्यभिचरतीति सर्पाभासो मिथ्या, रज्जुविषयप्रत्ययो न व्यभिचरतीति रज्जुस्सत्या, तथा सद्बुद्धेरव्यभिचारात्सद्ब्रह्म सत्यं जगद्बुद्धेर्व्यभिचाराज्जगन्मिथ्येति भावः । ननु भवत्वेवं जगदुदयादिधर्माणां मिथ्यात्वादविक्रियत्वमात्मनस्सत्यत्वं च, किं तेन प्रकृते फलमत आह—कथमिति । तर्हीत्यस्यार्थमाह—आत्मनोऽविक्रियत्वे सतीति । अशेषतः कर्मणस्त्यागः कथं नोपपद्यत इत्यन्वयः । अपि तूपपद्यत एवेत्यर्थः । मिथ्याभूतानां क्रियाकारकफलानां कालत्रयेऽप्यात्मन्यभावादिति भावः । ननु यद्येवमशेषतः कर्मत्याग उपपद्यते तर्हि 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत' इति कुत उक्तमिति शङ्कायामविदुष एव सर्वकर्मत्यागासम्भवो नतु विदुष इत्याह—यदीति । यदि गुणास्सत्त्वादयोऽवस्तुभूता मिथ्याभूताः; यदिवाऽविद्याकल्पिताः, तद्धर्मः कर्म च यदि मिथ्या, यदि चाविद्याकल्पितं, तदा तर्ह्यात्मन्यविद्याध्यारोपितमेव तत्सर्वं गुणतत्कार्यजातमिति यो न वेत्ति सोऽविद्वान् कर्माशेषतस्त्यक्तुं न शक्नोति, तमुद्दिश्यैव- 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृ'दिति, नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत' इति चोक्तं भगवता ।

य इति । विद्वान् सतु पुनरविद्यानिवृत्तेरशेषतः कर्म त्यक्तुं शक्नोत्येव । कुतश्शक्नोति विद्वानत आह—अविद्येति । अविद्ययाऽध्यारोपणमात्मन्यध्यासो यस्य तस्य क्रियाकारकफलसमुदायस्येत्यर्थः । अविद्याकर्तृकक्रियाकारकफलाध्यारोपस्येति वा । अविद्यायां निवृत्तायां तत्कार्यस्यावशेषोऽनुपपन्न इत्यर्थः । अनुपपत्तिमेव दृष्टान्तप्रदर्शनेन स्फुटयति—नहीति । अवशेषो नावतिष्ठत इत्यन्वयः । यद्यवशेषोऽवतिष्ठेत तर्हि तिमिरेऽपनीतेऽपि द्विचन्द्रदर्शनं स्यात्, नतु तथास्ति । तथा सति तिमिरापगमस्यैवासिद्धेः । नन्वेवं विदुषः सर्वकर्मत्यागस्सम्भवतीति कुतो नोक्तं भगवतेत्यत आह—एवं चेति । 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देहे नैव कुर्वन्न कारय'न्निति सर्वकर्मत्यागः प्रोक्त एव भगवतेति भावः । नच तद्वचनं विद्वद्विषयमिति, नहि देहभृतेतिवचनमविद्वद्विषयमिति च कुतो ज्ञायत इति वाच्यं, वचनद्वयस्यैकाधिकारिपरत्वे व्याघाताद्भिन्नाधिकारिपरत्वं तावदवश्यमभ्युपेतव्यम् । तथा च सति अविद्यानिवृत्त्या विदुषः कर्मत्यागसम्भवः, तदनिवृत्त्या त्वविदुषस्तदसम्भव इति ज्ञायते । विद्यावान्हि विद्वान्; विद्या ह्यविद्याया निवर्तिका; अविद्यया ह्यात्मनि

या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा, तस्याः फलभूता नैष्कर्म्यसिद्धि-र्ज्ञाननिष्ठालक्षणा च वक्तव्येति श्लोक आरभ्यते—

असक्तबुद्धिस्सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥४९॥

असक्तबुद्धिरिति । असक्तबुद्धिः- असक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य सोऽसक्त-बुद्धिः, सर्वत्र पुत्रदारादिष्वासक्तिनिमित्तेषु, जितात्मा जितो वशीकृत आत्माऽन्तःकरणं यस्य स जितात्मा, विगतस्पृहः विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात्स विगतस्पृहः, य एवंभूत आत्मज्ञस्स नैष्कर्म्यसिद्धिं- निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसम्बोधात्स

---

क्रियाकारकादिभेदप्रतीतिः । सच्चिदानन्दं ब्रह्माहमस्मीत्येषा हि विद्या । कर्ता भोक्ता संसारी भिन्न ईश्वरादहमित्येषा ह्यविद्या । एतदविद्यावान् पुरुषस्सहजं कर्म न त्यजेत्, विद्यावांस्तु त्यजेदेवेति सिद्धः परमहंसपरिव्राजकस्य सर्वकर्मणामशेषतस्त्यागः । आत्मस्वरूपस्य निष्क्रियत्वात्परमहंसपरिव्राजकस्य तत्त्वविदश्चात्मत्वात्तत्त्वविदस्सर्वकर्मपरित्यागोपपत्तिरिति ।

ननु स्वस्मिन्नात्मन्यसतामेव कर्मणां कुतस्त्यागस्तत्त्वविदोऽपि सम्भवेत् ? प्रसक्तिपूर्वको हि निषेध इति चेत्, मैवम्—अविद्यया स्वात्मनि प्रसक्तानां कर्मणां विद्यया त्यागसम्भवादिति ।

यत्तु रामानुजः—ज्ञानयोग्योऽपि सहजं कर्मयोगं सदुःखमपि न त्यजेत् । ज्ञानारम्भाः कर्मारम्भाश्च दुःखेनावृता इति, तत्तुच्छम्—सर्वारम्भपरित्यागित्वं यदुक्तं गुणातीतलक्षणं तन्नैव सिद्ध्येद्यदि विद्वानपि कर्म न त्यजेत् । 'तरति शोकमात्मवि'दिति श्रुतेर्ज्ञानारम्भस्य सदुःखत्ववचनं त्वयुक्तम् । नच ज्ञानस्यादुःखत्वेऽपि तदारम्भस्य सन्न्यासादिलक्षणस्य सदुःखत्वमिति वाच्यं, तस्यापि ज्ञानरूपत्वेनादुःखत्वात् । न हि गृहं निर्मातुर्यश्श्रमः काष्ठादिसम्पादनरूपः स तत्परित्यक्तुर्भवेत् । न च विदुषोऽपि रागत्यागो दुष्कर इति वाच्यं, 'रसोऽप्यस्य परं दृष्ट्वा निवर्तत' इत्युक्तत्वेनात्मनि दृष्टे सति विदुषः स्त्र्यादिरागस्य सुत्यजत्वात् । तस्माद्द्रव्यार्जनपरिकरसम्पादनादिना कर्मारम्भ एव दुःखो ननु ज्ञानारम्भः । किंच गुणकर्मविभागप्रकरणेऽस्मिन् कोऽवकाशो ज्ञानयोगस्येति ॥४८॥

असक्तेति । ननु दर्शितविधयेश्वरार्पणबुद्ध्या स्वस्वनियतकर्म कुर्वाणस्य ज्ञाननिष्ठाप्राप्तियोग्यत्व-लक्षणचित्तशुद्धिरूपसंसिद्धिर्भवतीत्युक्तम् । तथा सिद्धस्य पुनः किं भवतीत्यत आह—असक्तेति । संसिद्धिः कर्मयोगफलं चित्तशुद्धिरिति यावत् । सर्वत्रासक्तबुद्धिर्जितात्मा विगतस्पृहश्च पुरुषस्सन्न्यासेन परमां नैष्कर्म्यसिद्धिमधिगच्छति । कर्मभिश्चित्ते शुद्धे सति पुरुषस्य पुत्रदारादिषु सर्वत्र बुद्धेरसङ्गो भवति; ततश्च मनसो वशीकरणं भवति; ततश्च देहजीवितादिषु निस्पृहत्वं सिध्यति; ततश्च सम्यग्दर्शनेन सर्वकर्मसन्न्यासं कृत्वा नैष्कर्म्यसिद्धिं प्राप्नोतीत्यर्थः । नैष्कर्म्यसिद्धिपदं व्याकरोति—निर्गतानीत्यादिना । निष्क्रियं ब्रह्मैवात्मेति बोधो यस्य स निष्क्रियब्रह्मात्मबोधस्तस्मान्निष्क्रियब्रह्मात्मबोधा-दिति यस्मादित्यस्य विशेषणम् । निष्क्रियब्रह्मात्मबोधाद्धेतोरिति वा । स इति । निष्क्रियब्रह्मात्म-

निष्कर्मा, तस्य भावो नैष्कर्म्यं, नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्यसिद्धिः, निष्कर्मत्वस्य वा सिद्धिर्निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिस्तां नैष्कर्म्यसिद्धिं, परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां, सन्न्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसन्न्यासेन, अधिगच्छति प्राप्नोति। तथा चोक्तम्—'सर्वकर्माणि मनसा सन्न्यस्य नैव कुर्वन्न कारयन्नास्त' इति ॥४९॥

---

बोधवान् पुरुष इत्यर्थः। नहि तूष्णींवर्तमानः पुरुषो निष्कर्मेत्युच्यते- तूष्णींवर्तनस्यापि क्रियात्वात्। किंतु निष्क्रियं ब्रह्मैवाहमिति य आत्मानं वेत्ति स तत्त्वविदेव निष्कर्मा- निष्क्रियस्यात्मन एव तत्त्वित्वात्तत्त्वविद एव निष्क्रियात्मस्वरूपत्वाच्च। तस्य निष्कर्मणो निष्क्रियस्य तत्त्वविदो भावो नैष्कर्म्यं निष्क्रियात्मस्वरूपेणावस्थानमित्यर्थः। सिद्धिर्गतिः। फलमिति यावत्। नैष्कर्म्यरूपा सिद्धिर्नैष्कर्म्यसिद्धिः, नैष्कर्म्यं च तत्सिद्धिश्चेति कर्मधारयः। नैष्कर्म्यमिति सिद्धिर्नैष्कर्म्यसिद्धिरिति सम्भावनापूर्वपदकर्मधारयमाहुरिममेव समासम्। नहि शास्त्रे 'विशेषणं विशेष्येण बहुल'मिति सूत्रकृतसमासातिरिक्तः कश्चन सम्भावनापूर्वपदोऽवधारणपूर्वपदो वा कर्मधारयोऽस्ति। तस्माद्विशेषणसमास एवायमत एवोक्तं- नैष्कर्म्यं च तत्सिद्धिश्चेत्याचार्यैः। नैष्कर्म्यरूपा तत्सिद्धिरिति तु फलितार्थकथनम्। समासान्तरमाह—नैष्कर्म्यस्य सिद्धिरिति, निष्पत्तिरिति। प्राप्तिरिति यावत्। उभयथापि निष्क्रियात्मस्वरूपावस्थानस्यैव फलत्वम्। नैष्कर्म्यसिद्धेः कुतः परमत्वमत आह—कर्मजेति। कर्मजसिद्धिश्चित्तशुद्धिस्तद्विलक्षणत्वादियं सिद्धिरुत्कृष्टेत्यर्थः।

ननु मोक्षलक्षणसिद्धेरितोऽप्युत्कृष्टायास्सत्त्वात्कथमस्याः परमत्वमत आह—सद्योमुक्तीति। सद्य एव मुक्तिर्यस्मात्तत्सद्योमुक्ति, तच्च तदवस्थानं सद्योमुक्त्यवस्थानं तद्रूपाम्। निष्क्रियात्मस्वरूपावस्थानात्सद्य एव मुक्तिर्भवतीत्यर्थः। सद्योमुक्ति रूपं यदवस्थानं तद्रूपामिति वा। निष्क्रियात्मस्वरूपावस्थानमेव सद्योमुक्तिरित्यर्थः। सद्योमुक्तिर्जीवन्मुक्तिरित्यर्थः। सद्योमुक्तिरूपामिति पाठस्समीचीनः। धातूनामनेकार्थत्वादाह—सन्न्यासेन सम्यग्दर्शनेनेति। प्रसिद्धार्थपरित्यागोऽनुचित इत्याह—सर्वकर्मसन्न्यासेनेति, तत्पूर्वकेणेति। सम्यग्दर्शनपूर्वकेणेत्यर्थः। न ह्यविदुषस्सर्वकर्मसन्न्यासस्सम्भवतीति भावः।

ननु विदुषस्सर्वकर्मसन्न्यासेन नैष्कर्म्यसिद्धिरिति कुत्रोक्तमत आह—तथा चोक्तमिति। इहैवेति शेषः। आस्त इत्युक्तमित्यन्वयः। अनेन श्लोकेन गृहस्थः पुरुषः कर्मयोगादीश्वराराधनात्मकाच्चित्तशुद्धिं प्राप्य ततो दारापत्यगृहादिकं सर्वं परित्यज्य प्रव्रज्य तत्त्वविदस्समीपे वेदान्तवाक्यश्रवणादिकं कृत्वा निष्क्रियं ब्रह्माहमस्मीति सम्यग्दर्शनं सम्पाद्य ततः परमहंसपरिव्राजको भूत्वा सर्वकर्माशेषतस्सन्न्यस्य निष्क्रियात्मस्वरूपावस्थानलक्षणां सद्योमुक्तिं प्राप्य यावद्देहपातमात्मारामो वर्तत इति दर्शितम्। अस्य च जीवन्मुक्तस्य देहान्ते विदेहकैवल्यलक्षणब्रह्मप्राप्तिरुत्तरश्लोके वक्ष्यते। ब्रह्म प्राप्नोतीति। एवं स्थिते कर्मयोगादेव ब्रह्मप्राप्तिरिति वदतो रामानुजस्याहो! साहसम् ॥४९॥

पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिर्येन क्रमेण भवति, तद्वक्तव्यमित्याह—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय ! निष्ठा ज्ञानस्य या परा ॥५०॥

सिद्धिमिति । सिद्धिं प्राप्तस्स्वकर्मणेश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः । किं तदुत्तरं, यदर्थोऽनुवाद इत्युच्यते—यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानं प्राप्नोति, तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारयेत्येतत् । किं विस्तरेण ? नेत्याह—समासेनैव संक्षेपेणैव हे कौन्तेय ! यथा ब्रह्म प्राप्नोति तथा निबोधेति । अनेन या प्रतिज्ञाता ब्रह्मप्राप्तिः, तामिदं तया दर्शयितुमाह—'निष्ठा ज्ञानस्य या परे'ति । निष्ठा पर्यवसानं परिसमाप्तिरित्येतत् । कस्य ? ब्रह्मज्ञानस्य या परा परिसमाप्तिस्तादृशी ? यादृशं परमात्मज्ञानं; कीदृशमात्मज्ञानम् ? यादृश आत्मा; कीदृक्सः ? यादृशो भगवतोक्तः; उपनिषद्वाक्यैश्च न्यायतश्च ।

---

सिद्धिमिति । श्लोकमवतारयति—पूर्वोक्तेनेति, प्रागुक्तलक्षणामिति । चित्तशुद्धिलक्षणामित्यर्थः । ज्ञाननिष्ठाप्राप्तियोग्यतालक्षणामिति यावत् । तद्वक्तव्यमिति । स क्रमो वक्तव्य इत्यर्थः । कर्मजसिद्धिं प्राप्तस्य नैष्कर्म्यसिद्धिप्राप्तिर्येन क्रमेण भवति तं क्रमं वक्ष्यामि श्रुण्विति प्रतिजानाति सिद्धिमितिश्लोकेन भगवानिति भावः । तदनुवादस्सिद्धिप्राप्त्यनुवादः । उत्तरार्थ इत्युक्ते पृच्छति—किं तदुत्तरमिति । प्रत्याह—यथेत्यादि । ब्रह्मप्राप्तिहेतुभूतज्ञाननिष्ठाप्राप्तिक्रमप्रदर्शनमुत्तरं तदर्थ उत्तरार्थ इत्यर्थः । ज्ञाननिष्ठाप्राप्तिक्रम उत्तरमिति वा । तथापि पूर्वोक्त एव पर्यवसन्नोऽर्थः । इदं तयेति । इयं ब्रह्मप्राप्तिरिति बोधयितुमित्यर्थः । या ज्ञानस्य परा निष्ठा सेयमेव ब्रह्मप्राप्तिरित्यर्थः । ब्रह्मज्ञानस्य मोक्षैकफलत्वान्मोक्षस्य च ब्रह्मप्राप्तिरूपत्वाद्ज्ञानस्य पर्यवसानं ब्रह्मप्राप्तिरेव ज्ञानस्य साध्यं, फलमेव हि पर्यवसानमिति भावः । हे कौन्तेय ! सिद्धिं प्राप्तो यथा ब्रह्म प्राप्नोति तथा समासेनैव मे वचनान्निबोध । या ज्ञानस्य परा निष्ठा भवतीति श्लोकस्यान्वयः । कर्मजसिद्धिं प्राप्तस्य पुरुषस्य ब्रह्मज्ञानस्य परा निष्ठा ब्रह्मप्राप्तिर्यया ज्ञाननिष्ठया भवति सा नैष्कर्म्यलक्षणा ज्ञाननिष्ठा येन क्रमेण प्राप्यते तं ज्ञाननिष्ठाप्राप्तिक्रममहं वक्ष्यामि हे कौन्तेय ! त्वं सावधानो भवेति श्लोकस्य भावार्थः ।

ननु या ब्रह्मज्ञानस्य परा निष्ठा सैव ब्रह्मप्राप्तिरित्युक्तं, सा निष्ठा कीदृशीति पृच्छति—सा कीदृशीति । उत्तरयति—यादृशमिति । यादृशमात्मज्ञानं तादृशी ब्रह्मज्ञानस्य परा निष्ठा- ब्रह्म-

ननु विषयाकारं ज्ञानं न विषयः, नाप्याकारवानात्मेष्यते क्वचित्। ननु 'आदित्यवर्णं भारूपस्स्वयंज्योति'रित्याकारवत्त्वमात्मनः श्रूयते न, तमोरूपत्वप्रतिषेधार्थत्वात्

---

ज्ञानस्यैव ब्रह्मप्राप्तिरूपत्वादिति भावः। कीदृक्तदिति पृच्छति—कीदृशमिति। उत्तरयति—यादृश आत्मेति। आत्मा यादृश आत्मज्ञानं तादृशमेव ज्ञानस्य विषयाकारत्वादिति भावः। ननु कीदृश आत्मेति पृच्छत्युत्तरयति—यादृश इति। भगवता गीताभिरुपनिषद्वाक्यैश्चात्मा यादृश इत्युक्ते न्यायतश्चात्मा यादृश इति निर्णेतुं शक्यस्तादृश एवात्मेत्यर्थः। कूटस्थासङ्गस्वप्रकाशानन्दस्वरूप इति भावः।

ननु 'न जायते म्रियत' इत्यादिवाक्यैर्न्यायतश्चात्मनः प्रसिद्धावपि नात्मज्ञानस्य सिद्धिरात्मनोऽविषयत्वादनाकारत्वाच्चेति शङ्कते—नन्विति। ज्ञानं विषयाकारं विषयस्य घटादेराकार इवाकारो यस्य तत्तथोक्तं भवतीति शेषः। विषयाकारपरिणतबुद्धिवृत्तिप्रतिफलितचैतन्यस्य ज्ञानत्वेन व्यवहारादिति भावः। भवतु किं तत इत्यत्राह—नेति। क्वचिदपि वेदान्तशास्त्रे आत्मा विषय इति नेष्यते, आकारवानित्यपि नेष्यते। आत्मनो विषयत्वाभावे हेतुप्रदर्शनार्थमाकारवान्नेत्युक्तमाचार्यैः। आकारविशिष्टं वस्तु ज्ञानस्य विषयो भवति। तद्विषयाकारं च ज्ञानं च भवतीति निराकारस्यात्मनः कथं ज्ञानविषयत्वम्? न कथमपीति नात्मज्ञानसिद्धिरिति भावः। नच 'सत्यं ज्ञानमनन्तं ब्र'ह्मेति श्रुतेर्ज्ञानाकारस्यात्मनः कथं निराकारत्वमिति वाच्यं, तत्र ज्ञानपदस्य लाक्षणिकत्वेन चैतन्यपरत्वादात्मस्वरूपभूतं चैतन्यं निराकारमेव, वृत्तिज्ञानमेव हि साकारम्। नच निराकारमपि चैतन्यं भवतु ज्ञानस्य विषय आकाशादिवदिति वाच्यं, आकाशादेरवकाशादिमत्त्वेन साकारत्वात्। नच चैतन्यमपि गुणवत्त्वेन साकारमिति वाच्यं, निर्गुणत्वात्- 'साक्षी चेता केवलो निर्गुण'श्चेति हि श्रूयते। नच सुतरां ज्ञानाविषयत्वे कथमात्मनस्सिद्धिरिति वाच्यं, स्वप्रकाशत्वेनैव तत्सिद्धेः। सर्वस्याप्यनात्मवर्गस्य सिद्धेरात्माधीनत्वाच्च। 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभा'तीतिश्रुतेः।

नच वृत्तिज्ञानमेव स्वप्रकाशं परप्रकाशकं चेति वाच्यं, वृत्तेर्जडत्वात्तत्प्रतिफलितचैतन्यस्य च बिम्बचैतन्यपरतन्त्रत्वात्; बिम्बप्रतिबिम्बाभेदपक्षे तु वृत्तिज्ञानगतज्ञानांशस्य चैतन्यरूपत्वेन स्वप्रकाशत्वं तस्येष्टमेव।

ननु यदि घट इति ज्ञानमपि चैतन्येन भास्यते तर्हि ज्ञानस्य ज्ञेयत्वमापतितं, तथाचानवस्थादिदोषादितिचेत्, मैवम्—चैतन्यावभासकवस्त्वन्तरानभ्युपगमेनानवस्थादोषाभावात्। चैतन्येतरस्य सर्वस्यापि ज्ञेयत्वाभ्युपगमाच्च, घट इति वृत्तिज्ञानस्यापि वृत्त्यंशे जडत्वेन ज्ञेयत्वसद्भावाच्च। तस्माच्चैतन्यैकस्वरूपत्वादात्मा निराकार एव। एवमात्मनो निराकारत्वमसहमानो द्वैती चोदयति—नन्विति। 'आदित्यवर्णं तमसः परस्ता'दिति श्रुतिः। आदित्यस्येव वर्णो यस्य तमादित्यवर्णं भारूपस्तेजोरूपः। स्वयंज्योतिस्स्वत एव भासमानः। आकारवत्त्वं तेजोमयाकार इत्यर्थः।

पूर्वपक्षं परिहरति—नेति। नास्त्याकारवत्त्वमात्मन इत्यर्थः। तर्हि का गतिश्श्रुतिवाक्यस्य

वाक्यानाम् । द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि 'आदित्यवर्ण'मित्यादीनि वाक्यानि । 'अरूप'मिति च विशेषतो रूपप्रतिषेधात्, अविषयत्वाच्च 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं, अशब्दमस्पर्श'मित्याद्यैः । तस्मादात्माकारं ज्ञानमित्यनुपपन्नम् ।

कथं तर्ह्यात्मनो ज्ञानम्? सर्वं हि यद्विषयं यद्ज्ञानं तत्तदाकारं भवति । निराकारश्चात्मेत्युक्तम् । ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावनानिष्ठा? इति न, अत्यन्त-

---

मत आह—तम इति । संग्रहवाक्यं विवृणोति—द्रव्येति । तमोऽन्धकारः, अज्ञानं वा । कथमिदं प्राप्तेऽत आह—अरूपमिति । अरूपमिति विशेषतो रूपं प्रतिषिध्यात्मनस्सैव श्रुतिः कथं तेजोरूपत्वं ब्रूयात्तस्यैव? रूपवद्द्रव्यं हि तेज इति भावः । हेत्वन्तरमाह—अविषयत्वाच्चेति । यद्यात्मा सरूपस्स्यात्तर्हि घटादिवच्चक्षुरादेर्विषय एव स्यान्न तु तथाऽस्तीति भावः । उक्तार्थे श्रुतिं प्रमाणयति—नेति । अस्यात्मनो रूपं दृशे दृग्विषये न सन्तिष्ठति । सन्दृशे सम्यग्दर्शनविषये इति वा । रूपं सच्चिदानन्दलक्षणं स्वरूपमित्यर्थः । ननु शुक्लकृष्णादि- तस्य दृग्विषयत्वाभावायोगात् । एनमात्मानं कश्चन कोपि चक्षुषा न पश्यति नीरूपत्वादिति भावः । कश्चनेत्यनेन मनुष्याणां तददर्शनेपि देवानां तद्दर्शनं स्यादित्यपास्तम् ।

नचैवं रूपाभावेन चक्षुरविषयत्वेपि शब्दादिसद्भावाच्छ्रोत्रादिविषयत्वं स्यादात्मन इत्यत आह—अशब्दमिति । 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च'चेतिश्रुतेः । पूर्वपक्षमुपसंहरति—तस्मादिति । ज्ञानस्याविषयत्वान्निराकारत्वाच्चात्मन इति तच्छब्दार्थः । आत्माकारं ज्ञानमित्यात्मन आकार इवाकारो यस्य तदात्माकारं ज्ञानमित्यनुपपन्नमयुक्तमात्मन आकाराभावेन ज्ञानस्यात्माकारत्वासम्भवादिति भावः ।

ननु ज्ञानस्यात्माकारत्वं मास्तु किं तत इत्यत आह—कथमिति । तर्हीत्यस्य ज्ञानस्यात्माकारत्वाभाव इत्यर्थः । आत्मनो ज्ञानं कथम्? ननु ज्ञानस्यात्माकारत्वाभावे आत्मज्ञानसिद्धेः कानुपपत्तिरत आह—सर्वमिति । हिः प्रसिद्धौ । हि यस्मादिति वा । यद्ज्ञानं यद्विषयं तत्सर्वं तदाकारं भवतीत्यन्वयः । घटविषयज्ञानस्य घटाकारत्वं पटविषयज्ञानस्य पटाकारत्वमित्येवं सर्वं ज्ञानं विषयाकारं भवतीत्यर्थः । तर्हि भवत्वेवमात्मविषयज्ञानमात्माकारमत आह—निराकारश्चेति । चकारादविषयश्चात्मेत्युक्तमित्यर्थः । ननु विषयस्य साकारत्वे ज्ञानस्य साकारत्वमिव विषयस्य निराकारत्वे ज्ञानस्यापि निराकारत्वमिति कृत्वा निराकारमेव स्यादात्मज्ञानमित्यत आह—ज्ञानात्मनोरिति । यद्यात्मा निराकारः, आत्मज्ञानं च निराकारं तर्हि तद्भावनानिष्ठा न सिध्येदित्यर्थः । तस्यात्मज्ञानस्य भावना पौनःपुन्येनानुसन्धानं तस्या निष्ठा समाप्तिरात्मसाक्षात्कारदार्ढ्यं तद्भावना निष्ठा । इतिशब्दः पूर्वपक्षसमाप्तिवाची ।

निर्मलत्वातिस्वच्छत्वातिसूक्ष्मत्वोपपत्तेरात्मनः । बुद्धेश्चात्मवन्नैर्मल्याद्युपपत्तेरात्मचैतन्याकाराभासत्वोपपत्तिः- बुद्ध्याभासं मनः, तदाभासानीन्द्रियाणि, इन्द्रियाभासश्च देहः । अतो लौकिकैर्देहमात्र एवात्मदृष्टिः क्रियते ।

देहचैतन्यवादिनश्च लोकायतिकाः- 'चैतन्यविशिष्टः कायः पुरुष' इत्याहुः । तथा चान्य इन्द्रियचैतन्यवादिनः; अन्ये मनश्चैतन्यवादिनः; अन्ये बुद्धिचैतन्यवादिनः । ततोऽ-

---

पूर्वपक्षं परिहरति सिद्धान्ती—नेति । आत्मज्ञानस्यासिद्धिरिति न वक्तव्यमित्यर्थः । कुतो न वक्तव्यम् ? तत्राह—अत्यन्तेति । अत्यन्तनिर्मलोऽतिस्वच्छोऽतिसूक्ष्मश्चात्मा भवति; तथा बुद्धिरप्यत्यन्तनिर्मलाऽतिस्वच्छा सूक्ष्मा च भवति । आत्मनश्च चैतन्यमाकारः, नतु वृत्तिज्ञानं; बुद्धिश्चात्मचैतन्याकारेणाभासते, बुद्ध्यात्मनोरन्योन्यतादात्म्याध्यासाद्बुद्धावात्मचैतन्याकाराध्यासः । तत-श्चात्मचैतन्याध्यासवशाद्बुद्धिश्चेतनेवाभाति, तथा बुद्धिधर्माध्यासान्मनश्च बुद्धिवदाभासत इति बुद्ध्याभासं भवति । तन्मनोधर्माध्यासादिन्द्रियाण्यपि मनोवच्चेतनानीवाभासन्त इति मनआभासानीन्द्रियाणि तदिन्द्रियधर्माध्यासाद्देहोऽपीन्द्रियवच्चेतन इवाभासत इतीन्द्रियाभासो देहः । अत इति । बुद्ध्यादिषु देहान्तेषु क्रमेण तारतम्येन चात्मचैतन्याकाराभाससत्त्वादित्यर्थः । देह एवात्मेति प्रतिपद्यन्ते लौकिकाः स्थूलोऽहमित्यादिप्रतीतेः । न केवलं लौकिकाः; किं त्वागमविदोऽपि केचिदित्याह—लोकायतिका इति । बौद्धा इत्यर्थः । के तेऽत्र आह—देहचैतन्यवादिन इति । यच्चैतन्यमात्माकार इति वेदान्तिनो ब्रुवन्ति, तच्चैतन्यं देहस्यैवेति देहचैतन्यवादिन एते । तदेव स्फुटयन्नाह—चैतन्येति । चैतन्यविशिष्टो देह एवात्मेत्याहुः । मृतशरीरस्य पुरुषव्यवहाराभावादुक्तं चैतन्यविशिष्ट इति लौकिकापेक्षया । लोकायतिकानामयमेव विशेषः । केवलदेह एवात्मेति लौकिकाश्चैतन्यविशिष्टदेह एवात्मेति लोकायतिका इति । अन्ये पुनरिन्द्रियाण्येवात्मेत्याहुरित्याह—तथा चेति । यदि देह एवात्मा स्यात्तर्हि काणबधिरादिदेहस्यापि दर्शनश्रवणादिव्यवहारो भवेत् । तस्मान्न देह आत्मा; किं त्विन्द्रियाण्येवात्मेत्येषां भावः । अन्ये तु मन एवात्मेत्याहुरित्याह—अन्य इति । यदीन्द्रियसङ्घ एवात्मा स्यात्तर्हि मनस्यन्याक्रान्ते सत्यपीन्द्रियाणां दर्शनादिव्यवहारस्स्यात् । स्वप्नदशायामिन्द्रियाभावाद्दर्शनादिव्यवहारानुपपत्तिश्चेति नेन्द्रियाण्यात्मा, किंतु मन एवात्मेत्येतेषामाशयः । अन्ये तु बुद्धिरेवात्मेत्याहुरित्याह—अन्ये बुद्धीति । बुद्धेरेव चैतन्यमिति वदितुं शीलं येषां ते बुद्धिचैतन्यवादिनः । यदि मन एवात्मा स्यात्तर्ह्यध्यवसायदशायामपि सङ्कल्पविकल्पौ स्यातां मनोधर्मत्वात्तयोर्मनस एवात्मत्वाच, ततोऽध्यवसायानुपपत्तिश्च । तस्मान्न मन आत्मा, किंतु बुद्धिरेवात्मा बुद्धेरेवात्मनस्सङ्कल्पविकल्पकारणं, करणं तु मनः; यथा रूपाद्युपलब्धिकारणं करणं चक्षुरादिकं तद्वदिति भावः । अन्ये त्वव्यक्तमेवात्मेति वदन्तीत्याह— ततोऽपीति । केचिदव्यक्तमात्मत्वेन प्रतिपन्ना इत्यन्यः । अविद्यावस्थमज्ञानस्वरूपं कारणशरीरभूतकार्याज्ञानावस्थमिति वा । यदि बुद्धिरेवात्मा स्यात्तर्हि सुषुप्त्यनुभवो न स्यादात्मनो बुद्ध्यात्मनस्तदानीमभावादिति भावः । यद्यपि पूर्वं बुद्धेरेवादावात्मचैतन्याकाराभासत्वमुक्तं नाव्यक्तस्य ।

ध्यान्तरमव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः केचित् । सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासताऽऽत्मभ्रान्तिकारणमित्यतश्चात्मविषयं ज्ञानं न विधातव्यम् । किं तर्हि ? नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव कार्या नात्मचैतन्यविज्ञानं कार्यं- अविद्याध्यारोपितसर्वपदार्थाकारैरेव विशिष्टतया गृह्यमाणत्वादिति । अत एव हि विज्ञानवादिनो बौद्धा

---

तथाप्यव्यक्तस्यैवादावात्मचैतन्याध्यासाकारस्तदनन्तरं बुद्धेरिति बोध्यम् । यद्वाऽऽत्मन उपाधिरविद्येति मतमाश्रित्य केचिदव्यक्तमात्मचैतन्याभासाकारत्वादात्मेत्याहुरित्युक्तम् । आत्मन उपाधिर्बुद्धिरेवेति मतमाश्रित्य तु बुद्धावेवादावात्मचैतन्याकाराभास इत्युक्तमिति न विरोधः; अन्तःकरणावच्छिन्नं चैतन्यमात्मेति, अविद्यावच्छिन्नं चैतन्यमात्मेति च मतद्वयसत्त्वादिति भावः । अन्तःकरणस्यैवावस्थाविशेषौ बुद्धिर्मनश्चेति बोध्यम् ।

ननु कस्मादेवं विविधं प्रतिपन्ना एकमेवात्मानं वादिन इत्यत्र आह—सर्वत्रेति । बुद्ध्यादिदेहान्तेषु सर्वेष्वप्यनात्मसु तत्तद्वादिनां दर्शिताया आत्मभ्रान्तेः कारणमात्मचैतन्याभासतैव । आभासः प्रतिफलनमध्यासो वा । बुद्ध्यादिषु य आत्मचैतन्याकारस्याभासः पूर्वं दर्शितस्स एव तेष्वात्मेति भ्रमं जनयत्यविवेकिनामित्यर्थः । आत्मचैतन्यस्याभासो येषामस्ति, येष्वस्तीति वा आत्मचैतन्याभासास्तेषां भावस्तत्ता । आत्मचैतन्याभास इति यावत् । ननु भवत्वेवमज्ञानामनात्मस्वात्मभ्रमः किं तत्कथनेन प्रकृतपूर्वपक्षस्येतिचेत्, उच्यते—भ्रमेण तत्त्वेन वा कश्चिदात्मेति पदार्थस्सिद्ध एव ज्ञात इति सिद्धमात्मज्ञानमिति । अन्यथाऽज्ञातस्यात्मनः प्रसिद्ध्ययोगादिति । एवमात्मज्ञानस्य प्रसिद्धत्वादेव न विधेयत्वमित्याह—अत इति, विधातव्यमिति । विधातुमर्हं विधातव्यं विधिविषय इत्यर्थः । नचैवं श्रुत्या 'आत्मावाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति विधीयते आत्मज्ञानं तव्यप्रत्ययान्तशब्दैरिति वाच्यं, विधिच्छायावचनत्वात्तेषाम् । ननु यद्येवमात्मज्ञानं न विधीयते तर्हि किं विधीयते श्रोतव्यादिवाक्यैरत्र आह—किं तर्हीति । आत्मन्यविद्यया कृतं यन्नामरूपाद्यनात्माध्यारोपणं तन्निवृत्तिरेव कार्या । एवकारार्थमाह—नात्मचैतन्यविज्ञानं कार्यमिति । कुतो निवृत्तिरेव कार्येत्यत्र आह—अविद्येति । अविद्यया आत्मन्यध्यारोपिता ये बुद्ध्यादिसर्वपदार्थाकारास्तैर्विशिष्टतयैवात्मचैतन्यस्य गृह्यमाणत्वाद्विज्ञायमानत्वात् ।

अयं भावः—लोकायतिकादयस्सर्वेऽप्यात्मचैतन्यं देहाद्याकारविशिष्टत्वेन रूपेण प्रतिपद्यन्त इत्यस्त्येव सर्वेषामात्मचैतन्यप्रतिपत्तिः । सुतरामात्मज्ञानाभावे चैतन्यविशिष्टः काय आत्मेत्येवं वक्तुमशक्यत्वात् । अतस्सिद्धमेवात्मज्ञानमिति नात्मज्ञानं साध्यम् । इदं चामीषामात्मज्ञानं भ्रान्तिरूपमेव, न प्रमारूपं- निर्विशेषे आत्मनि सविशेष आत्मेति ज्ञानस्य भ्रमत्वात् । अयं तु भ्रमो नाशयितव्यः, अनर्थहेतुत्वादिति । निर्विशेषोऽप्यात्माऽविद्ययाऽध्यारोपिततत्तदाकारविशिष्टतयैव गृह्यतेऽतत्त्वविद्भिरित्यत्र विज्ञानवादिबौद्धभ्रान्तिं प्रमाणयति—अत एवेति । चैतन्यं केवलं केवलत्वादेव नोपलभ्यते । देहेन्द्रियादयस्तु जडत्वादेव नोपलभ्यन्ते, किं तर्हि देहेन्द्रियमनोबुद्ध्यव्यक्तैरुपलभ्यमानैस्सहैवोपलभ्यते

विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः, प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वा-

चैतन्यं नान्यथेति यस्मात्सिद्धं तस्मादेवेत्यर्थः । प्रतिपन्ना इति । सर्वं ज्ञेयं ज्ञानव्याप्तमेव गृह्यते, तेन ज्ञानातिरिक्तं नास्त्येव वस्तु । सम्मतं हि ज्ञानातिरिक्तं स्वप्नदृष्टं वस्तु नास्तीत्येवं विज्ञानवादिनो भ्रान्तिं प्रतिपन्ना इत्यर्थः । ननु ज्ञानस्यापि ज्ञेयत्वाद्‌ज्ञातृवस्त्वन्तरमेष्टव्यमित्याशङ्क्याह—प्रमाणेति। बौद्धा ज्ञानस्य प्रमाणान्तरनिरपेक्षतां च प्रतिपन्ना इत्यन्वयः । कथं प्रतिपन्ना इत्यत्राह—स्वेति। ज्ञानस्य स्वसंविदितत्वाभ्युपगमेन स्वेनैव ज्ञेयत्वाङ्गीकारेण । ज्ञानं स्वैकवेद्यमत एव स्वप्रकाशं स्वतः प्रमाणं चेति न प्रमाणान्तरापेक्षास्ति ज्ञानस्येत्यर्थः ।

ननु ज्ञानस्य स्वतःप्रमाणत्वादिकं वेदान्तिभिरप्यभ्युपगतम् । 'तस्मान्न विज्ञानमृतेस्ति किंचि-त्क्वचित्कदाचिद्द्विज । वस्तुजात'मिति पराशरमुनिना विज्ञानातिरिक्तवस्त्वभावोऽपीष्ट इति कृत्वा किमिति विज्ञानवादिनो बौद्धा भ्रान्ता इत्युच्यत इतिचेत्, उच्यते—शृणु तद्विवेकम् । विज्ञानं नित्यमखण्डमेकरूपं स्वप्रभं ब्रह्म 'सत्यं ज्ञानमनन्त'मिति श्रुतेः । तस्माच्च चैतन्याद्ब्रह्मणो नान्यः पदार्थः कोऽपि 'सर्वं खल्विदं ब्र'ह्मेति श्रुतेस्सर्वस्य ब्रह्मणि कल्पितत्वात्कल्पितस्य चाधिष्ठानानतिरेकादिति पराशरमतं; नात्र मते बाह्यार्थस्यापलापः, किंतु प्रतिभासमाने सत्येव बाह्यार्थे घटादौ विज्ञानं चैतन्यं घटाद्याकारपरिणतबुद्धिवृत्तिप्रतिफलितं सद्घटाद्याकारं ज्ञानमित्युच्यते भ्रान्त्या, ननु वस्तुत इति पा-राशराद्यद्वैतिमतम् । विज्ञानवादिनां बौद्धानां तु क्षणिकमेव विज्ञानं तावद्वासनावैचित्र्याद्घटाकारमन्त-र्जायते तदेव बहिर्विषयवदवभासते, ननु कोपि बाह्यार्थोस्ति स्वप्नवज्जागरेऽपीति मतम् ।

ननु कथमिदं बौद्धमतमवद्यमितिचेत्, उच्यते—क्षणिकस्य विज्ञानस्य स्वसंवेद्यत्वानुपपत्तिः। उत्पत्तेः पूर्वक्षणे नाशादुत्तरक्षणे च ज्ञानं नास्ति, मध्यक्षण एव वर्तत इति हि क्षणिकं विज्ञानमित्युच्यते। तौ च ज्ञानस्योत्पत्तिनाशौ किं ज्ञानेन वेद्येते उत न ? आद्ये- व्याघातः, स्वोत्पत्तिनाशयोस्स्वप्रकाशत्वा-योगात् । नहि तत्काले स्वमस्ति । नान्त्यः- अवेद्ययोस्तयोरसाक्षिकत्वेनाभ्युपगमायोगात् । न च ज्ञानान्तरेण वेद्यत इति वाच्यं, स्ववेद्यत्वापायात् । ज्ञानान्तरस्यापि क्षणिकत्वेन प्रकृतज्ञानोदयनाशदर्शना-सम्भवाच्च । तस्माद्यदि ज्ञानं क्षणिकमेवेत्यभिनिवेशस्तर्ह्यन्यावभास्यमेव । नचाद्वैतमतेऽपि कथं नित्यत्वं ज्ञानस्य ? घटज्ञानं मम नष्टं पटज्ञानं जातमिति व्यवहारसत्त्वादिति वाच्यं, घटादिविषयनाशादियु-क्तत्वात्तद्व्यवहारस्य । एकस्मिन्नेवाखण्डे ज्ञाने एकस्मिन्क्षणे घटो विषयो भवति, क्षणान्तरे तु पट इति कृत्वा यदा घटो विषयस्तदा घटज्ञानं जातमिति च व्यवहार इति भावः ।

यद्वा वृत्तेः क्षणिकत्वाद्वृत्तिविज्ञानस्य क्षणिकत्वव्यवहारः, वृत्तिप्रतिफलितचैतन्यस्यैव वृत्ति-ज्ञानत्वात् । सा च वृत्तिस्साक्षिभास्यैवेति वृत्तिज्ञानमपि साक्षिभास्यमेवेति न स्वसंवेद्यं विज्ञानं तर्हि-त्यमिमतं साक्षिभूतं चैतन्यमेवेति तस्य नित्यत्वमनन्यावभास्यत्वं च युक्तमेव । घटं विना तदाकार-परिणामाभावाद्बुद्धेर्वासनायाश्चायोगाद्बाह्यार्थापलापोऽप्ययुक्त इत्यवद्यं बौद्धमतम् ।

भ्युपगमेन । तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्तव्यं, नतु ब्रह्मविज्ञाने यत्नः-
अत्यन्तप्रसिद्धत्वात् । अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनामत्यन्तप्रसिद्धं सुविज्ञेय-
मासन्नतरमात्मभूतमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव च प्रतिभात्यविवेकिनाम् । बाह्या-
कारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां नातःपरं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नतर
मस्ति । तथा चोक्तम्—'प्रत्यक्षावगमं धर्म्य'मित्यादि ।

---

तस्मादिति । आत्मज्ञानस्य सिद्धत्वेनाविधेयत्वादित्यर्थः । मात्रशब्दार्थमाह—नत्विति,
यत्न इति । कर्तव्य इति शेषः । कस्मादात्मज्ञाने यत्नो न कर्तव्योऽत आह—अत्यन्तप्रसिद्धत्वा-
दिति । ब्रह्मण इति शेषः । आत्मत्वादिति भावः । नहि देहातिरिक्तकर्तृभोक्त्रात्मवाद्यात्मज्ञाने
यतते, नापि देहात्मवाद्यात्मानं ज्ञातुं यतते, तथा ब्रह्मात्मवाद्यपीति बोध्यम् । ननु यद्यत्यन्तं प्रसिद्धं ब्रह्म
तर्हि सर्वैः कुतो न ज्ञायते ? किमर्थं च महतो वेदान्तशास्त्रस्याध्ययनादिकम् ? अत आह—अवि-
द्येति । अत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरमात्मभूतमपि ब्रह्म, अविद्याकल्पितनामरूपविशेषापहृतबुद्धीना-
मप्रसिद्धं दुर्विज्ञेयमतिदूरस्थमन्यदिव च प्रतिभातीत्यन्वयः । अविद्यया ब्रह्मणि कल्पिता ये नामरूप-
विशेषाकारास्तैरपहृतबुद्धयः, अविद्यावन्तो मूढा अनात्मनो बुद्ध्यादीनात्मत्वेन प्रतिपन्नाः सन्तस्स्थूलोऽहं
मनुष्योऽहं काणोऽहं सुरूप्यहं दुःख्यहमज्ञोऽहमित्येवं मन्यमानास्स्वात्मभूतमपि सच्चिदानन्दं ब्रह्म न
विदुः । अत एवाविदुषां तेषां प्रसिद्धमपि ब्रह्माप्रसिद्धमिव भाति; सुविज्ञेयमपि दुर्विज्ञेयमिव भाति;
आसन्नतरमपि दूरस्थमिव भाति; आत्मभूतमप्यनात्मभूतमन्यदिव भातीत्यर्थः ।

तर्हि केषां पुनरिदं ब्रह्म सुप्रसिद्धमत आह—बाह्येति । लब्धा गुर्वात्मप्रसादादयो यैस्तेषां
लब्धगुर्वात्मप्रसादादीनां, गुरुप्रसादः तत्त्वमस्यादिमहावाक्योपदेशादिरूपः, आत्मप्रसाद ईश्वरानुग्रह-
चित्तपरिशुद्धिर्वा । आदिपदाद्विवेकादिग्रहणमत एव बाह्याकारनिवृत्तबुद्धीनां बाह्याकारेभ्य आत्मनि
कल्पितेभ्यो बुद्ध्याद्याकारेभ्यो निवृत्ता बुद्धिर्येषां तेषां विदुषां तु । अतोऽस्माद्ब्रह्मणः परमन्यत्सुख-
मानन्दरूपं सुप्रसिद्धं सुविज्ञेयं स्वासन्नतरं च वस्तु नास्ति । तेषां सच्चिदानन्दं ब्रह्मैवाहमस्मीति ज्ञान-
सत्त्वादिति भावः । अयमेवार्थो भगवताऽप्युक्त इत्याह—तथा चेति । तस्मात्स्वस्यैवात्मत्वादात्मन
एव ब्रह्मत्वात्तस्य च स्वप्रकाशत्वात्प्रमाणान्तरानपेक्षत्वाच्च कथमात्मनो ज्ञानमिति न चोदनीयम् । कुतो
न चोदनीयमिति चेदुच्यते—न वयमात्मा ज्ञातव्य इति ब्रूमः, येन तथा चोद्येत; कुतो न ब्रूथेतिचे-
द्येनात्मा ज्ञातव्यस्तस्यैव ज्ञातुरात्मत्वात् । तर्हि किं ब्रूथेतिचेद्देहादिष्वनात्मस्वात्मत्वेन परिगृहीतेष्वात्म-
बुद्धिनिवृत्तिः कार्येति ब्रूमः । केन कार्येतिचेद्येनानात्मान आत्मत्वेन परिगृहीतास्तेन । केन परि-
गृहीता इतिचेदविदुषा । कोऽयमविद्वानिति चेद्यस्याविद्यास्ति सः । कस्याविद्यास्तीति चेद्योऽना-
त्मानमात्मेति प्रतिपद्यते तस्य । क एवं प्रतिपद्यत इति चेदुक्तमेवाविद्यावानिति ।

नन्वविद्यावतोऽनात्मन्यात्मबुद्धिरनात्मन्यात्मबुद्धिवतोऽविद्यावत्त्वमित्यन्योन्याश्रयः प्राप्त इति चेन्न
प्राप्तः- अविद्याकार्यत्वादनात्मन्यात्मबुद्धेः । अनात्मन्यात्मबुद्धिरूपेण कार्यलिङ्गेनाविद्यावत्त्वरूपकारणस्य

गम्यमानत्वात् । ननु योऽनात्मानमात्मानं प्रतिपद्यते सोऽविद्यावानित्यहं जानाम्येव । परं स्वेन प्रतिपद्यमानोऽविद्यावान्स क इति पृच्छामीति चेत्किं तव तत्प्रश्नेन ? नच तद्‌ज्ञानमेव फलमिति वाच्यं, प्रश्नात्प्रागेव त्वया तस्य ज्ञातत्वात् । यदि त्वं तथा प्रतिपद्यमानमविद्यावन्तं न जानासि तर्हि कथं मां पृच्छसि स क इति । तस्मादहमज्ञोऽहं मनुष्योऽहं संसारीति व्यवहारबलादविद्यावान् पुरुषसिद्धः, तेनात्मन्यनात्माध्यारोपणनिवृत्तिः कार्या । न चासङ्गस्य पुरुषस्य कथमविद्यासङ्ग इति वाच्यं, नातिशङ्कनीयत्वादविद्यावैचित्र्यविषये । असङ्गमपि ह्यविद्या ससङ्गं करोति पुरुषं यथा रज्जुमपि सर्पं गगनमपि नीलमिति ।

तस्माद्‌ज्ञानस्वरूपो ज्ञानाविषयश्चात्मेति स्थितम् । नच ज्ञानस्य साकारत्वात्कथं ज्ञानस्वरूपत्वं निराकारस्यात्मन इति वाच्यं, विज्ञानवादिबौद्धाभिमतक्षणिकविज्ञानस्यैव वृत्तिज्ञानरूपस्य साकारत्वं, न तु चैतन्यस्येति ।

ननु यदुक्तमविषयत्वमात्मनः पूर्वपक्षिणा सिद्धान्तिना चाभ्युपेतं तदयुक्तं बुद्धिविषयत्वादात्मनः 'दृश्यते त्वग्र्यया बु'द्धयेति श्रुतेश्च । तस्मादात्मनो ज्ञानं सम्भवत्येवेति कोऽयं विपरीतो भाष्यग्रन्थ इति चेन्नैवम्—'यत्तदद्रेश्यमग्राह्यं, यतो वाचो निवर्तन्ते अप्राप्य मनसा स'हेत्यादिश्रुतिभिरविषयत्वस्यैवात्मन उक्तत्वात् । बुद्धिविषयत्वकथनं तु बुद्धावेकाग्रतया स्थितायामात्मतत्त्वं स्वयमेव स्फुरतीति हेतोरुक्तम् । कथमन्यथा ज्ञातुरात्मनो ज्ञेयत्वं स्यात् ? 'यन्मनसा न मनुते येनाहुर्मनो मतं, विज्ञातारमरे ! केन विजानीया'दिति श्रुतेश्च । 'यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतसम्प्रमोषात्, य ईयते केवल्या स्वसंस्थया हंसाय तस्मै शुचिषद्मने नम' इति भागवताच्च । तस्मान्निर्विशेषत्वप्रकाशचिन्मात्रस्यात्मनोऽविषयत्वं युक्तमेव ।

नन्वविषये प्रमाणान्तरानपेक्षे ब्रह्मणि कथं शास्त्रं प्रमाणम्? व्यासेनैवोक्तं हि- शास्त्रयोनित्वं ब्रह्मणः। एवं शास्त्रप्रमाणत्वाच्छास्त्रविषयस्य ब्रह्मणो विषयत्वकथनमयुक्तमेवेतिचेन्नैवम्—शास्त्रमपि न ब्रह्मेदंतया बोधयितुं शक्नोत्यविषयत्वात्किं तर्ह्यविद्याध्यारोपणनिरासमात्रमेव करोतीति तावतैव शास्त्रप्रमाणत्वोक्तेर्भूषण इति । अत एवोक्तं श्रुतिगीतासु- 'श्रुतयस्त्वयि हि फलंत्यतन्निरसनेन भवन्निधना' इति।

ननु वेदान्तानां ब्रह्मणि द्विधा प्रवृत्तिस्साक्षाद्विधिमुखेन, निषेधमुखेन चेति । तत्र सच्चिदानन्दादीनां विधिमुखेन, अस्थूलमित्यादीनां निषेधमुखेनेति सम्प्रदायात्सच्चिदानन्दादिवाक्यानां कथं ब्रह्मण्यप्रवृत्तिर्येनाविषयत्वं स्याद्ब्रह्मण इतिचेन्नैवम् । सच्चिदानन्दादिवाक्यानामपि लक्षणयैव ब्रह्मणि प्रवृत्तिर्नाभिधयेति सिद्धान्तात् । ये त्वभिधयैव ब्रह्मणि स्थूलत्वादिनिषेधं कृतवन्तस्तेषां निषेधमुखेन प्रवृत्तिः, येतु लक्षणया असत्त्वजडत्वदुःखादिनिषेधं कृतवन्तस्तेषां विधिमुखेन प्रवृत्तिरित्यभ्युपगमात् । अत एव तात्पर्यवृत्त्या ब्रह्मणि पर्यवसानं श्रुतीनामित्युक्तं श्रुतिगीतासु । एवं शब्दगोचरत्वादिविशेषाभावादेव निर्विशेषं ब्रह्मेत्युक्तम् । अन्यथा हि सविशेषमेव स्यात् ।

केचित्तु पण्डितंमन्याः 'निराकारत्वादात्मवस्तु नोपैति बुद्धिः; अतो दुस्साध्या सम्य-

---

ननु निर्विशेषं (निराकारं) ज्ञानं क्वापि नास्ति ज्ञानमात्रस्य सविशेषत्वादितिचेन्मैवम्—निर्विकल्पज्ञानस्य तार्किकादिभिरप्यभ्युपगतत्वात् । तस्मान्निर्विशेषमेव चैतन्यरूपं ज्ञानं, यत्पुनर्विषयाकारं ज्ञानं तद्वृत्तिज्ञानमेव । वस्तुतस्तु विषयाकारपरिणता बुद्धिवृत्तिर्नैव ज्ञानं, किंतु तत्प्रतिफलितं चैतन्यमेव । वृत्तेर्ज्ञानत्वं तु चैतन्याभासप्रयुक्तमौपचारिकमेव बुद्ध्यादीनां चेतनत्ववत् । तस्माद्ज्ञानमात्रं निराकारमेव- यच्चैतन्यमात्मेत्युच्यते । बुद्धिवृत्तिरेव विषयाकारा । इयमेव क्षणिकविज्ञानमिति बौद्धैः ज्ञानमिति तार्किकादिभिश्चोच्यते । एवं चोपासकस्याहं ब्रह्मास्मीति यदावर्त्यमानं ज्ञानं तदपि बुद्धिवृत्तिरेवेति बोध्यम् ।

ननु घटाकारा वृत्तिरिव ब्रह्माकारा वृत्तिः कथं जायेत ? नीरूपत्वाद्ब्रह्मणो ब्रह्माकारपरिणामासम्भवाद्बुद्धेरितिचेत्, मैवम्—नीरूपस्य गगनस्य सुखस्य च बुद्धिवृत्तिविषयत्वदर्शनात् । तस्माद्गगनाद्याकारेव ब्रह्माकारापि बुद्धिवृत्तिस्सम्भवत्येव ।

ननु तर्हि बुद्धिवृत्तिविषयत्वमात्मनस्सम्पन्नमेवेति कथमविषयत्वमितिचेत्, उच्यते—अयं घट इदं गगनमितिवदिदं ब्रह्मेति ज्ञातुमशक्यत्वाद्बुद्धिवृत्त्यविषयमेव ब्रह्म, अहं ब्रह्मास्मीत्युपासकस्य बुद्धिवृत्तिस्तु ब्रह्माकारपरिणामं विनापि भवत्येव- शब्दाकारपरिणामादेवेष्टसिद्धेः राममन्त्राकारपरिणतबुद्धिवृत्तिवत् । यथा राममन्त्रमुच्चारयत्यसकृत्तथैव ह्ययमहं ब्रह्मास्मीत्युच्चारयत्यसकृदुपासकः । ननूपासकस्याहं ब्रह्मास्मीति वृत्तिर्भवतु शब्दमयी यद्वा मनोमयी, समाहितस्य ज्ञानिनः कथमहं ब्रह्मास्मीति ब्रह्मसाक्षात्कारः ब्रह्माकारवृत्त्यभावे ? इतिचेत्, उच्यते—स्वात्मनि वृत्त्ययोगात् । आत्मसाक्षात्कारे वृत्त्यनपेक्षणात् । नहि देवदत्तो घटमिवात्मानं बुद्धिवृत्त्या जानाति, किंतु स्वत एव । एवं च समाधौ बुद्धेर्ब्रह्माकारवृत्तिर्नाम निर्विकल्पतयैकाग्रत्वेन बुद्धेरवस्थानमेव; तथासत्यात्मसाक्षात्कारसम्भवात् । नचैवं सुषुप्तावप्यात्मसाक्षात्कारप्रसङ्ग इति वाच्यं, तदानीं बुद्धेरेवासत्त्वात् । जाग्रत्स्वप्नयोस्तु बुद्धेर्विक्षिप्तानैकाग्रतयावस्थानम् । एवं बुद्ध्यैकाग्र्यस्यात्मसाक्षात्कारोपयोगित्वादेव दृश्यते त्वग्र्यया बुद्ध्येत्युक्तं, न तु बुद्धिवेद्यत्वादिति । अत एव स्वसंवेद्योयमात्मा । नहि बुद्धिवेद्यत्वे सति स्वसंवेद्यत्वं सिध्यति—बुद्धेरन्यत्वात् । नच स्वसंवेद्यत्वमपि कथं वेदितरीति वाच्यं, अनन्यवेद्यत्वे स्वसंवेद्यत्वस्य तात्पर्यात् । स्वानुभवरूपस्यात्मनः कथं वेदितृत्वमिति वाच्यं, सर्वप्रकाशकत्वस्यैव वेदितृत्वात् । अनुभवरूपेणात्मना सर्वं प्रकाश्यते- 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेः । तस्य भासेति राहोश्शिर इतिवद्भेदेन निर्देशः । आत्मचैतन्येनेत्यर्थः । तस्माद्ज्ञानस्वरूप एवात्मा ज्ञानाविषयश्च । आत्मत्वादेव स्वप्रकाशश्चेति नात्मा ज्ञातव्यः केनचित्प्रमाणेन सर्वप्रमाणानां तेनैव ज्ञायमानत्वादिति संक्षेपः ।

ज्ञानात्मनोरुभयोश्च निराकारत्वे कथं तद्भावनानिष्ठेते यदुक्तं पूर्वपक्षिणा तन्निराकृतमपि स्थूणानिखननन्यायेन तन्निराकरणं पुनस्स्थापयितुं भङ्ग्यन्तरेण तमेव पूर्वपक्षं पुनरुत्थापयति—केचित्त्विति । सगुणब्रह्मोपासनतत्परा इह केचिच्छब्देनोच्यन्ते । पण्डितमात्मानं मन्यन्त इति पण्डितं-

ग्ज्ञाननि'ष्ठेत्याहुः । सत्यं, एवं गुरुसम्प्रदायरहितानामश्रुतवेदान्तानामत्यन्तबहिर्विषयासक्त-बुद्धीनां सम्यक्प्रमाणेष्वकृतश्रमाणाम् । तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुस्सम्पाद्यात्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः । यथा च 'एतदेक-

---

मन्याः, नतु वस्तुतः पण्डिता इत्यर्थः । **निराकारत्वादिति** । आत्मन इति शेषः । आत्मवस्तुन-स्सकाशाद्बुद्धिरपैति- अपगच्छति; नात्मनि निष्ठां लभत इत्यर्थः । **अत इति** । एवं बुद्धेरात्मन-स्सकाशादपगमाद्धेतोरित्यर्थः । सम्यग्ज्ञाननिष्ठा केवलात्मज्ञाननिष्ठा दुस्साध्या दुस्सम्पाद्येति केचि-दाहुरित्यन्वयः ।

अयममीषामाशयः—यद्यप्यनात्माकारनिवृत्त्याऽऽत्मज्ञानं सुलभं, तथाप्यात्मज्ञाननिष्ठा दुस्साध्या। कुतः ? ज्ञाननिष्ठा नाम ज्ञाने नितरां स्थितिः, सा च बुद्धेरेव धर्मः । ज्ञेये आत्मन्येव बुद्धेरवस्थानं चिरकालमिति यत्सैवात्मज्ञाननिष्ठेत्युच्यते । यथा विष्णुध्याननिष्ठा ध्येये शङ्खचक्रगदाधरे विष्णौ चिरकालं बुद्धेरवस्थितिर्विष्णुध्याननिष्ठेत्युच्यते तद्वत् । तथासति बुद्धेस्साकारमेव वस्तु चिरकाल-मवलम्बनं भवितुमर्हति, नतु निराकारं वस्तु । निराकारे आत्मवस्तुनि क्षणकालमेव बुद्ध्यवस्थापनस्य दुष्करत्वेन किंपुनर्बहुकालमिति दुस्साध्यैवात्मज्ञाननिष्ठेति ।

एवमात्मनो निराकारत्वादेव तद्ज्ञाननिष्ठाया दुर्लभत्वे किंपुनर्ज्ञानस्यापि निराकारत्वे तस्या दुर्लभत्वं वक्तव्यमिति कैमुत्त्यन्यायोऽनेन द्योत्यते । शङ्खचक्रगदाधरोऽयं विष्णुरिति साकारज्ञानव-न्निराकारज्ञानस्य चिरमवस्थातुमयोगात् । वस्तुतो निराकारज्ञानस्यैवाप्रत्यक्षत्वेनाप्रमाणत्वात् । न चाय-मात्मेति निराकारं ज्ञानमस्तीति वाच्यं, तस्यापि साकारत्वात् । विषयवत्त्वं हि ज्ञानस्य साकारत्वम्। तस्मान्निराकारस्य ज्ञानस्यैवासिद्धेः कथं पुनस्तन्निष्ठासिद्धिः ? किं चायं घट इतिवदयमात्मेति ज्ञानं भवितुमेव नार्हति घटवदप्रत्यक्षत्वादात्मनः । न ह्यप्रत्यक्षं देशान्तरस्थं वस्तु रजतादिकमिदं रजतमिति ग्रहीतुं शक्यते । तस्मादात्मज्ञाननिष्ठा दुस्साध्येति सिद्धान्ती 'किं विदुषामात्मज्ञाननिष्ठा दुस्साध्येति ब्रूषे, उताविदुषा'मिति विकल्प्य द्वितीयमङ्गीकरोति—**सत्यमिति** । सम्यक्प्रमाणेषु वेदान्तशास्त्रादि-ष्वित्यर्थः । आद्यं दूषयति—**तद्विपरीतानामिति** । तेभ्यः पूर्वोक्तेभ्यो विपरीतास्तद्विपरीताः, गुरु-सम्प्रदायवतां श्रुतवेदान्तानां बहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेषु कृतश्रमाणां चेत्यर्थः। लौकिकानि ग्राह्यग्राहकरूपाणि द्वैतवस्तूनि घटपटादीनि चक्षुरादीनि च तेषु बुद्धिर्नितरां दुस्सम्पाद्या, न त्वद्वैते आत्मनीति भावः । तत्र हेतुमाह—**आत्मेति** । विदुषां विज्ञानव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः । 'एतदात्म्यमिदं सर्वं, सर्वमात्मैवाभूद्विजानतः, वासुदेवस्सर्वमिति, मत्तः परतरं नान्यत्किञ्चिदस्तीति, यत्र सर्वमात्मैवाभूत्तत्र केन कं पश्ये'दित्यादिश्रुतिस्मृतिभ्यो विदुषां ब्रह्मव्यतिरेकेण किञ्चिदपि द्वैतं न भातीति द्वैतनिष्ठैव विदुषां दुस्सम्पाद्या- अनुपलभ्यमानत्वाद्द्वैतस्य ।

न ह्यनुपलब्धे वन्ध्यापुत्रादौ कस्यापि बुद्धिस्स्यात् । अद्वैते आत्मनि तु बुद्धिनिष्ठा सुलभैव- नित्यापरोक्षत्वादात्मनः । आत्मा हि स्वयं, न हि स्वस्य स्वयं कदाचिदप्यप्रत्यक्षो भवेत् ।

मेव, नान्य'थेत्यवोचाम । उक्तं च भगवता 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने'रिति । तस्माद्बाह्याकारभेदबुद्धिनिवृत्तिरेवात्मस्वरूपालम्बने कारणम् । न ह्यात्मा नाम

---

ननु यद्यच्चक्षुरादिप्रमाणैरुपलभ्यते तदिदं द्वैतं नास्त्यनुपलब्धेरिति, यत्पुनरिन्द्रियाद्यविषयं तदात्मवस्त्वस्त्युपलब्धेरिति च विरुद्धमिदमुभयमिति चेद्विरुद्धमेवाज्ञानां, न तु विदुषाम् । गगनं नीलमिति मन्यमानानां बालानां नीरूपं गगनमिति वचो विरुद्धमेव, ननु गगनतत्त्वविदां तद्वत् ।

ननु 'नाभाव उपलब्धे'रिति सूत्रकारेणैव द्वैताभाववादो निरस्त इति कथं विदुषां न विरुद्धं तव वचनमिति चेत् , मैवम्—अविद्यादशायां द्वैताभावस्य सूत्रकारेण निन्दितत्वात् । नहि श्रुतिविरुद्धमर्थं सूत्रकारो ब्रूयात् । 'नेह नानास्ति किञ्चन, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र तु सर्वमात्मैवाभूत्तत्केन कं पश्येत , मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्य'तीत्यादिना विद्यादशायां सर्वद्वैताभावस्य, अविद्यादशायां द्वैतसत्त्वस्य, अद्वितीयात्मनि द्वैतज्ञाननिन्दायाश्च श्रुतिभिरुक्तत्वात् । 'एकमेवाद्वितीयं ब्र'ह्मेत्यद्वैतत्वमत एव हि ब्रह्मणस्सिद्धं चेत्कथमन्यथा विद्यादशायामपि द्वैतसत्त्वे ब्रह्माद्वितीयं स्यात् ?

तस्मादविद्यायामन्तरावर्तमानैर्बौद्धैरुक्तस्य द्वैताभावस्याविद्याविषयत्वेन तदानीं तदभावप्रतिपादनमयुक्तमिति निन्दितं तन्मतं सूत्रकारेणेति कृत्वा विद्वद्दृष्ट्या द्वैताभावस्सिद्ध एव- अनुपलब्धेर्द्वैतस्य विद्यादशायाम् । नहि सुषुप्तिमृतिमूर्छासु द्वैतोपलम्भो येन विद्यादशायां द्वैतोपलम्भस्स्याद्विदुषाम् । तस्मादविद्यादशायां द्वैतस्योपलब्धेर्हेतोरभावो न युक्तः; विद्यायामनुपलब्धेर्हेतोरभावो युक्त एव । ततश्च विद्यावतामात्मज्ञाननिष्ठा, अविद्यावतां द्वैतज्ञाननिष्ठेव सुलभैव । यथा चैतदेवमेव भवति, अन्यथा न भवति तथा पूर्वमेवावोचाम । नन्विदं तव कपोलकल्पितमेवेत्यत आह—उक्तं भगवतेति । यस्यामविद्यादशायां भूतानि जाग्रति व्यवहरन्ति सा पश्यतो मुनेर्विदुषो निशा निशेवाप्रकाशा । द्वैतानुपलब्धेर्विदुष इति भावः । तस्मादिति । विदुषां ज्ञाननिष्ठायास्सुलभत्वादित्यर्थः । बुद्धेरात्मस्वरूपावलम्बनं प्रति बाह्याकारभेदज्ञाननिवृत्तिरेव कारणं, न त्वात्मनस्साकारत्वमित्यर्थः ।

अयं भावः—निराकारत्वादात्मन्यालम्बने बुद्धिर्न चिरं तिष्ठतीति यदुक्तं तदयुक्तम् । साकारेऽपि विष्णुमूर्त्यालम्बने विषयलम्पटानां बुद्धिनिष्ठाऽदर्शनात् । तस्मादालम्बनविशेषे बुद्धिनिष्ठाप्रसक्तौ आलम्बनगतसाकारत्वं न प्रयोजकं, किं तु तदालम्बनातिरिक्तविषयानवगाहित्वमेव बुद्धेः । तथा चानात्माकारानवगाहित्वे सति बुद्धेरात्मस्वरूपावलम्बने निष्ठा सम्भवत्येव । यथा सगुणोपासकस्य शब्दादिविषयानवगाहित्वे सति बुद्धेर्विष्णुमूर्त्यालम्बने निष्ठा सम्भवति तद्वत् । ततश्चात्मज्ञाननिष्ठाकामेन पुरुषेण विदुषा बाह्याकारभेदबुद्धिनिवृत्तिरेव कार्या । तस्यां च कृतायां स्वत एव बुद्धिरात्मनि निश्चिता भवति । सगुणोपासकस्य तु शब्दादिबाह्यविषयबुद्धिनिवृत्तिमात्रेण न विष्णुस्वरूपज्ञाननिष्ठा सम्भवति; किं तु शब्दादिभ्यो बुद्धिं प्रत्यावर्त्य मनसि विष्णुमूर्त्याकारं कल्पयित्वा तत्र बुद्धिर्वेला-

कस्यचित्कदाचिदप्रसिद्धः प्राप्यो हेय उपादेयो वा; अप्रसिद्धे हि तस्मिन्नात्मनि स्वार्थाः

---

स्प्रवेशनीयेति श्लोकोऽधिकतर एव। तस्य च कल्पिताकारस्य चिरमवस्थापनमपि क्लेशावहमेव। तस्मात्साकारविष्ण्वादिमूर्तिध्याननिष्ठापेक्षयाऽऽत्मज्ञाननिष्ठैव सुलभा। बाह्याकारभेदज्ञानं त्यक्त्वा तूष्णीमवस्थितायां सत्यां बुद्धावात्मस्वरूपस्फुरणात्। न चैवं सकृत्स्फुरितेऽप्यात्मनि बुद्धिश्चिरं न तिष्ठति गुणाभावादिति वाच्यं, परमानन्दरूपत्वादात्मनः- 'सच्चिदानन्दं ब्र'ह्मेति श्रुतेः, 'आनन्दो ब्रह्मेति व्यजाना'दिति श्रुतेश्च; सुषुप्तौ सर्वप्राणिनामात्मानन्दानुभवाच्च; अभीष्टविषयसिद्धिवशादन्तर्मुख-मनोवृत्तौ प्रतिफलितस्यात्मानन्दस्यैव विषयानन्दत्वाच्च। यदि बुद्धिस्सकृदात्मानन्दमनुभवेत्तर्हि तं न परित्यजेदेव। किं निद्रासुखमनुभवन्तः पुरुषा निद्रां स्वेच्छया परित्यजन्तो दृश्यन्ते? अत एव- 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' इत्युक्तम्। तस्मादकृतबुद्धेरेवात्मस्वरूपावलम्बनं दुर्लभं क्लेशावहं च, नतु कृतबुद्धेः।

नन्वविषयो ह्यात्मा कथं बुद्धेर्विषयस्स्यादिति चेत्, मैवम्—असंस्कृतबुद्धेरेवाविषय इत्युक्तत्वात्। संस्कृतबुद्धिरपि नात्मानं विषयीकरोति बुद्धेरेवात्मना गृह्यमाणत्वात्किं तर्हि कामं सत्यात्मानन्दं स्वप्रतिफलितमनुभवतीत्येतावतैव बुद्धिविषय आत्मेत्युच्यते। नच कथं बुद्धेर्जडाया आनन्दानुभवितृत्वमिति वाच्यं, आत्मचैतन्यप्रतिफलनेन चेतनत्वाद्बुद्धेः। एतेनात्मनः स्वानन्दानुभवे किं बुद्ध्यैकाग्र्येणेति शङ्कापि परास्ता। प्रमातुस्स्वस्वरूपानन्दानुभवंप्रति बुद्ध्यैकाग्र्यस्य साधनत्वमिति। मोक्षे तु स्वरूपचैतन्येनैवात्मन आनन्दानुभवः, सुषुप्तौ त्वविद्यावृत्तिभिरिति विवेकः।

नन्वप्रसिद्धमिदं ब्रह्म कथं विदुषाप्युपलभ्येत? येन तस्यात्मज्ञाननिष्ठा स्यादत आह—न हीति। कस्यचिदपि कदाचिदप्यात्मा नाप्रसिद्धः। आत्मत्वादेवेति भावः। अत एव प्राप्यो न भवति- नित्याप्तत्वादात्मन इति भावः। अत एव हेयो न भवति। हातुं त्यक्तुं शक्यो हेयः। हातुरेवात्मत्वादिति भावः। उपादेयोऽपि न भवति- उपादातुरेवात्मत्वादिति भावः। न चैवं प्रसिद्धमात्मानं कथं सर्वे सच्चिदानन्दं न विदुरिति वाच्यं, सर्वेषां सच्चिदानन्दरूपत्वेन न प्रसिद्धः; किं त्वात्मत्वेन रूपेणैव। योऽयमात्मत्वेन प्रतिपद्यते तस्य स प्रसिद्धः। यथा देवदत्तो मनुष्यमात्मत्वेन प्रतिपद्यत इति मनुष्यदेहरूप आत्मा देवदत्तस्य प्रसिद्धः। विष्णुमित्रो मन आत्मत्वेन प्रतिपद्यत इति तस्य मन आत्मा प्रसिद्धः- सुख्यहं दुःख्यहमिति। विदुषां तु क्षेत्रज्ञ एवात्मत्वेन प्रसिद्ध इति ते सच्चिदानन्दं ब्रह्मैवात्मानं विदुः। अत एवाविद्वद्भिरात्मत्वेन गृहीतानामनात्मनामन्यत्वेन गृहीतस्य च ब्रह्मणो यथावद्ग्रहणार्थं वेदान्तशास्त्रं प्रवर्तितं कृपालुना भगवता, न त्वप्रसिद्धमात्मानं बोधयितुम्। येनात्मा बोद्धुमिष्टस्तस्यैवात्मत्वात्।

ननु मामहं न जानामीत्यनुभवादप्रसिद्ध एवात्मेत्यत आह— अप्रसिद्धे हीति। तस्मिन्नात्मन्यप्रसिद्धे सति हि स्वार्थास्सर्वाः प्रवृत्तयो व्यर्थाः प्रसज्येरन्। यद्यप्रसिद्धस्स्यादात्मा तर्हि लौकिकै-

सर्वाः प्रवृत्तयो व्यर्थाः प्रसज्येरन् । नच देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । नच सुखार्थं सुखं, दुःखार्थं वा दुःखमात्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्माद्यथा स्वदेहस्य

---

वैदिकैश्चात्मार्थं क्रियमाणास्सर्वे व्यवहारा लुप्येरन्नेव । ममेदं सुखमिष्टं स्यान्ममेदमनिष्टं दुःखं माभूत्, अनेन भोजनेन मैथुनेन च मम सन्तोषस्स्यात्, अनेन यज्ञेन मम स्वर्गस्स्यादित्येवमभिसन्धाय हि पुरुषस्तेषु तेषु कर्मसु प्रवर्तते । स्वस्यैवाप्रसिद्धत्वे कथं तत्प्रवृत्तिः ? ननु देहाद्यर्था भोजनादिप्रवृत्तयो भोजने कृते देहादेर्वृद्धिस्तस्मिन्नकृते नाशश्च भवतीति । अत आह—न चेति । प्रवृत्तीनां देहाद्यचेतनार्थत्वं कल्पयितुं न शक्यं- देहादीनामचेतनत्वादनेन भोजनेन मम वृद्धिस्स्यादिति न देहादीनां ज्ञानसम्भवः- अचेतनत्वात् । एवं ज्ञानाभावादेव देहादीनां भोजनादेषु न प्रवृत्तिः । नच मम देहाभिवृद्धिस्स्यादिति भोजने प्रवर्तते देहीति देहार्थमेव प्रवृत्तिरिति वाच्यं, किं देहादन्यस्यात्मनो देहाभिवृद्ध्या ? तस्माद्देहाभिवृद्धिरप्यात्मसुखायैवाकांक्षितेत्यात्मार्थमेव देहाभिवृद्धिकरभोजनादौ प्रवृत्तिरपि, न तु देहार्थम् ।

ननु प्रवृत्तयो नात्मार्थाः, नापि देहाद्यर्थाः, किंतु सुखार्था एवेत्यत आह—नच सुखार्थमिति । प्रवृत्तयस्सुखार्था भवन्तुनाम, तच्च सुखं किमर्थमाकांक्ष्यते पुरुषेण ? किमात्मार्थं ? यद्वा सुखार्थम् ? आद्ये- सुखस्यात्मार्थत्वात्सुखहेतुप्रवृत्तयोऽप्यात्मार्था एवेति सिद्धमात्मार्थत्वमात्मसुखार्थत्वात्प्रवृत्तीनाम् । द्वितीये सुखार्थं सुखं पुरुषेणाकांक्ष्यत इत्यनुपपन्नं व्याघातात्; सुखस्याचेतनत्वात् । फलभूतस्य साधनभूतस्य च सुखस्यैकत्वे आत्माश्रयात्; भिन्नत्वेऽनवस्थानात् । तस्मान्न सुखार्थं सुखमिष्यते । एवं दुःखार्थं च दुःखं नेष्यत इति दुःखहेतुप्रवृत्तयोपि न दुःखार्थाः, किंतु शत्रुशरीराद्यवच्छिन्नात्मार्था एव । तत्र हेतुमाह—आत्मेति । सर्वव्यवहारस्यात्मावगत्यवसानार्थत्वात् । आत्मावगतिरेवावसानार्थश्चरमार्थः पर्यवसानमिति यावत् । यस्य तत्त्वादात्मावगतिपर्यवसायित्वादित्यर्थः । आत्मावगतिरवसानं यस्य स आत्मावगत्यवसानः, अर्थः प्रयोजनं यस्य तत्त्वादिति वा । सर्वव्यवहारार्थस्यात्मावाप्तिपर्यवसायित्वादित्यर्थः । सर्वस्यापि व्यवहारस्य यो योऽर्थः सुखदुःखसुकृतदुष्कृतादिः स सर्वोऽप्यात्मानमेवासाद्य नश्यति, नत्वन्यत्र गच्छतीत्यर्थः । तस्मादात्मन्यप्रसिद्धे सति कर्तुर्भोक्तुश्चाभावाद्व्यर्था एव स्युस्सर्वाः प्रवृत्तयो लुप्ताश्च । यो हि क्रियासु प्रवर्तते, यश्च क्रियाफलमनुभवति तस्यैवाप्रसिद्धत्वे कथं क्रियाणां सिद्धिः ? क्रिया हि कर्तृपरतन्त्रा, न स्वतस्सिद्ध्येत् । तस्माद्यः कर्म चिकीर्षति यश्च तत्फलमनुबुभूषति स आत्मा सुप्रसिद्ध एव । तस्मादिति । प्रसिद्धत्वादेवात्मन इत्यर्थः । परिच्छेदनाय ज्ञानायेति यावत् । प्रमाणेन चक्षुरादिना प्रमेयं घटादिकं परिच्छिद्यमानं दृश्यते लोके । एवं स्वदेहस्य केनापि प्रमाणेन परिच्छेदो न दृष्टः- प्रमाणव्यवहारात्प्रागेव सर्वस्य स्वदेहज्ञानसम्भवात् । नहि मनुष्यश्चक्षुषा मनुष्यमात्मानं जानाति, तथासति तमसि चक्षुर्व्यापाराभावान्मनुष्योऽहमिति ज्ञानासम्भवप्रसङ्गात् । नच देहस्य स्थौल्यकार्श्यादिपरिच्छेदनाय चक्षुरादिकमावश्यकमिति । सहि न देह-

परिच्छेदनाय न प्रमाणान्तरापेक्षा; ततोऽप्यात्मनोऽन्तरतमत्वादवगतिं प्रति न प्रमाणान्तरापेक्षेत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धेति सिद्धम् ।

येषामपि निराकारं ज्ञानमप्रत्यक्षं, तेषामपि ज्ञानवशेनैव ज्ञेयाऽवगतिरिति ज्ञानमत्यन्त-

---

परिच्छेदः, किंतु गुणपरिच्छेद एवेति । एवं देहपरिच्छेदस्य प्रमाणान्तरानपेक्षत्वं प्रति हेतुरन्तरतमत्वमेव । अन्तरतमत्वं च नित्यसन्निहितत्वम् । नह्यसन्निहित इवामलके करतलामलकेपि प्रमाणापेक्षास्ति पुरुषस्य । तदेव करतलामलकं यदि क्वचित्क्षिप्तं स्यात्तर्हि तत्परिच्छेदनं पुनरावश्यकमेव । एवं च सति सन्निहितत्वासन्निहितत्व एव वस्तुनः परिच्छेदने प्रमाणापेक्षत्वतदपेक्षत्वयोः प्रयोजक इति सिद्धम् ।

ततोपीति । देहादपीत्यर्थः । तदवगतिमात्मज्ञानं प्रति प्रमाणान्तरापेक्षा नास्ति । प्रमाणव्यापारात्प्रागेवात्मज्ञानसम्भवाद्यः प्रमाणव्यापारेणात्मानं बोद्धुमिच्छति- तस्यैवात्मत्वात् । प्रमातर्यपि प्रमाणव्यापार इत्यस्य विरुद्धत्वाच्चेति हेतोः विवेकिनामात्मज्ञाननिष्ठा सुप्रसिद्धा । न चात्मज्ञानसम्भवेपि तन्निष्ठा न सम्भवतीति वाच्यं, स्वस्मिन्कदाचिदपि संशयविपर्ययज्ञानानामसम्भवेन निष्ठाया अपि सुलभत्वात् । नह्यज्ञोपि मनुष्यत्वेनाभिमतमात्मानं कदाचित्किमहं मनुष्य उत पशुरिति, पशुरेवाहमिति, नाहं मनुष्य इति च प्रत्येत्येन संशयादिभिरहं मनुष्य इत्यात्मज्ञानस्य निष्ठा दुर्लभा स्यात् । तथा प्राज्ञोपि सच्चिदानन्दब्रह्मत्वेनाभिमतमात्मानं कदाचिदपि किमहं ब्रह्म, उत संसारीति, संसार्येवाहमिति, नाहं ब्रह्मेति च प्रत्येत्येन संशयादिभिरहं ब्रह्मेत्यात्मज्ञाननिष्ठा दुर्लभा स्यात् । नहि यथावद्ज्ञाते घटे वस्तुनि संशयाद्युपपत्तिर्येन घटोऽयमिति ज्ञानं निष्ठितं न भवेत् । नहि कोपि यथावद्ज्ञातं घटं पुनर्विस्मरत्येन तदविस्मरणाय घटो घट इत्येवं ज्ञानमभ्यस्येत । तस्मादात्मज्ञानं तन्निष्ठा च सुलभैव । येतु पुनरात्मानं ब्रह्मेत्यविदित्वा अन्नादिष्विवात्मनि ब्रह्मबुद्धिमध्यस्याहं ब्रह्मेत्युपासते तेषां भवत्वात्मध्याननिष्ठा दुर्लभा । बुद्धेरेवंविधध्याने चिरावस्थापनस्य दुश्शकत्वात् । 'चञ्चलं हि मनः कृष्ण !' इत्युक्तं प्रागेवार्जुनेन । तस्माद्विवेकिनां लब्धगुर्वादिप्रसादानामात्म ज्ञाननिष्ठा सुलभैवेति सिद्धम् ।

ननु निराकारोऽप्यात्मा भवतु प्रसिद्धः, नित्यापरोक्षत्वान्निराकारं ज्ञानं त्वप्रसिद्धमेवाप्रत्यक्षत्वादत आह—येषामिति । येषां वादिनां निराकारं ज्ञानमप्रत्यक्षमित्यभिमतं तेषामपि ज्ञानमत्यन्तप्रसिद्धमेवेत्यभ्युपगन्तव्यम् । कुतः ? ज्ञानवशेनैव ज्ञेयावगतिरितिहेतोः । घटादयो हि ज्ञेयाज्ञानवशेनैवावगम्यन्ते ज्ञात्रा । नहि घटमानयेति पित्राऽऽदिष्टः पुत्रोऽयं घट इति ज्ञानाभावे घटमानयेत् । नचायं घट इति ज्ञानस्य साकारत्वात्प्रसिद्धत्वमिति वाच्यं, तत्रापि विषयांशो घट एव साकारः, नतु विषय्यंशो ज्ञानमिति । तथाहि- अयं घट इति ज्ञानस्य साकारत्वं किं त्वं घटशब्दवत्त्वाद्ब्रूषे उत घटवत्कम्बुग्रीवाद्याकारवत्त्वात् ? नाद्यः- अयं घट इति वाक्य एव शब्दोऽस्ति, नतु तद्ज्ञान इति । अन्यथा अयं रामशब्द इति ज्ञानेऽपि रामशब्दस्स्यात् । नचेष्टापत्तिः- रामशब्दे रामशब्द इति

व्याघातात् । शब्दवतो वाच्यत्वेन ज्ञानस्यापि वाच्यत्वप्रसङ्गात् । ज्ञाने वर्तमानस्य शब्दस्य ग्रहणाय ज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गात् । स्वेनैव स्वधर्मभूतशब्दग्रहणस्यासम्भवात् । यद्ययं घट इति ज्ञाने घटशब्दस्याच्चर्हीदं ज्ञानं घटशब्दयुक्तमिति ज्ञानं स्यात्, तच्च न दृश्यतेऽनुभवविरोधात् । नहि कोऽपीदं ज्ञानं घटशब्दवदिति प्रत्येति । तस्मान्न ज्ञाने घटशब्दोऽस्ति, नापि कम्बुग्रीवाद्याकारोऽस्ति ज्ञाने तददर्शनात् । यद्यस्ति तद्ग्रहणार्थं ज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गात्, स्वेनैव स्वाकारग्रहणायोगादिदं कम्बुग्रीवाद्याकारवद्ज्ञानमिति प्रतीत्यभावादिति । नच सविषयत्वादयं घट इति ज्ञानं साकारमिति वाच्यं, किं सविषये ज्ञाने घटो विषयः, उत निर्विषये ? आद्ये- घटस्य ज्ञानविषयत्वापत्तेः प्राक्कथं ज्ञानस्य सविषयत्वम् ? द्वितीये- सिद्धमेव निराकारं ज्ञानम् । नचोत्पन्ने ज्ञाने घटो न विषयो भवति, किंतूत्पद्यमानमेव ज्ञानं सविषयमुत्पद्यत इति वाच्यं, ज्ञानस्य जन्मनाशयोरभावात् । भावे वा तद्ग्रहणार्थं ज्ञानान्तरापेक्षायां तस्यापि ज्ञानान्तरस्य जन्मनाशवत्त्वेन तद्ग्रहणार्थं ज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गात्, स्वेनैव स्वनाशोदयग्रहणासम्भवाच्च । नच ज्ञात्रा ज्ञानस्य जन्मनाशौ गृह्येते इति वाच्यं, ज्ञानस्यैव ज्ञातृत्वात् । नच ज्ञानं न ज्ञाता, किंतु ज्ञानाश्रयो ज्ञातेति वाच्यं, ज्ञानोदयात्प्राग्ज्ञाननाशानन्तरं च तस्य ज्ञातृत्वासिद्धेः । नचेष्टापत्तिः- स्वसमीहितज्ञानोदयतन्नाशयोरेवासिद्धेः । कथम् ? असाक्षिकयोर्ज्ञानप्रागभावप्रध्वंसाभावयोरनभ्युपगन्तव्यत्वात् । नचात्मसाक्षिकावेवेति वाच्यं, ज्ञानप्रागभाववत्यात्मनि ज्ञानसत्त्वायोगात्, तत्सत्त्वे वा ज्ञानप्रागभावायोगात् । एवं ज्ञानप्रध्वंसानन्तरं ज्ञानसत्त्वयोगात्, तत्सत्त्वे ज्ञानप्रध्वंसायोगाच्च । तस्माद्ज्ञानप्रागभाववतो ज्ञानप्रध्वंसाभाववतश्चात्मनो ज्ञातृत्वमसम्भव्येव ।

ननु सविषयाण्युत्पद्यमानानि ज्ञानान्यनन्तानि तत्प्रागभावाश्चानन्तास्तत्प्रध्वंसाभावाश्चानेक इतिचेन्नैवम्—युगपदनन्तज्ञानसत्त्वे प्रमाणाभावात् । अयं घट इति ज्ञानसत्त्वे अयं पट इति ज्ञानान्तरानुदयात् । क्षणभेदाद्ज्ञानभेदाभ्युपगमे तु पूर्वोक्तदोषप्रसक्तिः । पटज्ञाननाशानन्तरं घटज्ञानोदयात्प्राक्च ज्ञानाभावादात्मनः पटज्ञाननाशो घटज्ञानोदयश्चासाक्षिकत्वान्नैव सिध्यत इति । नचायं घटप्रागभाव इति, अयं घटप्रध्वंसाभाव इति च ज्ञानमस्ति तदाप्यात्मन इति वाच्यं, तथाऽनुभवाभावात् । नच घटो नास्तीत्यनुभवोऽस्तीति वाच्यं, तद्ज्ञानेन घटज्ञानोदयतन्नाशयोर्ग्रहणायोगात् । घटाभाव एव हि तेन गृह्यते, अयं घटप्रागभाव इत्यनुभवसत्त्वेपि न तेन घटज्ञानोदयो गृह्यते । नाप्ययं घटप्रध्वंसाभाव इति ज्ञानेन घटज्ञाननाशः, किंतु घटाभाव एव गृह्यते । तस्मादयं घटज्ञानोदयः, अयं घटज्ञाननाश इति ज्ञानाभावादसाक्षिकावेव घटज्ञानस्यापि जन्मनाशौ । यदि घटज्ञानोदय इति ज्ञानमस्तीत्याग्रहस्तर्हि तस्यापि घटज्ञानोदयज्ञानस्य सादित्वेन घटज्ञानोदयज्ञानोदयार्थमन्यस्यापि ज्ञानस्याभ्युपगन्तव्यत्वादनवस्थादोषप्रसक्तिः ।

नन्वनुमानाद्घटज्ञानस्य जन्मनाशौ सिद्ध्यतः- अस्मिन्क्षणे घटज्ञानसत्त्वात्; क्षणान्तरे तदभावादिति चेत्, मैवम्— क्षणान्तरे घटज्ञानाभावरूपहेतोरेवासाक्षिकत्वेनानुमानानवतारात् । तस्मान्नोदेति

प्रसिद्धं सुखादिवदेवेत्यभ्युपगन्तव्यं जिज्ञासानुपपत्तेश्च । अप्रसिद्धं चेद्ज्ञानं ज्ञेयवज्जिज्ञा-

---

नास्त्मेत्येषा संविदेका स्वयंप्रभा । न चैवं सदापि घटज्ञानमेव भवेदिति वाच्यं, ज्ञाने सदापि घटस्य विषयत्वाभावात् । तदभावे को हेतुरिति चेदुच्यते- न हि केवले आत्मस्वरूपभूते ज्ञाने घटादयो विषया भवितुमर्हन्ति- सुषुप्त्यादावपि तत्प्रसङ्गात् । किं तर्हि, बुद्धिवृत्त्यभिव्यक्ते चैतन्य एव । सा च बुद्धिवृत्तिः क्षणिकेति न घटज्ञानस्य सदा सत्त्वप्रसङ्गः । न चैवं विषयाकारपरिणामरूपाया बुद्धिवृत्ते-स्साकारत्वात्तदभिव्यक्तचैतन्यमपि साकारमेवेति सिद्धं ज्ञानस्य साकारत्वमिति वाच्यं, दर्पणाभिव्यक्त-मुखस्य दर्पणाकारेण साकारत्वादर्शनात् । अन्यथाऽन्तःकरणप्रतिफलित आत्माऽप्यन्तःकरणाकारेण साकारस्स्यात् । जले प्रतिफलितं गगनमपि जलाकारेण साकारं स्यात् । तस्मात्प्रतिबिम्बस्य बिम्बा-कारत्वमेव, नोपाध्याकारत्वमिति न बुद्धिवृत्त्यभिव्यक्तचैतन्यस्य बुद्धिवृत्त्याकारत्वं, किं तु बिम्बभूतचैत-न्याकारत्वमेव । तच्च चैतन्यं निराकारमिति प्रतिबिम्बचैतन्यमपि निराकारमेव । बिम्बप्रतिबिम्बयो-रौपाधिक एव भेदो न तात्त्विक इति न चैतन्यद्वित्वप्रसङ्गः ।

ननु यदा बुद्धिवृत्तिरस्ति तदा तत्प्रतिफलितचैतन्यमस्ति; यदा बुद्धिवृत्तिर्नास्ति तदा प्रतिबिम्ब-चैतन्यमपि नास्तीति वृत्तिप्रतिफलितचैतन्यं न नित्यमिति चेत्, मैवम्—यदि वृत्तिप्रतिफलितचैतन्यं बिम्बचैतन्यादतिरिक्तं स्यात्तर्हि भवेदेवानित्यं, नतु तथातिरिक्तम् । किंतु तदनतिरिक्तमेवेति नित्यमेव-प्रतिफलनांशस्यानित्यत्वेऽपि चैतन्यांशस्य नित्यत्वात् । तस्मान्निराकारमेकं स्वप्रभं नित्यं च ज्ञानमिति स्थितम् । तदेवात्मस्वरूपमिति च । नच न ज्ञानमात्मेति वाच्यं, आत्मनो ज्ञानादन्यत्वे घटादिव-द्भास्यत्वप्रसङ्गात् । घटादयो हि ज्ञानेन भास्यन्ते । नच सूर्यस्थानीय आत्मा, प्रकाशस्थानीयं ज्ञान-मिति वाच्यं, प्रकाशातिरिक्तसूर्यपदार्थाभावात् । नच प्रकाशश्चूर्णस्थानीयः, पिण्डस्थानीयस्तु सूर्य इति वाच्यं, चूर्णस्यैव पिण्डीभूतत्वेन चूर्णात्मकत्वात्पिण्डस्य । नच घनीभूततेजःपरमाणुपुञ्जस्सूर्यः, विरली-भूतास्तु तेजःपरमाणवः प्रकाश इति वाच्यं, सूर्यस्य सावयवत्वेनैतत्कल्पनाया उपपत्तावपि निरवयवस्य नात्मन एतत्कल्पनोपपद्यते । घनीभूतज्ञानावयवपुञ्ज आत्मेति विरलीभूतज्ञानावयवा ज्ञानमिति च वक्तु-मशक्यत्वात् । तस्माद्ज्ञानमेवात्मा ।

ननु यदि ज्ञानमेवात्मा तर्ह्यात्मनस्सुप्रसिद्धत्ववचनेनैव ज्ञानस्यापि सुप्रसिद्धत्वं सिद्धमिति कुतः पुनर्वचनं ज्ञानमत्यन्तप्रसिद्धमिति चेदुच्यते—ब्रह्मण आत्मत्वेन रूपेण सुप्रसिद्धिः पूर्वमुक्ता ज्ञानत्वेन रूपेणाधुनेति । तस्माद्ज्ञानस्याप्रसिद्धत्वे ज्ञानवशेन ज्ञेयावगतिर्नैव स्यादिति सर्वव्यवहारलोपप्रसङ्गः- ज्ञानपूर्वकत्वात्सर्वव्यवहारस्य । तस्माद्ज्ञानमत्यन्तप्रसिद्धं किमिवेत्यत आह—सुखादिवदिति । नहि स्वानुभवसिद्धं सुखं केनापि प्रमाणान्तरेण बोद्धुमिच्छति पुरुषः । एवं प्रसिद्धत्वादेव सुखादिवद्ज्ञान-स्यापि जिज्ञासानुपपत्तिरित्याह—जिज्ञासानुपपत्तेश्चेति । तदेव विवृणोति—अप्रसिद्धमिति । जिज्ञास्येत ज्ञातुमिष्येत । यथा ज्ञेयं घटादिविषयं ज्ञातुमिच्छति पुरुषः, तथा ज्ञानं ज्ञातुं नेच्छति ।

स्येत। यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञाता व्याप्तुमिच्छति, तथा ज्ञानमपि ज्ञानान्तरेण ज्ञाता व्याप्तुमिच्छेत् । न चैतदस्ति । अतोऽत्यन्तप्रसिद्धं ज्ञानं ज्ञाताप्यत एव प्रसिद्ध इति । तस्मादात्मज्ञाने यत्नो न कर्तव्यः; किं त्वनात्मन्यात्मबुद्धिनिवृत्तावेव । तस्माद्ज्ञाननिष्ठा सुसम्पाद्या ॥५०॥

---

कुतः ? प्रसिद्धत्वादेव । अप्रसिद्धं हि जिज्ञासाविषयम् । ज्ञेयवदित्येतद्विवृणोति—यथेति । ज्ञेयमित्यस्यैवार्थो ज्ञातव्यमिति । घटादिलक्षणं वस्तु यथा ज्ञानेनाप्तुमिच्छति ज्ञातुमिच्छतीत्यर्थः । तथा ज्ञातव्यं ज्ञानमपि ज्ञानान्तरेणाप्तुमिच्छेत्- ज्ञातव्यत्वाविशेषाद्ज्ञानघटयोः ।

ननु ज्ञानमपि ज्ञेयमिव ज्ञातुमिच्छेत्को दोषस्तत्राह—नचैतदस्तीति । एतद्ज्ञानस्य जिज्ञास्यमानत्वं नैवास्ति ज्ञानेन घटमिव ज्ञानमप्याप्तुमिच्छतियदि तर्हि करणभूतं तद्ज्ञानं कर्मभूताद्ज्ञानात्किं भिन्नमुताभिन्नम् ? आद्ये- तदपि करणभूतं ज्ञानमाप्तुं ज्ञानान्तरं करणं स्यादित्येवमनवस्था । द्वितीये- स्वस्यैव करणत्वं कर्मत्वं चेति विरुद्धं, तस्मान्न ज्ञानस्य जिज्ञास्यमानत्वमस्ति । अत इति । ज्ञानस्य जिज्ञास्यत्वाभावादित्यर्थः । ज्ञानमत्यन्तप्रसिद्धं स्वप्रकाशत्वादिति भावः । अत एवेति । ज्ञानस्यातिप्रसिद्धत्वादेव ज्ञाता आत्मापि प्रसिद्धः- ज्ञानस्यैवात्मत्वादिति भावः । तस्मादिति । एवमतिप्रसिद्धत्वाद्ज्ञानस्वरूपस्यात्मन इत्यर्थः ।

नन्वात्मज्ञाने यदि प्रयत्नो न कर्तव्यस्तर्हि वेदान्तशास्त्रं वृथा आत्मज्ञानार्थत्वात्तस्येत्यत आह—किं त्विति । अनात्मन्यव्यक्तादिदेहान्तेष्वित्यर्थः । या आत्मबुद्धिरात्मेति भ्रम अविदुषामिति भावः। तन्निवृत्तावेव यत्नः कर्तव्यो मुमुक्षुणेति शेषः । तस्मादिति । अनात्मन्यात्मबुद्धिनिवृत्तौ सत्यां स्वत एवात्मस्वरूपस्य स्फुरणसम्भवादित्यर्थः । ज्ञाननिष्ठेत्यात्मज्ञाननिष्ठेत्यर्थः ।

ननु आत्मज्ञाननिष्ठायास्सुसम्पाद्यत्वेऽपि न तया किमपि फलं, किंतु ब्रह्मज्ञाननिष्ठैव सम्पादनीया; मोक्षहेतुत्वात्सा च न सम्भवति- निराकारत्वाद्ब्रह्मणोऽप्रसिद्धत्वाच्चेतिचेत्, मैवम्—ब्रह्मण्यत्यन्ताप्रसिद्धे सति तद्ज्ञाननिष्ठाया एवानाकांक्ष्यत्वात् । ननु नात्यन्तमप्रसिद्धं ब्रह्म, किंत्वनुमानादिना किञ्चित्प्रसिद्धमेव, तत एव तज्जिज्ञासोपपत्तिरितिचेत्तर्हि शास्त्रेण तदेव ब्रह्म आत्मेति विदित्वा सुप्रसिद्धे ब्रह्मणि निष्ठां लभस्व । नच शास्त्रेण ब्रह्मात्माभेदे प्रोक्तेप्यनुभवविरोधात्कथं सोऽर्थोऽवसीयते ? सुखदुःखजन्ममरणादिलक्षणसंसारवानहं क ? सच्चिदानन्दब्रह्माभेदो मम क ? इति वाच्यं, कथं ज्ञायते संसार्यात्मेति । नच मयैवानुभूयते मम संसार इति वाच्यं, यस्त्वयाऽनुभूयते संसारस्स नानुभवितुस्तव धर्मः, किंतु मन आद्यनात्मधर्म एव- स्वधर्मस्य स्वग्राह्यत्वासम्भवात्; जन्ममरणयोर्देहधर्मत्वस्य सुखदुःखयोर्मनोधर्मत्वस्य च दर्शनात् । नच सुख्यहं दुःख्यहमित्यादिप्रतीतेः का गतिरिति वाच्यं, अज्ञानकृताध्यास एव गतिरिति । यथा नास्तिकोऽनात्मदेहधर्मानात्मन्यध्यस्य जातो मृतस्थूलो मनुष्यः काणोऽहमिति मन्यते तथा आस्तिकश्चानात्ममनआदिधर्मानात्मन्यध्यस्य कर्ताऽहं, भोक्ताऽहं, सुख्यहं,

सेयं ज्ञानस्य परा निष्ठोच्यते, कथं कार्येति—

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥

बुद्ध्येति । बुद्ध्याऽध्यवसायलक्षणया विशुद्धया मायारहितया युक्तस्सम्पन्नः, धृत्या धैर्येणात्मानं कार्यकरणसङ्घातं नियम्य च नियमनं कृत्वा वशीकृत्य शब्दादीन् शब्द आदि-

दुःख्यहमिति मन्यते । तस्मादविवेककृत एवायं व्यवहारः । यद्यात्मधर्मस्संसारस्स्यात्तर्हि सुषुप्तिमूर्च्छा-मूर्छास्वपि स दृश्येत । नचानुभूयमानस्य ज्वरादितापस्य कथमपलाप इति वाच्यं, किं ज्वरादितापो देहादेरुतात्मनः ? आद्ये- सिद्धमसंसारित्वमात्मनः । द्वितीये- कथं सुषुप्तौ ज्वरादितापादर्शनम् ? कथं वा अनात्मचिकित्सया देहादितापनिवृत्तिः ? यद्ययमात्मतापस्तर्ह्यात्मैव चिकित्सितव्यः, ननु देहादिः- रोग-भेषजयोर्वैयधिकरण्यायोगात् । अन्यथा पितरि रुग्णे सति पुत्रो भेषजं सेवेत । तस्मादात्मनानुभूयमान-त्वादेव ज्वरतापादयो नात्मधर्माः, किन्त्वनात्मधर्मा एवेत्यनुभवरूपोऽयमात्मा असंसार्येव सच्चिदानन्दं ब्रह्म । एवं ब्रह्मण आत्मत्वादेव ब्रह्मज्ञाननिष्ठा विदुषां सुसम्पाद्या । ये त्वविद्वांसः पण्डितंमन्याश्च नाहं ब्रह्मेति मन्यन्ते तेषां ब्रह्मज्ञाननिष्ठा दुस्सम्पाद्यैवेति सगुणब्रह्मोपासने, यद्वा कर्मयोगे ते यावज्जीवं प्रवर्तन्ताम् । 'अनेकजन्मसंसिद्धस्ततो याति परां गति'मिति गीतावचनादनेकजन्मभिस्ते ज्ञाननिष्ठा-योग्यतालक्षणां संसिद्धिं प्राप्य सन्न्यस्य ज्ञाननिष्ठां सम्पाद्य सच्चिदानन्दं ब्रह्माहमिति सम्यग्ज्ञाना-न्मुच्यन्ते । येषां पुनर्जन्मान्तरानुष्ठितसुकृतप्रयुक्तेश्वरानुग्रहादद्वैतसिद्धिस्त इहैव जन्मनि मुच्यन्ते, अय-मेव द्वैतिनामद्वैतिनां च विशेषो यत्परम्परया द्वैतिनां मुक्तिस्साक्षात्पुनरद्वैतिनामिति ॥५०॥

बुद्ध्येति । श्लोकमवतारयति—सेयमिति । सेयं ज्ञानस्य परा निष्ठा कथं कार्येत्यत्रेदमुच्यत इत्यन्वयः । कथं कार्येति । केनोपायेन सम्पाद्येत्यर्थः । मुमुक्षुभिरिति शेषः । विशुद्धया बुद्ध्या युक्तस्सन् धृत्या आत्मानं नियम्य च, शब्दादीन्विषयान्त्यक्त्वा रागद्वेषौ चोदस्य, विविक्तसेवी लघ्वाशी यतवाक्कायमानसः नित्यं ध्यानयोगपरश्च भूत्वा नित्यं वैराग्यं समुपाश्रितस्सन्, अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं च विमुच्य निर्ममश्शान्तश्च सन् ब्रह्मभूयाय कल्पत इति श्लोकत्रयान्वयः । विशुद्धया निष्कपटया बुद्ध्या सात्त्विकया प्रवृत्तिं च निवृत्तिं चेति श्लोकोक्तलक्षणया निश्चयात्मिकया युक्तस्सन् धृत्या सात्त्विकया पूर्वोक्तलक्षणयाऽऽत्मानमात्मत्वेनाभिमतं कार्यकरणसङ्घातं देहेन्द्रियसङ्घातं नियम्योत्पथ-न्निवर्त्य मनःप्राणेन्द्रियक्रियाणामुच्छास्त्रमार्गविषयान्निवर्तनस्य सात्त्विकधृतिकार्यत्वादिति भावः । यद्वा नियम्य स्वाधीनीकृत्य यथा स्वयमिन्द्रियादिपरतन्त्रो न स्यात्तथा कृत्वेत्यर्थः । अत एव शब्दस्पर्शादीन् विषयान् त्यक्त्वा, नहि चपलेन्द्रियस्य चपलचित्तस्य च विषयत्यागस्सम्भवति । तस्मान्मनइन्द्रियनिग्रह-पूर्वकं शब्दादिविषयत्यागः कर्तव्य इति भावः ।

ननु यदि सर्वात्मना विषयत्यागस्तर्हि शरीरमेव पतेदन्नपानाद्यभावात्, ततश्च ज्ञानोदयो न

येषां तान् विषयान् त्यक्त्वा सामर्थ्याच्छरीरस्थितिमात्रहेतुभूतान् केवलान् भुक्त्वा ततोऽधिकान् सुखार्थान् त्यक्त्वेत्यर्थः । शरीरस्थित्यर्थत्वेन प्राप्तेषु रागद्वेषौ व्युदस्य च परित्यज्य च ॥५१॥

ततः—

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥५२॥

विविक्तेति । विविक्तसेव्यरण्यनदीपुलिनगिरिगुहादीन् विविक्तान् देशान् सेवितुं शीलमस्येति विविक्तसेवी, लघ्वाशी लघ्वनशीलः- विविक्तसेवालघ्वनयोर्निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वाद्ग्रहणं; यतवाक्कायमानसः- वाक्च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसस्स्यात् । एवमुपरतसर्वकरणस्सन् ध्यानयोगपरः- ध्यानमात्मस्वरूपचिन्तनं योग आत्मविषये एकाग्रीकरणं तौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः, नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थं, वैराग्यं विरागस्य भावो वैराग्यं दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं, समुपाश्रितः सम्यगुपाश्रितो नित्यमेवेत्यर्थः ॥५२॥

---

स्यादारम्भदशायामेव मरणादत आह—सामर्थ्यादिति । ज्ञाननिष्ठाविधानसामर्थ्यादित्यर्थः । शरीरस्थितिमात्रानिति । तन्मात्रफलकानित्यर्थः । केवलानिति । न कामक्रोधादिहेतूनित्यर्थः । शरीरस्थितिमात्रफलकविषयातिरिक्तशब्दादिविषयांस्त्यक्त्वेत्यर्थः । ननु यदि शरीरस्थित्यर्थं विषयसेवा स्यात्तर्हि- अन्नपानादिविषयेषु रागः, अन्यत्र द्वेषश्च स्यादत आह—रागद्वेषौ व्युदस्य चेति । अनुप्राप्तेष्विति, विषयेष्विति च शेषः ॥५१॥

विविक्तेति । विविक्ता विजनाः पूताश्च । लघ्वाशी स्वल्पाहार इत्येतत् । ननु किमर्थं विविक्तसेवालघ्वशनयोर्ग्रहणमत आह—निद्रादीति । पत्तनादिजनसहितदेशसेवया ग्राम्यकथाप्रसङ्गस्स्यात्; सुरूपसुगन्ध्यादिद्रव्यदर्शनाच्चित्तेन्द्रियविक्षेपश्च स्यात् । बह्वशनात्तु निद्रामदादयस्स्युरिति भावः । यतेति । वाङ्नियमः कायनियमो मानसनियमश्चेति नियमत्रयमस्यावश्यकं वाचिककायिकमानसिकव्यापारनिवृत्त्यर्थम् । ततश्च मौनी जितासनो जितमानसश्च भूत्वेति सिद्धम् । अत एवाह—एवमुपरतसर्वकरणस्सन्निति । उपरतानि निर्व्यापाराणि सर्वाण्यन्तर्बहिस्स्थानि करणानि मनइन्द्रियाणि यस्य स तथोक्तः । ध्यानयोगौ परौ यस्य स ध्यानयोगपरः । परशब्दश्चात्र लक्षणया कर्तव्यपर इत्याह—परत्वेनेति । उत्कृष्टं हि कर्तव्यमिति मन्यते लोकः । योगशब्दार्थमाह—आत्मेति । आत्मनि विषये चित्तस्य यदेकाग्रीकरणं तद्योग इत्युच्यते । नित्यं सदापि ध्यानयोगपरः । सर्वदापि ध्यानयोगावेवास्य कर्तव्यौ, नतु मन्त्रजपादिकमिति भावः । तदेवाह—नित्यग्रहणमिति । नित्यमिति पदं काकाक्षिन्यायेन वैराग्येऽप्यन्वेतीत्याह—नित्यमेवेति । नतु कदाचिदपि दृष्टेष्वदृष्टेषु चेष्टेषु विषयेषु रागः कर्तव्य इत्यर्थः ॥५२॥

किंच—

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते ॥५३॥

अहङ्कारमिति । अहङ्कारमहङ्करणमहङ्कारो देहेन्द्रियादिषु तं, बलं सामर्थ्यं कामरागादियुक्तं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात्, दर्पं दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः- 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामे'तीति स्मरणात्; तं च, काममिच्छां, क्रोधं द्वेषं, परिग्रहमिन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तस्तं च, विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावः, निर्ममः, अत एव शान्त उपरतो यस्संहृतहर्षायासो यतिर्ज्ञाननिष्ठः, ब्रह्मभूयाय ब्रह्मभवनाय, कल्पते समर्थो भवति ॥५३॥

---

अहङ्कारमिति । अहङ्करणमिति । अहमिदं करोमीत्यादिरूपम् । दर्पो गर्वः । इच्छामिष्टविषयेष्विति भावः । द्वेषमनिष्टविषयेष्विति भावः । यद्यपि रागद्वेषावुस्य चेत्यनेन कामं क्रोधं विमुच्येति सिद्धम् । तथापि शरीरस्थितिहेतुभूतविषयगतरागद्वेषत्यागः पूर्वमुक्तः । इह त्विष्टानिष्टविषयगतरागद्वेषत्याग इति न पुनरुक्तिः । परिगृह्यत इति परिग्रहः । स द्विविधः- आन्तरो बाह्यश्चेति । आन्तरो रागादिः, बाह्यो वस्त्रादिः । तत्राहङ्कारं बलं दर्पं कामं क्रोधं त्यक्त्वेत्यनेनान्तरपरिग्रहत्याग उक्तः । बाह्यपरिग्रहत्यागस्तु परिग्रहं विमुच्येत्यनेनोच्यत इत्याह—इन्द्रियेति, धर्मेति । सन्न्यासिनोऽपि स्वाश्रमविहितकर्मणां कर्तव्यत्वादिति भावः ।

एतेन विविक्तसेवादयस्सन्न्यासिधर्मा एव, न गृहस्थधर्मा इति सिद्धम् । गृहे स्थितस्य तस्य वनादिस्थित्यसम्भवात् । सन्न्यासिन एव परमहंसाश्रमाधिकाराच्च । दण्डकमण्डलुकौपीनरहितः परमहंसपरिव्राजकः । निर्मम इति । ननु ममताविषयस्य गृहधनपश्वादेः प्रागेव परित्यक्तत्वात्परिग्रहं विमुच्येत्यनेन दण्डकौपीनादेरपि ममताविषयस्य परित्यक्तत्वकथनाद्व्यर्थमिदं निर्मम इति विधानमत आह—देहेति । मम देहश्चिरं जीवेदित्यप्यमन्वान इत्यर्थः । अपिशब्दात्परमप्रेमास्पदेऽपि स्वदेहजीवने यस्य न कर्तव्या ममता तस्य किं पुनर्वक्तव्यमतिरिक्तविषयेष्विति गम्यते । अत एवेति । विशुद्धबुद्धियोगादिसाधनसम्पन्नत्वादेवेत्यर्थः । निर्ममत्वादेवेति वा । उपरत इति । उपरतिमुपशमं चित्तस्य प्राप्तः । तदेवाह—संहृतहर्षायास इति । संहृतौ हर्षायासौ येन स तथोक्तः । हर्षायासरहित इत्यर्थः । आयासश्श्रमः । श्रमवद्धर्षोऽपि चित्तस्य विक्षेपकर एवेति हर्षस्यापि संहार उक्तः । य एवंविधस्स यतिर्ब्रह्मभूयाय ब्रह्मभवनाय ब्रह्मप्राप्तये इति यावत् । कल्पते । कोऽसौ यतिरत आह—ज्ञाननिष्ठ इति । कृपू सामर्थ्ये इति धातुपाठादाह—समर्थो भवतीति । मोक्षार्हो भवतीत्यर्थः । ब्रह्मज्ञानार्हो भवतीति वा ॥५३॥

अनेन क्रमेण—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

ब्रह्मभूत इति । ब्रह्मभूतो ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावो न शोचति किञ्चिदर्थवैकल्यमात्मनो वैगुण्यं चोद्दिश्य न शोचति न सन्तप्यते, न कांक्षति न ह्यप्राप्तविषयाकांक्षा ब्रह्मविद उपपद्यते । अतो ब्रह्मभूतस्यायं स्वभावोऽनूद्यते—न शोचति न कांक्षतीति । 'न हृष्य'तीति वा पाठान्तरम् । समस्सर्वेषु भूतेष्वात्मौपम्येन सर्वभूतेषु सुखं दुःखं वा सममेव पश्यतीत्यर्थः । नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वात् 'भक्त्या मामभिजाना'तीति । एवंभूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं परामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते 'चतुर्विधा भजन्ते मा'मित्युक्तम् ॥५४॥

---

ब्रह्मभूत इति, ब्रह्मप्राप्त इति । गुरुशास्त्रादिना पारोक्ष्येण ब्रह्मविदित्यर्थः । ब्रह्मापरोक्ष्यस्य 'भक्त्या मामभिजाना'तीति ब्रह्मप्राप्ते'र्ज्ञात्वा विशते तदनन्तर'मिति च वक्ष्यमाणत्वादिति भावः । प्रसन्नात्मा प्रसन्न आत्मा मनो बुद्धिर्वा यस्य स प्रसन्नात्मा । लब्ध अध्यात्ममात्मनि प्रसादरूपस्स्वभावो येन स लब्धाध्यात्मप्रसादस्वभावः । न शोचतीति । किमुद्दिश्यास्य शोकप्रसङ्गोऽत्र आह—किंचिदिति । अर्थवैकल्यं पुरुषार्थभ्रंशः । वैगुण्यं विगुणत्वम् । न सन्तप्यते सन्तापं न प्राप्नोति । न कांक्षत्यप्राप्तं विषयविशेषं न वाञ्छति । ब्रह्मविदो ब्रह्मपारोक्ष्येण विदितवत इत्यर्थः । भक्त्या मामभिजानातीत्यपारोक्ष्यस्य वक्ष्यमाणत्वादिति भावः । परिपूर्णं ब्रह्मैवाहमिति ज्ञाने सत्यप्राप्तविषयाभावात्कथं तदाकांक्षेति भावः । अत इति । ब्रह्मविदोऽप्राप्तविषयाकांक्षानुपपत्तेरित्यर्थः । ब्रह्मभूतस्य न शोचति न कांक्षतीत्ययं स्वभावोऽनूद्यते, नतु ब्रह्मभूतो न शोचेन्न कांक्षेदिति विधीयत इत्यर्थः । नच ब्रह्मापरोक्ष्यरहितस्य कथं ब्रह्मभूतत्वमिति वाच्यं, यो हि पारोक्ष्येणापि ब्रह्माहमिति वेत्ति स ब्रह्मभूत एव- स्तस्मिन् ब्रह्मेति ज्ञानस्य सत्त्वादिति । सम इति । समदर्शीत्यर्थः । आत्मौपम्येनेति । यथा स्वस्य सुखमिष्टं दुःखमनिष्टं तथैव सर्वस्यापीति वेत्तीत्यर्थः । मम सुखमस्तु, अन्यस्य दुःखमस्त्विति नेच्छति; किंतु सर्वस्यापि सुखमस्त्विती च्छतीति यावत् । 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! सुखं वा यदि वा दुःखं स योगी परमो मत' इति षष्ठाध्याये प्रोक्तत्वादिति भावः ।

नन्वात्मानं समं पश्यतीति सम इति कुतो नोच्यतेऽत्र आह—नात्मेति । नात्मदर्शनमिह समशब्देनोच्यते- तस्यात्मदर्शनस्य वक्ष्यमाणत्वात् । केन वाक्येनेत्यत आह—भक्त्या मामभिजानातीति, मयीति । मद्विषयामित्यर्थः । ज्ञानलक्षणामिति । अहं ब्रह्मास्मीत्यखण्डचैतन्याकारबुद्धिवृत्तिलक्षणामित्यर्थः । ननु ज्ञानस्य कथं भजनत्वं, कथं वा ज्ञानलक्षणभक्तेश्चतुर्थत्वमत आह—चतुर्विधा इति । 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ !' इति ज्ञानिनश्चतुर्थस्य भगवद्भक्तत्वकथनाद्ज्ञानं भगवद्भजनं भगवत्प्राप्तौ तुरीयोपायश्चेति भावः ॥५४॥

ततो ज्ञानलक्षणया—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥

भक्त्येति। भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदः, यश्चाहमस्मि विध्वस्तसर्वोपाधिभेद उत्तमः पुरुष आकाशकल्पः तं मामद्वैतं चैतन्यमात्रैकरसमजमजरममरमभयमनिधनं तत्त्वतोऽभिजानाति। ततो मामेवं तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव ज्ञानानन्तरम्। नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते 'ज्ञात्वा विशते तदनन्तर'मिति। किं तर्हि ? फलान्तराभावाद्ज्ञानमात्रमेव- 'क्षेत्रज्ञं चापि मां वि'द्धीत्युक्तत्वात्।

---

भक्त्येति, तत इति। मद्भक्तिप्राप्त्यनन्तरमित्यर्थः। अहं यावानस्मि यश्चास्मि तं मां भक्त्या विद्वांस्तत्त्वतोऽभिजानाति। ततस्तत्त्वतो मां ज्ञात्वा तदनन्तरं मां विशते। यावानिति। यत्परिमाणः। ननु कथमात्मनो निर्विशेषस्य यावत्त्वमत आह—उपाधीति। उपाधिभिः कृतो विस्तार आधिक्यं येषां तैर्भेदैः। बहुभिरुपाधिविशेषैरित्यर्थः। आकाशकल्प इति। आकाशवत्सर्वगत्वनिराकारत्वादिगुणयुक्त इत्यर्थः। अद्वैतमिति। द्वयोर्भावो द्विता द्वितैव द्वैतं भेद इति यावत्। तद्रहितमद्वैतम्। चैतन्यमेव चैतन्यमात्रं तदेवैको मुख्यः केवल इति वा रसो यस्य तं चैतन्यस्वरूपमित्यर्थः। रसशब्दादानन्दरूपमिति च। न जीर्यतीत्यजरः। जरारहित इति वा। निधनं नाशः। तत इति। तथेत्यर्थे। तत्त्वतो यथावत्। ज्ञात्वाऽऽपरोक्ष्येण विदित्वेत्यर्थः। तदनन्तरमित्यस्यार्थमाह—ज्ञानानन्तरमिति। विशते प्रविशति। प्राप्नोतीति यावत्। कं विशतेऽत आह—मामेवेति। परमात्मानं प्राप्नोति मुक्तो भवतीति यावत्। अखण्डचैतन्याकारबुद्धिवृत्त्या प्रत्यगभिन्नब्रह्मात्मसाक्षात्काराद्ब्रह्मसायुज्यं लभत इति भावः।

ननु मां ज्ञात्वा मां प्रविशतीति धातुद्वयेन ज्ञानप्रवेशात्मकक्रियाद्वयमभिधीयते। तत्र च ज्ञानक्रिया पूर्वभाविनी, पश्चाद्भाविनी तु प्रवेशक्रिया। यो यं जानाति, यं च प्रविशति स तस्माद्भिन्न एव भवितव्यः- ज्ञानक्रियायां प्रवेशक्रियायां वा कर्तृकर्मणोर्भेदेन भाव्यत्वात्। यथा गृहं जानाति, गृहं प्रविशति च पुरुष इति। तस्माद्ज्ञातुः प्रवेष्टुश्चात्मनस्सकाशाद्ज्ञेयं प्रवेश्यं च ब्रह्म भिन्नमेवेति कृत्वा कथमद्वैतसिद्धिरिति शङ्कायामाह—नात्रेति। ज्ञात्वा विशते तदनन्तरमित्यत्र वाक्ये ज्ञानप्रवेशक्रिये भिन्ने न विवक्षिते मूलकारेण। किं तर्हि ? ज्ञानमात्रमेव विवक्षितम्। कुतः ? फलान्तराभावात्। ब्रह्मज्ञानातिरिक्तब्रह्मप्रवेशरूपफलाभावादित्यर्थः। कुतः फलान्तराभावोऽत आह—क्षेत्रज्ञं चापीति। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !' इतिश्लोकेन जीवब्रह्माभेदस्योक्तत्वान्न जीवाद्भिन्नं जीवेन प्राप्यं च ब्रह्मास्ति, येन तत्प्राप्तिरूपं फलं जीवस्य भवेत्। तस्मात्प्राप्तृप्राप्यपदार्थद्वयाभावादिति द्ज्ञानमात्रमेव विवक्षितमिति। न चैवं ज्ञानस्य वा कथं सिद्धिः ? ज्ञातृज्ञेयपदार्थद्वयाभावादिति

नतु विरुद्धमिदमुक्तं 'ज्ञानस्य या परा निष्ठा तया मामभिजाना'तीति । कथं विरुद्धमितिचेदुच्यते—'यदैव यस्मिन्विषये ज्ञानमुत्पद्यते ज्ञातुः तदैव तं विषयमभिजानाति ज्ञाता' इति । न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणामपेक्षत इति । अतश्च ज्ञानेन नाभिजानाति, ज्ञानावृत्त्या तु ज्ञाननिष्ठयाऽभिजानातीति । नैष दोषः—ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य

---

वाच्यं, एकस्यैव चैतन्यस्य बुद्धिनादात्म्याध्यासाद्ज्ञातृत्वं, तमेवापेक्ष्य ज्ञेयत्वं, स्वतस्तु ज्ञानत्वमित्यविरोधात् ।

नन्वेवं ज्ञानमात्रस्यैव विवक्षितत्वे भक्त्या मामभिजानातीत्येतावदेव वक्तव्यं, नतु ज्ञात्वा तदनन्तरं विशत इतिचेन्मैवम्—भक्त्या मां जानातीत्येतावदुक्तौ किं त्वद्ज्ञानात्फलमित्याशङ्क्येत, तदाशङ्कापूरणार्थमुक्तं- ज्ञात्वा मामेव विशतीति । मद्ज्ञानस्याहमेव फलं, नतु मत्तः फलान्तरमस्तीति तदर्थात् । न चैवमपि ज्ञानातिरिक्तं फलं सिद्धमिति वाच्यं, सति ब्रह्मात्मसाक्षात्कारे ज्ञातव्यस्य प्राप्तव्यस्य वा वस्तुनोऽभावेन ज्ञानातिरिक्तफलासिद्धेः; ज्ञानस्वरूपत्वाच्च; ब्रह्मणस्तस्यैवात्मत्वाच्च । तस्माद्ब्रह्मज्ञानादनतिरिक्त एव ब्रह्मप्रवेशः ।

ननु कर्मयोगाच्चित्तशुद्धिं प्राप्तः पुरुषो विशुद्धबुद्धियोगादिक्रमेण ज्ञाननिष्ठां प्राप्य तया परया ज्ञाननिष्ठया ब्रह्म प्राप्नोतीत्युक्तं सिद्धिं प्राप्त इत्यारभ्य विशते तदनन्तरमित्यन्तेन ग्रन्थेन । सा च ब्रह्मप्राप्तिर्ब्रह्मज्ञानादनतिरिक्तेत्युक्तम् । तथा च ज्ञाननिष्ठया ब्रह्म जानातीति सिद्धम् । इयमेव ज्ञाननिष्ठा भक्त्या मामभिजानातीति भक्तिशब्देनोक्ता । ज्ञानलक्षणा चतुर्थी भक्तिरित्युक्तत्वाद्ज्ञाननिष्ठायाश्च ज्ञानलक्षणत्वात् । एवंसति भक्त्या ज्ञाननिष्ठया मां ब्रह्माभिजानातीति सिद्धत्वेनार्थाद्ज्ञानमात्रेण ब्रह्मज्ञानं न सिद्ध्यतीति सिद्धम् । ज्ञानेनैव ब्रह्मज्ञानसिद्धौ ज्ञाननिष्ठाविधानस्य व्यर्थत्वाद्ज्ञाननिष्ठा कथं कार्येति शङ्कायामेव बुद्ध्या विशुद्धया युक्त इत्यादिग्रन्थस्यावतारितत्वात् । तस्माद्ज्ञानेन ब्रह्म न जानाति; ज्ञाननिष्ठया तु ब्रह्म जानातीत्येतद्विरुद्धमिति पृच्छति—नन्विति । ज्ञाननिष्ठायास्स्वरूपमाह—ज्ञानावृत्तिलक्षणामिति । ज्ञानस्याहं ब्रह्मास्मीत्याकारकस्यावृत्तिरसकृदभ्यासो लक्षणं स्वरूपं यस्यास्तां तथोक्ताम् । ज्ञानेनैव ज्ञेयस्य साक्षात्कारो भवति । अन्यथा ज्ञानाभ्यासेन वाऽपि कथं ज्ञेयसाक्षात्कारः ? अयं घट इति ज्ञानेन घटस्यानवभास्यत्वे कथं पुनस्तदेव ज्ञानमावर्तितं भूत्वा तं घटमवभासयेत् ।

परिहरति—नैष दोष इति । ज्ञाननिष्ठया मामभिजानातीतिवचनं न दुष्टमित्यर्थः । तत्र हेतुमाह—ज्ञानस्येति । ज्ञानावृत्तिर्न ज्ञाननिष्ठा, किंतु ज्ञानस्यात्मानुभवनिश्चयावसानत्वं ज्ञाननिष्ठा । कीदृशस्य ज्ञानस्यात्मानुभवनिश्चयावसानत्वं भवति तत्राह—स्वात्मेति । स्वात्मनो ज्ञानस्वरूपस्य अहंब्रह्मास्मीत्यकारकस्योत्पत्तिपरिपाकयोर्जन्मनि दार्ढ्ये च ये हेतवो विशुद्धबुद्धियोगादयस्तैर्युक्तस्य । प्रतिपक्षाः ज्ञानोत्पत्तिपरिपाकप्रतिबन्धभूता मानदम्भादयस्तैर्विहीनस्य च ज्ञानस्य यदात्मानुभवनिश्चय

प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापात्। शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिपरिपाकहेतुं सहकारिकारणं बुद्धिविशुद्धत्वाद्यमानित्वादिगुणं चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्तृत्वादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसन्न्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानं सा परा ज्ञाननिष्ठेत्युच्यते। सेयं ज्ञाननिष्ठाऽऽर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता, तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति; यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते। अतो ज्ञाननिष्ठालक्षणया भक्त्या

---

आत्मानुभवरूपो निश्चयः। आत्मानुभवापादनमिति यावत्। स एवावसानं परिसमाप्तिर्यस्य तत्समात्मानुभवनिश्चयावसानत्वं तस्य। निष्ठाशब्दाभिलापान्निष्ठाशब्दाभिधेयत्वात्। इदमेव विवृणोति— शास्त्रेति। शास्त्राचार्योपदेशेन हेतुना। गुणं चापेक्ष्येति। ज्ञानोत्पत्तिपरिपाकहेतुभूतबुद्धिविशुद्धत्वादिगुणवशेन तत्सहकारिकारणभूतामानित्वादिगुणवशेन चेत्यर्थः। जनितस्य कर्तृत्वादिकारकभेदबुद्धिनिबन्धनानि यानि सर्वकर्माणि तत्सन्न्याससहितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्याहंब्रह्मास्मीतिज्ञानस्य परोक्षकल्पस्येति भावः। आत्मानुभवनिश्चयरूपेणापरोक्षत्वरूपेणेति भावः।

अवस्थानमिति। यत्सैव परा ज्ञाननिष्ठेत्युच्यते। यदनन्तरमेवेति। तत्त्वतो भगवद्ज्ञानानन्तरमित्यर्थः। अशेषत इति। एतेन परोक्षज्ञानवेलायां न तद्भेदबुद्धेरशेषतो निवृत्तिरिति गम्यते। तत इति। स्वात्मानुभवनिश्चयरूपेणावस्थितेनैव ज्ञानेन ब्रह्मात्मसाक्षात्कारो ननु केवलज्ञानेनेतिहेतोरित्यर्थः। ज्ञानावृत्तेर्ज्ञाननिष्ठात्वाभावादिति वा। ज्ञाननिष्ठालक्षणयेति। नच ज्ञानलक्षणया भक्त्येति पूर्वोक्तव्याघात इति वाच्यं, स्वात्मानुभवनिश्चयरूपावस्थितज्ञानलक्षणयेति तदर्थात्। एवं ज्ञानलक्षणां चतुर्थीमित्यत्रापि बोध्यम्। यद्वा ज्ञाननिष्ठालक्षणां चतुर्थीमिति, ततो ज्ञाननिष्ठालक्षणया भक्त्येति च भाष्यं पाठ्यम्।

ननु ज्ञानमिति, ज्ञाननिष्ठेति, ज्ञाननिष्ठया मद्ज्ञानमिति च ज्ञानत्रयमिह दृश्यते। तत्र परोक्षज्ञानमिति, अपरोक्षज्ञानमिति च द्वयं प्रसिद्धं, तृतीयं कथमप्रसिद्धमवगन्तुं शक्यत इतिचेत्, उच्यते— बुद्धिवृत्तिरूपं तत्फलभूतानुभवरूपं चेत्यपरोक्षज्ञानं द्विविधं· तत्र बुद्धिवृत्तिर्ज्ञाननिष्ठा; तत्फलभूतोऽनुभवस्तु ब्रह्मज्ञानमिति। यद्वा परोक्षज्ञानमेव द्विविधं, तत्र श्रवणादुत्पन्नमहंब्रह्मास्मीतिज्ञानमेकं; मननादुत्पन्नं ब्रह्मैवाहमस्मीति निश्चयज्ञानमपरमिदमेव ज्ञाननिष्ठेत्युच्यते। निदिध्यासादपरोक्षात्मसाक्षात्कारस्तु ब्रह्मज्ञानमिति ज्ञानत्रयम्। अथवा परोक्षमपरोक्षमनुभवश्चेति ज्ञानत्रयं, तत्र परोक्षज्ञानमपरोक्षज्ञानं चेति द्वयं ज्ञानकरणभूतं, करणभूतज्ञानस्य फलभूतस्त्वनुभवः। तत्र परोक्षज्ञानं गुरुशास्त्रादिकमपरोक्षज्ञानं ब्रह्माकारबुद्धिवृत्तिर्ज्ञाननिष्ठात्मकमनुभवस्तु ब्रह्मात्मसाक्षात्कार इति। यद्वा नाहंब्रह्मेति विपर्ययनिवर्तकं ज्ञानमेकं यद्गुरुशास्त्रोपदेशजन्यम्। अहं ब्रह्म उत संसारीति संशयनिवर्तकं ज्ञानमन्यत्, यत्समाधिजन्यं ज्ञाननिष्ठात्मकम्। अहं ब्रह्मैवेति निश्चयात्मको ब्रह्मात्मसाक्षात्कारस्तत्परं ज्ञानमिति ज्ञानत्रयमेव।

मामभिजानातीति वचनं न विरुध्यते । अत्र च सर्वं निवृत्तिविधायि शास्त्रं वेदान्तेतिहास-पुराणस्मृतिलक्षणं न्यायप्रसिद्धमर्थवद्भवति-- 'विदित्वा....व्युत्थायाथ भिक्षाचर्यं चरन्ति तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः, न्यास एवात्यरेचय'दिति; 'सन्न्यासः कर्मणां न्यासः, वेदानिमं च लोकममुं च परित्यज्य, त्यज धर्ममधर्मं' चेत्यादि । इह च प्रदर्शितानि वाक्यानि-- न च तेषां वाक्यानामानर्थक्यं युक्तं; न चार्थवादत्वं स्वप्रकरणस्थत्वात्,

---

तत्र चेति । एवं सति ज्ञाननिष्ठया ब्रह्मज्ञानसम्भवे सतीत्यर्थः । निवृत्तिविधायि निवृत्तिमार्गविधायकं सन्न्यासविधायकमिति यावत् । वेदान्तेतिहासपुराणस्मृतिलक्षणं शास्त्रं न्यायप्रसिद्धं न्याय्यमर्थवच्च भवति । निवृत्तिमार्गनिरतसन्न्यास्यनुष्ठेयत्वाद्ज्ञाननिष्ठाया इति भावः ।

तदेव शास्त्रं दर्शयति—विदित्वेति । ब्रह्म पारोक्ष्येण विदित्वेत्यर्थः । नित्यानित्यवस्तुविवेकादिज्ञानवान् भूत्वेति वा । अथ वेदनानन्तरमभ्युत्थाय संसारादुत्थाय सन्न्यस्येति यावत् । भिक्षाचर्यं चरन्ति, भिक्षाटनं कुर्वन्ति, यद्वा विदित्वाऽभ्युत्थाय, अथाऽभ्युत्थानानन्तरं भिक्षाचर्यं चरन्ति, तेषां तपसां मध्ये न्यासं सन्न्यासमतिरिक्तमुत्कृष्टमाहुः, न्यास एवात्यरेचयत्, अतिरिक्तमभवत् । नारायणीये—'सत्यं तपो दमश्शमो दानं धर्मः प्रजननमग्नयोऽग्निहोत्रं यज्ञो मानसं न्यास' इति द्वादशमुक्तिहेतूनुपन्यस्य- 'तानि वैतान्यवराणि तपांसि न्यास एवात्यरेचय'दित्युक्तम् । तथा तत्रैवानुवाकान्तरे सत्यादीन् न्यासान्तान् मोक्षोपायत्वेनोपन्यस्य 'तस्मान्न्यासमेषां तपसामतिरिक्तमाहु'रित्युक्तम् । किं चात्रैव 'न्यास इत्याहुर्मनीषिणो ब्रह्माण'मिति, पूर्वानुवाके- 'न्यास इति ब्रह्मा हि परः परो हि ब्र'ह्मेति च दृश्यते । न्यास इत्युक्तो यो मोक्षहेतुस्तं ब्रह्माणं हिरण्यगर्भरूपं मनीषिणस्स्मृतिकर्तार आहुः- 'सन्न्यासाद्ब्रह्मणस्स्थान'मिति स्मरणात् । हिरण्यगर्भप्राप्तेरन्तरङ्गसाधनत्वात्सन्न्यासस्य तद्रूपत्वम् । परो ब्रह्मा हिरण्यगर्भो न्यासो मोक्षहेतुरित्याह- स च ब्रह्मा परः परमात्मरूपो हीति श्रुत्यर्थः । एवं सर्वजीवाधिकहिरण्यगर्भमतत्वान्न्यास एव सर्वाधिकः । यदि सन्न्यास एव न स्यात्तर्हीमाश्श्रुतयो विरुध्येरन्निति भावः । कर्मणां न्यासस्सन्न्यास इत्युच्यते । वेदानिमं मनुष्यलोकममुं स्वर्गलोकं च परित्यज्य, धर्मं त्यज, अधर्मं त्यजेत्यादीत्यादिपदात् । 'अथ पुनरव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्, ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्', 'अनन्यचित्तता ब्रह्मनिष्ठा सा कर्मठे कथम् ? कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः ॥ त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तद्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ सशिखं वपनं कृत्वा बहिस्सूत्रं त्यजेद्बुधः । यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥ कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥ एतद्द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इत्यादि ग्राह्यम् ।

इह चेति । 'सर्वकर्माणि मनसा सन्न्य'स्येति, 'सर्वारम्भपरित्या'गीतीत्यादीनि । ननु विधिप्रकरणस्थसन्न्यासाश्रमविध्यभावेऽपि तद्वाक्यानां नानर्थक्यमर्थवादत्वादत आह—न चेति ।

प्रत्यगात्माऽविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य। नहि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन

वाक्यानामर्थवादत्वमयुक्तमित्यर्थः। यदीमान्यर्थवादवाक्यानि स्युस्तर्हि विधिवाक्यान्यन्यत्रोपलभ्येरन्। विधिवाक्यस्तुतिपरत्वादर्थवादानां विधिवाक्यानि विनाऽर्थवादवाक्यानारम्भात्; नतु तथान्यत्र विधिवाक्यान्युपलभ्यन्ते। तस्मादिमानि नार्थवादवाक्यानि; किं तु विधिवाक्यान्येव। नन्वस्तु नाम सन्न्यासविधिर्न तु तस्य मोक्षहेतुत्वमत आह—प्रत्यगिति। प्रत्यगात्मनो यदविक्रियं स्वरूपं तन्निष्ठा यस्य तत्त्वान्मोक्षस्य निरतिशयानन्दलक्षणस्य। निरतिशयानन्दं हि प्रत्यगात्मनस्स्वरूपम्। यद्वा प्रत्यगात्माऽविक्रियस्वरूपमेव निष्ठा यस्य तत्त्वान्मोक्षस्य यन्निष्कृष्टं स्वरूपं तत्प्रत्यगात्मस्वरूपमेवेत्यर्थः। अथ वा निष्ठत्वादिति पाठः। प्रत्यगात्माऽविक्रियस्वरूपे या निष्ठा सैव मोक्षः। यद्वा प्रत्यगात्मनोऽविक्रियस्वरूपेण या निष्ठा सैव मोक्षः। अनात्मतादात्म्याध्यासतद्धेत्वविद्यानिवृत्तेर्यदविक्रियात्मरूपेण स्थितिः पुरुषस्य सैव मोक्ष इत्यर्थः। अयं च मोक्ष आत्मज्ञाननिष्ठासाध्यः; सा च निष्ठा सर्वकर्मसन्न्याससाध्येति मोक्षस्य सन्न्यास एव हेतुरुत्तम इति भावः।

ननु मुमुक्षुणा मोक्षार्थं सन्न्यस्य ज्ञाननिष्ठैव किमेति कार्या? कर्मनिष्ठापि क्रियतामत आह—न हीति। स्वर्गाद्यभ्युदयार्थं प्रवृत्तिमार्गः कर्मिणां, मोक्षार्थं निवृत्तिमार्गस्सन्न्यासिनां च विभज्य पृथङ्निर्मित ईश्वरेणैव। तथा चोक्तं भाष्यारम्भे—'ईश्वरः प्रवृत्तिधर्मं प्रजापतीन् ग्राहयामास, निवृत्तिधर्मं सनकसनन्दनादी'निति। तत्र कर्मानुष्ठानात्मकः प्रवृत्तिमार्गः, कर्मसन्न्यासात्मको निवृत्तिमार्गः। यः पुनरज्ञस्स्वर्गं जिगमिषति स कर्ममार्गेणैव स्वर्गं गच्छेत्; नतु सन्न्यासमार्गेण- सन्न्यासमार्गस्य स्वर्गाप्रापकत्वात्। यस्तु विद्वान् मोक्षं जिगमिषति स सन्न्यासमार्गेणैव मोक्षं गच्छेत्, नतु कर्ममार्गेण- तस्याऽमोक्षप्रापकत्वात्। एवमज्ञप्राज्ञयोर्विरुद्धफलकौ विपरीतौ द्वौ मार्गौ स्तः- 'दूरमेते विपरीते विषूची अविद्या च या च विद्या' चेति श्रुतेः। तत्र प्रवृत्तिमार्गः कर्ममार्गोऽविद्यामार्ग इत्यर्थान्तरम्। निवृत्तिमार्गो ज्ञानमार्गो विद्यामार्गो मोक्षमार्ग इत्यप्यर्थान्तरम्। नच विद्यामार्ग एव मोक्षहेतुरिति कुत उच्यत इति वाच्यं, 'नान्यः पन्था विद्यतेऽयना'येति, 'विद्ययाऽमृतमश्नुत' इत्यादिश्रुतिभ्यः। तस्मान्मोक्षार्थिना सन्न्यस्य ज्ञाननिष्ठैव कार्या। अभ्युदयार्थिना त्वसन्न्यस्य कर्मनिष्ठैव कार्या। यथा पूर्वसमुद्रं जिगमिषुस्सूर्योदयोपाधिकपूर्वदिशं प्रत्येव प्रयायात्। पश्चिमसमुद्रं जिगमिषुस्तु सूर्यास्तमयोपाधिकपश्चिमदिशं प्रत्येव प्रयायात्। न तूभयोरपि पूर्वदिशं प्रति पश्चिमदिशं प्रति वा एक एव मार्गोऽस्ति। एवं स्वर्गमोक्षार्थिनोरुभयोरपि नैकोऽस्ति मार्गः, किं तु भिन्न एव। फलभेदादनुष्ठानभेदाच्चेति। अक्षरार्थस्तु पूर्वसमुद्रं जिगमिषोर्गन्तुमिच्छोः पुरुषस्य प्रातिलोम्येन स्वप्रातिकूल्येन पश्चिमसमुद्रं जिगमिषुणा सह समानमार्गत्वमेकमार्गत्वं न हि नास्ति हि; तथा प्रत्यक्समुद्रं जिगमिषोः प्रातिलोम्येन पूर्वसमुद्रं जिगमिषुणा सह समानमार्गत्वं न हि सम्भवतीति। तस्मान्मुमुक्षुणा विदुषा निवृत्तिमार्ग एव स्वीकर्तव्यः।

प्रत्यक्समुद्रं जिगमिषुणा समानमार्गत्वं सम्भवति । प्रत्यगात्मविषयज्ञानसन्तानकरणाभिनिवेशश्च ज्ञाननिष्ठा । सा च प्रत्यक्समुद्रगमनवत्कर्मणा सहभावित्वेन विरुध्यते । पर्वतसर्षपयोरिवाऽन्तरवान् विरोधः प्रमाणविदां निश्चितः । तस्मात्सर्वकर्मसन्न्यासेनैव ज्ञाननिष्ठा कार्येति सिद्धम् ॥५५॥

---

ननु पूर्वपश्चिमसमुद्रद्वयप्रापकमार्गद्वयवदिह परस्परप्रतिकूलं किं तन्मार्गद्वयमत आह—प्रत्यगिति । ज्ञाननिष्ठा ज्ञानमार्गः । तस्यास्स्वरूपमाह—प्रत्यगात्मेति । प्रत्यगात्मविषयं यद्ज्ञानमहं ब्रह्मास्मीत्याकारकं तस्य सन्तानकरणे आवृत्तौ योऽभिनिवेशस्स ज्ञाननिष्ठा । अहं ब्रह्मास्मीत्येवमसकृदभ्यसनं ज्ञाननिष्ठेत्यर्थः । न च ज्ञानस्यात्मानुभवनिश्चयावसानत्वं ज्ञाननिष्ठेत्युक्तं प्रागिति तद्विरोध इति वाच्यं, ज्ञानस्यात्मानुभवनिश्चयापादनार्थमेव ज्ञानावृत्तेः कर्तव्यत्वात्ताद्दशज्ञाननिष्ठाहेतुत्वेन ज्ञानावृत्तिरपि ज्ञाननिष्ठेत्युच्यते उपचारादिति । सा च ज्ञानावृत्तिलक्षणा ज्ञाननिष्ठा कर्मणा सहभावित्वेन विरुध्यते । विरोधात्कर्मणा सह न भवतीत्यर्थः । तत्र दृष्टान्तमाह—प्रत्यगिति । पूर्वसमुद्रं जिगमिषोः प्रत्यक्समुद्रगमनं यथा विरुध्यते तद्वदित्यर्थः । कर्ममार्गज्ञानमार्गयोर्न सहभावित्वं विरोधात् । यथा पूर्वपश्चिमसमुद्रप्रापकयोर्मार्गयोर्नैकदेशवृत्तित्वरूपं सहभावित्वं तद्वदेते भावः ।

ननु नास्ति ज्ञानकर्मणोर्विरोधोऽत आह—पर्वतेति । पर्वतसर्षपयोरिव ज्ञानकर्मणोरन्तरवान् बहुतारतम्यवान् महानिति यावत् । विरोधः प्रमाणविदां विदुषां निश्चितः । पर्वतसर्षपयोरिव ज्ञानकर्मणोर्महदस्ति तारतम्यमिति विदुषां निश्चितोऽयमर्थः । तथाहि- कर्मानुष्ठानात्मकः क्रियाकारकादिभेदबुद्धिप्रयुक्तः, स्वर्गप्रापकः, बन्धहेतुः, देहेन्द्रियव्यापारसाध्यः, अनात्मतादात्म्याध्यासमूलकः, वर्णाश्रमाद्यभिमानप्रवृत्तः, यज्ञाग्निहोत्राद्यनेकविधः, एवमादिलक्षणः कर्ममार्गः । कर्मत्यागात्मकः, उपमृदितक्रियाकारकादिभेदबुद्धिः, ब्रह्मप्रापकः, मोक्षहेतुः, देहेन्द्रियव्यापारोपरमसाध्यः, अनात्मतादात्म्याध्यासनिवृत्तिमूलकः, वर्णाश्रमाद्यभिमानरहितः, अहं ब्रह्मास्मीत्येवमेकविधः, एवमादिलक्षणो ज्ञानमार्गः । तस्मात्स्वरूपतः फलतश्च परस्परमत्यन्तविरुद्धं ज्ञानकर्ममार्गद्वयम् । अत एवाविद्वांसस्सकामाः कर्ममार्गेऽधिकुर्वन्ति । विद्वांसस्तु निष्कामा ज्ञानमार्ग इत्यधिकारिभेदश्च सङ्गच्छते । एवमधिकारिभेदादपि कर्मज्ञानयोर्विरोधः प्रसिद्धः । तस्मादिति । ज्ञाननिष्ठाया एव मुमुक्षुभिः कार्यत्वादित्यर्थः । आदौ सन्न्यासस्यैव ज्ञाननिष्ठाहेतुत्वादिति वा । सर्वकर्मसन्न्यासेनैवेति । तत्पूर्वकमित्यर्थः । आदौ सर्वकर्मसन्न्यासं कृत्वा पश्चाद्ज्ञाननिष्ठा कार्येत्यर्थः । नच ज्ञाननिष्ठाप्राप्तेः प्रागविदुषः कथं सर्वकर्मसन्न्याससम्भवः ? विदुष एव सर्वकर्मसन्न्याससम्भवादिति वाच्यं, पारोक्ष्येण ब्रह्मविदस्सर्वकर्मसन्न्याससम्भवात् । पारोक्ष्येण ब्रह्मविद्धि सर्वं कर्म सन्न्यस्य ज्ञाननिष्ठामभ्यस्य तया परिपक्वया परं ब्रह्म जानाति ।

यत्तु रामानुजः—विशुद्धबुद्धियोगादिभिर्ब्रह्मप्राप्तिरात्मसाक्षात्कारो भवति; ततो भगवति पुण्डरीकनयने स्वस्वामिन्यत्यर्थप्रियानुभवरूपा भक्तिर्जायते; भक्त्या तत्त्वतो भगवन्तं जानाति; ततो

भक्तित एव भगवन्तं विशत इति, तत्तुच्छात्तुच्छतरम्---देहाद्यतिरिक्तात्मस्वरूपसाक्षात्कारानन्तरं पुण्डरीकनयनत्वाद्याकारवति देहे परमात्मभ्रान्त्युदयायोगात्। न ह्यात्मानमेव देहाद्यतिरिक्तं आत्म पुरुषः परमात्मानं देहात्मकं मन्येत; येन पुण्डरीकनयने तस्य भक्तिस्स्यात्। नापि तादृश्या भक्त्या देहेश्वरभ्रान्तिपूर्वकया परमात्मतत्त्वसाक्षात्कारः। सच्चिदानन्दं हि परमात्मनस्तत्त्वम्- 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः। स च देहाद्यनात्मबुद्धिनिवृत्त्यैव भवितुमर्हति। ननु पुण्डरीकनयनोऽयं भगवा-नित्याकारकानात्मदेहेश्वरबुद्धया। यस्य देहो नात्मा, नापीन्द्रियाणि, नापि मनः, नापि बुद्धिः, नाप्यव्यक्तं; किंतु प्रत्यग्ज्योतिरेवात्मेति स्वात्मसाक्षात्काराद्वात्मज्ञाननिश्चयः तस्य कथं सर्वान्तरं स्वयं सच्चिदानन्दं विहाय पुण्डरीकनयनोऽयं देहः परमात्मेति निश्चयो भवितुमर्हति? इन्द्रियाद्यपेक्षया बाह्यो हि देहोऽत्यन्तम्। सर्वान्तरश्चात्मेति प्रसिद्धिः। 'य आत्मनि तिष्ठ'न्नित्यादिरन्तर्यामिब्राह्मण-श्रुतिस्तत्र प्रमाणं हि। कथमेवं सर्वान्तरस्सर्वान्तर्यामी ज्ञानानन्दरूप ईश्वरस्सर्वबाह्यः पुरुषमनोधीन-सत्ताकः (पुरुषबुद्धिकल्पितत्वाद्धृदये भगवद्विग्रहस्येति भावः) जडरूपश्च स्यात्। तस्मादनात्मविद एव सगुणब्रह्मणि भक्तिर्न स्वात्मविदः। आत्मविद्धि निर्गुणे ब्रह्मणि सच्चिदानन्दलक्षणे प्रत्यगभिन्ने प-मात्मनि रमते- 'यस्त्वात्मरतिरेव स्या'दिति स्मरणात्, 'आत्मरतिरात्मक्रीड' इति श्रुतेश्च। नच न प्रत्यगभिन्नं ब्रह्मेति वाच्यं, प्रत्यग्भिन्नत्वे सति ब्रह्मणः ब्रह्मभिन्नत्वे सति प्रतीचो वा जाड्यादिप्रसङ्गात्। तस्मात्पुण्डरीकनयनत्वादिविशिष्टमानसिकबाह्यभगवद्विग्रहनिष्ठार्थप्रीतिरूपभगवद्भक्तिवशात्सच्चिदानन्दब्रह्म-साक्षात्कार इत्यनुपपन्नम्। यद्यपि तादृशभक्त्या चित्तशुद्ध्यादिपूर्वकं ज्ञानलाभाद्ब्रह्मसाक्षात्कारः। तथापि न साक्षाद्ब्रह्मानुभवहेतुत्वं भक्तयेति बोध्यम्। एवं भक्त्या ब्रह्म साक्षात्कृत्य भक्त्यैव ब्रह्म प्रविश-तीत्यप्ययुक्तम्। सति ब्रह्मसाक्षात्कारे 'एकमेवाद्वितीयं ब्र'ह्मेति सर्वद्वैतनिवृत्त्या प्राप्तृप्राप्यद्वयाभावात्। नहि निराकारे परिपूर्णे निरवयवे निर्विशेषे ब्रह्मणि प्रवेशो घटते तदन्यस्य तदनन्यस्य वा जीवस्य। समुद्रे नदीजलवत्, निरवकाशत्वाद्ब्रह्मणः। सावकाशत्वे सति परिपूर्णत्वायोगात्। तत्र मते जीव-ब्रह्मणोस्सायुज्यायोगाच्च न सुतरां प्रवेशोपपत्तिः। नच लक्ष्ये शरवद्ब्रह्मणि जीवः प्रविशतीति वाच्यं, निरवयवत्वादुभयोर्निराकारत्वाच्च। न ह्येयमितः प्राक्तना मुक्ता ब्रह्मणि प्रविष्टाः पृथगुपलभ्यन्ते ब्रह्म-साक्षात्कारसमये विदुषा मधुपिष्टगतस्वर्णरेणुवत्। नच 'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ती'ति श्रुतिरेव प्रमाणमिति वाच्यं, नामरूपोपाधिप्रहाणपूर्वकं जीवो ब्रह्मात्मनावतिष्ठत इति तदर्थात्। नच ब्रह्मांशत्वाज्जीवानां पुनर्ब्रह्मप्रवेश उपपद्यत इति वाच्यं, निरंशस्य ब्रह्मणस्सांशत्वस्यैवायुक्तत्वात्। नच 'ममैवांश' इति गीतावचनाद्युक्तमिति वाच्यं, औपाधिकत्वादंशव्यवहारस्य। नच घटकाशो घटे नष्टे सति महाकाश इवाऽन्तःकरणावच्छिन्नचैतन्यमन्तःकरणे नष्टे सति निरवच्छिन्नचैतन्ये प्रविशतीति वाच्यं, घटनाशानन्तरं यदि घटाकाशस्स्यात्तर्हि स महाकाशं प्रविशेत्। ननु सोऽस्तीति कथं तस्य ब्रह्मप्रवेशः? न चोपाधिनाशानन्तरं घटाकाशो जीवश्चास्तीति वाच्यं, तथा सति ब्रह्मप्रवेशस्यैवा-योगात्। उपाधिं विनापि घटाकाशमहाकाशयोर्जीवेश्वरचैतन्ययोश्च भेदसत्त्वात्। उपाधिनाशानन्तरं

स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना स भगवद्भक्तियोगोऽधुना स्तूयते- शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय —

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥

सर्वेति । सर्वकर्माण्यपि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन्, मद्व्यपाश्रयः अहं वासुदेव ईश्वरो व्यपाश्रयो व्यपाश्रयणं यस्य स मद्व्यपाश्रयः; मय्यर्पितसर्वात्मभाव इत्यर्थः । सोऽपि मत्प्रसादान्मम परमेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णवं पदमव्ययम् ॥

---

निरुपाधिकयोस्तयोर्घटाकाश इति जीव इति च व्यवहर्तुमशक्यत्वात् । उपाधिनाशानन्तरं महाकाशापूर्णचैतन्याच्च भेदेन ग्रहीतुमशक्यत्वाच्च । तथा सति प्रवेशानन्तरमपि भेदग्रहणप्रसङ्गात् । न चेष्टापत्तिः- घटनाशानन्तरं महाकाशे प्रविष्टस्य घटाकाशस्यादर्शनाच्च । तस्मादुपाधिसद्भावदशायामेव घटाकाशमहाकाशभेदव्यवहारः, न तूपाधिनाश इति घटाकाशमहाकाशयोरिव जीवेश्वरचैतन्ययोरसिद्धमद्वैतमिति न जीवचैतन्यस्येश्वरचैतन्ये प्रवेशप्रसङ्ग इति ॥५५॥

सर्वकर्माणीति । सदा सर्वकर्माणि कुर्वाणोऽपि मद्व्यपाश्रयः पुरुषो मत्प्रसादाच्छाश्वतमव्ययं पदमवाप्नोति । यस्येति शेषः । स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य ज्ञाननिष्ठायोग्यतारूपसिद्धिप्राप्तिः फलं- 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इत्युक्तत्वात् । यस्येश्वराराधनबुद्ध्याऽनुष्ठितस्वकर्मानुष्ठानात्मकभक्तियोगस्य ज्ञाननिष्ठायोग्यतारूपसिद्धिप्राप्तिः फलमित्यर्थः । यदिति । मोक्षफलमेवावसानं यस्यास्सा ब्रह्मप्राप्तिपर्यवसाना ज्ञाननिष्ठा यन्निमित्ता य एव भक्तियोगो निमित्तं हेतुर्यस्यास्सा तथोक्ता । स चेति । ज्ञाननिष्ठायोग्यताप्राप्तिहेतुः, तद्द्वारा ज्ञाननिष्ठाहेतुश्चेत्यर्थः । सर्वकर्माण्यपीत्यपिशब्दादाह —**प्रतिषिद्धान्यपीति** । किं पुनर्विहितानीत्यपेरर्थः । कुर्वाण इति । अज्ञ इति भावः । मयि अर्पितस्सर्वात्मेति भावो यस्य सः । सर्वात्मेश्वर इति बुद्धियुक्त इत्यर्थः ।

यद्वा सर्वेषामात्मनां देहेन्द्रियमनोबुद्धीनां ये ये भावा व्यापारास्ते सर्वे मयीश्वरे येनार्पितास्स मय्यर्पितसर्वात्मभावः । ईश्वरार्थमेव मया देहेन्द्रियादिभिस्तानि तानि सर्वाणि कर्माणि क्रियन्ते न मदर्थमिति निश्चयवानित्यर्थः । अथ वा सर्वोऽप्यात्मभावो मनसो भावना मय्यर्पितो येन स तथोक्तः । सर्वात्मना मामेवाश्रित इत्यर्थः । सर्वकर्माणि कुर्वाणस्यापि परमपदप्राप्तिर्मदमेव निमित्तं यदीश्वरव्यपाश्रयत्वम् । पदमवाप्नोतीति । ज्ञानप्राप्तिद्वारेति भावः । नतु साक्षात् । अत एव भक्तियोगस्स्तूयत इत्युक्तम् । भक्तियोगात्परमपदप्राप्तिरितिवचनं स्तुतिर्हि- साक्षात्तस्मात्तत्प्राप्त्यभावात् । ज्ञानयोगात्परमपदप्राप्तिरितिवचनं तु यथार्थकथनं- साक्षात्तत्प्राप्तिसम्भवात् । अथ वा स्तूयत इत्यस्य कथ्यत इत्येवार्थः । मत्प्रसादाद्भक्तियोगानुष्ठाता परमं पदं प्राप्नोतीत्युक्तत्वात् । भक्तियोगस्येश्वरानुग्रहद्वारा परम-

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव ॥५७॥

चेतसेति । चेतसा विवेकबुद्ध्या, सर्वकर्माणि दृष्टादृष्टार्थानि, मयीश्वरे, सन्न्यस्य 'यत्करोषि यदश्ना'सीत्युक्तन्यायेन, मत्परः अहं वासुदेवः परो यस्य तव स त्वं मत्परस्सन् मय्यर्पितसर्वात्मभावः, बुद्धियोगं समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगं, उपाश्रित्योपाश्रयोऽनन्यशरणत्वं, मच्चित्तः- मय्येव चित्तं यस्य तव स त्वं मच्चित्तः, सततं सर्वदा भव ॥

मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि ॥५८॥

मच्चित्त इति । मच्चित्तस्सर्वदुर्गाणि सर्वाणि दुर्गाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यस्यतिक्रमिष्यसि । अथचेद्यदि त्वं मदुक्तमहङ्कारात् 'पण्डितोऽह'मिति न श्रोष्यसि न ग्रहीष्यसि, ततस्त्वं विनंक्ष्यसि विनाशं गमिष्यसि ॥५८॥

---

पदप्राप्तिसम्भवादिति । ईश्वरानुग्रहश्च ज्ञानप्रदानलक्षणः । यः कर्मभिः परिशुद्धचित्तस्सन् ज्ञानं लभते स ईश्वरेणानुगृहीत इत्यनुमातुं शक्यत्वात् । 'ईश्वरानुग्रहादेव पुंसामद्वैतवास'नेति ह्युक्तम् । मत्प्रसादाच्छाश्वतं पदं प्रत्यगभिन्नं ब्रह्मावाप्नोति जानाति, मदनुग्रहात्तस्य सम्यग्ज्ञानोदयो भवतीत्यर्थः॥

चेतसेति । त्वं चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परस्सन् बुद्धियोगमुपाश्रित्य सततं मच्चित्तो भव । यस्मादेवमिति । यस्मादीश्वराराधनात्मककर्मयोगानुष्ठानादीश्वरानुग्रहात्परमपदप्राप्तिस्तस्मादित्यर्थः । दृष्टेति । ऐहिकान्यामुष्मिकाणि चेत्यर्थः । कथं सन्न्यासोऽत्र आह—यत्करोषीति । 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पण'मिति पूर्वोक्तरीत्येत्यर्थः । कर्मणामीश्वरार्पणमेवेह सन्न्यास इत्युच्यते- उपचारात् । ननु मुख्यः सन्न्यासः । सर्वकर्माणि कुर्वाण इति प्रकरणत्वादस्य पर उत्कृष्टः प्राप्य इति वा । बुद्धियोगमुपाश्रित बुद्धियोगोपाश्रयस्सन्नित्यर्थः । उपाश्रयं कृत्वोपाश्रित्य । उपाश्रयशब्दार्थमाह—अनन्यशरणत्वमिति । न विद्यतेऽन्यच्छरणं यस्य तत्त्वं बुद्धियोगैकशरणो भूत्वेति यावत् ॥५७॥

मच्चित्त इति । मच्चित्तस्सततं भवेत्युक्तं, किं तथा भवनेनेत्यत आह—मच्चित्त इति । त्वं मच्चित्तस्सन् मत्प्रसादात्सर्वदुर्गाणि तरिष्यसि । अथ त्वमहङ्कारान्मदुक्तमिति शेषः । न श्रोष्यसिचेत्तर्हि विनंक्ष्यसि । कीदृशोऽहङ्कारोऽत आह—पण्डितोऽहमिति । पण्डितस्य मम किं परोक्तश्रवणेनेत्यहङ्कारादिति भावः । न ग्रहीष्यसीति मदुक्तमनतिक्रम्य नाचरिष्यसिचेदित्यर्थः । न तु केवलश्रवणरूपग्रहणार्थोऽयं श्रोष्यसीतिशब्दः । श्रोत्रेन्द्रियवत्त्वेन शब्दश्रवणस्य जातत्वान्न श्रोष्यसीति वचनस्य व्यर्थत्वापत्तेः । विनाशं नरकादिरूपम् । तस्मान्मदुक्तविधया मदाराधनात्मकं स्वकर्म कुर्वेति भावः । 'नियतं कुरु कर्म त्व'मित्येवं पूर्वमुक्तत्वात् ॥५८॥

इदं च त्वया न मन्तव्यं- 'स्वतन्त्रोऽहं, किमर्थं परोक्तं करिष्या'मीति—

यद्यहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥

यदीति । यदि चेत्त्वमहङ्कारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिन्तयसि निश्चयं करोषि, मिथ्यैष व्यवसायो निश्चयस्ते तव । यस्मात्प्रकृतिः क्षत्रियस्वभाव-स्त्वां नियोक्ष्यति ॥५९॥

यस्माच्च—

स्वभावजेन कौन्तेय! निबद्धस्स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥

स्वभावजेनेति । स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय! अर्जुन! निबद्धो निश्चयेन बद्धस्स्वेनात्मीयेन कर्मणा कर्तुं नेच्छसि यत्कर्म मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत्कर्म ॥६०॥

---

यदीति । यदीतिश्लोकमवतारयति—इदं चेति । स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीतीदं च त्वया न मन्तव्यमित्याह—यदीति । त्वमहङ्कारमाश्रित्य न योत्स्य इति मन्यसे यद्येष ते व्यवसायो मिथ्या भविष्यतीति शेषः । प्रकृतिस्त्वां कर्मणीति शेषः । नियोक्ष्यतीति, एष इति । 'नाहं युद्धं करिष्य' इत्येवंरूप इत्यर्थः । मिथ्या व्यर्थः । कुतो मिथ्या भविष्यतीत्यत आह—प्रकृतिरिति । यस्मात्प्रकृतिस्त्वां नियोक्ष्यति, तस्मादेष मिथ्येति भाष्यान्वयः । नियोक्ष्यति नियुक्तं करिष्यति । कर्मणि युद्धे प्रवर्तयिष्यतीत्यर्थः ॥५९॥

स्वभावजेनेति । कथं प्रकृतिर्नियोक्ष्यतीत्यत आह—स्वभावजेनेति । हे कौन्तेय! स्वभावजेन स्वेन कर्मणा निबद्धस्त्वं मोहाद्यत्कर्म कर्तुं नेच्छसि तदवशस्सन्नपि त्वं करिष्यसि । स्वभावः क्षत्त्रस्वभावः । तज्जेन स्वेन स्वकीयेन कर्मणा शौर्यादिना । 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यप-लायन'मितिश्लोकोक्तेनेत्याह—यथोक्तेनेति, मोहादिति । न तु सम्यग्ज्ञानादिति भावः । तत्त्वविदः प्रकृतिपरवशत्वासम्भवात् । अवशोऽस्वाधीनः । फलितमाह—परवश इति । प्रकृतिपरतन्त्र इत्यर्थः । नाहं कर्म करिष्य इति दृढं सङ्कल्प्य स्थितोऽपि त्वं क्षत्त्रस्वभावप्रयुक्तसहजशौर्यादिगुणयुक्तत्वाच्छत्रुभि-र्बाध्यमानान् स्वीयानवलोक्य, शत्रुभिः क्रियमाणामात्मनिन्दां च श्रुत्वा, प्रभूतक्रोधविक्षिप्तं मनो नियन्तुमशक्तस्सन् करिष्यस्येव युद्धम् । नहि प्रकृतेस्त्वया नियन्तुं शक्यते । न ह्यग्नेरौष्ण्यस्वभाव इव क्षत्त्रस्य शौर्यादिस्वभावोऽन्यथा भवति । यस्मादेवं तस्मान्मिथ्यैव तव न योत्स्येऽहमित्येष निश्चयः । तस्मान्मदुपदेशात्प्राग्यत्त्वया निश्चितं न योत्स्य इति तदधुना परित्याज्यमेव । न त्वद्यापि तथैव न योत्स्य इति मन्तव्यमिति भावः ॥६०॥

यस्मात्—

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

ईश्वर इति । ईश्वर ईशनशीलः, सर्वभूतानां सर्वप्राणिनां, हृद्देशे हृदयदेशे, अर्जुन! शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरण इति- 'अहश्च कृष्णमहरर्जुनं' चेति दर्शनात्, तिष्ठति स्थितिं लभते । तेषु स कथं तिष्ठतीत्याह—भ्रामयन्भ्रमणं कारयन् सर्वभूतानि यन्त्रारूढानि यन्त्राण्यारूढान्यधिष्ठितानीवेतीवशब्दोऽत्र द्रष्टव्यः । यथा दारुकृतपुरुषादीनि यन्त्रारूढानि मायया छद्मना भ्रामयन् तिष्ठतीति सम्बन्धः ॥६१॥

ईश्वर इति । न केवलं प्रकृतिरेव त्वां नियोक्ष्यति, किं त्वीश्वरोऽपीत्याह—ईश्वर इति। यद्वाऽवश इत्यनेन न केवलं प्रकृतिपरवशत्वं तवोच्यते, किं त्वीश्वरपरवशत्वमपीत्याह—ईश्वर इति। अथ वा कुतो मां स्वतन्त्रमीश्वरं प्रकृतिर्नियोक्ष्यतीत्यत आह—ईश्वर इति । हेऽर्जुन! यन्त्रारूढानि माययेव सर्वभूतानि भ्रामयन् सन्नीश्वरस्सर्वभूतानां हृद्देशे तिष्ठति । अर्जुनशब्दार्थमाह—शुक्लेति। शुक्लः परिशुद्धोऽन्तरात्मस्वभावो यस्य स शुक्लान्तरात्मस्वभावः । अस्यैवार्थमाह—विशुद्धान्तःकरण इति । नन्वर्जुनशब्दश्श्वेतवाचीत्यत आह—अहश्चेति । कृष्णमपरिशुद्धं मेघाच्छादनादिनेति भावः। अर्जुनं परिशुद्धं मेघाभावादिनेति भावः । मेघच्छन्नेऽह्नि दुर्दिनशब्दव्यवहारात् । न ह्यह्नि शुक्लकृष्णरूपयोगः । तस्मादर्जुनशब्दः परिशुद्धवाची । इदं च सम्बोधनं वेदान्तशास्त्रोपदेशार्हत्वसूचनाय, परिशुद्धान्तःकरणस्य तव मदुक्तार्थग्रहणमुचितमिति सूचनाय वा; परिशुद्धान्तःकरणस्य त्वोच्छास्त्रप्रवृत्तिरयुक्तेति सूचनाय वा; परिशुद्धान्तःकरणत्वं समाहितेन मनसा हृद्देशस्थमीश्वरं साक्षात्कर्तुं क्षमम इति सूचनाय वा ।

कानि तानि यन्त्रारूढानीत्यत आह—दारुकृतपुरुषादीनि यन्त्राणीति । दारुकृतानि पुरुषादीन्येव यन्त्राणि यन्त्रारूढानीत्युच्यन्त इत्यर्थः । अवयवावयविभावेन यन्त्रे पुरुषादिपुत्रिकाणां सत्त्वाद्यन्त्रावयवानां पुत्रिकाणां यन्त्रत्वं यन्त्रारूढत्वं चेति भावः । यद्वा कानि तानि यन्त्राणीत्यत आह—दारुकृतेति । तदारूढानि तु मनुष्यसत्त्वानि । पुरुषाश्वगवादिरूपासु यन्त्रस्थासु पुत्रिकासु बालानारोप्य केनचित्कपटेन भ्रामयति हि पुरुषः । अथ वाऽऽरूढानि स्वेनाधिष्ठितानि च तानि यन्त्राणि यन्त्रारूढानि; आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः । कानि तानीत्यत आह—दारुकृतेति । पुरुषाकारामश्वाकारां वृषभाकारां वा कांचित्पुत्रिकां दारुमयीं निर्माय यन्त्रभूतां तां स्वमधिष्ठाय केनचिन्निमिषेण तद्यन्त्रं भ्रामयति कुशलः । दारुकृतपुरुषादीनि यन्त्रारूढानीति भाष्यपाठस्तु नागरपुस्तकेषु दृश्यते । तद्वदीश्वरो ब्रह्मादिस्तम्बपर्यन्तं सचेतनं कार्यकरणसङ्घातात्मकं चराचरभूतजातं निर्माय तस्य हृद्देशे स्थितस्सन् तद्यथास्वभावं तत्तत्र प्रवर्तयतीत्यर्थः ।

नन्वपरिच्छिन्नस्य महतो महीयसः परिपूर्णस्य परमेश्वरस्य कथं भूतहृद्देशे स्थितिः ? परि-मितो हि हृत्पुण्डरीकप्रदेश इतिचेन्नैष दोषः—'हृत्पुण्डरीके विमले प्रविष्टश्शास्ता जनानाम्'मिति, 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठ'तीति च श्रुतेर्मायया रामकृष्णादिसमवितस्तिपरिमितकायव-दंगुष्ठपरिमितकायोऽपि भवेदीश्वरस्य; तेन च रूपेण हृत्पुण्डरीकस्थितिरुपपद्यत इति ।

ननु यदि हृत्पुण्डरीके अंगुष्ठमात्रपरिमित ईश्वरस्साकारोऽस्ति तर्हि स दृश्येतैवेतिचेन्नैष दोषः—चक्षुषो बहिःकरणस्यान्तस्स्थवस्तुस्वरूपग्रहणासामर्थ्यात् । किं घटादिरिवान्तस्स्थमांसादिकं चक्षुषा गृह्यते ? नन्वेवं मृतभूतशरीरे ईश्वरस्सोऽस्ति वा, न वा ? आद्ये प्राकृतशरीरदाहेन सप्राण-स्यापीश्वरस्य दाहः; तेन चेश्वरस्य महत्कष्टम् । द्वितीये कस्माद्धेतोर्नास्ति ? नच बहिर्निर्गमनादिति वाच्यं, बहिर्निर्गतस्य तस्य कुतोऽचाक्षुषत्वम् ? किं मृतशरीराद्बहिर्निर्गतोंगुष्ठमात्रपुरुषः केनापि दृश्यते पार्श्वस्थेन ? नच प्राकृतचक्षुरगोचर इति वाच्यं, सन्निपातदोषेण दन्तपंक्तिद्वयसङ्घट्टने सति वक्त्र-मार्गाभावात्केन मार्गेण स पुरुषो निर्गतस्स्यात् ? न हि नेत्रादिमार्गा अंगुष्ठपरिमिताः । नच गुद-द्वारेण निर्गत इति कल्पयितुं शक्यमश्लीलत्वात् ।

किंच दर्पणमयनीरन्ध्रकरण्डे निक्षिप्तान्म्रियमाणान्मनुष्यान्निर्गतस्य परमेश्वरस्य तस्य कथं दर्पणा-द्बहिर्गमनं रन्ध्राभावात् । अपि च अतिसूक्ष्मेषु कीटादिशरीरेषु हृद्देशस्यात्यल्पत्वात्कथं तत्र तादृ-शेश्वरस्थितिः ? तस्मादिह हृद्देशे स्थितः पुरुषो नांगुष्ठमात्र इति वक्तुं शक्यते । नच श्रुतेः का गति-रिति वाच्यं, मनुष्यहृद्देशस्यांगुष्ठपरिमितत्वात्तत्स्थस्येश्वरस्यापि तत्परिमितत्वं कल्प्यत एवोपासनार्थं, न तु तात्त्विकमिति । नन्वेवंचेत्—मायावच्छिन्नचैतन्यलक्षणस्सत्त्वादिगुणभेदेन विष्णुब्रह्मरुद्ररूपश्चेश्वरो भूतहृद्देशे तिष्ठतीति ब्रूमः । इदं च न युक्तम्—किं हृद्देशे विष्ण्वादिमूर्तित्रयमस्ति, उत तत्र का गतिः ? उभयथापि शङ्खचक्रकमण्डलुत्रिशूलादिधराणां गरुडहंसवृषभध्वजानां लक्ष्मीसरस्वतीपार्वती-सहितानां महतां तेषां त्रयाणां देवोत्तमानां स्वल्पे हृत्पुण्डरीके स्थितिर्न घटते । नापि त्रयाणां तेषामनेककोटिभूतजातहृदयस्थितिरुपपद्यते । अनेककोटिविष्ण्वादिमूर्तयस्सन्तीति कल्पनं चायुक्तं-अप्रमाणत्वात् । नापि विशस्यमानपश्वादिहृत्पुण्डरीके कापि मूर्तिरुपलभ्यते । तस्मात्सत्त्वगुणावच्छिन्नं चैतन्यं विष्णुरिति, रजोगुणावच्छिन्नं ब्रह्मेति, तमोगुणावच्छिन्नं रुद्र इति च नामभिरुच्यते । नतु चैत-न्यस्य कोऽप्याकारः । अत एव विष्ण्वादिशरीरा अस्मदादिशरीरवद्देवादिशरीरवच्च दृश्यत्वाज्जडत्वा-त्परिच्छिन्नत्वाच्च नैवेश्वरभूताः; किं तर्हि मायावच्छिन्नं चैतन्यमेव अपरिच्छिन्नत्वादीश्वर इति ।

नन्वेवमपि मायावच्छिन्नचैतन्यलक्षणेश्वरस्य परिपूर्णस्यापरिच्छिन्नस्य कथं हृद्देशे स्थितिरितिचे-न्मायापरिणामत्वात्सर्वस्य घटाकारपरिणतमृदि गन्ध इव हृदाकारपरिणतमायायामीश्वरोऽस्तीति । एतदपि न युक्तम्— हृद्देशे तिष्ठतीति विशेषवादस्यायुक्तत्वात् । सर्वभूतानां करचरणनखलोमादिष्वपि माया-परिणामेषु दर्शितविधया सत्त्वादीश्वरस्य । किं चानया विधयाऽन्तःकरणस्यापि मायापरिणामत्वेन

तत्रापीश्वरचैतन्यस्यैव सत्त्वादन्तःकरणावच्छिन्नचैतन्यं जीव इति वेदान्तसिद्धान्तविरोधाच्च। तस्मा-
दीश्वरस्सर्वभूतानां हृद्देशे तिष्ठतीत्येतदनुपपन्नमेवेति पूर्वपक्षः।

अत्रोच्यते—'सत्यं ज्ञानमनन्तं ब्र'ह्मेत्युक्तसत्यज्ञानानन्दलक्षणः परिपूर्णस्सर्वव्यापी परमात्मा नारायणः परमेश्वरः सर्वभूतानां हृद्देशे प्रत्यग्रूपेण तिष्ठतीति, अन्तःकरणावच्छिन्नं चैतन्यं प्रत्यगि-त्युच्यते। यद्यपि परिपूर्णं चैतन्यं निरुपाधिकं सर्वत्रास्ति। तथापि तदेव चैतन्यमन्तःकरणावच्छिन्नं सद्भूतानां हृदि तिष्ठतीति न कोऽपि दोषः। नच सर्वान्तरस्य प्रत्यक्चैतन्यस्यापि सर्वशरीरावयव-व्यापित्वेन कथं हृद्देशे स्थितिरिति वाच्यं, अन्तःकरणस्य हृत्पुण्डरीके स्थितत्वात्तदवच्छिन्नचैतन्यस्य तत्रैवोपलभ्यमानत्वाद्धृद्देशे स्थितिरुक्तेति।

यद्वा मायोपाधिको महेश्वर एव हृद्देशे प्रत्यग्रूपेण तिष्ठति। नच मायोपाधिकस्य कथमन्तः-करणोपाधिकत्वमिति वाच्यं, वस्त्रावृतायाः क्षुरिकायाः पेटिकावृतत्ववत्तदुपपत्तेः। अविद्यावच्छिन्नमेव चैतन्यं पुनरन्तःकरणावच्छिन्नमपि भवतीति वेदान्तशास्त्रे दृश्यते हि। अन्तःकरणावच्छिन्नस्यापि प्रतीचो जीवस्येन्द्रियावच्छिन्नत्वं देहावच्छिन्नत्वं च दृश्यते हि- पश्याम्यहं मनुष्योऽहमित्यादिव्यवहारात्। न चेश्वरस्यैव कथं जीवत्वमिति वाच्यं, निर्विशेषस्य ब्रह्मणो यथेश्वरत्वं तथैवेश्वरस्यापि जीवत्वमिति शास्त्रैकप्रमाणा वयमभ्युपगच्छामः। तथाहि शास्त्रम्- 'तत्सृष्ट्वा तदेवानुप्राविशत्, अनेन जीवेनात्म-नानुप्रविश्य' इत्यादिश्रुतिः; 'ममैवांशो जीवलोके जीवभूतस्सनातनः, क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!, ईश्वरो जीवकलया प्रविष्टो भगवा'नित्येवमादिस्मृतयः; 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थित' इति पुराणम्। नच शास्त्रादपि कथमीश्वरस्यानीश्वरजीवत्वमिति वाच्यं, रज्जोरपि सर्पत्वमिव स्थाणो-रपि चोरत्वमिव गगनस्यापि नैल्यमिव सशिरसोऽपि स्वप्ने भिन्नशिरस्कत्वमिव स्थिरस्यापि जलसूर्यकस्य चलनमिवाविद्यावशादीश्वरस्यापि जीवस्यानीश्वरत्वसम्भवात्। न ह्यनुभवसिद्धं जीवगतमनीश्वरत्वं शास्त्रसिद्धमीश्वरत्वं वा प्रत्याख्यातुं शक्यते केनाप्यास्तिकेन। न चैवं जीवे ईश्वरत्वानीश्वरत्वयो-रन्यतरस्य निश्चेतुमशक्यत्वेनोभयासिद्धिरिति वाच्यं, शास्त्राद्विद्वदनुभवात्सुषुप्त्यादिदृष्टान्ताच्च; जीवे ईश्वरत्वस्य लोकादविद्वदनुभवाज्जागराच्च। तस्मिन्ननीश्वरत्वस्य च निश्चेतुं शक्यत्वादेकस्यापि नटस्य दशाभेदात्स्त्रीपुरुषाकारद्वयपरिग्रहवदेकस्यापि जीवस्य विद्याऽविद्यादशाभेदेनेश्वरत्वानीश्वरत्वसम्भवाच्च। तस्मादुपपन्नं जीवेश्वराद्वैतं तत्त्वमस्यादिमहावाक्योपदिष्टम्।

तथाहि- तदित्यस्येश्वरोऽर्थः; त्वमित्यस्य जीवोऽर्थः; असीत्यस्य तयोरैक्यमर्थः। मायावच्छिन्न-चैतन्यलक्षणेश्वरस्यैव पुनरन्तःकरणावच्छिन्नत्वाज्जीवेश्वराभेदः। तथाऽविद्यादशायां यस्संसारी जीवः स एव विद्यावस्थायामसंसारीश्वर इति जीवेश्वराभेदः। महाकाशस्य घटाकाश इव जीव ईश्वर-स्यांश इति कृत्वा अंशांशिनोर्जीवेश्वरयोर्घटाकाशमहाकाशयोरिवाभेदः। बिम्बभूतं मुखं प्रतिबिम्बरूपेण यथा दर्पणे तिष्ठति, तथा बिम्बभूत ईश्वरः प्रतिबिम्बजीवरूपेणान्तःकरणे तिष्ठति; तच्चान्तःकरणं हृद्देशे तिष्ठतीतीश्वरस्यैव जीवरूपेण भूतहृद्देशे स्थितत्वाद्बिम्बप्रतिबिम्बयोर्मुखप्रतिमुखयोरिव जीवेश्वरयो-

र्भेदः । बाह्यचैतन्यमीश्वरः, आन्तरचैतन्यं जीवः । तथा च बाह्याकाशदहराकाशयोरिव जीवेश्वरयो-र्भेदः । सोपाधिकचैतन्यं जीवः, निरुपाधिकचैतन्यमीश्वरः । तथा च घटाकाशमहाकाशयोरिव जीवेश्वरयोर्भेदः । यथा भोग्यो बाह्यो वायुर्भोक्तृप्राणरूपेणान्तस्तिष्ठति, तथा ज्ञेयं बाह्यं ब्रह्म ज्ञातृ-जीवरूपेण हृद्देशे तिष्ठतीति वायुप्राणयोरिव जीवेश्वरयोर्भेदः । नच वायोः प्राणभोग्यत्वं कथमिति वाच्यं, सर्पाणामृषीणां च वाताहारत्वात्प्राणस्यैवाहारभोक्तृत्वाच्चेति ।

लक्षणापक्षे त्वन्तःकरणावच्छिन्नत्वमायावच्छिन्नत्वबिम्बत्वप्रतिबिम्बत्वज्ञातृत्वज्ञेयत्वसर्वज्ञत्वकिंचि-ज्ज्ञत्वेश्वरत्वानीश्वरत्वसंसारित्वासंसारित्वसोपाधिकत्वनिरुपाधिकत्वादिविशेषणांशत्यागेन शुद्धचैतन्यमेक-मेवाद्वितीयं ब्रह्म तत्त्वमसीति वाक्येन लक्ष्यत इति बोध्यम् ।

ननु यद्येवमीश्वरो जीवरूपेण भूतानां हृदि तिष्ठेत्तर्हि नियाम्यनियामकभावासिद्धिर्जीवेश्वर-द्वयाभावादिति चेन्मैवम्—नेश्वरेण जीवो नियम्यते- ईश्वरस्यैव जीवत्वात् । किंतु जीवरूपेणेश्वरेण कार्यकरणसङ्घातो नियम्यते । जीवेऽस्मिन् देहे सत्येव सङ्घातस्य प्रवृत्तिरस्माद्देहादुत्क्रान्ते त्वप्रवृत्तिरिति दर्शनात् । लौकिकास्तार्किकादयश्च जीवस्वरूपमविदित्वा कार्यकरणसङ्घातं चराचरात्मकं ब्रह्मादि-स्तम्बपर्यन्तं दृश्यमेव सचेतनं सर्वं जीवत्वेन प्रतिपद्य जीवा ईश्वरेण नियम्यन्त इत्याहुः । एतत्कार्य-करणसङ्घातेऽहमभिमानादेव वयं केनापि नियमिता इवावशाः प्रवर्तामह इति मन्यन्ते- 'केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करो'मीति स्मरणात् । जन्ममरणसुखदुःखादिलक्षणं संसारं चानुभवन्ति ।

वस्तुतस्तु- न जीवस्याविक्रियस्य क्वापि प्रवृत्तिस्सम्भाव्यते- 'अव्यक्तोऽयमचिन्त्योऽयमवि-कार्योऽयमुच्यत' इति ह्युक्तम् । एवं कार्यकरणसङ्घातस्य नानात्वादेव तदभिमानाज्जीवा अप्यनेके इति भ्रान्त्या ब्रुवन्ति तार्किकादयः । वस्तुतस्तु जीव एक एव- 'एको देव' इति मन्त्रवर्णात्; ईश्व-रैकत्वस्य तार्किकादिसम्प्रतिपन्नत्वादीश्वरस्यैव जीवत्वाच्च । तस्मात्कार्यकरणसङ्घातात्मकाः प्राणिनो जीवा ईश्वरेण प्रत्यगात्मना नियम्यन्त एव । सर्वान्तरात्मा प्रत्यक्पुरुषस्तु नेश्वरेण नियम्यते तस्यै-वेश्वरत्वादिति स्थितम् ।

नन्वेवं प्रकृते ईश्वरस्सर्वभूतानि भ्रामयतीत्यस्य किमीश्वरो जीवान्नियमयतीत्यर्थः ? उत प्रत्य-गात्मा । कार्यकरणसङ्घातजातं नियमयतीत्यर्थ इति चेत्- उभयथाप्येक एवाभिप्रायः पर्यवस्यति । अविद्वद्दृष्ट्येश्वरो जीवान्नियमयतीत्युक्तेऽपि विद्वद्दृष्ट्या प्रत्यगात्मा कार्यकरणसङ्घातजातं नियमयती-त्येव सिद्धत्वात् । विद्वद्दृष्ट्या प्रत्यगात्मा कार्यकरणसङ्घातजातं नियमयतीत्युक्तेऽपि, अविद्वद्दृष्ट्या जीवानीश्वरो नियमयतीत्येव सिद्धत्वात् । विदुषा हीश्वर आत्मत्वेनाभिमतः; अविदुषा च कार्य-करणसङ्घात आत्मत्वेनाभिमतः । न चैक एवात्मा कुत एकेश्वरत्वेन नानासङ्घातत्वेन च गृहीत इति वाच्यं, एकस्यैव चन्द्रस्य तैमिरिकेण नानाचन्द्रत्वेन निर्मलचक्षुषा एकचन्द्रत्वेन च गृह्यमाणत्वात् ।

एकस्यैव सूर्यस्यास्मदादिभिः प्रकाशरूपत्वेनोलूकैस्तिमिररूपत्वेन च गृह्यमाणत्वात्। तस्माद्विद्यया एकस्यैवात्मन ईश्वरत्वेनाऽविद्यया नानाजीवत्वेन च ग्रहणमुपपद्यते।

ननु य आत्मानं विद्यया ईश्वरत्वेन गृह्णाति, यश्चाविद्यया नानाजीवत्वेन गृह्णाति सोऽसौ क इति चेदुच्यते—प्रमातेति। स हि वस्तुत आत्मापि सन्नन्तःकरणतादात्म्याध्यासात्प्रमाता भवति। अयं चान्तःकरणभेदान्नानैवेति ग्रहीतृभेदाद्ग्रहणभेदोपपत्तिः। इमे एव प्रमातारः कार्यकरणसङ्घाताहमभिमाना जीवा इति व्यवह्रियन्ते- अविद्यावशात्। विद्यया त्वीश्वरात्मका एव चैतन्यात्मकत्वादिति स्थितं जीवेश्वराद्वैतम्। अविद्यादशामधिकृत्य प्रोक्तोऽयं श्लोको भगवता, ननु विद्यादशायां- तत्र सर्वभूतानामेवाभावात्। तथाच यान्यविद्यादशायामुपलभ्यमानानि सर्वाणि चराचराणि च ब्रह्मादिस्तम्बपर्यन्तानि भूतानि तेषां हृद्देशे प्रत्यग्रूपेणावस्थित आत्मेश्वरो भ्रामयतीति पर्यवसन्नश्श्लोकार्थः।

यत्तु रामानुजः—ईश्वरोऽन्तर्यामिरूपेण हृद्देशे तिष्ठन् जीवान् भ्रामयतीति, तदयुक्तम्- यद्यन्तर्यामिरूपं प्रसिद्धं स्यात्तर्हीश्वरोऽन्तर्यामिरूपेण तिष्ठतीति वक्तुमुचितम्। न तु तत्प्रसिद्धम्। न हि कस्याप्यन्तर्यामी प्रत्यक्षः। किं त्वनुमेय एव- जीवपारतन्त्र्यलिङ्गात्। तस्मात्तस्यान्तर्यामिन ईश्वरस्य रूपं वक्तव्यम्। नच रुक्मवर्णोऽङ्गुष्ठमात्रः पुरुषोऽन्तर्यामीति वाच्यं, दूषितत्वादेतद्वादस्य; 'अशब्दमस्पर्शमरूपमव्यय'मितीश्वरस्य रूपवत्त्वनिषेधाच्च। जीवस्यैव नीरूपत्वे किं पुनरीश्वरस्य नीरूपत्वं वक्तव्यम्? नच जीवः कृष्णवर्ण ईश्वरश्शुक्लवर्ण इति वाच्यं, सपापनिष्पापपरत्वात्कृष्णशुक्लशब्दयोः। नहि देहे देहाद्वच्छिन्ना नीलो जीवः कैरपि दृश्यते। तथा श्वेतोऽपीश्वरः। तस्मात्सत्यज्ञानानन्दरूप एवान्तर्यामीश्वर इत्यभ्युपेयम्। अभ्युपेते च तथा तदेव सत्यं ज्ञानं जीवस्यापि स्वरूपमिति प्रत्यगात्मन एवान्तर्यामीश्वरत्वं सम्भवतीति कृत्वा तदतिरिक्तान्तर्यामिकल्पनमप्रमाणमनुभवविरुद्धमनुपपन्नं च। न चान्तर्यामिब्राह्मणं प्रमाणं- तस्यापि प्रत्यगात्मपरत्वात्। नापि जीवपारतन्त्र्यानुभवः प्रमाणं- सङ्घातगतत्वात्पारतन्त्र्यस्य। तस्मात्प्रत्यगात्मैवान्तर्यामी।

अस्य श्लोकस्य श्रीविद्यारण्यस्वामिभिः—यन्त्रारूढानि सर्वभूतानि मायया भ्रामयन्सन्नीश्वरस्सर्वभूतानां हृद्देशे तिष्ठतीत्यन्वयमाश्रित्य देहादिपञ्जरं यन्त्रं तदारूढान्यभिमानित्वरूपमारोहं प्राप्तानि कार्यकरणसङ्घातेऽहमिति ममेति चाभिमानयुक्तानीत्यर्थः। सर्वभूतानि सर्वजीवान् मायया त्रिगुणात्मिकया भ्रामयन्नित्यर्थं उपवर्णितः पञ्चदश्यां- 'देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता' इत्यादिना। रामानुजेनापि देहेन्द्रियावस्थं प्रकृत्याख्यं यन्त्रमारूढानीत्ययमेवार्थ उक्तः। अस्मिन्नर्थेऽपि कार्यकरणसङ्घाताभिमानिनां सर्वेषां जीवानां प्रमातॄणां यत्स्थानं हृत्पुण्डरीकदेशः तस्मिन् प्रत्यगात्मरूपेणेश्वरस्तिष्ठन्सन् कार्यकरणसङ्घातं प्रवर्तयति। तथा प्रवर्तिते सङ्घातेऽहमित्यभिमानसत्त्वाज्जीवास्ते स्वयमीश्वरेण प्रवर्तिता इव मन्यन्त इति तात्पर्यं बोध्यम्।

**तमेव शरणं गच्छ सर्वभावेन भारत !**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥**

**तमेवेति ।** तमेवेश्वरं शरणमाश्रयं संसारार्तिहरणार्थं गच्छाऽऽश्रय सर्वभावेन सर्वात्मना हे भारत ! भरतान्वय ! ततः तत्प्रसादादीश्वरानुग्रहात्परां प्रकृष्टां शान्तिमुपरतिं स्थानं च मम विष्णोः परमं पदं प्राप्स्यसि शाश्वतं नित्यम् ॥६२॥

---

अस्मिन्नन्वये तु केन साधनेनेश्वरस्सर्वभूतानि भ्रामयतीत्याकांक्षा पूरिता- माययेत्युक्तत्वात् । कथं भ्रामयतीत्याशङ्का तु न पूरिता । श्रीशङ्करोक्तान्वये तु कथमित्याशङ्का पूरिता- यन्त्रारूढानि माययेवेत्युक्तत्वात् । नच भाष्यकृदन्वयेऽपि करणाकांक्षापूर्त्यभावो न्यूनतावह एवेति वाच्यं, मायाया ईश्वरशक्तित्वात् । ईश्वरो भूतानि भ्रामयतीत्यनेनैवाऽग्निः काष्ठानि दहतीतिवच्छक्त्या भ्रामयतीति सिद्धत्वादशक्तस्य भ्रामणासम्भवाच्च । नच यन्त्रारूढानीत्यस्य सर्वभूतपदाविशेषणीकरणे देहादिपञ्जराभिमानित्वं सर्वभूतानां न सिध्यतीति वाच्यं, अचेतनानां कार्यकरणसङ्घातानां प्रवर्तकत्वानुपपत्तेः । सर्वभूतशब्देन सचेतनान्येव कार्यकरणसङ्घातानि ग्रहीतव्यानि । तथा च सति सचेतनानि सर्वभूतानि नाम प्रमातृभिरहमित्यभिमन्यमानाः कार्यकरणसङ्घाता एव । ततश्च कार्यकरणसङ्घाताभिमानिनः प्रमातार एव सर्वभूतशब्दार्थ इति सिद्धमेव । तस्माद्यन्त्रारूढानीति विशेषणं व्यर्थमेव सर्वभूतानीत्यस्य । किं चाजो नित्यश्शाश्वतश्च प्रमाता भवन्तीति भूतानीति व्युत्पत्त्या भूतशब्दः कार्यवाची न प्रमातारमजमभिधातुं क्षमते । एवं च सति देहादिपञ्जरयन्त्रारूढानि तानि भूतानि कानीत्युक्ते किमुत्तरं श्रीविद्यारण्यस्वामिनाम् ? न किमपि । ततश्च सर्वभूतानीत्यस्य कार्यकरणसङ्घातास्सचेतना इत्येवार्थो न्याय्यः । अत एव प्राणिन इत्युक्तमाचार्यैः । एवं कार्यकरणसङ्घातानामेव भ्रामणकथनेन जीवस्य वस्तुतस्तदभाव इति च प्रतीयत इति महान्गुणः । तस्माच्छाङ्करमेव भाष्यं शङ्करम् । वस्तुतस्तु कुशलो यन्त्रारूढानि माययेव- ईश्वरस्सर्वभूतानि मायया भ्रामयन्सन् सर्वभूतानां हृद्देशे तिष्ठतीति माययेतिपदमावर्त्य अन्वेतव्यम् । तथा सति करणाकांक्षापूर्तिरपि भवति । न च इवशब्दाध्याहारः कुशलशब्दाध्याहारश्च दुष्ट इति वाच्यं, सति गुणेऽध्याहारस्यादोषात् । अन्यथा एकवाक्यत्वे यन्त्रारूढानीतिपदवैयर्थ्यप्रसङ्गादिति संक्षेपः ॥६१॥

**तमेवेति ।** यदि प्रकृतिर्मां नियोक्ष्यति, यदि चेश्वरो भ्रामयति तर्हि प्रकृतीश्वरद्वयपरतन्त्रस्य मम का गतिरत आह—**तमेवेति ।** हे भारत ! त्वं सर्वभावेन तमेव शरणं गच्छ, तत्प्रसादात्परां शान्तिं शाश्वतं स्थानं च प्राप्स्यसि । शरणशब्दार्थमाह—**आश्रयमिति ।** शरणं गच्छेति पदद्वयार्थमाह—**आश्रयेति ।** किमर्थमाश्रयणमत आह—**संसारार्तिहरणार्थमिति, सर्वात्मनेति ।** वाचा मनसा बुद्ध्या चेत्यर्थः । यदीश्वराद्भिन्नोऽहमिति मन्यसे तर्हि संसारमेव प्राप्नोषि देहेन्द्रियादिसङ्घाततादात्म्याध्यासप्रयुक्तसुखदुःखजन्ममरणादिलक्षणः । तस्मात्क्षत्रियोऽयं युवेत्याद्यभिमानं त्यक्त्वा ईश्वर एवाहमिति सर्वभावेन प्रत्यगभिन्नं परमात्मानमाश्रयस्व । किमस्मादीश्वराश्रयणात्फलमत

आह—तत्प्रसादादिति । एवं सर्वभावेनाश्रितस्य तस्येश्वरस्यानुग्रहाच्चित्तशुद्धिज्ञानप्राप्त्यादिलक्षणात्, शान्तिं संसारोपरमं शाश्वतं स्थानं परं पदं प्रत्यगभिन्नपरमात्मस्वरूपं सच्चिदानन्दलक्षणं प्राप्स्यसि साक्षात्करिष्यसीत्यर्थः । ब्रह्मैव भविष्यसीति यावत् । तस्मादहं ब्रह्मेतीश्वराश्रयणात्सर्वसंसारनिवृत्तिपूर्वकं ब्रह्मात्मसाक्षात्कारः फलमित्यर्थः । यद्वाऽहं ब्रह्मेतीश्वराश्रयणाज्जीवन्मुक्तिलक्षणस्संसारोपरमः, विदेहमुक्तिलक्षणा ब्रह्मप्राप्तिश्च फलमित्यर्थः ।

ननु प्रकृतिस्त्वां नियोक्ष्यति, ईश्वरस्त्वां प्रेरयति, मदुक्तं न श्रोष्यसिचेद्विनंक्ष्यसि, तस्माद्युद्धं कुर्विति पूर्वमुक्त्वा कथमधुना परमेश्वरसमाश्रयणं विधीयते ? ज्ञाननिष्ठालक्षणं कर्मनिष्ठाविरोधीति चेन्नैष दोषः—मदुक्तविधयेश्वराराधनबुद्ध्या युद्धं कृत्वा पश्चात्संसारनाशार्थमीश्वरं शरणं गच्छेत्युक्तत्वात् । कर्मनिष्ठा हि ज्ञाननिष्ठायास्साधनभूता । न चैवं साध्यसाधकयोर्ज्ञानकर्मणोः कथं विरोध इति वाच्यं, काष्ठद्वयनिर्मथनसाध्यस्याग्नेः काष्ठद्वयदाहदर्शनात् । कर्मभिरुत्पन्नमपि ज्ञानं कर्मनिर्मूलकमेवेति कर्मविरोध्येव । यद्वा प्रकृतीश्वरपारतन्त्र्याद्युद्धे प्रवृत्तोऽपि त्वं तमेवेश्वरं सर्वभावेन शरणं गच्छ; ईश्वरेण क्षत्रियस्य विजितव्यमिति शासितत्वान्मया युद्धं क्रियते तदाराधनार्थं; न तु पृथिवीस्वर्गजयाद्यैहिकामुष्मिकफलार्थमिति वाचा मनसा बुद्ध्या चावधारयेत्यर्थः । एवं सर्वभावेनेश्वरमाश्रित्य तदाराधनात्मके स्वकर्मणि युद्धे त्वाया कृते सति तु तस्येश्वरस्य त्वयि महान्प्रसादो भविष्यति । ततश्च चित्तशुद्धिं सम्यग्दर्शनं च प्राप्य संसारोपरतिं मोक्षं च प्राप्स्यसीति कर्ममार्गप्रतिपादनपर एवायं श्लोकः ।

एतेन नाधुनैव तव ज्ञाननिष्ठाप्राप्तियोग्यताऽस्ति; तस्मान्न त्वं ज्ञाननिष्ठां प्रविश; किंतु युद्धमधुना यथोक्तरीत्या विधाय तेन ज्ञाननिष्ठाप्राप्तियोग्यो भूत्वा ज्ञाननिष्ठां प्रविशेत्यर्जुनाय श्रीकृष्णोपदेश इति सूचितम् । अत एव 'नियतं कुरु कर्म त्वं, तस्माद्युध्यस्व भारत !' इत्यादिवाक्यानि पूर्वाध्याये सूक्तानि । अथ वा भवत्वर्जुनस्य ज्ञाननिष्ठाप्राप्तियोग्यता विनापि युद्धानुष्ठानं तस्येश्वरांशत्वात्तथापि लोकसंग्रहार्थमप्यर्जुनेन कर्मैवादौ कर्तव्यं ज्ञानहेतुत्वात्कर्मण इत्यभिप्रेत्येत्थमुक्तं भगवता- 'लोकसंग्रहमेवापि सम्पश्यन् कर्तुमर्ह'सीति पूर्वमुक्तत्वात । तस्मान्नार्जुने ज्ञाननिष्ठानर्हत्वशङ्का कार्येति ।

यत्तु रामानुजः—विष्णोः परं स्थानं वैकुण्ठाख्यं प्राप्स्यसि- 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, ते ह नाकं महिमानस्सचन्ते, यत्र पूर्वे साध्यास्सन्ति देवाः, यत्र ऋषयः प्रथमजा ये पुराणा' इत्यादिश्रुतिभ्य इति, तदयुक्तम्—सगुणब्रह्मविद्याफलत्वाद्वैकुण्ठलोकप्राप्तेः । वैकुण्ठलोको हि द्विविधः-- एकस्सुमेरुशिखरस्थश्शुभ्रपत्न्यां विकुण्ठायां जातेन वैकुण्ठेन भगवता रमायाः प्रियकाम्यया निर्मितः । अन्यस्तु ब्रह्माण्डात्परतस्सत्यलोके स्थितः । तत्र सालग्रामार्चनादिभिर्मेरुशिखरस्थवैकुण्ठलोकप्राप्तिः । सगुणब्रह्मोपासनेन तु सत्यलोकस्थवैकुण्ठप्राप्तिः । अयं च सत्यलोकस्त्रेधा विभिन्नः- सत्यलोक इति, वैकुण्ठलोक इति, कैलासलोक इति च । तत्र हिरण्यगर्भस्सत्यलोकस्य स्वामी; विष्णुर्वैकुण्ठलोकस्य; शम्भुः कैलासलोकस्य । त्रयोऽप्यमी देहधारित्वाज्जीवा एव । परं तु सर्वज्ञा रजस्सत्त्वतमो-

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

इतीति । इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्याद्गोप्याद्गुह्यतरमतिशयेन गुह्यं रहस्यमित्यर्थः । मया सर्वज्ञेनेश्वरेण । विमृश्य विमर्शनमालोचनं कृत्वा एतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥६३॥

---

गुणवशात्सृष्टिस्थितिलयहेतवः, ईश्वरत्वेन पूज्याः, प्रथमजास्त्रिमूर्तिव्यपदेश्या देवताः । अमीषां स्थानान्येव सगुणमुक्तिक्षेत्राणीत्युच्यन्त इति केचित् । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसी'-दिति श्रुतेर्हिरण्यगर्भ एव प्रथमजः । स एव सत्यलोकस्वामी; तस्यैव स्थानं सगुणमुक्तिक्षेत्रं सगुणमुक्तिक्षेत्राणामनेकेषां सत्त्वे प्रमाणाभावादिति परे । सर्वथापि सगुणमुक्तिक्षेत्रसत्त्वमविद्याभूमावेव; नतु विद्याभूमौ । अविद्याविषयत्वात्सर्वद्वैतस्य । नेह नानास्तीत्यादिना विद्यायां हि सर्वद्वैताभावश्श्रूयते । न ह्यविद्याविषयं सगुणमुक्तिक्षेत्रं तत्त्वविदा गम्यते- तत्त्वविद्दृष्ट्या तत्क्षेत्रस्यैवाभावात् । अत एव न सगुणमुक्तिक्षेत्रस्य शाश्वतत्वं- ब्रह्मातिरिक्तस्य सर्वस्याप्यशाश्वतत्वात् । 'अजो नित्यश्शाश्वत' इति परमात्मन एकस्यैव हि शाश्वतत्वमुच्यते । तस्माच्छाश्वतं स्थानं परमात्मैव न वैकुण्ठादिकम् । स्वाधारवाचिनः स्थानशब्दस्य कथं स्वरूपपरत्वमिति वाच्यं, सर्वजगत्कल्पनाधिष्ठानत्वेन सर्वाधारस्य ब्रह्मस्वरूपस्य स्थानशब्दवाच्यत्वसम्भवात् । तिष्ठत्यस्मिन् सर्वं जगदिति स्थानमिति निरुक्तेः । तस्माच्छाश्वतं स्थानं ब्रह्मैव, न वैकुण्ठादिकम् । इदमेव ब्रह्म 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इत्यनेनोच्यते- विद्वद्भिर्नित्यमनुभूयमानत्वाद्ब्रह्मस्वरूपस्य । न हि वैकुण्ठं चक्षुरगोचरं विद्वांसो भूलोकादिस्था द्रष्टुमर्हन्ति । 'यत्र पूर्वे साध्यास्सन्ति देवा' इत्यादिश्रुतयस्तु सगुणमुक्तिक्षेत्रप्रतिपादिका एव । सूरयोऽनन्तगरुडादिनित्यसूरयो वैकुण्ठं पश्यन्तीति वर्णनेऽपि नैतावता निर्गुणमुक्तिक्षेत्राभावः । नापि सगुणमुक्तिक्षेत्रस्य शाश्वतत्वमिति संक्षेपः ॥६२॥

इतीति । इति गुह्याद्गुह्यतरं ज्ञानं ते मयाऽऽख्यातम् । एतदशेषेण विमृश्य यथेच्छसि तथा कुरु । इतिशब्दः पूर्वोक्तसर्वशास्त्रार्थपरामर्शीत्याह—एतदिति । अत एव परिसमाप्तिद्योतकमपीतीदमत्रत्यं भवति । अतिशयेन गुह्यं गुह्यतरं गुह्याद्गुह्यतरं गुह्यतममित्यर्थः । 'आयुर्वित्तं गृहच्छिद्रं मन्त्रौषधसमागमाः । दानं मानावमानौ च नव गोप्या मनीषिभि'रिति वचनादायुरादयो गोप्याः । तदपेक्षयापीदमध्यात्मज्ञानमतीव गोप्यमिति भावः । ननु त्वयोक्तमपीदमप्रमाणमेवेत्यत आह—सर्वज्ञेनेश्वरेणेति । सर्वज्ञेश्वरोक्तत्वादिदं शास्त्रं परं प्रमाणमित्यर्थः । विमृश्यालोच्येत्यर्थः । यथेच्छसि तथा कुर्वित्यभ्यनुज्ञामात्रेण न युद्धादुपरतिरर्जुनेन कार्या । किंतु यथाशास्त्रं कुर्वित्येव श्रीकृष्णाशयायुद्धमेव कार्यम् । अत एव विमृश्य कुर्वित्युक्तम् । विमृष्टे च शास्त्रे युद्धकरणेच्छैव जायेतार्जुनस्य न तूपरमेच्छा- स्वधर्मः कार्य इति बहुश उद्घुष्टत्वात् । तस्माद्यथाशास्त्रं यथेच्छं कुरु ॥६३॥

तथा भूयोऽपि मयोच्यमानं शृणु—

सर्वगुह्यतमं भूयश्शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥

सर्वेति । सर्वगुह्यतमं सर्वेभ्यो गुह्येभ्योऽत्यन्तरहस्यमुक्तमप्यसकृद्भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यम् । न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि । किं तर्हि ? इष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते तव हितं परमं ज्ञानप्राप्तिसाधनं; तद्धि सर्वहितानां हिततमम् ॥६४॥

किं तदित्याह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥

मन्मना इति । मन्मना भव; मच्चित्तो भव; मद्भक्तो भव; मद्भजनो भव; मद्याजी मद्यजनशीलो भव; मां नमस्कुरु नमस्कारमपि ममैव कुरु । तत्रैवं वर्तमानो वासुदेव एव

---

सर्वेति । भूयः सर्वगुह्यतमं परमं मे वचश्शृणु । त्वं मे दृढमिष्टोऽसीति कृत्वेति शेषः । ततस्ते हितं वक्ष्यामि । विस्तरेणोक्तार्थस्य बुद्धिसौकर्याय संग्रहेण वचनं न्याय्यमिति संग्रहेणोक्तस्यापि भङ्ग्यन्तरेण बुद्धिसौकर्याय पुनर्वचनं न्याय्यमिति वा हेतोरसकृदुक्तस्याप्यर्थस्य पुनर्वचनम् । ननु किमर्थं त्वं वक्ष्यसि पुनः पुनः ? किं राज्ञे भृत्य इव भयात् ? किमुपाध्याय इव शिष्यायेव धनार्थमिति शङ्कायामाह—न भयादित्यादि । तर्हि किमर्थं वक्ष्यसीति पृच्छसि—किं तर्हीति । उत्तरयति—इष्ट इति, अव्यभिचारेणेति । त्वयि मम प्रीतिः कदाचिदपि न व्यभिचरतीत्यर्थः । प्रौव्येणेति यावत् । कृत्वेति । मत्वेत्यर्थः । गम्यमानार्थत्वात्कृत्वेत्यस्याप्रयोगः । तेन कारणेनेति । तव मत्प्रियत्वेन हेतुनेत्यर्थः । कुतस्तद्वचनस्य हितत्वमत आह—विज्ञानप्राप्तिसाधनमिति । विज्ञानमहं ब्रह्मास्मीति सम्यग्ज्ञानं तद्धि मोक्षकारणम् । अत एव तद्धिततममित्याह—तद्धीति । तद्विज्ञानप्राप्तिसाधनं वचनमित्यर्थः । विज्ञानमिति वा । सर्वहितानामिति । धर्मादिपुरुषार्थहेतूनां सर्वेषां हितानां मध्य इत्यर्थः । हिततममतिशयेन हितं मोक्षस्य परमपुरुषार्थत्वात्तत्साधनस्य हिततमत्वमिति भावः ॥६४॥

मन्मना इति । किं तदिति । तद्वचनमित्यर्थः । त्वं मन्मना भव; मद्भक्तो भव; मद्याजी भव; मां नमस्कुरु; मामेवैष्यसि । ते सत्यं प्रतिजाने । यतो मे प्रियोऽसि । मच्छब्दानामत्र प्रत्यगभिन्नः परमात्मार्थः । मयि मनो यस्य स मन्मना भव । मामेव चिन्तयेत्यर्थः । मद्भक्तो भव मामेव भजस्व । मद्याजी भव मामेव यजस्व । मां नमस्कुरु नमस्कारः प्रह्वीभावः । आत्मन्यान्तरे हस्तादिकरणकबाह्यनमस्कारायोगेऽपि मानसिकनमस्कारो युज्यत एवेति बोध्यम् । ममैवेत्येवकारात्तु बाह्यप्रतिमादीनामिति गम्यते । तत्रेत्यस्यार्थमाह—एवं वर्तमान इति । कथं वर्तमान इत्यत आह—

समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यस्यागमिष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोम्येतस्मिन्वस्तुनीत्यर्थः । यतः प्रियोऽसि मे, एवं मम भगवतस्सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभाविमोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्य, अथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं वक्तव्यमित्याह—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥

सर्वेति । सर्वधर्मान्- सर्वे च ते धर्माश्च सर्वधर्मास्तान्- धर्मशब्देनात्राऽधर्मोऽपि

---

वासुदेव इति । वासुदेवे मय्येव समर्पितानि साध्या भजनयजनादिक्रियाः, साधनानि वाङ्मनआदीनि करणानि, प्रयोजनानि फलानि स्वर्गादीनि । एतानि साध्यसाधनप्रयोजनानि येन स वासुदेव एव समर्पितसाध्यसाधनप्रयोजनः । त्वं मामेवागमिष्यसि प्राप्स्यसि- मत्सायुज्यं प्राप्स्यसीत्यर्थः । सम्यग्ज्ञानोदयद्वारेति भावः । सत्यमिति । मदुक्तमिदं सर्वं सत्यमिति ते प्रतिजाने । सत्यं यथा तथा प्रतिजान इति वा । फलितमाह—सत्यां प्रतिज्ञां करोमीति । क्व प्रतिज्ञां करोषीत्यत आह—एतस्मिन् वस्तुनीति । यथोक्तार्थ इत्यर्थः । मन्मनस्कत्वादिभिस्साधनैस्त्वं मामेवैष्यसीत्ययमर्थस्सत्य इति प्रतिज्ञां करोम्यहमिति नात्र त्वयाऽविश्वासः कार्य इति भावः । कुत एवं प्रतिजानासीत्यत आह—यतो मे प्रियोऽसीति । तव मत्प्रियत्वेन त्वद्धिताकांक्षिणा मया तव श्रेयोऽर्थं सत्यप्रतिज्ञा क्रियत इत्यर्थः । योऽर्थो यथा मया प्रतिज्ञायते सोऽर्थस्तथैव भवितुमर्हति, न त्वन्यथा । यस्मादहं सत्यप्रतिज्ञः- 'सत्यकामस्सत्यसङ्कल्प' इति श्रुतेरिति भावः । इदमेवाह—एवमिति, भगवद्भक्तेरिति । भगवदाराधनबुद्ध्या स्वकर्मानुष्ठानस्येत्यर्थः । अवश्यंभावीति । ज्ञानप्राप्त्यादिक्रमेणेति भावः । भगवच्छरणैकपरायण इति । भगवानेव शरणमाश्रयो भगवच्छरणं तदेवैकं मुख्यं परमयनं प्राप्यं यस्य स तथोक्तः । भगवानेव शरणमेकपरायणं च यस्येति वा । भगवदाश्रयो भगवत्परायणश्च भवेत्यर्थः । साध्यसाधनप्रयोजनानीश्वरे समर्प्य, ईश्वराराधनबुद्ध्या कर्तव्यं कर्म केवलमिति मत्वा बुद्ध्याख्यं स्वधर्ममनुतिष्ठ । ततः क्रमेण तव परमपदप्राप्तिर्भविष्यतीति परमार्थः । अस्मिन् शास्त्रे कर्मयोगो ज्ञानयोगश्चेति मार्गद्वयं परिनिष्ठितं 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मित्युपक्रम्य तत्तत्राभ्यस्तमुपसंहर्तव्यं चेह तदेव । भक्तिध्यानयोगादयस्तु मार्गद्वयान्तर्भूता एव । तत्र कर्मयोगोपसंहारपरोऽयं श्लोकः । वक्ष्यमाणस्तु ज्ञानयोगोपसंहारपर इति बोध्यम् ॥६५॥

सर्वेति । ईश्वरशरणतामिति । ईश्वराराधनबुद्ध्या सर्वं क्रियाकारकफलजातमीश्वरे समर्प्य कर्मानुष्ठानरूपामिति भावः । सम्यग्दर्शनमिति । ज्ञानयोगनिष्ठेत्यर्थः । सर्वेति । सर्वेषां वेदान्तानामुपनिषदां साराणि सारभूतानि वाक्यानि तैर्विहितं सर्ववेदान्तसारत्वेन गीताशास्त्रेण विहित-

गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् । 'नाविरतो दुश्चरितात्', 'त्यज धर्ममधर्मं' चेत्यादि-

---

मिति वा । सर्ववेदान्तसारभूतमित्यर्थः । वक्तव्यमिति । उपसंहारप्रकरणे इति भावः । इति मत्वेति शेषः । आह भगवान्-- 'सर्वधर्मा'निति श्लोकम् । अयं हि सर्वस्य गीताशास्त्रस्य चरमश्श्लोकः । 'अशोच्यानन्वशोचस्त्व'मिति तु प्रथमश्श्लोकः । त्वं सर्वधर्मान्परित्यज्य एकं मां शरणं व्रज, अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि त्वं मा शुचः ।

ननु ज्ञानकर्मयोगयोर्युगपदेकेनानुष्ठातुमशक्यत्वात्कथमर्जुनं प्रति योगद्वयविधानमिति चेन्नैष दोषः—अर्जुनं निमित्तीकृत्य लोकत्रयोपकारार्थं हि गीताशास्त्रं प्रवर्तितं कृष्णेन । तथाच वचनं साम्प्रदायिकानाम्-- 'सारथ्यमर्जुनस्याजौ कुर्वन् गीतामृतं ददौ । लोकत्रयोपकाराय तस्मै कृष्णात्मने नम' इति । तथाच कर्मनिष्ठायोग्यानुद्दिश्य कर्मनिष्ठोक्ता पूर्वश्लोकेन । ज्ञाननिष्ठायोग्यानुद्दिश्य तु ज्ञाननिष्ठोच्यतेऽनेनेति । यद्वा एकेन युगपद्योगद्वयमनुष्ठातुमशक्यमपि कर्मयोगानन्तरं ज्ञानयोगोऽनुष्ठातुं शक्यत एवेत्यर्जुनायापि मार्गद्वयोपदेशो युक्त एव । प्रथमतः कर्मयोगं कुरु, ततश्चित्ते शुद्धे सति ज्ञानयोगं कुर्विति । अत एव प्रथमतः कर्मयोग एवोपसंहृतः, नतु ज्ञानयोग इति ।

सर्वधर्मानिति । कार्यनियोगापूर्वापरपर्यायो यज्ञादिजन्यस्सुकृतात्मकस्संस्कारो धर्मः । तद्धेतुत्वात् यज्ञादिकर्माण्यपि धर्मा एव । अविहितकर्मजन्यं दुष्कृतमधर्मः । तद्धेतूनि दुष्टकर्माण्यप्यधर्मा एव । सर्वधर्मान् परित्यज्येत्यनेन सर्वाधर्मकरणे प्राप्ते तस्य च नरकहेतुत्वेन दुष्टत्वादिह मोक्षशास्त्रे तादृशविपरीतार्थकथनस्यायुक्तत्वादाह—अधर्मोऽपीति । धर्मशब्दोऽत्राधर्ममप्युपलक्षयतीत्यर्थः । येनास्तिकेन मुमुक्षुणा विदुषा सर्वे धर्माः परित्याज्याः किंपुनस्तेनाधर्मः परित्याज्य इति वक्तव्यमित्यर्थापत्तिसिद्धस्सर्वाधर्मपरित्याग इति वा भावः । धर्मशब्दोऽत्र लक्षणया कर्ममात्रं बोधयति, ततश्च विहितप्रतिषिद्धधर्माधर्मलाभ इति वा । धर्मशब्दोऽभिधया विहितकर्मबोधकस्सन् लक्षणया स्वप्रतियोगिनमधर्ममपि बोधयतीति वा । धर्मानिति बहुवचनेनैव सर्वधर्मार्थसिद्धौ सर्वशब्दानर्थक्यप्रसङ्गात्सर्वशब्दबलेनाधर्मसिद्धिरिति वा ।

वस्तुतस्त्वास्तिकस्य वैदिकस्य कर्मिणोऽधर्मपरित्यागो धर्मस्वीकारश्च पूर्वतन्त्रेणैव विहितः । अनेन तूत्तरतन्त्रेण तस्यैव मुमुक्षोश्शमदमादिसाधनसम्पन्नस्य ब्रह्मविचाराधिकारिणः पूर्वतन्त्रप्राप्तसर्वधर्मपरित्याग एव विधेयः । अधर्मपरित्यागस्य पूर्वतन्त्रेणैव कृतत्वात् । अत एव भगवता बादरायणेन-- 'सर्वधर्मान्परित्यज्ये'त्युक्तं; अन्यथा धर्माधर्मान् परित्यज्येत्येवोच्येत । सर्वधर्मान्परित्यज्येत्यनेन मन्दमतीनामधर्मकरणं प्राप्तमिति बुद्धिस्स्यादिति तद्वारणाय धर्मशब्देनात्राऽधर्मोऽपि गृह्यत इति भाष्यकारैरुक्तमिति बोध्यम् । सर्वधर्मा नित्यनैमित्तिककाम्यरूपाः । अधर्मस्तु हिंसादिरूपः । ननु सर्वधर्मपरित्यागस्यैव व्यासेन कण्ठत उक्तत्वात्कथं त्वयाऽधर्मोऽपि परित्याज्य इत्युच्यतेऽत आह— नैष्कर्म्यस्येति । नैष्कर्म्यं सर्वकर्मसन्न्यासः । न हि धर्मान् परित्यज्याऽधर्मे क्रियमाणे सति पुरुषो निष्कर्मा स्यात् । ननु नैष्कर्म्यं विवक्षितं सर्वधर्मान् परित्यज्येतिवाक्येन व्यासेनेति कथं व्यासहृदयं

श्रुतिस्मृतिभ्यः सर्वधर्मान् परित्यज्य सन्न्यस्य सर्वकर्माणीत्येतत् । मामेकं सर्वात्मानं समं सर्वभूतस्थितमीश्वरमच्युतं गर्भजन्मजरामरणवर्जितं 'अहमेव' इत्येवमेकं शरणं व्रज; न मत्तोऽ-

न्यथा ज्ञायतेऽत्र आह—नाविरत इति । 'नाविरतो दुश्चरितान्नाशान्तो नासमाहित' इत्यत्र दुश्चरिता-द्धर्मान्नाविरतो विरत उपरतो न भवतीत्यविरतः स न भवतीति नाविरतोऽस्यन्तं विरत इत्यर्थः । इत्यधर्मत्यागस्य विहितत्वात् ।· तथा 'त्यज धर्ममधर्मं च, उभे सत्यानृते त्यज' इत्यत्राप्यधर्मं त्यजे-त्यधर्मत्यागस्य विहितत्वात्, श्रुतिस्मृतिविरुद्धमर्थं कथं व्यासो ब्रूयान्न कथमपीति भावः ।

अथ सर्वधर्मान् परित्यज्येत्यस्य फलितार्थमाह—सन्न्यस्य सर्वकर्माणीति । सर्वकर्मसन्न्यासं कृत्वेत्यर्थः । अन्यथा वक्ष्यमाणेश्वरशरणागतिरूपज्ञाननिष्ठाऽसम्भवादिति भावः । नहि कर्म कुर्वाणस्य क्रियाकारकादिद्वैतदर्शिनोऽज्ञस्य ज्ञाननिष्ठा ब्रह्माहमद्वितीयमस्मीत्येवंरूपा भवितुमर्हति । अत्र उक्तम्--सर्वधर्मान्परित्यज्येति । अत एव भाष्यकृद्भिस्तस्मात्सर्वकर्मसन्न्यासेनैव ज्ञाननिष्ठा कार्येति सिद्ध-मित्युक्तं भक्त्या मामभिजानातीतिश्लोकभाष्यान्ते । तस्माद्ज्ञाननिष्ठाया अन्तरङ्गसाधनं सर्वकर्म-सन्न्यासः । अत एव 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मित्युक्तं भगवताऽऽदावेव । साङ्ख्या विद्वांसः सर्वकर्मसन्न्यासिन इति प्रपञ्चितं बहुधा प्राक्- 'कथं स पुरुषः पार्थ! कं घातयति हन्ति कम्?, सर्वकर्माणि सन्न्यस्य, नैव कुर्वन्न कारयन्, सर्वारम्भपरित्या'गीत्यादिभिर्ज्ञानिनां कर्माभावस्योक्तत्वात् । एतदिति । यावदित्यर्थः ।

मामित्यस्यार्थमाह—ईश्वरमिति । ननु मामित्यस्यैकमितिविशेषणं विरुद्धं, ईश्वरस्य ब्रह्म-विष्ण्वादिभेदेनानेकत्वादत आह—सर्वात्मानमिति । सर्वस्यापि ब्रह्मादिस्तम्बपर्यन्तस्य ब्रह्मविष्णु-रुद्रगणपतिकुमारलक्ष्मीसरस्वतीप्रमुखस्य च कार्यकरणसङ्घातात्मकस्य सचेतनस्य, अचेतनानां च मृत्पाषाणलोहादीनां पृथिव्यादिभूतानां शब्दादीनां च किं बहुना समूर्तस्यामूर्तस्य च सर्वस्य जगतो स्वस्यात्मानमात्मभूतमत एव समं निर्विशेषम् । कुतोऽस्य सर्वात्मत्वमत आह—सर्वभूतस्थ-मिति । सर्वेषु भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु विष्णुरुद्रादिषु चोक्तेषु प्राणिषु; अचेतनेषु च पृथिव्यादि-भूतेषु भौतिकेषु चाचेतनेषु, किं बहुना सर्वेष्वपि चेतनाचेतनात्मकेषु कार्येषु तिष्ठतीति सर्वभूतस्थः तम् । सर्वव्यापित्वादिति भावः । भवन्तीति भूतानीति व्युत्पत्त्या कार्यवाचित्वाद्भूतशब्दस्य । कार्ये कारणसत्त्वं कार्यस्य कारणात्मकत्वं च मृद्घटादिषु दृष्टमिति परमकारणस्य परमात्मनस्सर्वभूतस्थत्वं सर्वभूतात्मत्वं चोपपद्यते- सर्वभूतानामीश्वरकार्यत्वेनेश्वरात्मकत्वात् । 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिरीश्वरस्य कारणत्वं, 'न चास्य कश्चिज्जनि'तेत्यादिश्रुतिरीश्वरस्याकार्यत्वं च ब्रूत इति परम-कारणं हीश्वरः । तस्माद्घटादिस्वकार्याणां यथा मृत्तिकैवात्मा घटादिषु चास्ति, तथा स्वकार्याणां सर्वभूतानामीश्वर एवात्मा । स च सर्वभूतेष्वस्तीत्यत उक्तं- सर्वात्मानं सर्वभूतस्थमिति ।

ननु मृद्घटयोर्जाड्यादिसलक्षणत्वाद्घटानामात्मा भवितुमर्हति मृत्तिका । मृद्रूपो हि घटो दृश्यते; आत्मा हि नाम स्वरूपं, घटस्य च मृदेव स्वरूपं- मृदतिरिक्तघटपदार्थाभावात् । नैवमीश्वर-

न्यदस्तीत्यवधारयेत्यर्थः । अहं त्वा त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यस्सर्वधर्माधर्मबन्धन-

---

जगतोऽसालक्षण्यं येन जगत ईश्वर आत्मा स्यात् । ईश्वरो हि सत्यज्ञानानन्दरूपः; जगदनृतजडदुःख-
रूपम् । तस्माज्जगदात्मत्वमीश्वरस्य, ईश्वरात्मकत्वं वा जगतो नोपपद्यते । एवमीश्वरात्मकत्वाभावे
जगतो जगदीश्वरयोः कार्यकारणभावोऽपि नोपपद्यते । ततश्च सर्वभूतस्थत्वमपीश्वरस्य नोपपद्यत इति
चेत्, मैवम्—यतो वेत्यादिश्रुतिप्रामाण्याद्रज्जुसर्पादिदृष्टान्ताच्च, स्वप्नरथगजाद्यनुभवाच्च विवर्तवादा-
श्रयणेन ईश्वरविवर्तभूतस्य जगत ईश्वरात्मकत्वसम्भवात्कारणेश्वरधर्माणां सच्चिदानन्दानां जगत्यनुप-
दर्शनाज्जगदस्ति भाति प्रियं चेति व्यवहारात् । तस्माज्जगतस्स्वरूपं सच्चिदानन्द ईश्वर एव- यथा
सर्पस्य स्वरूपं रज्जुः । रज्जौ सर्पस्येव जगत ईश्वरे मायया कल्पितत्वादत एव रज्जुयाथात्म्यविदां
सर्पो यथा न प्रतिभाति ब्रह्मविदां जगत्तथा न प्रतिभाति- सच्चिदानन्दब्रह्मातिरिक्तजगत्पदार्थाभावा-
द्रज्ज्वतिरिक्तसर्पपदार्थाभाववत् । नचैवं विदुषां व्यवहारलोपप्रसङ्ग इति वाच्यं, यावद्देहपातमविद्या-
लेशतस्सत्त्वाद्द्वैतप्रतीतिसत्त्वेऽपि विदुषां तत्सर्वं ब्रह्मैवाभाति- 'वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ'
इत्युक्तम् । तस्मान्न व्यवहारलोपप्रसङ्गः- नापि ब्रह्मातिरिक्तजगत्पदार्थानुभवश्च विदुषामिति स एष
सर्वोऽर्थः पूर्वमेव विस्तरेणोक्त इतीहोपरम्यते ।

ईश्वरमिति । देहेन्द्रियादीशनशीलं चैतन्यरूपं परमात्मानमित्यर्थः । शरणं व्रजेति । का
शरणागतिरत आह—अहमेवेत्येवमिति । अहमेवेश्वर इत्येवमित्यर्थः । ननु मामेव शरणं व्रजे-
त्यनेनैवेष्टसिद्धौ किं फलमेकग्रहणेनेत्यत आह—नेति । ईश्वर एक एवास्ति, स एवाहमस्मि, मत
ईश्वरादन्यत्किमपि नास्तीत्यवधारय- निश्चयेन जानीहि; यद्वा मामेकं शरणं व्रजेत्यस्य फलितमाह—
नेति । ईश्वरोऽहमेक एवास्मि, नतु मत्तोऽन्यत्किमप्यस्तीत्यवधारयेत्यर्थः । 'तत्सत्यं, स आत्मा,
तत्त्वमसि, अतोऽन्यदार्त'मित्यादिश्रुतिभ्यः, मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय !', क्षेत्रज्ञं चापि
मां विद्धि', 'अहमात्मा गुडाकेश ! सर्वभूताशयस्स्थित' इत्यादिस्मृतिभ्यः, 'न वासुदेवात्परमस्ति
किञ्चित्, तस्मान्न विज्ञानमृतेस्ति किंचि'दित्यादिपुराणाच्च कारणातिरिक्तं कार्यं नास्ति- मृदतिरिक्त-
घटादर्शनात्, रज्ज्वतिरिक्तसर्पादर्शनात् । एवं परमकारणादीश्वरादतिरिक्तं कार्यं जगन्नास्ति, ईश्वरे
उपलभ्यमानौ नामाकारौ तु मिथ्याभूतावेव । मृद्युपलभ्यमानघटनामकम्बुग्रीवाकारयोर्मिथ्यात्वदर्शना-
दत एव 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रुतिरपि सङ्गच्छत इत्यानुमानाच्च ।
सुषुप्त्यादौ द्वैताभावस्य सर्वानुभवसिद्धत्वादनुभवितृभावे अनुभवासिद्धेश्च स्वात्मैक एवास्ति, नतु द्वैत-
मित्यनुभवाच्च नेश्वरादन्यदस्तीति भावः । यदुक्तं- 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति
तस्य फलमुच्यते—अहं त्वामित्युत्तरार्धेनाहंप्रत्ययगभिन्नः परमात्मा त्वामेवं पूर्वोक्तविधया ब्रह्मैवाह-
मस्मीति, न मत्तोऽन्यदस्तीति च निश्चिताऽवधारिता बुद्धिर्यस्य तं निश्चितबुद्धिं त्वां प्रमातारमित्यर्थः ।
तस्यैव देहादितादात्म्याध्यासप्रयुक्तसंसारान्मुमुक्षुत्वात्केवलात्मनो मोक्षेच्छाद्ययोगाच्चेति भावः । सर्व-
पापेभ्य इति । बन्धकत्वात्पापवत्पुण्यमपि पापमेव । अतः पापशब्दोऽत्र पुण्यपापोभयपर इत्यभिप्रे-
त्याह—सर्वधर्मेति । सर्वेभ्यो धर्माधर्मात्मकेभ्यो बन्धनरूपेभ्यो बन्धनमेव रूपं येषां तेभ्यस्सर्वपापेभ्यः,

रूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन । उक्तं च- 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति । अतो मा शुचश्शोकं माकार्षीरित्यर्थः ।

---

यद्वा बध्नन्तीति बन्धनानि धर्माधर्मा एव बन्धनानि धर्माधर्मबन्धनानि, सर्वाणि च तानि धर्माधर्मबन्धनानि च सर्वधर्माधर्मबन्धनानि, तद्रूपेभ्यो बन्धकेभ्यो धर्माधर्मरूपेभ्यो सर्वेभ्यः पापेभ्य इत्यर्थः । मोक्षयिष्यामि त्याजयिष्यामि- सर्वपापविनिर्मुक्तं करिष्यामीत्यर्थः । यदि धर्माः क्रियेरन् तर्हि पुण्यबन्धस्स्यात् ; यद्यधर्माः क्रियेरन् तर्हि पापबन्धस्स्यात् ; यदि विहितानि न क्रियेरन् तथापि पापबन्धस्स्यात्तस्मात्सर्वान्धर्मानधर्मांश्च परित्यज्य ईश्वरशरणागतौ कृतायां सत्यां पुण्यपापबन्धविनिर्मुक्तिर्भविष्यति मुमुक्षोः । ईश्वरशरणागतिरूपज्ञाननिष्ठाधिकृतस्य विहिताकरणजन्यदोषाभावाद्यथाविधि सर्वं कर्म सन्न्यस्य हि ज्ञाननिष्ठायामधिकरोति पुरुषः । तस्मात्सर्वधर्मपरित्यागेश्वरशरणागतिभ्यां सर्वपुण्यपापरूपबन्धविमुक्तिस्सुलभा मुमुक्षोरिति भावः । इदं च सर्वपापविनिर्मुक्तिरूपं मया दास्यमानं फलं तव न स्वर्गादिवद्देहपातानन्तरानुभवविषयं किं तर्हीहैवानुभूतते । सर्वपापविनिर्मुक्तपरिशुद्धसच्चिदानन्दस्वात्मसाक्षात्कारस्येहैव जायमानत्वादहंब्रह्मास्मीत्यात्मस्वरूपानुसन्धानवतः पुरुषस्य । तस्मात्स आत्मसाक्षात्कारस्तव यथा स्यात्तथाऽहं तव स्वात्मभावप्रकाशं कृत्वा तेन द्वारा त्वां सर्वपापेभ्यो मोक्षयिष्यामीत्याह—स्वात्मभावप्रकाशकरणेनेति । स्वस्य तवात्मभावो बुद्धिरूपः पदार्थस्तस्य प्रकाशस्सत्त्वोत्कर्षकृतं स्वच्छत्वं तस्य करणेन हेतुना । सत्त्वगुणात्प्रकाशमानया हि बुद्ध्या दृश्यते स्वात्मा- 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रितिश्रुतेः । स्वोक्तार्थे भगवदुक्तिं प्रमाणयति—उक्तं चेति, नाशयामीति । अहमज्ञानजं तम इति पूर्वमुक्तं तमो नाशयामीत्यर्थः । ज्ञानदीपेनेति । अहं ब्रह्मेत्याकारकबुद्धिवृत्तिरूपदीपेनेत्यर्थः । सर्वं कर्म सन्न्यस्य यो ज्ञाननिष्ठामभ्यस्यति तस्य बुद्धिस्सत्त्वगुणोत्कर्षादतीव प्रसन्ना एकाग्रा भूत्वाऽहंब्रह्मास्मीत्यखण्डचैतन्याकारेण परिणमते, तत आत्मसाक्षात्कारो जायते । साक्षात्कृते चात्मनि सर्वद्वैतोपमर्दात्क पुण्यपापसद्भावः ? क वा तत्कृतो बन्धः ? तस्मान्मुक्त एव त्वं भविष्यसि- नित्यशुद्धबुद्धमुक्तत्वादात्मस्वरूपस्येति भावः ।

एतेन सर्वधर्मपरित्यागपूर्वकेश्वरशरणागत्यास्स्वात्मभावप्रकाशकरणरूप ईश्वरानुग्रहः फलं; मोक्षस्तु नित्यसिद्धत्वान्नैव फलं; न हीतः प्रागात्माऽसङ्गः पुण्यपापबद्धो येनेदानीं मुच्येतेति सिद्धम् । स्वात्मभावप्रकाशकरणमित्यस्य स्वात्मनस्स्वस्य प्रतीचो यो भावस्सच्चिदानन्दस्वभावस्तत्त्वमिति यावत् । तस्य प्रकाशकरणं बोधनं तेनेत्यप्यर्थ आयाति । भावस्तु स एव । ईश्वरानुग्रहाद्बुद्धेरात्मैकाग्र्यं भवतीति पूर्वोक्तार्थस्यापीहैव तात्पर्यात् । ततश्च सर्वधर्मान् परित्यज्याहं ब्रह्मास्मीत्यनिशं चिन्तयतः पुरुषस्येश्वरानुग्रहादात्मसाक्षात्कारो जायत इति सिद्धम् । अयं चेश्वरानुग्रहो नाम अनवरतप्रत्यगात्माश्रयवशाद्बुद्धेः प्राप्तं यदात्मैकाग्र्यं तत्प्रत्यगात्मानुग्रहकृतमेवेत्यभिप्रायादुक्तः प्रत्यगात्मानुग्रह एव, न त्वन्यः- अद्वैतज्ञाने तदयोगात् ; प्रत्यगात्मातिरिक्तेश्वरपदार्थासत्त्वाच्च । अत इति । यस्मादहं सम्यग्दर्शनप्रदानद्वारा त्वामेवं ज्ञाननिष्ठं सर्वकर्मसन्न्यासिनं मोक्षयिष्यामि तस्मादित्यर्थः । मा शुच

अस्मिन्गीताशास्त्रे परं निश्श्रेयससाधनं निश्चितं किं ज्ञानं, किं कर्म वा, आहोस्विदुभयमिति, कुतस्संशयः ? 'यद्ज्ञात्वाऽमृतमश्नुते, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मित्यादीनि वाक्यानि केवलाद्ज्ञानान्निश्श्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते, कुरु

---

इति । मा खिद्यस्व । शोकमिति । कथमहमिमं संसारं तरिष्यामीत्येवंरूपमिति भावः । मा कार्षीरिति । तत्रात्मनोऽसंसारीश्वरत्वात्सर्वकर्मसन्न्यासपूर्वकात्मज्ञाननिष्ठया स्वात्मसाक्षात्कारसम्भवादिति भावः । न च कथमात्मज्ञाननिष्ठाकृतात्मसाक्षात्कारमात्रेण संसारोपरम इति वाच्यं, प्रमातुरस्यात्मतत्त्वसाक्षात्काराभावरूपाज्ञानादनात्मन्यात्मतादात्म्याध्यासमूलकस्संसारो य आसीत्कथं तस्यात्मतत्त्वसाक्षात्काररूपाद्ज्ञानादनिवृत्तिः ? किं रज्जुस्वरूपाज्ञानकृतसर्पाभासो रज्जुस्वरूपसाक्षात्कारादनिवृत्तो दृश्यते ? किं निर्धनदेवदत्तस्वरूपाज्ञानकृतो नैद्राकालिको महाराजात्मभ्रमः प्रबोधेऽपि देवदत्तस्य भवितुमर्हति ? किं देहातिरिक्तकर्तृभोक्त्रात्माज्ञानकृतो देहात्मभ्रमस्सत्यपि देहातिरिक्तकर्तृभोक्त्रात्मज्ञाने वैदिकस्यास्तिकस्य भवितुमर्हति नास्तिकबद्बालवच्च ? तस्मादसंसारीश्वरात्मस्वरूपसाक्षात्कारादेव संसारनिवृत्तिः, नान्यस्मादुपायाद्भवति । अत एव- 'तरति शोकमात्मवि'दितिश्रुतिरात्मज्ञानादेव शोकनिवृत्तिं ब्रूते । अत एव 'नान्यः पन्था विद्यतेऽयना'येत्यात्मज्ञानस्यैव मोक्षहेतुत्वमुक्तम् । मोक्षो हि संसारबन्धनिवृत्तिः । तस्मादीश्वरात्मज्ञानादेव मोक्ष इति स्थितमद्वैतम् ।

ननु ज्ञानादेव मोक्ष इति योऽंशस्त्वद्वैतिनोऽभिमतस्सोऽयं न सिध्यति । प्रकृतगीताशास्त्रे भगवताऽस्यांशस्य निष्कृष्यानुक्तत्वादिति शङ्कायां तमेवांशं स्थापयितुं विचारमारभते किमस्मिन्नित्यादिना सम्यग्दर्शनादत्यन्तोपरम इति सिद्धमित्यन्तेन ग्रन्थेन । अस्मिन्गीताशास्त्रे निश्चितं परं निश्श्रेयससाधनं किमित्यन्वयः । अस्मिन्गीताशास्त्रे मोक्षसाधनत्वेन निश्चितं वस्तु किमित्यर्थः । प्रश्नमेवामुं विकल्पयति— किं ज्ञानमित्यादिना । अस्मिन् शास्त्रे किं ज्ञानं परं निश्श्रेयससाधनमिति निश्चितं, यद्वा कर्म, अहोस्विदुभयं कर्मज्ञानद्वयमिति त्रेधा विकल्पः । एवं विकल्पनस्य संशयपूर्वकत्वात्संशयहेतुं पृच्छति— कुतस्संशय इति । क्वचिद्ज्ञानान्मोक्ष इति प्रतिपादनात्क्वचित्पुनः कर्मणा मोक्ष इति प्रतिपादनाच्च संशय इत्याह— यद्ज्ञात्वेति । इत्यादीनीत्यादिपदात्- 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत !', 'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति', 'क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षं च ये विदुर्यान्ति 'ते परं', 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह । सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते', 'ज्ञानवान्मां प्रपद्यते', 'ज्ञात्वा मां शान्तिमृच्छति', 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छ'तीत्यादीनि वाक्यानि ग्राह्याणि । तस्मात्त्वमित्यादीनीत्यादिपदात्तु- 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः, मत्कर्मकृन्मत्परमः, स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः, असक्तो ह्याचरन् कर्म परमाप्नोति पूरुष' इत्यादीनि ग्राह्याणि ।

नन्वेवं श्रेयस्साधनं किं ज्ञानमुत कर्मेति भवेत्संशयः । कथं पुनः किमुभयमिति संशयो भवे-

कर्मैव' इत्येवमादीनि कर्मणामवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः कर्तव्यत्वोपदेशात्समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवेत्संशयः कस्यचित् । किं पुनरत्र मीमांसाफलम् ? नन्वेतदेवैषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणं; अतो निस्तीर्णतमं मीमांस्यमेतत् ।

आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसानत्वात् । क्रियाकारकफलभेदबुद्धिरविद्ययाऽऽत्मनि नित्यप्रवृत्ता- 'मम कर्म, अहं कर्ता-

---

इत आह—एवमिति । ज्ञानकर्मणोरप्युभयोः कर्तव्यत्वोपदेशादुभयमपि श्रेयस्साधनमिति संशयः स्यादित्यर्थः । ननु भवतु संशयः किमत्र तद्विचारेण फलमिति पृच्छति—किं पुनरिति । उत्तरयति—नन्वेतदेवेति । नन्विति प्रष्टुस्सम्बोधनम् । वाक्यालङ्कारे वा । एतदेव फलं, किं तदत आह—एषामिति । एषां त्रयाणामन्यतमस्य परमनिश्श्रेयससाधनत्वावधारणमेव फलम् । विचारात्त्रयाणां मध्ये एकस्य मोक्षसाधनत्वं निश्चितं भवतीत्यर्थः । अत इति । अन्यतमस्य निश्श्रेयससाधनत्वधारणार्थमित्यर्थः । एतत्पूर्वोक्तांश इत्यर्थः । विकल्पत्रयात्मक इति भावः । मीमांस्यं विचार्यं कथं मीमांस्यमत आह—निस्तीर्णतममिति । अतिशयेन निस्तीर्णं निश्चितं यथा भवति तथा । सति तु संशये मुमुक्षोर्निश्चयाभावात्क्वाप्यप्रवृत्तिस्स्यादिति संशयनिरासाय विचार आवश्यक इति भावः ।

ननु किं निर्धारणेन ? त्रयाणामपि मोक्षसाधनत्वाद्यथाबुद्धि यथाशक्ति च पुरुषोऽन्यतममनुष्ठाय मोक्षं प्राप्स्यसीति चेन्नैवम्—ज्ञानस्यैकस्यैव मोक्षसाधनत्वात्कर्मणो मोक्षसाधनत्वासमुच्चयस्यासिद्धत्वाद्ज्ञानमेकमेव मोक्षसाधनमिति निर्धारणमावश्यकमेव । अनिर्धारिते ह्यस्मिन्नंशे कर्मापि मोक्षसाधनमिति मत्वा मुमुक्षुः कर्मणि प्रवर्त्य मोक्षपुरुषार्थाद्धीयेत । अथवा समुच्चयो मोक्षसाधनमिति मत्वा समुच्चयस्य दुष्करत्वादेकैकस्यामोक्षसाधनत्वाच्च क्वापि पुरुषो न प्रवर्तेत मोक्षार्थी । ततश्च पुरुषार्थभ्रंशस्स्यात् । तस्मादन्यतमस्य मोक्षसाधनत्वनिर्धारणाय, यद्वा ज्ञानस्यैकस्यैव मोक्षसाधनत्वनिर्धारणाय विचारोऽयमावश्यक एव । नहि मथनं विनाऽमृतवद्विचारं विना निश्चयार्थो लभ्यते । तस्मान्निस्तीर्णतमं मीमांस्यमेतत् ।

एवं विकल्पत्रयं प्रदर्श्य सिद्धान्तमाह—आत्मज्ञानस्य त्विति । केवलस्यात्मज्ञानस्य तु निश्श्रेयसहेतुत्वमस्तीति शेषः । तत्र हेतुमाह—भेदेति । भेदप्रत्ययाणां निवर्तकत्वेन हेतुना कैवल्यफलावसायित्वान्मोक्षपर्यवसायित्वात् । कर्मसमुच्चितत्ववारणयोक्तम्—केवलस्येति । तुशब्दस्य फलं स्वयमेव वक्ष्यति । आत्मज्ञानस्य भेदप्रत्ययनिवर्तकत्वमेवोपपादयति—क्रियेति । आत्मन्यविद्यया क्रियाकारकफलभेदबुद्धिर्नित्यप्रवर्ततेत्यन्वयः । नित्यमनादिकालादारभ्य प्रकर्षेण तया विस्तृता । कथं प्रवर्ततेत्यत आह—मम कर्मेति ।

ननु यद्यविद्ययैवात्मनि क्रियाकारकफलभेदबुद्धिर्वितता तर्ह्यविद्यायाः प्राक्सा भेदबुद्धिर्भवितुं नार्हति । ततश्चाविद्यायाः प्राक्कैवल्यमस्त्येवात्मनः, ततः पुनरविद्योदयानन्तरं भेदबुद्धिपूर्वकं संसारः

मुष्मै फलायेदं कर्म करिष्या'मीतीयमविद्याऽनादिकालप्रवृत्ता। अस्या अविद्याया निवर्तकं 'अयमहमस्मि केवलोऽकर्ताऽक्रियोऽफलः, न मत्तोऽन्योऽस्ति कश्चि'दित्येवंरूपमात्मविषयं ज्ञानमुत्पद्यमानं- कर्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्तकत्वात्। तुशब्दः पक्षव्यावृत्त्यर्थः। न केवलेभ्यः कर्मभ्यः, नच ज्ञानकर्मभ्यां समुच्चिताभ्यां निश्श्रेयसप्राप्तिरिति पक्षद्वयं निवर्तयति- अकार्यत्वाच्च निश्श्रेयसस्य कर्मसाधनत्वानुपपत्तिः। न हि नित्यं वस्तु कर्मणा

---

प्राप्त आत्मनः, यद्येवं तर्हि विद्यया मुक्तस्याप्यात्मनः पुनस्संसारो भविष्यत्येव। पूर्वमविद्यमानाया अविद्याया यथा आत्मन्युदयस्तथा नष्टाया अप्यविद्यायाः पुनरुदयसम्भवात्, उदयात्प्रागिव नाशादनन्तरमपि वस्तुनोऽविद्यमानत्वस्य तुल्यत्वादविद्यमानवस्तुन उत्पत्त्यङ्गीकारे नष्टवस्तुनोपि पुनरुत्पत्तेरवर्जनीयत्वात्। एवं च सति स्वर्गं गतस्येव मुक्तिं गतस्यापि पुनरावृत्तिप्रसङ्गः। तस्मान्नाविद्यया आत्मनि क्रियाकारकफलभेदबुद्धिर्विंतता, किंतु स्वत एवास्तीतिशङ्कायामाह—इयमिति। अनादिरियमविद्या, अनादिकालमारभ्य प्रवृत्तत्वात्। नह्यस्मिन्काले इयमविद्या प्रवृत्तेति ज्ञातुं शक्यते। तस्मात्कार्यभूतापीयमविद्या अनादिरेव। तस्मादविद्योदयात्प्रागिति वक्तुं न शक्यम्। नचैवं नष्टाया अविद्यायाः पुनरागतिरिति वाच्यं, नष्टस्य घटस्य दीपस्य वा पुनरुदयादर्शनात्। नच स्वत एव क्रियादिकमात्मन्यस्तीति वाच्यं, 'निष्कलं निष्क्रियं शान्त'मित्यादिश्रुतिविरोधात्। तस्मात्क्रियाकारकफलरूपो भेदस्तद्बुद्धिश्चात्मन्यविद्ययैव प्रतता, नतु स्वाभाविकी। किमस्या अविद्याया निवर्तकमत आह—अस्या अविद्याया इति। निवर्तकं ज्ञानमिति व्यवहितेन सम्बन्धः। किं विषयं ज्ञानमत आह—आत्मविषयमिति। किमाकारकं ज्ञानमत आह—अयमहमित्यादि। केवल एकः। अकर्ता कर्तृत्वरहितोऽक्रियो न विद्यन्ते क्रिया यस्मिन्स तथोक्तः। नायं क्रियाः करोति, नाप्यस्मिन् क्रियास्सन्तीत्यर्थः। अफलोऽभोक्तेत्यर्थः। एवंविधोऽयमात्माऽहमस्मीति, मत्तोऽन्यः कश्चिन्नास्तीति चैवंरूपं ज्ञानम्। इदं ज्ञानमविद्यां कदा निवर्तयतीत्यत आह—उत्पद्यमानमिति। कुतो निवर्तयतीत्यत आह—कर्मेति। कर्मप्रवृत्तौ हेतुभूताया भेदबुद्धेः क्रियाकारकफलभेदप्रत्ययस्य निवर्तकत्वाद्धेतोः। अविद्यानाशपूर्वको हि भेदबुद्धिनाशः- अविद्यापूर्वकत्वाद्भेदबुद्धेः। भेदबुद्धिरूपकार्यलिङ्गानुमेया ह्यविद्या। भेदबुद्धिरूपकार्याभावे केन लिङ्गेनानुमातुं शक्यते? न केनापीतिकृत्वा भेदबुद्धिनिवर्तकमिदमात्मज्ञानमविद्यानिवर्तकमेवेति भावः। तस्मादात्मज्ञानमेव समूलभेदप्रत्ययनिवर्तकत्वान्मोक्षसाधनम्। तुशब्दः पक्षव्यावृत्त्यर्थ इति वाक्यं स्वयमेव विवृणोति—नेति। केवलेभ्यः कर्मभ्यः, न्समुच्चिताभ्यां ज्ञानकर्मभ्यां वा निश्श्रेयसप्राप्तिर्नेति पक्षद्वयं निवर्तयति तुशब्दः। एवकारार्थकत्वादिति भावः। तस्मात्कर्मसमुच्चयो वा न मोक्षसाधनमिति सिद्धम्। भेदप्रत्ययपूर्वकत्वेन कर्मणस्समुच्चयस्य वा कैवल्यफलावसायित्वाभावादिति भावः। कर्मणो मोक्षसाधनत्वाभावे हेत्वन्तरमाह—अकार्यत्वाच्चेति। यदि स्वर्गादिवन्मोक्षोऽपि कार्यस्स्यात्तर्हि तस्य कर्म साधनं स्यात्; नतु तथा मोक्षः कार्यः। तस्मान्न तस्य कर्म साधनं भवति। साध्यस्य हि वस्तुनो यत्किञ्चित्साधनं स्यात्; न स्वसाध्यस्य।

ज्ञानेन वा क्रियते; केवलं ज्ञानमप्यनर्थकं तर्हि न, अविद्यानिवर्तकत्वे सति दृष्टकैवल्य-फलावसानत्वात् । अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वं, रज्ज्वादि-

---

तस्मादसाध्यस्य (अकार्यस्य) मोक्षस्य कर्मसाधनत्वमनुपपन्नम् । कर्म साधनं यस्य तत्कर्मसाधनं तद्भावः कर्मसाधनत्वं तस्यानुपपत्तेरिति समासः । तदेवोपपादयति—नहीति । नित्यं वस्तु कर्मणा ज्ञानेन वा नहि क्रियते; यत्क्रियते तद्ध्यनित्यं- यथा घटः । मोक्षस्तु नित्य इति सर्ववादिभिरभ्युपगत एव । तस्मान्नित्यस्य मोक्षस्य न कार्यत्वं, येन कर्म तस्य साधनं स्यादिति भावः । ननु यदि कर्मणा ज्ञानेन वा मोक्षो न क्रियते तर्हि कर्मेव ज्ञानमपि न मोक्षसाधनमिति व्यर्थमेव ज्ञानमपीति पृच्छति—केवलेति । तर्हि केवलज्ञानमप्यनर्थकमित्यन्वयः । उत्तरयति—नेति । हेतुमाह—अविद्येति । ज्ञानस्य अविद्यानिवर्तकत्वेन दृष्टकैवल्यफलावसानत्वादिति ।

ज्ञानेन मोक्षस्साध्यत इति न वयं ब्रूमः, किं तर्हि ज्ञानेनाविद्या निवर्तते- यन्मूलः संसारः । निवृत्तायां चाविद्यायां केवलात्मस्वरूपेणावतिष्ठते विद्वान् । तस्मादविद्यानिवर्तकस्य ज्ञानस्य केवलात्मस्वरूपेणावस्थानलक्षणं कैवल्यफलमवसानमिति दृष्टम् । एवमविद्यानिवर्तकत्वेन कैवल्यफलावसायित्वान्मोक्षसाधनं ज्ञानमित्यस्माभिरुच्यत इति । अविद्यानिवृत्तिरेव ज्ञानेन क्रियते, कैवल्यरूपमोक्षफलं तु नित्यसिद्धमेव । नित्यसिद्धमपीदमविद्यानिवृत्त्यभावेऽसिद्धमिव प्रतिभातीति कृत्वा तदविद्यानिवर्तकं ज्ञानं मोक्षसाधनमित्युक्तं- यथा स्वगृहे नित्यं स्थितमपि हिरण्यनिधिमज्ञानादस्थितमिव सन्तमञ्जनादिना पुरुषस्साधयति, तद्वद्ज्ञानेन विद्वान् नित्यसिद्धमपि मोक्षमविद्यावशादसिद्धमिव सन्तं साधयति । नैतावता ज्ञानसाध्यत्वं मोक्षस्य नित्यसिद्धस्य । 'मोक्षो हि ब्रह्म, नित्यापरोक्षं च ब्रह्म, यत्साक्षादपरोक्षाद्ब्र'ह्मेतिश्रुतेः । कथं तस्य कार्यत्वं स्यात् ? तस्मान्मोक्षस्वरूपावारकाविद्यानिवर्तकत्वाद्ज्ञानं मोक्षसाधनमित्युक्तं, नतु मोक्षजनकत्वादिति कृत्वा न ज्ञानस्य मोक्षसाधनत्वं, नापि मोक्षस्य ज्ञानकार्यत्वमिति भावः । हेतुवाक्यं विवृणोति—अविद्येति । दृष्टं ज्ञातं विद्वदनुभवसिद्धमित्यर्थः । कैवल्यं केवलात्मस्वरूपेणावस्थानं, तदेव फलं कैवल्यफलं, तदेवावसानं परिसमाप्तिस्तस्मिन्नेवावसानमिति वा यस्य तत्त्वं कैवल्यफलावसानत्वम् । अविद्यालक्षणं तमोऽज्ञानमविद्यातमस्तमोऽन्धकारस्तदिव स्वरूपप्रकाशविरोधित्वादविद्या अविद्यातम इत्युच्यत इति वा तन्निवर्तकस्य । विदुषां हि विद्यया अविद्यातमोनिवृत्तौ सत्यां केवलात्मरूपेणावस्थानमनुभवसिद्धमिति कृत्वा, नहि दृष्टेऽनुपपत्तिरितिन्यायेनानुभवसिद्धेऽस्मिन्नर्थे नानुपपत्तिः कार्येति भावः । ज्ञानस्यैवंविधत्वे दृष्टान्तमाह—रज्ज्वादीति । रज्ज्वादिविषये रज्जुशुक्तिकादौ विषये सर्पादिस्सर्परजतादिरूपो योऽध्यासस्तद्धेतुर्यद्ज्ञानं रज्ज्वादिविषयावच्छिन्नचैतन्यनिष्ठं तत्स्वरूपावारकं चाज्ञानमित्यर्थः । तदुपलक्षितं यत्तमोऽन्धकारस्तत्सर्पाद्यज्ञानतमः; यद्वा अज्ञानपदं तत्कार्याध्यासपरं; तथा च सर्पाद्यज्ञानं सर्पाद्यध्यासः तद्धेतुभूतं तमोऽन्धकारस्सर्पाद्यज्ञानतमः । अध्यासस्याज्ञानकार्यत्वेपि तमःकार्यत्वमप्यस्ति- प्रकाशे रज्ज्वादौ सर्पाद्यध्यासादर्शनात् । तस्य सर्पाद्यज्ञानतमसो निवर्तको यः प्रदीपस्य प्रकाशस्तस्येव तद्वत् ।

विषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत्; विनिवृत्तसर्पादिविकल्परज्जुकैवल्याव-
सानं हि प्रकाशफलं; तथा ज्ञानम्। दृष्टार्थानां च छिदिक्रियाग्निमन्थनादीनां व्यापृत-
कर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा व्यापारानुपपत्तिर्यथा, तथा
दृष्टार्थायां ज्ञाननिष्ठाक्रियायां व्यापृतस्य ज्ञात्रादिकारकस्याऽऽत्मकैवल्यफलादन्यफले कर्मा-

---

यथा प्रदीपप्रकाशः रज्ज्वादिविषयावारकं सर्पाद्यध्यासकारणं तमो निवर्त्य रज्ज्वादिं स्वस्वरूपेणाव-
स्थापयन् तावतैव पर्यवसितो दृष्टस्तथा ज्ञानमप्यात्मस्वरूपावारकं देहेन्द्रियाद्यध्यासकारणं चाज्ञानं
निवर्त्यात्मानं स्वस्वरूपेणावभासयन् तावतैव पर्यवसितो दृष्टस्तत्त्वविद्भिरित्यर्थः। रज्ज्वादिविषये
सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशवदविद्यातमोनिवर्तकस्य ज्ञानस्य कैवल्यफलावसानत्वं दृष्टमि-
त्यन्वयः। कथं प्रदीपप्रकाशस्य कैवल्यफलावसानत्वमत आह—**विनिवृत्तेति**। विशेषेण निवृत्ता-
स्सर्वे विकल्पाः दण्डसर्पादयो यस्यास्सा रज्जुर्विनिवृत्तसर्वविकल्परज्जुः, तस्याः कैवल्यावसानं केवल-
रज्जुरूपेणावस्थानं तदेव प्रकाशस्य फलमिति। नच कर्माप्येवमेवाविद्यानिवर्तकत्वान्मोक्षसाधनमिति
वाच्यं, भेदप्रत्ययविशिष्टस्य कर्मणोऽविद्यामूलकत्वेन तन्निवर्तकत्वाभावात्। अत एव समुच्चयोऽपि न
मोक्षसाधनम्। एतेन अविद्यानिवृत्तिलक्षणो मोक्षोऽपि कार्यो न कर्मणा क्रियते, किंतु ज्ञानेनैवेति
सिद्धम्।

एवं कर्मणो मोक्षसाधनत्वपक्षं निरस्य तेनैव समुच्चयस्यापि मोक्षसाधनत्वे निरस्तेऽपि समुच्चय-
स्यैव तावदनुपपत्तिं दर्शयति—**तथेत्यादिना**। तथेति कर्मणो मोक्षसाधनत्वपक्षनिरासपरिसमाप्ति-
द्योतकमव्ययम्। दृष्टोऽर्थः द्वैधीभावादिलक्षणं फलं येषां तेषां दृष्टार्थानां छिदिक्रियाग्निमथनादीनां-
छिदिक्रिया छेदनरूपा क्रिया अग्नेर्मथनं तदादीनां कर्मणां करण इति शेषः। दृष्टार्थेषु छिदिक्रियाग्नि-
मथनादिष्विति सप्तम्यन्तपाठो वा, व्यापृतानां प्रवृत्तानां कर्त्रादिकारकाणां कर्तृकरणादिकारकाणां
कर्मान्तरे व्यापारानुपपत्तिः। कीदृशे कर्मान्तरे? द्वैधीभावः द्विधा भवनमग्निदर्शनमेवमादिलक्षणं
यत्फलं तस्मादन्यत्फलं यस्य तस्मिन्द्वैधीभावाग्निदर्शनादिफलादन्यफले यथा तथा दृष्टोर्थः कैवल्यफलं
यस्यास्तस्यां दृष्टार्थायां निर्गताः क्रिया देहेन्द्रियादिव्यापारा यस्यास्तस्यां निष्क्रियायां ज्ञाननिष्ठाभि-
कायां क्रियायां व्यापृतस्य कर्त्रादिरूपस्य कारकस्यात्मकैवल्यफलादन्यफले कर्मान्तरेऽन्यकर्मणि प्रवृत्ति-
र्व्यापारोऽनुपपन्ना अयुक्ता। इति हेतोः कर्मसहिता ज्ञाननिष्ठा कर्मज्ञानसमुच्चय इति यावत्। नोप-
पद्यते न युज्यते न सम्भवतीति यावत्। अहंब्रह्मास्मीत्याकारकबुद्धिवृत्तिरूपज्ञाननिष्ठाया मानसिक-
क्रियात्वात्तस्यां प्रवृत्तस्य विदुषः कर्ता भोक्ताहमिति ज्ञानपूर्वकाग्निहोत्रादिकर्मसु प्रवृत्तिर्न घटते।
अकर्त्रभोक्तृब्रह्मात्मज्ञानस्य कर्ता भोक्ताऽहमिति ज्ञानस्य च परस्परं विरोधात्। मन इन्द्रियादिषु
बहिर्विषयव्यापृतेषु सत्सु अहंब्रह्मास्मीत्याकारकबुद्धिवृत्त्यसम्भवाच्च। मन इन्द्रियाद्युपरतिसाध्या हि
दर्शितबुद्धिवृत्तिः। समाधिनिष्ठस्यैव तद्बुद्धिवृत्तिदर्शनात्तस्मात्कर्मज्ञाननिष्ठयोस्समुच्चयो न सम्भवति।
ननु युगपत्समुच्चयासम्भवेऽपि क्रमेण सम्भवत्येव स इत्यत आह—**दृष्टार्थायामिति**। किं कर्मनिष्ठस्य

न्तरे प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते । भुजिक्रियाग्निहोत्रादिक्रियाव-त्स्यादिति चेन्न, कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः । कैवल्यफले हि ज्ञाने प्राप्ते सर्वतस्सम्प्लुतोदके फले कूपतटाकादिक्रियाफलार्थित्वाभाववत्, फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तिः । न हि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले

---

कालान्तरे ज्ञाननिष्ठोपपद्यत इति ब्रूषे ? किंवा ज्ञाननिष्ठस्य कालान्तरे कर्मनिष्ठेति ? आद्य इष्ट एव-कर्मनिष्ठाया ज्ञाननिष्ठाहेतुत्वात् । नैतावता कर्मज्ञानसमुच्चयः । ज्ञाननिष्ठाप्राप्त्यनन्तरं कर्मनिष्ठाया-स्त्यक्तत्वेन कर्मनिष्ठां परित्यज्यैव ज्ञाननिष्ठायां प्रवृत्तत्वेन च समुच्चयासिद्धेः । ननु द्वितीयः- ज्ञान-निष्ठाया दृष्टकैवल्यफलावसानत्वेन ज्ञाननिष्ठायाः फलं कैवल्यं- साक्षात्कृतवतो विदुषः ज्ञाननिष्ठां विहाय कर्मनिष्ठायां प्रवर्तितुं कारणाभावात् । नहि निरर्थकं कर्म कुर्याद्विद्वान् । नचैवं कर्मनिष्ठाया-मधिकृतस्यापि तां परित्यज्य ज्ञाननिष्ठास्वीकारो नोपपद्यत इति वाच्यं, कर्मनिष्ठाया अदृष्टफलत्वात् । यद्वा दृष्टकैवल्यफलावसानत्वाभावात् । कैवल्यार्थी हि मुमुक्षुः पुरुषः प्रथममज्ञानादिना कर्मनिष्ठायां प्रवृत्तोऽपि तया स्वस्य कृतार्थत्वालाभाद्ज्ञाननिष्ठां स्वीकरोत्येव, स्वीकृतायां च तस्यां कैवल्यफलानु-भवेन कृतार्थो भवति । एवं कृतार्थस्सन् स विद्वान्पुनः कर्मनिष्ठां किमिति स्वीकुर्यात् ? नहि कृता-र्थस्य दृष्टकैवल्यफलस्य कृतकृत्यस्य तत्त्वविदः कर्तव्यशेषोऽस्ति- यदर्थं पुनः कर्मणि प्रवृत्तिस्स्यात् । उक्तं हि- 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत !' इति । तस्माद्द्वैधीभावाग्निदर्शनादिफला-कांक्षी पुरुषो यथा दृष्टफलेषु छेदनमथनादिकर्मसु प्रवर्तते, प्रवृत्तश्च ततस्तत्फलं पश्यति, नतु प्रकृत-फलातिरिक्तफलप्रदेषु कर्मसु प्रवर्तते, तद्वत्कैवल्यफलार्थी पुरुषः दृष्टकैवल्यफलावसानायां ज्ञाननिष्ठायां प्रवर्तते । प्रवृत्तश्च ततस्तत्फलं पश्यति, नतु कर्मनिष्ठायां पुनः प्रवर्तते । यदि कर्मनिष्ठेव ज्ञाननिष्ठापि दृष्टकैवल्यफलावसाना न स्यात्तर्हि ज्ञाननिष्ठां परित्यज्य भ्रान्त्यादिना पुनः कर्मनिष्ठायां प्रवर्तेत, नतु तथास्ति । तस्मात्कैवल्यार्थी पुरुषः अज्ञानादनधिकाराद्वा प्रथमं कर्मनिष्ठायां प्रवृत्तस्सन् तत्र स्वाभि-लषितं फलमपश्यन् विवेकादिसाधनसम्पत्तिशाली भूत्वा ज्ञाननिष्ठायां प्रविश्य तत्र कैवल्यफलं स्वेष्टं पश्यन् सन् कथं पुनः कर्मनिष्ठायां प्रविशेन्न कथमपीति कृत्वा ज्ञाननिष्ठस्य विदुषो ज्ञाननिष्ठासमकाले कालान्तरे वा कर्मनिष्ठा न सम्भवति, नाप्युपपद्यते ।

नन्वेकस्मिन्पुरुषे एकस्मै फलाय क्रियाद्वयस्यानुपपन्नत्वेऽपि द्वाभ्यां फलाभ्यां क्रियाद्वयमुपपन्न-मेव । यथा क्षुच्छान्तिस्वर्गफलाभ्यामेकस्मिन्पुरुषे भोजनाग्निहोत्रक्रियाद्वयमस्ति, तद्वदेकस्मिन्नेव कैवल्यस्वर्गफलाभ्यां ज्ञानकर्मनिष्ठाद्वयमुपपद्यत एवेत्याह—भुजीति । परिहरति—नेति । हेतु-माह—कैवल्येति । संग्रहवाक्यं विवृणोति—कैवल्येति । कैवल्यं फलं यस्य तस्मिन्कैवल्यफले ज्ञाने प्राप्ते सति क्रियाफलयोः क्रियायां यज्ञादिरूपायां फले स्वर्गादिलक्षणे चार्थित्वस्यानुपपत्तेः । क्रियाफलार्थित्वमितिपदं प्रातिलोम्येन फलक्रियार्थित्वमिति कृत्वा व्याकरोति—फलान्तरे तत्साध-नायां वा क्रियायामिति । क्रियार्थित्वस्य फलार्थित्वपूर्वकत्वात्फलान्तर इति प्रथममुक्तम् । मम

स्वर्गस्स्यादिति फलान्तरार्थित्वं, मम स्वर्गार्थं ज्योतिष्टोमस्स्यादिति क्रियार्थित्वम् । अर्थयते फलादि प्रार्थयते इत्यर्थी कामी तस्य भावोऽर्थित्वं; यथाच क्रियाफलार्थित्वं नाम क्रियाफलकामः । तत्र दृष्टान्तमाह—सर्वत इति । सर्वतस्सम्प्लुतोदकफले प्राप्ते सति प्राप्तुमिष्टे सतीति वा तटाकादि-क्रियाफलार्थित्वाभाववत् । तटाकादिजलस्नानादिक्रियाजन्यफलार्थित्वाभाववदित्यर्थः । तस्मात्कैवल्य-फलार्थिनः पुरुषस्य विदुषस्स्वर्गादिफलार्थित्वासम्भवाद्ज्ञाननिष्ठायां दृष्टकैवल्यफलावसनायां प्रवृत्तस्य विदुषः कैवल्यार्थिनस्स्वर्गाद्यदृष्टफलककर्मानुष्ठानप्रसङ्गः स्वप्नेऽपि न भवेदिति न ज्ञाननिष्ठायाः कर्म-साहित्यमुपपद्यते । ननु कैवल्यार्थिनः कुतः कर्मफलार्थित्वानुपपत्तिरित्यतो दृष्टान्तान्तरमाह—न हीति । राज्यप्राप्तिः फलं यस्य तस्मिन्कर्मणि युद्धादौ प्रवृत्तस्य क्षत्रियस्य क्षेत्रमात्रस्य प्राप्तिः फलं यस्य तस्मिन् क्षेत्रमात्रप्राप्तिफले कर्मणि यात्रादौ व्यापारो न ह्युपपद्यते, तद्विषयं क्षेत्रमात्रविषयमर्थित्वं च, न ह्युपपद्यते यथा तथा कैवल्यफले ज्ञाने प्रवृत्तस्य विदुषस्स्वर्गादिफलककर्मणि प्रवृत्तिः, स्वर्गादिफल-विषयमर्थित्वं च नोपपद्यते । राज्यप्राप्तिफले क्षेत्रप्राप्तिफलवत्कैवल्यफले कर्मफलस्यान्तर्भूतत्वादिति भावः । उक्तं हि- 'सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यत' इतीहैव भगवता । 'यत्किंच प्रजा-स्साम कुर्वन्ति सर्वं तदभिसमे'तीतिश्रुतेश्च ।

ननु क्षेत्रपुरग्रामादीनां सर्वेषां राज्याङ्गत्वादङ्गिनि राज्ये प्राप्ते सति तदङ्गानां क्षेत्रादीनां प्राप्ति-स्स्यादेवेति राज्यकामिनः क्षत्रियस्य क्षेत्रादिप्राप्त्याशा माभून्नाम । कथं पुनः कैवल्यार्थिनस्स्वर्गादि-प्राप्त्याशाऽभावः ? न हि कैवल्यस्य स्वर्गादयोऽङ्गानि, निरस्तनिखिलद्वैतं हि कैवल्यमिति चेन्नैष दोषः—प्राप्तराज्यस्य क्षेत्रमात्रकामाभाव इव प्राप्तकैवल्यस्य स्वर्गादिकामाभाव इत्येतावत एवेह दृष्टान्त-दार्ष्टान्तिकसाधर्म्यस्य विवक्षितत्वात् । प्राप्तकैवल्यस्य स्वर्गादिप्राप्तिकामाभावे हेतुस्तु स्वर्गादिद्वैत-स्याभाव एवेति । यद्वा प्राप्तराज्येन यथा क्षेत्रमात्रमपि प्राप्तमिति न तत्र तस्याशा, तथा प्राप्तकैवल्येन स्वर्गादिकमपि प्राप्तमेवेति न तत्र तस्याशा । कैवल्यस्यात्मस्वरूपत्वादात्मनश्च परिपूर्णत्वेन सर्व-व्यापित्वात्स्वर्गादयोऽप्यात्मना नित्याप्ता एवेतिकृत्वा येनात्मा प्राप्तः कथं तस्य स्वर्गाद्यप्राप्तिः ? अथवा कैवल्यस्यात्मत्वादात्मनश्चेश्वरत्वादीश्वरस्य चावाप्तसमस्तकामत्वाद्येनात्मा प्राप्तस्तेन सर्वे कामाः प्राप्ता एवेति ।

अथ वा कैवल्यस्यात्मत्वादात्मनश्च ब्रह्मत्वाद्ब्रह्मणश्च स्वर्गादिसर्वजगदाधारत्वाद्येनात्मा प्राप्तस्तेन स्वर्गादिकं सर्वमपि प्राप्तमेवेति । यद्वा कैवल्यस्य ब्रह्मत्वाद्ब्रह्मणश्चैकदेशे सर्वस्य जगतः सत्त्वाद्येन कैवल्यं प्राप्तं तेन स्वर्गादिकं प्राप्तमेवेति ।

वस्तुतस्तु कैवल्यस्य ब्रह्मत्वाद्ब्रह्मणश्च सर्वात्मत्वाद्येन ब्रह्म प्राप्तं तेन स्वर्गादिकमपि प्राप्तमेव । अत एवैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय ब्रह्मणि विज्ञाते सति सर्वं विज्ञातं भवतीत्युक्तं श्रुत्या-ब्रह्मकार्यत्वात्सर्वस्य । सर्वस्य स्वरूपं हि ब्रह्म । तस्माद्ब्रह्मप्राप्तौ सर्वप्राप्तिस्सिद्धैवेति न दृष्टान्त-

व्यापार उपपद्यते; तद्विषयं वाऽर्थित्वम् । तस्मान्न कर्मणोऽस्ति निश्श्रेयससाधनत्वं; नच ज्ञानकर्मणोस्समुच्चितयोः । नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा- अविद्यानिवर्तकत्वेन विरोधात् । नहि तमस्तमोन्तरं निवर्तयति । अतः केवलमेव ज्ञानं निश्श्रेयससाधनमिति, न नित्याकरणे प्रत्यवायप्राप्तेः; कैवल्यस्य च नित्यत्वात् । यत्तावत्केवलज्ञानात्कैवल्यप्राप्तिरित्येतत्तदसत्-- यतो नित्यानां कर्मणां श्रुत्युक्तानामकरणे प्रत्यवायो नरकादि-

---

दार्ष्टान्तिकयोस्साधर्म्याभावप्रसङ्गदोषः । तस्मादिति । ज्ञानकर्मणोस्समुच्चयानुपपत्तेर्मोक्षस्य कर्मसाधनत्वानुपपत्तेश्चेत्यर्थः । कर्म निश्श्रेयससाधनं न भवति । ज्ञानकर्मणोस्समुच्चयो निश्श्रेयससाधनं न भवति च । ननु कर्मसहितमेव ज्ञानं, कैवल्यफलकं न केवलज्ञानं यथाऽनुष्ठानसापेक्षमेव वेदार्थज्ञानं स्वर्गादिफलकमित्यत आह— नापीति । ज्ञानं कैवल्यं प्रदातुं कर्मरूपं सहायं नापेक्षत इत्यर्थः । सह अयति गच्छतीति सहायस्सखा तस्य भावः कर्म वा साहाय्यं कर्मणस्साहाय्यं कर्मसाहाय्यं तस्यापेक्षा ज्ञानस्य न हीत्यन्वयः । इदमित्थमनेन कर्तव्यमित्येवंरूपस्य वेदार्थज्ञानस्य कर्मानुष्ठानं विना निष्फलत्वाद्युक्ता कर्मसाहाय्यापेक्षा । अहं ब्रह्मास्मीत्येवंरूपस्यात्मज्ञानस्य कर्तव्यबोधकत्वाभावादयं घट इति ज्ञानवद्वस्तुस्वरूपसमर्पकत्वात्तावतैव सफलत्वान्न कर्मसाहाय्यापेक्षेति भावः । मास्तु ज्ञानस्य कर्मसाहाय्यं, प्रत्युत कर्मविरोधित्वमप्यस्तीत्याह— अविद्येति । ज्ञानस्याविद्यानिवर्तकत्वेन हेतुनाऽविद्यामूलककर्मविरोधात् । अविद्यानिवर्तकं हि ज्ञानमविद्यामूलकं कर्म नाशयतीति विरोध एव ज्ञानकर्मणोः । क्व पुनस्साहाय्याशङ्का ? न चाविद्याया एव विरोधि ज्ञानं, न तु कर्मण इति वाच्यं, कर्मणो भेदप्रत्ययमूलकत्वाद्भेदप्रत्ययस्य च कर्त्रादिलक्षणस्याऽविद्यामूलकत्वादद्वैतज्ञानेन भेदप्रत्ययस्य तत्कारणाज्ञानस्य च निवृत्तत्वे क्व पुनः कर्मसम्भव इति समूलं कर्म नाशयत्येवाद्वैतज्ञानमिति ज्ञानं कर्मविरोध्येव । ननु यथा ज्ञानमविद्यानिवर्तकत्वेन कैवल्यफलावसायि, एवं कर्मापीति कर्मापि मोक्षसाधनमेवेत्यत आह— न हीति । हिः प्रसिद्धौ । यथा तमस्तमोऽन्तरं न निवर्तयत्येवं कर्म नाज्ञाननिवर्तकम् । सूर्याभावकृतमन्धकारं दीपाभावकृतोऽन्धकारो यथा न निवर्तयति तथा कर्माज्ञानं न निवर्तयति- तमसोरिव कर्माज्ञानयोर्विरोधाभावात्; प्रत्युताज्ञानमूलत्वाच्च कर्मणः । न ह्यन्धकारमूलः पिशाचादिभ्रमोऽन्धकारं निवर्तयति । एवमज्ञानमूलं कर्माप्यज्ञानं न निवर्तयति । नच रामानुजोक्तरीत्या ज्ञानपूर्वकं कर्माज्ञानं निवर्तयतीति वाच्यं, कर्मणो ज्ञानपूर्वकत्वासम्भवात् । निष्क्रियात्मस्वरूपज्ञानस्य कर्मप्रवृत्तिभञ्जकत्वान्न ह्यात्मज्ञानपूर्वकं कर्म भवेत् । नच कर्त्रात्मज्ञानपूर्वकं कर्मेति वाच्यं, कर्ताहमित्यात्मज्ञानस्य भ्रमत्वेन प्रमात्वाभावात् । तादृशभ्रमज्ञानस्याज्ञानमूलकत्वेनाज्ञानानिवर्तकत्वाच्चेन कैवल्याभावाच्चेति । उपसंहरति सिद्धान्ती स्वमतम्— अत इति । कर्मणो मोक्षसाधनत्वाभावात्समुच्चयस्यानुपपन्नत्वाच्चेत्यर्थः । पक्षद्वयस्य दूषितत्वादिति भावः । केवलमिति । कर्मानपेक्षमित्यर्थः । ज्ञानमेव निश्श्रेयससाधनमेवकारान्न कर्मादिकमिति भावः ।

प्राप्तिलक्षणस्स्यात् । नन्वेवं तर्हि कर्मभ्यो मोक्षो नास्तीत्यनिर्मोक्ष एव; नैष दोषः- नित्यत्वान्मोक्षस्य; नित्यानां कर्मणामनुष्ठानात्प्रत्यवायस्याऽप्राप्तिः । प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः; काम्यानां च वर्जनादिष्टशरीरानुपपत्तिः; वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतितेऽस्मिन् शरीरे देहान्तरोत्पत्तौ च कारणाभावादात्मनः; रागा-

---

अत्राह मीमांसकः पूर्वपक्षं—**नन्विति** । यत्तावत्केवलज्ञानात्कैवल्यप्राप्तिरिति तदेतदसत्- कुतः ? कैवल्यस्य नित्यत्वात् । यदि नित्यं कैवल्यं ज्ञानेनाप्येत तर्हि प्राप्यं तत्कैवल्यमनित्यमेव स्यात् । निर्विकारं हि वस्तु नित्यं, प्राप्यत्वं च विकार एवेति कथं प्राप्यत्वात्सविकारं कैवल्यं नित्यं स्यात् ? न कथमपीति कृत्वा ज्ञानेन कैवल्यं प्राप्यत इत्युक्तमयुक्तम् । मास्तु सर्वकर्मसन्न्यासपूर्वकज्ञानात्कैवल्यं, प्रत्युत नरकपातोऽपि स्यादित्याह—**नित्याकरणादिति** । तदेव स्वयं विवृणोति—**नित्यानामिति** । यतः कर्मसन्न्यासात्प्रत्यवायस्स्यात्, यतश्च नित्यत्वात्कैवल्यं ज्ञानेन नाप्येत, तस्मात्केवलज्ञानात्कैवल्यप्राप्तिरित्यद्वैतिनोक्तमयुक्तमित्यर्थः । अत्र कैवल्यस्य नित्याप्तत्वाच्चेत्यपि हेत्वन्तरं गम्यते । नित्यत्वादित्यनेनार्थात्सिध्यतीति वा । ततश्च नित्याप्तस्य कैवल्यस्य ज्ञानप्राप्यत्वकथनं चायुक्तमिति भावः ।

नन्तु यद्येवं नित्याकरणात्प्रत्यवायः, नित्यकरणाच्च प्राजापत्यलोकप्राप्त्यादिलक्षणो बन्धस्तर्हि उभयथाप्यानर्थक्यात्कर्मभ्यो मोक्षो नास्ति; ज्ञानान्मोक्षप्राप्तिस्तु दूषितेति हेतोः पुरुषस्यानिर्मोक्षो मोक्षाभाव एव प्राप्त इति चेत्- एष मोक्षाभावरूपो दोषो न- नास्ति । कुतः ? **नित्यत्वादिति** । यदि कर्मभ्यो मोक्षस्स्यात्तर्हि कर्मकृतो मोक्षोऽनित्य एव स्याद्घटवत्- यत्कृतकं तदनित्यमिति व्याप्तिदर्शनात् । नित्यो हि मोक्षः । अतस्स कथं कर्मभ्यो ज्ञानाद्वा भवितुमर्हति ? नहि नित्यस्य मोक्षस्याभावो वक्तुं शक्यते- नित्यस्य सत्यत्वेन सत्यस्य सत्त्वेन च सतो मोक्षस्याभावायोगात् । उक्तं हि- 'नासतो विद्यते भावो नाभावो विद्यते सत' इति । ननु भवत्वेवं नित्यो मोक्षः, कथं पुनस्तत्सिद्धिर्मुमुक्षोरत आह—**नित्यानामिति** । सर्वकर्मसन्न्यासान्नित्यानामकरणे या प्रत्यवायप्राप्तिर्दर्शिता केवलज्ञानिनि सा कर्मिणो न भवति । कुतः ? नित्यानां कर्मणामनुष्ठानात् । **एतेन** मुमुक्षुणा पुरुषेण नित्यं कर्म कार्यमिति **सिद्धम्** । अत एव श्रीकृष्णेनापि- 'नियतं कुरु कर्म त्व'मित्युक्तमिति भावः । प्रतिषिद्धं कर्म मुमुक्षुणा न कार्यमित्याह—**प्रतिषिद्धस्येति** । अनिष्टशरीराणि यातनापश्वादिशरीराणि । काम्यान्यपि कर्माणि न कर्तव्यानीत्याह—**काम्यानां चेति** । अनिष्टपश्वादिशरीरवदिष्टदेवादिशरीराणामपि सुखदुःखादिजननद्वारा बन्धकत्वादिति भावः । एवं कृते सति किं भवतीत्यत आह—**वर्तमानेति** । प्रारब्धकर्मणो भोगेन क्षयादिति भावः । अस्मिन्वर्तमाने देहे पतिते मृते सतीत्यर्थः । **कारणाभावादिति** । सुकृतस्य दुष्कृतस्य वाऽभावादित्यर्थः । 'पुण्यः पुण्ये'नेति शास्त्रादिति भावः ।

ननु कथं कारणाभावः ? धर्माधर्मानुष्ठानहेतुभूतरागादिसत्त्वेन धर्माधर्माकरणानुपपत्तेरत आह—**आत्मन इति** । आत्मनो मनसो ये रागादयस्तेषामकरणे सत्यात्मन इत्यस्य कैवल्यमित्यनेनान्वय

दीनां चाकरणात्स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यमिति; अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्याऽनारब्धकार्यस्योपभोगानुपपत्तेः क्षयाभाव इति चेन्न- नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः । प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थं नित्यं कर्म—आरब्धानां च कर्मणामुपभोगेनैव क्षीणत्वात्; अपूर्वाणां च-

---

इति वा, तत्पक्षे आत्मनस्स्वस्य मुमुक्षोरित्यर्थः । स्वरूपावस्थानं तल्लक्षणमित्यर्थः । कैवल्यमयत्नसिद्धं, प्रयत्नं विनैव सिध्यति । अतो न मोक्षस्य यत्नसाध्यत्वप्रयुक्तानित्यत्वप्रसङ्गः । तस्मान्मुमुक्षुणा रागादिप्रहाणपूर्वकं नित्यकर्मैव कर्तव्यं, तथासति दर्शितविधया मोक्षसिद्धेरिति । ननु नैवं मोक्षसिध्यति । कुतः ? अतिक्रान्तेति । अतिक्रान्तेष्वनेकेषु जन्मान्तरेषु कृतस्य स्वर्गनरकादिप्राप्तिः फलं यस्य तस्य सुकृतदुष्कृतात्मकस्येत्यर्थः । अनारब्धं कार्यं देहादिरूपं येन तस्य सञ्चितस्येत्यर्थः । कर्मण उपभोगानुपपत्तेरुपभोगाभावाद्धेतोः क्षयाभाव इति मोक्षासिद्धौ हेतुः । प्रकृतशरीरत्यागानन्तरं पुनश्शरीरान्तरपरिग्रहाभावे सति हि स्वरूपावस्थानलक्षणं कैवल्यमात्मनस्सम्भवति, स तु शरीरान्तरपरिग्रहाभावो नित्यकर्मानुष्ठानमात्रेण न सिध्यति । कृतविप्रणाशस्यायुक्तत्वेन यथा प्रारब्धकर्मण उपभोगेन क्षयस्तथा सञ्चितकर्मणामप्युपभोगं विना क्षयानुपपत्तेः सञ्चितकर्मफलोपभोगार्थमनन्तानि शरीरान्तराणि परिग्राह्याण्येव कर्मिणा । नित्यकर्मानुष्ठानं हि प्रत्यवायाप्राप्तिं करोति, न तु सञ्चितकर्मक्षयं, न चायं दोषस्समानो ज्ञानान्मोक्षवादिनोऽपीति वाच्यं, ज्ञानस्य सर्वसञ्चितकर्मतूलराशिदहने वह्निप्रायत्वात् । उक्तं हि भगवता- 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन !' इति । तस्माच्छरीरान्तरपरिग्रहस्यावर्जनीयत्वान्न नित्यानुष्ठानान्मोक्ष इतिचेन्न । हेतुमाह—नित्येति । तच्छब्दस्य सञ्चितकर्माण्यर्थः । उपभोगेन क्षपयितव्यानां सञ्चितकर्मणां यः फलोपभोगस्स नित्यकर्मानुष्ठानजन्यायासदुःखोऽपि भोग एव । ततश्च नित्यकर्मानुष्ठानायासदुःखमनुभूय सञ्चितकर्माणि क्षपयितव्यानीत्यर्थः । नित्यकर्मानुष्ठानप्रयुक्तायासदुःखानुभवात्सञ्चितकर्मणां क्षय इति भावः । नित्यकर्मानुष्ठानप्रयुक्तायासदुःखोपभोगस्य तत्फलोपभोगत्वमुपपद्यत इत्यन्वयार्थः । उपभोगं विनाऽपि सञ्चितकर्मणां क्षयस्सम्भवति नित्यकर्मानुष्ठानादित्याह—प्रायश्चित्तवद्वेति । यथेहजन्मनि प्रमादादिना कृतानां पापकर्मणां तप्तकृच्छ्रादिप्रायश्चित्तैस्तत्फलोपभोगं विनापि क्षयः, एवं जन्मान्तरकृतानामपि कर्मणां विविधानां नित्यकर्मणा क्षयस्सम्भवति । नित्यकर्म हि पूर्वोपचितदुरितक्षयार्थं पूर्वोपचितानां जन्मान्तरार्जितानां दुरितानां क्षयो नाशोऽर्थः फलं यस्य तत्तथोक्तमत एवोपात्तदुरितक्षयार्थमिति सन्ध्यावन्दनादिनित्यकर्मसु कर्मिणस्सङ्कल्पयन्तीति । प्रायश्चित्तेन तुल्यं प्रायश्चित्तवदिति- 'तेन तुल्यं क्रियाचेद्वति'रिति वतिः । यथा प्रायश्चित्तमुपचितदुरितक्षयार्थं तथा नित्यकर्मापीत्यर्थः । प्रायश्चित्तनित्यकर्मणोस्त्वयं विशेषः- इहजन्मोपचितदुरितक्षयार्थं प्रायश्चित्तं, जन्मान्तरोपचितदुरितक्षयार्थं नित्यकर्मेति । वस्तुतस्तु नित्यकर्मणोऽप्यैहिकदुरितोपक्षयार्थत्वमप्यस्तीति बोध्यम्- 'यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यत' इत्यादिश्रुतेः । स्वमतं निगमयति—आरब्धानां चेति । जन्मान्तरकृतानामित्यर्थः ।

कर्मणामनारम्भेऽयत्नसिद्धं कैवल्यमिति, न- 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयना'येति विद्याया अन्यः पन्था मोक्षाय न विद्यत इति श्रुतेः। चर्मवदाकाशवेष्टनासम्भववदविदुषो मोक्षासम्भवश्रुतेः- 'ज्ञानात्कैवल्यमाप्नोती'ति च पुराणस्मृतेः; अनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च। यथा पूर्वोपात्तानां दुरितानामनारब्धफलानां सम्भवः, तथा पुण्यानामप्यनारब्धफलानां स्यात्सम्भवः। तेषां च देहान्तरमकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः। धर्माधर्महेतूनां च रागद्वेषमोहानामन्यत्रात्मज्ञानादुच्छेदानुपपत्तेर्धर्माधर्मोच्छेदानुपपत्तिः। नित्यानां च कर्मणां पुण्यलोकफलत्वश्रुतेः- 'वर्णा आश्रमाश्च स्वकर्मनिष्ठा' इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः।

---

कर्मणां प्रारब्धसञ्चितोभयात्मकानामित्यर्थः। उपभोगेनैव तत्तत्फलानुभवेनैव क्षीणत्वात्सञ्चितानां नित्यकर्मभिः क्षीणत्वाच्चेति बोध्यम्। अपूर्वाणामागामिनामित्यर्थः। कर्मणां काम्यानां प्रतिषिद्धानां चेत्यर्थः। अनारम्भेऽकरणे सति कैवल्यं भवति मुमुक्षोरिति शेषः। तस्मात्कैवल्यार्थिना नित्यकर्मैकमेव कार्यमिति। एवं परमतमुपन्यस्य दूषयितुमारभते सिद्धान्ती—नेत्यादिना। नैवं नित्यकर्मानुष्ठानं मोक्षसाधनं, कुतः ? श्रुत्यादिविरोधादित्याह—तमेवमिति। तं परमात्मानमेवं प्रत्यगभिन्नत्वेन उक्तरीत्येति वा, विदित्वा ज्ञात्वा विद्वानिति शेषः। मृत्युं संसारमत्येत्यतिगच्छति; अयनाय मोक्षाय, अन्यो ज्ञानादतिरिक्तः पन्था न नास्ति। 'नान्यः पन्था विद्यतेऽयना'येत्यस्या अर्थं स्वयमेवाह भाष्यकृत्—अन्यः पन्था मोक्षय न विद्यत इति। 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्य'तीतिश्रुतिरप्यमुमेवार्थमाहेत्याह—चर्मवदिति। चर्मण इवाकाशस्य वेष्टनं यथा न सम्भवति तद्वदविदुषोऽनात्मज्ञस्य मोक्षो न सम्भवतीत्येतदर्थप्रतिपादकश्रुतेश्चेत्यर्थः। पुराणरूपां स्मृतिमाह—ज्ञानादिति। युक्तिमाह—अनारब्धेति, अनारब्धफलानामिति। सञ्चितानामित्यर्थः। पुण्यानामिति। दुरितानां प्रायश्चित्तैरिव नित्यकर्मभिः क्षीणत्वेऽपि नित्यकर्मानुष्ठानायासदुःखानुभवस्य दुरितफलत्वेन तदुपभोगेन वा दुरितानां क्षीणत्वेऽपि पुण्यानामुपभोगं विना क्षयो नोपपद्यत इति भावः। नन्वनारब्धफलानां पुण्यानां सत्त्वमेवासिद्धमत आह—यथेति। अनारब्धफलानि दुरितानि सन्तीति यथा त्वमभ्युपैषि, तथा तादृशानि पुण्यान्यपि सन्तीत्यभ्युपगच्छ। दुष्कृतान्येवानेन जन्मान्तरेषु सञ्चितानि नतु सुकृतानीति निश्चेतुमशक्यत्वादिति। एवं देहान्तरापत्तौ च कारणाभावादित्येतद्दूषयित्वा रागादीनां चाकरणे इत्येतद्दूषयति—धर्मेति। धर्माधर्मयोर्हेतूनां रागद्वेषमोहानामात्मज्ञानादन्यत्राऽऽत्मज्ञानं विनेत्यर्थः। उच्छेदस्य नाशस्यानुपपत्तेः। आत्मज्ञानवानेव रागद्वेषादीनकृत्वा तिष्ठति, न त्वनात्मवित्। ज्ञानं विनाऽन्येन केनापि कारणेन रागद्वेषमोहनाशासम्भवादिति। एवं रागद्वेषादीनामनाशे तत्कार्ययोर्धर्माधर्मयोरुच्छेदानुपपत्तिः। सतोश्च धर्माधर्मयोस्तत्फलोपभोगाय शरीरान्तरपरिग्रह आवश्यक इति मोक्षानुपपत्तिरिति भावः।

अथ यदुक्तं नित्यकर्मकरणात्प्रत्यवायाप्राप्त्या मोक्ष इति तद्दूषयति—नित्यानामिति। नित्य-

ये त्वाहुः— नित्यानि कर्माणि दुःखरूपत्वात्पूर्वकृतदुरितकर्मणां फलमेव, न तु तेषां स्वरूपव्यतिरेकेणाऽन्यत्फलमस्ति अश्रुतत्वात् । जीवनादिनिमित्ते च विधानादिति, न - अप्रवृत्तानां कर्मणां फलदानासम्भवात्; दुःखफलविशेषानुपपत्तिश्च स्यात् । यदुक्तं पूर्वजन्मकृतानां दुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति, तदसत्— नहि मरणकाले फलदानायाऽनङ्कुरीभूतस्य कर्मणः फलमन्यकर्मारब्धे जन्मन्युपभुज्यत इत्युपपत्तिः । अन्यथा स्वर्गफलोपभोगायाऽग्निहोत्रादिकर्मारब्धे जन्मनि नरककर्मफलोप-

कर्मानुष्ठानस्याकरणे प्रत्यवायरूपदोषप्राप्तिरेव न फलं, किंतु पुण्यफलमप्यस्तीति श्रूयते स्मर्यते च । ततश्च श्रुतिस्मृतिप्रमाणसिद्धस्य नित्यकर्मानुष्ठानजन्यपुण्यफलस्य देहान्तरेऽवश्यमनुभोक्तव्यत्वात्तदनुभवं विना नित्यकर्मणः कृतस्य क्षयानुपपत्तेर्नित्यकर्मकर्तुर्देहान्तरप्राप्तिरवर्जनीयेति मोक्षानुपपत्तिरिति भावः । ननु नित्यकर्मानुष्ठानान्न पुण्यफलं, किंतु नित्यकर्मानुष्ठानमेव जन्मान्तरकृतदुरितफलमायासदुःखरूपत्वा दित्याह— ये त्विति । फलमेवेत्येवकारार्थमाह— न त्विति, तेषामिति । नित्यकर्मणामित्यर्थः । अन्यत्फलं न त्वस्तीत्यन्वयः । तत्र हेतुमाह— अश्रुतत्वादिति । ज्योतिष्टोमेन स्वर्गकामो यजेतेतिवदेतत्काम इदं नित्यं कर्म कुर्यादित्यश्रवणादिति भावः । ब्राह्मणस्य यजनादयष्षट् नित्यकर्माणीत्युक्तं, तत्र याजनाध्यापनप्रतिग्रहा जीवनार्थे विहिता इति वृद्धवचनादाह— जीवनादिनिमित्ते चेति । तस्माज्जीवनार्थं विहितानां नित्यकर्मणां जीवनातिरिक्तफलकल्पनमयुक्तमिति भावः । आदिपदात्तत्तद्वर्णविशेषनिर्धारणं गृह्यते; तथा च यजनाध्ययनदानानि त्रीणि नित्यकर्माणि ब्राह्मणस्य ब्राह्मणवर्णविशेषनिर्धारणार्थं विहितानीति कृत्वा न तेषामपि फलान्तरं कल्पयितुं शक्यमिति । परिहरति— नेति । किं त्वं नित्यकर्माणि प्रारब्धकर्मफलभूतानीति ब्रूषे, उत सञ्चितकर्मफलानीति ? आद्ये त्वदिष्टासिद्धिः । द्वितीये दोषमाह— अप्रवृत्तानामिति । अप्रवृत्तानां फलप्रदानार्थमप्रवृत्तानां सञ्चितानामित्यर्थः । अयमेव हि सञ्चितप्रारब्धयोर्भेदः— जन्मान्तरकृतं फलदानाय प्रवृत्तं यत्तत्प्रारब्धं, यदप्रवृत्तं तत्सञ्चितमिति ; तस्मात्सञ्चितानां कर्मणां प्रकृतजन्मनि फलदानं नैव सम्भवति । सति च तदसंभवे सञ्चितकर्मफलमेवायं नित्यकर्मानुष्ठानायासदुःखविशेष इति कथमुच्यते ? तस्मात्सञ्चितकर्मणां दुःखफलविशेषस्यानुपपत्तिस्स्यात् । इदमेवाप्रवृत्तानामिति संग्रहवाक्यं विवृणोति— यदुक्तमित्यादिना । दुरितानां फलं दुःखं भुज्यत इति यदुक्तं तदसदित्यन्वयः । अनंकुरीभूतस्येति । अनारब्धस्येत्यर्थः । अन्यकर्मेति । प्रारब्धकर्मेत्यर्थः । उपभुज्यत इत्यत्रोपपत्तिर्नहीत्यन्वयः । येन कर्मणा यज्जन्मारब्धं तज्जन्मनि तत्कर्मणः फलमेवानुभवितव्यं न त्वन्यकर्मफलमिति नियमादिति भावः । उक्तनियमास्वीकारे को दोषस्तत्राह— अन्यथेति, जन्मनीति । देवदेहे इत्यर्थः । उपपत्तिरापत्तिरित्यर्थः ।

अयं भावः— केनचिदग्निहोत्रादिधर्मः कृतः हिंसास्तेयादिवदधर्मश्च कृतः । तत्र धर्मेण स्वर्गप्राप्तिरधर्मेण नरकप्राप्तिश्च क्रमेण भवितुमर्हति, नतु युगपदेव- विरोधात् । एवं सति फलदानायांकुरीभूताद्धर्मात्तस्य स्वर्गफलोपभोगार्हदेवजन्मनि सति तत्रैवाधर्मफलं नरकमपि तेन भुज्येत । अन्यकर्मा-

भोगानुपपत्तिर्न स्यात्- तस्य दुरितस्य दुःखविशेषफलत्वानुपपत्तेश्च । अनेकेषु हि दुरितेषु सम्भवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वन्द्वरोगादिबाधनं निर्निमित्तं नहि शक्यते कल्पयितुं; नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितफलं, न शिरसा पाषाणवहनादिदुःखमिति । अप्रकृतं चेदमुच्यते- नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलमिति । कथम् ? अप्रसूतस्य हि पूर्वकृतदुरितस्य क्षयो

---

रब्धेऽपि जन्मन्यन्यकर्मफलानुभव इत्यभ्युपगमात् । नहि स्वर्गिणो नरकानुभवस्सम्भवति- स्वर्गनरकयोस्सुखःदुखयोर्विरोधात् । तस्मादुक्तनियमोऽवश्यं स्वीकर्तव्य इति । किंच नित्यकर्मानुष्ठानायाससिद्धं दुखं किं पूर्वकृतदुरितसामान्यफलमुत दुरितविशेषफलम् ? नाद्यः- सर्वेषां ब्रह्महत्यास्वर्णस्तेयपरदारगमनादिपातकानामविशेषेण नित्यकर्मानुष्ठानायासदुःखमेव फलमिति कल्पनस्यायुक्तत्वादप्रमाणत्वाच्च । न द्वितीयः- अस्य दुरितविशेषस्येदं नित्यकर्मानुष्ठानःदुखं फलमिति निश्चेतुं शास्त्राद्यभावादित्याह— तस्येति । नित्यकर्मानुष्ठानायासदुःखस्येत्यर्थः । दुरितदुःखविशेषफलत्वानुपपत्तेः दुरितविशेषदुःखफलत्वानुपपत्तेरित्यर्थः । दुरितानां यद्दुःखविशेषरूपं फलं तत्त्वानुपपत्तेरिति वा । संग्रहवाक्यमेव विवृणोति—अनेकेष्विति । अनेकेषु भिन्नदुःखसाधनफलेषु सम्भवत्सु भिन्नदुरितेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु सत्सु भिन्नानि दुःखं साधनं फलं करणवैकल्यादिकं चेत्येतानि येषां तेषु भिन्नदुःखसाधनफलेषु सम्भवत्सु सम्भावितेष्वित्यर्थः । नित्यकर्मानुष्ठानायासदुःखमात्रं फलं येषां तेषु तथोक्तेषु भिन्नदुःखसाधनफलानां बहूनां सम्भावितानामनेकजन्मसञ्चितानां दुरितानां नित्यकर्मानुष्ठानायासदुःखमेव फलमिति कल्पिते सतीत्यर्थः । अनिमित्तं द्वन्द्वरोगादिबाधनं कल्पयितुं नहि शक्यते । द्वन्द्वरोगादिबाधनमनिमित्तं कल्पयितुं नहि शक्यत इति वा । अस्मिन्पक्षे कल्पयितुं वक्तुमित्यर्थः । उभयथापि अनुभवसिद्धत्वाद्दुरपलापं द्वन्द्वरोगादिबाधनं निर्निमित्तं स्यादित्यर्थः । द्वन्द्वरोगादिबाधानां कारणत्वेनाभ्युपगतानि शास्त्रविद्भिर्यानि दुरितानि तेषामपि नित्यकर्मानुष्ठानायासदुःखमेव यदि फलं स्यात्तर्हि द्वन्द्वरोगादिबाधाफलं नैव भवतीति निर्निमित्ता एव द्वन्द्वरोगादिबाधास्स्युः । तस्मादेवं कल्पयितुं न शक्यत इति भावः । तामेवाशक्यां कल्पनामभिनीय दर्शयति— नित्येति । पूर्वोपात्तदुरितानां नित्यकर्मानुष्ठानायासदुःखमेव फलं, शिरसा पाषाणवहनादिसिद्धदुःखं तु न फलमित्यनिमित्तं द्वन्द्वरोगादिबाधनं कल्पयितुं न शक्यत इति पूर्वेणान्वयः । वहनादीत्यादिपदात् द्वन्द्वरोगादिग्रहणम् । द्वन्द्वरोगादीत्यादिपदात्पाषाणवहनादिग्रहणम् । तस्मात्परस्परं भिन्नानां दुरितानां फलमपि परस्परं भिन्नमेव दुःखविशेषो भवितुमर्हतीति न सर्वेषां दुरितानां नित्यकर्मानुष्ठानायासदुःखमेव फलं, तथासति द्वन्द्वरोगशिरःपाषाणवहनादिदुःखस्य निर्निमित्तत्वापत्तेः । निर्निमित्तस्यापि दुःखस्याभ्युपगमे कारणं विनापि कार्यं स्यादिति महदनिष्टं सुकृतिनोऽपि निष्कारणदुःखानुभवप्रसङ्गश्चेति भावः । दोषान्तरमाह—अप्रकृतं चेति । प्रकृतविरुद्धमित्यर्थः । किमुच्यतेऽत आह—नित्येति । कथमिदं वचनमप्रकृतमिति पृच्छति—कथमिति । उत्तरयति—अप्रसूतेति । हि यस्मादप्रसूतफलस्य

नोपपद्यत इति प्रकृतम् । तत्र प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखमाह भवान्- नाऽप्रसूतफलस्येति । अथ सर्वमेव पूर्वकृतं दुरितं तत्प्रसूतफलमेवेति मन्यते भवान्; ततो नित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्तं; नित्यकर्मविध्यानर्थक्यप्रसङ्गश्च- उपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः । किं च श्रुतस्य नित्यस्य

पूर्वकृतदुरितस्य क्षय उपपद्यत इत्युक्तं, तस्मादिदमप्रकृतमित्यर्थः । किं तत्प्रकृतं यस्येदं विरुद्धमप्रकृतमत आह—**नोपपद्यत इतीति** । अप्रसूतस्य कर्मणः क्षयो नोपपद्यत इति प्रकृतम् । यद्वा कथमप्रकृतमुच्यते ? अत आह—**कथमिति** । अप्रसूतस्य पूर्वकृतदुरितस्य क्षयः कथमुपपद्यते ? कथमपि नोपपद्यत इति प्रकृतम् । एतद्विरुद्धत्वात्त्वदुक्तमप्रकृतमिति भावः । तदेव स्फुटयति—**तत्रेति** । एवंसतीत्यर्थः । अप्रसूतफलस्य पूर्वकृतदुरितस्य क्षयो नोपपद्यत इति प्रकृते सतीत्यर्थः । भवानप्रसूतफलस्य सञ्चितस्येत्यर्थः । कर्मणो नित्यकर्मानुष्ठानायासदुःखं फलमित्याह—प्रसूतफलस्य प्रारब्धस्य कर्मणो नित्यकर्मानुष्ठानायासदुःखं फलं न भवतीति च भवानाह- त्वं वदसि । तस्मादिदमप्रकृतमुच्यते ।

अयं भावः—नित्यकर्मानुष्ठानायासदुःखमेव पूर्वकृतदुरितफलमिति वदन् भवान् प्रष्टव्य इति । किं पूर्वकृतानां सञ्चितानां दुरितानां नित्यकर्मानुष्ठानदुःखं फलमिति तवाभिप्रेतम् ? यद्वा प्रारब्धानाम् ? द्वितीये- प्रारब्धस्य नित्यकर्मानुष्ठानदुःखोपभोगेन क्षये सत्यपि सञ्चितानां क्षयाभावान्मोक्षानुपपत्तिः । आद्ये- फलदानायानंकुरीभूतानां सञ्चितानां कथं नित्यकर्मानुष्ठानदुःखरूपफलप्रदानसम्भवः ? तस्मादनुभवसिद्धमिदं नित्यकर्मानुष्ठानायासदुःखं न प्रारब्धफलं, किं तु सञ्चितदुरितफलमेवेति तव वचनमिदमप्रकृतमप्रमाणमग्राह्यमेवेति विरोधं स्फुटयितुमेवाप्रसूतफलस्येति प्रसूतफलस्येति चोक्तमाचार्यैः । अप्रसूतमनुत्पादितं फलं दुःखं येन तस्याप्रसूतफलस्य । प्रसूतमुत्पादितं फलं दुःखं येन तस्य प्रसूतफलस्य । अप्रसूतफलस्य दुःखफलप्रसूतिः, प्रसूतफलस्य दुःखफलाप्रसूतिश्चेत्युभयं विरुद्धमिति भावः । ननु न वयं पूर्वकृतदुरितानां सञ्चितत्वमभ्युपगच्छामः; किंतु प्रारब्धत्वमेव । तस्मान्नित्यकर्मानुष्ठानायासदुःखोपभोगेन पूर्वकृतदुरितक्षयोपपत्तिरिति नाप्रकृतत्वदोष इत्यत आह—**अथेति, सर्वमेवेति** । सर्वमपीत्यर्थः । भवान् सर्वमेव पूर्वकृतं दुरितं प्रसूतफलमेवेति मन्यते यदि ततस्तर्हि नित्यकर्मानुष्ठानायासदुःखमेव पूर्वकृतदुरितानामिति शेषः । फलमितिविशेषणं विशिष्य वचनमयुक्तं- द्वन्द्वरोगादिदुःखस्यापि पूर्वकृतदुरितफलस्यानुभूयमानस्याऽपलपितुमशक्यत्वादिति भावः । दोषान्तरमाह —**नित्यकर्मेति** । 'वसन्ते वसन्ते ज्योतिषा यजेत, अहरहस्सन्ध्यामुपासी'तेत्यादयो विधयो व्यर्था एव । विधिं विनापि पूर्वकृतदुरितफलस्य नित्यकर्मानुष्ठानायासदुःखस्यावश्यमनुभोक्तव्यतया तत्प्रारब्धबलादेव नित्यकर्मसु प्रवृत्त्युपपत्तेरिति भावः । इदमेवाह—**उपभोगेनैवेति** । विधिं विनापि प्राप्तेनोपभोगेनैवेत्यर्थः । ज्वरादिदुःखोपभोगवदिति भावः । अप्राप्तार्थप्रापणे हि विधीनामानर्थक्याभावः । किं च नित्यकर्मानुष्ठानात्प्रत्यवायाप्राप्तिः फलमिति ब्रुवतस्तव नित्यकर्मानुष्ठाना-

कर्मणो दुःखं चेत्फलं नित्यकर्मानुष्ठानायासादेव तद्दृश्यते व्यायामादिवत्; तदन्यस्येति कल्पनानुपपत्तेः। जीवनादिनिमित्ते च विधानान्नित्यानां कर्मणां प्रायश्चित्तवत्पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन्पापकर्मणि निमित्ते यद्विहितं प्रायश्चित्तं न तु तस्य पापस्य तत्फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं; जीवनादिनिमित्तमपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव तत्फलं प्रसज्येत- नित्यप्रायश्चित्तयो-

---

दूदुःखं फलमिति वचनं व्याहतम्। व्याहतमप्ययुक्तं चेत्याह— किं चेति। श्रुतं फलं प्राजापत्यलोकादिकं यस्य तस्य श्रुतफलस्य नित्यकर्मणां पुण्यफलश्रवणादिति बोध्यम्। नित्यस्य कर्मणो दुःखं फलं चेत् तर्हीति शेषः। नित्यकर्मानुष्ठानायासात्तद्दुःखफलं दृश्यत एव। तत्र दृष्टान्तमाह— व्यायामादिवदिति। यथा व्यायामादेर्दुःखं फलं दृश्यते तद्वदित्यर्थः। एवं स्थिते तद्दृश्यमानं दुःखं फलमन्यस्य पूर्वकृतदुरितस्येति कल्पनाया अनुपपत्तेः।

अयं भावः— अश्रुतफलस्य व्यायामादेरिव श्रुतफलस्य नित्यकर्मणो दृष्टदुःखफलत्वकल्पनं तावदयुक्तम्। तत्रापि व्यायामादेरिव नित्यकर्मणोऽपि यदि दृष्टं दुःखं फलं तर्हि तत्कथं पूर्वकृतदुरितफलं स्यात्? नहि व्यायामगमनादिकृतं दुःखमन्यस्य दुरितस्येष्यते। एवं नित्यकर्मकृतमपि दुःखं न पूर्वदुरितफलं, किं तर्हि नित्यकर्मफलमेव- यथा व्यायामादिजन्यदुःखं व्यायामादिफलम्। तस्माच्छ्रुतफलस्य नित्यस्य दृष्टफलव्यायामादिवन्न दुःखं फलं, नापि नित्यकर्मानुष्ठानायासजन्यं दुःखं पूर्वोपार्जितदुरितफलं व्यायामादिजन्यदुःखवदिति भावः। इतश्च नित्यकर्मानुष्ठानं न पूर्वकृतदुरितफलमित्याह— जीवनेति। जीवनादिनिमित्ते नित्यानां कर्मणां विधानाच्च नित्यकर्मणां पूर्वकृतदुरितफलत्वं नोपपद्यते। प्रायश्चित्तवदिति दृष्टान्तं स्वयमेव विवृणोति— यस्मिन्निति। यस्मिन् पापकर्मनिमित्तेऽभोज्यभोजनादिपापकर्मरूपे निमित्ते यत्प्रायश्चित्तं चान्द्रायणादिकं शास्त्रेण विहितं तस्य पापस्य कर्मणस्तदेव प्रायश्चित्तं फलं न भवति। तद्वज्जीवनादिनिमित्ते विहितस्य नित्यस्य पूर्वकृतदुरितफलत्वं नोपपद्यत इति।

ननु पापनिमित्ते विहितस्य प्रायश्चित्तस्य पापफलत्वाभावेऽपि प्रायश्चित्तानुष्ठानायासदुःखस्य पापफलत्वमस्त्येव- पापस्य दुःखमेव फलमिति नियमात्। एवं जीवनादिनिमित्ते विहितस्य नित्यस्य पूर्वकृतदुरितफलत्वाभावेऽपि नित्यकर्मानुष्ठानायासदुःखस्य तत्फलत्वमस्त्येवेति शङ्कते— अथेति। तस्य प्रायश्चित्तं प्रति निमित्तभूतस्य पापस्यैव फलं प्रायश्चित्तदुःखमिति यदि त्वं ब्रूषे तर्हीति शेषः। जीवनादिनिमित्तमपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव फलं प्रसज्येत। पापनिमित्तविहितप्रायश्चित्तानुष्ठानायासजन्यं दुःखं यथा पापफलं तथा जीवनादिनिमित्तविहितनित्यकर्मानुष्ठानायासजन्यं दुःखं जीवनादिनिमित्तस्यैव फलं स्यात्; नतु पूर्वकृतदुरितस्येत्यर्थः। ननु नित्यस्य नैमित्तिकेन प्रायश्चित्तेन कथं साम्यमत आह— नित्येति। यथा पापनिमित्ते प्रायश्चित्तं विहितं, तथा जीवनादिनिमित्ते नित्यं विहितमिति नित्यप्रायश्चित्ते उभेऽपि नैमित्तिके एव। निमित्ते विहितं हि नैमित्तिकम्।

नतु निमित्तशब्दैक्येऽपि निमित्तार्थयोर्हेतुफलयोर्भेद एव । प्रकृते च प्रायश्चित्तस्य पापं निमित्तं हेतुः । नित्यकर्मणो जीवनादिकं निमित्तं फलं- पापनिवर्तकत्वात्प्रायश्चित्तस्य, जीवनादिनिर्वर्तकत्वाच्च नित्यस्य । तस्मान्न नित्यप्रायश्चित्तयोस्साधर्म्यमिति चेन्मैवम्—यथा पापनिमित्ते प्रायश्चित्तं विहितं, तथा जीवादिनिमित्ते नित्यं विहितमित्येतावदंशस्यैव विवक्षितत्वादिह नहि सर्वात्मना सादृश्यं वयं तयोर्ब्रूम इति । वस्तुतस्तु पापनिवृत्त्यर्थं विहितं प्रायश्चित्तं जीवनादिनिवृत्त्यर्थं विहितं नित्यमिति नित्यप्रायश्चित्तयोरविशेषानभ्युपगमेऽपि प्रायश्चित्तवत्पूर्वोपचितदुरितक्षयार्थं नित्यकर्मेति यदुक्तं मीमांसकेन तन्नोपपद्यत एव- प्रायश्चित्तस्य दुरितक्षयार्थत्वेऽपि नित्यस्य जीवनाद्यर्थत्वेन दुरितक्षयार्थत्वाभावात् । नित्यकर्मणां जीवनादिनिमित्ते च विधानादिति स्वेनैवोक्तत्वात् ।

नतु नित्यकर्मसु कानिचिद्दुरितक्षयार्थानि, कानि पुनर्जीवनाद्यर्थानि । यथा ब्राह्मणस्य यजनाध्ययनदानानि दुरितक्षयार्थानि, याजनाध्यापनप्रतिग्रहणानि जीवनाद्यर्थानीति चेन्मैवम्—यजनादीनां चान्द्रायणादिवद्दुरितक्षयार्थत्वे सति प्रायश्चित्तत्वप्रसङ्गेन नित्यत्वस्यैवाभावात् । यजनादीनां ब्राह्मणवर्णधर्मत्वेन तेषां दुरितक्षयार्थत्वकल्पनाऽयोगाच्च । न चाकरणे प्रत्यवायप्रापकत्वं नित्यत्वं, तत्प्रायश्चित्तस्य नास्तीति नित्यप्रायश्चित्तयोर्विशेषः । वर्णधर्माश्च दुरितक्षयार्था एवेति वाच्यं, प्रायश्चित्तस्याकरणे नरकपातलक्षणप्रत्यवायसत्त्वात् । अन्यथा प्रायश्चित्तस्याकर्तव्यत्वापातात् । वर्णधर्माणां दुरितक्षयार्थत्वे तैरेव दुरितक्षये कृते सति प्रायश्चित्तविधिवैयर्थ्यप्रसङ्गाच्च ।

नतु इहजन्मकृतदुरितक्षयार्थानि, प्रायश्चित्तानि तदकरणे च दुरितफलस्यैव जन्मान्तरेऽनुभवः; न तु प्रायश्चित्ताकरणादपूर्वं किञ्चिद्दुरितमुत्पद्यते । नित्यानि तु जन्मान्तरकृतदुरितक्षयार्थानि, तदकरणे चापूर्वं किञ्चिद्दुरितमुत्पद्यत इति नित्यप्रायश्चित्तयोर्भेद इतिचेत्, अस्तु—किं प्रायश्चित्तनिवर्त्यमिव नित्यकर्मनिवर्त्यं दुरितं फलदानायानारब्धमुतारब्धम् ? आद्ये- नित्यकर्मभिस्सञ्चितदुरितक्षयानुपपत्तौ मोक्षानुपपत्तिः । द्वितीये- प्रायश्चित्तवदिति दृष्टान्तानुपपत्तिः । न हि हिंसादिलक्षणमिहजन्मनि कृतं दुरितं फलदानायारब्धं भवितुमर्हति यत्प्रायश्चित्तेन निवर्त्यते । फलदानायेदं मयाकृतं दुरितमारब्धं मा भूदिति हि तस्य प्रायश्चित्तं करोति पापी । किं च फलदानायारब्धस्य दुरितस्य फलोपभोगेनैव क्षयः । 'प्रारब्धं भोगतो नश्ये'दिति शास्त्रादिति कृत्वा तत्क्षयार्थं नित्यकर्मानुष्ठानं व्यर्थमेव; तद्विधिश्च व्यर्थ एव ।

नच जन्मान्तरकृतस्य दुरितस्य नित्यकर्मानुष्ठानायासजन्यदुःखोपभोगेनैव क्षय इति वाच्यं, अन्यव्यायामादिदुःखोपभोगेन तस्य न क्षय इति वक्तुमयुक्तत्वादन्यदुःखोपभोगस्य जन्मान्तरकृतदुरितहेतुकत्वाभावस्य सिद्धत्वेन तद्दुःखस्य निर्निमित्तकत्वापत्तेश्च । अथैतद्दोषपरिहाराय सर्वमपि दुःखं पूर्वकृतदुरितफलमेवेत्यभ्युपगम्यते तर्हि नित्यकर्मैवानुष्ठाय तदायासदुःखेनैव पूर्वकृतदुरितं क्षपणीयमिति किमुच्यते ? किं तर्हि काम्यकर्माप्यनुष्ठाय तद्दुःखेन तद्दुरितं क्षपणीयमेव । अपि च प्रारब्धवशाद्यथा नित्यकर्मानुष्ठानायासदुःखप्राप्तिस्तथा तद्वशादेव काम्यकर्मानुष्ठानायासदुःखप्राप्तिरिति कृत्वा

नैमित्तिकत्वाविशेषात् । किं चान्यत् नित्यस्य काम्यस्य चाग्निहोत्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितस्य फलं, नतु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत । तथा च सति नित्यानां फलाश्रवणात्तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पना चानुपपन्ना, एवंविधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम्। विरोधाच्च, विरुद्धं चेदमुच्यते—नित्यकर्मण्यनुष्ठीयमानेऽन्यस्य कर्मणः फलं भुज्यत इत्यभ्युपगम्यमाने स एवोपभोगो नित्यस्य कर्मणः फलमिति नित्यस्य कर्मणः फलाभाव इति च

---

कथं काम्यकर्मदुःखस्य परित्यागश्शक्यते कर्तुम् ? तदिदमभिप्रेत्याह—किं चान्यदिति । अन्यदपि दूषणमस्तीत्यर्थः । नित्यस्य काम्यस्य वा सर्वस्यापि कर्मणोऽनुष्ठानायासजन्यं दुःखं पूर्वोपात्तदुरितफलमेव, नतु नित्यानुष्ठानजन्यं दुःखं पूर्वकृतदुरितफलं, काम्यानुष्ठानजन्यं दु खं तु पूर्वकृतदुरितफलं न भवतीति विशेषोऽस्ति । इति हेतोस्तदपि काम्यानुष्ठानदुःखमपि पूर्वकृतदुरितफलं प्रसज्येत स्यादित्यर्थः । भवतु काम्यानुष्ठानदुःखस्यापि पूर्वकृतदुरितफलत्वप्रसङ्गः को दोषस्तत्रेत्यत आह—तथा च सतीति । काम्यानुष्ठानदुःखस्यापि दुरितफलत्वे सतीत्यर्थः । अर्थापत्तिकल्पनेति । पीनो देवदत्तो दिवा न भुंक्त इत्यत्र दिवाभोजनाभावेऽपि प्राप्तस्य पीनत्वस्यान्यथानुपपत्त्या रात्रिभोजनमर्थापत्तिप्रमाणेन यथा कल्प्यते तद्वन्निष्फलनित्यकर्मविधानान्यथानुपपत्त्या अर्थापत्तिप्रमाणेन कल्पितं यन्नित्यकर्मानुष्ठानदुःखस्य पूर्वकृतदुरितफलत्वं कथं तदुपपद्यते ? सफलकाम्यकर्मानुष्ठानजन्यदुःखस्यापि पूर्वकृतदुरितफलत्वेन निष्फलनित्यकर्मानुष्ठानजन्यदुःखमेव पूर्वकृतदुरितफलमिति वक्तुमशक्यत्वादिति भावः । भवत्वेवमर्थापत्तिकल्पनाया अनुपपत्तिः, किं ततोऽत आह—एवमिति । अर्थापत्तिकल्पनाया अनुपपन्नत्वे सतीत्येवंशब्दार्थः । नित्यकर्मणोऽनुष्ठानायासदुःखव्यतिरिक्तं फलमस्ति, नित्यकर्मविधेरन्यथोपपत्त्यभावात्काम्यकर्मवदित्यनुमानाच्च नित्यानां फलवत्त्वसिद्धिः । चकाराच्छास्त्रादपीत्यर्थः । विरोधाच्चेति । नित्यकर्मणः फलाभाववचनस्य विरुद्धत्वाच्चेत्यर्थः । यद्वा अर्थापत्तिकल्पनाया अनुपपत्तावेकं कारणमुक्तं काम्यानुष्ठानदुःखस्यापि पूर्वकृतदुरितफलत्वप्रसक्तिरूपम् । कारणान्तरमाह—अनुमानाच्चोक्तार्थापत्तिकल्पनाऽनुपपन्नेत्यर्थः । अनुमानं च दर्शितम् । यदि नित्यकर्मानुष्ठानस्य प्रारब्धदुरितकृतनित्यानुष्ठानायासदुःखमेव फलं तर्हि प्रारब्धवशादेव तद्दुःखानुभवसिद्धौ व्यर्थमेव नित्यकर्मविधानमिति नित्यकर्मविधानान्यथानुपपत्तिरेव नित्यानां दुःखातिरिक्तफलसद्भावं साधयतीत्यर्थः । कारणान्तरमाह—विरोधाच्चेति । विरोधाच्चार्थापत्तिकल्पना अनुपपन्नेत्यर्थः । विरोधमेव प्रकटयति—विरुद्धं चेदमुच्यत इति । किं तदत आह—नित्येति । नित्यकर्मणि क्रियमाणे सत्यन्यस्य पूर्वकृतदुरितस्य कर्मणः फलं भुज्यत इत्यभ्युपगम एको विरोधः । तथा अभ्युपगम्यापि स एव पूर्वकृतदुरितफलभूतस्य नित्यकर्मानुष्ठानायासजन्यदुःखस्योपभोगो नित्यकर्मणः फलमितिवचनमन्यो विरोधः । एवं नित्यस्य दुःखं फलमित्यभ्युपगम्यापि नित्यकर्मणः फलवत्त्वाभाव इति वचनं तृतीयो विरोधः । तस्माद्विरुद्धं तदिदं

विरुद्धमुच्यते । किंच काम्याग्निहोत्रादावनुष्ठीयमाने नित्यमप्यग्निहोत्रादितन्त्रेणैवानुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलमुपक्षीणं स्यात्- तत्तन्त्रत्वात् । अथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि; तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत । न च तदस्ति- दृष्टविरोधात् । न हि काम्यानुष्ठानायासदुःखात्केवलनित्यानुष्ठानायासदुःखं भिन्नं

---

यत्तयोच्यते नित्यानां फलाश्रवणान्नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमिति । दूषणान्तरमाह— किं चेति । अग्निहोत्रादिकर्मणां नित्यत्वकाम्यत्वप्रयुक्तो न कोऽपि स्वरूपभेदः । क्रियाकारक-मन्त्रोपकरणकलापस्य तुल्यत्वान्नित्ये काम्ये चाग्निहोत्रादिकर्मणि । किं तर्हि तदनुष्ठातुस्सकामत्वनिष्का-मत्वाभ्यामेव नित्यकाम्ययोर्भेदः । 'वसन्ते वसन्ते ज्योतिषा यजे'तेति विहितो नित्य एव ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजे'तेति स्वर्गकामिना अनुष्ठीयमानस्सन् काम्यो भवति । एवं सति नित्या ज्योतिष्टोमात्काम्यस्य ज्योतिष्टोमस्य कामांश एक एवाधिकस्तदतिरिक्तस्सर्वोऽप्यविशिष्ट एवेति कृत्वा काम्ये तस्मिन्ननुष्ठीयमाने सति नित्योऽप्यनुष्ठित एव । ततश्च काम्यकर्मणोऽपि नित्यकर्मण इव नित्यानुष्ठानायासदुःखं फलमेवेति कृत्वा नित्यानुष्ठानायासदुःखेनैव काम्यकर्मणोऽपि फलस्योपक्षयः स्यात्- आयासदुःखतन्त्रत्वात्काम्यफलस्य ।

अयं भावः—नित्यानुष्ठानायासदुःखोपभोगद्वारा यथा नित्यस्य कृतस्य कर्मणः क्षयस्तथा काम्यस्यापीति कृत्वा नातिरिक्तं स्वर्गादिलक्षणं फलं भवितुमर्हति काम्यस्यापीति । ननु नित्यस्यै-वानुष्ठानायासदुःखं फलं, नतु काम्यस्य तस्य स्वर्गादिफलश्रवणादित्याह—अथेति । अथ काम्याग्नि-होत्रादिफलं स्वर्गादिरूपमन्यदेवेति यदि ब्रूषे तर्हीति शेषः । तदनुष्ठानेति । काम्यानुष्ठानेत्यर्थः । भिन्नमिति । नित्यानुष्ठानायासदुःखादिति भावः । अभिन्नत्वे तु तेनैव काम्यस्य क्षयस्स्यादिति भावः । ननु भिन्नं किं तत्र आह—न चेति । तन्नित्यानुष्ठानायासदुःखात्काम्यानुष्ठानायासदुःखस्य भिन्नत्व-मित्यर्थः । नचास्ति नैवास्ति । कुतः ? दृष्टविरोधात्, प्रत्यक्षविरोधाद्दृष्टविरोधमेवोपपादयति—न हीति । हिः प्रसिद्धौ । भिन्नं दुःखं न दृश्यत इत्यन्वयः ।

अयं भावः—यदि नित्यकाम्याग्निहोत्रयोर्न स्वरूपभेदः, नाप्यनुष्ठानायासदुःखरूपफलभेदः, अनुष्ठानायासदुःखेन नित्यस्येव काम्यस्य कुतो न क्षयः ? नच स्वर्गादिफलवत्त्वादक्षय इति वाच्यं, यदि दुःखोपभोगात्काम्यस्य क्षयो न स्यात्तर्हि स्वर्गादिफलवत्त्वं स्यात् । क्षयाभाव एव नोपपद्यते । नित्यस्यापि कृतस्य कर्मणः फलोपभोगेन क्षय इत्यभ्युपगमादनुष्ठानायासदुःखस्य च कर्मफलत्वात् । एव-मनुष्ठानदुःखोपभोगेनैव क्षीणस्य कामस्य कथं स्वर्गादिफलप्रदत्वम् ? न ह्यंकुरमुत्पाद्य क्षीणं बीजमंकुरा-न्तरमुत्पादयति । तस्मात्स्वर्गादिरूपं काम्याग्निहोत्रफलमन्यदेवेति वक्तुं न शक्यते । अथैतत्साधनाय नित्याग्निहोत्रानुष्ठानायासदुःखमेव फलं, नतु काम्याग्निहोत्रानुष्ठानायासदुःखमिति कल्प्यते तर्हि किं नित्यदुःखात्काम्यदुःखं भिन्नमुताभिन्नम् ? आद्ये- प्रत्यक्षविरोधः । द्वितीये- काम्यदुःखफलमेवेति ।

दृश्यते। किं चान्यत्- अविहितमप्रतिषिद्धं च कर्म तत्कालफलं, नतु शास्त्रचोदितं प्रतिषिद्धं वा

---

तस्मात्काम्यस्याप्यग्निहोत्रादेर्नित्यस्येवानुष्ठानायासदुःखमेव फलं, नतु स्वर्गादिकमिति कृत्वा कथं काम्यस्य फलवत्त्वं नित्यस्य तदभावश्चोच्यते त्वया ?

दूषणान्तरमाह—किं चान्यदिति । यत्कर्म शास्त्रेणाविहितं यच्च शास्त्रेणाप्रतिषिद्धं तदेव व्यायामादि लौकिकं कर्म, तत्कालफलं कर्मसमकालदृष्टफलकमित्यर्थः । यत्पुनश्शास्त्रेण चोदितं प्रतिषिद्धं वा कर्म तन्न तत्कालफलं भवेत् । अत एव हि 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते, एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता' इति वेदस्य शास्त्रस्य लक्षणं स्मर्यते । नहि दृष्टस्य फलस्योपायः प्रत्यक्षानुमित्यविषयस्स्यात् ; किं त्वदृष्टस्य फलस्यैव । तस्माददृष्टफलसाधनबोधनेनैव शास्त्रमर्थवत् । नहि 'ऋतौ भार्यामुपेयात् , न कलञ्जं भक्षयेत् , न सुरां पिबे'दित्यादिविधिनिषेधवाक्यानां किमपि दृष्टं फलमस्ति । नच ऋतौ भार्योपगमनात्सुखं दृश्यत एवेति वाच्यं. अनृतौ भार्यागमनादपि दर्शनादृतौ तद्गमनविधानस्य वैयर्थ्यादिति । ननु शास्त्रचोदितं शास्त्रप्रतिषिद्धं च कर्मापि तत्कालफलमेवेत्यत आह— अन्यथेति । शास्त्रचोदितप्रतिषिद्धयोरपि तत्कालफलत्वे सतीत्यर्थः । स्वर्गादिष्वदृष्टफलेषु शासनोद्यमो न स्याच्छास्त्रस्येति शेषः । ईश्वरस्येति वा । अदृष्टफलशासनेति पाठे, स्वर्गादिषु कामितेषु विषयेऽदृष्टं स्वर्गादिलक्षणं फलं येषां तेषामदृष्टफलानां ज्योतिष्टोमादिकर्मणां शासनोद्यम इत्यर्थः। स्वर्गाद्यदृष्टफलशासनोद्यम इति पाठस्समीचीनः । तस्मान्नित्यस्य काम्यस्य वा कर्मणश्शास्त्रविहितस्य न तत्कालफलत्वमितिकृत्वा दृष्टमनुष्ठानायासदुःखं न तत्फलं भवितुमर्हति । दुःखार्थं कर्मणामविहितत्वाच्छास्त्रेण । यदि दुःखायैव विहितानि कर्माणि स्युस्तर्हि न कोऽपि तत्र प्रवर्तेत इति वैयर्थ्यमेवापि स्याच्छास्त्रस्य ।

ननु न व्यर्थं शास्त्रं- पूर्वकृतदुरितक्षयः कर्मानुष्ठानदुःखोपभोगेनैव कर्तव्य इति विधानादिति चेन्नैवम्—किं दुरितक्षयस्सामान्यदुःखोपभोगेन भवति? उत विशेषदुःखोपभोगेन ? आद्ये- कर्मविधिवैयर्थ्यम् - शिरःपाषाणवहनादिदुःखेनापि दुरितक्षयसत्त्वात् । द्वितीये- कर्मानुष्ठानायासदुःखातिरिक्तद्वन्द्वरोगादिदुःखं न स्यात्पुरुषस्य । सति तस्मिन्दुरितक्षयस्यावर्जनीयत्वात् । नच पूर्वकृतदुरितक्षयः कर्मानुष्ठानायासदुःखोपभोगेनापि कर्तव्य इति शास्त्रमर्थवदिति वाच्यं, द्वन्द्वरोगादिदुःखोपभोगेनैव क्षीयमाणस्य दुरितकर्मणः क्षयार्थं नित्यादिकर्मविधानानर्थक्यात् । नच कर्मानुष्ठानायासदुःखक्षपणीयं पूर्वकृतं दुरितमन्यत् । द्वन्द्वरोगादिदुःखोपभोगक्षपणीयं दुरितमपरम् । यथा जठररोगदुःखोपभोगक्षपणीयं दुरितमन्यच्छिरःपाषाणवहनादिदुःखक्षपणीयमपरं तद्वत् । अत एव- 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्ह'तीति स्मृतिरपि सङ्गच्छते । अग्निहोत्रादिकर्मानुष्ठानायासजन्यदुःखोपभोगनिवर्त्यपातकाभावाच्छूद्रस्योपनयनादिसंस्काराभावः । कर्मार्थो हि स संस्कारः । द्विजेषु तु तादृशपातकसत्त्वात्संस्कारविधानमिति वाच्यं, द्वन्द्वरोगादितुल्यमग्निहोत्रादिकं विहितं कर्म । सपापेभ्यो द्विजेभ्यो

त्काल फलं भवेद्यदि तदा स्वर्गादिष्वप्यदृष्टफलशासने चोद्यमो न स्यात्, अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमात्रेणोपक्षयो नित्यानां; स्वर्गादिमहाफलत्वं काम्यानाम् । अङ्गेतिकर्तव्यताद्याधिक्ये त्वसति फलकामित्वमात्रेणेति न शक्यं कल्प-

निष्पापश्शूद्र एवाधिक इति कल्पयितुस्तव साहसस्य वाचामगोचरत्वात् । सत्त्वस्वभावस्य ब्राह्मणस्य सपापत्वं तमस्स्वभावस्य शूद्रस्य निष्पापत्वं च विचित्रायते । एवं सति संस्कारानर्हाणां चण्डालपक्षिमृगस्थावरादीनां तमस्स्वभावानामपि निष्पापत्वं स्यात् । नचेष्टापत्तिः- 'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नर' इति स्मृतिविरोधात् । शूद्रादीनां पापस्वभावात्, ब्राह्मणादीनां पुण्यस्वभावादेव कर्माधिकारो ब्राह्मणादीनाम्; वेदाधिकारश्च । उक्तं हि भगवतैव-'तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो मम दैवत'मिति, स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति । किंच निष्पापत्वाच्छूद्रस्संस्कारानर्हस्सपापत्वाद्विजस्संस्कारार्ह इति महदसङ्गतम् । संस्कारानर्हत्वस्यैव पापकार्यत्वात् । नहि यजनादिकर्मार्हत्वं ब्राह्मणस्य पापफलमिति वक्तुं शक्यते । तथासति गमनादिकर्मार्हत्वमपि चराणां भूतानां पापफलमेव, स्थावराण्येव महापुण्यानीति वक्तव्यत्वात् । तस्मात्तमस्स्वभावत्वेन सपापत्वादेव शूद्राणामुपनयनाद्यनर्हत्वं, नतु निष्पापत्वात् । नहि शतवारमुपदिष्टोऽपि शूद्रो वेदाक्षरमुच्चारयितुं क्षमते । नहि तत्पुण्यस्य फलमन्यथा भाग्याक्षरोच्चारणाशक्तिर्मूकस्यापि पुण्यफलं स्यात् । न शूद्र इति वचनस्य तु देवर्षिपितृऋणात्मकं पातकं किंचिदपि शूद्रे नास्ति । द्विजो हि जन्मनैव त्रिभिः ऋणवान् जायते । स शूद्रः संस्कारं च नार्हति । तमस्स्वभावत्वेनातिपापित्वादित्यर्थः । एवं सत्त्वस्वभावस्य ब्राह्मणस्य विहितं यजनादिलक्षणं नित्यकर्म कथं द्वन्द्वरोगादिवत्पापफलं भवितुमर्हति ? यदि नित्यकर्म यजनादिकं पापफलं स्यात्तर्हि तमस्स्वभावस्यैव पापीयसश्शूद्रस्य चण्डालस्य वा तद्विहितं भवेत् । नापि श्रुतमहाफलस्य नित्यकर्मणः पूर्वकृतपापफलत्वं वक्तुमुचितम् । नहि पूर्वकृतदुरितफलस्य द्वन्द्वरोगादेर्महाफलत्वं श्रूयत इति ।

ननु काम्यानामेव महाफलत्वश्रवणं, नतु नित्यानामिति काम्यकर्मणां न द्वन्द्वरोगादितौल्यं; किंतु नित्यानामेव । नित्यानि हि अनुष्ठानायासदुःखोपभोगमात्रेण क्षीयन्ते । एवं दृष्टदुःखफलकत्वादृष्टफलाभावाच्च नित्यानि द्वन्द्वरोगादितुल्यान्येवेति कृत्वा पूर्वकृतदुरितफलमेव नित्यानुष्ठानमिति शङ्कायामाह—अग्निहोत्रादीनामिति । अग्निहोत्रादीनामेव नित्यानां कर्मस्वरूपाविशेषे सत्यप्यनुष्ठानायासदुःखमात्रेणोपक्षयः, तेषामेव काम्यानामङ्गेतिकर्तव्यताद्याधिक्ये असत्यपि फलकामित्वमात्रेण स्वर्गादिमहाफलत्वमिति वक्तुं न शक्यत इति शेषः । यद्वा स्वर्गाद्यदृष्टफलशासनोद्यमाभावरूपदोषपरिहाराय शास्त्रचोदितं काम्यमेव तत्कालफलं न भवति, किंत्वदृष्टफलकं भवति । नित्यं तु दृष्टफलकमेवेति ब्रूम इति शङ्कायामाह—अग्निहोत्रादीनामिति । एतस्य कर्मणोऽङ्गान्येवं कर्तव्यानीति बोधितस्स अङ्गेतिकर्तव्यता । आदिपदात्कारकभेदादिग्रहणम् । तदादीनामाधिक्ये विशेषे । यदि विवाहोपनयनयोरिव कर्मस्वरूपभेदः, अङ्गेतिकर्तव्यताभेदः, कारकादिभेदश्च स्यान्नित्यकाम्याग्निहोत्रयो-

यितुम् ; तस्माच्च न नित्यानां कर्मणामदृष्टफलाभावः कदाचिदप्युपपद्यते । अतश्चाविद्यापूर्वकस्य कर्मणो विद्यैव शुभस्याशुभस्य वा क्षयकारणमशेषतः, न नित्यकर्मानुष्ठानम् । अविद्याकामबीजं हि सर्वमेव कर्म । तथा चोपपादितमविद्वद्विषयं कर्म, विद्वद्विषया च सर्व-

---

स्वर्गोऽनुष्ठानायासदुःखेन नित्यस्य क्षयः, काम्यस्य तु नेति वक्तुं शक्येत नतु तथास्ति । तस्मात्तद्वचनमयुक्तमेव । नहि फलकामित्वमात्रेण कर्मस्वरूपाद्यभेदेऽपि काम्यस्य दुःखमात्रेण न क्षय इति वक्तुं शक्यते । फलकामित्वस्य पुरुषनिष्ठस्य कर्मणस्स्वाभाविकशक्त्यतिरिक्तशक्तिजननायोगात् । दुःखमात्रजनकस्य कर्मणोऽग्निहोत्रादेः कथं पुरुषगतकामित्वमात्रेण स्वर्गरूपमहाफलजनकत्वसम्भवः ! एवं दुःखमात्रफलकेनाग्निहोत्रादिकर्मणा स्वर्गमारोढुमिच्छापि पुरुषस्य तुरगमारुह्य गगने विहर्तुमिच्छेव व्यर्थैव । ततश्च 'ज्योतिष्टोमेन स्वर्गकामो यजे'तेति विधिरपि व्यर्थैव- तुरगेण गगनविहारकामस्सञ्चरेदितिवत् । नहि पुरुषस्य गगनविहारकामित्वमात्रेण तुरगस्य भूसञ्चारक्षमस्य गगनसञ्चारशक्तिस्सम्भवति येन पुरुषस्य स्वर्गकामित्वमात्रेण कर्मणोऽग्निहोत्रादेर्दुःखमात्रफलकस्य स्वर्गदानशक्तिस्सम्भवेत् । तस्माच्छास्त्रचोदितस्य नित्यस्याग्निहोत्रादेर्दुःखमेव दृष्टं फलं, तस्यैव काम्यस्य स्वर्गः फलमितिवचनमयुक्तमेव ।

तस्माच्चेति । काम्यानामग्निहोत्रादीनां नित्याग्निहोत्राभिन्नस्वरूपाणां स्वर्गादिमहाफलाभ्युपगमादित्यर्थः । नित्यानां कर्मणामदृष्टफलाभावः कदाचिदपि नोपपद्यत इत्यन्वयः । एवं नित्यकर्मणामदृष्टफलाभावानुपपत्तावदृष्टफले सति तेन बन्धस्स्यादेवेति न नित्यकर्मानुष्ठानान्मोक्षः । ननु नित्यकर्मणामदृष्टफलमस्ति कृतदुरितक्षयरूपमत एव हि प्राज्ञैस्सङ्कल्प्यते—उपात्तदुरितक्षयार्थमिति । तच्च दुरितमिहजन्मनि जन्मान्तरेषु वा कृतं भवति । उभयविधस्यापि दुरितस्य नित्यैः क्षयसम्भवात्, प्रारब्धदुरितं तु न नित्यैरपि क्षीयते- तस्य भोगत एव नाशात् । सच भोगो द्वन्द्वादिरोगदुःखभोगादिरूपः । एवंस्थिते यातनाशरीरपशुपक्ष्यादिजन्मप्रददुरितनिबर्हणरूपमहाफलस्य नित्यस्य कर्मणः संसारनाशहेतुत्वमेव, न तु बन्धहेतुत्वमिति कृत्वा नित्यकर्मानुष्ठानान्मोक्ष एवेति शङ्कायां नित्यकर्मानुष्ठानादशुभस्य शुभस्य वा कर्मणः क्षयो न सम्भवतीत्याह — अतश्चेति । अस्माच्च कारणादित्यर्थः । किं तत्कारणमत आह—अविद्येति । अविद्यापूर्वकस्य शुभस्याशुभस्य वा कर्मणोऽशेषतः क्षयकारणं विद्यैव, न नित्यकर्मानुष्ठानमिति हेतोरित्यर्थः । कुतो नित्यकर्मानुष्ठानान्न क्षयोऽत आह—अविद्याकामेति । हि यस्मात्सर्वमेवेहजन्मनि जन्मान्तरे वा कृतं नित्यकाम्यप्रतिषिद्धप्रायश्चित्तादिरूपं समस्तमपि कर्म अविद्याकामबीजमविद्या च कामश्चाविद्याकामौ बीजं हेतुर्यस्य तदविद्याकाममूलकमित्यर्थः । यथा शुभमशुभं वा कर्माविद्यापूर्वकं तथा नित्यकर्माप्यविद्यापूर्वकमेवेति कृत्वा अविद्यापूर्वकस्य कर्मणश्शुभाशुभलक्षणस्य कथमविद्यापूर्वकमेव नित्यकर्म नाशकं स्यात् ! नहि तमोमूलकस्य सर्पादिभयस्य तमोमूलकमेव पिशाचादिभयं निवर्तकं भवति । वस्तुतस्तु नित्यकर्मभिर्दुरितक्षयसम्भवेऽपि सुकृतक्षयो न सम्भवतीति कृत्वा दुरितस्यापि समूलं क्षयो

कर्मसन्न्यासपूर्विका ज्ञाननिष्ठा- 'उभौ तौ न विजानीतः, वेदाविनाशिनं नित्यं, ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां, अज्ञानां कर्मसङ्गिनां, तत्त्ववित्तु महाबाहो....गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते, सर्वकर्माणि मनसा सन्न्यस्यास्ते, नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्, अर्थादज्ञः करोमीति, आरुरुक्षोः कर्म कारणं आरूढस्य योगस्थस्य शम

---

न सम्भवति । दुरितमूलस्याज्ञानस्य नित्येन क्षयासम्भवात्सति च मूले सति च सुकृतकर्मपुञ्जे कथं पुरुषस्य मोक्षस्स्यान्नित्यानुष्ठानमात्रेण न कथमपीति नित्यस्य दुरितक्षयार्थत्वाभ्युपगमेऽपि न मुक्तिस्तस्मादिति बोध्यम् । अत एवाशेषत इत्युक्तं भाष्यकृद्भिः । अशेषतो निश्शेषतो मूलरूपाज्ञानस्यावशेषो न भवति यथा तथेत्यर्थः ।

नन्वविद्यामूलस्य कर्मणोऽविद्यामूलं कर्म न नाशकमिति नियमो न सिध्यति, अविद्यामूलस्याभोज्यभोजनादिलक्षणपापकर्मणोऽविद्यामूलेन चान्द्रायणादिलक्षणेन प्रायश्चित्तेन कर्मणा क्षयसम्भवादन्यथा प्रायश्चित्तकाण्डस्य धर्मशास्त्रान्तर्गतस्य वैयर्थ्यापातादितिचेत्, मैवम्—अविद्यामूलस्य कर्मणोऽविद्यामूलं कर्म न नाशकमित्येतावानेव नियमो नास्माभिरभ्युपेयते, किं तर्ह्यविद्यामूलस्य कर्मणोऽविद्यामूलं कर्म निश्शेषतो न नाशकमिति, ततो न दोषः- अज्ञानस्य मूलस्य वा शेषोऽस्तीत्युक्तत्वात् । नच मूलमप्यज्ञानं कुतो न नाशयति कर्मेति वाच्यं, अज्ञानजन्यत्वात्कर्मणः । न हि मृण्मयो घटो मृदं नाशयति, येनाज्ञानमयं कर्माज्ञानं नाशयेत् । नन्वज्ञानात्कृतमभोज्यभोजनादिकं दुरितं, तत्प्रायश्चित्तं चान्द्रायणादिकं तु ज्ञानादेव क्रियते । तथा नित्यकर्मापीतिकृत्वा निवर्तकं कर्म ज्ञानमूलकमेवेत्यज्ञानमूलस्य कर्मणो निश्शेषतः क्षय उपपद्यते । ज्ञानमूलेन नित्येन कर्मणेति शङ्कायां मैवं वादीः । अविद्याकामबीजमेव सर्वं कर्म । यथैवं तथोपपादितं भगवतेहैवेत्याह—तथेति । किमुपपादितमत आह—अविद्वदिति । अविद्वानविद्यावान् स विषय आश्रयो यस्य तदविद्वद्विषयं कर्म । सन्न्यासपूर्विका सर्वकर्मसन्न्यासमूला ज्ञाननिष्ठा तु विद्वद्विषयेत्युपपादितमित्यर्थः । कैर्वाक्यैरुपपादितोऽयमर्थोऽत आह—उभावित्यादि । 'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यत' इति, 'वेदाविनाशिनं नित्यं य एनमजमव्ययम् । कथं स पुरुषः पार्थ ! कं घातयति हन्ति कम् ॥' इमौ श्लोकौ ज्ञानिनस्सर्वकर्माभावं दर्शयतः । ज्ञानयोगेनेति श्लोको ज्ञानिनां ज्ञानमज्ञानां कर्म च विभज्य दर्शयति—अज्ञानामिति । तत्त्ववित्त्वितिवचनद्वयमज्ञानां कर्मसङ्गो नतु ज्ञानिनामिति दर्शयति—सर्वकर्माणीति । 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववि'दिति वचनद्वयं सर्वकर्मसन्न्यासं दर्शयति विदुषः—अज्ञः करोमीति । 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यत' इति श्लोकेनाज्ञस्यैव कर्तृत्वमुक्तमिति भावः । 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यत' इति श्लोकेन योगमारुरुक्षोरज्ञस्य कर्मसाधनं, योगारूढस्य प्राज्ञस्य तु सर्वकर्मसन्न्यास एवेत्युक्तमित्यर्थः ।

एव कारणं, उदारास्त्रयोऽप्यज्ञाः, ज्ञानी त्वात्मैव मे मतं, अज्ञाः कर्मिणो गतागतं कामकामा लभन्ते, अनन्याश्चिन्तयन्तो मां, नित्ययुक्ता यथोक्तमात्मानमाकाशकल्पमकल्मषमुपासते, ददामि बुद्धियोगं तं येन मामुपयान्ति ते' अर्थान्न कर्मिणोऽज्ञा उपयान्ति। भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणोऽज्ञाः, ते उत्तरोत्तरहीनफलत्यागावसानसाधनाः। अनिर्देश्याक्षरोपासकास्तु 'अद्वेष्टा सर्वभूताना'मित्यध्यायपरिसमाप्त्युक्तसाधनाः क्षेत्राध्यायाद्यध्याय-

---

उदारा इति। 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ। उदारास्सर्व एवैते ज्ञानी त्वात्मैव मे मत'मिति श्लोकेनाऽऽर्तादयस्त्रयोऽज्ञा उदाराः, ज्ञान्येक एव ममात्मेति भगवता ज्ञानिन एव स्तुतत्वादात्मत्वेनात्मनश्चाकर्तृत्वादकर्तृत्वं ज्ञानिनस्सिद्धं; अज्ञानां च त्रयाणामनात्मत्वेन कर्तृत्वं च सिद्धम्। अज्ञा इति। 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त' इतीहानुसन्धेयम्। अनन्या इति। 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ तेषां नित्याभियुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥' इतीहानुसन्धेयम्। अर्थादिति। बुधा मामुपयान्तीत्युक्तत्वादिति भावः। अज्ञा इत्यादिना ग्रन्थेन अज्ञानां कर्मिणामेव यज्ञानुष्ठानं स्वर्गादिफलप्राप्तिः पुनरावृत्तिश्च। ज्ञानिनां सन्न्यासिनां त्वात्मभजनमात्मप्राप्तिरपुनरावृत्तिश्चेति सिद्धमिति बोध्यम्।

फलितार्थमाह—भगवदिति। ये भगवत्कर्मकारिणो भगवद्विहितं नित्यं कर्म भगवदाराधनबुद्ध्या ये कुर्वन्ति ते भगवत्कर्मकारिण इत्युच्यन्ते; युक्ततमास्समाहितचित्तास्तेऽप्यज्ञाः कर्मिण उत्तरोत्तरहीनफलत्यागावसानसाधना भवन्ति। उत्तरस्मादुत्तरस्माद्भगवच्चित्तसमाधानाभ्यासादिरूपाद्धीनोऽपकृष्टः फलत्यागोऽवसानं परिसमाप्तिर्यस्य तदुत्तरोत्तरहीनफलत्यागावसानं साधनं येषां ते तथोक्ता भवन्ति। 'अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय॥ अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव। अथैतदप्यशक्तोऽसि सर्वकर्मफलत्यागं कु'र्विति चित्तसमाधानाद्यशक्तस्याज्ञस्य फलत्यागविधानादज्ञा एते कर्मिण इति भावः। अनिर्देश्याक्षरोपासका अनिर्देश्यमक्षरमात्मतत्त्वं तस्योपासकास्तु 'अद्वेष्टा सर्वभूताना'मित्यारभ्याऽध्यायपरिसमाप्तिपर्यन्तमाध्यायपरिसमाप्त्युक्तानि साधनानि सर्वभूतद्वेषाभावमैत्रकरुणनिर्ममत्वनिरहङ्कारत्वसमदुःखसुखत्वसन्तुष्टत्वप्रमुखानि येषां ते तथोक्ताः। क्षेत्राध्यायाद्यध्यायत्रयोक्तानि- 'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्। आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रह' इत्यादीनि, 'न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति। उदासीनवदासीनो गुणैर्यो न विचाल्यत' इत्यादीनि, 'निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामा' इत्यादीनि च येषां ते तथोक्ताश्च भवन्ति। एवं ज्ञानिनां कर्माभावादेव 'अनिष्टमिष्ट

तयोक्तज्ञानसाधनाश्च, अधिष्ठानादिपञ्चहेतुकसर्वकर्मसन्न्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति । भवत्येवान्येषामज्ञानां कर्मिणामसन्न्यासिनामित्येष गीताशास्त्रोक्तस्य कर्तव्याकर्तव्यार्थस्य विभागः ।

---

मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचि'दितिश्लोकेनाऽनिष्टादिफलत्रयाभावः । अज्ञानां कर्मसत्त्वादेव तत्फलत्रयसद्भावश्चोक्त इत्याह—अधिष्ठानादीति । 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चम'मित्युक्तमधिष्ठानादिपञ्चकं हेतुर्येषां तेषामधिष्ठानादिपञ्चकहेतुकानां सर्वेषां नित्यानां काम्यानां प्रतिषिद्धानां च कर्मणां सन्न्यासिनां त्यागशीलानामेवंत्यागित्वे हेतुमाह—आत्मेति । आत्मा एक अकर्ता चेत्येवंरूपज्ञानवतामत एव परस्यामुत्कृष्टायां कर्मनिष्ठात इति भावः । ज्ञाननिष्ठायां वर्तमानानामत एव भगवत्तत्त्वविदां प्रत्यगभिन्नपरमात्मयाथात्म्यविदामत एव लब्धभगवत्स्वरूपात्मैकत्वरूपं शरणं यैस्तेषां भगवानेक एवात्मेति ज्ञानैकशरणानामित्यर्थः । भगवत्स्वरूपात्मैकशरणानामिति वा पाठः । भगवत्स्वरूप आत्मैवैकं मुख्यं शरणं येषां तेषां परमहंसपरिव्राजकानामनिष्टादिकर्मफलत्रयं न भवति; अनिष्टादित्रिविधं कर्मफलं न भवति । अन्येषामज्ञानामत एवासन्न्यासिनां कर्मिणां त्वनिष्टादिकर्मफलत्रयं भवत्येव । तस्मात्कर्मिणां कर्मणा बन्ध एव, ज्ञानिनां ज्ञानेन मोक्ष एवेति भावः । इतिशब्दः परिसमाप्तौ । एष उक्त इत्यर्थः । ज्ञानादेव मोक्षः, नतु कर्मण इत्येवंरूप इति भावः । गीतेति । गीताशास्त्रेण मुमुक्षुणा ज्ञाननिष्ठैव कर्तव्येति विभज्य दर्शितोऽयमर्थ इत्यर्थः । गीताशास्त्रोक्तस्य कर्तव्यस्य मुमुक्षुणाऽनुष्ठेयस्यार्थस्य ज्ञाननिष्ठारूपस्य विभाग इत्यक्षरार्थः । यद्वा गीताशास्त्रोक्तयोः कर्तव्ययोरज्ञेन प्राज्ञेन च मुमुक्षुणा कार्ययोरर्थयोः कर्मज्ञाननिष्ठयोर्विभागः । तस्मादज्ञेन चित्तशुद्ध्यर्थं कर्मयोगः कर्तव्य; विदुषा तु मोक्षार्थं ज्ञाननिष्ठैव कर्तव्या । ज्ञानादेव सर्वबन्धनिवृत्तिः, नतु कर्मणः । अज्ञानकृतानां सर्वेषां बन्धानामज्ञानमयेन कर्मणा निवृत्त्यसम्भवात्तमःकृतानां सर्पाभासादीनां तमोमयेन पिशाचेनानिवृत्तिवत् । ज्ञानं त्वज्ञानविरोधीति युक्तं, तस्याज्ञानमूलकसर्वबन्धनिवर्तकत्वं प्रकाशस्येव तमोमूलकसर्पादिनिवर्तकत्वम् । नच नित्यकर्मज्ञानपूर्वकमेवेति नाज्ञानमयमिति वाच्यं, मया कृतस्यास्य पापस्येदं कर्म निवर्तकमित्येवंरूपं ज्ञानं नास्माभिर्ज्ञानमित्युच्यते; किं तु तदज्ञानमेव । अकर्ताऽभोक्ता चिन्मात्रोऽहं सदाशिव इत्यात्मज्ञानमेव ज्ञानमित्यस्माभिरुच्यते । तद्धि न कर्मणो मूलं, किंतु नाशकमेव । कर्ता भोक्ताहमिति विरुद्धं ज्ञानमज्ञानात्मकं हि कर्मणो मूलम् । तस्मादज्ञानमयमेव नित्यकर्म प्रायश्चित्तकर्म काम्यकर्म प्रतिषिद्धकर्म व्यायामादिलौकिककर्म च, नतु ज्ञानमूलकम् । ज्ञानाज्ञानयोर्विरोधित्वेन ज्ञानकर्मणोरपि विरोधात् । अज्ञानमूलकं हि कर्म अज्ञाननिवर्तकेन ज्ञानेन निवर्त्यते । तमोमूलको रज्जुसर्पाभासो यथा तमोनिवर्तकेन प्रकाशेन निवर्त्यते एवं कर्मभिरनिवर्त्ये अज्ञाने तत्कार्येषु सुकृतकर्मसु च सत्सु कर्माज्ञाननिवर्तके सर्वकर्मसन्न्यासपूर्वके ज्ञाने चासति कथं पुरुषस्य

अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमितिचेत्, न ब्रह्महत्यादिवत्। यद्यपि शास्त्रावगतं नित्यं कर्म, तथाप्यविद्यावत एव भवति। यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणमविद्याकामादिदोषवतो भवति; अन्यथा प्रवृत्त्यनुपपत्तेः; तथा नित्यनैमित्तिककाम्यान्यपीति। देहव्यतिरिक्तात्मन्यज्ञाने प्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेत्, न चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्य 'अहं करो'मीति प्रवृत्तिदर्शनात्। देहादि-

मोक्षलाभः? न कथमपि। अज्ञानं तत्कृतकर्माणि च पुरुषस्य पशोरिव रज्जवः कण्ठपाशायितानि हि। तच्छेदनार्थं ज्ञानलवित्रमेवाश्रयणीयं कुशलेन, नतु नित्यकर्मरूपपाशान्तरमिति।

ननु यदि गीताशास्त्रेणैवाङ्गेन कर्म कर्तव्यमित्युच्यते तर्ह्यविद्यापूर्वकं सर्वस्य कर्मणोऽसिद्धं शास्त्रं हि विद्या, शास्त्रादवगतत्वात्कर्म विद्यापूर्वकमिति शङ्कते—अविद्येति। परिहरति—नेति। यदि शास्त्रावगतत्वमात्रेण नित्यनैमित्तिकादिकर्मणां विद्यापूर्वकत्वं स्यात्तर्हि ब्रह्महत्यादीनामपि विद्यापूर्वकत्वं स्यादित्याह—ब्रह्महत्यादिवदिति। संग्रहवाक्यं विवृणोति—यद्यपीति। शास्त्रावगतं विधिशास्त्रावगतमित्यर्थः। नित्यमिति नैमित्तिकादेर्विहितस्योपलक्षणम्। अविद्यावत एवेत्येवकाराच विद्यावत इत्यर्थः।

अयं भावः—अर्थस्य शास्त्रावगतत्वमात्रेण न विद्यापूर्वकत्वसिद्धिः, किंतु विद्यावद्विषयत्वेनैव। अन्यथा विधिशास्त्रावगतनित्यकर्मणामिव प्रतिषेधशास्त्रावगतब्रह्महत्यादीनामपि विद्यापूर्वकत्वं स्यात्। नचेष्टापत्तिः विद्यापूर्वकाणां नित्यानामिव ब्रह्महत्यादीनामप्यनुष्ठानान्मोक्षप्रसङ्गात्। विद्यापूर्वककर्मानुष्ठानान्मोक्ष इति हि तव मतम्। विद्यावद्विषयत्वं तु न शास्त्रार्थस्य कर्मणोऽस्ति, किंतु ज्ञानस्यैव कर्मसन्न्यासपूर्वकस्य। तस्मादविद्यावद्विषयकर्मानुष्ठानान्न मोक्षः। नन्वविद्यावत एवं विहितं प्रतिषिद्धं वा कर्म भवतीत्यस्य नियमस्यानभ्युपगमे को दोषस्तत्राह—अन्यथेति। अविद्याकामादिदोषाभावे कर्मसु प्रवृत्त्यनुपपत्तेः पुरुषस्य। यथा प्रतिषेधशास्त्रावगतमप्यनर्थकारणं ब्रह्महत्यादिलक्षणं कर्म अविद्याकामादिदोषवत एव भवति तथा नित्यनैमित्तिककाम्यान्यपि विधिशास्त्रावगतानि पुरुषार्थकारणान्यप्यविद्यावत एव भवन्ति, अन्यथा प्रवृत्त्यनुपपत्तेरिति शेषपूरणपूर्वको भाष्यवाक्यसमन्वयः। तस्मादविद्यावद्विषयत्वेन सर्वं कर्माविद्यापूर्वकमेव। अविद्यापूर्वकस्य कर्मणश्शुभाशुभलक्षणस्य विषैव क्षयकारणमिति सिद्धान्तिनोक्ते सति कर्मणोऽविद्यापूर्वकत्वमसहमानस्सन् पूर्ववादी शास्त्रावगतत्वात्सर्वं कर्म विद्यापूर्वकमेवेत्युवाच तच्च परिहृतं सिद्धान्तिना। अथ पुनःप्रकारान्तरेण विद्यापूर्वकत्वं साधयति कर्मणः पूर्ववादी—देहेति। देहव्यतिरिक्ते आत्मन्यज्ञाते सति देहान्तरानुभाव्यप्राजापत्यस्वर्गादिफलकोमेन नित्यादिकर्मसु प्रवृत्तिरनुपपन्नेति देहातिरिक्तात्मज्ञानपूर्वकत्वात्कर्म विद्यापूर्वकमेवेति। परिहरति—चेन्नेति। अनात्मकर्तृकस्य चलनात्मकस्य कर्मणोऽहंकरोमीति प्रवृत्तिदर्शनादित्यन्वयः। आत्मनोऽन्योऽनात्मा देहादिः तत्कर्तृके चलनात्मके कर्मण्यहंकरोमीति पुरुषस्य प्रवृत्तिदर्शनादित्यर्थः। नित्यनैमित्तिकादिकं वैदिकं व्यायामादिकं लौकिकं च सर्वमपि कर्म चलनात्मकमेव। तथानात्म-

सङ्घातेऽहंप्रत्ययो गौणः, न मिथ्येतिचेत्, न- तत्कार्येष्वपि गौणत्वोपपत्तेः । आत्मीये देहादिसङ्घातेऽहंप्रत्ययो गौणः; यथाऽऽत्मीये पुत्रे- 'आत्मा वै पुत्रनामा'सीति, लोके च

---

कर्तृकम् । अनात्मसु देहेन्द्रियादिषु व्याप्रियमाणेषु सत्सु कर्मनिष्पत्तेः । नच देहचलनाद्गमनादिक्रियानिष्पत्तावपीन्द्रियान्तःकरणयोरचलतोरेव दर्शनसङ्कल्पादिक्रियानिष्पत्तिरिति वाच्यं, 'चञ्चलं हि मनः कृ'ष्णेत्यादिशास्त्रादनुभवाच्चैकत्र विषयेऽनवस्थानलक्षणं चाञ्चल्यं मन इन्द्रियाणामप्यस्ति । मनस इन्द्रियस्य वा वृत्तिकृतचलनाभावे विषयग्रहणानुपपत्तिश्च; चक्षुश्श्रोत्रयोर्विषयदेशं गत्वा विषयग्राहकत्वं वेदान्तशास्त्रप्रसिद्धं च । वायुवेगादप्यधिको मनोवेग इति मनसो वेगवत्त्वाच्चलनं प्रसिद्धमेव । देहे रामेश्वरक्षेत्रे स्थिते सत्यपि मनो हि काशीं गच्छति । एतेषां देहेन्द्रियमनसां चलनाभावादेव निर्व्यापारता सुषुप्त्यादौ । एवं सति सर्वमपि कर्म देहेन्द्रियमनआश्रयमेवेतिकृत्वाऽनात्मकर्तृकमेव- 'अचलोऽयं सनातन' इति गीतावाक्यादेवाचलस्यात्मनः चलनात्मककर्माश्रयत्वायोगादात्मकर्तृकं न भवति । अचलत्वं चात्मनः परिपूर्णचैतन्यत्वादेव । नच बुद्धिपरिच्छिन्न एवात्मा, तस्य चोत्क्रान्तिगत्यादिश्रवणात्कर्माश्रयत्वमस्तीति वाच्यं, 'ध्यायतीव लेलायती'वेत्यादिश्रुत्या बुद्धौ चलन्त्यामात्मा चलतीवेति । बुद्ध्युपाधिधर्माध्यासप्रयुक्तमेवात्मन उत्क्रान्तिगत्यादिकं न स्वाभाविकमिति स्वभावतोऽचलोऽपरिच्छिन्न एवात्मा नित्यत्वात् । 'अजो नित्यश्शाश्वतोऽय'मिति ह्युक्तम् । नहि परिच्छिन्नस्य घटादेः क्वापि नित्यत्वं दृष्टम् । तस्मादचल एवात्मा । एवंस्थिते अचलस्यात्मनः कथमहंकरोमीति प्रवृत्तिरुपपद्येत देहाद्यनात्माश्रये कर्मणि ? न कथमप्युपपन्ना । तथाप्यहंकरोमीति प्रवर्तत एव सर्वो लोकः कर्मणि । तत्र च हेतुरात्मानात्मनोरितरेतरधर्माध्यास एवाज्ञानकृत इति सर्वैरभ्युपगन्तव्यम् । अभ्युपगते च तस्मिन्नित्यादिकर्मसु प्रवृत्तौ न देहव्यतिरिक्तात्मज्ञानं कारणं, किं तर्हि देहेन्द्रियान्तःकरणतादात्म्याध्यासप्रयुक्तं कर्ता भोक्ताहमिति मिथ्याज्ञानं कारणम् । यदि देहव्यतिरिक्तोऽहमात्मेतिज्ञानं स्यादमीषां तर्हि देहे तदवयवहस्तादौ च स्नानहोमादिकर्मसु प्रवृत्ते सति देहस्स्नाति हस्तो जुहोतीति प्रतिपत्तव्ये, अहं स्नामि जुहोमीति कथं प्रतिपद्येरन्नेते ? तस्मान्नामीषां देहव्यतिरिक्तात्मज्ञानमपि दृढमस्ति, किं पुनरिन्द्रियान्तःकरणातिरिक्तात्मज्ञानम् ? तस्मान्मिथ्याज्ञानिन एवैते । मिथ्याज्ञानादेव नित्यादिकर्मसु प्रवृत्तिरमीषां, न पुनर्देहादिव्यतिरिक्ताकर्त्रभोक्त्रात्मज्ञानात् । न हि देहादिव्यतिरिक्त आत्मा कर्ता भोक्ता वा स्यात् । ननु देहादिष्वनात्मसु कुर्वत्सु सत्सु अहं करोमीति यः प्रत्ययोऽज्ञस्य स देहाद्यनात्मतादात्म्याध्यासप्रयुक्त एव । सच देहादावनात्मन्यहमित्यात्मतादात्म्याध्यासो न मिथ्याज्ञानं; किं तु गौणज्ञानमेवेत्याह—देहादीति । परिहरति—नेति । हेतुमाह—तत्कार्येति । संग्रहेणोक्तं प्रश्नोत्तरवाक्यद्वयं स्वयमेव विवृणोति—आत्मीय इति । आत्मीय इति हेतुगर्भं विशेषणम् । आत्मीयत्वादित्यर्थः । नहि स्वपुत्र इव स्वशरीर इव च परपुत्रे परशरीरेऽहमितिप्रत्ययोऽस्ति लोकस्येति भावः । तत्र दृष्टान्तमाह—यथेति । आत्मीये पुत्रेऽहंप्रत्ययो यथा गौणस्तथाऽऽत्मीये देहादिसङ्घातेऽहंप्रत्ययो गौण इति । दृष्टान्तासिद्धिं परिहरति श्रुतिप्रामाण्यप्रदर्शनद्वारा- 'आत्मा वै

'मम प्राण एवायं गौ'रिति तद्वत्। नैवायं मिथ्याप्रत्ययः, मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोः
रपुरुषयोरगृह्यमाणविशेषयोः; न गौणप्रत्ययस्य मुख्यकार्यार्थत्वं- अधिकरणस्तुत्यर्थत्वा-
ल्लुप्तोपमाशब्देन। यथा 'सिंहो देवदत्तः', 'अग्निर्माणवक' इति सिंह इवाग्निरिव क्रौर्य-

पुत्रनामा'सीति। त्वमिति शेषः। पुत्र इति नाम यस्य स पुत्रनामाऽऽत्मा वै अहमेवासि। पितैव पुत्र इत्यर्थः। एतेन पितुः पुत्रेऽहंप्रत्ययो दर्शितः, आत्मीये वस्तुन्यहंप्रत्ययो लोकतश्च सिध्यतीत्याह—लोके चेति। आत्मीये गवि मम प्राण एवायमिति स्वप्राणप्रत्ययरूपस्तत्प्रत्ययः। नहि प्राणमात्मानं च पृथक्त्वेन प्रतिपद्य मम प्राण इति व्यवहरति लोकः; किं त्वेकीकृत्यैव। तथा च मम प्राण इत्यस्य ममात्मेतिवदहमित्येवार्थः। यद्वा कथमात्मीयत्वमात्रेणात्मभूते देहादिसङ्घाते पुत्रे वाऽऽत्मेतिप्रत्ययो लोकस्येत्यत आह—लोके चेति। आत्मीयत्वमात्रेणाप्राणभूते गवि यथा लोकस्य मम प्राण इति प्रत्ययस्तद्वदित्यर्थः।

नन्वतस्मिंस्तद्बुद्धिर्मिथ्याप्रत्ययः। अनात्मनि देहादिसङ्घाते पुत्रे वा या आत्मबुद्धिरप्राणे गवि च या प्राणबुद्धिर्गौणप्रत्ययत्वेन तवाभिमता, सापि मिथ्याप्रत्यय एवेत्यत आह—नैवमिति। मिथ्याप्रत्यय एवंविधो न भवति, तर्हि कीदृशो मिथ्याप्रत्ययोऽत्र आह—मिथ्याप्रत्ययस्त्विति। तुशब्दो गौणप्रत्ययवैलक्षण्यद्योतनार्थः। अगृह्यमाणोऽनुपलभ्यमानो विशेषो भेदो ययोस्तयोरगृह्यमाणविशेषयोः स्थाणुपुरुषयोर्मिथ्याप्रत्ययो भवति। गौणप्रत्ययस्तु गृह्यमाणविशेषयोर्देहिदेहयोः पितृपुत्रयोः गोप्राणयोश्च भवति। स्थाणुं रज्जुं शुक्तिकां वा मन्दान्धकारे सामान्याकारेण गृहीत्वा तद्गतविशेषाकारमगृहीत्वा पुरुष इति, सर्प इति, रजतमिति च प्रत्येति लोक इति स प्रत्ययो मिथ्यैव। सङ्घातात्मानौ पुत्रात्मानौ गोप्राणौ च पृथग्विशेषतो गृहीत्वैव सङ्घातं पुत्रं चाहमिति, गां प्राण इति च प्रत्येति लोक इति स प्रत्ययो गौण एवेति गौणमिथ्याप्रत्यययोर्भेदः। अविवेककृता अतस्मिंस्तद्बुद्धिर्मिथ्याप्रत्ययः, विवेककृता त्वतस्मिंस्तद्बुद्धिर्गौणप्रत्यय इति भावः। अत एव मिथ्याप्रत्ययो भ्रमज्ञानं, गौणप्रत्ययस्तु प्रमैवेति व्यवहारः।

अथ सिद्धान्तांशं विवृणोति—गौणेति। यदि देहादिष्वहंप्रत्ययो गौणस्स्यात्तर्हि देहादिकार्याण्यपि गौणान्येव स्युः- गौणात्मकृतकार्याणां मुख्यकार्यत्वायोगात्। नहि गौणात्मना पुत्रेण कृतं भोजनादिकर्म मुख्यात्मना स्वेनैव कृतमिति मन्यते पिता। तस्माद्गौणात्मना देहादिसङ्घातेन कृतं कार्यं सर्वमपि मुख्यात्मानं प्रति गौणमेव, न मुख्यं- मुख्यात्मना तस्याकृतत्वात्। प्रकृते तु देहादिसङ्घातकृतं कर्म स्वेनैव कृतं मुख्यं कर्मेत्येव प्रत्येत्यात्मा। मया गतं भुक्तं स्नातं हुतमित्यादिव्यवहारात्। तस्मात्सङ्घातकार्येषु मुख्यकार्यत्वदर्शनाद्गौणकार्यत्वादर्शनाच्च न सङ्घातेऽहमिति प्रत्ययो गौणः, किंतु मिथ्यैव। ननु गौणप्रत्ययोऽपि मुख्यकार्यार्थः किं न स्यादत आह—गौणप्रत्ययस्येति। लुप्तोपमाशब्देन प्रतीयमानस्य गौणप्रत्ययस्य न मुख्यकार्यार्थता; अधिकरणस्तुत्यर्थत्वादित्यन्वयः। गौणः प्रत्ययो मुख्यकार्यार्थो न भवति; किं त्वधिकरणस्तुत्यर्थ एव। तत्र दृष्टान्तमाह—यथेति। सिंहो

पैङ्गल्यादिसामान्यवत्त्वाद्देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव, न तु सिंहकार्यमग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किञ्चित्साध्यते । मिथ्याप्रत्ययकार्यत्वं त्वनर्थमनुभवति । गौणप्रत्ययविषयं च जानाति 'नैष सिंहो देवदत्तस्स्यात्, नायमग्निर्माणवक' इति । तथा गौणेन

देवदत्त इति, अग्निर्माणवक इति च गौणप्रत्ययः । सिंह इवेत्यर्थे सिंहशब्दस्य, अग्निरिवेत्यर्थे अग्निशब्दस्य च प्रयोगात्सिंहाग्निशब्दौ लुप्तोपमाशब्दौ । उपमानोपमेययोः सिंहदेवदत्तयोरग्निमाणवकयोश्च साधारणधर्ममाह—क्रौर्यपैङ्गल्येति । किमर्थमेवं गौण्या वृत्त्या प्रयुज्यतेऽत्र आह—देवदत्तेति । देवदत्तमाणवकरूपाधिकरणस्तुत्यर्थमित्यर्थः । माणवको बालः, ब्राह्मणमाणवकेति निपातनाद्गल्पार्थे कन् । मनोरुत्तमपत्यं पुमान्माणवकः । सिंहवत्क्रूरे देवदत्ते अग्निवत्पिङ्गलवर्णे माणवके च सिंह इति, अग्निरिति च यो गौणः प्रयोगः स न मुख्यकार्यार्थः, किंतु देवदत्तमाणवकयोः स्तुत्यर्थ एव । एवकारार्थमाह—न त्विति । गौणशब्दप्रत्ययनिमित्तं सिंहकार्यमग्निकार्यं वा किंचिन्न तु साध्यत इत्यन्वयः । गौणशब्दः सिंह इति, अग्निरिति च प्रयोग इति यावत् । प्रत्ययो ज्ञानं, तयोर्निमित्तं सिंहकार्यमग्निकार्यं वा मुख्यकार्यं गजकुम्भविदलनदाहादिरूपं किंचिन्न साध्यते, देवदत्तमाणवकयोरिति शेषः । सिंहो देवदत्त इति, अग्निर्माणवक इति च प्रयुञ्जानः प्रतिपद्यमानश्च पुरुषः देवदत्ते माणवके वा मुख्यसिंहकार्यं मुख्याग्निकार्यं च न चिकित्सति, असम्भवात् । किंतु सिंहवत्क्रूरो देवदत्त इति, अग्निरिव पिङ्गलो माणवक इति च स्तुतिमेव चिकीर्षतीति भावः । ननु गौणप्रत्ययविषयदेवदत्तमाणवककार्येष्वेव मुख्यकार्यस्याभावे मिथ्याप्रत्ययविषयसङ्घातकार्येष्वपि कथं मुख्यात्मकार्यत्वमत आह—मिथ्येति । अनात्मनि देहादिसङ्घाते य आत्मेति मिथ्याप्रत्ययस्तस्य कार्यं संसाररूपोऽनर्थ एव; तमनुभवत्येव स मिथ्याप्रत्ययी ।

अयं भावः—देहादिसङ्घातकार्येष्वपि न मुख्यकार्यत्वं, किंतु देहादिसङ्घातमनात्मानं यथा आत्मत्वेन प्रत्येति तथा तत्कार्यमप्यात्मकार्यत्वेन प्रत्येतीति देहादिसङ्घातकार्ये मिथ्यात्मकार्यत्वमेवास्ति, न मुख्यात्मकार्यत्वम् । तत्र च मुख्यात्मकार्यत्वप्रत्ययो मिथ्यैव । अस्माच्च मिथ्याप्रत्ययादज्ञस्य संसारबन्ध एवेति । तस्माद्देहादिसङ्घातकार्याणि न गौणानि, नापि मुख्यानि-गौणात्माकार्यत्वान्मुख्यात्माकार्यत्वाच्च । नहि सङ्घातो गौणात्मा, नापि मुख्यात्मा, किंतु मिथ्याभूतान्येव- मिथ्याकार्यत्वात् । सङ्घातो हि मिथ्यात्मेति भावः । किंच गौणप्रत्ययविषयं गौणज्ञानविषयमित्यर्थः । देवदत्तं माणवकं चेति यावत् । एष देवदत्तस्सिंहो न भवति, अयं माणवकोऽग्निर्न भवतीति जानाति, सिंहो देवदत्त इति, अग्निर्माणवक इति च वाक्यप्रयोक्ता । एवं मिथ्याप्रत्ययविषयं तु स्थाणुपुरुषादिकं न जानाति भ्रान्तः पुरुषः । नहि नायं पुरुषः नेदं रजतं नायं सर्प इति ज्ञानवान् स्थाणुं शुक्तिं रज्जुं वा दृष्ट्वा पुरुषोऽयं रजतमिदं सर्पोऽयमिति भ्रमं प्रपद्येत । ततश्च यदि सङ्घातो गौणप्रत्ययविषयस्तर्हि नायं सङ्घात आत्मा इति जानीयादेव लोकः, नतु तथा जानाति; किंतु मनुष्योऽहमित्येवं जानाति, नतु नाहं मनुष्य इति । यः पुनर्विद्वान् सङ्घातमनात्मानं जानाति, स सङ्घातमात्मत्वेन न गृह्णात्ये-

देहादिसङ्घातेनाऽऽत्मना कृतं कर्म न मुख्येनाहंप्रत्ययविषयेणाऽऽत्मना कृतं स्यात्। नहि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यात्। न च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किञ्चित्क्रियते- स्तुत्यर्थत्वेनोपक्षीणत्वात्। स्तूयमानौ च जानीतः- 'नाहं सिंहः, नाहमग्नि'रिति, नहि 'सिंहस्य कर्म ममाग्ने'श्चेति। तथा 'न सङ्घातस्य कर्म मम मुख्यस्यात्मन' इति प्रत्ययो युक्ततरस्स्यात्; न पुनः 'अहं कर्ता मम कर्मे'ति। यत्त्वाहुः- 'आत्मीयैस्स्मृतीच्छाप्रयत्नैः कर्महेतुभिरात्मा कर्म करो'तीति, न- तेषां मिथ्या-

---

त्वेति कथं गौणप्रत्ययविषयत्वं सङ्घातस्य? तस्मान्मिथ्यैव सङ्घातेऽहमितिप्रत्ययोऽज्ञानाम्। ननु गौणात्मकृतकार्याणां गौणत्वे किं प्रयोजकमितिशङ्कायां मुख्यात्माकृतत्वमेवेत्यभिप्रेत्य मुख्यात्माकृतत्वमेव दर्शयति—तथेति। त्वदुक्तविधया गौणत्वाभ्युपगमे सतीत्यर्थः। गौणात्मकर्तृकस्य कर्मणः कुतो न मुख्यात्मकर्तृकत्वमत आह—नहीति, गौणसिंहाग्निभ्यामिति। देवदत्तमाणवकाभ्यामित्यर्थः। ननु सिंहवत्क्रूरत्वादग्निरिव पिङ्गलत्वाच्च मुख्यसिंहाग्निकार्यं गौणसिंहाग्नी कुरुत एव, गौणसिंहाग्निकार्यं तु मुख्यसिंहाग्नी माकुरुतांनाम इत्यत आह—नचेति। सिंहवत्क्रूरोऽग्निवत्पिङ्गल इत्यर्थबोधकगौणसिंहाग्निशब्दप्रयोगाद्देवदत्ते माणवके च क्रौर्यं पिङ्गलत्वं सिद्धं, तेन च क्रौर्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किंचिन्नैव क्रियते। नहि गजकुम्भविदलनदाहादिलक्षणं मुख्यसिंहाग्निकार्यं क्रौर्येण पैङ्गल्येन वा देवदत्तमाणवकाभ्यां निर्वर्तयितुं शक्यते तर्हि किं फलं क्रौर्यपैङ्गल्यविधानस्य! अत आह—स्तुत्यर्थत्वेनेति। स्तुत्यर्थं विहितस्य तस्य स्तुतिमात्रफलत्वात्तावतैव तस्योपक्षय इति न तद्विधानस्य फलान्तरं कल्पयितुं शक्यमिति भावः। स्तूयमानौ च देवदत्तमाणवकावहं सिंहो न भवामि, अहमग्निर्न भवामीति जानीतो मम सिंहस्य कर्म नहि, ममाग्नेः कर्म नहीति च जानीतः तथा देवदत्तमाणवकवत्। सङ्घातस्य गौणात्मनः कर्म मुख्यस्यात्मनो न भवतीति प्रत्ययो युक्ततरः स्यात्। अहं कर्ता मम कर्मेति प्रत्ययः, पुनर्ज्ञानं त्वात्मन इति भावो न युक्ततरः।

अयं भावः—सिंहो देवदत्तोऽग्निर्माणवक इतिवद्देहादिसङ्घात आत्मेत्यदि गौणः प्रत्ययस्स्यात्, तर्हि गौणात्मनस्सङ्घातस्य यत्कर्म तन्मुख्यस्यात्मनो न भवत्येवेति कृत्वा कथं गौणात्मसङ्घातकर्तृककर्मणि मुख्यात्मनः कर्ताहं मम कर्मेतिप्रत्ययस्स्यात्? नहि गौणसिंहाग्निकर्तृककर्मसु मुख्यसिंहाग्न्योरहं कर्ता मम कर्मेति प्रत्ययो भवति। तस्मात्सङ्घातकार्येषु गौणत्वाभावान्मुख्यात्मनस्तेषु स्वकर्तृकत्वस्वकर्मत्वप्रतीतिसत्त्वेन मुख्यत्वसत्त्वाच्च न सङ्घातेऽहमितिप्रत्ययो गौणः, किंतु मिथ्यैवेति। कूटस्थो मुख्यात्मा, सङ्घातो मिथ्यात्मा, पुत्रादिर्गौणात्मेति विवेकोऽत्र बोध्यम्।

ननु सङ्घातस्य जडस्य कर्तृत्वानुपपत्तेरात्मैव स्वीयस्मृतीच्छाप्रयत्नैः कर्म करोतीति तार्किकादिमतमनुवदति—यत्त्वाहुरिति। करोतीति यत्त्वाहुरित्यन्वयः। तदपि न, न युक्तमित्यर्थः। तत्र हेतुमाह—तेषामिति। स्मृतीच्छाप्रयत्नानामित्यर्थः। मिथ्याप्रत्ययपूर्वकत्वमेव विवृणोति—मिथ्येति।

प्रत्ययपूर्वकत्वात् । मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयः । यथाऽस्मिन्जन्मनि देहादिसङ्घाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च, तथाऽतीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतस्संसारोऽतीतोऽनागतश्चानु-

---

अनात्मनि सङ्घातेऽहमिति यो मिथ्याप्रत्ययस्स एव निमित्तं यस्य सः । इष्टानिष्टरूपादनुभूतात्क्रियाफलाज्जनितो यस्संस्कारस्स पूर्वः कारणं येषां ते मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका, मिथ्याप्रत्ययनिमित्तत्वं क्रियाफलविशेषणं वा; मिथ्याप्रत्ययनिमित्तेष्टानिष्टरूपक्रियाफलानुभवजनितसंस्कारपूर्वका इत्यर्थः । अनात्मनि देहादिसङ्घातेऽहमिति मिथ्याप्रत्यये सति तत्क्रियासु ममेति मिथ्याप्रत्ययो भवति; ततस्तत्फलेष्विष्टानिष्टेषु मयेदमनुभूयत इति ममेदं फलमिति च मिथ्याप्रत्ययो भवति । तस्माच्च मिथ्याप्रत्ययपूर्वकात्फलानुभवात्संस्कारो जायते- अनुभवजन्यत्वात्संस्कारस्य । स च संस्कारो मिथ्याप्रत्ययपूर्वक एव । तस्मात्संस्कारात्पूर्वानुभूतार्थस्मृतिर्जायते- स्मृतिहेतुत्वात्संस्कारस्य । ततस्स्मृतेऽर्थे इच्छा जायते, ततस्तत्सिद्ध्यर्थं प्रयतत इति स्मृतीच्छाप्रयत्ना मिथ्याप्रत्ययपूर्वका एव- क्रियायास्तत्फलस्य च मिथ्याप्रत्ययपूर्वकत्वादिति ।

ननु कस्यचित्कदाचिदप्यननुभूतार्थे स्मृत्युपलम्भात्कथं संस्कारपूर्वकत्वं स्मृत्यादीनामितिचेत्, नैवम्—जन्मान्तरानुभूतार्थस्यैवेहजन्मनि स्मरणसम्भवात् । ननु जन्मान्तरीयानुभवस्य मिथ्याप्रत्ययपूर्वकत्वं कथं ज्ञायतेऽत आह—यथेति । अस्मिन्जन्मनि पुरुषस्य देहादिसङ्घाते योऽहमित्यभिमानो ममेत्यभिमानश्च तत्प्रयुक्ता ये रागद्वेषादयः तत्कृतौ धर्माधर्मौ, तत्फलानुभवो धर्माधर्मफलसुखदुःखानुभवश्च तत्कृतो देहादिसङ्घाताभिमानप्रयुक्तरागद्वेषादिकृतः, देहादिसङ्घाताभिमानकृत इत्येव वा । तथाऽतीते जन्मन्यतीततरे जन्मनि चेत्यनादिरविद्याकृतोऽतीतोऽनागतश्च संसारोऽनुमेयः । यथाऽस्मिन्देहादिसङ्घातेऽहमिति मिथ्याज्ञानाद्रागद्वेषादिपूर्वकं धर्माधर्मौ कृत्वा तत्फलमनुभवति पुरुषः, एवं जन्मान्तरेऽपीतिकृत्वा प्रकृतभवीयानुभववज्जन्मान्तरीयानुभवोऽपि मिथ्याप्रत्ययपूर्वक एव; तथा प्रकृतभवीयक्रियावज्जन्मान्तरीयक्रिया अपि मिथ्याप्रत्ययपूर्विका एव; तथा प्रकृतभवीयरागद्वेषादिवज्जन्मान्तरीयरागद्वेषादयोऽपि मिथ्याप्रत्ययपूर्वका एव । एवं प्रकृतभवीयमिथ्याप्रत्ययोऽपि जन्मान्तरीयमिथ्याप्रत्ययपूर्वक एव- पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासम्प्रति हेतुत्वात् । तथा च मिथ्याप्रत्ययः, तत्पूर्वको रागद्वेषादिः, तत्कृतो धर्माधर्मादिः, तत्फलसुखदुःखानुभवः, तज्जन्यस्संस्कार इत्येष संसार इहजन्मनीव जन्मन्तरेष्वप्यस्ति- पूर्वेषु प्राग्भवीयसंसारप्रयुक्तत्वादेतद्भवीयसंसारस्य । एवमुत्तरजन्मस्वपि भविष्यति- पूर्वजन्मसंसारस्येहजन्मसंसारहेतुत्ववदिहजन्मसंसारस्योत्तरजन्मसंसारहेतुत्वात् । एवमनादिरयं चक्रवत्परिभ्रमति संसारः । अनेन चानादित्ववचनेन कथमादावहमभिमानस्सङ्घाते पुरुषस्य पूर्वकृतसंस्काराभावादिति शङ्का प्रत्युक्ता । अनादिरपि कार्यभूतत्वादनित्य एवायमिति सुपरिहर इत्याह—अविद्याकृत इति । अज्ञानकृतोऽज्ञानवन्मिथ्याभूत इत्यर्थः । एतेन देहादिसङ्घातेऽहमिति मिथ्याप्रत्ययस्याज्ञानमेव हेतुरिति सिद्धम् । एवमज्ञानहेतुकत्वादेव सङ्घातेऽहमितिप्रत्ययो मिथ्याप्रत्ययः, नतु गौणः । आत्मानात्माविवेकपूर्वकत्वा-

मेयः। ततश्च सर्वकर्मसन्न्याससहितज्ञाननिष्ठाया आत्यन्तिकस्संसारोपरम इति सिद्धम्। अविद्यात्मकत्वाच्च देहाभिमानस्य, तन्निवृत्तौ देहानुपपत्तेस्संसारानुपपत्तिः, देहादिसङ्घातेऽऽत्माभिमानोऽविद्यात्मकः। न हि लोके 'गवादिभ्योऽन्योऽहं, मत्तश्चान्ये गवादय' इति जानन् तेषु 'अह'मिति मन्यते कश्चित्। अजानंस्तु स्थाणौ पुरुषविज्ञानवदविवेकतो देहादिसङ्घाते कुर्यात् 'अह'मितिप्रत्ययं, न विवेकतो जानन्। यस्तु 'आत्मा वै पुत्रनामा'सीति

---

द्रोणो हि सिंहदेवदत्तविवेकपूर्वकोऽनुमेय इतीहजन्मानुभवसिद्धेन संसारेण जन्मान्तरीयसंसारोऽनुमेय इत्यर्थः। यथा जन्मान्तरे मम संसारानुभवोऽस्ति- इहजन्मनि मया संसारस्य स्मर्यमाणत्वात्। अनुभवजन्यसंस्कारपूर्विका हि स्मृतिः। पूर्वदिनानुभूतघटस्यास्मिन् दिने स्मरणवत्। एवमुत्तरजन्मनि मम संसारो भविष्यति- इहजन्मनि मया संसारस्यानुभूतत्वात्। पूर्वजन्मानुभूतसंसारो यथेहजन्मन्यासीत्तद्वदिति च प्रयोगद्वयादिति भावः। भवत्वेवमविद्याकृतस्संसारः किं ततोऽत आह—ततश्चेति। संसारस्याविद्यापूर्वकत्वादित्यर्थः। सर्वकर्मसन्न्यासपूर्वकज्ञाननिष्ठयैवात्यन्तिकस्संसारोपरमः। आत्यन्तिको निश्शेष इत्यर्थः। संसारमूलस्याज्ञानस्यापि नाशादिति भावः। अविद्यापूर्वकस्य मिथ्याप्रत्ययधर्माधर्मरागद्वेषेष्टानिष्ट संस्कारादिरूपस्य संसारस्य विद्ययैव समूलोच्छेदः- विद्याविद्ययोर्विरोधात्; नतु कर्मणा— तस्याप्यविद्यापूर्वकत्वेन कर्माविद्ययोरविरोधात्कर्मसंसारयोर्हेतुहेतुमद्भावात्कर्मणोऽपि धर्माधर्मलक्षणस्य संसारान्तःपातित्वेन संसारत्वाच्च। तस्माद्‌ज्ञानादेव मोक्ष इति सिद्धम्। कुतस्सिद्धमत आह—अविद्येति। देहाभिमानस्य देहादिसङ्घातेऽहंप्रत्ययस्य मिथ्याभूतस्याऽविद्यात्मकत्वादज्ञानकृतत्वात्कार्यकारणयोरभेदेनाज्ञानस्वरूपत्वाच्च, तन्निवृत्तावविद्याया निवृत्तौ देहाभिमानानुपपत्तेः संसारानुपपत्तिः; देहाभिमानपूर्वकत्वात्संसारस्येति भावः। देहादिसङ्घातमविद्ययाऽऽत्मत्वेन प्रतिपद्य हि धर्माधर्मसुखदुःखजन्ममरणादिलक्षणं संसारमनुभवत्यज्ञः। अविद्यात्मकत्वाद्देहाभिमानस्येति वाक्यं व्याचष्टे— देहादीति। अविद्यानिवृत्तावभिमाननिवृत्तिः, अविद्यायां निवृत्तायां सत्यां सङ्घातादन्योऽहमात्मा मत्तोऽन्यस्सङ्घात इति जानाति- अविद्याकृतत्वात्सङ्घातात्मनोस्तादात्म्याध्यासस्य। एवमात्मानात्मानौ स्वसङ्घातौ विविच्य जानन्पुरुषः तस्मिन् सङ्घाते स्वस्मादत्यन्तभिन्ने कथमहमितिप्रत्ययं कुर्यात्? न कथमपि। तत्र दृष्टान्तमाह—न हीति। ननु यद्येवं जानन्पुरुषः सङ्घाते न कुर्यादहमिति मिथ्याप्रत्ययं तर्हि कः पुनः करोत्यत आह— कश्चिदजानन्निति। यथा स्थाणुमजानन्पुरुषः स्थाणौ पुरुष इति विज्ञानं (प्रत्ययं) करोति, तथाऽऽत्मानात्माविवेकतस्सङ्घातेऽहमितिप्रत्ययं कुर्यादजानन् कश्चित्पुरुषः। अजानंस्त्विति तुशब्दार्थमाह—न विवेकतो जानन्निति। आत्मानात्मानौ विवेकतो जानन्नयमात्माऽयमनात्मेति विविच्य जानन्पुरुषस्सङ्घातेऽनात्मन्यहमितिप्रत्ययं न करोति; यथा स्थाणुं विद्वान्पुरुषः स्थाणौ पुरुषोऽयमितिप्रत्ययं न करोति तद्वदिति भावः।

ननु स्थाणुपुरुषदृष्टान्तो नेहानुकूलः, विद्यमाने स्थाणावविद्यमानपुरुषभ्रमस्सः- विद्यमाने सङ्घाते विद्यमानात्मभ्रमोऽयमिति भेदात्। नहि परस्पराध्यस्तमात्मानात्मपदार्थद्वयमिव स्थाणुपुरुषद्वयं तथाऽ,

पुत्रेऽहंप्रत्ययः; स तु जन्यजनकसम्बन्धनिमित्तो गौणः । गौणेन चात्मना भोजनादिवत्परः स्तीतिचेत् , नैवम्—स्थाणौ पुरुष इतिवदनात्मन्यात्मेतिभ्रम इत्येतावत एवांशस्येह साधर्म्यत्वेन विवक्षितत्वात् । यथा पुरुषव्यतिरिक्तोऽपि स्थाणुः पुरुषतादात्म्याध्यासात्पुरुषस्स इति व्यवह्रियते, तथा आत्मव्यतिरिक्तोऽप्यनात्मा सङ्घात आत्मतादात्म्याध्यासादात्मेति व्यवह्रियत इति ।

ननु यस्स्थाणुं पुरुषं चोभौ वेत्ति तस्य स्थाणौ पुरुषभ्रमः, न त्वन्यतरापरिज्ञातुः, नाप्युभयापरिज्ञानात्- बालस्य तददर्शनात् । एवमात्मानात्मानौ जानतः किं संघातात्मभ्रमो भवति, उतान्यतरमजानतो यद्वोभयमजानतः ? नाद्यः- आत्मानात्मविदस्सम्यग्दर्शिन एव संघातात्मभ्रमप्रसङ्गात् । द्वितीये किमात्मानमजानतः ? उतानात्मानमजानतः ? नाद्यः पुरुषपरिज्ञातुस्स्थाणौ पुरुषभ्रमासम्भववदात्मापरिज्ञातुस्संघाते आत्मभ्रमासम्भवात् । न द्वितीयः- अनात्माविद एवाभावात् । न तृतीयः- सुषुप्तिमूर्छादिषु भ्रमासम्भवादितिचेत् , नैवम्—आत्मानमनात्मानं वा यस्सम्यग्वेत्ति न तस्य संघाते आत्मभ्रमो भवति । नहि स्थाणुं पुरुषं वा सम्यग्विदितवतस्स्थाणावपि पुरुषभ्रमो भवति । नच प्रकृतपुरुषभ्रमविषयस्थाणुस्वरूपयाथार्थ्यज्ञानाभावेऽपि स्थाणुसामान्यस्वरूपज्ञानमस्तीति वाच्यं, भ्रमंप्रति संस्कारज्ञानस्यैव हेतुत्वेन स्वानुभूतस्थाणुपुरुषसंस्कारवशाद्यथा स्थाणौ पुरुषभ्रम एवं दिनान्तरे जन्मान्तरे वा स्वानुभूतसंघातात्मभ्रमसंस्कारवशादिदानीं संघातात्मभ्रमोदय इति । तस्माद्य आत्मानं सम्यङ्न वेत्ति तस्यैवानात्मनि संघाते आत्मेतिभ्रमः- आत्मनि सम्यग्विदिते सति संघाते आत्मभ्रमायोगात् । नाप्यात्मानं सुतरामविदुषस्संघाते आत्मभ्रमस्सम्भवति; किं तु कर्ता भोक्ता जातो मृत इति विपरीतलक्षणमात्मानं यो वेत्ति तस्य संघाते आत्मभ्रमः । नच भ्रमात्प्राक्कथं विपरीतात्मज्ञानमिति वाच्यं, बीजांकुरन्यायेन भ्रमात्प्राग्विपरीतात्मज्ञानं तस्मात्पुनर्भ्रमश्चास्तीति । यद्वाऽज्ञानादात्मनि विपरीतज्ञानं भ्रमश्चेत्युभयमेकदैव भवति ।

वस्तुतस्तु स्वशब्दवाच्योऽहमित्यनुभवसिद्ध आत्मेति कश्चन पदार्थोऽस्तीति सामान्याकारेणात्मानं सर्वे विदन्त्येव । अज्ञास्तु तमेवात्मानं संघातत्वेन प्रतिपद्यन्त इति संघाते आत्मभ्रमोऽज्ञानां युक्ततरः । अनुभवसिद्धत्वाद्दुरपलापेऽस्मिन् संघातात्मभ्रमेऽविद्यापूर्वकत्वादनिर्वाच्येनातीव प्रश्नोत्तरसरणिः कार्या- मायामयस्य वस्तुनस्सति विमर्शे स्वरूपासिद्धेः । न हि कृते विमर्शे रज्जुसर्पस्य काप्यात्मसत्तालाभः । तस्मान्मायामयोऽयं संघातः, तस्मिन्नात्मभ्रमश्चेति मिथ्यैवैतदुभयम् । अत एव संघातेऽहमिति मिथ्याप्रत्यय इत्युक्तं ननु । 'आत्मा वै पुत्रनामा'सीति श्रुतिप्रामाण्यात्पुत्रेऽहमितिप्रत्ययो यथा गौणः, तथा स्वीये संघातेऽप्यहमितिप्रत्ययो गौण एव न मिथ्येत्यत आह—यस्त्विति । पुत्रस्य गौणात्मत्वेऽपि संघातस्य न गौणात्मत्वम् ।

कुतः पुत्रस्य गौणात्मत्वमत आह—स त्विति । जन्यजनकयोः पुत्रपित्रोर्यस्सम्बन्धः जन्यजनकभावरूपस्स निमित्तं यस्य स तथोक्तः पुत्रेऽहमितिप्रत्ययो गौणः, जन्यजनकभावरूपसम्बन्धात्मक-

मार्थकार्यं न शक्यते कर्तुं, गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् ।

अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत एवेतिचेत्, न- अविद्याकृतात्मकत्वात्तेषाम् । नच गौणा आत्मनो देहेन्द्रियादयः, किं तर्हि मिथ्याप्रत्ययेनैवासङ्गस्यात्मनस्ससङ्गत्या आत्मत्वमापाद्यते- तद्भावे भावात्, तदभावे चाभावात् । अविवेकिनां ह्यज्ञानकाले बालानां दृश्यते 'दीर्घोऽहं, गौरोऽह'मिति देहादिसङ्घातेऽहंप्रत्ययः; न तु विवेकिनां 'अन्योऽहं देहादिसङ्घाता'दिति ज्ञानवतां तत्काले देहादिसङ्घातेऽहंप्रत्ययो

---

गुणनिमित्तत्वादिति भावः । नैवमात्मसङ्घातयोरस्ति जन्यजनकसम्बन्धः, देहेन्द्रियाद्यवच्छिन्नचैतन्यलक्षणस्यात्मनः देहेन्द्रियादिजनकत्वासम्भवात् । 'आत्मन आकाशस्सम्भूत' इति श्रुतिस्तु देहेन्द्रियाद्यवच्छिन्नात्मपरेति न विरोधः । तस्मात्सङ्घातेऽहंप्रत्ययो न गौणः, किंतु मिथ्यैव । किंच गौणेनानात्मना सङ्घातेन परमार्थात्मकार्यं कर्तुं न शक्यते । यथा पुत्रेण गौणात्मना पितुर्मुख्यात्मनः कार्यं भोजनादिकं कर्तुं न शक्यते तद्वदित्याह—गौणेन चेति । नहि पितृदेहस्य पितृभुक्तान्नपानैरिव पुत्रभुक्तान्नपानैर्वृद्ध्यादिरस्ति, येन गौणात्मसङ्घातकृतकर्मभिर्मुख्यात्मनस्स्वर्गादिप्राप्तिस्स्यात् । श्रूयते चात्मनस्सङ्घातकर्मभिस्स्वर्गादिप्राप्तिस्तस्मात्सङ्घातो न गौणात्मा, किंतु मिथ्यात्मैव । मुख्यात्मकार्यं गौणात्मना कुतो न क्रियत इत्यतो दृष्टान्तमाह—गौणेति । गौणसिंहाग्निभ्यां देवदत्तमाणवकाभ्यां मुख्यसिंहाग्निकार्ये यथा न क्रियेते तद्वत्; नच मिथ्यात्मनापि मुख्यात्मकार्यं कथं क्रियत इति वाच्यं, सङ्घाते आत्मेति प्रत्ययवत्तत्कार्येष्वपि मुख्यात्मकार्यत्वप्रत्ययसत्त्वात् । नन्वदृष्टेषु विषयेषु स्वर्गादिषु या चोदना- 'ज्योतिष्टोमेन स्वर्गकामो यजे'तेत्यादिविधिस्साऽनात्मनो न भवति- तस्य जडत्वादतो मुख्यात्मन एव भवति । तच्छास्त्रप्रामाण्याच्च कर्तव्यमेव मुख्यात्मना यज्ञादिकं कर्म, अन्यथा विधिवैयर्थ्यप्रसङ्गेन विधीनामप्रामाण्यापत्तेः । तच्च मुख्यात्मना कर्तव्यं कर्म गौणात्मभिः क्रियते मुख्यात्मनः करणाद्यभावादिति शङ्कते—अदृष्टेति । परिहरति—नेति । हेतुमाह—अविद्येति । देहेन्द्रियादयो न गौणात्मानः, तेषां देहादीनामविद्याकृतात्मत्वात् । अविद्ययैव देहेन्द्रियादयोऽनात्मानोऽप्यात्मानः कृताः, नतु गौणवृत्त्या, यथा अविद्यया रज्जुस्सर्पः क्रियते तद्वत् । तस्मान्मिथ्यात्मान एव त इत्याह- किं तर्हीति । अनात्मनां सतामनात्मत्वेन वर्तमानानां तेषां देहादीनां मिथ्याप्रत्ययेनैवाविद्यापूर्वकेणात्मत्वमापाद्यते, नतु गौणप्रत्ययेन । तस्माते मिथ्यात्मान एव । मिथ्याप्रत्ययेनैव देहादीनामात्मत्वमापाद्यत इत्यत्र हेतुमाह—तद्भाव इति । मिथ्याप्रत्ययसत्त्वे देहादीनामात्मत्वसत्त्वं, मिथ्याप्रत्ययाभावे देहादीनामात्मत्वाभाव इत्यन्वयव्यतिरेकाभ्यां मिथ्याप्रत्ययपूर्वकत्वं देहाद्यात्मत्वस्य सिद्धम् । यथा मृत्सत्त्वे घटसत्त्वं मृदभावे घटाभाव इत्यन्वयव्यतिरेकाभ्यां घटस्य मृत्पूर्वकत्वसिद्धिस्तद्वदिति भावः । अन्वयव्यतिरेकावेव विवृणोति—अविवेकिनामिति । अविवेकिनां बालनां मूढानामज्ञानकाले देहादिसंघाते विषये दीर्घोऽहं गौरोऽहमितिप्रत्ययो दृश्यते । देहादिसंघातादन्योऽहमिति जानतां विवेकिनां तु तत्काले ज्ञानकाले देहादिसंघातेऽहंप्रत्ययो न भवति । अविवेकिनामपि कालान्तरे

भवति । तस्मान्मिथ्याप्रत्ययाभावेऽभावात्तत्कृत एव न गौणः । पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययश्शब्दप्रयोगो वा स्यात्, नाऽगृह्य-

---

विवेकसत्त्वे तादृशप्रत्ययाभावादुक्तमज्ञानकाल इति । विवेकिनामपि कस्मिंश्चिद्दुःखाद्यनुभवकाले विवेकलोपे सति संघातात्मप्रत्ययसत्त्वादुक्तं तत्काल इति । तस्मादिति । विवेकिनां विवेककाले संघातात्माभिमानदर्शनात्, अविवेकिनामविवेककाले संघातात्माभिमानदर्शनाच्चेत्यर्थः । विवेकिनामपि विवेककाले संघाताभिमानादर्शनादविवेककाले तद्दर्शनादविवेकिनामपि विवेकोदयानन्तरं संघाताभिमानादर्शनाच्चेत्यर्थ इति वा । मिथ्याप्रत्ययाभावे देहाद्यात्मत्वाभावादित्याह—मिथ्येति । नन्वविवेकिनामित्यादिग्रन्थेनाज्ञानसत्त्वे मिथ्याप्रत्ययसत्त्वं, तदभावे तदभाव इत्येवान्वयव्यतिरेकावुक्तौ । ननु मिथ्याप्रत्यये सति देहाद्यात्मत्वं, तदभावे तदभाव इतिचेन्नैष दोषः—अज्ञाने सति मिथ्याप्रत्ययः, मिथ्याप्रत्यये सति देहाद्यात्मत्वमिति कृत्वा अज्ञाने सति मिथ्याप्रत्ययस्तदभावे तदभाव इत्यन्वयव्यतिरेकप्रदर्शनेन मिथ्याप्रत्यये सति देहाद्यात्मत्वं, तदभावे तदभाव इत्यन्वयव्यतिरेकयोरप्युक्तप्रायत्वादिति । यद्वा मिथ्याप्रत्ययेन संघातस्यात्मत्वमन्वयव्यतिरेकाभ्यां सिद्धं भवतुनाम, सतु मिथ्याप्रत्ययो नाविद्यापूर्वकः । विदुषामपि संघातेऽहंप्रत्ययदर्शनादत आह—अविवेकिनामिति, तस्मादिति । मिथ्याप्रत्ययस्याविद्यापूर्वकत्वादित्यर्थः । तत्कृत एवेति । संघातेऽहमितिप्रत्ययोऽज्ञानकृतमिथ्याप्रत्यय एवेत्यर्थः । एवकारार्थमाह—न गौण इति । कस्मान्न गौणोऽत्र आह—पृथगिति । पृथग्गृह्यमाणे विशेषसामान्ये ययोस्तयोः पृथग्गृह्यमाणविशेषसामान्ययोः । हिः प्रसिद्धौ । गौणप्रत्ययः सिंहो देवदत्त इति ज्ञानं तत्पूर्वकः शब्दप्रयोगस्सिंहो देवदत्त इति वाचोच्चारणं, अगृह्यमाणविशेषसामान्ययोरात्मसंघातयोस्तु न गौणः प्रत्ययो भवति । सङ्घात आत्मेति । तस्मात्संघातेऽहमितिप्रत्ययो न गौणः ।

अयं भावः—सिंहं देवदत्तं च सामान्याकारेण विशेषाकारेण च पृथग्जानन्नेव पुरुषस्सिंहो देवदत्त इति प्रत्येति सिंहदेवदत्तगतक्रौर्यादिसमानधर्माणामग्रहणे देवदत्ते सिंहत्वौरत्यबुद्ध्यनुदयात् । एवं केसरशिखाचतुष्पात्त्वद्विपात्त्वादिविशेषधर्माणामग्रहणे देवदत्ते सिंहाभेदबुद्ध्युदयप्रसङ्गाच्च । एवमात्मानं सङ्घातं च यदि सामान्याकारेण विशेषाकारेण च पृथग्जानन् पुरुषो यदि सङ्घात आत्मेति प्रतीयात्तर्हि सङ्घातेऽहंप्रत्ययो गौणस्स्यान्नतु तथा विद्वान्प्रत्येति विद्याया आनर्थक्यप्रसङ्गात् । सङ्घातभिन्नात्मभ्रमनिवारणफला सङ्घातभिन्नसच्चिदानन्दात्मस्वरूपावगतिपर्यवसाना च हि विद्या कथं सङ्घातभिन्नं सच्चिदानन्दलक्षणमात्मानं सामान्यतो विशेषतश्च जानन् पुरुषस्सङ्घातेऽहमितिप्रत्ययं कुर्यात् ? यस्तु मनुष्योहमित्यभिमन्यते; सङ्घनात्मेति, आत्मेति च पदार्थद्वयमस्तीति सामान्याकारेणैव न वेत्त्यात्मानात्मानौ । किंपुनस्सच्चिदानन्दलक्षण आत्मा अनृतजडदुःखात्मकोऽनात्मेति विशेषाकारेण । अत एव हि तस्यानात्मन्यात्मेतिप्रत्ययो भ्रमः स्थाणौ पुरुष इति प्रत्ययवत् । यथा सिंहदेवदत्तौ पृथक्पश्यन् पुरुषस्सिंहो देवदत्त इति प्रत्येति, न तथा स्थाणुः पुरुष इति प्रत्येति, न तथा स्थाणुपुरुषौ पृथक्पश्यन् स्थाणुः पुरुष इति प्रत्येति; किंतु स्थाणुमेकमेव पश्यन् पुरुष इति प्रत्येति । एवमात्मानात्मानौ पृथ-

माणसामान्यविशेषयोः। यत्तूक्तं 'श्रुतिप्रामाण्या'दिति, तन्न- तत्प्रामाण्यस्यादृष्टविषयत्वात्। प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसम्बन्धे श्रुतेः प्रामाण्यं, न प्रत्यक्षादिविषये- अदृष्टदर्शनार्थविषयत्वात्प्रामाण्यस्य। तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्य-

---

पश्यन् सङ्घात आत्मेति (मनुष्योऽहमिति) न प्रत्येत्यज्ञः, किन्त्वनात्मानमेकमेव पश्यन्नात्मेति प्रत्येति। तस्मात्सङ्घातेऽहमिति प्रत्ययो न गौणः, किंतु मिथ्यैव।

ननु यदि देहेन्द्रियादयो मिथ्यात्मानस्स्युस्तर्हि तत्कृतमपि कर्म मिथ्यैव स्यादिति कथं मिथ्याभूतं यज्ञादिकर्म श्रुतिर्ब्रूयान्मुख्यात्मकर्तव्यत्वेन? तस्माच्छ्रुतेरदृष्टविषयमुख्यात्मचोदनाप्रामाण्यान्मुख्यात्मकर्तव्यं गौणैर्देहेन्द्रियादिभिः क्रियत इत्यवश्यमभ्युपगन्तव्यं- वेदस्य सर्वप्रमाणाधिकत्वात्। नहि वेदप्रामाण्यमुपपत्तिभिर्विघटयितुमर्हमत आह— यत्तूक्तमित्यादि, तत्प्रामाण्यस्येति। श्रुतिप्रामाण्यस्येत्यर्थः। 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एनं विदन्ति वेदे'नेतिवचनात्प्रत्यक्षानुमितिप्रमाणाविषयादृष्टार्थबोधकत्व एव वेदस्य प्रामाण्यं, नतु दृष्टार्थविषय इति भावः। इदमेवाह—प्रत्यक्षादीति। आदिपदादनुमानादिग्रहणम्। कस्य विषयोऽत आह—अग्निहोत्रादीति। अग्निहोत्रादिकर्म तत्साध्यं स्वर्गादिफलं तयोः कर्मफलयोर्वर्तमानस्साध्यसाधनभावरूपसम्बन्धश्चेत्ययं विषय इत्यर्थः। अग्निहोत्रादिसाध्यं स्वर्गादि; साधनमग्निहोत्रादि; सम्बन्धश्च त्रयाणां समाहारद्वन्द्वः- तस्मिन् विषये श्रुतेः प्रामाण्यात्। प्रत्यक्षादिविषये श्रुतेर्न प्रामाण्यम्। तत्र हेतुमाह—अदृष्टेति। प्रामाण्यस्यादृष्टस्याज्ञातस्यार्थस्य दर्शनं ज्ञापनं तदेवार्थो वस्तु विषयो यस्य तत्त्वात्; अदृष्टार्थदर्शनविषयत्वादिति वा पाठः। सर्वेषामपि प्रमाणानामज्ञातार्थज्ञापकत्वादेव प्रामाण्यम्। तथाहि- प्रमाकरणं प्रमाणं; अनधिगताबाधितार्थविषयकं ज्ञानं प्रमा; भ्रमव्यावृत्त्यर्थमुक्तमबाधितेति। ततश्चाज्ञाताबाधितार्थज्ञापकं प्रमाणं; प्रत्यक्षप्रमाकरणं प्रत्यक्षप्रमाणं चक्षुरादि। तत्र चक्षुर्व्यापारात्प्रागदृष्टं घटं स्वव्यापारेण घटोऽयमिति पुरुषंप्रति बोधयित्वा चक्षु प्रमाणं भवति। एवं स्वव्यापारात्प्रागश्रुतं शब्दं बोधयित्वा श्रोत्रं प्रमाणं, तथा रसनादिकमप्यनुमितिकरणमनुमानं; तच्च मनः। पर्वतेऽदृश्यमानमग्निं वह्निव्याप्यो धूम इति धूमलिङ्गेन पुरुषंप्रति बोधयित्वा प्रमाणं भवति। व्याप्तिज्ञानं करणमिति केचित्। सादृश्यज्ञानमुपमितिकरणमुपमानम्। तच्चाज्ञातमेव गोगवयसादृश्यं ज्ञापयित्वा प्रमाणं भवति। तथा पीनो देवदत्तो दिवा न भुङ्क्त इत्यर्थापत्तिरज्ञातमेव पीनदेवदत्तकर्तृकं रात्रिभोजनं ज्ञापयित्वा प्रमाणं भवति।

एवमनुपलब्धिरपि अज्ञातमेव घटाभावं ज्ञापयित्वा प्रमाणं भवति, तद्वच्छब्दोऽप्यज्ञातार्थज्ञापनादेव प्रमाणम्। आप्तवाक्यं शब्दः; घटमविदन् हि बालो घटं दृष्ट्वा कोऽयमिति मातरं पृष्ट्वा घटोऽयमिति मातृवचनाद्घटं जानाति। वेदश्च परमाप्तस्य भगवतो वाक्यमिति परं प्रमाणम्। स चाज्ञातं स्वर्गाग्निहोत्रादिकं ज्ञापयति। तस्मादिति। दृष्टार्थे वेदस्याप्रमाणत्वादित्यर्थः। दृष्टं मिथ्या च तद्ज्ञानं च मिथ्याज्ञानं निमित्तं यस्य तस्य दृष्टमिथ्याज्ञाननिमित्तस्य देहादिसङ्घातेऽहंप्रत्ययस्य दृष्टमेवेत्यर्थः। गौणत्वं कल्पयितुं न शक्यम्। ननु देहादिसङ्घातेऽहंप्रत्ययः तत्कारणमज्ञानं च यद्यपि

यस्य देहादिसङ्घाते गौणत्वं कल्पयितुं शक्यं; नहि श्रुतिशतमपि 'शीतोऽग्निरप्रकाशो' वेति ब्रुवत्प्रामाण्यमुपैति । यदि ब्रूयात् 'शीतोऽग्निरप्रकाशो' वेति, तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं- प्रामाण्यान्यथानुपपत्तेः; न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा । कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात्कर्तुरभावे श्रुतेरप्रामाण्यमितिचेत्, न- ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः ।

---

मिथ्यात्वेन ज्ञातं, तथापि गौणत्वेनाऽहंप्रत्ययो न ज्ञात इत्यज्ञातज्ञापनमस्ति वेदप्रामाण्यकारणं प्रकृतेऽपीत्यत आह—नहीति । अग्निरुष्णः प्रकाश इत्यनुभवसिद्धे विषये यदि बहवोऽपि वेदा अग्निश्शीतोऽप्रकाशो वेति भाषमाणास्सन्तः प्रमाणं स्युस्तर्हि मिथ्यात्वेन विद्वदनुभवसिद्धे सङ्घाताहंप्रत्यये विषये देहेन्द्रियादयो गौणा इति वदन् वेदः प्रमाणं स्यात् । तस्मादनुभवाविरुद्ध एव वेदः प्रमाणम् । ननु वेदाः प्रमाणमिति प्रसिद्धेऽर्थे कथमप्रामाण्यप्रसङ्ग इत्यत आह—यदीति । श्रुतेः प्रामाण्यान्यथानुपपत्त्या विवक्षितमर्थान्तरं कल्प्यं, यथा शीतोऽग्निरप्रकाश इति वेदवाक्ये सति तस्याग्निश्शीतश्शान्तो नष्ट इति यावत् । अत एवाप्रकाश इति । किमिति यथाश्रुतार्थो न कल्प्योऽत आह—नत्विति । स्ववचनविरुद्धं प्रमाणान्तरविरुद्धं न कल्प्यं- विरोधादिति भावः । एतेन यजेतेत्याद्यदृष्टविषयचोदनाप्रामाण्याद्यदि सङ्घातो गौणात्मेति कल्प्यते तर्हि सर्ववेदान्तविरोध इति स्ववचनविरोधः । वेदान्तेषु हि मायया सर्वं जगदात्मनि कल्पितमित्यविद्यया देहेन्द्रियादिकमात्मत्वेन प्रत्येतीति च घण्टाघोषः, विद्वदनुभवविरोधश्च- विदुषां सङ्घातेऽहंप्रत्ययाभावात् । यदि स गौणस्स्यात्तर्हि विदुषां किमिति न स्यात्? किमु विद्वान् पिता- 'आत्मा वै पुत्रनामा'सीति पुत्रं गौणात्मानं न प्रत्येति? प्रत्युत विद्वानेव प्रत्येति, न त्वविद्वान् मूर्खः- श्रुत्यर्थानभिज्ञत्वात्तस्य । उपपत्तिविरोधश्च—अगृहीतसामान्यविशेषयोस्सङ्घातात्मनोर्गौणत्वायोगादित्युक्तत्वात्; प्रत्यक्षप्रमाणविरोधश्च- गौणमुख्यसिंहयोरिव गौणमुख्यात्मनोः पृथगनुपलम्भात् । तस्मान्मिथ्यात्मैव सङ्घातः । यजेतेत्यादिश्रुतयस्तु अविद्वद्विषयत्वेन प्रमाणमेव । यो हि सङ्घातं कर्तारमात्मत्वेन प्रत्येति, स हि यज्ञादिकं कुरुते तत्फलमनुभवति च । तथा च विधिश्रुतीनामविद्वद्विषयत्वं प्रकल्प्य प्रामाण्यं सम्पादनीयमिति भावः ।

ननु सङ्घातेऽहमिति मिथ्याप्रत्ययवान् यस्स एवाविद्यावान् कर्मणः कर्तेति मिथ्याप्रत्ययवत्पुरुषकर्तृकत्वे सति कर्मणो मिथ्यात्मभूतसङ्घातकर्तृकत्वमेव प्राप्तं, कर्मणो न मुख्यात्मकर्तृकत्वमिति कृत्वा मुख्यस्य कर्तुरात्मनोऽभावाच्छ्रुतिरप्रमाणेति शङ्कते—कर्मण इति । सङ्घातात्मानमुद्दिश्य यजेतेत्यादिविधिरनुपपन्ना । नहि स्थाणुपुरुषं कोऽप्यनुन्मत्तः त्वमेवं कुर्विति चोदयति, मुख्यात्मा त्वकर्तैव । तस्माच्छ्रुतिरप्रमाणैवेति भावः । यद्वा कर्मणोऽविद्वत्कर्तृकत्वेसति विदुषः कर्मण्यप्रवृत्त्या कर्तुरभावात् श्रुतेरप्रामाण्यमिति शङ्कते—कर्मण इति । परिहरति—नेति । हेतुमाह—ब्रह्मेति । कर्मकाण्डो ज्ञानकाण्डश्चेति काण्डद्वयात्मको वेदः । तत्र कर्मकाण्डस्याप्रमाणत्वेऽपि ज्ञानकाण्डः प्रमाणमेवेति न श्रुतेरप्रामाण्यप्रसङ्गः । ज्ञाननिष्ठाकर्तुर्विदुषस्सत्त्वेन ज्ञातुर्मुख्यात्मनस्सत्त्वेन च ज्ञानकाण्डस्य सार्थकत्वादिति भावः । ब्रह्मविद्यायां ज्ञानकाण्डे उपनिषत्स्विति यावत् । अर्थवत्त्वस्योपपत्तेरित्यक्षरार्थः । ननु

कर्मविधिश्रुतिवद्ब्रह्मविद्याविधिश्रुतेरप्यप्रामाण्यप्रसङ्ग इतिचेत्, न- बाधकप्रत्ययानुपपत्तेः। यथा ब्रह्मविद्याविधिश्रुत्याऽऽत्मन्यवगते देहादिसङ्घातेऽहंप्रत्ययो बाध्यते, तथाऽऽत्मन्येवाऽऽत्मावगतिर्न कदाचित्केनचित्कथंचिदपि बाधितुं शक्या फलाव्यतिरेकावगतेः, यथा

---

यजेतत्यादिकर्मकाण्डोऽविद्वद्विषयत्वेन यथा विदुषामप्रमाणं तथा ज्ञानकाण्डोऽपि विद्वद्विषयत्वेनाविदुषामप्रमाणमेवेति कर्मज्ञानकाण्डयोरप्रामाण्यं तुल्यमेव । अविदुषामप्रवृत्त्या ज्ञानकाण्डस्य, विदुषामप्रवृत्त्या कर्मकाण्डस्य चानर्थकत्वादिति शङ्कते—कर्मविधीति । कर्मविधिश्रुतिर्यजेतेत्यादिः । तस्या इव तद्वत् । ब्रह्मविद्याविधिश्रुतिश्श्रोतव्यो मन्तव्य इत्यादिः । तस्या अप्यप्रामाण्यप्रसङ्ग इतिचेन्न, कुतः? बाधकेति । बाधकज्ञानासम्भवादित्यर्थः । तदेव विवृणोति—यथेति । ब्रह्मविद्याविधिश्रुत्या तज्जन्यज्ञानेनेत्यर्थः । आत्मन्यवगते साक्षात्कृते सति देहादिसङ्घातेऽहमितिप्रत्ययो यथा बाध्यते तथा आत्मावगतिः केनापीति शेषः । कदाचिदपि कथंचिदपि बाधितुं न शक्या । कुतः ? अवगतेरात्मज्ञानस्य फलाव्यतिरेकादात्मप्राप्तिरूपफलाभेदात्, आत्मसाक्षात्कारातिरिक्तात्मप्राप्तिरूपमोक्षफलाभावादित्यर्थः । तस्माद्ब्रह्मविद्याया वैयर्थ्यमापादयितुं न शक्यते, येन तस्या अप्रामाण्यं स्यादिति भावः । कुतो न शक्यतेऽत आह—यथेति । अग्निरुष्णः प्रकाशश्चेति प्रत्ययस्य यथा न केनापि बाधस्तद्वदहंब्रह्मेतिप्रत्ययस्यापीत्यर्थः । यथावदवस्थितवस्तुज्ञानत्वात्तस्येति भावः ।

अत्रेदं बोध्यम्—अविदुषां ज्ञानकाण्डेऽप्रवृत्तिः किं ब्रह्मविद्याया बाधितत्वादुत तेषां तत्राऽनधिकारात्? नाद्यः- ब्रह्मविद्यायाः कयापि तद्भिन्नविद्यया बाधाभावात् । न ह्यग्निविषयकोऽग्निरुष्णः प्रकाशश्चेति प्रत्ययः केनापि प्रत्ययान्तरेण बाध्यते? किंवा घटविषयकोऽयं घट इति प्रत्ययः केनापि बाध्यते? एवं ब्रह्मविषयकोऽहं ब्रह्मेति सच्चिदानन्दं ब्रह्मेति च ज्ञानं न केनापि बाध्यते? किंचाहं ब्रह्मेतिप्रत्ययः नाहं ब्रह्मेतिप्रत्ययेनैव बाध्येत । यस्य त्वज्ञस्य नाहं ब्रह्मेति प्रत्ययोऽस्ति तस्य ब्रह्माहमस्मीतिप्रत्ययस्यैवाभावात्कथं तद्बाधप्रसङ्गः? न ह्यहं ब्रह्मेति विदुषो नाहं ब्रह्मेतिप्रत्ययः पुनरुदीयाद्येन ब्रह्मात्मप्रत्ययस्य बाध आशङ्क्येत । न ह्यग्निरुष्ण इति विदुषश्शीतोऽग्निरितिप्रत्यय उदेति, नापि घटोऽयमिति विदुषो नायं घट इति । अत एव ह्यबाधितार्थविषयं ज्ञानं प्रमेत्युक्तमभियुक्तैः । अर्थस्याबाधितत्ववचनेन च ज्ञानस्यापि तत्त्वं सिद्धमित्यबाधितमेव ज्ञानं प्रमा ।

यत्तु बाधितार्थविषयं ज्ञानं भ्रमरूपं तद्बाधितमेव । यथा रज्जुविषये रज्जुरियमिति ज्ञानमबाधितार्थविषयत्वादबाधितं प्रमाज्ञानं; रज्जुविषये सर्पोऽयमिति ज्ञानं तु बाधितार्थविषयत्वाद्बाधितं भ्रमज्ञानम् । रज्जुरयं न सर्प इत्याप्तवाक्यजन्यरज्जुज्ञानेन हि सर्पभ्रमो बाध्यते; बाधो हि निवृत्तिः । रज्जुज्ञानात्सर्पभ्रमनिवृत्तिरनुभवसिद्धैव । तस्माद्भ्रमज्ञानस्य बाधकं प्रमाज्ञानमस्ति । प्रमाज्ञानस्य तु न किञ्चिदपि बाधकं, तथा भ्रमज्ञानविषयस्य सर्पाभासस्य बाधितत्वं, न तु प्रमाज्ञानविषयस्य रज्जोः । एवं सङ्घातात्मज्ञानं भ्रमः । सङ्घातस्यानात्मत्वात्तद्विषयात्मज्ञानस्य ब्रह्माहमस्मीति वेदवाक्यजन्यब्रह्मात्म-

ज्ञानेन बाधितत्वाद्भ्रमविषयसङ्घातस्यापि बाधितत्वेन बाधितार्थविषयत्वाच्च सङ्घातात्मज्ञानस्य । ब्रह्मात्मज्ञानं तु न भ्रमः, किंतु प्रमा । रज्जुज्ञानवद्ब्रह्मज्ञानस्य केनाप्यबाधितत्वाद्रज्जुवद्ब्रह्मणोऽप्यबाधितार्थत्वात्पारमार्थिकं सद्रूपं हि ब्रह्म । नहि बाधितस्य क्वापि सत्त्वमस्ति;. नित्यं हि सत् । रज्जुस्तु व्यावहारिकसत्या; प्रातिभासिका रज्जुसर्पमरीच्युदकस्वप्नरथादयः । तद्ज्ञानानि च व्यावहारिकसर्पमरीचिजागरप्रपञ्चैः तद्ज्ञानैश्च बाध्यन्ते यथा, तथा व्यावहारिकोऽपि सङ्घातस्तदात्मज्ञानं च पारमार्थिकेन ब्रह्मणा तदात्मज्ञानेन च बाध्यते । तस्मात्- 'सत्यं ज्ञानमनन्तं ब्रह्म, अजो नित्यश्शाश्वत' इत्यादिशास्त्रादबाधितं नित्यं सद्रूपं ब्रह्मेति तद्विषयं ज्ञानं चाबाधितं प्रमैव । सङ्घातस्तु नेतिनेतीत्यादिश्रुतिभिर्नेह नानेत्यादिश्रुतिभिश्च बाधित इति तद्विषयं ज्ञानमपि बाधितमेवेति भ्रम एव । नच नेह नानेत्यादिना सङ्घातस्यैव बाधितत्वात्सङ्घातविषये सङ्घातज्ञानं च भ्रम एवेति विरुद्धमिदमिति वाच्यं, इष्टापत्तेः । अत एव हि 'सर्वं खल्विदं ब्रह्म, वासुदेवस्सर्वमिति, सर्वं विष्णुमयं जग'दिति च श्रुतिस्मृतिपुराणानि सङ्गच्छन्ते । रज्जौ सर्पवद्ब्रह्मणि सर्वमध्यस्तमिति, सर्पज्ञानवत्सर्वज्ञानं बाधितार्थविषयत्वाद्भ्रम एव, ब्रह्मज्ञानमेकमेव प्रमा- ब्रह्मण एकस्यैवाबाधितार्थत्वादबाधितार्थविषयं हि ब्रह्मज्ञानम् । रज्जुज्ञानादीनां प्रमात्वं तु यावद्व्यवहारमबाधितत्वरूपम् । अत एव सङ्घाते सङ्घातज्ञानस्य यावद्व्यवहारमबाधितत्वाद्रज्जुज्ञानवत्प्रमात्वम् । निरपेक्षमबाधितत्वं तु नास्तीति भ्रमत्वं च परमार्थदृष्ट्या । सङ्घाते आत्मज्ञानं तु रज्जौ सर्पज्ञानवद्यावद्व्यवहारमप्यबाधितं न भवति- आप्तवाक्यज्ञानेन रज्जुसर्पज्ञानवन्महावाक्यज्ञानेन संघातात्मज्ञानस्य व्यवहारकालेऽपि बाधितत्वात् । व्यवहारदशायामपि संघातादन्यमात्मानं हि मन्यन्ते विद्वांसः । अन्यथा ज्ञानोपदेशतद्ग्रहणाद्यसम्भवात् । तस्मात्संघातात्मज्ञानं बाधितमेवेति भ्रम एव; ब्रह्मात्मज्ञानं त्वबाधितमेवेति प्रमैव । नहि सच्चिदानन्दं ब्रह्मेति वेदवाक्यजन्यस्य स्वानुभवारूढस्य ब्रह्मात्मज्ञानस्य केनापि बाधस्सम्भवति- सर्वाण्यपि ज्ञानान्तराणि देहात्मेन्द्रियात्मेत्यादीनि बाधित्वा जातत्वात्तस्य । सम्यग्विचारेण जातं हि तत् । एतद्ब्रह्मात्मज्ञानायैव हि ब्रह्मविचारात्मकं ब्रह्ममीमांसाशास्त्रं कृतं व्यासाचार्यैः । संघातात्मज्ञानं तु स्वभावतोऽविचाराज्जातमौत्पत्तिकमेव- आबाल्यादपि तस्य सत्त्वात् । अत एवाविवेकमूलकं सङ्घातात्मज्ञानं विवेकपूर्वकेण ब्रह्मात्मज्ञानेन बाध्यते । यथाऽविवेकपूर्वकं रज्जुसर्पज्ञानं विवेकपूर्वकेण रज्जुज्ञानेन बाध्यते; नतु विवेकपूर्वकस्य रज्जुज्ञानस्याविवेकपूर्वकसर्पज्ञानेन बाधो दृश्यते । येन ब्रह्मज्ञानस्य गुरुशास्त्रोपदेशादिविचारजन्यस्य स्वाभाविकसङ्घातात्मज्ञानेन बाधस्स्यात् । किं च प्रकाशतुल्या ब्रह्मविद्या स्पष्टपदार्थावगतिहेतुत्वात् । तमस्तुल्या तु स्वाभाविक्यविद्या, यन्मूलं सङ्घातात्मज्ञानमज्ञानां पदार्थस्वरूपतिरोधायकत्वात् । तथा च तेजसा तम इव ब्रह्मविद्ययाऽविद्या निवर्त्यते । तस्मात्सङ्घातात्मज्ञानस्यैव बाधकमस्ति, नतु ब्रह्मात्मज्ञानस्येतिकृत्वा अविदुषां ज्ञानकाण्डेऽप्रवृत्तिर्ब्रह्मविद्याया बाधितत्वादिति वक्तुं न शक्यते । अतो द्वितीयः पक्षः परिशिष्टः । अनधिकारादिति । युक्तं चैतत् । न ह्यविद्यारागादिदोषदूषितहृदयानां सङ्घातात्मनिश्चयानां कर्ता भोक्ताहमिति मन्यमानानां धर्माधर्मादिसंस्कारवशाद्विहितेषु प्रतिषिद्धेषु च कर्मसु प्रवर्तमानानां

संसरतामज्ञानां ब्रह्मविद्यायामधिकारोऽस्ति। अत एव हि- 'शान्तो दान्त उपरतस्तितिक्षु'रितिश्रुत्या, 'अथातो ब्रह्मजिज्ञासा' इति सूत्रेण च शमदमादिसाधनसम्पन्नानां प्राज्ञानामापातज्ञातब्रह्मात्मभावानामेव ब्रह्मविद्यायामधिकारो दर्शितः। इह च 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति साङ्ख्यानां ज्ञानिनामेव ब्रह्मविद्यायामधिकारः, नतु कर्मिणामज्ञानामिति दर्शितम्। तथा चानधिकारिणामज्ञानां ज्ञानकाण्डेऽप्रवृत्त्या न ज्ञानविधिवैयर्थ्यम्। तथा विदुषां कर्मकाण्डेऽप्रवृत्तिः किं कर्मविद्याया बाधितत्वात्? यद्वा तेषां तत्रानधिकारात्? नान्त्यः- ब्रह्मविदां द्विजानां स्त्रीशूद्रादिवत्कर्मण्यनधिकार इतिवचनस्यायुक्तत्वात्। ब्रह्मज्ञानात्प्रागेव येषां द्विजानां कर्माधिकारस्तेषां ब्रह्मज्ञाने सति कर्माधिकारनाशो यदि स्यात्तर्हि ब्रह्मज्ञानं दोष एव स्यात्सुरापानब्रह्महत्यादिवत्। न चेष्टापत्तिः- तथासति ब्रह्मविद्याप्रतिपादकवेदभागस्याप्रामाण्यापत्तेः। एवं ब्रह्महत्योपदेष्टुरिव ब्रह्मज्ञानोपदेष्टुरीश्वरस्यानाप्तत्वापत्तेः, ब्रह्महत्यादिकृत इव ब्रह्मज्ञाननिष्ठस्यापि राजादिभिर्दण्ड्यत्वापत्तेः। तस्मात्कर्मविद्याया ब्रह्मविद्यया बाधितत्वादेव विदुषां कर्मण्यप्रवृत्तिः। 'नेह नानास्ति किंचन, आत्मैवेदं सर्वं, निष्कलं निष्क्रियं शान्तं, तत्सत्यं स आत्मा तत्त्वमसि, अशब्दमस्पर्शमरूपमव्ययं, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यो वै भूमा तदमृतमतोऽन्यदार्त'मित्यादिश्रुतिभिरकर्त्रभोक्तृसच्चिदानन्दलक्षणाद्वितीयब्रह्मात्मज्ञाने सति कर्ताहं भोक्ताहं मम कर्मेति मिथ्याज्ञानं कथमबाधितं सद्वर्तेत! येन कर्मणि प्रवृत्तिस्स्याद्विदुषः। नहि तेजसि जाते तिमिरमवतिष्ठेत। तस्मान्न ब्रह्मविद्यायाः कर्यापि बाध इति बाधकप्रत्ययानुपपत्तिः।

ननु शास्त्रजन्यमहं ब्रह्मेतिज्ञानं नाहं ब्रह्मेत्यनुभवेन बाध्यत इतिचेत्, मैवम्—स किं विद्वदनुभवः? उताविद्वदनुभवः? नाद्यः- अहं ब्रह्मेति विदुषां नाहं ब्रह्मेत्यनुभवायोगात्। न द्वितीयः- अविद्वन्निष्ठेन नाहं ब्रह्मेत्यनुभवेन विद्वन्निष्ठस्याहं ब्रह्मेतिज्ञानस्य बाधायोगात्। समानाधिकरणसमानविषययोर्हि ज्ञानाज्ञानयोर्बाध्यबाधकभावः। अन्यथा देवदत्तकर्तृकाच्छब्दशास्त्राध्ययनाद्देवदत्तनिष्ठशब्दशास्त्राज्ञानस्य यज्ञदत्तनिष्ठशब्दशास्त्राज्ञानस्य च निवृत्त्यापत्तेः। नाहं ब्रह्मेत्यनुभवो ह्यज्ञानम्। न चानुभवस्य ज्ञानाभावत्वं कथमिति वाच्यं, ज्ञानाभावादन्यस्यैव भावरूपाज्ञानस्य सिद्धान्तितत्वात्। अथ वा नाहं ब्रह्मेत्यनुभवोऽपि ज्ञानमेव भवतु। तथाप्यहं ब्रह्मेतिज्ञानस्य नाहं ब्रह्मेतिज्ञानस्य च विरोधः- ब्रह्मतदभावयोर्विरोधेन तद्ज्ञानयोरपि विरोधात्। नाहं ब्रह्मेति हि ब्रह्माभावज्ञानम्। तस्मादहं ब्रह्मेतिज्ञानस्य न केनापि बाधः।

ननु बहुवारं पठितवेदान्तशास्त्राणां वेदान्ताचार्यपदमधिरुह्य ब्रह्मज्ञानोपदेष्टॄणां च बहूनां नाहं ब्रह्मेत्यनुभवोऽस्ति संसारदुःखोपलम्भाच्चेत्रितिचेत्, मैवं वादीः— यथावदनवगतब्रह्मात्मज्ञानानामेव संसार्यहमिति संसारदुःखानुभवः, नतु सम्यग्दर्शिनाम्। दुर्लभो हि ब्रह्मात्मसाक्षात्कारः- पुंसां प्रतिबन्धबाहुल्यसत्त्वात्। नहि बहुवारं श्रुतमपि चूतफलमाधुर्यमचर्वितचूतफलानां बुद्ध्यारूढं भवति। एवं

अग्निरुष्णः प्रकाशश्चेति । न चैवं कर्मविधिश्रुतेरप्रामाण्यं- पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्त-

---

बहुवारं श्रुतब्रह्मणामपि तत्साक्षात्काररहितानां तद्बुद्ध्यारूढं न भवति । तस्माद्ब्रह्मात्मसाक्षात्कारशून्या एव ते; ये त्वयोपन्यस्ताश्शिष्योपदेशस्तु परोक्षज्ञानमात्रेणापि सम्भवत्येव । अज्ञाननिवृत्तिस्त्वपरोक्षज्ञानादेव । यथा घटाज्ञाननिवृत्तिर्घटाकारपरिणतबुद्धिवृत्त्यपरोक्षज्ञानाद्भवति, तथा ब्रह्माज्ञाननिवृत्तिरपि ब्रह्माकारपरिणतबुद्धिवृत्त्यपरोक्षज्ञानादेव भवति । एवंविधब्रह्मापरोक्षज्ञानजनकत्वादेव ब्रह्मविद्यायाः प्रामाण्यं यथा घटापरोक्षज्ञानजनकत्वाच्चक्षुषः ।

ननु अज्ञातार्थज्ञापकत्वाच्छास्त्रं प्रमाणमित्युक्तं, ब्रह्मविद्यायास्तथात्वाभावादप्रामाण्यमेव । किं वेदान्तशास्त्रमज्ञातं ब्रह्म बोधयत्युत ज्ञातम् ? नाद्यः- 'यत्साक्षादपरोक्षाद्ब्रह्म'इतिश्रुतेर्नित्यापरोक्षस्य ब्रह्मणोऽज्ञातत्वासम्भवात् , येन ब्रह्म ज्ञातुमिष्टं तस्यैवात्मनो ब्रह्मत्वाच्च । द्वितीये- वेदान्तशास्त्रस्य ब्रह्मविद्यात्मकस्याप्रामाण्यमेवेतिचेत् , मैवम्—यो ब्रह्म जिज्ञासति स नाहं ब्रह्मेति वेद, यद्यहं ब्रह्मेति वेद तर्हि तस्य तज्जिज्ञासैव नोदीयात् । नहि घटं विदुषः पुरुषस्य घटजिज्ञासा दृश्यते, तस्मादज्ञातमेव ब्रह्म । नच सुतरामज्ञातत्वे कथं तज्जिज्ञासोदय इति वाच्यं, आपततो ज्ञातत्वाद्ब्रह्मणः । सर्वो ह्यास्तिकः कश्चिदीश्वरो देवोऽस्तीति प्रत्येति, जगत्कार्यलिङ्गकानुमानेन चापाततो वेत्ति; आपाततो ज्ञातमपि तदज्ञातप्रायमेवेति न कश्चिद्दोषः । यत्साक्षादिति श्रुतिस्तु विद्वद्विषया, विदुषो हि साक्षादपरोक्षं ब्रह्म न त्वविदुषः । यो ब्रह्मैव पारोक्ष्येणापि सम्यङ्न वेद कथं तस्य ब्रह्मसाक्षात्कारप्रसङ्गः ? यत्तु येन ब्रह्म ज्ञातुमिष्टं तस्यैवात्मनो ब्रह्मत्वान्नाज्ञातत्वं ब्रह्मण इति, तदप्ययुक्तम्—यो ब्रह्म जिज्ञासति स एवात्मा ब्रह्मेति किं जिज्ञासुर्वेद उत तदन्यस्तत्त्ववित् ? नाद्यः- विदितत्वे जिज्ञासानुदयप्रसङ्गात् । नान्त्यः- विद्वत्कर्तृकब्रह्मात्मज्ञानेनाविदुषो ब्रह्मज्ञानासम्भवात् । नचात्मनोऽपि कथमज्ञातत्वमिति वाच्यं, अविद्यावैभवप्रयुक्तेन सङ्घाते आत्मेतिप्रत्ययेन सच्चिदानन्दलक्षणस्यात्मनोऽप्यज्ञातत्वोपपत्तेः; निद्रायां ह्यात्मनोऽप्यज्ञातत्वं सर्वानुभवसिद्धम् । तस्मान्मामहं न जानामीत्यनुभवान्मनुष्योऽहमित्याद्यनुभवान्नाहं ब्रह्मेत्यनुभवात्संसार्यहमित्यनुभवाच्च सिद्धस्यात्मनोऽप्यज्ञातत्वस्य केवलयुक्त्या प्रतिषेद्धुमयुक्तत्वाच्च । सच्चिदानन्दलक्षणब्रह्माभिन्न आत्मा सर्वस्याज्ञस्याविदित एवात्मा सन्नपि मायावैभवादिति सिद्धमज्ञातब्रह्मात्मार्थज्ञापनाद्ब्रह्मविद्यायाः प्रामाण्यम् । नच तर्कादिशास्त्रेण ब्रह्म ज्ञातमेवेति वेदान्तशास्त्रं व्यर्थमिति वाच्यं, तर्कादिशास्त्रेणात्मभिन्नस्य ब्रह्मणो ज्ञातत्वेऽप्यात्माभिन्नस्य ब्रह्मणोऽज्ञातत्वात् । एतेन भिन्नात्मवादिनां द्वैतिनां विशिष्टाद्वैतिनां च मते वेदान्तशास्त्रस्य प्रामाण्यमेव दुरुपपादमिति सिद्धम् । नन्वनधिगताबाधितब्रह्मात्मविषयज्ञानजनकत्वाद्वेदान्तशास्त्रमेकमेव परं प्रमाणं; अनधिगतस्यापि कर्मरूपार्थस्य ब्रह्मज्ञानबाधितत्वेन तद्बोधकः कर्मकाण्डात्मको वेदोऽप्रमाणमेव । किंपुनस्तर्कादिशास्त्राणां चक्षुरादिप्रमाणानां चाप्रामाण्यं वक्तव्यम् । तथा च सर्वात्मना वेदोऽप्रमाणमिति वदतो बौद्धान्नास्तिकादर्धांशेन वेदोऽप्रमाणमिति वदन् भवान्मनाग्वरमित्यत आह—नचैवमिति । अनधिगतयावद्व्यवहाराबाधितकर्मार्थविषयज्ञानजनकत्वेन तादृशघटाद्यर्थविषयज्ञानजनकचक्षुरादिवत्कर्मकाण्डस्यापि

रापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेप्युपायस्याप्युपेयसत्यतया सत्यत्वमेव स्यात् , यथाऽर्थवादानां विधिशेषाणां; लोकेपि बालोन्मत्तादीनां पय

---

प्रामाण्यात् । नहि वयं नास्तिका इव यावद्व्यवहारं कर्मार्थस्य बाधितत्वं ब्रूमः, येन वयमर्धबौद्धाः प्रच्छन्नबौद्धा वा भवेम । किंच कर्मकाण्डस्य ज्ञानोपकारकत्वेनापि प्रामाण्यमस्ति, उक्तं हि कर्मनिष्ठाया ज्ञाननिष्ठोपकारकत्वमिहैव । 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इत्यादिना । कर्मनिष्ठापूर्विका हि ज्ञाननिष्ठा । कर्मनिष्ठया चित्ते शुद्धे सत्येव ज्ञाननिष्ठाप्राप्तियोग्यत्वलाभात् ! तच्चोक्तमत्रैवाध्याये- इदमेव कर्मणो ज्ञानोपकारकत्वं दर्शयति—पूर्वपूर्वेति । पूर्वपूर्ववैश्वदेवाग्निहोत्राग्निष्टोमादिप्रवृत्तिनिरोधेन उत्तरोत्तरापूर्वचयनपौण्डरीकादिप्रवृत्तिजननस्य कर्मविधिकृतस्येति शेषः । प्रत्यगात्माभिमुख्येन ब्रह्मविद्यायामिति शेषः- प्रवृत्त्युत्पादनार्थत्वात् ।

अयं भावः—उपनीतस्य विवाहः, विवाहितस्य वैश्वदेवः, कृतवैश्वदेवस्याग्निहोत्राधानं, कृताधानस्याग्निष्टोमः, कृताग्निष्टोमस्य चयनमित्येवं पूर्वपूर्वकर्म कृतवत उत्तरोत्तरं कर्म विदधाति कर्मकाण्डः, नतूपनीतस्य पुनरुपनयनमित्येवं कृतमेव कर्म पुनः कर्तव्यतयोपदिशति । ततश्च किं ज्ञायते? कर्मकाण्डस्य न स्वार्थे तात्पर्यं, किंतु ज्ञानार्थ एवेति । एवं हि पूर्वपूर्वं कर्म विहायोत्तरोत्तरं कर्म कुर्वन्पुरुषः क्रमेण प्रत्यगात्माभिमुखो भूत्वा ब्रह्मविद्यायां प्रवर्तत इति । नचैवं कर्मठस्य ब्रह्मविद्यायां प्रवृत्तिर्न स्यादिति वाच्यं, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेतिश्रुतेः। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति स्मृतेश्च । 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पण'मित्युक्तन्यायेनेश्वरार्पणबुद्ध्या कर्म कुर्वाणस्य स्त्र्यन्नपानादिबाह्यविषयेषु रागरहितस्य क्रमेण चित्तशुद्धौ सत्यां क ईश्वरः, कश्चात्मेति जिज्ञासा स्यात्ततश्च ब्रह्मविद्यायां प्रवर्तत एव कर्मठोऽपि । तस्मादात्मज्ञानार्थकब्रह्मविचारहेतुभूतशमदमादिसाधनसम्पत्तिसम्पादकत्वात्कर्मणां कर्मकाण्डस्य ज्ञानकाण्डोपकारकत्वमिति युक्तं कर्मकाण्डस्यापि प्रामाण्यम् ।

ननु कर्मणो बाधितत्वात्तद्विषयज्ञानस्यापि बाधितत्वेन कर्मकाण्डो मिथ्याभूत एवेति कथं तस्य प्रामाण्यमत आह—मिथ्यात्वेऽपीति । उपायस्य कर्मणः तत्प्रतिपादकवेदभागस्य वा मिथ्यात्वेऽपि उपेयस्य चित्तशुद्ध्यादिद्वारा प्राप्यस्य ब्रह्मणस्सत्यत्वादुपायस्यापि सत्यत्वमेव स्यात् । एतेन कर्मकाण्डवद्ज्ञानकाण्डस्याप्युपायभूतस्य व्यावहारिकत्वेनापारमार्थिकत्वात्कथं ब्रह्मविद्याविधिश्रुतेः प्रामाण्यं मिथ्याभूताया इति शङ्कापि प्रत्युक्ता । ननु ब्रह्मप्राप्तिं प्रति साक्षादुपायस्य ज्ञानकाण्डस्य भवत्वेवमुपेयसत्यतया सत्यत्वं, कथं पुनः कर्मकाण्डस्येत्यत आह—यथेति । अपूर्वयज्ञादिकर्मप्रतिपादकत्वाद्विधिवाक्यानि प्रमाणानि । तत् स्तुत्यर्थत्वादर्थवादा विधिशेषा अपि विधिशेषत्वेन प्रमाणानि यथा तथाऽपूर्वब्रह्मात्मप्रतिपादकत्वाद्ब्रह्मविद्याविधिश्रुतिः प्रमाणं, तदर्थत्वेन तच्छेषत्वात्कर्मविधिरपीत्युपेयसत्यतया ज्ञानकाण्डस्य सत्यत्वे ज्ञानकाण्डोपकारकतया कर्मकाण्डस्य सत्यत्वं- यथा यज्ञाद्यपूर्वप्रतिपादकतया विधिवाक्यानां सार्थकत्वे विधिशेषभूततया अर्थवादानां सार्थक्यं तद्वदिति भावः ।

आदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यं सिद्धं प्रागात्मज्ञानाद्देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् । यत्तु मन्यते स्वयमव्याप्रियमाणोऽप्यात्मा सन्निधिमात्रेण करोति, तदेव मुख्यं कर्तृत्वमात्मनः । यथा राजा युध्यमानेषु

---

ननूपेयस्य ब्रह्मणः प्राप्त्युपायतया ब्रह्मविद्यैव विधीयतां किमिति कर्मविधिरत आह —लोकेऽपीति । यवागूं पिब शिखा ते वर्धिष्यत इति प्ररोचनावचनं यथा यवागूपानकृतशिखावृद्ध्यंशेऽप्रमाणमपि तापोपशमाद्यर्थं विहितत्वेन सार्थकत्वाद्यवागूपानस्य तद्वचनं प्रमाणमेव, तथा 'अक्षय्यगँ ह वै चातुर्मास्ययाजिनस्सुकृतं भव'तीति कर्मविधिवचनमक्षय्यसुकृतप्रदश्चातुर्मास्ययाग इत्यंशेऽप्रमाणमपि ब्रह्मज्ञानहेतुभूतचित्तशुद्ध्यर्थं विहितत्वेन चातुर्मास्ययागस्य तत्र तत्प्रमाणमेव । तस्मात्प्ररोचनावाक्यवत्कर्मविधिवाक्यस्य स्वार्थे तात्पर्याभावात्कर्मविधानं विना चित्तशुद्ध्यलाभाच्चित्तशुद्धिलाभं विना ब्रह्मविद्यारूपोपायस्वीकारानधिकाराद्ब्रह्मविद्याप्राप्त्यर्थं कर्मविधिरिति । यद्वा कर्मविधिवाक्यानां स्वार्थे तात्पर्यं नास्ति, किंतु ज्ञान एवेत्यत्र शास्त्राभिमतोऽर्थवाददृष्टान्त उक्तः । अथ लोकन्यायोऽप्यस्तीत्याह— लोकेऽपीति । एवं ज्ञानशेषत्वात्कर्मणः प्रामाण्यमिति मतमुक्त्वा यावद्व्यवहारमबाधितत्वात्कर्मार्थस्य तद्विषयं ज्ञानमपि प्रमैवेतिमतमाश्रित्याह—साक्षादेव वेति । वाशब्दः पक्षान्तरद्योतनार्थः । प्रकारान्तरस्थानामात्मज्ञानोदयात्प्रागवस्थायां स्थितानां कर्मविधिश्रुतीनां साक्षादेव वा प्रामाण्यं सिद्धम् । अज्ञातस्वर्गाग्निहोत्रादिसम्बन्धबोधकत्वादिति भावः । तत्र दृष्टान्तमाह—प्रागिति । आत्मज्ञानात्प्राग्यावद्व्यवहारमित्यर्थः । आत्मज्ञानसूर्योदये सति हि सर्वव्यवहारकारणाज्ञानतमसः क्षय इति भावः । देहाभिमाननिमित्तं प्रत्यक्षादीनां प्रमाणानां प्रामाण्यं यथा यावद्व्यवहारमस्ति, तथेत्यर्थः । देहादिष्वहमभिमानाभावे हि पश्यामि मनोम्यहमित्येवं न व्यवहरति । तद्व्यवहाराभावे च कथं चक्षुरादिप्रामाण्यमुपपादयितुं शक्यते ? व्यवहारबलकल्प्यं हि चक्षुरादीनां प्रामाण्यम् । तस्माद्यावद्व्यवहारमस्माकं कर्मविधिश्रुतिः प्रमाणमेव व्यावहारिकत्वात्कर्मणस्तद्विधीनां च । परमार्थतस्तु सर्वव्यवहारोऽप्यप्रमाणमेव । आत्मन एकस्यैव सत्त्वादिति । एवं ब्रह्मविद्यायाः प्रामाण्यादकर्तैवात्मा । नच कर्मविद्याप्रामाण्यात्कर्तापीति वाच्यं, कर्मविद्याया ब्रह्मविद्यया बाधितत्वेन तदंशेऽप्रमाणत्वात् ।

ननु कर्मब्रह्मविद्ययोरन्यतराप्रामाण्यस्य वेदवादिनामभ्युपगन्तुमयुक्तत्वाद्विद्याद्वयमपि प्रमाणमेव । नच कथमात्मनः कर्तृत्वमविक्रियस्य ? येन कर्मविद्यापि प्रमाणं स्यादिति वाच्यं, कर्तृभूतसंङ्घातस्य सन्निधिमात्रेणात्मनः कर्तृत्वस्य वस्तुतोऽकर्तृत्वस्य च सत्त्वादिति पूर्वपक्षिणश्शङ्कामुपपादयति यत्त्वित्यादिना—मन्यत इति । भवानिति शेषः । पूर्ववादीति वा । यत्तु मन्यते तदसदित्यन्वयः । मननप्रकारमेव दर्शयति स्वयमित्याद्यारभ्य आत्मन इत्यन्तेन ग्रन्थेन—तदेवेति । सन्निधिमात्रेण कर्मकरणमेवेत्यर्थः । नन्वव्याप्रियमाणस्याकर्तुरप्यात्मनस्सन्निधिमात्रेण यदि कर्तृत्वं स्यात्तर्हि घटस्यापि तत्स्यादित्यतो दृष्टान्तमाह— यथेति । योधेषु भटेषु युध्यमानेषु सत्सु राजा युध्यत इति यथा प्रसिद्धं

योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोपि सन्निधानादेव जितः पराजितश्चेति, तथा सेनापतिर्वाचैव करोति; क्रियाफलसम्बन्धश्च राज्ञस्सेनापतेश्च दृष्टः। यथा च ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्मात्मकृतं स्यात्- तत्फलस्यात्मगामित्वात्। यथा वा भ्रामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं, तथा चात्मन इति, तदसत्-अकुर्वतः कारकत्वप्रसङ्गात्। कारकमनेकप्रकारमितिचेत्, न- राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य

---

योधेषु जितेषु पराजितेषु वा सत्सु स्वयमयुध्यमानोऽपि राजा सन्निधिमात्रेण जितः पराजितश्चेति यथा प्रसिद्धमेवं राजवत्सेनापतिश्चापि स्वयमयुध्यमानस्सन्निधिमात्रेण युद्धं करोति जितः पराजितश्चेति प्रसिद्धम्। न केवलं प्रसिद्धिमात्रं, किंतु युद्धक्रियाफलभूतराज्यधनादिसम्बन्धोऽपि राज्ञस्सेनापतेश्च दृष्टः।

दृष्टान्तान्तरमाह—यथा चेति। ऋत्विक्कर्म यजमानस्य यथा दृष्टं, ऋत्विग्गणे होमादिकर्मसु व्याप्रियमाणे सति यजमानस्स्वयमव्याप्रियमाणोऽपि यजमानो यज्ञं करोतीति प्रसिद्धं, तद्यज्ञकर्मफलसम्बन्धश्च यजमानस्य श्रुतश्च। तथा राजवत्सेनापतिवद्यजमानवच्चेत्यर्थः। देहाद्याश्रयं कर्मात्मकृतं स्यात्। हेतुमाह—फलस्येति। यथा युद्धफलस्य राज्यप्राप्त्यादिलक्षणस्य राजगामित्वाद्भटकृतमपि युद्धं राजकृतं भवति। यथा यज्ञफलस्य स्वर्गस्य यजमानगामित्वादृत्विक्कृतमपि यज्ञकर्म यजमानकृतं भवति तथा कर्मफलस्यात्मगामित्वाद्देहादिसङ्घातकृतमपि कर्मात्मकृतं भवतीत्यर्थः। घटकलशादेस्तु सन्निहितस्यापि न कर्तृत्वप्रसङ्गः, कर्मफलस्य घटादिगामित्वाभावादिति भावः। ननु राजयजमानयोरपि युद्धयज्ञकर्मणोर्दर्शनप्रेरणादिरूपो यः कश्चिद्व्यापारोऽस्त्येवेति कृत्वा कथं तद्दृष्टान्तेन सुतरां निर्व्यापारस्यात्मनः कर्तृत्वं साधयितुं शक्यत इत्यतो दृष्टान्तान्तरमाह—यथा वेति। भ्रामकस्यायस्कान्तशिलाया अव्यापृतस्यैव भ्रामकस्य लोहभ्रामयितृत्वान्मुख्यमेव कर्तृत्वं यथा तथा चाव्यापृतस्यैवात्मनो मुख्यमेव कर्तृत्वमित्यर्थः।

परिहरति पूर्वपक्षं—तदसदिति। हेतुमाह—अकुर्वत इति। कृञः कर्तरि ण्वुलि कारकमिति रूपं; तथाच करोतीति कारकमिति व्युत्पत्तिः। कर्तृ इत्यर्थः। तस्य भावः कारकत्वं, तद्धि कर्तर्येवास्ति, न त्वकर्तरि; यथा गव्येव गोत्वं, नतु मनुष्ये; यथा वा घट एव घटत्वं, नतु पटे। एवं सति कथमकर्तर्यात्मनि कारकत्वप्रसङ्गः? यद्येवमकर्तर्यप्यात्मनि कारकत्वं स्यात्तर्ह्यकर्तरि घटादावपि तत्स्यात्; अघटादौ घटत्वादिकमपि स्यात्- विरुद्धधर्मसामानाधिकरण्यस्याभ्युपगतत्वात्। तस्मादकुर्वतोऽकर्तुरात्मनः कारकत्वं कर्तृत्वमित्यस्य दोषस्य तव मते प्रसक्तत्वादसत्तव मतम्।

नन्वकुर्वतोऽपि कारकत्वमस्त्येव- कारकस्यानेकविधत्वात्। यस्स्वयमेव करोति तन्मुख्यं कारकं यथा भटऋत्विगादिः; यथा वा भोजनमैथुनादिकर्मणि देवदत्तादिः; यस्स्वयमकुर्वदप्यन्यैः कारयति तद्गौणं कारकं यथा राजयजमानादिः। एवं कारकस्यैकविधत्वाभावादकुर्वतोऽपि गौणकारकत्वप्रसङ्गो न दोषायेति भाव इत्याह पूर्ववादी—कारकमिति। परिहरति—नेति। हेतुमाह—राजेति।

दर्शनात् । राजा तावत्स्वव्यापारेणापि युध्यते । योधानां च योधयितृत्वेन धनदानेन च मुख्यमेव कर्तृत्वं; तथा जयपराजयफलोपभोगे; तथा यजमानस्यापि प्रधानत्यागेन दक्षिणादानेन च मुख्यमेव कर्तृत्वम् । तस्मादव्यापृतस्य कर्तृत्वोपचारो यस्स गौण इत्यवगम्यते । यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां, तदा सन्निधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत; यथा भ्रामकस्य लोहभ्रामणेन न तथा राजयजमानादीनां

---

राजसेनापतियजमानानां त्वयोदाहृतानां न हि गौणं कारकत्वमस्ति, येनाकुर्वतोऽपि कारकत्वप्रसङ्गो निर्दुष्टस्स्यात्; किंतु मुख्यमेव कारकत्वमस्ति । ततश्च कुर्वतामेव राजादीनां कारकत्वमिति सिद्धं; न त्वकुर्वतामिति कृत्वाऽकुर्वतः कारकत्वप्रसङ्गो दुष्ट एव । ननु कथं राजादीनां युद्धादिकमकुर्वतामस्ति मुख्यं कारकत्वमत आह—राजेति । आदौ राज्ञो मुख्यं कारकत्वं दर्शयामीत्याह—राजा तावदिति । राजशब्दोऽत्र सेनापतेरप्युपलक्षणम् । स्वव्यापारेणापि युध्यत इति श्रीरामधर्मराजादीनां राज्ञां स्वयमेव युद्धे व्यापृतत्वश्रवणादिति भावः । अधुनातनानामपि राज्ञां योधानामिति कर्मणि षष्ठी शेषे षष्ठी च । योधानां योधयितृत्वे कर्मणि योधानां धनदाने कर्मणि च मुख्यमेव कर्तृत्वमस्ति । एवं धृष्टद्युम्नादिसेनापतीनां स्वव्यापारेण योद्धृत्वमस्ति । आधुनिकसेनापतीनां च योधयितृत्वमस्तीति बोध्यम् । न केवलं योद्धृत्वयोधयितृत्वयोरेव राज्ञो मुख्यं कर्तृत्वं, किंतु तत्फलानुभवेऽपीत्याह—तथेति । जयफलं परराज्यधनादिप्राप्तिसुखं, पराजयफलं स्वराज्यधनादिनाशदुःखं, तयोरुपभोगेऽनुभवकर्मणि मुख्यमेव कर्तृत्वमस्ति राज्ञः । प्रधानत्यागे प्रधानहोमे; प्रधाने त्यागे धनदाने ब्राह्मणानामिति वा । दक्षिणादाने ऋत्विजामिति भावः । एतेन यदन्यैः कारयति तद्गौणं कारकमितिलक्षणमपि दूषितं- कारयितृत्वांशेऽपि मुख्यकर्तृत्वसत्त्वेन कारयितुरपि मुख्यकारकत्वात् । तस्मादिति । कर्तुरिव कारयितुरपि मुख्यकर्तृत्वादित्यर्थः । कर्तृत्वेन कारयितृत्वेन तत्फलभोक्तृत्वेन च राजप्रभृतीनां व्याप्रियमाणत्वान्मुख्यकर्तृत्वाच्चेत्यर्थ इति वा । य इति । अव्यापृतस्य गौणं कर्तृत्वमुपचारादुच्यत इत्यर्थः । कर्तृत्वरूपं कारयितृत्वरूपं वा कारकत्वमव्यापृतस्य न सम्भवतीतिकृत्वाऽकुर्वतः कारकत्वप्रसङ्गो दुष्ट एवेति भावः ।

नन्वकुर्वतोऽकारयतश्चाव्यापृतस्य भ्रामकस्य सन्निधिमात्रेणैव लोहभ्रमणे कर्मणि मुख्यकर्तृत्वदर्शनादव्यापृतस्यापि सन्निधिमात्रेण मुख्यमेव कर्तृत्वं सम्भवतीतिकृत्वा राजादीनामपि तथा सन्निधिमात्रेणैव मुख्यकर्तृत्वसम्भवे योधयितृत्वादिप्रयुक्तमुख्यकर्तृत्ववर्णनं क्लिष्टमित्यत आह—यदीति । राजयजमानप्रभृतीनां यदि स्वव्यापारलक्षणमयद्योधयितृत्वधनदातृत्वादिलक्षणं वा मुख्यं कर्तृत्वं नोपलभ्येत, तदा सन्निधिमात्रेणापि मुख्यं कर्तृत्वं परिकल्प्येत । प्रसिद्धे सत्यप्रसिद्धकल्पनस्यान्याय्यत्वादिति भावः । यथा भ्रामकस्य लोहभ्रमणे सन्निधिमात्रेणैव मुख्यं कर्तृत्वं तद्वत्; तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यत इति न, किं तूपलभ्यत एव । स्वव्यापारानुपलम्भाद्भ्रामकस्य सन्निधिमात्रेण

स्वव्यापारो नोपलभ्यते । तस्मात्सन्निधिमात्रेणापि कर्तृत्वं गौणमेव । तथा च सति तत्फल-सम्बन्धोऽपि गौण एव स्यात्; न गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मादसदेवैतद्गीयते देहादीनां व्यापारेणाऽव्यापृत एवात्मा कर्ता भोक्ता च स्यादिति । भ्रान्तिनिमित्तं तु सर्व-मुपपद्यते- यथा स्वप्ने, मायायां चैवम् । न च देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु

---

मुख्यकर्तृत्वकल्पनमुचितं, स्वव्यापारोपलम्भात्तु न राजादीनां तत्कल्पनमुचितमिति भावः । तस्मा-दिति । स्वव्यापारलक्षणमुख्यकर्तृत्वसत्त्वादित्यर्थः । सन्निधिमात्रप्रयुक्तं कर्तृत्वं राजादीनां गौणमेव ।

नन्वेवमस्तु राजादीनां सन्निधिमात्रेण कर्तृत्वं गौणं- स्वव्यापारलक्षणमुख्यकर्तृत्वसम्भवात् । आत्मनस्तु भ्रामकस्येव स्वव्यापाराभावादव्यापृतस्यैव तस्य सन्निधिमात्रेण मुख्यं कर्तृत्वं स्यादित्यकुर्वतः कारकत्वप्रसङ्गो न दुष्ट इति चेत्, उच्यते—अव्यापृतस्यापि स्वाध्यस्तदेहादिव्यापारैर्व्यापृतवदवभास-मानस्यात्मनस्सन्निधिमात्रेण मुख्यं कर्तृत्वं न सम्भवति; किंतु गौणमेव । भ्रामकं तु स्वयमव्यापृतं स-व्यापृतमिव नावभासत इति युक्तं तस्य सन्निधिमात्रेण मुख्यं कर्तृत्वम् । तस्मादकुर्वत आत्मनो मुख्यं कारकत्वमयुक्तमेव ।

ननु तर्हि अकुर्वत्यप्यात्मनि सन्निधिमात्रेण कर्तृत्वारोप इति भवतु गौणं, कारकत्वमात्मन इत्यत आह—तथा च सतीति, तत्फलेति । कर्मफलेत्यर्थः । कर्मफलसम्बन्धोऽप्यात्मनि कल्पित एव स्यान्नतु मुख्य इत्यर्थः । भवतु फलसम्बन्धोऽपि गौणः, किं ततोऽत आह—नेति । गौणेन कर्त्रा मुख्यं कार्यं न निर्वर्त्यते- मुख्येन कर्त्रैव तस्य निर्वर्त्यत्वात् । ततश्च मुख्यकर्तरि कर्मनिर्वर्तके देहेन्द्रियादिसङ्घाते सति कर्मानिर्वर्तके आत्मनि किमिति कर्तृत्वारोपः? यदि कर्म तत्फलसम्बन्ध-शून्येऽप्यात्मनि कर्तृत्वमारोप्येत सन्निधिमात्रेण तर्हि घटादावप्यारोप्येतेति भावः । तस्मात्कार्यानिर्वर्त-कत्वात्कर्मफलाभोक्तृत्वाच्चात्मन इत्यर्थः । देहादीनां व्यापारेणाव्यापार एवात्मा कर्ता भोक्ता च स्या-दित्येतदसदेवेति निश्चीयते । ननु तर्हि कथं कर्ताहं भोक्ताहं संसार्यहं सुख्यहं दुःख्यहमित्यादिव्यव-हारस्योपपत्तिरत आह—भ्रान्तीति । भ्रान्त्या हेतुना सर्वमुपपद्यते, मायायां सर्वसम्भवादितिन्याया-दिति भावः । रज्जौ सर्प इव, मरुमरीचिकासूदकमिव, गगने नैल्यमिव भ्रान्त्या संसारः प्रतीयत आत्मनीति सर्वस्याप्यसम्भावितार्थस्य भ्रान्तिरेव शरणं; सा च भ्रान्तिरज्ञानमूला । ननु भ्रान्त्यापि कथमकर्तुरभोक्तुः कर्तृत्वभोक्तृत्वोपपत्तिरत आह—यथेति । स्वप्ने देहे पर्यङ्के शयानेऽपि स्वयं यथा रथ्यायां सञ्चरन्निव दृश्यते, हृत्पुण्डरीकान्तर्गते केवलेऽप्यात्मनि यथा रथगजपत्तनादय उपलभ्यन्ते निद्रादोषात्तद्वदात्मन्यपि संसारः । दृष्टान्तान्तरमाह—मायायामिति । इन्द्रजालादिलक्षणायामित्यर्थः । इन्द्रजालादौ हि गगनेऽपि गन्धर्वनगरादयो दृश्यन्ते, गोगर्भं प्रविश्य निर्गच्छन्निव पुरुषो दृश्यते, छिन्नेन शिरसा पुनः कृतसन्धान इव जीवन् पुरुषो दृश्यते तद्वदात्मन्यपि संसार इति भावः । एवं भ्रान्ति-सत्त्वे संसारसत्त्वमित्यन्वयं भ्रान्त्यभावे संसाराभाव इति व्यतिरेकेण द्रढयति—नचेति । देहाद्या-

सुषुप्तिसमाधानादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते । तस्माद्भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमः; न तु परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् ॥६६॥

---

वनात्मन्यात्मेतिप्रत्ययो भ्रान्तिः भ्रमज्ञानं, तस्य सन्तानोऽविच्छेदेन धारारूपतया पूर्वपूर्वज्ञाननाशे उत्तरोत्तरज्ञानोदय इत्येवंरूपेण वर्तनं भ्रान्तीनां सन्तानस्समूह इति वा । तस्य विच्छेदो नाशो येषु तेषु सुषुप्तसमाधानादिषु सुषुप्तस्सुषुप्तिस्समाधानं समाधिः । आदिपदान्मृतिमूर्छादिग्रहणं । तेषु कर्तृत्वभोक्तृत्वाद्यनर्थो न चोपलभ्यते, नैवानुभूयते । आत्मनेति शेषः । तस्मादिति । भ्रान्तिसत्त्वे संसारसत्त्वात्तदभावे संसाराभावाच्चेत्यर्थः । अयं संसारभ्रमो भ्रान्तिप्रत्ययः, देहादावात्मेति मिथ्याप्रत्ययस्तन्निमित्त एव । देहादावात्मप्रत्यये सत्येव तद्धर्माणां कर्तृत्वभोक्तृत्वसुखदुःखादीनामात्मधर्मत्वभ्रम इति भावः । एवकारार्थमाह—नत्विति । परमार्थतो वस्तुत आत्मनि न कोऽपि संसार इत्यर्थ इति । अत एव सम्यग्दर्शना'न्नाहं देहो नेन्द्रियाण्यन्तरङ्गो नाहङ्कारः प्राणवर्गो न बुद्धिः । दारापत्यक्षेत्रवित्तादिदूरस्साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥' इति यथार्थज्ञानात्संसारस्यात्यन्तोपरमस्समूलोच्छेदः; भ्रान्तिज्ञानसम्यग्ज्ञानयोस्सर्पज्ञानरज्जुज्ञानयोरिव विरोधात् । सम्यग्ज्ञानेन भ्रान्तिज्ञानं निवर्त्यते; ज्ञानाज्ञानयोर्विरोधाद्भ्रान्तिहेत्वज्ञानमपि ज्ञानेन निवर्त्यत इति ज्ञानादेव मोक्षः । कर्म तु कर्ता भोक्ताहमिति भ्रान्तिज्ञानपूर्वकमेवेति न कर्मणा भ्रान्तिज्ञानस्य निवृत्तिः । अत एव नाज्ञानस्यापि निवृत्तिरिति न कर्मणा मोक्षः । अत एव- 'नास्त्यकृतः कृते'नेति श्रुतिरुपपद्यते । कृतेन कर्मणाऽकृतो मोक्षो नास्तीति तदर्थः । समुच्चयस्त्वसिद्ध एव- कर्मज्ञानयोर्विरोधात् । तस्मान्न समुच्चयान्मोक्षः । अत एवोक्तं भगवता- 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्र'जेति सर्वकर्मसन्न्यासपूर्विका ज्ञाननिष्ठा त्वया कार्येत्यभिप्रेत्य ज्ञाननिष्ठायाः फलं च स्वयमेवाह भगवान्- 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्या'मीति । पुण्यपापात्मकसर्वबन्धविनिर्मोक्षो हि मोक्षः । श्रुतिरप्यमुमेवार्थमाह—'तरति शोकमात्मवि'दिति, ब्रह्मविद्ब्रह्मैव भव'तीति च । संसारे तीर्णे सति हि आत्मा सच्चिदानन्दब्रह्मस्वरूपेणावतिष्ठते । अत एव ब्रह्मस्वरूपावस्थानाय यत्नो न कर्तव्यः, किंतु संसारोपरमायैव यत्नः कार्य इत्युक्तम् । सच ज्ञानसाध्यः- अज्ञानमूलत्वात्संसारस्य । तस्माद्ज्ञानमेव मोक्षसाधनमिति गीताशास्त्रस्य निश्चितोऽर्थः । अयमेव सर्वोपनिषदर्थश्च- उपनिषत्सारत्वाद्गीताशास्त्रस्येति ।

ननु ज्ञानान्मोक्ष इति यदुक्तं तद्युक्तमेव, परं तु नाद्वैतज्ञानान्मोक्ष इति गीताशास्त्रकर्तुराशयः । किं तर्हि द्वैतज्ञानादेव । तथाह्युपक्रमे तावत्- 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपा' इति कृष्णार्जुनयोर्जीवेश्वरद्वैतमेवोक्तम् । उपसंहारे च 'मां त्वं शरणं व्रज, अहं त्वां मोक्षयिष्या'मीति जीवेश्वरयोर्द्वैतमेवोक्तम् । मध्ये च तत्रतत्र- 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं, ममेति युक्ततमो मतः, कश्चिन्मां वेत्ति तत्त्वतः, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते, प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः, मां नित्ययुक्ता उपासते, भजन्ते मां बुधा भावसमन्विताः, तेषामहं समुद्धर्ता, श्रद्धावान् भजते यो मां स मे युक्ततमो सोऽर्जुन !, तस्याहं न प्रणश्यामि स च मे न प्रणश्यति,

यो मामेवमसम्मूढो जानाति पुरुषोत्तम'मित्यादिवाक्येषु जीवेश्वरभेद एवासकृत्प्रपञ्चितः । एवं जीवेश्वराद्वैते यथार्थे सत्यहं ब्रह्मेत्यद्वैतज्ञानमयथार्थमेव, भटस्य राजाऽहमितिवचनवत् । अत एव राजाहमिति वदन् दुरहङ्कारो भटो राज्ञेव ब्रह्माहमिति वदन्नद्वैत्यपीश्वरेण दण्ड्य एवेत्यद्वैतज्ञानान्नरकपात एवेतिचेत्, मैवं वादीः—जीवेश्वरभेदज्ञानस्य लोकतस्तर्कादिशास्त्रतोऽनुमानाच्च सिद्धस्य महता गीताशास्त्रेण प्रतिपादनस्य व्यर्थत्वात्तादृशज्ञानान्मोक्षासिद्धेश्च । यदि मोक्षसिद्धिस्तस्माद्द्वैतज्ञानात्तर्ह्यास्तिकसर्वोऽपि लोको विनैव गीताशास्त्राध्ययनं कृतार्थ एव स्याद्द्वैतज्ञानस्य प्रागेव सिद्धत्वात् । नच जीवेश्वरभेदज्ञानस्य लोकादिना सिद्धत्वेऽपीश्वराद्भिन्नस्य जीवस्य देहेन्द्रियादिविलक्षणशुद्धचिन्मात्रत्वज्ञानस्यासिद्धत्वात्तदर्थं शास्त्राध्ययनमावश्यकं, तादृशज्ञानादेव मोक्षश्चेति वाच्यं, जीवस्य शुद्धचिन्मात्रत्वाभ्युपगमे ईश्वरभिन्नत्वस्य दुर्निरूपत्वात् । शुद्धचिन्मात्रत्वं हीश्वरस्यापि । नच चिन्मात्रोऽपि विभुरीश्वरोऽणुर्जीव इति वाच्यं, निरवयवचैतन्यरूपजीवस्याणुत्वासम्भवात् । सावयवं हि वस्तु सपरिमाणं भवति । नच सर्वज्ञ ईश्वरः किंचिद्ज्ञो जीव इति वाच्यं, मुक्तौ जीवचैतन्यस्य सर्वज्ञत्वस्य त्वयाप्यभ्युपगतत्वात् । यन्मुक्तिदशावस्थितमात्मस्वरूपं तदेव बद्धदशायामप्यन्यथा सविकारत्वापत्त्या- 'अविकार्योऽय'मित्यादिशास्त्रविरोधादनित्यत्वप्रसङ्गाच्च । नच सकलकल्याणगुणपरिपूर्णमीश्वरचैतन्यमिति वाच्यं, 'केवलो निर्गुण'-श्चेति श्रुतिविरोधात् । नच नियामकेश्वरस्य नियाम्यजीवाभेदोऽयुक्त इति वाच्यं, नियाम्यनियामकभावस्य भूतेश्वरनिष्ठत्वेनात्मेश्वरनिष्ठत्वाभावात् । नच भूतान्येवात्मान इति वाच्यं, 'यतो'वेत्यादिश्रुत्या सादीनां सान्तानां च भूतानामात्मत्वायोगात् । आत्मा हि जन्मादिविकारशून्यत्वान्नित्यः- 'अजो नित्यश्शाश्वत' इति शास्त्रात् । नच चराचरात्मकभूतसंसृष्टतया जन्मादिसिद्धिरात्मन इति वाच्यं, तथात्वे ईश्वरस्यापि तत्प्रसङ्गात् । भूतोपाधिकजन्मादिविकारस्य भूतनिष्ठत्वेन वस्तुत आत्मनिष्ठत्वासम्भवाच्च ।

नच संसारिजीवस्यासंसारीश्वराभेदोऽयुक्त इति वाच्यं, जीवस्य संसारित्वाभावात् । नच संसार्यहमित्यनुभवसिद्धजीवसंसारस्य कथमपलाप इति वाच्यं, जीवेनानुभूयमानस्य सुखदुःखजन्ममरणादिलक्षणसंसारस्यानात्मधर्मत्वात् । देहस्य जन्ममरणवृद्धिक्षयादिमत्त्वं प्रत्यक्षमेव; मनसस्सुखदुःखवत्त्वं च 'कामस्सङ्कल्प' इत्यादिश्रुतिसिद्धमनुभवसिद्धं च- सुषुप्तौ मनसोऽभावे सुखदुःखानुभवाभावात् । नच देहादिगतोऽपि संसारो जीवेनानुभूयमानत्वाज्जीवधर्म एवेति वाच्यं, तथासति सर्वस्यापि जगतो यस्संसारस्स सर्वज्ञेनेश्वरेणानुभूयत इतीश्वरस्यापि संसारित्वप्रसङ्गात् । न चानुभवो न ज्ञानमात्रं किंतूपभोग इति वाच्यं, जीवेनापि संसारस्यानुपभुज्यमानत्वात् । नच ममायं संसार इत्यस्यैवोपभोगो जीवस्येति वाच्यं, तस्यानात्मतादात्म्याध्यासप्रयुक्तत्वेन तस्य चाध्यासस्याज्ञानमूलकत्वेन ममायं संसार इत्यस्य भ्रान्तिज्ञानत्वाद्वस्तुतो जीवस्यासंसारित्वमेवेति । न हि भ्रान्तिसिद्धो धर्मो वस्तुनस्तद्धर्मो भवति । यथा गगने बालानां भ्रान्तिसिद्धं नैल्यं वस्तुतो न गगनधर्मः; यथा वा मरुमरीचिकासु भ्रान्तिसिद्धमुदकं वस्तुतो न मरुमरीचिकाधर्मः; यथा वा धावतः भ्रान्तिसिद्धश्शिरश्छेदा-

द्धिधर्मो वस्तुतो न पुरुषधर्मस्तद्वत् । नच संसारो न भ्रान्तिसिद्धः, किंतु सत्य एवेति वाच्यं, सत्यत्वे तस्य निवृत्त्ययोगेन मोक्षशास्त्रवैयर्थ्यप्रसङ्गात् । नच सत्यमपि पापं प्रायश्चित्तेन निवर्तत इति वाच्यं, ब्रह्मातिरिक्तस्य सर्वस्याप्यसत्यत्वात् । 'ततोऽन्यदार्त'मिति श्रुतेस्सत्यत्वनित्यत्वयोर्वैयधिकरण्यायोगेन सत्यस्य नित्यत्वान्नित्यस्य निवृत्तिमत्त्वे नित्यत्वस्यैवासिद्धिप्रसङ्गाच्च । न चासत्यत्वे संसारस्य कथमुपलम्भः ? न ह्यसत्यं शशशृङ्गादिकं केनाप्युपलभ्यत इति वाच्यं, असत्यस्यापि स्वप्नरथगजादेरैन्द्रजालिकगन्धर्वनगरादेश्चोपलम्भसत्त्वात् । एवमसत्यत्वे सत्युपलभ्यमानत्वादेव संसारस्य मिथ्यात्वमवोचाम । न चेश्वरसृष्टत्वादिन्द्रजालसृष्टत्वाच्च स्वप्नरथगन्धर्वनगरादिकं सत्यमेवेति वाच्यं, तदभ्युपगतानित्यत्वेनैव सत्यत्वस्य निराकृतत्वात् । नहि सत्यं वस्त्वनित्यं भवति । उक्तं हि पराशरेणापि 'ज्ञानं यथा सत्यमसत्यमन्य'दिति । न चैवं ज्ञानमीश्वर एव- 'सत्यं ज्ञानमनन्तं ब्र'ह्मेति श्रुतेः । तस्मादीश्वर एव सत्य इति वाच्यं, जीवस्यापि ज्ञानैकाकारत्वस्य त्वयाप्यभ्युपगतत्वात् । तस्माद्भ्रान्तिसिद्ध एव जीवस्य संसारोपभोग इति सिद्धमसंसारीश्वराद्वैतम् । न चैकत्वेश्वरस्यानेकजीवभेदोऽयुक्त इति वाच्यं, जीवानेकत्वे मानाभावात् । नच 'न त्वेवाहं जातु नास'मित्यादीनि मदुदाहृतानि वाक्यानि मानमिति वाच्यं, प्रमातृभेदपरत्वात्तद्वाक्यानामात्मभेदकल्पनस्यायुक्तत्वात् । न चात्मैकत्वे मानाभाव इति वाच्यं, प्रकृतगीताशास्त्रस्यैव मानत्वात् । तथाहि- 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥, वेदाविनाशिनं नित्यं य एनमजमव्ययम् , नैनं छिन्दन्ति शस्त्राणि, अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतस्स्थाणुरचलोऽयं सनातनः ॥ अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।, आश्चर्यवत्पश्यति कश्चिदेनं , देही नित्यमवध्योऽयं देहे सर्वस्य भारत !, परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः । यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।, अव्यक्तोऽक्षर इत्युक्तः, अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः, ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते, सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् , एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः, क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत !, अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते, सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् , सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति, सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥, बहिरन्तश्च भूतानामचरं चरमेव च, सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् , अविभक्तं च भूतेषु विभक्तमिव च स्थितम् , भूतभर्तृ च तद्ज्ञेयं ग्रसिष्णु प्रभविष्णु च, ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते, ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् , प्रकृतिं पुरुषं चैव, पुरुषः प्रकृतिस्थो हि, पुरुषस्सुखदुःखानां, उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः, परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परम् ,

य एवं वेत्ति पुरुषं, समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥, समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥, यः पश्यति तदात्मानमकर्तारं स पश्यति । अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥, शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते, यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥, यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ! ॥, ममैवांशो जीवलोके जीवभूतस्सनातनः, उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इत्यादीनि । नच जात्येकवचननिर्देश इति वाच्यं, शुद्धचिन्मात्रे आत्मनि जातिव्यक्त्योरभावात् । यद्यात्मनो व्यक्तिभेदस्स्यात्तर्हि व्यक्त एव स्यात् , न त्वव्यक्तः । उक्तं हि- 'अव्यक्तोऽयमचिन्त्योऽय' मिति । न चोपाधिकृतो व्यक्तिभेद इति वाच्यं, औपाधिकस्य तस्य वास्तवात्मभेदव्यवस्थापनाशक्तत्वात् । न ह्यौपाधिकघटाकाशादिभेदो महाकाशस्य भेदं जनयितुमीष्टे । न चात्मैकत्वे सुखदुःखाद्यनुभवसाङ्कर्यप्रसङ्ग इति वाच्यं, मनआद्युपाधिभेदेन तदसाङ्कर्यात् । न चैकोऽप्यात्मा परमात्मन ईश्वराद्भिन्न एवेति वाच्यं, 'परमात्मेति चाप्युक्त' इति जीवस्यापि परमात्मत्वात् । नच श्रीकृष्णेन जीवेश्वराभेदः कण्ठतो नोक्त इति वाच्यं, 'क्षेत्रज्ञं चापि मां वि'द्धीत्युक्तत्वात् । नच मां मदात्मकमित्यर्थान्तरपरं तद्वाक्यमिति वाच्यं, तस्य प्रागेव दूषितत्वात् । विमृष्टे सति मदात्मकमित्यस्यापीश्वराभिन्नमित्येवार्थलाभात् । तस्मान्निर्विशेषशुद्धचिन्मात्रे ब्रह्मणि प्रत्यगभिन्ने जीवेश्वरभेदव्यवहारादयोऽज्ञानमूला एव । नच परिपूर्णचैतन्यस्येश्वरस्य प्रत्यग्रूपत्वमयुक्तमिति वाच्यं, 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति, सर्वस्य चाहं हृदि सन्निविष्ट' इति, 'अहमात्मा गुडाकेश ! सर्वभूताशयस्थित' इति च प्रत्यग्रूपेणेश्वरस्थितेरुक्तत्वात् । अन्तर्बहिस्सर्वत्र परिपूर्णचैतन्यस्येश्वरात्मकस्य, अन्तस्स्थचैतन्यरूपप्रत्यगात्मभावस्य युक्तत्वाच्च । अन्यथा ईश्वरस्यान्तर्व्याप्त्यभावेऽपरिपूर्णत्वप्रसङ्गाच्च । तस्मात्सिद्धं जीवेश्वराद्वैतं- चैतन्यैकस्वरूपत्वाज्जीवेश्वरयोः ; चैतन्यस्य च निर्विशेषत्वात् । एतस्मादेवाद्वैतज्ञानान्मोक्षमाह गीताशास्त्रम्- 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ज्ञात्वा मां शान्तिमृच्छति, यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ! ॥ एवं मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मित्यादिवाक्यैः । द्वैतज्ञानात्संसारभयं श्रुतिराह- 'य उदरमन्तरं कुरुते, अथतस्य भयं भव'तीति ।

यदप्युक्तं राजाऽहमिति ज्ञानवान् भट इव ब्रह्माहमिति ज्ञानवान् दण्ड्य इति, तदयुक्तम्— ज्ञानिन ईश्वरात्मत्वेनेश्वरस्य परं प्रियत्वात् । आत्मा हि प्रियः । उक्तं हि कृष्णेनैव- 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति, 'ज्ञानी त्वात्मैव मे मत'मिति च । भटस्तु न राजत्वाभिमानिन आत्मेति दण्ड्य एव तादृशो राज्ञा ।

ननु ज्ञानिन एवेश्वरत्वे कथं ज्ञानिनोऽहं प्रिय इत्युक्तमितिचेत् , नैष दोषः—ममात्मा प्रिय इतिवद्दोषात् । नच त्वं मां शरणं व्रजेति भेदेन कथमुक्तमिति वाच्यं, प्रमाता स्वात्मभूतं ब्रह्म शरणं

व्रजेदिति तदर्थात् । नच प्रमातैव जीवो न त्वात्मा, आत्मा त्वीश्वर एवेति वाच्यं, प्रमातुरेव स्वरूपत्वादात्मनः । आत्मनि हि प्रमाता कल्पितो रज्जौ सर्पवत् । सर्पस्य कल्पितस्य यथा रज्जुरेव स्वरूपं तथा प्रमातुरात्मैव स्वरूपम् । न चैवं प्रमातुर्मिथ्यात्वे शास्त्राधिकारिण एवाभावान्मोक्षफलभोक्तुरप्यभावाच्च व्यर्थं गीताशास्त्रमिति वाच्यं, अन्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वेन प्रमातृगतप्रमातृत्वप्रयोजकविशेषणीभूतान्तःकरणावच्छिन्नत्वांशस्य मिथ्यात्वेऽपि विशेष्यचैतन्यांशस्य सत्यत्वात् । नच सिद्धोऽपि मोक्षो व्यर्थ एवानुभवसाधनाभावादिति वाच्यं, करणानधीनज्ञानत्वादात्मनः । 'अपाणिपादो जवनो ग्रहीता' इति हि श्रूयते । तस्मात्स्वरूपचैतन्येनैव मोक्षानन्दानुभव इति, तस्मात्सिद्धमद्वितीयब्रह्मात्मज्ञानान्मोक्ष इति ।

यत्तु रामानुजः—कर्मयोगज्ञानयोगभक्तियोगरूपान्सर्वान्धर्मान्कुर्वाण एव फलकर्मकर्तृत्वादित्यागेन परित्यज्य मामेकमेव कर्तारमाराध्यं प्राप्यमुपायं चानुसन्धत्स्व इति, तत्तुच्छम्—सर्वधर्मान्परित्यज्येति यथाश्रुतार्थपरित्यागस्यान्यार्थकल्पनस्य च लक्षणया अयुक्तत्वात् । नहि सर्वधर्मानपरित्यज्येति सर्वधर्मफलाभिसन्ध्यादिकं परित्यज्येति वा मूले दृश्यते, किंतु सर्वधर्मान् परित्यज्येत्येव दृश्यते । नच यथाश्रुतार्थस्वीकारे- 'नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तित' इति तामसत्यागस्य सर्वधर्मपरित्यागस्य निन्दितत्वात्तद्विरोधस्स्यात् । ततश्च सर्वधर्मानित्यस्य लक्षणया सर्वधर्मफलानीत्येवार्थः पूर्वाविरोधात्स्वीकार्यः । पूर्वं हि- 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ! निश्चितं मतमुत्तमम् ॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन! सङ्गं त्यक्त्वा फलं चैव स त्यागस्सात्त्विको मत' इत्युक्तम् । तस्मात्स एव सात्त्विकत्याग इहापि स्वीकर्तव्य इति वाच्यं, तस्य सात्त्विकत्यागस्य कर्माधिकार्यज्ञपरत्वात्, इहोक्तसर्वधर्मपरित्यागस्य सर्वकर्मसन्न्यासिज्ञानिपरत्वाच्च । सर्वधर्मानितिश्लोकेन हि ज्ञाननिष्ठोपसंह्रियते- पूर्वश्लोकेन कर्मनिष्ठाया उपसंहृतत्वात् । नच सर्वकर्मसन्न्यास एव श्रीकृष्णस्याभिमत इति वाच्यं, 'सर्वकर्माणि सन्न्यस्य, सर्वारम्भपरित्यागी' इत्यादिवाक्यैरुक्तत्वात्तेनैव सर्वकर्मसन्न्यासस्य, 'ब्राह्मणो निर्वेदमायात्, यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिश्रुतिसिद्धं सर्वकर्मसन्न्यासं भगवान्नहि निरुन्ध्यात् । नच विदुष एव तामसत्यागो निन्दित इति वाच्यं, मोहादित्युक्तत्वात् । नहि विदुषो निरस्तमोहस्य मोहस्सम्भवति । नच भक्तियोगस्यापि परित्यागे कथं ज्ञानिनोऽपि ब्रह्मप्राप्तिः ? 'मद्भक्ता यान्ति मामपि, भजन्ते मां दृढव्रताः, जरामरणमोक्षाय, मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः, अनन्यचेतास्सततं यो मां स्मरति नित्यशः, तस्याहं सुलभः पार्थ!, पुरुषस्स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया, मद्भक्तो भव, मामेवैष्यसि, भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!, ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!, मद्भक्तो यस्स मामेति पाण्डव!' एवं भक्तस्य भगवत्प्रियत्वमप्याह—'यो मे भक्तस्स मे प्रियः, भक्तिमान्मे प्रियो नरः, भक्तास्तेऽतीव मे प्रियाः' इति भक्तियोगादेव मोक्षः परब्रह्मप्राप्तिलक्षणो भवति । ज्ञानयोगात्तु केवलादात्मप्राप्तिरेवेति वाच्यं, ज्ञाननिष्ठालक्षणः कर्मनिष्ठालक्षणश्च भक्तियोगो द्विविधः- भक्तिर्भजनमीश्वरस्य; तद्धि

कर्मनिष्ठया ज्ञाननिष्ठया वा कर्तुं शक्यते । अत एवोक्तं- 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ! ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति । नहि भक्तियोगात्मकं निष्ठान्तरमुक्तं, तत्र च ज्ञाननिष्ठालक्षणो भक्तियोगो मोक्षस्य साक्षात्साधनं, कर्मनिष्ठालक्षणस्तु परम्परयेति । तस्माद्ज्ञानयोगातिरिक्तः त्वदुक्तो भक्तियोगः कर्मयोगादनन्य एव, तं परित्यज्य ज्ञाननिष्ठाप्राप्त्यैव ब्रह्मप्राप्तिः। त्वदुदाहृतवचनेषु तु केषुचिद्भक्तियोगः कर्मयोगात्मकः, केषुचिद्ज्ञानयोगात्मक इति कृत्वा कर्मयोगलक्षणभक्तियोगात्परम्परया ब्रह्मप्राप्तिः, ज्ञानयोगलक्षणभक्तियोगात्तु साक्षादिति बोध्यम् । तथासति- 'ज्ञात्वा मां शान्तिमृच्छ'तीत्यादिवचनाविरोधः, अन्यथा ज्ञानाद्ब्रह्मप्राप्तिप्रतिपादकवचनविरोधस्स्यात्।

यत्तूक्तं ज्ञानादात्मप्राप्तिरेव, न परमात्मप्राप्तिरिति तदात्मपरमात्मभेदवादविध्वंसनेनैव विध्वस्तम् । यच्चोक्तं- मामेकं शरणं व्र'जेत्यस्य कर्तारमाराध्यमुपायमुपेयं च मामनुसन्धत्स्वेति तदयुक्तम्—तद्वाक्यात्तादृशार्थाप्रतीतेः । अकर्तारमीश्वरमात्मानं कर्तेत्यनुसन्धानस्य विपरीतज्ञानत्वेन मोक्षाहेतुत्वाच्च । नच वासुदेवस्सर्वमिति तदुपपद्यत एवेति वाच्यं, कर्तृभोक्त्रादिसर्वप्रपञ्चबाधे ब्रह्मैकमेव शिष्यत इति तदर्थात्; ब्रह्मणि कल्पितस्य सर्वस्य ब्रह्मैव स्वरूपमिति वा । नच सर्वशरीरकत्वात्सर्वं ब्रह्मेत्युच्यत इति वाच्यं, शरीरभूतसर्वस्याब्रह्मात्मकत्वप्रसङ्गात्, कर्तारं जीवं मां परमात्मानमनुसन्धत्स्वेत्यनेन जीवब्रह्माभेदवादप्रवेशप्रसङ्गाच्च तव ।

यद्यप्यनेनोक्तं सर्वधर्मान् कृच्छ्रचान्द्रायणादीन् प्रायश्चित्तरूपान्सर्वान्धर्मान् परित्यज्य मामेकं शरणं व्रज । नच ते पापेभ्यो भीतिः, अस्मच्छरणागतिमात्रेणैव सर्वपापक्षयात्तवेत्याह अहं त्वामित्यादीति—तदपि तुच्छम्—नित्यनैमित्तिककाम्यरूपधर्मापरित्यागस्यार्थतस्सिद्धत्वात्, सर्वशब्दस्य प्रायश्चित्तमात्रपरत्वे सङ्कोचस्यान्याय्यत्वात्, भगवच्छरणागतिमात्रेण सर्वपापक्षये सति मोक्षप्राप्तौ च सत्यां नित्याद्यनुष्ठानस्यापि वैयर्थ्यापत्तेः; नित्याद्यनुष्ठानस्य बहिर्मुखत्वेन भगवच्छरणागतिविरोधित्वाच्च । तस्मात्प्रायश्चित्तानुष्ठानवन्नित्याद्यनुष्ठानस्यापि भगवदेकपरायणत्वविरुद्धत्वात्तदपि त्याज्यमेव । अत एवोक्तं भगवता पाराशर्येण सर्वधर्मान् परित्यज्येति, अन्यथा प्रायश्चित्तानि संत्यज्येत्येव ब्रूयात् । नच नित्यकर्मानुतिष्ठतोऽपि भगवदेकपरायणत्वं स्यादिति वाच्यं, तथासति प्रायश्चित्तमनुतिष्ठतोऽपि तत्स्यादिति प्रायश्चित्तपरित्यागस्याप्यकर्तव्यापत्तेः ।

'सन्ध्यावन्दन! भद्रमस्तु भवते भो स्नान! तुभ्यं नमो भो देवाः! पितरश्च! तर्पणविधौ नाहं क्षमः क्षम्यताम्।
यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषस्स्मारंस्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥'

इति शुकवचनान्नित्यकर्मानुष्ठानं भगवदेकपरायणत्वविरोध्येव । हृत्पुण्डरीकस्थे भगवति परमात्मनि मनसः प्रवेशनं तत्रैव चिरमवस्थापनं च हि भगवदेकपरायणत्वं, तत्कथमनन्तर्मुखस्य भवितुमर्हति ? कथमेवमन्तर्मुखस्य बहूपकरणसाध्ये कर्मणि बाह्ये प्रवृत्तिर्भवितुमर्हति ? तस्मात्सर्वकर्मसन्न्यासपूर्विकैव भगवदेकशरणागतिरूपा ज्ञाननिष्ठा । नच भगवत्प्रीत्यर्थं भगवत्कर्मकरणमेव भगवच्छरणागति-

रिति वाच्यं, तादृशकर्मयोगस्य पूर्वश्लोक एवोपसंहृतत्वात्; भगवद्ध्यानयोगस्य भगवच्छरणागतित्वाभाव इत्यस्य विरुद्धत्वाच्च । न च भगवद्ध्यानं नाम मनसि कल्पितभगवद्विग्रहार्चनमेवेति तदपि कर्मयोग एवेति वाच्यं, नित्यसिद्धप्रत्यगभिन्नभगवत्स्वरूपानुसन्धानलक्षणभगवद्ध्यानस्याकर्मयोगत्वात् । 'अकल्पितभगवत्स्वरूपध्यानं न कर्तव्यं, किं तु कल्पितभगवद्विग्रहध्यानमेव कर्तव्य'मिति राजाज्ञाऽभावात् कल्पितापेक्षया अकल्पितं युक्तमिति- प्रसिद्धत्वात् । नचाकल्पितेश्वरस्वरूपध्यानं दुष्करमिति वाच्यं, येषां दुष्करं तदर्थं कर्मयोगो विहित एव; येषां तु सुकरं तदर्थमेव ज्ञानयोगो विहितः । न च हृदि कल्पितेश्वरविग्रहार्चनमेव ज्ञानयोग इति वाच्यं, यथावस्थितवस्तुस्वरूपचिन्तनस्यैव ज्ञानयोगत्वात् । लोकेऽपि यथावस्थितघटादिवस्तुज्ञानमेव ज्ञानमिति व्यवह्रियते, नतु कल्पितसर्पाभासादिज्ञानं; नापि तदुपासनम् । तस्मान्नित्यादिकर्मानुष्ठानं हृदि प्रतिमादिषु वा कल्पितभगवद्विग्रहार्चनादिकं सर्वमपि कर्मयोग एव । स चाज्ञविषयः- 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरं, अर्चायां भजते मौढ्या'-दिति भागवतात् , इहापि कर्मयोगस्याज्ञविषयत्वेनोक्तत्वात् । अहं ब्रह्मास्मीति प्रत्यगभिन्नब्रह्मस्वरूपचिन्तनं तु ज्ञानयोगः, स च प्राज्ञविषयः; सच सर्वकर्मसन्न्यासपूर्वकः; स एव- 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्र'जेतिश्लोके उपसंहृतः । युक्तं चैतत्- ज्ञानकर्मनिष्ठाद्वयस्य पूर्वमुपक्रान्तत्वेन तस्येहोपसंहृतत्वात् । तस्माद्ज्ञाननिष्ठापर एवायं श्लोकः । अयमेव श्लोको मया भङ्ग्यन्तरेणोक्तोऽद्वैतामृतग्रन्थे मामके । 'धर्मान्विहाय विविधान् शरणं भजेऽहं मामेव येन विनिवर्तत एव माया' इति । तस्मात्प्रत्यगभिन्नब्रह्मात्मज्ञानादेव मायातत्कार्यनिवृत्त्यात्मको मोक्षस्सम्भवति ।

यदप्युक्तं वेदान्तदेशिकेन—मामेकमित्यत्र निर्विशेषचिन्मात्रैक्यादिविवक्षां शृण्वन्तो बाला अपि परिहसेयुरिति, तत्सत्यमेव—बाला अज्ञा अपिशब्दाद्विपरीतज्ञाश्च परिहसन्त्येवाद्वैतं, नतु सम्यग्दर्शिनः । मां कर्तारमाराध्यमुपायमुपेयं चानुसन्धत्स्वेति योजनां शृण्वन्तस्तु विवेकिन एव परिहसेयुः, नतु बालादयः । तद्दृष्ट्या तद्योजनाया युक्तत्वात् । यथा गर्दभगानं पिशाचानां श्रवणानन्दकरं, यथा वा गोमायुगानं महिषाणम् । तथाहि- यदि मामित्यस्य वक्तरि वासुदेवे पार्थसारथौ शक्तिस्तर्हि तच्चरणारविन्दयोस्सुदृढं परिग्रहणमेव तच्छरणागतिस्स्यात् । तत्पार्थस्य सुलभमपि दुर्लभमेव, ततः प्राक्तनानां प्रह्लादादीनां पश्चात्तनानां परीक्षिदादीनां च । नचेष्टापत्तिः- लोकत्रयोपकाराय गीताशास्त्रस्य भगवता प्रवर्तितत्वात् । अथ यदि सर्वज्ञे परमात्मनि विष्णौ लक्षणा तर्हि सिद्धमेव निर्विशेषचिन्मात्रैक्यं निर्विशेषचिन्मात्रत्वाद्विष्णोरिति ।

यच्चानेनोक्तं गीताशास्त्रस्य सारार्थोऽयं भगवानेव परं तत्त्वं, यथाधिकारं तदाश्रयणमेव परमधर्म इति, तदपि स्वतात्पर्यानुसारेण न सिध्यति—श्रीकृष्ण एक एव परं तत्त्वं, नतु ब्रह्मरुद्रादयः । तेहि जीवा इति हि तवाशयः । नहि सोऽर्थो गीताशास्त्रात्सिध्यति, किंतु श्रीकृष्णश्रीनिवासरुद्रब्रह्मेन्द्रबृहस्पतिवायुसूर्येन्दुलक्ष्मीसरस्वतीपार्वतीगणपतिकुमारविनायकदेवगरुडगन्धर्वपिशाचोरगकिन्नरकिंपुरुषसिद्ध-

साध्यपितृमातृभूतप्रेतग्रहतारानक्षत्रमनुष्यपक्षिपशुमत्स्यकमठकीटसरीसृपतरुगुल्मलताादिचराचरसर्वभूतहृदयस्थं मृत्पाषाणादिसर्वचेतनस्यापि च परिपूर्णं निर्विशेषं सत्यमनन्तं चैतन्यमेकमेवाद्वितीयं ब्रह्म परं तत्त्वं, तदेकानुसन्धानात्मकज्ञाननिष्ठैव परमधर्मः, तदुपायभूता तु कर्मनिष्ठा इति गीताशास्त्रस्य सार इति। अत एवोक्तमभियुक्तैः- 'अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी'मिति, सर्वकर्मसन्न्यासस्तु देहिके-नाप्यभ्युपगतः। यस्य वशिनो योगेन सर्वकर्मकालो न्यासः, तस्य कर्मपरित्यागो युक्तो नान्यस्य। एतच्च तृतीयचतुर्थपञ्चमेषु भगवता प्रतिपादितमित्यनुसन्धातव्यं, तृतीये तावत्- 'यस्त्वात्मरतिरेव स्या'दित्यत्र, चतुर्थे- 'योगसन्न्यस्तकर्माण'मित्यत्र, पञ्चमे च 'सर्वकर्माणि मनसा सन्न्यस्यास्थ' इत्यत्र। तेनात्म-रतीनां वशिनां योगारूढानामेव कर्मसन्न्यासो युक्त इति, अस्य तु ज्ञानिनस्सन्न्यासो न युक्तः। किंतु समाधिनिष्ठस्यैव युक्त इति बुद्धिः; सा तु दुष्टा- यस्य त्वज्ञस्य मम चित्तं बहिर्मुखमासीत्, तेनाहं संसारमनुभवामीति भ्रान्तिस्सहि समाधिमभ्यस्यतु। यस्य तु प्राज्ञस्य ब्रह्मैवाहमस्मीति निश्चयः कुतस्तस्य समाधिः? समाधिसाध्यो हि ब्रह्मसाक्षात्कारस्स्वत एव भवति विदुषः- आत्मत्वाद्ब्रह्मणः। तस्मात्समाधिनिरपेक्ष एव ज्ञानयोगः। यस्य तु प्रतिबन्धवशाद्ब्रह्मसाक्षात्काराभावो बहुवारं श्रुतवेदान्त-स्यापि तस्य समाधिर्विहितः! न तावता समाधिनिष्ठस्यैव सन्न्यासो युक्तः, नतु ज्ञानिन इति वाच्यं, कृतात्मसाक्षात्कारस्य ज्ञानिनस्सन्न्यासो न युक्तः। आत्मसाक्षात्कारं प्रति यतमानस्य योगिनस्समा-हितस्य सन्न्यासो युक्त इति कल्पनस्यायुक्तत्वात्। आत्मसाक्षात्कारेण हि पुरुषः कृतकृत्यो भवति- 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत!' इत्युक्तत्वात्। नहि कृतकृत्यस्य कृत्यावशेषः स्याद्येन विदुषः कर्मसन्न्यासो न युक्त इति कल्प्येत। नच समाहितस्यैवात्मरतिर्न तु ज्ञानिन इति वाच्यं, अज्ञस्याप्यस्त्येवात्मरतिरात्मत्वेनाभिमते देहे, किं पुनः प्राज्ञस्य सच्चिदानन्दे आत्मनि रतिः। तस्माद्विदुषः कृतात्मसाक्षात्कारस्य कर्मसन्न्यासो युक्त एव, तथा आत्मसाक्षात्काराय यतमानस्य ज्ञाननिष्ठायां प्रविष्टस्यापि युक्त एव- ब्रह्माहमस्मीत्यन्वहमनुसन्धातव्यत्वाचेनात्मरूपस्य। अजस्समाधि-निष्ठस्यापि कर्मसन्न्यासो युक्त एव।

यच्चानेनोक्तमात्मरतेर्वशिनोऽपि लोकसंग्रहार्थं कर्मयोग एव कार्य इति, तदयुक्तम्—विदुषः कर्तव्यत्वानवशेषात्; किंतु विद्वांसो यदृच्छया वासुदेववत्कर्मयोगादौ विहरन्ति। उक्तं हि- 'कृष्णो भोगी शुकस्त्यागी नृपौ जनकराघवौ। वसिष्ठः कर्मनिरतः पञ्चैते ज्ञानिनस्स्मृताः॥' इति। तत्र च कारणं प्रारब्धकर्मैव। अत एव भगवानपि स्वस्य धर्मसंस्थापनार्थमवतीर्णत्वात्तत्सङ्कल्पानुगुणं कर्मणि प्रवृत्तः। उक्तं हि- 'वर्त एव च कर्म'णीति तेनैव। अयमेव ऋषभावतारे अवधूतस्सन् चाचर परम-हंसपरिव्राजकचर्यां ग्राहयितुं लोकेन। तस्माद्विदुषः कर्मयोग एव युक्त इति न नियमः, जनकराघ-वादीनां तु नृपत्वेन तत्प्रारब्धानुगुणं प्रजापरिपालनादौ प्रवृत्तिः। अत एवार्जुनस्यापि स्वप्रारब्धानुगुणं युद्धे प्रवृत्तिरुचितेति मत्वा- 'कुरु कर्मैव तस्मात्त्व'मित्युक्तम्। नैतावता विदुषः कर्मयोग एव युक्त इति भ्रमितव्यम्। शुकादीनां विदुषां तत्र प्रवृत्त्यदर्शनात्। अनेन च शुकदृष्टान्तेन सर्वदा समाधि-

ज्ञानिन एव कर्मसन्न्यासो युक्त इत्येतदप्ययुक्तं, शुकस्य सन्न्यासिनस्सर्वदा समाधिनिष्ठत्वे भागवतसम्प्रदायोच्छेदप्रसङ्गात् । तस्माद्विदुषो विविदुषोश्च कर्मसन्न्यासो युक्तः । अत एव विद्वत्सन्न्यासो विविदिषासन्न्यासश्चेति द्विविधस्सन्न्यासो विहितश्शास्त्रेण । तस्मान्मुमुक्षुणा सर्वकर्मसन्न्यासपूर्विका ब्रह्मात्मज्ञाननिष्ठैव कार्येति गीताशास्त्रसारार्थः । तत्रानधिकारिणा तु कर्मनिष्ठेति ।

नन्वेवं जनकादीनामत्यागिनां मोक्षानुपपत्तिरितिचेत्, मैवम्—मुमुक्षोः कर्मसन्न्यासाभावे मोक्षानुपपत्तिर्न तु मुक्तस्य । जनकादयो हि जीवन्मुक्ताः- कृतात्मसाक्षात्कारत्वादत एव तेषां न मुमुक्षास्ति, यथा मोक्षार्थं तैस्सन्न्यासः स्वीक्रियेत । अत एव हि शमादिसम्पत्तिर्नित्यानित्यवस्तुविवेक इहामुत्रफलभोगविरागो मुमुक्षुत्वं चेति विशेषणचतुष्टयं विहितं ब्रह्मविद्याधिकारिणः ।

ननु यद्येवं मुमुक्षोरेव सन्न्यासाधिकारः, ननु विदुषो मुक्तस्य तर्हि सिद्धमेव विदुषस्सर्वकर्मसन्न्यासानर्हत्वमितिचेत्, मैवम्—विदुषस्सर्वकर्मसन्न्यासः कार्यो न भवतीत्यस्माभिरुच्यते- कृतकृत्यत्वात्तस्य । न तेन तस्य कर्मसन्न्यासानुपपत्तिः- कर्मानुष्ठानहेत्वज्ञानाभावादेव सन्न्यासस्य सिद्धत्वात्तस्य । तस्माद्विदुषः कर्मयोगस्यैवानुपपत्तिः ।

ननु यद्येवं कृतकृत्यत्वे विदुषः कथं तस्य सन्न्यासपूर्विका ज्ञाननिष्ठा कार्येत्युच्यते ? 'ज्ञानयोगेन साङ्ख्याना'मितिवाक्येनेति चेत्, नैष दोषः—आत्मज्ञानस्य परोक्षत्वापरोक्षत्वाभ्यां विदुषो द्वैविध्यम् । तत्र परोक्षज्ञानिनो ज्ञाननिष्ठा विधीयते नापरोक्षज्ञानिनः- तस्य कृतकृत्यत्वादिति ।

ननु कथं ज्ञायते ? स्वस्य परोक्षात्मज्ञत्वमपरोक्षात्मज्ञत्वं वेतिचेत्, उच्यते—यस्य मनसि संसारदुःखं नास्ति, मोक्षकामो नास्ति, विषयस्पृहा नास्ति, अहं ब्रह्मास्मीति निश्चयोऽस्ति, कृतकृत्योऽहमिति सन्तोषोऽस्ति, देहपातानन्तरं मम का वा गतिर्भविष्यतीति चिन्ता नास्ति, ईश्वरात्मृत्योर्वा भयं नास्ति स विद्वानपरोक्षात्मवित् । एतद्भिन्नस्तु शास्त्रादात्मानं ब्रह्मेति यः केवलं वेद न त्वनुभवात्स परोक्षात्मविदिति । ततश्च विद्वान् स्वबुद्ध्या स्वस्य परोक्षज्ञत्वमपरोक्षज्ञत्वं च विदित्वा परोक्षज्ञश्चेत्तदापि शमदमादिसम्पत्तिमालोच्य साप्यस्ति चेद्यथाविधि शिखायज्ञोपवीतादिकं परित्यज्य सन्न्यस्य ज्ञानयोगं कुर्यात् । शमदमादिसम्पत्तिर्नास्ति चेत् कर्मयोग एवावतिष्ठेत । एवमनेकजन्मसु कर्मयोगानुष्ठाने इहजन्मनि वा सुकृतातिशयाच्चित्तशुद्धौ जातायां ज्ञानयोगाधिकारी भवति । उक्तं हि— 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । अनेकजन्मसंसिद्धस्ततो याति परां गति'मिति, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति च । यद्यपरोक्षज्ञस्तर्हि यथाप्रारब्धं यथेच्छं तस्य विहारः । उक्तं हि- 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध' इति । यस्तु पुनः पारोक्ष्येणाप्यात्मानं न वेत्ति तस्याज्ञस्य कर्मयोग एवाधिकारः । स च कर्मयोगस्स्ववर्णाश्रमानुसारेण विहितमितिबुद्ध्या फलत्यागपूर्वकमीश्वराराधनमिदमिति नित्यनैमित्तिककर्मानुष्ठानं; ननु स्नानसन्ध्यादिकं विहाय देवालयादौ दीपकाराधनदध्योनादिभोजनादिकम् । ज्ञानयोगो नाम वेदान्तश्रवणमननादिपूर्वकं ब्रह्माहमस्मीत्यात्मानु-

सन्धानं, नतु द्रविडवेदपारायणादिकं, नापि शङ्खचक्राङ्कनादिकमिति बोध्यम् । तस्मादज्ञेनाधिकृतेन कर्मयोगः कार्यः; विदुषा परोक्षज्ञेन ज्ञानयोगः कार्य इति सर्वस्य गीताशास्त्रस्य निश्चितमंशद्वयम् । तच्च मन्मना इति, सर्वधर्मानिति च श्लोकद्वयेन भगवतैव दर्शितम् ।

'मुमुक्षुणा कर्मयोगः कार्योऽज्ञेन द्विजन्मना । परोक्षज्ञेन विदुषा ज्ञानयोग इति स्थितिः ॥'

स च ज्ञानयोगस्सन्न्यासपूर्वकः । स च सन्न्यासो द्विविधः- वैदिको लौकिकश्चेति । मन्त्रपूर्वकसन्न्यासाश्रमस्वीकारो वैदिकः; गृहधनदारापत्यादिकमुत्सृज्य क्वापि प्रयाणं लौकिकः । वैदिके द्विजस्यैवाधिकारः; लौकिके तु स्त्रीशूद्रादीनां सर्वेषामपि । अत एवोक्तं श्रीशङ्करस्वामिभिरुपनिषद्भाष्ये- 'ज्ञानमार्गे सर्वेषामधिकार' इति । कर्मयोगे तु द्विजस्यैवाधिकारः- तस्यैवोपनयनादिसंस्कारवत्त्वेन वेदाधिकारात् । तस्मात्—

'यथाविधि परित्यज्य ज्ञानयोगं द्विजोऽभ्यसेत् । गृहादिकं परित्यज्य तदन्यस्तु तमभ्यसेत् ॥
कामक्रोधादिरहितचित्तस्सन्न्यासमाश्रयेत् । दम्भाद्यर्थं तु सन्न्यस्य पतेदेव नरोऽशुचौ ॥
ईश्वराराधनार्थं स्वं कर्म कुर्यान्मलाशयः । दम्भाद्यर्थं तु तत्कृत्वा पतेदेव नरोऽशुचौ ॥

मलं कामक्रोधादिरूपम् । अशुचिस्संसारः । स्वं स्ववर्णाश्रमविहितम् ।

स्वकर्मोत्सृज्य पुरुषः परकर्म न चाचरेत् । अन्यथा यदि वर्तेत पतेदेव नरोऽशुचौ ॥
यस्तु ज्ञानावलेपेन विहितं न समाचरेत् । प्रतिषिद्धं चाचरेत्स पतेदेव नरोऽशुचौ ॥
शास्त्रदीपेन कर्तव्यमर्थं दृष्ट्वा समाचरेत् । स्वेच्छया यदि वर्तेत पतेदेव नरोऽशुचौ ॥
शास्त्राणामुत्तमं शास्त्रं गीताशास्त्रमिति स्मृतम् । कृष्णधीमथिताम्नायपाराब्धिजमिवामृतम् ॥

कृष्णो व्यासो वासुदेवो वा; आम्नायपारा उपनिषदः ।

अशोच्यानन्वशोचस्त्वमित्युपक्रम्य शोचनम् । अन्ते मा शुच इत्युक्तश्शोकाभावोऽत्र शौरिणा ॥
अशेषशोकप्रशमोपायभूतमिदं ततः । शोकान्मुमुक्षुणा नित्यमध्येयमधिकारिणा ॥
मलनिर्मोचनं पुंसां जलस्नानं दिनेदिने । सकृद्गीताम्भसि स्नानं संसारमलमोचनम् ॥
भगवद्गीता किञ्चिदधीता गाङ्गाजललवकणिका पीता । सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमोऽपि न चर्चाम् ॥
गङ्गास्नानादिवादृष्टं गीतापारायणात्फलम् । गीतार्थब्रह्मविज्ञानं ब्रह्मानन्दप्रदं पुनः ॥

इति समाप्तं गीताशास्त्रं तद्भाष्यार्कप्रकाशश्च

समर्पितश्चायं श्रीहयग्रीवपरब्रह्मणे ।

प्रकाशमेनं परिलक्ष्य कौस्तुभप्रकाशमप्यात्मनि संशयाकुलम् ।
निरीक्ष्य लक्ष्म्या तुरगेन्द्रकन्धरं कृतं स्मितं हन्तु तमो ददातु शम् ॥

सर्वं गीताशास्त्रार्थमुपसंहृत्याऽस्मिन्नध्याये विशेषतश्चान्ते इह शास्त्रार्थदार्ढ्याय संक्षेपत उपसंहारं कृत्वा, अथेदानीं शास्त्रसम्प्रदायविधिमाह—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥

इदमिति । इदं शास्त्रं ते तव हिताय मयोक्तं, संसारविच्छित्तयेऽतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन सम्बध्यते । तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदप्यवस्थायां न वाच्यं; भक्तस्तपस्वी अपि सन्शुश्रूषुर्यो भवति तस्मा अपि

---

संशयः—किं कौस्तुभस्यैवायमपूर्वः प्रकाशः, मद्धृदयगतं गीताशास्त्रतात्पर्यं कथमेवं बहिर्गतम् ? कौस्तुभप्रकाशैतत्प्रकाशयोः कतरोऽधिकः ? स्वानुजेन कौस्तुभेन सहाधीसनाधिपत्यं स्वीकृतवन्तं प्रकाशमिमं दृष्ट्वा लक्ष्मीः किं मन्येत ? प्रकाशद्वयव्याप्ते मद्धृदये लक्ष्मीं स्थापयितुमवकाशोऽस्ति वा नवा ? एतत्प्रकाशसाक्षात्काराल्लक्ष्म्या अपि ज्ञाननिष्ठास्वीकारेण मयि वैराग्यं भवेत्किमु ? इत्यादिरूपः । स्मितस्य चन्द्रिकातुल्यत्वात्तमोनाशनं सुखदानं च युक्तमिति भावः । अशोच्यानित्यारभ्य मा शुच इत्येतदन्तं गीताशास्त्रमेकत्रिंशदधिकषट्छतश्लोकात्मकम् । धर्मक्षेत्र इत्यारभ्य ध्रुवा नीतिर्मतिर्ममेत्येतदन्तस्तु ग्रन्थस्सप्तशतश्लोकात्मकः । अत एवोक्तं भाष्यकृद्भिर्भाष्यारम्भे सप्तभिश्श्लोकशतैरुपनिबबन्धेति । प्रकृतिं पुरुषं चैवेति श्लोकस्तु प्रक्षिप्त एवेति न गणनीयः ॥६६॥

अथ शास्त्रसम्प्रदायविधिं शिक्षयति भगवानिदमित्यादिना इत्याह भाष्यकारः—सर्वमिति । सर्वं गीताशास्त्रार्थमस्मिन्नध्याये उपसंहृत्य विशेषतश्चेहान्ते शास्त्रार्थदार्ढ्याय संक्षेपत उपसंहारकं कृत्वा यद्वा विशेषतो विस्तरत उपसंहृत्येत्यन्वयः । अथ शास्त्रार्थोपसंहारानन्तरमित्यर्थः । इदमिति । 'सेनयोरुभयोर्मध्ये विषीदन्तमिदं वच' इति यत्पूर्वं वक्ष्यमाणत्वोपाधिना इदंशब्देन संगृहीतमशोच्यानित्यारभ्य मा शुच इत्येतदन्तं तदेवेहेदंशब्देनोक्तत्वोपाधिना संगृह्यते । तथा च इदं पूर्वोक्तमशोच्यानित्यादिकं मा शुच इत्यन्तं गीताशास्त्रमित्यर्थः । ते तव मयोक्तमिति शेषः । किमर्थमुक्तमत आह—हितायेति । किं तद्धितमत आह—संसारविच्छित्तय इति । संसारविच्छित्तिरूपहितायेत्यर्थः । अतपस्काय न वाच्यं त्वयेति शेषः । यद्वा ते इति त्वयेत्यर्थे षष्ठी षष्ठी शेषे इति सूत्रेण विहिता । तथाचेदं ते न वाच्यमित्यन्वयः । तव हिताय मयोक्तमिति तु भाष्यकृद्भिरिदंशब्दार्थविवरणरूपतयोक्तमिति बोध्यम् । अतपस्काय न वाच्यमित्यनेन तपस्विने वाच्यमिति प्राप्ते आह—तपस्विनेऽप्यभक्ताय न वाच्यमिति । कस्मिन्नभक्तायेत्यत आह—गुरौ देवे चेति । देव ईश्वरः परमात्मा । कस्यांचिदपीति । दारिद्र्यादिकष्टदशाप्राप्तावपीत्यर्थः । दरिद्रो हि शास्त्रविद्धनलोभेनाभक्तायाऽपि ब्रूयादिति भावः । रुग्णश्च शास्त्रविद्रोगापहारायाभक्तायापि भिषजे ब्रूयादिति च । एवं तपस्विने भक्ताय ब्रूयादिति प्राप्ते आह—नचाशुश्रूषव इति । श्रोतुमिच्छुः शुश्रूषुः, नापृष्टः कस्यचिद्ब्रूयादितिन्याया-

न वाच्यं; न च मां यो वासुदेवं मनुष्यं प्राकृतं मत्वाऽभ्यसूयत्यात्मप्रशंसादिदोषाध्यारोपणे-नेश्वरत्वं ममाऽजानन् न सहतेऽसावप्ययोग्यस्तस्मा अपि न वाच्यं; भगवत्यनसूयायुक्ताय तपस्विने शुश्रूषवे भक्ताय वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते। तत्र 'मेधाविने तपस्विने' वेत्यनयोर्विकल्पदर्शनाच्छुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यं; शुश्रूषा-भक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यं; भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यं; गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसम्प्रदायविधिः ॥६७॥

---

दिति भावः। यश्शुश्रूषुस्स जिज्ञासया श्रोतव्यार्थं पृच्छत्येवेति बोध्यम्। यद्वा शुश्रूषुः गुरुपरिचरण-शीलः- 'गुरुशुश्रूषया विद्ये'ति स्मरणात्। एवं तपस्विने भक्ताय शुश्रूषवेऽपि भगवत्यसूयायुक्ताय न वाच्यमित्याह—नच मामिति। मां शास्त्रकर्तारमित्यर्थः। शास्त्रकर्तरीश्वर इति बुद्धौ सत्यामेव तच्छास्त्रोपदेशः फलतीति भावः। कुतोऽभ्यसूयति? तत्राह—मनुष्यं प्राकृतं मत्वेति। प्राकृतं सधारणं मनुष्यं मत्वा आत्मप्रशंसादिदोषाध्यारोपणेन आत्मप्रशंसादिरूपदोषारोपणेन- 'मत्तः परतरं नान्य'दित्यादेरुक्तत्वाच्छ्रीकृष्णेनेति भावः। तदीयमीश्वरतत्त्वं निरवद्यमजानन् न सहते- ईर्ष्यायुक्तो भवति। अयोग्यश्शास्त्रोपदेशानर्हः। सामर्थ्याद्गम्यतेऽर्थात्सिध्यतीत्यर्थः। इदं ते अतपस्काय न वाच्यमिदं ते अभक्ताय न वाच्यमिदं ते अशुश्रूषवे न वाच्यं, यो मामभ्यसूयति तस्मा इदं न वाच्यं, कदाचनेति सर्ववाक्येष्वन्वेतव्यम्। तत्रैवं सति ग्रन्थान्तरे मेधाविने तपस्विने वा वाच्यमिति मेधावि-तपस्विनोर्विकल्पस्य दर्शनात्। इहानुक्तोऽपि मेधावी ग्राह्यः। गृहीते च तस्मिन् मेधावितपस्वित्वयो-स्समप्राधान्येन सामानाधिकरण्यं नावश्यकम्। मेधा ग्रहणधारणशक्तिः; तपश्चित्तैकाग्र्यम्। मन्द-बुद्धेरपि चित्तैकाग्र्येसति शास्त्रार्थपरिज्ञानं भवति, मेधाविनस्तु मेधावशादेव शास्त्रार्थपरिज्ञानं भवति। चित्तैकाग्र्यं त्वस्य गौणमेव। यद्वा यमनियमादिलक्षणं तपः, तद्वान् तपस्वी; बुद्धिमांस्तु मेधावी यमनियमादिरहित एव। तत्र मेधावी उत्तमाधिकारी, तपस्वी तु मध्यम इति बोध्यम्। शुश्रूषा-भक्ती तु द्वयोरपि प्रधाने एवेत्याह—शुश्रूषेति, तद्युक्तायेति। शुश्रूषाभक्तियुक्तायेत्यर्थः। शुश्रूषा-भक्तिवियुक्ताय तपस्विने न वाच्यं, तादृशाय मेधाविनेऽपि न वाच्यमिदं शास्त्रमिति शेषः। शुश्रूषा-भक्तिमान् मेधावी तपस्वी वा यदि श्रीकृष्णे सासूयस्तर्हि तस्मै न वाच्यमित्याह—भगवतीति, समस्तेति। शुश्रूषाभक्ती मेधातपसोरन्यतरश्चेति गुणत्रयवतेऽपीत्यर्थः। यद्वा यस्य कस्यापि धन्यस्य मेधातपसी द्वे अपि भवत इति गुणचतुष्टयवतेऽपीत्यर्थः। एवं भगवत्यसूयायास्सर्वगुणावारकप्रबलदोष-त्वादेव पृथगुक्तिः। यः पुनर्न तपस्वी, नापि मेधावी; तस्यापि यदि गुरुपरिचर्या गुरौ देवे कृष्णे च भक्तिस्तर्हि तस्मा इदं वाच्यमेवेत्याह—गुर्विति। अतएव श्रीशङ्कराचार्यस्वामिना स्वशुश्रूषाभक्तियुक्तस्य मन्दमतेरतपस्विनोऽप्यानन्दगिरेश्शिष्यस्य शास्त्रोपदेशः कृतः। शास्त्रसम्प्रदायः पूर्वपूर्वस्य गुरोरुत्तरोत्तरं शिष्यंप्रति शास्त्रस्योपदेशः- शास्त्रसम्प्रदाय इत्युच्यते। सम्यक् प्रदीयते शिष्यायेदं गुरुणेति सम्प्रदाय उपदेशस्तस्य विधिर्विधानम् ॥६७॥

सम्प्रदायस्य कर्तुः फलमिदानीमाह—

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥

य इति । य इमं यथोक्तं परमं परमनिश्श्रेयसार्थं केशवार्जुनयोस्संवादरूपं ग्रन्थं गुह्यं गोप्यतमं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति, ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः । यथा त्वयि मया; भक्तेः पुनर्ग्रहणाद्भक्तिमात्रेण केवलेन शास्त्रसम्प्रदाने प्राप्तं भवतीति गम्यते । कथमभिधास्यतीत्युच्यते- भक्तिं मयि परां कृत्वा 'भगवतः परमगुरोरच्युतस्य शुश्रूषा मया क्रियत' इत्येवं कृत्वेत्यर्थः । तस्येदं फलं मामेवैष्यति मुच्यत एव । असंशयोऽत्र संशयः न कर्तव्यः ॥६८॥

किं च—

नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥

नेति । नच तस्माच्छास्त्रसम्प्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकरः, अन्यः प्रियकृत्तमः, नास्त्येवेत्यर्थो वर्तमानेषु । नच भविता

---

य इति । यो मयि परां भक्तिं कृत्वा परमं गुह्यमिमं मद्भक्तेष्वभिधास्यति स मामेवैष्यत्यसंशयः । सम्प्रदायस्य कर्तुरुपदेष्टुरित्यर्थः । यथोक्तं पूर्वोक्तं ग्रन्थम् । परममुत्कृष्टमुत्कृष्टत्वं चास्य ग्रन्थस्योत्कृष्टपुरुषार्थसाधनत्वादित्याह—परमनिश्श्रेयसार्थमिति । परमनिश्श्रेयसं मोक्षोऽर्थः फलं यस्य तं तथोक्तम् । संवादः प्रश्नोत्तरसरणिर्गोप्यतमं रहस्यं मयि भक्ता मद्भक्तास्तेषु मद्भक्तेषु ग्रन्थतोऽर्थतश्चेति ग्रन्थं तदर्थं च वक्ष्यतीत्यर्थः । कथमभिधास्यतीत्यत्राह—यथेति । त्वयि मया यथाभिहितं यद्वा स्थापितं तथेत्यर्थः । ननु नाभक्ताय कदाचनेत्यनेनाभक्तेषूपदेशस्य निषिद्धत्वान्मद्भक्तेष्विति वचनमिह व्यर्थमत आह—भक्तेरिति । भवतीति पुरुष इति शेषः । शुश्रूषा परिचर्या, तदुपदिष्टार्थस्य शिष्यप्रशिष्यद्वारा भुवि विपुलीकरणमेव तच्छुश्रूषेति भावः । न संशयोऽसंशयस्संशयस्याभावः । मदुक्तार्थे कोऽपि संशयो नास्तीत्यर्थः । एतेन गीताशास्त्रसम्प्रदायकर्तुर्मुक्तिः फलमिति सिद्धम् ॥६८॥

नेति । मे मनुष्येषु तस्मादन्यः प्रियकृत्तमः कश्चिदपि नास्ति । भुवि मे तस्मादन्यः प्रियतरो नच भविता । यो गीतासम्प्रदायकृद्विद्वान् स एव मम वर्तमानकाले भविष्यत्काले वाऽतिशयेन प्रियः, ननु तदन्यः कोऽपि मम प्रियतमः । ज्ञानिनः प्रियत्वं पूर्वमुक्तं- स च मम प्रिय इति । यस्तु ज्ञानी सन् गीतासम्प्रदायं करोति पात्रे स तु प्रियतम इतीहोच्यते । अन्यथा गीताशास्त्रप्रसङ्गो भुवि लुप्येत यदि ज्ञानी किं मम शिष्योपदेशेनेति तूष्णीं तिष्ठेत् । तस्माद्ज्ञानिनश्शिष्योपदेश आवश्यकः; स्वयं तीर्णः परान् तारयेदिति न्यायादिति भावः । वर्तमानेष्विति । मनुष्येष्वित्यस्य विशेषणम् ।

भविष्यत्यपि काले तस्माद्द्वितीयोऽन्यः प्रियतरः प्रियकृत्तरो भुवि लोकेऽस्मिन्न भविता॥ योऽपि—

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥७०॥

अध्येष्यत इति । अध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थमावयोः तेनेदं कृतं स्यात् । ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्राध्ययनं स्तूयते । फलविधिरेव वा, देवतादिविषयज्ञानयज्ञफलतुल्यमस्य फलं भवतीति । तेनाध्ययनेन चाहमिष्टः पूजितस्स्यां भवेयमिति मे मम मतिर्निश्चयः ॥७०॥

अथ श्रोतुरिदं फलम्—

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तश्शुभान्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥

श्रद्धावानिति । श्रद्धावान् श्रद्धधानः अनसूयश्च असूयावर्जितस्सन्निमं ग्रन्थं शृणुयादपि

---

भविष्यत्यपि काल इति । भविष्यत्सु मनुष्येष्वपीत्यर्थः । लोकेऽस्मिन्निति । भूलोक इत्यर्थः। एवं ज्ञानिनो ज्ञानोपदेष्टुश्च भगवत्प्रियतमत्वादेव- 'नारायणप्रियमनङ्गमदापहारं वाराणसीपुरपतिं भज विश्वनाथ'मित्युक्तमभियुक्तैश्शिवस्य विष्णुप्रियत्वम् ॥६९॥

अध्येष्यत इति । यो धर्म्यमावयोरिमं संवादमध्येष्यते च तेन ज्ञानयज्ञेनाहमिष्टः स्यामिति मे मतिः । यज्ञानां द्रव्ययज्ञादीनां जपयज्ञश्श्रेष्ठः- 'यज्ञानां जपयज्ञोऽस्मी'त्युक्तत्वात् । स च त्रिविधः- विधिजप उपांशुजपो मानसजपश्चेति । तत्र विधिजपो वाचा विस्पष्टं बहिर्मन्त्रोच्चारणं; उपांशुजपो निश्शब्दं जिह्वोष्ठचलनपूर्वकं मन्त्रोच्चारणं; मानसजपस्तु मनसि केवलं मन्त्रोच्चारणं जिह्वोष्ठचलनादिरहितम् । एषु त्रिष्वपि जपेषु मानस उत्कृष्टः- चित्तैकाग्र्यपूर्वकत्वान्मानसजपस्य । स एव मानसजप इह ज्ञानयज्ञशब्देनोच्यत इत्याह—विधीति, मानसत्वादिति । मनसोऽन्तःकरणत्वेनोत्कृष्टत्वात्तदीयोऽयं जपोऽप्युत्कृष्ट एवेति भावः । स्तूयत इति । ज्ञानयज्ञतुल्यं गीताशास्त्राध्ययनमित्युच्यत इत्यर्थः । पक्षान्तरमाह—फलविधिरिति । तदेव विवृणोति—देवतेति । देवतादिविषयज्ञानयज्ञस्य यत्फलं तत्तुल्यं फलमस्य गीताध्येतुर्भवतीत्यर्थः । यथा ज्ञानयज्ञेनाग्न्यादिमन्त्रजपरूपेणाऽग्न्यादिदेवता इष्टा भवन्ति, तथा गीताध्ययनेन भगवानहमिष्टो भवेयमित्यर्थः । यद्वा मानसिकनारायणाष्टाक्षरीमन्त्रजपवद्गीताध्ययनमपि मत्प्रीतिकारणमिति भावः । तेनेति । ज्ञानयज्ञतुल्येनेत्यर्थः । अध्ययनेनेति । गीताध्ययनेनेत्यर्थः । ममेति । सर्वज्ञस्येत्यर्थः । ततश्चेश्वराभिमतत्वान्नात्र संशयादिः कार्यः। भगवद्विषयकज्ञानयज्ञतुल्यमेव गीताध्ययनमिति सिद्धान्त एव ॥७०॥

श्रद्धावानिति । यो नरश्श्रद्धावाननसूयश्च सन्नावयोरिमं संवादं शृणुयादपि सोऽपि मुक्तस्सन्

यो नर अपिशब्दात्किमुत । अर्थज्ञानवान् सोऽपि पापान्मुक्तश्शुभान्प्रशस्तान् लोकान् प्राप्नुयात्पुण्यकर्मणामग्निहोत्रादिकर्मवताम् ॥७१॥

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति । तदग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापीति प्रष्टुरभिप्रायः, यत्नान्तरं चास्थाय शिष्यस्य कृतार्थता कर्तव्येत्याचार्यधर्मः प्रदर्शितो भवति—

कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रणष्टस्ते धनंजय ! ॥७२॥

कच्चिदिति । कच्चित्किमेतन्मयोक्तं श्रुतं श्रवणेनावधारितं हे पार्थ ! त्वयैकाग्रेण चेतसा चित्तेन, किं वाऽप्रमादतः ? कच्चिदज्ञानसंमोहोऽज्ञाननिमित्तस्सम्मोहोऽविविक्तस्वभावोऽविवेकः स्वाभाविकः किं प्रणष्टः ? यदर्थोऽयं शास्त्रश्रवणायासस्तव; मम चोपदेष्टृ

---

पुण्यकर्मणां शुभान्लोकान्प्राप्नुयात् । शृणुयादपीत्यपिशब्दार्थमाह—अपीति । श्रोताप्येवं किमुत ? प्रज्ञावांस्तदर्थाभिज्ञ इत्यपेरर्थः । मुक्तस्य कथं पुण्यलोकप्राप्तिरत आह—पापादिति । नायं पुण्यपापविनिर्मुक्तः परमात्मज्ञानिवत्किंतु पापादेव मुक्त इत्यर्थः । पुण्यकर्मणां स्वर्गिणाम् ॥७१॥

कच्चिदिति । शास्त्रार्थस्य ग्रहणाग्रहणे ज्ञानाज्ञाने तयोर्विवेकः, तस्य बोद्धुमिच्छा बुभुत्सा; तया शास्त्रार्थो मदुक्तश्शिष्येणार्जुनेन ज्ञातो वा उताज्ञत इतीममंशं विविच्य ज्ञातुं पृच्छति कृष्ण इत्यर्थः । किं तत्फलमत आह—तदिति । तदग्रहणे शास्त्रार्थस्याग्रहणे शिष्यस्येति शेषः । ज्ञाते सति मदुक्तमर्थं शिष्योऽयं नावैदिति ज्ञाने सतीत्यर्थः । उपायान्तरेण शास्त्रार्थं ग्राहयिष्याम्यर्जुनेनेति प्रष्टुः कृष्णस्याशयः । अनेन चाचार्यधर्मश्शिक्षितो भवतीत्याह—यत्नान्तरमिति । यद्येकेनोपायेनोक्तेन शिष्यः कृतार्थो न भवति तर्ह्युपायान्तरेणापि शिष्यः कृतार्थीकर्तव्य आचार्येणेत्यर्थः । हे पार्थ ! त्वयैकाग्रेण चेतसा एतत् श्रुतंकच्चित् ? हे धनञ्जय ! तेऽज्ञानसम्मोहः प्रणष्टःकच्चित् ? श्रोत्रेन्द्रियसत्त्वादर्जुनस्य श्रुतमिति प्रश्नोऽनर्थकोऽत आह—श्रवणेनावधारितमिति । मदुक्तं सर्वं श्रुत्वा स्वकर्तव्यार्थं निश्चितवान् किमित्यर्थः । एकाग्रेण चेतसा सावधानमनसेत्यर्थः । तदेवाह—अप्रमादत इति । प्रमादोऽनवधानता, तदभावोऽप्रमादः- ततोऽप्रमादतः । अज्ञानात्सम्मोहोऽज्ञानसम्मोहः पञ्चमीति योगविभागात्समासः; यद्वा शाकपार्थिवादित्वादुत्तरपदलोपसमासः । इदमेवाह—अज्ञाननिमित्तस्सम्मोहोऽज्ञानसम्मोह इति । अज्ञानं निमित्तं कारणं यस्य सोऽज्ञाननिमित्तः । अविविक्तभावो विविक्तं विवेकस्स यस्य नास्ति सोऽविविक्तस्तस्य भावोऽविविक्तभावो अविवेकित्वम् । अविवेकस्वभाव इति यावत् । अयं चाविवेकः कार्याकार्यविषयः, आत्मानात्मविषयो वा; उभयविधस्याप्यविवेकस्यात्मनिष्ठस्यार्जुनेनादौ दर्शितत्वात्- 'पापमेवाश्रयेदस्मान् हत्वैतानाततायिन' इति । यदर्थ इति । यदज्ञानसम्मोहनिवृत्त्यर्थ इत्यर्थः । ते तुभ्यमिति तदर्थमेत्यर्थः । त्वां शोचयितुं प्रवृत्त इति

त्वायासः प्रवृत्तः ते तुभ्यं हे धनंजय! ॥७२॥

अर्जुन उवाच—

नष्टो मोहस्स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत!
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥

नष्ट इति। नष्टो मोहोऽज्ञानजस्समस्तसंसारानर्थहेतुः सागर इव दुरुत्तरस्स्मृतिश्चात्म-तत्त्वविषया लब्धा, यस्या लाभात्सर्वहृदयग्रन्थीनां विप्रमोक्षः; त्वत्प्रसादात्तव प्रसादान्मया त्वत्प्रसादमाश्रितेन हे अच्युत! अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवति; यतो ज्ञानान्मोहनाश आत्मस्मृतिलाभश्चेति। तथा च श्रुतौ-'अनात्मविच्छोचा'मीत्युपन्यस्यात्मज्ञानेन सर्वग्रन्थीनां विप्रमोक्ष उक्तः; 'भिद्यते हृदयग्रन्थिः', तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इति च मन्त्रवर्णः। अथेदानीं त्वच्छासने यावत्। ते तवेति वा भाष्यपाठः, त्वद्बुद्धिगत इत्यर्थः। धनंजयेति। धनञ्जयस्य तव मदुपदेशेन मोहजयस्सुकर एवेति भावः ॥७२॥

नष्ट इति। हे अच्युत! त्वत्प्रसादान्मम मोहो नष्टः; मया स्मृतिर्लब्धा; त्वच्छासने स्थितोऽस्मि; गतसन्देहश्चास्मि; तव वचनं करिष्ये; गतसन्देहस्सन् त्वच्छासने स्थितोऽस्मीति वा। मोहोऽविवेकः। कस्मादुदितोयमत आह—अज्ञानज इति। किमस्य कृत्यमत आह—संसारेति। नचायं मोहनाशस्सुकर इत्याह—सागर इवेति। दुरुत्तरः दुःखेनाप्युत्तर्तुमशक्य इत्यर्थः। किंविषया स्मृतिरत आह—आत्मेति। आत्मतत्त्वस्मरणं जातमित्यर्थः। अनेन कृष्णोपदेशात्प्रागप्यर्जुनस्यात्म-तत्त्वज्ञानं परोक्षप्रायमस्त्येव, तत्तु मोहेनाच्छादितं मेघेन सूर्य इव भगवदुपदेशान्मोहनाशे सति पुन-स्तत्स्मरणं जातमिति सूच्यते। यद्वा स्मृतिरिह ज्ञानमेवेति बोध्यम्। अथवा यत्त्वयोपन्यस्तमात्मतत्त्वं तदिदानीं स्मर्यत इत्यर्थः। एतेन स्मृतिजनकसंस्कारवत्तया सुदृढमर्जुनस्यात्मज्ञानमिति सूच्यते। स्मृतिफलमाह—यस्या इति। हृदयग्रन्थीनां कामानां विशेषेण प्रकर्षेण मोक्षो विप्रमोक्षो नाश इति यावत्। मोहनाशप्रश्नप्रतिवचनेनेति। मोहो नष्टः किमिति प्रश्नः, मोहो नष्ट इति तत्प्रतिवचनं च तेनेत्यर्थः। एतावदेवेति। मोहनाशमात्रमेवेत्यर्थः। यतो यस्माद्ज्ञानाच्छास्त्रार्थभूतब्रह्मात्मज्ञाना-दित्यर्थः। आत्मस्मृतिरात्मस्वरूपस्मरणं यत्प्रागज्ञानाद्विस्मृतमिव स्थितं तस्यात्मस्वरूपस्य सच्चिदानन्द-लक्षणस्य स्मरणमित्यर्थः। तत्साक्षात्कार इति यावत्। तल्लाभश्चेत्येतावदेव शास्त्रार्थज्ञानफलमित्यर्थः। यस्माद्ज्ञानान्मोहनाश आत्मस्मृतिलाभश्च भवति, तस्माच्छास्त्रार्थज्ञानस्यैतावदेव फलमित्यर्थः। अनयोरपि मोहनाशमात्रमेव फलं सति तस्मिन्नात्मस्मृतेस्स्वत एव जायमानत्वादिति बोध्यम्। 'अनात्म-विच्छोचामि तं मा भगवश्शोकस्य पारं तारय'तीत्यादिरिहानुसन्धेयः। तत्र विषादशायामेकत्व-मात्मैक्यमनुपश्यतो विदुषः को मोहः? कश्शोकः? शोकमोहौ द्वावपि न स्त इत्यर्थः।

स्थितोऽस्मि; गतसन्देहो मुक्तसंशयः; करिष्ये वचनं तव; अहं त्वत्प्रसादात्कृतार्थः; न मम कर्तव्यमस्तीत्यभिप्रायः । परिसमाप्तश्शास्त्रार्थ इति ॥७३॥

अथेदानीं कथासम्बन्धप्रदर्शनार्थं संजय उवाच—

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

इतीति । इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनस्संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि; अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥७४॥

तं चेमम्—

व्यासप्रसादाच्छ्रुतवानिमं गुह्यतमं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतस्स्वयम् ॥७५॥

व्यासप्रसादादिति । व्यासप्रसादात्ततो दिव्यचक्षुर्लाभाच्छ्रुतवानिमं संवादं गुह्यतमं परं योगं, योगार्थत्वग्रन्थोऽपि योगः, संवादमिमं योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथवचनमिति । त्वदुक्तमर्थं करिष्य इत्यर्थः । युद्धं करिष्यामीति यावत् । 'कुरु कर्मैव तस्मात्त्व'मियुक्तत्वादिति भावः । ।

ननु साक्षात्परमेश्वरस्य श्रीकृष्णस्योपदेशादर्जुनः किं कृतार्थः ? उताकृतार्थः ? आद्ये- युद्धं करिष्य इत्यर्जुनवचनमयुक्तं, युद्धस्य कर्तव्यत्वेनावशेषे सति कृतकृत्यत्वाभावात् । द्वितीये- यदि साक्षाच्छ्रीकृष्णेनोपदिष्टगीताशास्त्रार्थोऽप्यर्जुनोऽकृतार्थस्तर्हि अर्वाचीनैर्गुरुभिरुपदिष्टगीतार्थानां शिष्याणां कथं कृतकृत्यत्वं स्यात् ? न कथमपीत्याशङ्कायामाह—अहमिति । ननु करिष्ये वचनं तवेति कण्ठत उक्तत्वात्कथं मम कर्तव्यं नास्तीत्यभिप्रायस्य सिद्धिरितिचेत्, उच्यते—त्वत्प्रसादादात्मस्मृतिलाभेन मम सर्वकामप्रहाणात्कृतार्थ एवाहं मम चाविक्रियस्यात्मनः किमपि न कर्मास्ति, लोकसंग्रहार्थं भूभारहरणार्थतया आवयोरवतीर्णत्वेन तत्प्रारब्धानुगुणं तत्प्रारब्धक्षपणार्थं च क्षत्रियस्वभावसिद्धं युद्धाख्यं कर्म भवानिव लोकसृष्ट्यादिकं कर्म करिष्ये केवलं लीलयेति पार्थस्याशयात् । आचार्यकर्तृकशास्त्रार्थोपदेशस्य कृतार्थोऽहमिति शिष्यवचनश्रवणमेवावसानमित्यभिप्रेत्याह— परिसमाप्तश्शास्त्रार्थ इति॥७३॥

इतीति । अहं रोमहर्षणमद्भुतमितीमं महात्मनो वासुदेवस्य पार्थस्य च संवादमश्रौषम्॥७४॥

व्यासेति । अहं साक्षात्स्वयं कथयतो योगेश्वरात्कृष्णाद्व्यासप्रसादाद्गुह्यतमं परं योगमिमं श्रुतवान् । कोऽसौ व्यासप्रसादोऽत आह— दिव्यचक्षुर्लाभादिति । दिव्यचक्षुर्दानरूपव्यासप्रसादादित्यर्थः । अतिव्यवहितमपि दुर्दर्शमर्थमव्यवहितमिव येन पश्यति तद्दिव्यचक्षुः; योगिनां स्वाभाविकमिदं चक्षुः । अत एवातीन्द्रियार्थदर्शिनो योगिनः । इदंशब्दार्थमाह—संवादमिति । ग्रन्थमित्यर्थः । ग्रन्थस्य कथं योगत्वमत आह—योगार्थत्वादिति । योगः कर्मयोगज्ञानयोगोभयात्मकः; स एवार्थोऽ-

यतस्स्वयं, न परम्परया ॥७५॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

राजन्निति । हे राजन् धृतराष्ट्र ! संस्मृत्य संस्मृत्य प्रतिक्षणं संवादमिममद्भुतं केशवार्जुनयोः पुण्यमिमं श्रवणेनापि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन्! हृष्यामि च पुनः पुनः ॥७७॥

तदिति । तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे मोक्षसन्न्यासयोगो
नामाऽष्टादशोऽध्यायः ।

यत्रेति । यत्र यस्मिन्पक्षे योगेश्वरस्सर्वयोगानामीश्वरस्तत्प्रभवत्वात्सर्वयोगबीजस्य

---

मिधेयो यस्य तत्त्वात् । अत एवास्य योगशास्त्रत्वमिति भावः । योगप्रतिपादकं शास्त्रं हि योगशास्त्रम् । न चात्मसंयमयोगादयो बहव इहोक्ता इतिकृत्वा किमिति कर्मज्ञानयोगद्वयमेव त्वयोक्तमित्युच्यत इति वाच्यं, सर्वेषां योगानां तदुभयेऽन्तर्भावात् । व्याख्यानान्तरमाह—संवादमिति । संवादरूपमिमं योगमित्यर्थः । योगेश्वरादिति । कर्मयोगज्ञानयोगफलप्रदात्तन्निवर्तकाच्चेत्यर्थः । न हीश्वरानुग्रहाभावे कर्मयोगे ज्ञानयोगे वा प्रवृत्तः पुरुषस्तत्पारं पश्येदिति भावः । साक्षात्स्वयं कथयत इत्यस्यार्थमाह—न परम्परयेति । एतेन नात्र ग्रन्थलोपतद्विस्तराद्याशङ्का कर्तव्येति सिद्धम् ॥७५॥

राजन्निति । हे राजन् ! इमं पुण्यमद्भुतं केशवार्जुनयोस्संवादं संस्मृत्य संस्मृत्य मुहुर्मुहुः हृष्यामि च । संस्मृत्य संस्मृत्येति नित्यार्थे द्विर्भावः । कदा संस्मृत्येत्यत आह—प्रतिक्षणमिति । क्षणेक्षण इत्यर्थः । श्रवणेनापीति । किं पुनस्तदर्थानुष्ठानेनेति भावः । गीताशास्त्रस्यावन्धकत्वात्पुण्यप्रदमिति नोक्तं, किं तु पापहरमित्युक्तमिति बोध्यम् । हृष्यामि हर्षं प्राप्नोमि ॥७६॥

तच्चेति । हे राजन् ! तच्चात्यद्भुतं हरे रूपं संस्मृत्य संस्मृत्य मे महान् विस्मयो भवति; पुनःपुनः हृष्यामि च ॥७७॥

यत्रेति । एवं सञ्जयोक्तं श्रुत्वापि दुर्योधनविजयाकांक्षिणं सर्वात्मनाऽन्धं धृतराष्ट्रं दृष्ट्वा प्राह

कृष्णः, यत्र यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीः, तस्मिन्पाण्डवानां पक्षे श्रीर्विजयः, तत्रैव भूतिश्श्रियो विशेषो विस्तारो भूतिः, ध्रुवाऽव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति ॥७८॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्ष-
सन्न्यासयोगो नामाष्टादशोऽध्यायः ।
श्रीमद्भगवद्गीताभाष्यं सम्पूर्णम् ।
हरिः ओम् ।

---

सञ्जयः—यत्रेति । यत्र योगेश्वरः कृष्णोऽस्ति, यत्र धनुर्धरस्स पार्थोऽस्ति- तत्र श्रीर्विजयो भूतिर्नीतिश्च ध्रुवेति मम मतिः । सर्वेषां योगानां यद्बीजं कारणं गीताशास्त्रं तस्य तत्प्रभवत्वात्स कृष्णः प्रभवः कारणं यस्य तत्त्वात्; कृष्णेनोक्तत्वादित्यर्थः । यद्वा सर्वस्यापि योगलक्षणस्य बीजस्य तत्प्रभवत्वात् । अथ वा सर्वेषामपि योगिनां यद्योगबीजमस्ति तस्य तत्प्रभवत्वात्; यद्वा सर्वयोगबीजस्य सत्त्वगुणस्य तत्प्रभवत्वात्सर्वमपि योगात्मकं बीजं; तस्मादीश्वरानुग्रहादित्यर्थः । प्रभवति वर्धते अंकुरीभवतीति वा तत्प्रभवं तस्य भावस्तत्प्रभवत्वं तस्मात्; यद्वा योगो बीजं यस्य तद्योगबीजं सर्वं च तद्योगबीजं च सर्वयोगबीजं तस्य सर्वस्यापि योगफलस्येत्यर्थः । तत्प्रभवत्वादीश्वरजन्यत्वादीश्वराधीनत्वादिति यावत् । नास्य धनुस्सर्वसाधारणमिति द्योतयितुमाह—गाण्डीवधन्वेति । गाण्डीवं धनुर्यस्य स गाण्डीवधन्वा । श्रीस्सम्पत् ध्रुवा । विजयो जयो ध्रुव इति लिङ्गविपरिणामेन योज्यम् । भूतिशब्दार्थमाह—श्रियो विशेष इति । सम्पद्विस्तार इत्यर्थ । ध्रुवाऽव्यभिचारिणी; सत्येत्यर्थः । शाश्वतेति वा । राज्ञस्समीपे भृत्यस्य विनयेन भवितव्यत्वात् ध्रुवा नीतिरिति ध्रुवमिति नोक्तं; किंतु मतिर्ममेत्युक्तम् । कृष्णार्जुनवति पक्षे श्रीविजयादिकं वस्तुतो भविष्यतु वा मा वा । मम तु भविष्यत्येवेति प्रतिभातीति विनयप्रदर्शनं, वस्तुतो भविष्यत्येवेति निश्चय एव सञ्जयस्य- दृष्टकृष्णमाहात्म्यत्वाद्विश्वरूपप्रसङ्गे । इतीदमभिप्रेत्याह भगवान् भाष्यकारः—मम त्विति । तुशब्दादन्येषां भवदादीनामन्यथा प्रतिभातु नामेति सूच्यते—ममेति । इति भाष्यपाठे त्वितिशब्दो भाष्यसमाप्तिवाचीति बोध्यम् ॥७८॥

इति श्री बेल्लङ्कोण्डोपनामक रामकविवरकृते
श्रीमच्छाङ्करभगवद्गीताभाष्यार्कप्रकाशे
अष्टादशोऽध्यायः ।
समाप्तोऽयं ग्रन्थः ।
सौम्यज्येष्ठामायामर्पितश्च
श्रीहयवदनाय ।

श्रीः

मोक्षसन्न्यासयोगो मोक्षप्रदकर्मसन्न्यासयोगप्रतिपादक इत्यर्थः ।
सर्वधर्मानिति चरमश्लोके तस्यैव प्रतिपादितत्वादिति भावः ।

श्लो॥ श्रीकृष्णलीला उपवर्ण्य कृष्णलीलातरङ्गिण्यभिधे प्रबन्धे ।
श्रीकृष्णगीतार्थमवर्णयद्य एवं स रामोऽहमहो ! कृतार्थः ॥

श्रीकृष्णपादाब्जमरन्दपानात्कृष्णस्वरूपामृतपानतश्च ।
तृप्तस्य रामस्य कवेः प्रकाशः प्रकाशतामारवि माधवाप्तः ॥

श्रीकृष्णभक्त्या क्रियते बताज्ञोऽप्यात्मज्ञ इत्यत्र कविं प्रमाणम् ।
विज्ञाय कृष्णे सगुणेऽगुणे वा भक्तिं मुमुक्षुर्वितनोतु नित्यम् ॥



ग्रामोदावरीमण्डलान्तर्गत अमलापुरंतालूका भट्नविल्लिग्रामसंस्थापित श्रीशारदामुद्रणालये
मुद्रापितोऽयंग्रन्थः । १९५६ ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥

शौर्यमिति । शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यं, धृतिर्धारणं सर्वावस्थास्वनवसादो भवति यया धृत्योत्तम्भितस्य, दाक्ष्यं दक्षस्य भावस्सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः, युद्धे चाप्यपलायनमपराङ्मुखीभावश्शत्रुभ्यः, दानं देयद्रव्येषु मुक्तहस्तता, ईश्वरभावश्चेश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति, क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥४३॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

कृषीति । कृषिगौरक्ष्यवाणिज्यं- कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं, कृषिर्भूमेर्विलेखनं, गौरक्ष्यं गा रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः । वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम् । परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः- 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलधर्मायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त' इत्यादिस्मृतिभ्यः । पुराणे च वर्णिनामाश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्तरात्त्विदं वक्ष्यमाणं फलमुच्यते—

स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ! ॥४५॥

स्वे स्वे इति । स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानु-

---

शौर्यमिति । शौर्यं पराभिभवनसामर्थ्यं, तेजः परैरप्रधर्ष्यत्वम् । का सा धृतिरत आह—सर्वेति । उत्तम्भितस्योच्चैस्तम्भितस्य । अपराङ्मुखीभावः पृष्ठाप्रदर्शनमित्यर्थः । दानं द्रव्यत्यागः । प्रभुशक्तिर्नियमनशक्तिः । नन्वीश्वरधर्मोऽयं, न जीवधर्मोऽत आह—ईशितव्यान्प्रतीति । स्वपरिपाल्यप्रजाः प्रतीत्यर्थः । यद्वा स्वपूज्ये देवब्राह्मणेशनं कथं क्षत्रियस्येत्यत आह—ईशितव्यान्प्रतीति ॥

कृषीति । कृषिगौरक्ष्यवाणिज्यमिति समाहारद्वन्द्वः । विलेखनं हलादिना भेदनम् । परिचर्येति । पूर्वोक्तब्राह्मणादिवर्णत्रयशुश्रूषैव शूद्रस्य स्वाभाविकं कर्म ॥४४॥

स्वे स्व इति । उक्तवक्ष्यमाणयोस्सङ्गतिप्रदर्शनायाह—एतेषामिति । अनुष्ठातुः कर्तुः पुरुषस्य वर्णा ब्राह्मणादयः, आश्रमा ब्रह्मचर्यादयः, प्रेत्य प्रकृतशरीरं विहाय, कर्मफलं स्वर्गं, शेषेण सुकृतशेषेण, विशिष्टा उत्कृष्टाः; देशः काश्यादिः, जातिर्ब्राह्मणादिः, वित्तं धनं, मेधा बुद्धिः, विशिष्टा

सम्भवति । अथ तृतीयोऽपि पक्षः- यदा करोति तदा सक्रियं वस्तु; यदा न करोति तदा निष्क्रियं तदेव । तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुम् । अयं त्वस्मिन् तृतीये पक्षे विशेषः न नित्यप्रचलितं वस्तु; नापि क्रियैव कारकम् । किं तर्हि ? व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते, विद्यमाना च विनश्यति । शुद्धं तद्द्रव्यं शक्तिमदवतिष्ठत इत्येवमाहुः काणादाः, तदेव च कारकमिति । अस्मिन्पक्षे को दोष इति । अयमेव तु दोषः- यतस्त्वभागवतं मतमिदम् । कथं ज्ञायते ? यत आह भगवान्- 'नासतो विद्यते भाव' इत्यादि ।

---

उभयथापीति । पक्षद्वयेऽपीत्यर्थः । ननु दर्शितं पक्षद्वयमप्यस्माकमभिमतमेवेति शङ्कायां तन्निरासार्थं तृतीयः पक्षोऽस्तीत्याह—अथेति । तृतीयोऽपि पक्षोऽस्तीति शेषः । तमेव दर्शयति—यदेति । सक्रियं निष्क्रियं चात्मवस्तु कालभेदादिति तृतीयः पक्षः । तत्रेत्यस्यार्थमाह—एवंसतीति । तृतीयपक्ष इत्यर्थः । अशेषतः कर्म त्यक्तुं शक्यमेव । तृतीयं पक्षमुपपादयितुं भूमिकामारचयति—अयं त्विति । आत्मादिवस्तु न नित्यप्रचलितं, नापि क्रियास्वरूपं- सर्वदापि क्रियाऽदर्शनात् ; क्रियाश्रयस्य कर्तुः क्रियारूपत्वायोगाच्च । तस्मादशेषतः कर्मत्यागासम्भववाद्यभिमतं पक्षद्वयं दुष्टमेव । व्यवस्थिते द्रव्ये आत्मादिवस्तुनीत्यर्थः । उत्पन्ना च सा क्रिया न चिरं तिष्ठतीत्याह—विद्यमाना चेति । उत्पन्ना चेत्यर्थः । अत एव सक्रियत्वं निष्क्रियत्वं चात्मन इति भावः ।

ननु क्रियाया आगमापायित्वे क्रियावतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याह—शुद्धमिति । ननु द्रव्यस्य क्रियाशक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियावद्धि कारकमत आह—तदेवेति । क्रियाशक्तिमदेव कारकं, नतु क्रियाश्रयभूतमन्योन्याश्रयादित्यर्थः । अशेषतः कर्मणस्त्याग एव नोपपद्यत इति यदुक्तं पूर्वपक्षिणा तत्परिहृतमेतावता काणादेन । कथमुच्यते—यद्यात्मा नित्यप्रचलितात्मकः स्याद्यदि वा क्रियास्वरूपस्स्यात्तर्हि कर्मणामशेषतस्त्यागो नोपपद्यतां, ननु तथाविध आत्मा । किंतु सक्रियो निष्क्रियश्च कर्तैवात्मा । अतः कर्तुरप्यात्मनो निष्क्रियत्वेनावस्थानं सम्भवत्येव । यथा तक्षकस्य तक्षणक्रियां परित्यज्य तूष्णीमासनं सम्भवति तद्वत् । तस्मादशेषतः कर्मत्याग उपपद्यत एवेति ।

नन्वेवं समीचीनमेवेदं काणाददर्शनमिति मत्वा कश्चित्पृच्छति—अस्मिन्पक्षे को दोष इति । उत्तरयति—अयमेवेति । अभागवतत्वमेव दोष इत्यर्थः । अभागवतं भगवतोऽनभिमतमित्यर्थः । ननु काणाददर्शनमिदं भगवतोऽनभिमतमिति कथं ज्ञायते त्वयेति पृच्छति कश्चित्—कथमिति । उत्तरयति—यत इति । असतो भावो न विद्यते सतश्चाभावो न विद्यत इति भगवतोक्तं, काणादैरेतद्विपरीतमुक्तं—असतो भावो विद्यते सतश्चाभावो विद्यत इति । तस्मादिदं काणादमतमभागवतम् । काणादानां ह्यसतो भावस्सतश्चाभाव इति मतमिति शेषः । निश्चय इति वा । न चासत्कार्यवादः काणादोक्तो भवतु नाम दुष्टः, सक्रियं निष्क्रियं चात्मवस्तु कारकमिति प्रकृतकाणादमतैकदेशस्य कथं दुष्टत्वमिति वाच्यं, शुद्धेऽप्यात्मवस्तुन्यविद्यमाना क्रियोत्पद्यत इत्यसत्कार्यवादस्य प्रकृतेऽपि प्रसारि-

